समूहात्मकस्याद्वादसमाश्रयणमतिरमणीयम् । यदवोचाम स्तुतिषु—"अन्योन्यपक्षप्रतिपक्षभावाद् यथा परे मत्सरिणः प्रवादाः । नयानशेषानविशेषमिच्छन्न पक्षपाती समयस्तथा ते" ॥ ३० ॥ स्तुतिकारोऽप्याह—"नयास्तव स्यात्पदलाञ्छना इमे, रसोपविद्धा इव लोहधातवः । भवन्त्यभिप्रेतफला यतस्ततो भवन्तमार्याः प्रणता हितैषिणः" ॥ ६५ ॥ इति ।

अथवा 'वादाद्'—विविक्तशब्दप्रयोगात् 'सिद्धिः'—सम्यग्ज्ञानं तद्द्वारेण च निःश्रेयसं 'स्याद्'—भवेद् इति शब्दानुशासनमिदमारभ्यते इत्यभिधेयप्रयोजनपरतयाऽपीदं व्याख्येयम् ॥ २ ॥

## लोकात् ॥ १ । १ । ३ ॥

उक्तातिरिक्तानां क्रियागुणद्रव्यजातिकाललिङ्गस्वाङ्गसंख्यापरिमाणापत्यवीप्सालुगऽवर्णादीनां संज्ञानां परान्नित्य

---

त्वात् । यथा नीलमुत्पलम्, अत्र भेदरूपैकान्तपक्षे, अभेदरूपैकान्तपक्षे वाऽसम्भव सामानाधिकरण्यस्य, प्रत्युत दोष, नीलोत्पलमित्यत्र उत्पलशब्दविफलता च । इति कथञ्चिद्भेद कथञ्चिदभेद इत्येवरूपो भेदाभेदरूपस्याद्वादस्वीकार एव गरीयान् । तथा विशेषणविशेष्यभावोऽपि न घटते एकान्तवादिनये, तथाहि—विशेषणविशेष्ययोर्नितान्तभेदाङ्गीकारे घटपटयोरिव विशेषणविशेष्यभावाभाव स्यादेवमेव, तयोर्नितान्ताभेदाङ्गीकारे घटो घट इत्यादिवद्विशेषणविशेष्यभावाभाव स्याद्विशेषणविशेष्यभावस्य भेदाभेदनिमित्तकत्वात्, इति कथञ्चिद्विशेषणत्व कथञ्चिद्विशेष्यत्वमित्येवरूप स्याद्वाद समाश्रयणीय । इत्थञ्च शब्दानुशासनस्य सर्वसाधारण्य स्याद्वादनये सिध्यति, न शब्दो नित्य, शब्दोऽनित्य इति च पक्षद्वये तयोरेकान्तरूपत्वेन सकलग्राह्यत्वाभावात् । अपि च विशालत्व स्याद्वादस्य कियदुच्येत—समग्रदर्शनानामपि तत्कुक्षिप्रविष्टत्वमित्यादि सर्वथा निर्दुष्टत्व चेत्यादिसर्वमभिप्रेत्य वृत्तिकृदुक्ति—**सर्वपार्षदत्वात्** इत्यादिना **अतिरमणीयम्** इत्यन्तेन । सर्वपार्षदत्वात्–सर्वसाधारण्यात्, पर्षदि साधु पार्षद–साधारण, सर्वेषां पार्षद सर्वपार्षद, सर्वपार्षदस्य भाव सर्वपार्षदत्व तस्मात् । **चो**—हेतौ । **शब्दानुशासनस्य**—शब्दव्युत्पत्तिजनकशास्त्रस्य, **सकलदर्शनसमूहात्मकस्याद्वादसमाश्रयणं**—सकलानि—समग्राणि, दर्शनानि–नया सकलदर्शनानि, सकलदर्शनानां समूह–सघात स एव आत्मा यस्य, स चासौ स्याद्वादश्च, सकलदर्शनसमूहात्मकस्याद्वाद तस्य समाश्रयण–अङ्गीकार, सकलदर्शनसमूहात्मकस्याद्वादसमाश्रयण—**अतिरमणीयम्**—नितरां निर्दोष इत्यर्थ । स्वसिद्धान्तसिद्ध तदेव स्वपदोक्तेनाह—**यदवोचाम स्तुतिषु,** अन्य० यो० व्य० ३० श्लोके—**अन्योन्यपक्षप्रतिपक्षभावाद्**—अयमाशय–साध्यधर्मविशिष्टधर्मिण पक्षा शब्दो नित्य एव इत्यादय, प्रतिकूला पक्षा साध्यविरुद्धधर्मिण प्रतिपक्षा शब्दोऽनित्य एव इत्यादय पक्षप्रतिपक्षा, अन्योन्य—परस्परं पक्षप्रतिपक्षा अन्योन्यपक्षप्रतिपक्षा, तेषा भाव परस्परविरुद्धधर्मोपन्यास, अन्योन्यपक्षप्रतिपक्षभाव, तस्मात्–हेतो, **यथा** इति दृष्टान्ते—येन प्रकारेण, **परे** जिनशासनबहिर्भूता, **प्रवादाः**—प्रकर्षेण स्वाभ्युपगतार्थप्रतिपादनशीला सिद्धान्ता, **मत्सरिणः**—अतिशयेनाक्षमावन्त । **तथा**—तेन प्रकारेण **ते**—तव हे भगवन्! भवत **अशेषान्**—सम्पूर्णान्, **नयान्**—नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढएवभूतेति सप्त, **अविशेषं**—समत्वेन, **इच्छन्**—मन्यमान, **पक्षपाती**—पक्ष पातयतीत्येवशील, अर्थाद्रागेण स्वीकृतस्य पक्षविशेषस्य विनाशेन शोभमान **समयः**—स्यात्पदलाञ्छित सिद्धान्त **न** मत्सरी मत्सराभाववान् इति, सहेतुकोक्ति श्लोकपदार्थश्च ।

स्तुतिकारोऽप्याह–श्रीसामन्तभद्राचार्यविरचितस्वयम्भूस्तोत्रे ६५ श्लो० **तव**—हे भगवन्! भवत **स्यात्पदलाञ्छनाः**—स्याद्रूप लाञ्छन येषान्ते स्यात्पदलाञ्छना–स्यात्पदचिह्निता । **इमे**—प्रसिद्धा **नयाः**–निरवधारणा अभिप्रायविशेषा–पूर्वोक्ता सप्त । **रसोपविद्धाः**—रसेन–पारदेन उपविद्धा—मिश्रिता लोहधातव इव **अभिप्रेतफला**—अभिप्रेत फल येभ्यस्ते इति विग्रह, यथा पारदसंमिश्र लोहादिधातु अभीप्सितफलप्रद भवति तथा सप्त नया अपि वाञ्छितफलप्रदा इति, **यतो**—यस्मात् कारणाद्भवन्ति **ततः**—तस्माद् हेतो । **हितैषिणः**—आत्महितेच्छव । **आर्याः**—मोक्षपथसमीपयाता जना **भवन्तं**—केवलज्ञानभास्वद्विभूषितदेह, **प्रणताः**—प्रणन्तुमारब्धा इत्यर्थ ।

एतेन समुदितेन ग्रन्थेन युक्तत्व स्याद्वादस्य प्रतिपादनद्वारा संस्कृताना प्राकृतानाञ्च शब्दाना सिद्धिरपि तत इत्याद्युक्तावपि, प्रेक्षावत्प्रवृत्तिप्रयोजकीभूतानुबन्धचतुष्टयानुक्तत्वरूपन्यूनता अथवेति पक्षान्तरेण परिहरति—**अथवा** इत्यादिना—अस्मिन् पक्षे वादात् सिद्धिः स्यात्, इति विभज्य व्याख्यातव्य प्रतिष्णात । साधुशब्दप्रयोगद्वारा सम्यग्ज्ञानरूपासिद्धिर्भवतीत्यनेन प्रयोजनमभिहितम्, शब्दानुशासनस्य च शब्दाभिधेयत्वमपि प्रसिद्ध, इत्थ च व्याकरणात्साधुशब्दप्रयोगज्ञान तद्द्वारा च परमपदप्राप्तिरित्यवधेयम् । एवमभिधेयप्रयोजनयो सबन्ध साध्यसाधनभावरूप, शब्दानुशासनाभिधेययोस्त्वभिधानाभिधेयत्वभाव इति सर्वमवदातम् ॥ २ ॥

शब्दानुशासनेऽस्मिन्प्रत्याहाररूपक्लिष्टकल्पनामनपेक्ष्यास्माभिर्लोकप्रसिद्धवर्णमाला गृहीता, सा च द्विपञ्चाशदक्षरात्मिका—अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ, अ अ, अँ, ≍क ≍प, क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह । एवमेव सूत्रप्रवृत्त्यर्थं लोकप्रसिद्धन्याया अपि ग्राह्या, सर्वमिद हृदि निधाय चकार सूत्र सूत्रकृत् **लोकात्** । पूर्वस्माच्छब्दात्सिद्धिरित्यनुवर्तते, लोकात् सिद्धि इत्यन्वय । अत्र पूर्ववत्पञ्चमी सर्वपदार्थप्रेक्षकलोकमाश्रित्य, सिद्धि–ज्ञप्ति कर्तव्या इत्यर्थ । कासां केषाञ्चेति जिज्ञासायामाह—**उक्तातिरिक्ताना क्रियागुण** इत्यादिना **न्यायाना च** इत्यन्तेन । उक्तातिरिक्ताना इत्युभयान्वयि तेन उक्तातिरिक्तानां—क्रियागुण–द्रव्य–जाति–काल–लिङ्ग–स्वाङ्ग–सख्या–परिमाण–अपत्य–वीप्सा–लुगवर्णादीनां सज्ञानामित्येकोऽन्वय, **उक्तातिरिक्ताना**—परान्नित्यान्नित्यादन्तरङ्गमन्तरङ्गाच्चानवकाश बलीय इत्यादीना न्यायानां च इत्यपरोऽन्वय । उभयत्रान्वये विग्रहभेद, तथाहि—यदि तत् संज्ञानामित्यत्रान्वेति तदा उक्ताभ्य–स्वरादिसज्ञाभ्य अतिरिक्ता—अधिका तासा वृत्त्युक्तसज्ञानां इत्यर्थ । यदा च तत् न्यायानामित्यत्रान्वेति तदा **उक्तातिरिक्ताना** सर्वथैव अनुक्ताना अन्यैं उक्तेभ्य अतिरिक्ता अधिका ये न्यायास्तेषां इत्यर्थो वा योज्य । क्रमेण क्रियेत्यादि सज्ञापदार्थनिरूपणम्—**क्रिया**—पूर्वापरीभूतावयवा, **गुणः**—विशेषण, **द्रव्यं**—विशेष्यम्, **जाति**—"आकृतिग्रहणा जातिर्लिङ्गानां न च सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्र च चरणै सह" इति । **कालः**—त्रुट्यादिरूप, **लिङ्गम्**—स्त्यानप्रसव, तच्च पुंस्त्रीनपुसकादिरूप, **स्वाङ्गम्**—"अविकारोऽद्रव मूर्तं प्राणिस्थ स्वाङ्गमुच्यते । च्युत च प्राणिनस्तत्तन्निभ च प्रतिमादिषु" । **सख्या**—एकत्वद्वित्वाद्यभिधानबुद्धिहेतु, **परिमाणं**—सर्वतो मानम्, **अपत्यं**—पुत्रपौत्रादि, **वीप्सा**—क्रियागुणद्रव्यैर्युगपत्प्रयोक्तुर्व्याप्तुमिच्छा, **लुक्**—अदर्शनम्, **अवर्ण** इव सज्ञा उदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतानुनासिकाननुनासिकभेदविशिष्टस्य, **आदि**शब्दादिवर्णो वर्णादिपरिग्रह । द्वन्द्वगर्भबहुव्रीहि । पूर्वात्परं **परान्नित्य,**

---

१ °पदसत्यलाञ्छिता स्व० स्तो० ६५ । २ °तगुणा° स्व० स्तो० ६५ ।

नित्यादन्तरङ्गमन्तरङ्गाच्चानवकाशं बलीय इत्यादीनां न्यायानां च लोकाद्—वैयाकरणसमयविदः प्रामाणिकादेश्च शास्त्रप्रवृत्तये सिद्धिर्भवतीति वेदितव्यम् वर्णसमाम्नायस्य च ॥ ३ ॥

## अथ संज्ञाप्रकरणम् ।

तत्र—

### औदन्ताः स्वराः ॥ १ । १ । ४ ॥

औकारावसाना वर्णाः स्वरसंज्ञा भवन्ति । तकार उच्चारणार्थः । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ । **औदन्ता** इति बहुवचनं वर्णेष्वपठितानां दीर्घपाठोपलक्षितानां प्लुतानां सग्रहार्थम्, तेन तेषामपि स्वरसंज्ञा । स्वरप्रदेशा "इवर्णादेरस्वे स्वरे यवरलम्" ॥१।२।२१॥ इत्यादयः ॥ ४ ॥

### एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः ॥ १ । १ । ५ ॥

**मात्रा** कालविशेषः । एकद्वित्र्युच्चारणमात्रा औदन्ता वर्णा यथासख्य ह्रस्वदीर्घप्लुतसज्ञा भवन्ति । एकमात्रो ह्रस्वः–अ इ उ ऋ ऌ । द्विमात्रो दीर्घः–आ ई ऊ ॠ ॡ ए ऐ ओ औ । त्रिमात्रः प्लुतः–आ३ ई३ ऊ३ इत्यादि । ऐदौतौ चतुर्मात्रावपीत्यन्ये । औदन्ता इत्येव–प्रतक्ष्य, अत्रार्धमात्रिकयोर्व्यञ्जनयोः समुदायस्यैकमात्रत्वेऽपि ह्रस्वसज्ञाया अभावात् तोऽन्तो न भवति । वर्णानां च ह्रस्वादिसंज्ञाविधानात् 'तितउच्छत्रम्' इत्यादावकारोकारलक्षणवर्णसमुदायस्य

---

**नित्यादन्तरङ्गं, अन्तरङ्गाच्चानवकाशं,** इत्यादेर्बलीयस्त्व यथास्थान तत्त्वप्रकाशिकाकृदेव वक्ष्यति, इति यथास्थान दर्शयिष्याम । **लोकादि**त्यस्य विवरण **वैयाकरणसमयविदः**—वैयाकरणाना शाब्दिकाना, समय —सिद्धान्तस्तं वेत्तीति—जानाति इति वैयाकरणवित्त-स्मादित्यर्थ , वा **प्रामाणिकादेः**—यथार्थप्रमाणपुर सरं वक्तृभ्य सकाशात् । **शास्त्रप्रवृत्तये**—शास्त्रस्य शब्दानुशासनस्य, प्रवृत्तये प्रयोग-निष्पत्तये, सिद्धि ज्ञप्तिर्बोध्या । सम्यगाम्नायन्तेऽभ्यस्यन्ते वर्णा अस्मादिति समाम्नाय , वर्णानां अक्षराणां, समाम्नाय –पाठक्रम , तस्य **वर्णसमाम्नायस्य**—अक्षरपाठक्रमस्य सिद्धि , लोकात् लोकमाश्रित्य बोध्या इत्यन्वयार्थ । इत्थ च भगवता शब्दानुशासने स्वीये प्रसिद्धाक्षरराशिपाठक्रमश्च स्वरादिप्रसिद्धसज्ञान्यामाश्च गृहीता ॥ ३ ॥

**तत्र**—वर्णपाठक्रमे, लोकप्रसिद्धे विदिते सति व्यञ्जनानां उच्चारण स्वरमन्तरा न सम्भवतीति कृत्वा तदुपजीव्या स्वरसज्ञा पूर्वमाह—**औदन्ताः स्वराः** । औत्–औकार , अन्त —अन्तावयवो यस्य–अकारादिचतुर्दशवर्णसमुदायस्य स औदन्त अकारादिचतुर्दशवर्णसमुदाय स्वरपदबोध्य, किमर्थं बहुवचननिर्देश इति वृत्तिकृदेव वक्ष्यति इति समासान्वयार्थप्रदर्शनम् । एतेनात्र लम्बकर्णमानयेत्यादिवत्तद्गुणसविज्ञानो बहुव्रीहि , नतु दृष्टसागरमानयेत्यादिवदतद्गुणसविज्ञानो बहुव्रीहिरिति सूचितम् । औदित्यत्र तकारमनुच्चार्य "आवन्ता" इति निर्देशे स्वरूपापरिग्रह इति समभिप्रायेण वदति **तकार उच्चारणार्थः**—औदित्यत्र तकार , उच्चारणार्थ —उच्चार्यते—स्वरूपेण स्वीक्रियतेऽनेनेति उच्चारण, तदेव अर्थ प्रयोजन यस्य स , **उच्चारणार्थः**—स्वरूपपरिग्रहार्थ । यद्यप्यन्तग्रहणाभावे विशेपणमन्त इति, औदन्ता वर्णा इति लाभ तथापि दधिनौ इत्यत्र नौ इत्यस्यौदन्तत्वेन स्वरपदबोध्यत्वे "इवर्णादे" इति यत्व प्रसज्येत इति अन्तग्रहणप्रयोजनम् । के पुन अकारादिचतुर्दशवर्णा औकारपर्यन्ता ? इति जिज्ञासाया परिगणयति—**अ आ इ ई** इत्यादिना । औदन्त स्वर इति सूत्रन्यासे प्लुतानां सग्रहाभावे प्राप्ते बहुवचनमौदन्ता इति, तदेवाह—औदन्ता इत्यादिना, **वर्णेषु अपठिताना दीर्घपाठोपलक्षिताना प्लुतानां संग्रहार्थं औदन्ता इति बहुवचनं** इत्यन्वय । **तेन**—बहुवचननिर्देशेन प्लुतसग्रहेण । **तेषामपि**—प्लुतानामपि **स्वरसंज्ञा**—स्वरपदबोध्यत्व । **स्वरप्रदेशाः**—स्वरेण—स्वर इति शब्देन प्रदिश्यन्ते उच्चार्यन्तेऽत्रेति, स्वरप्रदेशा स्वरप्रयोजनस्थानानि, तदेव निर्दिशति—**इवर्णादेः** इति ॥४॥

सामान्यस्वरसज्ञां निरूप्य तद्विशेषमाह—**एकद्वित्रिमात्राह्रस्वदीर्घप्लुताः**—एका च द्वे च तिस्रश्च—एकद्वितिस्रो मात्रा येषां ते एकद्वित्रिमात्रा , अत्रैकत्व द्वित्व त्रित्वं च मात्रायां बोध्यते । मात्रा च केत्यपेक्षायामाह–**मात्रा कालविशेषः** स च निमेषोन्मेषक्रियापरिच्छिन्न , अत्रौदन्ता वर्णा इत्यनुवर्तते । तत्र मात्रया विशिष्यते मात्रा च एकादिभिरित्येष क्रम । ह्रस्वदीर्घप्लुता ह्रस्वश्च दीर्घश्च प्लुतश्चेति ह्रस्वदीर्घप्लुता इति द्वन्द्व , एकद्वित्रिमात्रा औदन्ता वर्णा यथासख्य ह्रस्वदीर्घप्लुता इत्यन्वय । मात्राकाल –यद्वर्णस्योच्चारणक्रियां परिच्छिनत्ति, स एव वर्णो विशेष्यस्तेनेति कालस्याव्यावर्तकत्वाद्विशेषणासमव इति निरस्तम् तदेतत्सर्वमभिप्रेत्याह—**एकद्वित्र्युच्चारणमात्रा औदन्ता** इत्यादिना—एकद्वितिस्र उच्चारणे मात्रा येषान्ते, इति तद्विग्रह सज्ञिविशेषणत्रयेण सज्ञात्रयमिति यथासख्यलाभस्तदेवाह **यथासख्यमिति** क्रमपूर्वक स्पष्टोऽर्थ । **ऐदौतौ चतुर्मात्रौ अपि इति अन्ये**—शेषभट्टारका । औदन्ता स्वरा इत्यस्मादनुवृत्तौदन्ता इत्यस्य वर्णा इत्यस्य च फलमाह—**औदन्ता इत्येव प्रतक्ष्य** इत्यादिना **न भवति** इत्यन्तेन । अयमाशय —प्रपूर्वात्तक्षो–तनुकरणे इतिधातो ल्यप्प्रत्यये तस्य च यपि औदन्ता इत्यननुवृत्तौ प्रतक्ष् य अत्र क्ष् सयुक्तक्षस्य व्यञ्जनद्वयात्मकत्वेनैकमात्रिकत्वात्ततो हि व्यञ्जनस्यार्धमात्रिकत्वेन विश्रुतत्वात्प्रकृते क्षस्य ह्रस्वसज्ञायां "ह्रस्वस्य त पित्कृति" ४।४।११३। इति तागमप्रसक्तौ वैरूप्य स्यादिति तदनुवृत्तौ तागमाभाव स्पष्ट एव, यत क्षस्य ह्रस्वत्वाभावादिति । सूत्रेऽस्मिन्वर्णा इत्यनेन यदि वर्णसमुदायस्य ह्रस्वादिसज्ञास्तर्हि तितउच्छत्रम् अत्र अ उ इति वर्णसमूहस्य स्वरस्य प्रत्येकमेकमात्रिकत्वेन दीर्घत्वे सति, "अनाङ्माङोदीर्घाद्वाच्छ" १।३।२८। इति द्वित्वविकल्पप्रसङ्ग स्यादिति, प्रत्येकमौकारपर्यन्तानां वर्णानां **ह्रस्वदीर्घप्लुतसंज्ञा** इत्यर्थो बोध्य । इत्थच—तितउच्छत्रमित्यत्र "स्वरेभ्य" १।३।३०। इति नित्य द्वित्व सिद्धम् । अत्र व्यक्तिपक्षाश्रयण विवेचनेनैतेन सूचितम् । तदेतत्सर्वं विविच्य वदति—**अत्रार्धमात्रिकयोर्व्यञ्जनयोः इति अत्र**—प्रतक्ष्येत्यत्र क्षकारे अर्धमात्रिकयो –अर्ध मात्राया अर्धमात्रा, अर्धमात्रास्त्यनयोरिति अर्धमात्रिके, तयो इति विग्रह । व्यञ्जनयो कषयो समुदायस्य—क्ष् समुदायस्य क्षस्य एकमात्रत्वे अपि ह्रस्वसंज्ञाया अभावात्, **तः**–"ह्रस्वस्य त" इति, **अन्तः**—अन्तावयव न भवति, इति अन्वय । **वर्णानां च**–प्रत्येक वर्णानां **ह्रस्वादिसंज्ञायाः**—ह्रस्वदीर्घप्लुतसंज्ञाया, **विधानं**—करण तस्मात्, **तितउच्छत्रम्, इत्यादौ** अकारोकारलक्षणः तद्रूप , वर्णसमुदाय अ उ इति

समूहात्मकस्याद्वादसमाश्रयणमतिरमणीयम् । यदवोचाम स्तुतिषु—"अन्योन्यपक्षप्रतिपक्षभावाद् यथा परे मत्सरिणः प्रवादाः । नयानशेषानविशेषमिच्छन्न पक्षपाती समयस्तथा ते" ॥ ३० ॥ स्तुतिकारोऽप्याह—"नयास्तव स्यात्पदलाञ्छना [2]इमे, रसोपविद्धा इव लोहधातवः । भवन्त्यभिप्रेतफला यतस्ततो भवन्तमार्याः प्रणता हितैषिणः" ॥ ६५ ॥ इति ।

अथवा 'वादाद्'—विविक्तशब्दप्रयोगात् 'सिद्धिः'—सम्यग्ज्ञानं तद्द्वारेण च निःश्रेयसं 'स्याद्'—भवेद् इति शब्दानुशासनमिदमारभ्यते इत्यभिधेयप्रयोजनपरतयाऽपीदं व्याख्येयम् ॥ २ ॥

## लोकात् ॥ १ । १ । ३ ॥

उक्तातिरिक्तानां क्रियागुणद्रव्यजातिकाललिङ्गस्वाङ्गसंख्यापरिमाणापत्यवीप्सालुगऽवर्णादीनां संज्ञानां परान्नित्यं

स्वात् । यथा नीलमुत्पलम्, अत्र भेदरूपैकान्तपक्षे, अभेदरूपैकान्तपक्षे वाऽसम्भवः सामानाधिकरण्यस्य, प्रत्युत दोषः, नीलोत्पलमित्यत्र उत्पलशब्दविफलता च । इति कथञ्चिद्भेदः कथञ्चिदभेदः इत्येवंरूपो भेदाभेदरूपस्याद्वादस्वीकार एव गरीयान् । तथा विशेषणविशेष्यभावोऽपि न घटते एकान्तवादिनये, तथाहि—विशेषणविशेष्ययोर्नितान्तभेदाङ्गीकारे घटपटयोरिव विशेषणविशेष्यभावाभावः स्यादेवमेव, तयोर्नितान्ताभेदाङ्गीकारे घटो घट इत्यादिवद्विशेषणविशेष्यभावाभावः स्याद्विशेषणविशेष्यभावस्य भेदाभेदनिमित्तकत्वात्, इति कथञ्चिद्विशेषणत्वं कथञ्चिद्विशेष्यत्वमित्येवंरूपः स्याद्वादः समाश्रयणीयः । इत्थञ्च शब्दानुशासनस्य सर्वसाधारण्यं स्याद्वादनये सिध्यति, न शब्दो नित्यः, शब्दोऽनित्य इति च पक्षद्वये तयोरेकान्तरूपत्वेन सकलग्राह्यत्वाभावात् । अपि च विशालत्वं स्याद्वादस्य कियदुच्येत—समग्रदर्शनानामपि तत्कुक्षिप्रविष्टत्वमित्यादि सर्वथा निर्दुष्टत्वं चेत्यादिसर्वमभिप्रेत्य वृत्तिकृदुक्तिः—सर्वपार्षदत्वात् इत्यादिना अतिरमणीयम् इत्यन्तेन । सर्वपार्षदत्वात्-सर्वसाधारण्यात्, पर्षदि साधु पार्षदं-साधारणं, सर्वेषां पार्षदं सर्वपार्षदं, सर्वपार्षदस्य भावः सर्वपार्षदत्वं तस्मात् । चो—हेतौ । शब्दानुशासनस्य—शब्दव्युत्पत्तिजनकशास्त्रस्य, सकलदर्शनसमूहात्मकस्याद्वादसमाश्रयणं—सकलानि—समग्राणि, दर्शनानि—नयाः सकलदर्शनानि, सकलदर्शनानां समूहः—संघातः स एव आत्मा यस्य, स चासौ स्याद्वादश्च, सकलदर्शनसमूहात्मकस्याद्वादः तस्य समाश्रयणं—अङ्गीकारः, सकलदर्शनसमूहात्मकस्याद्वादसमाश्रयणं—अतिरमणीयम्—नितरां निर्दोषम् इत्यर्थः । स्वसिद्धान्तसिद्धं तदेव स्वपद्योक्त्येनाह—यदवोचाम स्तुतिषु, अन्य० यो० व्य० ३० श्लोके—अन्योन्यपक्षप्रतिपक्षभावाद्—अयमाशयः—साध्यधर्मविशिष्टधर्मिणः पक्षाः शब्दो नित्य एव इत्यादयः, प्रतिकूलाः पक्षाः साध्यविरुद्धधर्मिणः प्रतिपक्षाः शब्दोऽनित्य एव इत्यादयः पक्षप्रतिपक्षाः, अन्योन्य—परस्परं पक्षप्रतिपक्षाः अन्योन्यपक्षप्रतिपक्षाः, तेषां भावः परस्परविरुद्धधर्मोपन्यासः, अन्योन्यपक्षप्रतिपक्षभावः, तस्मात्—हेतोः, यथा इति दृष्टान्ते—येन प्रकारेण, परे जिनशासनबहिर्भूताः, प्रवादाः—प्रकर्षेण स्वाभ्युपगतार्थप्रतिपादनशीलाः सिद्धान्ताः, मत्सरिणः—अतिशयेनाक्षमावन्तः । तथा—तेन प्रकारेण ते—तव हे भगवन्! भवतः अशेषान्—सम्पूर्णान्, नयान्—नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढएवंभूतेति सप्त, अविशेषं—समत्वेन, इच्छन्—मन्यमानः, पक्षपाती—पक्षं पातयतीत्येवंशीलः, अर्थाद्रागेण स्वीकृतस्य पक्षविशेषस्य विनाशेन शोभमानः समयः—स्यात्पदलाञ्छितः सिद्धान्तः न मत्सरी मत्सराभाववान् इति, सहेतुकोक्तिः श्लोकपदार्थश्च ।

स्तुतिकारोऽप्याह—श्रीसामन्तभद्राचार्यविरचितस्वयम्भूस्तोत्रे ६५ श्लो० तव—हे भगवन्! भवतः स्यात्पदलाञ्छनाः—स्याद्रूपं लाञ्छनं येषान्ते स्यात्पदलाञ्छनाः—स्यात्पदचिह्निताः । इमे—प्रसिद्धाः नयाः—निरवधारणा अभिप्रायविशेषाः—पूर्वोक्ताः सप्त । रसोपविद्धाः—रसेन—पारदेन उपविद्धाः—मिश्रिताः लोहधातवः इव अभिप्रेतफलाः—अभिप्रेतं फलं येभ्यस्ते इति विग्रहः, यथा पारदसंमिश्रं लोहादिधातु अभीप्सितफलप्रदं भवति तथा सप्त नया अपि वाञ्छितफलप्रदा इति, यतो—यस्मात् कारणाद्भवन्ति ततः—तस्माद् हेतोः । हितैषिणः—आत्महितेच्छवः । आर्याः—मोक्षपथसमीपयाताः जनाः भवन्तं—केवलज्ञानभास्वद्विभूषितदेहं, प्रणताः—प्रणन्तुमारब्धाः इत्यर्थः ।

एतेन समुदितेन ग्रन्थेन युक्तत्वं स्याद्वादस्य प्रतिपादनद्वारा संस्कृतानां प्राकृतानाञ्च शब्दानां सिद्धिरपि तत इत्याद्युक्तावपि, प्रेक्षावत्प्रवृत्तिप्रयोजकीभूतानुबन्धचतुष्टयानुक्तत्वरूपन्यूनतां अथवेति पक्षान्तरेण परिहरति—अथवा इत्यादिना—अस्मिन् पक्षे वादात् सिद्धिः स्यात्, इति विभज्य व्याख्यातव्यं प्रतिष्णातं । साधुशब्दप्रयोगद्वारा सम्यग्ज्ञानरूपासिद्धिर्भवतीत्यनेन प्रयोजनमभिहितम्, शब्दानुशासनस्य च शब्दाभिधेयत्वमपि प्रसिद्धं, इत्थं च व्याकरणात्साधुशब्दप्रयोगज्ञानं तद्द्वारा च परमपदप्राप्तिरित्यवधेयम् । एवमभिधेयप्रयोजनयोः सम्बन्धः साध्यसाधनभावरूपः, शब्दानुशासनाभिधेययोस्त्वभिधानाभिधेयत्वभावः इति सर्वमवदातम् ॥ २ ॥

शब्दानुशासनेऽस्मिन्प्रत्याहाररूपक्लिष्टकल्पनामनपेक्ष्यास्माभिर्लोकप्रसिद्धवर्णमाला गृहीता, सा च द्विपञ्चाशदक्षरात्मिका—अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ, अं अः, ँ, ≍क ≍प, क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह । एवमेव सूत्रप्रवृत्त्यर्थं लोकप्रसिद्धन्याया अपि ग्राह्या, सर्वमिदं हृदि निधाय चकार सूत्रं सूत्रकृत् लोकात् । पूर्वस्माच्छास्त्रात्सिद्धिरित्यनुवर्तते, लोकात् सिद्धिः इत्यन्वयः । अत्र पूर्ववत्पञ्चमी सर्वपदार्थप्रेक्षकलोकमाश्रित्य, सिद्धिः—ज्ञप्तिः कर्तव्या इत्यर्थः । कासां केषाञ्चेति जिज्ञासायामाह—उक्तातिरिक्तानां क्रियागुण इत्यादिना न्यायानां च इत्यन्तेन । उक्तातिरिक्तानां इत्युभयान्वयि तेन उक्तातिरिक्तानां—क्रियागुण-द्रव्य-जाति-काल-लिङ्ग-स्वाङ्ग-संख्या-परिमाण-अपत्य-वीप्सा-लुगवर्णादीनां संज्ञानामित्येकोऽन्वयः, उक्तातिरिक्तानां—परान्नित्यनित्यादन्तरङ्गमन्तरङ्गाच्चानवकाशं बलीयः इत्यादीनां न्यायानां च इत्यपरोऽन्वयः । उभयत्रान्वये विग्रहभेदः, तथाहि—यदि तत् संज्ञानामित्यत्रान्वेति तदा उक्ताभ्यः—स्वरादिसंज्ञाभ्यः अतिरिक्ताः—अधिकाः तासां वृत्त्युक्तसंज्ञानां इत्यर्थः । यदा च तत् न्यायानामित्यत्रान्वेति तदा उक्तातिरिक्तानां सर्वथैव अनुक्तानां अन्यैः उक्तेभ्यः अतिरिक्ताः अधिका ये न्यायास्तेषां इत्यर्थो वा बोध्यः । क्रमेण क्रियेत्यादि संज्ञापदार्थनिरूपणम्—क्रिया—पूर्वापरीभूतावयवा, गुणः—विशेषणं, द्रव्यं—विशेष्यम्, जातिः—"आकृतिग्रहणा जातिर्लिङ्गानां न च सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह" इति । कालः—त्रुट्यादिरूपः, लिङ्गम्—स्त्यानप्रसवः, तच्च पुंस्त्रीनपुंसकादिरूपं, स्वाङ्गम्—"अविकारोऽद्रवं मूर्तं प्राणिस्थं स्वाङ्गमुच्यते । च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु" । संख्या—एकत्वद्वित्वाद्यभिधानबुद्धिहेतुः, परिमाणं—सर्वतो मानम्, अपत्यं—पुत्रपौत्रादि, वीप्सा—क्रियागुणद्रव्यैर्युगपत्प्रयोक्तुर्व्याप्तुमिच्छा, लुक्—अदर्शनम्, अवर्णं इय संज्ञा उदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतानुनासिकाननुनासिकभेदविशिष्टस्य, आदिशब्दादिवर्णो वर्णोदिपरिग्रहः । द्वन्द्वगर्भबहुव्रीहिः । पूर्वात्परं परान्नित्यं,

१ °पदसत्यलाञ्छिता स्व० स्तो० ६५ । २ °तगुणा° स्व० स्तो० ६५ ।

नित्यादन्तरङ्गमन्तरङ्गाच्चानवकाशं बलीय इत्यादीनां न्यायानां च लोकाद्-वैयाकरणसमयविदः प्रामाणिकादेश्च शास्त्रप्रवृत्तये सिद्धिर्भवतीति वेदितव्यम् वर्णसमाम्नायस्य च ॥ ३ ॥

## अथ संज्ञाप्रकरणम्।

तत्र—

### औदन्ताः स्वराः ॥ १। १। ४ ॥

औकारावसाना वर्णाः स्वरसञ्ज्ञा भवन्ति। तकार उच्चारणार्थः। अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ। **औदन्ता** इति बहुवचनं वर्णेष्वपठितानां दीर्घपाठोपलक्षितानां प्लुतानां संग्रहार्थम्, तेन तेषामपि स्वरसंज्ञा। स्वरप्रदेशा "इवर्णादेरस्वे स्वरे यवरलम्" ॥१।२।२१॥ इत्यादयः ॥ ४ ॥

### एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः ॥ १। १। ५ ॥

**मात्रा** कालविशेषः। एकद्वित्र्युच्चारणमात्रा औदन्ता वर्णा यथासख्यं ह्रस्वदीर्घप्लुतसञ्ज्ञा भवन्ति। एकमात्रो ह्रस्वः-अ इ उ ऋ ऌ। द्विमात्रो दीर्घः-आ ई ऊ ॠ ॡ ए ऐ ओ औ। त्रिमात्रः प्लुतः-आ३ ई३ ऊ३ इत्यादि। ऐदौतौ चतुर्मात्रावपीत्यन्ये। औदन्ता इत्येव-प्रतक्ष्य, अत्रार्धमात्रिकयोर्व्यञ्जनयोः समुदायस्यैकमात्रत्वेऽपि ह्रस्वसञ्ज्ञाया अभावात् तोऽन्तो न भवति। वर्णानां च ह्रस्वादिसञ्ज्ञाविधानात् 'तितउच्छत्रम्' इत्यादावकारोकारलक्षणवर्णसमुदायस्य

---

**नित्यादन्तरङ्गं, अन्तरङ्गाच्चानवकाशं,** इत्यादेर्बलीयस्त्वं यथास्थानं तत्त्वप्रकाशिकाकृदेव वक्ष्यति, इति यथास्थानं दर्शयिष्याम। लोकादित्यस्य विवरण **वैयाकरणसमयविदः**—वैयाकरणाना शाब्दिकाना, समय —सिद्धान्तस्त वेत्तीति—जानाति इति वैयाकरणवित्त-स्मादित्यर्थ, वा **प्रामाणिकादेः**—यथार्थप्रमाणपुर सरं वक्तृभ्य सकाशात्। **शास्त्रप्रवृत्तये**—शास्त्रस्य शब्दानुशासनस्य, प्रवृत्तये प्रयोग-निष्पत्तये, सिद्धि ज्ञप्तिर्बोध्या। सम्यगाम्नायन्तेऽभ्यस्यन्ते वर्णा अस्मादिति समाम्नाय, वर्णानां अक्षराणा, समाम्नाय -पाठक्रम, तस्य **वर्णसमाम्नायस्य**—अक्षरपाठक्रमस्य सिद्धि, लोकात् लोकमाश्रित्य बोध्या इत्यन्वयार्थं। इत्थं च भगवता शब्दानुशासने स्वीये प्रसिद्धाक्षरराशिपाठक्रमश्च स्वरादिप्रसिद्धसञ्ज्ञान्यायाश्च गृहीता ॥ ३ ॥

**तत्र**—वर्णपाठक्रमे, लोकप्रसिद्धे विदिते सति व्यञ्जनानां उच्चारण स्वरमन्तरा न सम्भवतीति कृत्वा तदुपजीव्या स्वरसञ्ज्ञा पूर्वमाह—**औदन्ताः स्वराः**। औत्-औकार, अन्त —अन्तावयवो यस्य-अकारादिचतुर्दशवर्णसमुदायस्य स औदन्त अकारादिचतुर्दशवर्णसमुदाय स्वरपदबोध्य, किमर्थं बहुवचननिर्देश इति वृत्तिकृदेव वक्ष्यति इति समासान्वयार्थप्रदर्शनम्। एतेनात्र लम्बकर्णमानयेत्यादिवत्तद्गुणसविज्ञानो बहुव्रीहि, ननु दृष्टसागरमानयेत्यादिवदतद्गुणसविज्ञानो बहुव्रीहिरिति सूचितम्। औदित्यत्र तकारमनुच्चार्य "आवन्ता" इति निर्देशे स्वरूपापरिग्रह इति समभिप्रायेण वदति **तकार उच्चारणार्थः**—औदित्यत्र तकार, उच्चारणार्थं —उच्चार्यते—स्वरूपेण स्वीक्रियतेऽनेनेति उच्चारण, तदेव अर्थं प्रयोजन यस्य स, **उच्चारणार्थः**—स्वरूपपरिग्रहार्थं। यद्यप्यन्तग्रहणाभावे विशेषणमन्त इति, औदन्ता वर्णा इति लाभ तथापि दधिनौ इत्यत्र नौ इत्यस्यौदन्तत्वेन स्वरपदबोध्यत्वे "इवर्णादे" इति यत्व प्रसज्येत इति अन्तग्रहणप्रयोजनम्। के पुन अकारादिचतुर्दशवर्णा औकारपर्यन्ता? इति जिज्ञासाया परिगणयति—**अ आ इ ई** इत्यादिना। औदन्त स्वर इति सूत्रन्यासे प्लुतानां सग्रहाभावे प्राप्ते बहुवचनमौदन्ता इति, तदेवाह—औदन्ता इत्यादिना, **वर्णेषु अपठितानां दीर्घपाठोपलक्षितानां प्लुतानां संग्रहार्थं औदन्ता इति बहुवचनं** इत्यन्वय। **तेन**—बहुवचननिर्देशेन प्लुतसंग्रहेण। **तेषामपि**—प्लुतानामपि **स्वरसंज्ञा**—स्वरपदबोध्यत्व। **स्वरप्रदेशाः**—स्वरेण—स्वर इति शब्देन प्रदिश्यन्ते उच्चार्यन्तेऽनेति, स्वरप्रदेशा स्वरप्रयोजनस्थानानि, तदेव निर्दिशति—**इवर्णादेः** इति ॥४॥

सामान्यस्वरसंज्ञा निरूप्य तद्विशेषमाह—**एकद्वित्रिमात्राह्रस्वदीर्घप्लुताः**—एका च द्वे च तिस्रश्च—एकद्वितिस्रो मात्रा येषां ते एकद्वित्रिमात्रा, अत्रैकत्वं द्वित्वं त्रित्वं च मात्रायां बोध्यते। मात्रा च केत्यपेक्षायामाह-**मात्रा कालविशेषः** स च निमेषोन्मेषक्रियापरिच्छिन्न, अत्रौदन्ता वर्णा इत्यनुवर्तते। तच्च मात्रया विशिष्यते मात्रा च एकादिभिरित्येष क्रम। ह्रस्वदीर्घप्लुता ह्रस्वश्च दीर्घश्च प्लुतश्चेति ह्रस्वदीर्घप्लुता इति द्वन्द्व, एकद्वित्रिमात्रा औदन्ता वर्णा यथासख्य ह्रस्वदीर्घप्लुता इत्यन्वय। मात्राकाल -यद्वर्णस्योच्चारणक्रियां परिच्छिनत्ति, स एव वर्णो विशेष्यत्वेनेति कालस्याव्यावर्तकत्वाद्विशेषणासमव इति निरस्तम् तदेतत्सर्वमभिप्रेत्याह—**एकद्वित्र्युच्चारणमात्रा औदन्ता** इत्यादिना—एकद्वितिस्र उच्चारणे मात्रा येषान्ते, इति तद्विग्रह संज्ञिविशेषणत्रयेण सञ्ज्ञात्रयमिति यथासङ्ख्यलाभस्तदेवाह **यथासख्यमिति** क्रमपूर्वक स्पष्टोऽर्थ। **ऐदौतौ चतुर्मात्रौ अपि इति अन्ये**—शेषभट्टारका। औदन्ता स्वरा इत्यस्मादनुवृत्तौदन्ता इत्यस्य वर्णा इत्यस्य च फलमाह—**औदन्ता इत्येव प्रतक्ष्य** इत्यादिना **न भवति** इत्यन्तेन। अयमाशय —प्रपूर्वात्तक्षौ-तनूकरणे इतिधातो क्त्वाप्रत्यये तस्य च यपि औदन्ता इत्यननुवृत्तौ प्रतक्ष् य अत्र क्ष् संयुक्ताक्षरस्य व्यञ्जनद्वयात्मकत्वेनैकमात्रिकत्वाद्यतो हि व्यञ्जनस्यार्धमात्रिकत्वेन विश्रुतत्वात्प्रकृते क्षस्य ह्रस्वसञ्ज्ञायां "ह्रस्वस्य त पित्कृति" ४।४।११३। इति तागमप्रसक्तौ वैरूप्यं स्यादिति तदनुवृत्तौ तागमाभाव स्पष्ट एव, यत क्षस्य ह्रस्वत्वाभावादिति। सूत्रेऽस्मिन्वर्णा इत्यनेन यदि वर्णसमुदायस्य ह्रस्वादिसञ्ज्ञास्तर्हि तितउच्छत्रम् अत्र अ उ इति वर्णसमूहस्य स्वरस्य प्रत्येकमेकमात्रिकत्वेन दीर्घत्वे सति, "अनाङ्माङोदीर्घाद्वाच्छ" १।३।२८। इति द्वित्वविकल्पप्रसङ्ग स्यादिति, प्रत्येकमौकारपर्यन्तानां वर्णानां ह्रस्व-दीर्घप्लुतसञ्ज्ञा इत्यर्थो बोध्य। इत्थंच—तितउच्छत्रमित्यत्र "स्वरेभ्य" १।३।३०। इति नित्य द्वित्व सिद्धम्। अत्र व्यक्तिपक्षाश्रयण विवेचनेनैतेन सूचितम्। तदेतत्सर्वं विविच्य वदति—**अत्रार्धमात्रिकयोर्व्यञ्जनयोः इति** अत्र—प्रतक्ष्येत्यत्र क्षकारे अर्धमात्रिकयो -अर्धं मात्राया अर्धमात्रा, अर्धमात्रास्त्यनयोरिति अर्धमात्रिके, तयो इति विग्रह। व्यञ्जनयो कषयो समुदायस्य—क्ष् समुदायस्य क्षस्य एकमात्रत्वे अपि ह्रस्वसञ्ज्ञाया अभावात्, **तः**-"ह्रस्वस्य त" इति, **अन्तः**—अन्तावयव न भवति, इति अन्वय। **वर्णानां च**-प्रत्येक वर्णानां **ह्रस्वादिसञ्ज्ञायाः**—ह्रस्वदीर्घप्लुतसञ्ज्ञाया, **विधानं**—करण तस्मात्, **तितउच्छत्रम्, इत्यादौ** अकारोकारलक्षणः तद्रूप, वर्णसमुदाय अ उ इति

द्विमात्रत्वेऽपि दीर्घसंज्ञाया अभावाद्, द्वित्वविकल्पो न भवति। संध्यक्षराणां तु एकमात्रिकत्वाभावाद् ह्रस्वसंज्ञा न भवति। ह्रस्वादिप्रदेशा "ऋलृति ह्रस्वो वा" ॥१।२।२॥ इत्यादयः ॥ ५ ॥

## अनवर्णा नामी ॥ १ । १ । ६ ॥

अवर्णरहिता औदन्ता वर्णा नामिसंज्ञा भवन्ति—इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ। बहुवचनं प्लुतसंग्रहार्थम्, एवमुत्तरत्रापि । नामिप्रदेशा "नामिनस्तयोः षः" ॥२।३।८॥ इत्यादयः ॥ ६ ॥

## ॡदन्ताः समानाः ॥ १ । १ । ७ ॥

ॡकारावसाना वर्णाः समानसंज्ञा भवन्ति—अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ । समानप्रदेशाः "समानानां तेन दीर्घः" ॥१।२।१॥ इत्यादयः ॥ ७ ॥

## ए ऐ ओ औ संध्यक्षरम् ॥ १ । १ । ८ ॥

ए ऐ ओ औ इत्येते वर्णाः संध्यक्षरसंज्ञा भवन्ति। संध्यक्षरप्रदेशा "ऐदौत् संध्यक्षरैः" ॥१।२।१२॥ इत्यादयः ॥८॥

## अं अः अनुस्वारविसर्गौ ॥ १ । १ । ९ ॥

अकारावुच्चारणार्थौ । 'अं' इति नासिक्यो वर्णः, 'अः' इति च कण्ठ्यः । तौ यथासंख्यमनुस्वार-विसर्गसंज्ञौ भवतः। अनुस्वारविसर्गप्रदेशा "नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे" ॥१।३।८॥ "रः पदान्ते विसर्गस्तयोः" ॥१।३।५३॥ इत्यादयः ॥ ९ ॥

---

समूहस्वस्य द्विमात्रत्वे अपि द्वित्वविकल्प. "अनाङ् माङो दीर्घाद्वाच्छ" इति न भवति—अत्र हेतुमाह—दीर्घसंज्ञाया अभावात्—अनेन सूत्रेण दीर्घसंज्ञाया अविधानात् इति अन्वय. । तितउच्छत्रमित्यत्र तु विधानसामर्थ्यादोत्वं न भवतीत्यपि बोध्यम् । ननु यथाक्रमं अ आ इत्यादौ ह्रस्वादिसंज्ञास्तथा ए ऐ इत्यादौ कथं ह्रस्वादिसंज्ञा-इत्यत आह—संध्यक्षराणां इत्यादि न भवति इत्यन्तेन । संध्यक्षराणां—ए ऐ ओ औ इत्येषां ह्रस्वसंज्ञा पूर्वोक्ता न भवति अनेन सूत्रेण इति शेष , कथमित्यतो हेतुमाह—एकमात्रिकत्वाभावात्—एकमात्रिकत्वस्य अभावस्सात् इत्यर्थ । ह्रस्वदीर्घप्लुतसंज्ञोपयोगमभिधत्ते—ह्रस्वादिप्रदेशाः—पूर्ववदर्थ ॥ ५ ॥

नामिसंज्ञामभिधत्ते—अनवर्णानामी—अत्रौदन्ता इत्यनुवर्तते । न विद्यतेऽवर्णो येषु—औदन्तेषु इत्यनवर्णा औदन्ता, नामी-नामिपदबोध्या । ननु सन्ध्यक्षरेषु अवर्णसद्भावात्तेषामपि नामित्वाभावोऽस्त्विति चेदिष्टापत्ते , सन्ध्यक्षराणा नामित्वप्रयुक्त कार्यं तु व्याख्यानाद्भविष्यति यथा "नाम्यन्तस्था" २।३।१५। इति षत्वविधि —देवेषु, इत्यादौ । नामिनोऽन्ते तिष्ठन्तीति नाम्यन्तस्था सन्ध्यक्षराणीति व्याख्यानात्सर्वत्र विवेक , अन्यथा इदादिर्नामी इत्येव न्यस्येत् । अत्रौदन्ता स्वरा इतिवत्संज्ञासंज्ञि समानाधिकरणत्वेन निर्देष्टव्ये सति संज्ञासंज्ञिनोराचार्यकृद्वचनभेदनिर्देशो यत्र नामिन कार्यं विधीयते तत्र यदि कार्यात्कार्यी स्वरो न्यूनो भवति तदैव नामिसंज्ञा भवति इति सूचनाय, तेन ग्लायति इत्यत्र ग्लै अति इत्यवस्थायां ऐकारस्य नामित्वेऽपि "नामिनो गुणोऽक्ङिति" ४।३।१। इति न भवति गुण , कार्यिणो गुणापेक्षया न्यूनस्वरत्वाभावात् । तदेतदाह वृत्तिकृत्—अवर्णरहिता इत्यादिना । बहुवचनं—अनवर्णा इति प्लुतसंग्रहार्थम्—प्लुतानां संग्रहायेत्यर्थं । एवम्-"अनवर्णा नामी" इति सूत्रेऽनवर्णा इति बहुवचनवत्, उत्तरत्र "ॡदन्ता समाना" इति सूत्रे, अपिः—समुच्चये । नामिप्रदेशाः—पूर्ववदेवार्थो बोध्य ॥ ६ ॥

समानसंज्ञामाह—ॡदन्ताः समानाः । ॡदन्ताः समासादि अन्तग्रहणप्रयोजन च औदन्ता इतिवद्बोध्यं । समानाः—अवर्णादि, इति वर्णग्रहणे जातिग्रहणमिति, उदात्तानुदात्तस्वरितह्रस्वादिसानुनासिकनिरनुनासिकभेदविशिष्टस्याष्टादशप्रकाराकारादे संज्ञा, अत अष्टादशविधत्वेन तुल्यपरिमाणवन्तोऽकारादिॡपर्यन्ता समानपदबोध्या, इति यौगिकी समानसंज्ञा फलति । समानप्रदेशाः—पूर्ववदेवार्थ ॥ ७ ॥

सन्ध्यक्षरसंज्ञामाह—ए ऐ ओ औ सन्ध्यक्षरम्, अत्र द्वन्द्व जातिनिर्देशविवक्षाश्रयणञ्च, तेन "वर्णाव्ययात् स्वरूपेकार" ७।२।१५६। इति न कारप्रत्यय । सन्ध्यक्षरम्—सन्धौ सति अक्षरं—अर्थमश्नुते-व्याप्नोति सन्ध्यक्षरम्, इत्यन्वर्थसंज्ञाबलान्न भवति व्यंजनानां सा । संध्यक्षरपदबोध्या ए ऐ ओ औ इत्येते । संध्यक्षरप्रदेशाः—पूर्ववदेवार्थो ज्ञेय ॥ ८ ॥

अनुस्वारविसर्गसंज्ञाद्वयमाह—अं अः अनुस्वारविसर्गौ, अकारोपरिधृतबिन्दोरनुस्वार इति अकारादनन्तरं बिन्दुद्वय विसर्ग इति च संज्ञाद्वय । अनुस्वर्यते—सलीनमनुशब्यते इत्यनुस्वार । विसृज्यते-विरम्यते इति विसर्ग । अकारं विना बिन्दुबिन्दुद्वयरूपानुस्वारविसर्गौ समुच्चारयितुमशक्याविति मनसि निधायाह—अकारावुच्चारणार्थौ—उच्चारणार्थौ—उच्चारणमात्रप्रयोजकौ एतेनान्यस्वरोपरि तदनन्तरं वा तयोरुपादाने प्रयोजनान्तरोपलब्धेस्तदन्यस्वराणामुच्चारणार्थकत्वकथनासंभव इति अकारौ अं-अः -इत्यत्र स्थिताविल्यर्थ । अनुस्वारस्य स्थाननिर्देशमाह—अं इति नासिक्यो वर्णः—नासिकाया भव इत्यर्थ । विसर्गस्य स्थाननिर्देशमाह—अः इति कण्ठ्य —कण्ठे भव इत्यर्थ । अनुस्वारप्रदेशा,—पूर्ववदेवास्यार्थ ॥ ९ ॥

## कादिर्व्यञ्जनम् ॥ १ । १ । १० ॥

कादिर्वर्णो हकारपर्यन्तो व्यञ्जनसंज्ञो भवति । क ख ग घ ङ । च छ ज झ ञ । ट ठ ड ढ ण । त थ द ध न । प फ ब भ म । य र ल व । श ष स ह । व्यञ्जनप्रदेशा "नाम सिदय्व्यञ्जने" ॥१।१।२१॥ इत्यादयः ॥१०॥

## अपञ्चमाऽन्तस्थो धुट् ॥ १ । १ । ११ ॥

वर्गपञ्चमाऽन्तस्थावर्जितः कादिर्वर्णो धुट्संज्ञो भवति । क ख ग घ । च छ ज झ । ट ठ ड ढ । त थ द ध । प फ ब भ । श ष स ह । २४ । धुट्प्रदेशा "धुटो धुटि स्वे वा" ॥१।३।४८॥ इत्यादयः ॥ ११ ॥

## पञ्चको वर्गः ॥ १ । १ । १२ ॥

कादिषु वर्णेषु यो यः पञ्चसंख्यापरिमाणो वर्णः स स वर्गसंज्ञो भवति । क ख ग घ ङ । च छ ज झ ञ । ट ठ ड ढ ण । त थ द ध न । प फ ब भ म । वर्गप्रदेशाः "कवर्गैकस्वरवति" ॥२।३।७६॥ इत्यादयः ॥ १२ ॥

## आद्यद्वितीयशषसा अघोषाः ॥ १ । १ । १३ ॥

वर्गाणामाद्यद्वितीया वर्णाः शषसाश्चाघोषसंज्ञा भवन्ति । क ख । च छ । ट ठ । त थ । प फ । श ष स । १३ । बहुवचनं सर्ववर्गाणामाद्यद्वितीयपरिग्रहार्थम् । अघोषप्रदेशा "अघोषे प्रथमोऽशिटः" ॥१।३।५०॥ इत्यादयः ॥१३॥

## अन्यो घोषवान् ॥ १ । १ । १४ ॥

अघोषेभ्योऽन्यः कादिर्वर्णो घोषवत्संज्ञो भवति । ग घ ङ । ज झ ञ । ड ढ ण । द ध न । ब भ म । य र ल व ह । २० । घोषवत्प्रदेशा "घोषवति" ॥१।३।२१॥ इत्यादयः ॥ १४ ॥

## यँरँलँवा अन्तस्थाः ॥ १ । १ । १५ ॥

यँरँलँवँ इत्येते वर्णा अन्तस्थासंज्ञा भवन्ति । बहुवचनं सानुनासिकादिभेदपरिग्रहार्थम् । अन्तस्थाप्रदेशा "अञ्वर्गस्यान्तस्थातः" ॥१।३।२३॥ इत्यादयः ॥ १५ ॥

---

स्वरसंज्ञां निरूप्य स्वरं विनाशक्योच्चारणाना व्यञ्जनानां संज्ञामाह—कादिर्व्यञ्जनम् । कादि क आदिरवयवो यस्य—कादिहपर्यन्तवर्णसमुदायस्य स इति तद्गुणसंविज्ञानो बहुव्रीहिः, कस्य आदिरिति च विग्रहः । एतद्विग्रहप्रदर्शनेन सामीप्यव्यवस्थाप्रकारावयवेषु मध्ये अत्रादिशब्दोऽवयववाची गृह्यते, अन्येषामाद्यर्थानामत्रासंभवात् । कस्यादिरिति विग्रहवशाद्व्यवस्थावाच्यादिशब्दोपादाने सति स्वराणा व्यञ्जनत्वाभावपूर्वकमनुस्वारविसर्गयोश्च व्यञ्जनसंज्ञा सिध्यति । यथा संस्कर्ता अत्रानुस्वाररूपव्यञ्जनात्परस्य सस्य "धुटो धुटि स्वे वा" ।१।३।४८। इत्यनेन अपरसकारे स्वे परे विभाषा लुकि संस्कर्ता इति सिध्यति । विसर्गस्य व्यञ्जनसंज्ञायां यथा सुपूर्वस्य हु स्वयते क्विपि, णिलुकि सौ तल्लुकि च, सुहु स् अत्र—संयोगान्तस्य सस्य लुक् तथा च विसर्गस्य धुट्त्वात् "धुटस्तृतीय" २।१।७६। इति सूत्रेण कण्ठ्यत्वेन तत्सजातीयो ग सिद्ध सुहुग् । व्यञ्जनम्—व्यज्यते प्रकाशवान् क्रियतेऽर्थोऽनेनेति व्यञ्जनमित्यन्वर्थसंज्ञा । ककारादारभ्य कादिहपर्यन्ताना विसर्गानुस्वारयोश्च व्यञ्जनपदबोध्यत्वमित्यर्थः । तदेवाह वृत्तिकार —कादिर्वर्णो इत्यादिना भवति इत्यन्तेन । परिगणयति वर्णांस्तान्—क ख ग घ ङेत्यादिना । व्यञ्जनप्रदेशा –पूर्ववदेवास्यार्थ ॥ १० ॥

व्यञ्जनसंज्ञां निरूप्य तदवान्तरसंज्ञामाह—अपञ्चमान्तस्थो धुट् । अत्र कादिरित्यनुवर्तते । पञ्चमाश्च अन्तस्थाश्च पञ्चमान्तस्था, न विद्यन्ते पञ्चमान्तस्था यत्र वर्णसमुदाये स कादिरिति विग्रह । अपञ्चमान्तस्थ कादिर्वर्ण धुडित्यन्वय । तदर्थमाह—वर्गपञ्चमान्तस्था इत्यादिना । परिगणयति धुट्पदबोध्यान्—क ख ग घ इत्यादिना । धुट्प्रदेशाः—पूर्ववज्ज्ञेयोऽर्थ ॥ ११ ॥

सजातीयसमुदायो वर्ग । स चाष्टधा । अंवर्ग–कंवर्ग–चंवर्ग–टंवर्ग–तंवर्ग–पंवर्ग–यंवर्ग–शंवर्गभेदात् वर्णसमाम्नाये प्रसिद्ध । तं विहाय शास्त्रीयमाह—पञ्चको वर्गः । वर्णसमाम्नाये प्रसिद्धेष्वष्टसु वर्गेषु पञ्चसंख्यापरिमाणेन व्यवस्थित एव वर्गपदबोध्य । तदेवाह—कादिषु इत्यादिना । परिगणयति वर्गान्—क ख ग घ ङ इत्यादिना । वर्गप्रदेशाः—पूर्ववद्योज्यम् ॥ १२ ॥

अघोषसंज्ञामाह—आद्यद्वितीयशषसा अघोषाः । केषामाद्या द्वितीयाश्चेत्यत आह—वर्गाणामिति । अघोषसंज्ञिन परिगणयति—क ख च छ इत्यादिना । बहुवचन—आद्यद्वितीयशषसा इति । अघोषप्रदेशाः—पूर्ववदेवास्यार्थ ॥ १३ ॥

घोषसंज्ञामाह—अन्यो घोषवान् । केभ्य इत्यपेक्षायामाह—अघोषेभ्य इति । अत्र कादिरित्यनुवर्तते । घोषवान्–घोषत्ववान् इत्यर्थो, जातिनिर्देशाभिप्रायेण । घोषाघोषयोश्चान्वर्थत्व "तुल्यस्थानास्य०" इत्यत्र निरूपयिष्यति भगवान् ग्रन्थकृत् । गणयति घोषसंज्ञिन — ग घ ङेत्यादिना । घोषवत्प्रदेशाः—पूर्ववदेवास्यार्थ ॥ १४ ॥

अन्तस्थासंज्ञामाह—यरलवा अन्तस्थाः । सूत्रार्थमाह—यरलवेत्यादिना । बहुवचनं—यरलवा इति । सानुनासिकादिभेदपरिग्रहार्थम्—सानुनासिकत्व–निरनुनासिकत्वरूपभेदद्वयवतो यवलानां स्वरूपस्वीकृतये । अन्तस्थाप्रदेशाः—पूर्ववदेवास्यार्थ ॥ १५ ॥

द्विमात्रत्वेऽपि दीर्घसंज्ञाया अभावाद्, द्वित्वविकल्पो न भवति। संध्यक्षराणां तु एकमात्रिकत्वाभावाद् ह्रस्वसंज्ञा न भवति। ह्रस्वादिप्रदेशा "ऋलृति ह्रस्वो वा" ॥१।२।२॥ इत्यादयः ॥ ५ ॥

## अनवर्णा नामी ॥ १ । १ । ६ ॥

अवर्णरहिता औदन्ता वर्णा नामिसंज्ञा भवन्ति—इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ। बहुवचनं प्लुतसंग्रहार्थम्, एवमुत्तरत्रापि। नामिप्रदेशा "नामिनस्तयोः षः" ॥२।३।८॥ इत्यादयः ॥ ६ ॥

## ॡदन्ताः समानाः ॥ १ । १ । ७ ॥

ॡकारावसाना वर्णाः समानसंज्ञा भवन्ति—अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ। समानप्रदेशाः "समानानां तेन दीर्घः" ॥१।२।१॥ इत्यादयः ॥ ७ ॥

## ए ऐ ओ औ संध्यक्षरम् ॥ १ । १ । ८ ॥

ए ऐ ओ औ इत्येते वर्णाः संध्यक्षरसंज्ञा भवन्ति। संध्यक्षरप्रदेशा "ऐदौत् संध्यक्षरैः" ॥१।२।१२॥ इत्यादयः ॥८॥

## अं अः अनुस्वारविसर्गौ ॥ १ । १ । ९ ॥

अकारावुच्चारणार्थौ। 'अं' इति नासिक्यो वर्णः, 'अः' इति च कण्ठ्यः। तौ यथासंख्यमनुस्वार-विसर्गसंज्ञौ भवतः। अनुस्वारविसर्गप्रदेशा "नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे" ॥१।३।८॥ "रः पदान्ते विसर्गस्तयोः" ॥१।३।५३॥ इत्यादयः ॥ ९ ॥

---

समूहस्वस्य द्विमात्रत्वे अपि द्वित्वविकल्प "अनाङ् माङो दीर्घाद्वाच्छ" इति न भवति—अत्र हेतुमाह—दीर्घसंज्ञाया अभावात्—अनेन सूत्रेण दीर्घसंज्ञाया अविधानाद् इति अन्वय.। तितउच्छत्रमित्यत्र तु विधानसामर्थ्यादोत्वं न भवतीत्यपि बोध्यम्। ननु यथाक्रम अ आ इत्यादौ ह्रस्वादिसंज्ञास्तथा ए ऐ इत्यादौ कथन्न ह्रस्वादिसंज्ञा-इत्यत आह—**संध्यक्षराणां** इत्यादि न **भवति** इत्यन्तेन। **संध्यक्षराणां**—ए ऐ ओ औ इत्येषां **ह्रस्वसंज्ञा** पूर्वोक्ता न भवति अनेन सूत्रेण इति शेष, कथमित्यतो हेतुमाह—**एकमात्रिकत्वाभावात्**—एकमात्रिकत्वस्य अभावस्तस्मात् इत्यर्थ। ह्रस्वदीर्घप्लुतसंज्ञोपयोगमभिधत्ते—**ह्रस्वादिप्रदेशाः**—पूर्ववदर्थ ॥ ५ ॥

नामिसंज्ञामभिधत्ते—**अनवर्णानामी**—अत्रौदन्ता इत्यनुवर्तते। न विद्यतेऽवर्णो येषु—औदन्तेषु इत्यनवर्णा औदन्ता, नामी—नामिपदबोध्या। ननु सन्ध्यक्षरेषु अवर्णसद्भावात्तेषामपि नामित्वाभावोऽस्त्विति चेदिष्टापत्ते, सन्ध्यक्षराणा नामित्वप्रयुक्त कार्य तु व्याख्यानाद्भविष्यति यथा "नाम्यन्तस्था" २।३।१५। इति षत्वविधि—देवेषु, इत्यादौ। नामिनोऽन्ते तिष्ठन्तीति नाम्यन्तस्था सन्ध्यक्षराणीति व्याख्यानात्सर्वत्र विवेक, अन्यथा इदादिर्नामी इत्येव न्यसेत्। अत्रौदन्ता स्वरा इतिवत्संज्ञासंज्ञि समानाधिकरणत्वेन निर्देष्टव्ये सति सज्ञासंज्ञिनोराचार्यकृद्वचनभेदनिर्देशो यत्र नामिन कार्य विधीयते तत्र यदि कार्योत्कार्यी स्वरो न्यूनो भवति तदेव नामिसंज्ञा भवति इति सूचनाय, तेन ग्लायति इत्यत्र ग्लै अति इत्यवस्थाया ऐकारस्य नामित्वेऽपि "नामिनो गुणोऽक्ङिति" ४।३।१। इति न भवति गुण, कार्यिणो गुणापेक्षया न्यूनस्वरत्वाभावात्। तदेतदाह वृत्तिकृत्—**अवर्णरहिता** इत्यादिना। **बहुवचनं**—अनवर्णा इति **प्लुतसंग्रहार्थम्**—प्लुतानां संग्रहायेत्यर्थ। **एवम्**—"अनवर्णा नामी" इति सूत्रेऽनवर्णा इति बहुवचनवत्, **उत्तरत्र** "ॡदन्ता समाना" इति सूत्रे, **अपिः**—समुच्चये। **नामिप्रदेशाः**—पूर्ववदेवार्थो बोध्य ॥ ६ ॥

समानसंज्ञामाह—**ॡदन्ताः समानाः**। **ॡदन्ताः** समासादि अन्तग्रहणप्रयोजन च औदन्ता इतिवद्बोध्य। **समानाः**—अवर्णादि, इति वर्णग्रहणे जातिग्रहणमिति, उदात्तानुदात्तस्वरितह्रस्वादिसानुनासिकनिरनुनासिकभेदविशिष्टस्याष्टादशप्रकाराकारादे सर्वा, अत अष्टादशविधत्वेन तुल्यपरिमाणवन्तोऽकारादिऌपर्यन्ता समानपदबोध्या, इति यौगिकी समानसंज्ञा फलति। **समानप्रदेशाः**—पूर्ववदेवार्थ ॥ ७ ॥

सन्ध्यक्षरसंज्ञामाह—**ए ऐ ओ औ सन्ध्यक्षरम्**, अत्र द्वन्द्व जातिनिर्देशविवक्षाश्रयणश्च, तेन "वर्णाव्ययात् स्वरूपेकार" ७।२।१५६। इति न कारप्रत्यय। सध्यक्षरम्—संधौ सति अक्षरं—अर्थमश्नुते-व्याप्नोति सन्ध्यक्षरम्, इत्यन्वर्थसंज्ञाबलान्न भवति व्यजनानां सा। **संध्यक्षरपदबोध्या** ए ऐ ओ औ इत्येते। **संध्यक्षरप्रदेशाः**—पूर्ववदेवार्थो ज्ञेय ॥ ८ ॥

अनुस्वारविसर्गसंज्ञाद्वयमाह—**अं अः अनुस्वारविसर्गौ**, अकारोपरिधृतबिन्दोरनुस्वार इति अकारादनन्तरं बिन्दुद्वय विसर्ग इति च सज्ञाद्वय। अनुस्वर्यते—सलीनमनुशब्दयते इत्यनुस्वार। विसृज्यते-विरम्यते इति विसर्ग। अकारं विना बिन्दुबिन्दुद्वयरूपानुस्वारविसर्गौ समुच्चारयितुमशक्याविति मनसि निधायाह—**अकारावुच्चारणार्थौ**—उच्चारणार्थौ—उच्चारणमात्रप्रयोजकौ एवेनान्यस्वरोपरि तदनन्तरं वा तयोरुपादाने प्रयोजनान्तरोपलब्धेस्तदन्यस्वराणामुच्चारणार्थकत्वकथनासम्भव इति अकारौ अं—अः—इत्यत्र स्थिताविल्यर्थ। अनुस्वारस्य स्थाननिर्देशमाह—अं **इति नासिक्यो वर्णः**—नासिकायां भव इत्यर्थ। विसर्गस्य स्थाननिर्देशमाह—अः इति कण्ठ्य—कण्ठे भव इत्यर्थ। **अनुस्वारप्रदेशा**,—पूर्ववदेवास्यार्थ ॥ ९ ॥

## कादिर्व्यञ्जनम् ॥ १ । १ । १० ॥

**कादिर्वर्णो** हकारपर्यन्तो **व्यञ्जनसंज्ञो भवति**। क ख ग घ ङ। च छ ज झ ञ। ट ठ ड ढ ण। त थ द ध न। प फ ब भ म। य र ल व। श ष स ह। व्यञ्जनप्रदेशा "नाम सिदय्व्यञ्जने" ॥१।१।२१॥ इत्यादयः ॥१०॥

## अपञ्चमाऽन्तस्थो धुट् ॥ १ । १ । ११ ॥

वर्गपञ्चमाऽन्तस्थावर्जितः कादिर्वर्णो धुट्संज्ञो भवति। क ख ग घ। च छ ज झ। ट ठ ड ढ। त थ द ध। प फ ब भ। श ष स ह। २४। धुट्प्रदेशा "धुटो धुटि स्वे वा" ॥१।३।४८॥ इत्यादयः ॥ ११ ॥

## पञ्चको वर्गः ॥ १ । १ । १२ ॥

कादिषु वर्णेषु यो यः पञ्चसंख्यापरिमाणो वर्णः स स वर्गसंज्ञो भवति। क ख ग घ ङ। च छ ज झ ञ। ट ठ ड ढ ण। त थ द ध न। प फ ब भ म। वर्गप्रदेशाः "कवर्गैकस्वरवति" ॥२।३।७६॥ इत्यादयः ॥ १२ ॥

## आद्यद्वितीयशषसा अघोषाः ॥ १ । १ । १३ ॥

वर्गाणामाद्यद्वितीया वर्णाः शषसाश्चाघोषसंज्ञा भवन्ति। क ख। च छ। ट ठ। त थ। प फ। श ष स। १३। बहुवचनं सर्ववर्गाणामाद्यद्वितीयपरिग्रहार्थम्। अघोषप्रदेशा "अघोषे प्रथमोऽशिटः" ॥१।३।५०॥ इत्यादयः ॥१३॥

## अन्यो घोषवान् ॥ १ । १ । १४ ॥

अघोषेभ्योऽन्यः कादिर्वर्णो घोषवत्संज्ञो भवति। ग घ ङ। ज झ ञ। ड ढ ण। द ध न। ब भ म। य र ल व ह। २०। घोषवत्प्रदेशा "घोषवति" ॥१।३।२१॥ इत्यादयः ॥ १४ ॥

## यरलवा अन्तस्थाः ॥ १ । १ । १५ ॥

यरलव इत्येते वर्णा अन्तस्थासंज्ञा भवन्ति। बहुवचनं सानुनासिकादिभेदपरिग्रहार्थम्। अन्तस्थाप्रदेशा "अन्त्वर्गस्यान्तस्थातः" ॥१।३।२३॥ इत्यादयः ॥ १५ ॥

---

स्वरसंज्ञां निरूप्य स्वरं विनाशक्योच्चारणानां व्यञ्जनानां सञ्ज्ञामाह—**कादिर्व्यञ्जनम्**। कादि क आदिरवयवो यस्य—कादिहपर्यन्तवर्णसमुदायस्य स इति तद्गुणसंविज्ञानो बहुव्रीहिः, कस्य आदिरिति च विग्रहः। एतद्विग्रहप्रदर्शनेन सामीप्यव्यवस्थाप्रकारावयवेषु मध्ये अत्रादिशब्दोऽवयववाची गृह्यते, अन्येषामाद्यर्थानामत्रासंभवात्। कस्यादिरिति विग्रहवशाद्व्यवस्थावाच्यादिशब्दोपादाने सति स्वराणां व्यञ्जनत्वाभावपूर्वकमनुस्वारविसर्गयोश्च व्यञ्जनसञ्ज्ञा सिध्यति। यथा संस्कर्ता अत्रानुस्वाररूपव्यञ्जनात्परस्य सस्य "धुटो धुटि स्वे वा" ।१।३।४८। इत्यनेन अपरसकारे स्वे परे विभाषा लुकि संस्कर्ता इति सिध्यति। विसर्गस्य व्यञ्जनसंज्ञायां यथा सुपूर्वस्य दु स्वयते क्विपि, णिलुकि सौ तलुकि च, सुदु स् अत्र—संयोगान्तस्य स्वस्य लुक् तथा च विसर्गस्य धुट्त्वात् "धुटस्तृतीयः" २।१।७६। इति सूत्रेण कण्ठ्यत्वेन तत्सजातीयो ग सिद्ध सुदुग्। व्यञ्जनम्—व्यज्यते प्रकाशवान् क्रियतेऽर्थोऽनेनेति व्यञ्जनमित्यन्वर्थसञ्ज्ञा। ककारादारभ्य कादिहपर्यन्तानां विसर्गानुस्वारयोश्च व्यञ्जनपदबोध्यत्वमित्यर्थः। तदेवाह वृत्तिकारः—**कादिर्वर्णो** इत्यादिना **भवति** इत्यन्तेन। परिगणयति वर्णांस्तान्—**क ख ग घ ङे**त्यादिना। व्यञ्जनप्रदेशा—पूर्ववदेवास्यार्थः ॥ १० ॥

व्यञ्जनसञ्ज्ञां निरूप्य तदवान्तरसञ्ज्ञामाह—**अपञ्चमान्तस्थो धुट्**। अत्र कादिरित्यनुवर्तते। पञ्चमाश्च अन्तस्थाश्च पञ्चमान्तस्थाः, न विद्यन्ते पञ्चमान्तस्था यत्र वर्णसमुदाये स कादिरिति विग्रहः। अपञ्चमान्तस्थः कादिर्वर्णः धुडित्यन्वयः। तदर्थमाह—**वर्गपञ्चमान्तस्था** इत्यादिना। परिगणयति धुट्पदबोध्यान्—**क ख ग घ** इत्यादिना। **धुट्प्रदेशाः**—पूर्ववज्ज्ञेयोऽर्थः ॥ ११ ॥

सजातीयसमुदायो वर्गः। स चाष्टधा। अंवर्ग-कंवर्ग-चंवर्ग-टंवर्ग-तंवर्ग-पंवर्ग-यंवर्ग-शंवर्गभेदात् वर्णसमाम्नाये प्रसिद्धः। तं विहाय शास्त्रीयमाह—**पञ्चको वर्गः**। वर्णसमाम्नाये प्रसिद्धेष्वष्टसु वर्गेषु पञ्चसंख्यापरिमाणेन व्यवस्थित एव वर्गपदबोध्यः। तदेवाह—**कादिषु** इत्यादिना। परिगणयति वर्गान्—**क ख ग घ ङ** इत्यादिना। **वर्गप्रदेशाः**—पूर्ववद्योज्यम् ॥ १२ ॥

अघोषसञ्ज्ञामाह—**आद्यद्वितीयशषसा अघोषाः**। केषामाद्या द्वितीयाश्चेत्यत आह—**वर्गाणामि**ति। अघोषसंज्ञिनः परिगणयति—**क ख च छ** इत्यादिना। **बहुवचनं**—आद्यद्वितीयशषसा इति। **अघोषप्रदेशाः**—पूर्ववदेवास्यार्थः ॥ १३ ॥

घोषसञ्ज्ञामाह—**अन्यो घोषवान्**। केभ्य इत्यपेक्षायामाह—**अघोषेभ्य इति**। अत्र कादिरित्यनुवर्तते। घोषवान्-घोषत्ववान् इत्यर्थो, जातिनिर्देशाभिप्रायेण। घोषाघोषयोश्चान्यर्थत्वं "तुल्यस्थानास्य०" इत्यत्र निरूपयिष्यति भगवान् ग्रन्थकृत्। गणयति घोषसंज्ञिनः—**ग घ ङे**त्यादिना। **घोषवत्प्रदेशाः**—पूर्ववदेवास्यार्थः ॥ १४ ॥

अन्तस्थासञ्ज्ञामाह—**यरलवा अन्तस्थाः**। सूत्रार्थमाह—**यरलवे**त्यादिना। **बहुवचनं**—यरलवा इति। **सानुनासिकादिभेदपरिग्रहार्थम्**—सानुनासिकत्व-निरनुनासिकत्वरूपभेदद्वयवतां यवलानां स्वरूपस्वीकृतये। **अन्तस्थाप्रदेशाः**—पूर्ववदेवास्यार्थः ॥ १५ ॥

## अंअः ≍क ≍प शषसाः शिट् ॥ १ । १ । १६ ॥

अनुस्वारो विसर्गो वज्राकृतिर्गजकुम्भाकृतिश्च वर्णः शषसाश्च शिट्संज्ञा भवन्ति । अकारककारपकारा उच्चारणार्थाः । बहुवचनं वर्णेष्वपठितयोरपि ≍क≍पयोर्वर्णत्वार्थम्[1] । शिट्प्रदेशाः "शिटः प्रथमद्वितीयस्य" ॥१।३।३५॥ इत्यादयः ॥ १६ ॥

## तुल्यस्थानाऽऽस्यप्रयत्नः स्वः ॥ १ । १ । १७ ॥

यत्र पुद्गलस्कन्धस्य वर्णभावापत्तिस्तत् स्थानं कण्ठादि । यदाहुः—"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च" अस्यत्यनेन वर्णानित्यास्यम्, ओष्ठात् प्रभृति प्राक् काकलकसंज्ञकात् कण्ठमणेः । आस्ये प्रयत्न आस्यप्रयत्नः–आन्तरः संरम्भः । स चतुर्धा–स्पृष्टता, ईषत्स्पृष्टता, विवृतता, ईषद्विवृतता । तुल्यौ–वर्णान्तरेण सदृशौ स्थानाऽऽस्यप्रयत्नौ यस्य स वर्णस्तं प्रति स्वसंज्ञो भवति । करणं तु जिह्वामूलमध्याग्रोपाग्ररूपं स्थानास्यप्रयत्नतुल्यत्वे सति नातुल्यं भवतीति पृथग् नोक्तम् । तत्र स्थानम्—अवर्णहविसर्गकवर्गाः कण्ठ्याः । 'सर्वमुखस्थानमवर्णम्, हविसर्गावुरस्यौ, कवर्गो जिह्वामूल' इत्यन्ये । इवर्णचवर्गयशास्तालव्याः । उवर्णपवर्गोपध्मानीया ओष्ठ्याः । ऋवर्णटवर्गरषा मूर्धन्याः । 'रेफो दन्तमूल' इत्येके । लृवर्णतवर्गलसा दन्त्याः । ए ऐ तालव्यौ । 'कण्ठतालव्यौ' इत्यन्ये । ओ औ ओष्ठ्यौ । 'कण्ठोष्ठ्यौ' इत्यन्ये । वो दन्त्यौष्ठ्यः[2] । 'सृक्कस्थानः' इत्यन्ये । जिह्वामूलीयो जिह्व्यः । 'कण्ठ्यः' इत्यन्ये । नासिक्योऽनुस्वारः । 'कण्ठ्यनासिक्यः' इत्यन्ये । ङञणनमाः स्वस्थाननासिकास्थानाः ॥ अथास्यप्रयत्नः—स्पृष्टं करणं स्पर्शानाम् ।

---

शिट् संज्ञामाह—अंअः ≍क ≍प शषसाः शिट् । अनुस्वारविसर्गजिह्वामूलीयोपध्मानीयशषसा इत्येते शिट्पदबोध्या इत्यर्थः । तदेवाह वृत्तिकारः—अनुस्वारो विसर्ग इत्यादिना । जिह्वामूलीयोपध्मानीययोर्देशकाललिपिभिर्भेदेऽपि स्वरूपैक्यं दृष्टान्तोपन्यासपूर्वकं दर्शयति—वज्राकृतिः—वज्रस्येवाकृतिर्यस्य सः, कुलिशावयवविन्याससमस्वरूपः । गजकुम्भाकृतिः—गजस्य कुम्भौ गजकुम्भौ, गजकुम्भयोरिव आकृतिर्यस्य स गजकुम्भाकृतिः—करिकलशसनिभस्वरूपः, च वर्णः –≍प इत्यर्थः । अं अः ≍क ≍प इत्येषु पूर्वत्र द्वयोरकारयोः परत्र द्वयोः ककारपकारयोः किं प्रयोजनमित्यपेक्षायामाह—अकारककारपकारा उच्चारणार्था इति । अं अः इत्यत्र अकारौ, ≍क ≍प इत्यत्र च ककारपकारौ इति–अ, क, प उच्चारणं–विसर्गानुस्वारजिह्वामूलीयोपध्मानीयस्वरूपपरिग्रहः एव अर्थः—प्रयोजनं येषां ते तथा । अंअः ≍क ≍प शषसाः इति बहुवचनान्तम् संज्ञी शिडिति एकवचनान्तम् संज्ञा इति विषमोपन्यासः कथमित्यत आह बहुवचनम्—अंअः ≍क ≍प शषसाः इति । वर्णेषु–लोकविश्रुतेषु, अपठितयोः–अनभ्यस्तयोः, अपि ≍क ≍पयोर्जिह्वामूलीयोपध्मानीययोः वर्णत्वार्थम्—वर्णत्वप्रयोजनाय इत्यन्वयः । शिट्प्रदेशाः—पूर्ववदर्थः इति । स्वरतदवान्तरसंज्ञानिरूपणानन्तरं व्यञ्जनव्यञ्जनावान्तरसंज्ञानिरूपणम् ॥ १६ ॥

स्वरव्यञ्जनसंज्ञां निरूप्य वर्णेषु के स्वाः ? इति न्याय्यां स्वसंज्ञामाह—तुल्यस्थानास्यप्रयत्नः स्वः । तिष्ठन्ति वर्णा अस्मिन्निति स्थानं, अस्यति–क्षिपति वर्णाननेनेत्यास्यम् । आस्ये प्रयत्नः–उत्साहः आस्यप्रयत्नः । स्थानञ्च आस्यप्रयत्नश्च स्थानास्यप्रयत्नौ, तुल्यं च तुल्यश्च तुल्यौ–सदृशौ स्थानास्यप्रयत्नौ–कण्ठादिस्थानाभ्यन्तरलक्षणास्यप्रयत्नौ यस्य वर्णस्य येन–वर्णेन सह स वर्णस्तं प्रति स्वसंज्ञ इत्यर्थः । स्थानं किम् ? स्थानस्य च कण्ठादेः वर्णस्थानता कथं ? तस्य च कति भेदाः ? किञ्चास्यं ? कश्चास्यप्रयत्नः ? कश्च बाह्यः ? कति च तयोर्भेदाः ? इत्यादि स्वान्यसमतिपुरःसरं स्वमतं ब्रवीति सर्वज्ञो वृत्तिकारः—यत्रेत्यादिना । यत्र—यस्मिन् । पुतः—स्पर्शरसगन्धवर्णवन्तः, गलन्तीति गलाः, पुद्गलाः, पुद्गलानां–पूर्वोक्तानां स्कन्धः—अनन्तप्रदेशात्मकः संघातस्तस्य पुद्गलस्कन्धस्य । वर्णभावापत्तिरिति—वर्णस्य भावः वर्णभावः, वर्णभावस्यापत्तिः वर्णभावापत्तिः—अक्षररूपतापरिणामः तत् स्थानम् । अर्थात्पुद्गलस्कन्धः प्राप्नोत्यक्षररूपतापरिणामं, यत्र तत्स्थानं, अष्टविधं कण्ठादि आदिपदग्राह्यमुरःप्रभृति । एतदेव वदति–स्वान्यवचनेन यदाहुः इति–पाणिनिशिक्षाकाराः–पा० शि० श्लो० १३ । आस्यपदार्थमाह—अस्यत्यनेन इत्यादि कण्ठमणेः इत्यन्तेन । अयमाशयः—ओष्ठादारभ्य काकलकाभिधकण्ठमणिं (ग्रीवायामुन्नतप्रदेशं) पूर्वभागमास्यम्, अत एवास्य मुखं, तथा च स्थानग्रहणम्, अन्यथा तदुपादानस्य निष्फलत्वापत्तेः । आस्यस्य प्रयत्नेन सह सप्तमीतत्पुरुषं दर्शयति–आस्ये प्रयत्न इत्यनेन । आस्यप्रयत्नपदार्थविवरणपुरःसरं तद्विभजते—आन्तरः इत्यादि ईषद्विवृतता इत्यन्तेन । समुदितसूत्रपदार्थं, विग्रहप्रदर्शनपुरःसरमाविष्करोति—तुल्यौ इत्यादि भवति इत्यन्तेन । करणस्य तुल्यत्वानुक्तौ सूत्रे तत्तुल्यत्वानुक्तिरूपं न्यूनत्वं परिहरति—करणं इत्यादिना नोक्तम् इत्यन्तेन । करणं किं स्वरूपमित्यत आह–जिह्वामूलमध्याग्रोपाग्ररूपं—जिह्वामूलं, जिह्वामध्यं, जिह्वाग्रं, जिह्वोपाग्रं इति वृत्तिस्थविश्लेषः । नातुल्यं–तुल्यमेवेत्यर्थः । वर्णसमाम्नाये समाम्नातानां वर्णानां स्वसंज्ञोपयोगि स्थानास्यप्रयत्नबाह्यप्रयत्नादि क्रमशो निरूपयति केषां केषां स्थानास्यप्रयत्नः कैः कैः सहतुल्यमित्याशयेन—तत्र स्थानम् इत्यादिना । 'सर्वमुखस्थानमवर्णम् हविसर्गावुरस्यौ, कवर्गो जिह्वामूल' इत्यन्ये—शाकटायनाः "स्व स्थानास्यैक्ये"—शा० सू० १।१।६ सूत्रे, पा० शि० श्लो० १६ पाणिनिशिक्षाकाराश्च । 'रेफो दन्तमूल' इत्येके प्राचीनाः शाकटायनादयः तत्रैव सूत्रे । ए ऐ कण्ठतालव्यौ इत्यन्ये, ओ औ कण्ठोष्ठ्यौ इत्यन्ये इति पा० शि० १८ श्लोके । वो दन्त्यौष्ठ्यः 'सृक्कस्थानः'—ओष्ठपर्यन्तं स्थानं यस्य स इत्यन्ये पाणिनीयाः, देवनन्द्यादयश्च 'जिह्वामूलीयः कण्ठ्यः' इत्यन्ये–पाणिनिशिक्षाकाराः । अनुस्वारः 'कण्ठ्यनासिक्यः' इत्यन्ये पाणिनिशिक्षाकाराः शाकटायनाश्च । ङञणनमानां स्ववर्गप्रयुक्तं तत्तत्स्थानं, नासिकास्थानमधिकमपि इत्यावेदयति ङञणनमाः इत्यादिना । इति वर्णानां स्थानं निरूप्य आस्यप्रयत्नमाह–अथेत्यादिना स्वराणां इत्यन्तेन । ऊष्मणां च इत्यन्ये—पाणिनिशिक्षाकाराः पा० शि० श्लो० २१ । मूले, ताभ्यामपि एओभ्यां अपि–ऐ औ, ताभ्याम्–ऐऔभ्यां, अपि अवर्णं । एतेन विवृततरता–विवृततमताति विवृततमारूपत्रयम् प्रयत्नानामाधिक्यं, विवृतत्वेन तान् संगृह्य परिहरणीयम् । 'अकारः संवृतः' इत्यन्ये, पाणिनिशिक्षाकृतः पा० शि० श्लो० २० । आस्यप्रयत्नचतुष्टयं निरूप्य वर्णेषु स्वरेषु प्रथमस्यावर्णस्याष्टादशभेदोपवर्णनपुरःसरमष्टादशाकारबोधकम्यं तत्रैव

---

१ °वर्णार्थम् पु० । २ दन्तोष्ठ्य पु० ।

स्पर्शा वर्ग्याः । ईषत्स्पृष्टं करणमन्तःस्थानाम् । ईषद्विवृतं करणमूष्मणाम् । विवृतं करण स्वराणाम् । 'ऊष्मणां च' इत्यन्ये । ऊष्माणः शषसहाः । स्वरेषु ए ओ विवृततरौ, ताभ्यामपि ऐ औ; ताभ्यामप्यवर्णः । 'अकारः संवृतः' इत्यन्ये । तत्र त्रयोऽकारा उदात्तानुदात्तस्वरिताः प्रत्येकं सानुनासिकनिरनुनासिकभेदात् षट् । एव दीर्घप्लुतावित्यष्टादश भेदा अवर्णस्य, ते॰ सर्वे कण्ठस्थाना विवृतकरणाः परस्पर स्वाः । एवमिवर्णास्तावन्तस्तालव्या विवृतकरणाः स्वाः । उवर्णा ओष्ठ्या विवृतकरणाः स्वाः । ऋवर्णा मूर्धन्या विवृतकरणाः स्वाः । ऌवर्णा दन्त्या विवृतकरणाः स्वाः । '**ऌवर्णस्य दीर्घा न सन्तीति द्वादश**' इत्यन्ये । सध्यक्षराणां ह्रस्वा न सन्तीति तानि प्रत्येकं द्वादशभेदानि । तत्र एकारास्तालव्या विवृततराः स्वाः । ऐकारास्तालव्या अतिविवृततराः स्वाः । ओकारा ओष्ठ्या विवृततराः स्वा । औकारा ओष्ठ्या अतिविवृततराः स्वाः । वर्ग्याः पञ्च पञ्च परस्परं स्वाः । यलवानामनुनासिकोऽननुनासिकश्च द्वौ भेदौ परस्परं स्वौ । रेफोष्मणां त्वतुल्यस्थानास्यप्रयत्नत्वात् स्वा न भवन्ति । आस्यग्रहणं बाह्यप्रयत्ननिवृत्त्यर्थम् । ते हि "आसन्नः" ॥७।४।१२०॥ इत्यत्रैवोपयुज्यन्ते, न स्वसंज्ञायाम् । के पुनस्ते ? विवारसंवारौ श्वासनादौ घोषवदघोषता अल्पप्राणमहाप्राणता उदात्तोऽनुदात्तः स्वरितश्चेत्येकादश । कथ पुनरेते॰ आस्याद्बाह्याः, स्पृष्टतादयः तु आन्तराः ? उच्यते—वायुना कोष्ठेऽभिहन्यमानेऽमीषां प्रादुर्भावात् । स्पृष्टतादीनां तु कण्ठादिस्थानाभिघाते भावात् । तथा चापिशलिः शिक्षामधीते—"नाभिप्रदेशात् प्रयत्नप्रेरितः प्राणो नाम वायुरूर्ध्वमाक्रामन्नुरःप्रभृतीनां स्थानानामन्यतमस्मिन् स्थाने प्रयत्नेन विधार्यते । स विधार्यमाणः स्थानमभिहन्ति, तस्मात्-स्थानाभिघाताद्ध्वनिरुत्पद्यते आकाशे । सा वर्णश्रुतिः, स वर्णस्यात्मलाभः । तत्र वर्णध्वनावुत्पद्यमाने यदा स्थानकरणप्रयत्नाः परस्पर स्पृशन्ति सा स्पृष्टता । यदा ईषत्स्पृशन्ति सा ईषत्स्पृष्टता । यदा सामीप्येन स्पृशन्ति सा संवृतता । दूरेण यदा स्पृशन्ति सा विवृतता । **एषोऽन्तःप्रयत्नः** । स इदानीं प्राणो नाम वायुरूर्ध्वमाक्रामन् मूर्ध्नि प्रतिहतो निवृत्तः कोष्ठमभिहन्ति । तत्र-कोष्ठेऽभिहन्यमाने कण्ठबिलस्य विवृतत्वाद् विवारः । संवृतत्वात् संवारः । तत्र यदा कण्ठबिल विवृतं भवति तदा श्वासो जायते, संवृते तु नादः । तावनुप्रदानमाचक्षते । अन्ये तु ब्रुवते "अनुप्रदानमनुस्वानो

---

स्थानास्यप्रयत्नत्वेन स्वत्व प्रतिपादयति—**तत्र त्रयोऽकारा** इत्यादि, **ते सर्वे कण्ठस्थाना विवृतकरणाः परस्परं स्वा** इत्यन्तेन । स्पष्टोऽर्थः । इवर्णोवर्णयोः, ऋऌवर्णयोश्चावर्णवदष्टादशभेदोपवर्णनपुरःसरं स्थानास्यप्रयत्नौ प्रदर्श्य च स्वत्व प्रतिपादयति—**एवमिवर्णाः** इत्यादि, **ऌवर्णा दन्त्या विवृतकरणाः स्वा** इत्यन्तेन । **तावन्त** इति पदमुवर्णा ऋवर्णा ऌवर्णा इत्यत्र च सम्बन्धनीयम्, स्फुटोऽर्थः । अन्यमतमाह—**ऌवर्णस्य** इत्यादिना । **इत्यन्ये**-पाणिनिशाकटायना, "तुल्यास्यप्रयत्नं सवर्णम्" पा० सू० १।१।९ । "स्व स्थानास्यैक्ये" शा० सू० १।१।६। इति सूत्रयो । ए ऐ ओ औ इत्येषा ह्रस्वाभावाद्द्वादशभेदोपवर्णनपुरःसरमेकारस्य एकारेण सह स्वत्व, ऐकारस्य ऐकारेण सह स्वत्व, ओकारस्य ओकारेण सह स्वत्व, औकारस्य औकारेण सह च स्वत्व स्थानास्यप्रयत्नाभ्या तुल्यत्वप्रदर्शनद्वारा प्रतिपादयति—**सन्ध्यक्षराणां ह्रस्वा** इत्यादिना, **औकारा औष्ठ्या अतिविवृततराः स्वाः** इत्यन्तेन । पञ्चसु वर्गेषु व्यञ्जनाना स्वस्ववर्गप्रयुक्त स्वत्वं प्रतिपादयति—**वर्ग्याः** इत्यादि, **स्वाः** इत्यन्तेन । यकारलकारवकाराणा भेदद्वयमनुनासिकाननुनासिकत्वेन प्रदर्श्य स्वत्वमाह—**यलवाना** इत्यादि, **स्वौ** इत्यन्तेन । रेफशषसहाना स्वत्वाभाव निर्दिशति—**रेफोष्मणां** इत्यादि, **न भवन्ति** इत्यन्तेन । आस्ये प्रयत्न -आस्यप्रयत्न-इत्यत्रास्येत्यनुक्त्वा प्रयत्न इत्युच्यमाने आस्यफलमाह—**आस्यग्रहणं** इत्यादि, **निवृत्त्यर्थम्** इत्यन्तेन । बाह्यप्रयत्नाना क्वोपयोग, क्वचानुपयोग इति दर्शयति—**ते हि** इत्यादि, **संज्ञायाम्** इत्यन्तेन । ते-बाह्यप्रयत्ना के ? इत्याशङ्क्य विभजते—**विवार** इत्यादिना । एतेषा प्रयत्नाना बाह्यत्व, पूर्वोक्तानां चान्तरत्व विशदयति—**कथं पुनरेते** इत्याशङ्क्य विवारादीना बाह्यत्व, स्पृष्टतादीना चान्तरत्व, **उच्यते** इत्यादि समाधानमुखेनाह । विवारादीनां बाह्यत्वसाधको हेतु —**वायुना कोष्ठे**-उदरे**ऽभिहन्यमाने**-ताड्यमाने सति **अमीषां**—विवारादीनां प्रादुर्भावात्-समुत्पत्ते इति । स्पृष्टतादीनां चान्तरत्वसाधको हेतु —**स्पृष्टतादीना**—पूर्वोक्तचतुर्णामान्तरप्रयत्नाना, **कण्ठादिस्थानाभिघाते**—कण्ठादिस्थानाना अभिघातस्तस्मिन् सति, **भावात्**-उत्पत्ते । स्वोक्तार्थेऽन्यसंमतिमाह—**तथा च** इत्यादिना । **आपिशलिः**-प्राचीनाचार्य । **शिक्षां**-वर्णोत्पत्तिप्रतिपादक शास्त्रम् । स एवाचार्य शिक्षाया, वर्णस्वरूपप्राप्तिमाह—**नाभिप्रदेशात्** इत्यादि, **आत्मलाभ** इत्यन्तेन । **आक्रामन्** व्याप्नुवन्, **अन्यतमस्मिन्**-तेषु कस्मिंश्चित्स्थाने इत्यर्थ । प्रयोगोऽय हैमशब्दानुशासनविरुद्ध, किन्तु मतान्तरीय । **विधार्यते**-विशेषेण धार्यते । **विधार्यमाणः** स-प्राणवायु, **स्थानं**-कण्ठादि, **अभिहन्ति**-ताडयति । **तस्मात्** इत्यस्यैवार्थमाह-**स्थानाभिघातात्** । **उत्पद्यते**-जायते **सा**-प्रसिद्धा ध्वनेरुत्पत्ति, **सः**-ध्वनि, **आत्मलाभः**—आत्मन -स्वरूपस्य लाभ -प्राप्ति । वर्णस्वरूपप्राप्तिमुक्त्वा आस्यप्रयत्न प्रदर्शयति-**तत्र** इत्यादि, **एषोऽन्तःप्रयत्न** इत्यन्तेन । **तत्र**-आकाशे, **वर्णध्वनौ**-अक्षरध्वनौ, **उत्पद्यमाने**-जायमाने सति, **यदा**-यस्मिन्समये **स्थानकरणप्रयत्नाः**—**स्थानं** पूर्वोक्त कण्ठादि, **करणं**-पूर्वोक्त जिह्वामूलादि, **प्रयत्नः**-उत्साह इति स्थानकरणप्रयत्ना, **परस्परं**-अन्योन्य **स्पृशन्ति** तदा प्रथम स्पृष्टताख्यान्तरप्रयत्न इत्येवरीत्या क्रमेणान्तरप्रयत्नत्रयमपि निर्दिशति-**यदा** इत्यादि, **विवृतता** इत्यन्तेन । आन्तरप्रयत्न विवृत्य बाह्यप्रयत्न भेदपुरःसरं विवृणोति—**स इदानीं** इत्यादि, **बाह्यप्रयत्न** इत्यन्तेन । **प्राणो नाम वायुः**-हृदि सस्थित । **तत्र कोष्ठे**-उदरे । **कण्ठबिलस्य**-गलविवरस्य, **विवृतत्वात्**-विकासित्वात्, **विवारः**-तन्नामको बाह्यप्रयत्न प्रथम । तत्र कोष्ठेऽभिहन्यमाने कण्ठबिलस्य **संवृतत्वात्**-सकोचशालित्वात् **संवार** इति द्वितीय । तत्र-कोष्ठेऽभिहन्यमाने, **यदा कण्ठबिलं**-गलविवरं, **विवृतं**-विकस्वरं भवति तदा मुखनासिकाप्रवेशननिर्गमनाभ्यां **श्वासः**-तन्नामको वायु, **जायते**-भवति इति तृतीय । तत्र यदा कण्ठबिल-गलविवरं संवृत भवति तदा **नादः**-तन्नामकश्चतुर्थ । श्वासनादयोरेकाभिधानतया कथयति—**तौ**-श्वासनादौ **अनुप्रदानं** इति **आचक्षते**-अभिदधते चक्षिङ्धातोर्द्विकर्मकत्वादत्र तौ अनुप्रदान इति च कर्म । अन्यसमतिमाह—**अन्ये तु ब्रुवते अनुप्रदानम्**-अनुप्रदीयते-

१ ईषद् विवृतता ख० ता० ।

घण्टादिनिर्ह्रादवद्" इति । तत्र यदा स्थानकरणाभिघातजे ध्वनौ नादोऽनुप्रदीयते तदा नादध्वनिसंसर्गाद् घोषो जायते । यदा तु श्वासोऽनुप्रदीयते तदा श्वासध्वनिसंसर्गादघोषो जायते । अल्पे वायावल्पप्राणता, महति महाप्राणता जायते । महाप्राणत्वादूष्मत्वम् । यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति तदा गात्रस्य निग्रहः कण्ठबिलस्य चाणुत्वं स्वरस्य च वायोस्तीव्रगतित्वाद्रौक्ष्यं भवति तमुदात्तमाचक्षते । यदा तु मन्दः प्रयत्नो भवति तदा गात्रस्य स्रंसनं कण्ठबिलस्य च महत्त्वं स्वरस्य च वायोर्मन्दगतित्वात् स्निग्धता भवति तमनुदात्तमाचक्षते । उदात्तानुदात्तस्वरसंनिपातात् स्वरित इत्येष कृत्स्नो बाह्यः प्रयत्न इति" ॥ अथवा–विवारादयो वर्णनिष्पत्तिकालादूर्ध्वं वायुवशेनोत्पद्यन्ते, स्पृष्टतादयस्तु स्थानास्यप्रयत्नव्यापारेण वर्णोत्पत्तिकाल एवेति वर्णनिष्पत्तिकालभावाभावाभ्यां विवारादीनां बाह्यत्वं, स्पृष्टतादीनां चाभ्यन्तरत्वम् । तत्र वर्गाणां प्रथमद्वितीयाः शषसविसर्गजिह्वामूलीयोपध्मानीयाश्च विवृतकण्ठाः श्वासानुप्रदाना अघोषाः । वर्गाणां तृतीयचतुर्थपञ्चमा अन्तःस्था हकारानुस्वारौ च संवृतकण्ठा नादानुप्रदाना घोषवन्तः । वर्गाणां प्रथमतृतीयपञ्चमा अन्तःस्थाश्चाल्पप्राणाः, इतरे सर्वे महाप्राणाः । स्थानग्रहणं किम्? कचटतपानां तुल्यास्यप्रयत्नानामपि भिन्नस्थानानां मा भूत्, किं च स्यात्? 'तर्सा, तर्सुम्' इत्यत्र "धुटो धुटि स्वे वा" ॥१।३।४८॥ इति पकारस्य तकारे लोपः स्यात् । आस्यप्रयत्नग्रहणं किम्? चवर्गयशानां तुल्यस्थानानामपि भिन्नास्यप्रयत्नानां मा भूत्, किं च स्यात्? अरुक् श्च्योतति इत्यत्र "धुटो धुटि स्वे वा' ॥१।३।४८॥ इति शकारस्य चकारे लोपः स्यात् । स्वप्रदेशाः "इवर्णादेरस्वे स्वरे यवरलम्" ॥ १ । २ । २१ ॥ इत्यादयः ॥ १७ ॥

---

पश्चात्प्रकर्षेण दीयते इति तस्यैवार्थमाह—**अनुस्वानः** इति । **घण्टादिनिह्रादवत्**–घण्टादेर्निह्राद, तेन तुल्य तद्वत् । तावनुप्रदानमित्यारभ्य अन्ये तु इत्यादि, निह्रादवद् इत्यन्तमौदव्रजेर्मतम् । द्वौ नादानुप्रदानौ इति हि तद्वचनात् । घोष कदा भवति? इत्यत आह—**तत्र यदा** इत्यादि, **जायते** इत्यन्तेन । तत्र यदा स्थानकरणाभिघातजे–स्थान–कण्ठादि, करण–जिह्वामूलादि, तयोरभिघात –हनन तस्माज्जात –स्थानकरणाभिघातज तस्मिन् ध्वनौ नाद पूर्वोक्त, **अनुप्रदीयते**–पश्चात् प्रकर्षेण दीयते, **तदा नादध्वनिसंसर्गात्**–नादाख्यध्वनिसंबन्धात् **घोष**.–तन्नामको बाह्यप्रयत्न पञ्चम । **यदातु**—स्थानकरणाभिघातजे ध्वनौ इति शेष । **श्वास**.–पूर्वोक्त, **अनुप्रदीयते तदाश्वासध्वनिसंसर्गात्**–श्वासाख्यध्वनिसंबन्धात् **अघोषः** जायते–भवति तन्नामको बाह्यप्रयत्न षष्ठ । अल्पप्राणतामहाप्राणते स्पष्टे । उदात्त विवृणुते—**यदा** इत्यादि, **आचक्षते** इत्यन्तेन । **यदा**—यस्मिन् समये, **सर्वाङ्गानुसारी**–सर्वाङ्ग–प्रत्यङ्ग अनुसरतीत्येवंशील, **प्रयत्न**.—उत्साह, **तीव्र**.–उग्र, **भवति तदा गात्रस्य**–शरीरस्य **निग्रह**.–ग्रहण च **कण्ठविलस्य**–गलविवरस्य **अणुत्वं**–सूक्ष्मत्व च **स्वरस्य रौक्ष्यं**–पारुष्य भवति **वायोः** तीव्रगतित्वात् इत्यन्वय । अनुदात्त विवृणुते—**यदातु मन्दः** इति, **आचक्षते** इत्यन्तेन । **मन्दः**–शनै शनै, प्रयत्न –उत्साह, **स्रंसनं**—शिथिलीभवन, **महत्त्वं**—दीर्घत्व, **स्वरस्य स्निग्धता**—मसृणता भवति **वायोः मन्दगतित्वात्** इत्यन्वय । स्वरित विवृणोति—**उदात्ता** इत्यादिना, **प्रयत्न** इत्यन्तेन । **उदात्तानुदात्त स्वरसंनिपातात्**–उदात्तश्च, अनुदात्तश्च तौ स्वरौ–उदात्तानुदात्तस्वरौ तयो **संनिपात**.—सम्मेलन समाहार इति यावत् तस्मात्, स्फुटोऽर्थ । कृत्स्न –समग्र । विवारादीनां बाह्यत्व, स्पृष्टतादीनां चान्तरत्व व्याख्यानान्तरेण प्रतिपादयति—**अथवा** इत्यादिना । **विवारादयः**–विवारसंवारश्वासनादघोषाघोषाल्पप्राणतामहाप्राणतोदात्तानुदात्तस्वरिता । **वर्णनिष्पत्तिकालात्**–अक्षरोत्पत्तिसमयात्, **ऊर्ध्वं**–पश्चात्, **वायुवशेन**–समीरणबलेन, **उत्पद्यन्ते** इति वर्णनिष्पत्तिकालानुत्पत्तिकत्वेन विवारादीना बाह्यत्व सिद्धम् । **स्पृष्टताद्य** स्पृष्टतेषत्स्पृष्टता संवृतताविवृतता । **स्थानास्यप्रयत्नव्यापारेण**–स्थान च आस्यप्रयत्नश्च तयोर्व्यापारस्तेन । **वर्णोत्पत्तिकाले**–अक्षराभिव्यक्तिसमये एव, **उत्पद्यन्ते** इति स्पृष्टतादीनां वर्णनिष्पत्तिकालोत्पत्तिकत्वेन आन्तरत्व सिद्धम् । तदेवाह—**वर्णनिष्पत्तिकालभावाभावाभ्या**मित्यादिना । वर्णानां निष्पत्तिकाल वर्णनिष्पत्तिकाल अभावश्च भावश्च इति भावाभावौ "लघ्वक्षरा०" ३।१।१६०। इत्यनेनाल्पस्वरत्वेन भावशब्दस्य पूर्वनिपात, वर्णनिष्पत्तिकाले भावाभावौ ताभ्याम् । अत्र हेतुद्वय **विवारादीनां बाह्यत्वं** वर्णनिष्पत्तिकालेऽभावात्–अनुत्पत्ते इत्येको हेतु, च **स्पृष्टतादीनाम्**–पूर्वोक्ताना **आभ्यन्तरत्वं**–आन्तरत्व **वर्णनिष्पत्तिकाले**–अक्षरोत्पत्तिसमये भावात्–उत्पत्ते इत्यपरो हेतु । येषां बाह्या प्रयत्ना सम्भवन्ति तानाह—**तत्र** इत्यादि, **महाप्राणा** इत्यन्तेन । **तत्र**–बाह्यप्रयत्नमध्ये, **वर्गाणा**–कवर्गचवर्गटवर्गतवर्गपवर्गाणा, प्रथमद्वितीया –क ख, च छ, ट ठ, त थ, प फ, इत्येते, शषसविसर्ग×क×पा । **विवृतकण्ठाः**—येषामुच्चारणे कण्ठो विवृतो भवति ते विवृतकण्ठा । **श्वासानुप्रदानाः**—श्वासलक्षणमनुप्रदान येषा ते श्वासानुप्रदाना । **वर्गाणा**—पूर्वोक्तानां, **तृतीयचतुर्थपञ्चमाः**–ग घ ङ, ज झ ञ, ड ढ ण, द ध न, ब भ म । **अन्त.स्था.** य र ल व इत्येते । **हकार** अनुस्वार. इत्येते **संवृतकण्ठा.**, येषामुच्चारणे कण्ठ संवृतो भवति ते संवृतकण्ठा । **नादानुप्रदानाः**–नादलक्षण अनुप्रदान येषां ते नादानुप्रदाना । **वर्गाणा**—पूर्वोक्तानां, **प्रथमतृतीयपञ्चमाः**–क ग ङ, च ज ञ, ट ड ण, त द न, प ब म इत्येते, अन्त स्था –य र ल व इत्येते अल्पप्राणा । **इतरे सर्वे**–ख घ, छ झ, ठ ढ, थ ध, फ भ, श ष, स ह, विसर्गजिह्वामूलीयोपध्मानीयानुनासिका अपि इत्येते महाप्राणा । सूत्रे स्थानग्रहणाभावे केवलास्यप्रयत्नतुल्यताया स्वत्वे सत्यनेन तर्सा, तर्सुम् इत्यत्र रेफात्परस्य धुट पस्य स्थाने तकारे परे लोप स्यात्, स्वत्व चास्त्येव तकारस्य पतयोरास्यप्रयत्नैक्यादिति तन्मा भूदिति स्थानग्रहण, तदेवाह—**स्थानग्रहणं किम्? कचटतपानामपि** इत्यादिना, **लोप. स्यात्** इत्यन्तेन । एवमेव आस्यप्रयत्नग्रहणाभावे सूत्रे केवलस्थानतुल्यतायामपि अरुक् श्च्योतति, अत्र कात्परस्य शस्य चकारे परे लोप "धुटो धुटि स्वे वा" इत्यनेन स्यादिति, नच वाच्य शचयो विभिन्नस्थानत्व तालुत्वेन तयोस्तुल्यत्वात्, तदेवाह **आस्यप्रयत्नग्रहणं किम्? चवर्गयशाना** इत्यादि, **चकारे परे लोपः स्यात्** इत्यन्तेन । **स्वप्रदेशाः**–पूर्ववद्बोध्यम् ॥ १७ ॥

---

१ सर्वानुसारी० ख० ता०, भाण्डा० । २ अरुग् इत्यपि पाठ लि०मू० ।

## स्यौजसमौशस्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसांङ्योस्सुपां त्रयीत्रयी प्रथमादिः ॥ १ । १ । १८ ॥

स्यादीनां प्रत्ययानां त्रयी त्रयी यथासंख्य प्रथमाद्वितीयातृतीयाचतुर्थीपञ्चमीषष्ठीसप्तमीसंज्ञा भवति । इजशटङपा अनुबन्धाः "सौ नवेतौ" ॥१।२।३८॥ इत्यादौ विशेषणार्थाः । बहुवचनं स्याद्यादेशानामपि प्रथमादिसञ्ज्ञाप्रतिपत्त्यर्थम् । प्रथमादिप्रदेशा "नाम्नः प्रथमैकद्विबहौ" ॥ २ । २ । ३१ ॥ इत्यादयः ॥ १८ ॥

## स्त्यादिर्विभक्तिः ॥ १ । १ । १९ ॥

'स्' इत्युत्सृष्टानुबन्धस्य सेर्ग्रहणम् । 'ति' इति उत्सृष्टानुबन्धस्य तिवः । आदिशब्दो व्यवस्थावाची । स्यादयस्तिवादयश्च प्रत्ययाः सुप्स्यामहिपर्यन्ता विभक्तिसञ्ज्ञा भवन्ति । विभक्तिप्रदेशाः—"अधातुविभक्तिवाक्यमर्थवन्नाम" ॥ १ । १ । २७ ॥ इत्यादयः ॥ १९ ॥

## तदन्तं पदम् ॥ १ । १ । २० ॥

स्याद्यन्तं त्याद्यन्त च शब्दरूप पदसंज्ञ भवति । धर्मो वः स्व ददाति नः शास्त्रम् । अन्तग्रहणं पूर्वसूत्रे तदन्तप्रतिषेधार्थम् । पदप्रदेशाः—"पदस्य" ॥ २ । १ । ८९ ॥ इत्यादयः ॥ २० ॥

## नाम सिद्य्व्यञ्जने ॥ १ । १ । २१ ॥

सिति प्रत्यये यकारवर्जिते व्यञ्जनादौ च परे पूर्वं नाम पदसंज्ञं भवति । भवदीयः, ऊर्णायुः, अहंयुः, अहंय्युः, शुभंयुः, शुभंय्युः । व्यञ्जने—पयोभ्याम्, पयस्सु, राजता, दक्त्वम्, राजकाम्यति । नामेति किम्? धातोर्मा भूत्—

---

"नाम्न प्रथमैकद्विबहौ" २।२।३१। इत्यादिसूत्रे प्रथमादिशब्दैर्विधीयमानाना स्यादीना तदादिपदबोधकत्वरूपा प्रथमादिसञ्ज्ञा, प्रत्ययस्वरूपप्रदर्शनपूर्वक निरूपयति—**स्यौजसमौ०** इत्यादिसूत्रेण । सूत्रार्थमाह—**स्यादीनां** इत्यादि, **भवति** इत्यन्तेन। **स्यादीनां प्रत्ययानां**—सि औ जस् इत्यादीनां प्रत्ययाना, **त्रयी त्रयी**—त्रयोऽवयवा अस्या इति, **यथासंख्यं**-यथाक्रम सि औ जस् इति **प्रथमा,** अम्-औ-शस् इति **द्वितीया**-द्वयो पूरणी, टा भ्याम् भिस् इति **तृतीया**-तिसृणा पूरणी, ङे भ्याम् भ्यस् **चतुर्थी**-चतसृणा पूरणी, ङसि भ्याम् भ्यस् इति **पञ्चमी**-पञ्चानां पूरणी, ङस् ओस् आम् **षष्ठी**-षण्णा पूरणी, ङि ओस् सुप् **सप्तमी**-सप्ताना पूरणी इति प्रथमादिसञ्ज्ञा नापूर्वा । सि इत्यत्र इकार, जस् इत्यत्र जकार, शस् इत्यत्र शकार, टा इत्यत्र टकार, ङे इत्यादिचतुष्टये ङकार, सुप् इत्यत्र पकार· इतीमेऽनुबन्धा सप्रयोजना यथास्थान दर्शयिष्याम । तदेवाह—**अनुबन्धा** इत्यादि, **विशेषणार्थाः** इत्यन्तेन । विशेषणार्था -विशेषण-व्यवच्छेद अर्थ-प्रयोजन येषान्ते इत्यर्थ । 'तदादेशास्तद्वद्भवन्ति' इति न्यायेन स्याद्यादेशानां प्रथमादिसञ्ज्ञासिद्धौ किमर्थं बहुवचनमित्यत आह—**बहुवचनम्** इत्यादि, **प्रतिपत्त्यर्थम्** इत्यन्तेन। **बहुवचनम्**—सुपा इति बहुवचन, **स्याद्यादेशानामपि**—स्यादीना अपि, **प्रथमादिसंज्ञानां प्रतिपत्तिः**—ज्ञान, तदर्थमित्यर्थ । एतेन बहुवचने महती शक्तिर्यद्विना न्याय पूर्वोक्त साधयति । प्रथमादिप्रदेशा इत्यादि पूर्ववज्ज्ञेयम् ॥ १८ ॥

स्यादिप्रत्ययानां प्रथमादिसंज्ञां निरूप्य स्यादित्याद्युभयबोधिका विभक्तिसञ्ज्ञामाह—**स्त्यादिर्विभक्तिः** । स् ति प्रत्यय आदि· र्यस्य-प्रत्ययसमुदायस्य स स्त्यादि । विभक्ति—विभज्यन्ते—विभागश प्रकाश्यन्ते कर्तृकर्मादयोऽर्था अनया इति **स्त्यादि**स्त्यादिप्रत्यय· समुदायो विभक्तिपदबोध्य इत्यर्थ । नन्वत्र स् इति, ति इति, कस्य ग्रहणमिति जिज्ञासायामाह—**स् इत्युत्सृष्टा** इत्यादि, **तिव** इत्यन्तेन । **उत्सृष्टानुबन्धस्य**—उत्सृष्ट-त्यक्त, अनुबन्ध—अनुबध्यते-कार्यार्थमुपदिश्यते इत्यनुबन्ध—इत् यस्य सस्तस्य सेस्तिवश्च ग्रहणमित्यर्थ । पूर्वसूरिव्यवस्थापितानुबन्धानामेवात्र ग्रहणमित्यभिप्रेत्याह—**आदिशब्दो व्यवस्थावाची** । एतेन पूर्वोक्तार्थचतुष्टयमध्ये व्यवस्थार्थक एवात्र ग्राह्य । समुदितसञ्ज्ञार्थमाह—**स्यादय** इत्यादि, **भवन्ति** इत्यन्तेन । विभक्तिप्रदेशा पूर्ववत् ॥ १९ ॥

विभक्तिसंज्ञां निरूप्य पदसञ्ज्ञामाह—**तदन्तं पदम्** । अत्र सूत्रे तच्छब्देन पूर्वसूत्रस्थस्त्यादिरिति परामृश्यते, शब्दरूपमध्याहृत तेन विशिष्यते, तथाच **तत्**-स्यादिप्रत्यय त्यादिप्रत्ययश्च अन्तो यस्य तत् **तदन्तं; पदम्**—पद्यते गम्यते कारकसंसृष्टोऽर्थोऽनेनेति 'पद' इति सञ्ज्ञा । स्याद्यन्तशब्दरूपस्य, त्याद्यन्तशब्दरूपस्य च, इत्यर्थस्तदेवाह-**स्याद्यन्तं** इत्यादि, **भवति** इत्यन्तेन। **धर्मो वः स्वं ददाति नः शास्त्रम्**—अत्र पदत्वे वस्नसादेशौ । सूत्रेऽन्तग्रहणाभावे "प्रत्यय प्रकृत्यादे", "विशेषणमन्त" इति न्यायसहकारेण शब्दरूप विशेष्यमध्याहृत्यान्तपदोपलब्धौ सति किमर्थमित्यत आह-*अन्तग्रहणं* इत्यादिना । 'सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति व्यर्थं सन्ज्ञापयति अन्तग्रहण इति स्वांशे चारितार्थ्ये, वाक्यान्तरकल्पना, फलमन्यत्र, स्यादिविभक्ति इत्यत्र केवलाना प्रत्ययानां सा सिध्यति । **पदप्रदेशाः**—पदसञ्ज्ञाप्रयोजनस्थानानि ॥ २० ॥

नाम्न पदसञ्ज्ञामाह—**नाम सिद्य्व्यञ्जने** । अत्र पदमित्यनुवर्तते । नाम पद सिद्य्व्यञ्जने इत्यन्वय । स् इद् यस्य स सित् इति प्रत्यय एव अन्यस्य सितोऽसम्भवेन लब्ध प्रत्यये इति साहचर्यपरिभाषया 'अय्व्यञ्जने' इत्यत्राप्यन्वेति, इत्यञ्च "सप्तम्या आदिरिति" आदिपदोपस्थित्या सम्पन्नसूत्रार्थमाह-**सिति** इत्यादि, **भवति** इत्यन्तेन । भवदीय, ऊर्णायु, अहंयु, शुभंयु, अत्र "भवतोरिकणीयसौ" ६।३।३०।, "ऊर्णाहंशुभ-मोयुस्" ७।२।१७। इतीयस्युसौ यथाक्रम सित्प्रत्ययो पूर्वनाम्न पदत्वेऽनेन, "धुटस्तृतीय" इति, "अवर्णे०" इति, "तौमुमो०" इति, तस्य दत्व, अवर्णलोपाभावो, मस्य चानुस्वारानुनासिकौ भवत । **पयोभ्यामि**त्याद्युदाहरणेषु, पदत्वाद्रुत्वोत्त्वसत्वानि । **राजता, दक्त्वम्**—अत्र पदत्वे यथाक्रमं नलोपगत्वे । **राजकाम्यति**—राजानमिच्छति "अमाव्ययात्क्यन्च" ३।४।२३। इति काम्येपरे, पूर्वनाम्न पदत्वे नलोप । नामग्रहणप्रयोजनमाह—

घण्टादिनिर्ह्रादवद्" इति । तत्र यदा स्थानकरणाभिघातजे ध्वनौ नादोऽनुप्रदीयते तदा नादध्वनिसंसर्गाद् घोषो जायते । यदा तु श्वासोऽनुप्रदीयते तदा श्वासध्वनिससर्गादघोषो जायते । अल्पे वायावल्पप्राणता, महति महाप्राणता जायते । महाप्राणत्वादूष्मत्वम् । यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति तदा गात्रस्य निग्रहः कण्ठबिलस्य चाणुत्व स्वरस्य च वायोस्तीव्रगतित्वाद्रौक्ष्यं भवति तमुदात्तमाचक्षते । यदा तु मन्दः प्रयत्नो भवति तदा गात्रस्य स्रंसनं कण्ठबिलस्य च महत्त्वं स्वरस्य च वायोर्मन्दगतित्वात् स्निग्धता भवति तमनुदात्तमाचक्षते । उदात्तानुदात्तस्वरसंनिपातात् स्वरित इत्येष कृत्स्नो बाह्यः प्रयत्न इति" ॥ अथवा-विवारादयो वर्णनिष्पत्तिकालादूर्ध्वं वायुवशेनोत्पद्यन्ते, स्पृष्टतादयस्तु स्थानास्यप्रयत्नव्यापारेण वर्णोत्पत्तिकाल एवेति वर्णनिष्पत्तिकालभावाभावाभ्यां विवारादीनां बाह्यत्व, स्पृष्टतादीना चाभ्यन्तरत्वम् । तत्र वर्गाणा प्रथमद्वितीयाः शषसविसर्गजिह्वामूलीयोपध्मानीयाश्च विवृतकण्ठाः श्वासानुप्रदाना अघोषाः । वर्गाणां तृतीयचतुर्थपञ्चमा अन्तःस्था हकारानुस्वारौ च संवृतकण्ठा नादानुप्रदाना घोषवन्तः । वर्गाणां प्रथमतृतीयपञ्चमा अन्तःस्थाश्चाल्पप्राणाः, इतरे सर्वे महाप्राणाः । स्थानग्रहण किम्? कचटतपानां तुल्यास्यप्रयत्नानामपि भिन्नस्थानानां मा भूत्, कि च स्यात्? 'तर्प्ता, तर्प्तुम्' इत्यत्र "धुटो धुटि स्वे वा" ॥१।३।४८॥ इति पकारस्य तकारे लोपः स्यात् । आस्यप्रयत्नग्रहणं किम्? चवर्गयशानां तुल्यस्थानानामपि भिन्नास्यप्रयत्नानां मा भूत्, कि च स्यात्? अरुक् श्च्योतति इत्यत्र "धुटो धुटि स्वे वा' ॥१।३।४८॥ इति शकारस्य चकारे लोपः स्यात् । स्वप्रदेशाः "इवर्णादेरस्वे स्वरे यवरलम्" ॥ १ । २ । २१ ॥ इत्यादयः ॥ १७ ॥

---

पश्चात्प्रकर्षेण धीयते इति तस्यैवार्थमाह—**अनुस्वानः** इति । **घण्टादिनिह्रादवत्**-घण्टादेर्निह्राद, तेन तुल्य तद्वत् । तावनुप्रदान-
मित्यारभ्य क्षन्ये तु इत्यादि, निहादवद् इत्यन्तमौदव्रजेर्मतम् । द्वौ नादानुप्रदानौ इति हि तद्वचनात् । घोष कदा भवति? इत्यत आह—
**तत्र यदा** इत्यादि, **जायते** इत्यन्तेन । तत्र यदा स्थानकरणाभिघातजे-स्थान-कण्ठादि, करण-जिह्वामूलादि, तयोरभिघात-हनन तस्मा-
ज्जात-स्थानकरणाभिघातज तस्मिन् ध्वनौ नाद पूर्वोक्त, **अनुप्रदीयते**-पश्चात् प्रकर्षेण धीयते, **तदा नादध्वनिसंसर्गात्**-नादाख्य-
ध्वनिसंबन्धात् **घोष**-तन्नामको बाह्यप्रयत्न पञ्चम । **यदा तु**—स्थानकरणाभिघातजे ध्वनौ इति शेष । **श्वास**-पूर्वोक्त, **अनुप्रदीयते**
**तदा श्वासध्वनिसंसर्गात्**-श्वासाख्यध्वनिसंबन्धात् **अघोष.** जायते-भवति तन्नामको बाह्यप्रयत्न षष्ठ । अल्पप्राणतामहाप्राणते
स्पष्टे । उदात्त विवृणुते—**यदा** इत्यादि, **आचक्षते** इत्यन्तेन । **यदा**—यस्मिन् समये, **सर्वाङ्गानुसारी**-सर्वाङ्ग-प्रत्यङ्गं अनुसरतीत्येवशील,
**प्रयत्न**—उत्साह, तीव्र-उग्रः, **भवति तदा गात्रस्य**-शरीरस्य **निग्रह.**-ग्रहण च **कण्ठबिलस्य**-गलविवरस्य **अणुत्वं**-सूक्ष्मत्व
च **स्वरस्य रौक्ष्यं**-पारुष्य भवति **वायोः** तीव्रगतित्वात् इत्यन्वय । अनुदात्त विवृणुते—**यदा तु मन्दः** इति, **आचक्षते**
इत्यन्तेन । **मन्द.**-शनै शनै, प्रयत्न-उत्साह, **स्रंसनं**—शिथिलीभवन, **महत्त्वं**—दीर्घत्व, **स्वरस्य स्निग्धता**—मसृणता भवति
**वायोः मन्दगतित्वात्** इत्यन्वय । स्वरित विवृणोति—**उदात्ता** इत्यादिना, **प्रयत्न** इत्यन्तेन । **उदात्तानुदात्त स्वर-**
**संनिपातात्**-उदात्तश्च, अनुदात्तश्च तौ स्वरौ-उदात्तानुदात्तस्वरौ तयो **संनिपात.**—सम्मेलन समाहार इति यावत् तस्मात्, स्फुटोऽर्थं ।
कृत्स्न-समग्र । विवारादीनां बाह्यत्व, स्पृष्टतादीनां चान्तरत्व व्याख्यानान्तरेण प्रतिपादयति—**अथवा** इत्यादिना । **विवारादयः**-
विवारसवारश्वासनादघोषाघोषाल्पप्राणतामहाप्राणतोदात्तानुदात्तस्वरिता । **वर्णनिष्पत्तिकालात्**-अक्षरोत्पत्तिसमयात्, **ऊर्ध्वं**-पश्चात्, **वायु-**
**वशेन**-समीरणबलेन, **उत्पद्यन्ते** इति वर्णनिष्पत्तिकालानुत्पत्तिकत्वेन विवारादीना बाह्यत्व सिद्धम् । **स्पृष्टताद्य.** स्पृष्टतेषत्स्पृष्टता संवृतता-
विवृतता । **स्थानास्यप्रयत्नव्यापारेण**-स्थान च आस्यप्रयत्नश्च तयोर्व्यापारस्तेन । **वर्णोत्पत्तिकाले**-अक्षराभिव्यक्तिसमये एव, **उत्पद्यन्ते**
इति स्पृष्टतादीनां वर्णनिष्पत्तिकालोत्पत्तिकत्वेन आन्तरत्व सिद्धम् । तदेवाह—**वर्णनिष्पत्तिकालभावाभावाभ्या**मित्यादिना । वर्णानां
निष्पत्तिकाल वर्णनिष्पत्तिकाल अभावश्च भावश्च इति भावाभावौ "लघ्वक्षरा०" ३।१।१६०। इत्यनेनाल्पस्वरत्वेन भावशब्दस्य पूर्वनिपात, वर्ण-
निष्पत्तिकाले भावाभावौ ताभ्याम् । अत्र हेतुद्वय **विवारादीनां बाह्यत्वं** वर्णनिष्पत्तिकालेऽभावात्-अनुत्पत्ते इत्येको हेतु, च **स्पृष्टतादीनां**-
पूर्वोक्तानां **आभ्यन्तरत्वं**-आन्तरत्व **वर्णनिष्पत्तिकाले**-अक्षरोत्पत्तिसमये भावात्-उत्पत्ते इत्यपरो हेतु । येषां बाह्या प्रयत्ना
संभवन्ति तानाह—**तत्र** इत्यादि, **महाप्राणा** इत्यन्तेन । **तत्र**-बाह्यप्रयत्नमध्ये, **वर्गाणां**-कवर्गचवर्गटवर्गतवर्गपवर्गाणां, प्रथम-
द्वितीया-क ख, च छ, ट ठ, त थ, प फ, इत्येते, शषसविसर्ग×क×पाः । **विवृतकण्ठाः**—येषामुच्चारणे कण्ठो विवृतो भवति ते
विवृतकण्ठा । **श्वासानुप्रदाना.**—श्वासलक्षणमनुप्रदान येषां ते श्वासानुप्रदाना । **वर्गाणां**—पूर्वोक्तानां, **तृतीयचतुर्थपञ्चमाः**-ग घ ङ,
ज झ ञ, ड ढ ण, द ध न, ब भ म । **अन्तःस्थाः य र ल व** इत्येते । **हकारः अनुस्वारः** इत्येते **संवृतकण्ठाः**, येषामुच्चारणे कण्ठ
संवृतो भवति ते संवृतकण्ठा । **नादानुप्रदाना.**-नादलक्षण अनुप्रदान येषां ते नादानुप्रदाना । **वर्गाणा**—पूर्वोक्तानां, **प्रथमतृतीय-**
**पञ्चमाः**-क ग ङ, च ज ञ, ट ड ण, त द न, प ब म इत्येते, अन्त स्थाः-य र ल व इत्येते अल्पप्राणा । **इतरे सर्वे**-ख घ, छ झ,
ठ ढ, थ ध, फ भ, श ष, स ह, विसर्गजिह्वामूलीयोपध्मानीयानुनासिका अपि इत्येते महाप्राणा । सूत्रे स्थानग्रहणाभावे केवलास्यप्र-
यत्नतुल्यताया स्वत्वे सत्यनेन तर्प्ता, तर्प्तुम् इत्यत्र रेफात्परस्य धुट पस्य स्थाने तकारे परे लोप स्यात्, स्वत्व चास्त्येव तकारस्य पतयोरास्य-
प्रयत्नैक्यादिति तन्मा भूदिति स्थानग्रहण, तदेवाह—**स्थानग्रहणं किम्? कचटतपानामपि** इत्यादिना, **लोपः स्यात्** इत्यन्तेन ।
एवमेव आस्यप्रयत्नग्रहणाभावे सूत्रे केवलस्थानतुल्यतायामपि अरुक् श्च्योतति, अत्र कात्परस्य शस्य चकारे परे लोप "धुटो धुटि स्वे वा"
इत्यनेन स्यादिति, नच वाच्य शचयो विभिन्नस्थानत्व तालुत्वेन तयोस्तुल्यत्वात्, तदेवाह **आस्यप्रयत्नग्रहणं किम्? चवर्गयशानां**
इत्यादि, **चकारे परे लोपः स्यात्** इत्यन्तेन । **स्वप्रदेशाः**-पूर्ववद्बोध्यम् ॥ १७ ॥

---

१ सर्वानुसारी० ख० ता०, माण्डा० ।　२ अरुश् इत्यपि पाठ सि०पु० ।

## स्यौजसमौशस्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसांङ्योस्सुपां त्रयीत्रयी प्रथमादिः ॥ १ । १ । १८ ॥

स्यादीनां प्रत्ययानां त्रयी त्रयी यथासंख्यं प्रथमाद्वितीयातृतीयाचतुर्थीपञ्चमीषष्ठीसप्तमीसंज्ञा भवति । ईजशटङपा अनुबन्धा. "सौ नवेतौ" ॥१।२।३८॥ इत्यादौ विशेषणार्थाः । बहुवचन स्याद्यादेशानामपि प्रथमादिसञ्ज्ञाप्रतिपत्त्यर्थम् । प्रथमादिप्रदेशा "नाम्नः प्रथमैकद्विबहौ" ॥ २ । २ । ३१ ॥ इत्यादयः ॥ १८ ॥

## स्यादिर्विभक्तिः ॥ १ । १ । १९ ॥

'स्' इत्युत्सृष्टानुबन्धस्य सेर्ग्रहणम् । 'ति' इति उत्सृष्टानुबन्धस्य तिवः । आदिशब्दो व्यवस्थावाची । स्यादयस्तिवादयश्च प्रत्ययाः सुप्स्यामहिपर्यन्ता विभक्तिसञ्ज्ञा भवन्ति । विभक्तिप्रदेशाः—"अधातुविभक्तिवाक्यमर्थवन्नाम" ॥ १ । १ । २७ ॥ इत्यादयः ॥ १९ ॥

## तदन्तं पदम् ॥ १ । १ । २० ॥

स्याद्यन्तं त्याद्यन्त च शब्दरूप पदसंज्ञ भवति । धर्मो वः स्व ददाति नः शास्त्रम् । अन्तग्रहणं पूर्वसूत्रे तदन्तप्रतिषेधार्थम् । पदप्रदेशाः—"पदस्य" ॥ २ । १ । ८९ ॥ इत्यादयः ॥ २० ॥

## नाम सिद्य्व्यञ्जने ॥ १ । १ । २१ ॥

सिति प्रत्यये यकारवर्जिते व्यञ्जनादौ च परे पूर्वं नाम पदसंज्ञं भवति । भवदीयः, ऊर्णायुः, अहंयुः, अहय्युः, शुभंयुः, शुभय्युः । व्यञ्जने—पयोभ्याम्, पयस्सु, राजता, दृक्त्वम्, राजकाम्यति । नामेति किम्? धातोर्मा भूत्-

"नाम्न प्रथमैकद्विबहौ" २।२।३१। इत्यादिसूत्रे प्रथमादिशब्दैर्विधीयमानाना स्यादीना तदादिपदबोधकत्वरूपा प्रथमादिसञ्ज्ञा, प्रत्ययस्वरूपप्रदर्शनपूर्वक निरूपयति—**स्यौजसमौ॰** इत्यादिसूत्रेण । सूत्रार्थमाह—**स्यादीना** इत्यादि, **भवति** इत्यन्तेन। **स्यादीनां प्रत्ययानां**—सि औ जस् इत्यादीनां प्रत्ययानां, **त्रयी त्रयी**—त्रयोऽवयवा अस्या इति, **यथासंख्यं**-यथाक्रम सि औ जस् इति **प्रथमा,** अम्–औ–शस् इति **द्वितीया**-द्वयो पूरणी, टा भ्याम् भिस् इति **तृतीया**-त्रिसृणा पूरणी, ङे भ्याम् भ्यस् **चतुर्थी**–चतसृणा पूरणी, ङसि भ्याम् भ्यस् इति **पञ्चमी**-पञ्चानां पूरणी, ङस् ओस् आम् **षष्ठी**-षण्णा पूरणी, ङि ओस् सुप् **सप्तमी**-सप्ताना पूरणी इति प्रथमादिसञ्ज्ञा नापूर्वाः । सि इत्यत्र इकार , जस् इत्यत्र जकार , शस् इत्यत्र शकार , टा इत्यत्र टकार , ङे इत्यादिचतुष्टये ङकार , सुप् इत्यत्र पकार इतीमेऽनुबन्धा सप्रयोजना यथास्थान दर्शयिष्याम । तदेवाह—**अनुबन्धा** इत्यादि, **विशेषणार्थाः** इत्यन्तेन । विशेषणार्थो -विशेषण-व्यवच्छेद अर्थ -प्रयोजन येषान्ते इत्यर्थ । 'तदादेशास्तद्वद्भवन्ति' इति न्यायेन स्याद्यादेशाना प्रथमादिसञ्ज्ञासिद्धौ किमर्थं बहुवचन-मित्यत आह—**बहुवचनम्** इत्यादि, **प्रतिपत्त्यर्थम्** इत्यन्तेन। **बहुवचनम्**—सुपा इति बहुवचन, **स्याद्यादेशानामपि**—स्यादादीनां अपि, **प्रथमादिसंज्ञाना प्रतिपत्तिः**—ज्ञान, तदर्थमित्यर्थ । एतेन बहुवचने महती शक्तिर्येद्विना न्याय पूर्वोक्त साधयति । प्रथमादिप्रदेशा इत्यादि पूर्ववज्ज्ञेयम् ॥ १८ ॥

स्यादिप्रत्ययाना प्रथमादिसञ्ज्ञां निरूप्य स्यादित्याद्युभयबोधिको विभक्तिसञ्ज्ञामाह—**स्यादिर्विभक्तिः** । स् ति प्रत्यय आदि-र्यस्य-प्रत्ययसमुदायस्य स स्यादि । विभक्ति —विभज्यन्ते—विभागश प्रकाश्यन्ते कर्तृकर्मादयोऽर्था अनया इति **स्यादित्यादिप्रत्यय-**समुदायो विभक्तिपदबोध्य इत्यर्थ । नन्वत्र स् इति, ति इति, कस्य ग्रहणमिति जिज्ञासायामाह—**स् इत्युत्सृष्टा** इत्यादि, **तिव** इत्यन्तेन । **उत्सृष्टानुबन्धस्य**—उत्सृष्ट -त्यक्त , अनुबन्ध —अनुबध्यते-कार्यार्थमुपदिश्यते इत्यनुबन्ध—इत् यस्य सस्तस्य सेस्तिवश्च ग्रहणमित्यर्थ । पूर्वसूरिव्यवस्थापितानुबन्धानामेवात्र ग्रहणमित्यभिप्रेत्याह—**आदिशब्दो व्यवस्थावाची** । एतेन पूर्वोक्तार्थचतुष्टयमध्ये व्यवस्थार्थक एवात्र ग्राह्य । समुदितसूत्रार्थमाह-**स्यादय** इत्यादि, **भवन्ति** इत्यन्तेन । विभक्तिप्रदेशा पूर्ववत् ॥ १९ ॥

विभक्तिसंज्ञां निरूप्य पदसंज्ञामाह—**तदन्तं पदम्** । अत्र सूत्रे तच्छब्देन पूर्वसूत्रस्थस्त्यादिरिति परामृश्यते, शब्दरूपमध्याहृत तेन विशिष्यते, तथाच **तत्**-स्यादिप्रत्यय त्यादिप्रत्ययश्च अन्तो यस्य तत् **तदन्तं, पदम्**—पद्यते गम्यते कारकसंसृष्टोऽर्थोऽनेनेति 'पद' इति संज्ञा । स्याद्यन्तशब्दरूपस्य, त्याद्यन्तशब्दरूपस्य च, इत्यर्थस्तदेवाह-**स्याद्यन्तं** इत्यादि, **भवति** इत्यन्तेन । **धर्मो व॰ स्वं ददाति नः शास्त्रम्**—अत्र पदत्वे वस्नसादेशौ । सूत्रेऽन्तग्रहणाभावे "प्रत्यय प्रकृत्यादे", "विशेषणमन्त" इति न्यायसहकारेण शब्दरूप विशेष्यमध्याहृत्यान्तपदोपलब्धौ सति किमर्थमित्यत आह-**अन्तग्रहणं** इत्यादिना । 'सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहण नास्ति' इति व्यर्थं सञ्ज्ञापयति अन्तग्रहण इति स्वांशे चारितार्थ्ये, वाक्यान्तरकल्पना, फलमप्यत्र, स्यादिविभक्तिः इत्यत्र केवलानां प्रत्ययानां सा सिध्यति । **पदप्रदेशा॰**—पदसञ्ज्ञाप्रयोजनस्थानानि ॥ २० ॥

नाम्न पदसंज्ञामाह-**नाम सिद्य्व्यञ्जने** । अत्र पदमित्यनुवर्तते । नाम पद सिद्य्व्यञ्जने इत्यन्वय । स् इद् यस्य स सित् इति प्रत्यय एव अन्यस्य सितोऽसम्भवेन लब्ध प्रत्यये इति साहचर्यपरिभाषया 'अय्व्यञ्जने' इत्यत्राप्यन्वेति, इत्यच "सप्तम्या आदिरिति" आदिपदोपस्थित्या सपक्षसूत्रार्थमाह-**सिति** इत्यादि, **भवति** इत्यन्तेन । भवदीय , ऊर्णायु , अहंयु , शुभंयु , अत्र "भवतोरिकणीयसौ" ६।३।३०।, "ऊर्णाहंशुभमोयुस्" ७।२।१७। इतीयस्युसौ यथाक्रम सित्प्रत्ययो पूर्वनाम्न पदत्वेऽनेन, "धुटस्तृतीय" इति, "अवर्णे॰" इति, "तौमुमो॰" इति, तस्य दत्व, अवर्णलोपाभावो, मस्य चानुस्वारानुनासिकौ भवत । **पयोभ्यामि**त्याद्युदाहरणेपु, पदत्वाद्रुत्वोत्त्वसत्वानि । **राजता, दृक्त्वम्**-अत्र पदत्वे यथाक्रम नलोपगत्वे । **राजकाम्यति**—राजानमिच्छति "अमाव्ययात्क्यन्च" ३।४।२३। इति काम्येपरे, पूर्वनाम्न पदत्वे नलोप । नामग्रहणप्रयोजनमाह-

वच्मि, यज्वा । सिदय्व्यञ्जन इति किम् ? भवन्तौ, राजानौ । यवर्जनं किम् ? वाचमिच्छति वाच्यति । अन्तर्वर्तिन्यैव विभक्त्या तदन्तस्य पदत्वे सिद्धे सिद्ग्रहण नियमार्थम्, तेन प्रत्ययान्तरे न भवति–सौश्रुतम्, भागवतम् ॥ २१ ॥

## नं क्ये ॥ १ । १ । २२ ॥

क्य इति उत्सृष्टानुबन्धाना क्यन्क्यङ्क्यङ्षां ग्रहणम्, नकारान्त नाम क्ये प्रत्यये परे पदसंज्ञं भवति । राजानमिच्छति क्यन् राजीयति, राजेवाचरति क्यङ् राजायते, अचर्म चर्म भवति क्यङ्ष् चर्मायति चर्मायते, पदत्वान्नलोपः । नमिति किम् ? वाच्यति । क्य इति किम् ? सामनि साधुः सामन्यः, एव वेमन्यः । अय् इतिप्रतिषेधात्, पूर्वेणाप्राप्ते वचनम् ॥ २२ ॥

## न स्तं मत्वर्थे ॥ १ । १ । २३ ॥

सकारान्त तकारान्त च नाम मत्वर्थे प्रत्यये परे पदसज्ञ न भवति । यशस्वी, मतोरपि मत्वर्थाव्यभिचारात् मत्वर्थशब्देन ग्रहणम्–पेचुष्मान्, विदुष्मान्, यशस्वान्, तडित्वान्, मरुत्वान्, विद्युत्वान् । स्तमिति किम् ? तक्षवान्, राजवान् । मत्वर्थ इति किम् ? पयोभ्याम् । अय्व्यञ्जने इति प्राप्ते प्रतिषेधोऽयम् ॥ २३ ॥

---

**वच्मि**–अत्र वचेर्धातोर्मिवि परे न पदत्व, पदत्वे सति कत्व प्रसज्येत । **यज्वा**–अत्र यज्धातोर्गत्व प्रसज्येत, सति नामग्रहणे न भवति । **भवन्तौ, राजानौ**—अत्र न भवति पदत्व, औप्रत्ययस्य सिद्रूप–यकारभिन्नव्यञ्जनादिरूपप्रत्ययाभावात् । व्यञ्जने 'अयि'ति विशेषण किमर्थमित्यत आह—**यवर्जनं किम् ? वाच्यति**–वाचमिच्छति इत्यर्थे, "अमाव्ययात्०" इति क्यनि वाच् यति इत्यत्र पदत्वे निषिद्धे कत्व न भवति । वस्तुतस्तु–राजीयतीत्यादौ "नाम सिदिति०" सूत्रेणायित्यभावे 'नाम सिद्व्यञ्जने' इति सूत्रन्यासे व्यञ्जनमाश्रित्य पदत्वे सिद्धे "न क्ये" इति सूत्र 'नकारान्तमेव क्यप्रत्यये' पदसंज्ञ भवति नान्यदिति नियमयति, तेन नियमेन वाच्यति इत्यत्र पदत्वाप्राप्त्या किमर्थ यवर्जनम् ? 'नान्त क्यप्रत्यय एव' पद, न प्रत्ययान्तरे इति विपरीतनियमस्वीकारे ययप्ययित्यस्य फल वाच्यति इति सभवति, तथापि विपरीतनियमस्वीकृतिरशक्या तथासति–राजा सीमा इत्यादौ पदत्वनिषेध स्यात् इति चेत्, "युवा खलति०" ३।१।११३। इति निर्देशेन विपरीतनियमस्यासभवादिति चेत्समाधत्ते–सत्सु साधु सत्यम्, अत्र व्यञ्जनादिप्रत्यये परे पदत्वे तस्य दत्व स्यान्नियमेन व्यावृत्तिरशक्या तस्य क्यप्रत्ययविषयत्वात्, अत्र तु साधौ य इति विशेष । सित्प्रत्यये पूर्वनाम्न पदत्वविधान व्यर्थं तस्यान्तवर्तिनीं विभक्तिमाश्रित्य "तदन्त पदम्" इति पदत्वे सिद्धे इत्यत आह–**अन्तर्वर्तिन्यैव** इत्यादि । 'सिद्धे सत्यारम्भो नियमाय भवति' इति सिद्धेवेति नियमयति । नियमफल दर्शयति–**तेन** इत्यादिना । **सौश्रुतम्**—सुश्रुत इदम्, **भागवतम्**—भगवत इदम्, इत्यर्थे "तस्येदम्" ६।३।१६०। इत्यणि पदत्वाभावाद्दत्वाभाव । नन्वनेन नियमेन राजता, दृक्त्वमित्यादावपि, सौश्रुतम्, भागवतम् इत्यादिवत्पदत्वाभावे सति नलोपाद्यभाव इति चेच्छ्रूयताम्–सौश्रुतम् इत्यादौ नियमश्चरितार्थ, पयोभ्यामित्यत्र 'अय्व्यञ्जने' इति चरितार्थ, द्वयो प्राप्ति राजता दृक्त्वमित्यत्र । तत्र 'स्पर्धेपरम्' इति न्यायेन 'अय्व्यञ्जने०' इति भवति परत्वात्, अथवा तदन्त पद इत्यस्यैवानेन नियम्यत्वाभ्वादोष ॥२१॥

नान्तनाम्न पदसज्ञानियमसूत्रम्–**नं क्ये** । अत्र नाम पदमिति चानुवर्तते । क्ये इति सामान्यनिर्देशेन, 'निरनुबन्धग्रहणे सामान्यस्य' इति सामान्यग्रहणे क्यक्यपोर्नामानुवृत्त्याऽसग्रह इति सर्वमभिप्रेत्याह—**क्य** इत्यादि, **ग्रहणम्** इत्यन्तेन । **उत्सृष्टानुबन्धानां**–उत्सृष्टस्त्यक्त अनुबन्धो यैस्ते तेषाम् इति विशेषण क्यन्क्यङ्क्यङ्षां इत्यस्य, नमिति नाम्नो विशेषणमिति "विशेषणमन्त" इति तदन्तग्रहण, क्ये इत्यनेनासभवाल्लब्ध प्रत्यये इति च सर्वं हृदि निधाय सूत्रार्थं व्याचष्टे—**नकारान्तं** इत्यादि, **भवति** इत्यन्तेन । स्पष्टोऽर्थ । **राजानमिच्छति**–राजीयतीत्यस्य विग्रह । **क्यन्**—"अमाव्ययात्०" इति क्यन्प्रत्यये पदत्वेऽनेन, नलोपे "क्यनि" ४।३।११२। इतीकारेऽन्तादेश —**राजीयति** । **राजेवाचरति**–राजायते इत्यस्य विग्रह । **क्यङ्**—"क्यङ्" ३।४।२६। इति सूत्रेण पदत्वे सति नलोप —**राजायते** । **अचर्म चर्म भवति**–चर्मायति चर्मायते, इत्यस्य च विग्रह । **क्यङ्ष्**–"डाच् लोहितादिभ्य षित्" ३।४।३०। इत्यनेन, अनेन पदत्वे सति नलोप । नमित्यस्य फलमाह–**नमिति किम् ? वाच्यति**–अत्र नाम्नो नान्तत्वाभाव । क्ये इत्यस्य फलमाह—**क्ये इति किम् ? सामनि साधुः**–सामन्य इत्यस्य विग्रह । **वेमन्य**–अत्र पदत्वाभावे, न नकारस्य लोप । पूर्वोक्तप्रयोगेषु "नाम सिद्०" इति पदत्वाप्राप्तौ पदत्वविधायकमिदमित्यत आह–**अय् इति** ॥ २२ ॥

पदसंज्ञा निरूप्य तन्निषेधप्रकरणमुपदर्शयति–**न स्तं मत्वर्थे** । अत्र नाम, पदमितिचानुवर्तते । मत्वर्थे इति प्रत्यये इत्याक्षेप । "विशेषणमन्त" इति तदन्तग्रहण, तथाच सान्त तान्त न पद मत्वर्थे प्रत्यये इत्यन्वय । तदेवाह–**सकारान्तं** इत्यादिना । **यशस्वी**-यशोऽस्यास्तीति विग्रहे–"अस्तपो माया०" ७।२।४७। इत्यनेन मत्वर्थे विन्, सूत्रेणानेन पदत्वनिषेधे, पदान्तत्वाभावात्सस्य रुत्वाभावः । उष्ट्रस्य मुखमिव मुखमस्येत्युष्ट्रमुख इत्यादिवत् 'संभवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यम्' इति न्यायेन मतुशब्दो मत्वर्थवृत्तिरिति विज्ञाय पश्चादर्थशब्देन मतुर्मत्वर्थोऽर्थो समानाधिकरणो बहुव्रीहि । ननु मतुशब्दस्य मत्वर्थशब्देन कथमुपादानमित्यत आह—**मतोरपि** इत्यादिना । **मतोरपि**—मतुशब्दस्यापि । **मत्वर्थाव्यभिचारात्**–मतुशब्दो मत्वर्थमभिधत्ते नान्यमर्थमतो व्यभिचाराभाव स्पष्ट एव, तस्मात्–मत्वर्थनिरूपितव्यभिचाराभावात् मतुशब्दस्यापि **मत्वर्थशब्देन ग्रहणम्**–बोधनम् । **पेचुष्मान्** इत्यादौ–मतौ परे "नामसिद्०" प्राप्ते पदत्वेऽनेन निषिद्धे रुत्वाभाव । **तडित्वान्** इत्यादौ–तस्मिन्परे तेनैव प्राप्ते पदत्वेऽनेन निषिद्धे दत्वाभाव । **तक्षवान्, राजवान्**—अनयोरत्र सान्ततान्तत्वाभावोऽतो नानेन पदत्वप्रतिषेध, किन्तु पदत्वमेव तथासति न लोप । **पयोभ्याम्**–अत्र भ्यामो मत्वर्थावृत्तित्वात्पदत्वनिषेधो न । प्राप्तौ सत्यां निषेध इत्यस्य निषेधस्य प्राप्तिपूर्वकत्व दर्शयति–**'अय्व्यञ्जने'** इत्यादिना ॥ २३ ॥

---

१ अचर्मैनान् चर्मैनान् भवति खं० ता०, पु०, भाण्डा० ।

## मनुर्नभोऽङ्गिरो वति ॥ १ । १ । २४ ॥

मनुस् नभस् अङ्गिरस् इत्येतानि नामानि वतिप्रत्यये परे पदसंज्ञानि न भवन्ति । मनुरिव मनुष्वत्, एवं नमस्वत्, अङ्गिरस्वत्; पदत्वाभावाद् रुर्न भवति, षत्वं तु भवति ॥ २४ ॥

## वृत्त्यन्तोऽसषे ॥ १ । १ । २५ ॥

परार्थाभिधानं वृत्तिः, तद्वांश्च पदसमुदायः समासादिः, तस्या अन्तोऽवसान पदसंज्ञो न भवति; 'असषे' सस्य तु षत्वे पदसंज्ञैव । परमदिवौ, श्वलिहौ, गोदुहौ, परमवाचौ, बहुदण्डिनौ, एषु पदत्वाभावादुत्वढत्वघत्वकत्व-लुगादीनि न भवन्ति । वृत्तिग्रहणं किम्? चैत्रस्य कर्म । अन्तग्रहणं किम्? राजवाक्—अत्र नलोपो भवति । 'वाक्-त्वक्-स्रुचः' इति त्रयाणां वृत्तौ न पृथक् द्वयोर्वृत्तिरितिमध्यमस्य निषेधो न भवति । अथ वाक्त्वचमित्यत्र समासान्ते सति वृत्त्यन्तत्वाभावात् पदत्व प्राप्नोति, तथा च कत्वं स्यात्? उच्यते—समासात् समासान्तो विधीयत इति त्वचो वृत्त्यन्तत्वम् । असष इति किम्? सिञ्चतीति विच् सेक्, दध्नः सेक् दधिसेक्, दधिसेचौ, ईषदूनः सेक् बहुसेक्, बहुसेचौ—अत्र पदसंज्ञायां पदादित्वात् सकारस्य "नाम्यन्तस्था०" ॥२।३।१५॥ इत्यादिना षत्वाभावः सिद्धः । अन्तर्वर्तिन्या विभक्तेः स्थानिवद्भावेन

---

**मनुर्नभो०** अत्र नाम पदमिति नेति चानुवर्तते । मनुर्नभोऽङ्गिरो नाम न पद वति इत्यन्वय । **एवं**—मनुष्वदिव विग्रह **नभस्वत्**—नभ इव नभस्वत्, **अङ्गिरस्वत्**-अङ्गिर इव । **पदत्वाभावात्**-"नाम सि०"इति पदत्वस्य अभावात्-अनेन निषेधात् रुः-"सोरु" इति विहित ॥ २४ ॥

**वृत्त्यन्तोऽसषे**-अत्र पद न इति चानुवर्तते, वृत्त्यन्त पदं न असषे इत्यन्वय । यत्र पदानि स्वार्थं विहाय वर्तन्ते सा वृत्ति, तस्या अन्त वृत्त्यन्त । सस्य ष सष, न सष असष, तस्मिन् असषे । वृत्तिपदार्थमाह-**परार्थाभिधानं**-परस्य अर्थस्य-समासेऽवयवपदार्थाप्रधानाभिधायिन इति अवयवपदार्थापेक्षयातिरिक्तस्य विशिष्टार्थस्य अभिधानमित्यर्थ । वृत्ति -वर्तन, तस्याश्चान्तत्वासभव इत्यत आह—**तद्वांश्च**-वृत्तिमांश्च । **पदसमुदायः समासादिः**—पूर्वं वृत्तिशब्दार्थं विवृत्य पश्चाद्वृत्तिशब्दस्य लक्ष्यार्थप्रदर्शनम् । **आदिपदात्**-नामधातुतद्धितवृत्तिग्रहणम् । **तस्याः**—समासादिवृत्ते । **अवसानं**—चरमावयव **पदसंज्ञो न भवति** इत्यर्थनिरूपणम् । **असषे**—सस्य षत्वे कर्तव्ये पदसंज्ञानिषेधो न प्रवर्ततेऽर्थात्पदसज्ञा भवत्येव, तदेवाह—**असषे** इत्यादिना । **परमदिवौ**—परमा द्यौ ययोरिति विग्रह । अत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य प्राप्तपदत्वप्रतिषेधेऽनेन "उ पदान्ते०" २।१।११८। इति पदत्वप्रयुक्तमुत्व न भवति । **श्वलिहौ**—लीढ इति लिहौ श्वन लिहौ इति विग्रह, अत्र पूर्ववत्प्राप्त पदत्व निषिध्यतेऽनेन, इति पदत्वप्रयुक्त "हो धुट् पदान्ते०" २।१।८२। ढत्व न भवति । **गोदुहौ**—दुग्ध इति दुहौ, गो दुहौ इति विग्रह, अत्र "भ्वादेर्दादेर्घ०" २।१।८३। इति पूर्ववत्पदत्वप्रयुक्त घत्व न भवति । **परमवाचौ**-परमा वाग् ययोरिति विग्रह, अत्र "चज कगम्" २।१।८६। इति कत्व पूर्ववत्पदत्वप्रयुक्त न भवति । **बहुदण्डिनौ**—ईषदूनौ इति विग्रह, अत्र-"नाम्नो नोऽनह्न" २।१।९१। इति पूर्ववत् पदत्वप्रयुक्तो न नलोप । तदेवाह—**एषु पदत्वा** इत्यादिना, **न भवन्ति** इत्यन्तेन । **लुगादीनि**-अत्र आदिपदात् यथासभव ढत्वे सत्येव डत्व, घत्वे सति दस्य धत्व, कत्वे सति गत्व, लुगभावे च "ह्रस्वान्ङ्णनो द्वे" १।३।२७। इति द्वित्वं च-श्वलिहौ, गोदुहौ, परमवाचौ, बहुदण्डिनौ इत्येषु न भवति । **चैत्रस्य कर्म**-अत्र वाक्यान्तस्य कर्मणो वृत्त्यन्ताभावेन पदत्वप्रतिषेधो न भवति, तथा सति न लोप । **राजवाक्**—अत्र राजन्शब्दस्य वृत्तिपूर्वपदस्य वृत्त्यन्ताभावेन पदत्वप्रतिषेधो न भवतीति नलोप, तदेवाह—**अत्र नलोप** इत्यादिना । वाक् च त्वक् च स्रुक् च इति वाक्त्वक्स्रुच, अत्र त्रयाणां द्वन्द्वसमासे मध्यमस्य त्वच, वागपेक्षया वृत्त्यन्तत्वात् पदत्वप्रतिषेधे सत्यनेन वाक्त्वक्स्रुच इति भाव्यमित्यत आह—**वाक्त्वक्स्रुच** इत्यादि, **न भवति** इत्यन्तेन । एतेन वृत्त्यन्त स्रुच्, इत्येव यदि पूर्वं द्वयोर्द्वन्द्व कृत स्यात् पश्चात्तृतीयेन सह द्वन्द्वो भवेत्तर्हि त्वच् इत्यस्य वृत्त्यन्तत्व भवेदिति तदेव नास्तीति न कश्चिद्दोष । वाक् च त्वक् चेत्यनयो समाहारो वाक्त्वचम्, अत्र "च वर्गदषह समाहारे" ७।३।९८। इति समासान्तेऽत्प्रत्ययेऽकारान्तवृत्तेरन्तत्वमकारस्य न त्वच इति वृत्त्यन्ताभावेनानेन पदत्वप्रतिषेधाभावे पदत्वे सति "चज कगम्" इति कत्व भवेदित्यभिप्रायेण शङ्कते—**अथ** इत्यादि, **स्यात्** इत्यन्तेन । **समासान्ते**—"चवर्गदषह ०" इत्यनेनात्प्रत्यये, **वृत्त्यन्तत्वाभावात्**-समासचरमावयवाभावात्, **पदत्वं**—अन्तर्वर्तिनीं विभक्तिमाश्रित्य प्राप्त, **कत्वं**—"चज कगम्" इत्यनेन । समाधानमाह—**उच्यते** इत्यादिना, **वृत्त्यन्तत्वम्** इत्यन्तेन । अयमाशय —समासाद्विधीयमानेनात्प्रत्ययेन समासान्तत्वव्याघातो 'यस्माद्यस्य विधान सेन तस्यान्तत्वव्याघात' इति नियमात्, ननु समासावयवस्य त्वच इति समुदायावयवत्वेन समासान्तविधानेन समासान्तत्वव्याघातेऽपि वृत्त्यन्तस्य, समुदायावयवस्य त्वचोन्तत्वविघाताभावेन पदत्वनिषेध समुदायावयवस्य अवयवावयवत्वाभावादिति । अथवा लक्ष्यानुरोधेन समासशब्द समाससमासावयवबोधक इति समासावयवात्समासान्तो विधीयते इत्यर्थस्वीकारे त्वच इति समासावयवादत्प्रत्ययरूपसमासान्तविधाने यद्यप्यवृत्त्यन्तत्व त्वगित्यस्य तथापि सौश्रुतम् इत्यादिवत् सिद्धियमेन निवर्त्यते प्राप्त पदत्वम् । अथवा-समासात्पर समासान्तो विधीयते इत्यर्थाङ्गीकारेऽत्प्रत्ययरूपसमासान्तस्य स्यादिविभक्तेः पूर्वं त्वच परत्र च विधानेन स्पष्टमेवावृत्त्यन्तत्व त्वगित्यस्य, तथापि तत्र पदत्वाप्राप्ति स्पष्टैव इति सक्षेप । सस्य षत्वे कर्तव्ये 'वृत्त्यन्त पद न' इति न प्रवर्तते इत्यर्थकस्य-'असषे' इति न, इत्यस्य प्रयोजनमाह—**असषे किम्**[1] इत्यादिना । 'सोपपदात् विच् नेष्यते' इति सिद्धान्तमादृत्य सिञ्चतीति सेक् इति ससाध्य पश्चात् दध्न सेक्, दधि सेगिति विग्रह कार्यं, तदेव दर्शयति—**सिञ्चतीति** इत्यादिना । **ईषदूनः सेक्-बहुसेक्** इत्यस्यार्थप्रदर्शनपुरःसरं विग्रह । यद्यसषे इति न स्यात्सूत्रे तदा, प्रदर्शितोदाहरणे पदत्वप्रतिषेधे सकारस्य पदादित्वाभावेन पदमध्यवृत्तित्वाच्च "नाम्यन्त स्था०" इत्यादिना षत्व प्रसज्येत, तन्मा भूदित्यभिप्रायेण 'असषे' इति सत्वे तु पदत्व प्रतिषेधाभावात्पदादित्वेन पदमध्यत्वाभावाच्च न भवति, सस्य ष इति महान्तमाशय हृदि धारयित्वा वदति—**अत्र** इत्यादिना, **सिद्ध** इत्यन्तेन । निषेधस्य प्राप्तिपूर्वकत्व प्रदर्शयति—**अन्तर्वर्तिन्या** इत्यादिना । **स्थानिवद्भावेन**—"स्थानीवाऽवर्णविधौ" ७।४।१०९। इत्यनेन, स्फुटोऽर्थ । अन्तर्वर्तिनी

---

१ द्वयो पृथग्वृत्ति-भाष्य०, म० म० ।

पदत्वं प्राप्तमनेन निषिध्यते । न च 'सितेव' इति नियमेन तन्निवर्तयितुं शक्यम्, "प्रत्ययः प्रकृत्यादेः" ॥७।४।११५॥ इति हि यस्मात् समुदायात् प्रत्ययविधान तस्यैव पदत्वं नियमेन निवर्त्यते, नतु तदवयवस्येति ॥ २५ ॥

## सविशेषणमाख्यातं वाक्यम् ॥ १ । १ । २६ ॥

स्याद्यन्त पदमाख्यातम्, साक्षात् पारम्पर्येण वा यान्याख्यातविशेषणानि तैः प्रयुज्यमानैरप्रयुज्यमानैर्वा सहित प्रयुज्यमानमप्रयुज्यमान वा आख्यात वाक्यसंज्ञं भवति । धर्मो वो रक्षतु, धर्मो नो रक्षतु, साधु वो रक्षतु, साधु नो रक्षतु, उच्चैर्वो वदति, उच्चैर्नो वदति, भोक्तु त्वा याचते, भोक्तु मा याचते, शालीनां ते ओदन ददाति, शालीनां मे ओदनं ददाति । अप्रयुज्यमानविशेषणम्—लुनीहि ३ पृथुकाँश्च खाद, पुनीहि ३ सक्तूंश्च पिब । अप्रयुज्यमानमाख्यातम्—शील ते स्वम्, शील मे स्वम्; अर्थात् प्रकरणाद्वाऽऽख्यातादेर्गतावप्रयोग. । लोकादेव वाक्यसिद्धौ ? साकाङ्क्षत्वेऽप्याख्यातभेदे वाक्यभेदार्थं वचनम् । आख्यातमित्यत्रैकत्वस्य विवक्षितत्वात् तेन ओदन पच तव भविष्यति, मम भविष्यति । पच तव भविष्यति मम भविष्यति, ओदन तव भविष्यति मम भविष्यतीत्यादौ श्रूयमाणे गम्यमाने वाऽऽख्यातान्तरे भिन्नवाक्यत्वाद्

---

निमित्तमाश्रित्य पदत्वप्रतिषेध परमदिवावित्यादौ साधुत्वमित्यादिवत् स्यादौ प्रत्यये परे सितेवेति नियमेन सिद्धं इति सूत्रवैयर्थ्यमाशङ्क्य समाधत्ते—नच इत्यादि, तदवयवस्येति इत्य तेन । सितेवेति नियमेन तत् पदत्व निवर्तयितु शक्यमिति न च इत्यन्वय, तन्नियमनिवर्त्यमाह—"प्रत्यय प्रकृत्यादे" इत्यादिना ॥ २५ ॥

पदसंज्ञां तन्निषेधप्रकरण च समाप्य, किं वाक्य लौकिकमुत शास्त्रीयम् ? इति शास्त्रीयमाह—**सविशेषणमाख्यातं वाक्यम्** । विशिष्यते विशेष्य येन तद्विशेषणम् सह विशेषणेन वर्तते—**सविशेषणम्** । आख्यायते स—साध्यार्थाभिधायितया कथ्यते सेति—**आख्यातम्** । उच्यते विशिष्टोऽर्थोऽनेनेति—**वाक्यम्** । सविशेषणस्य आख्यातस्य वाक्यसज्ञा बोध्या इति मूलसूत्रार्थ । आख्याते सविशेषणत्वोक्त्या सर्वमिद सगृहीत भवति, आख्यातस्य विशेषणानि—अव्ययानि, कारकाणि, कारकविशेषणानि, क्रियाविशेषणानि च तानि साक्षात्परम्परया वा स्यु । साक्षादपि विशेषणानि समानाधिकरणानि व्यधिकरणानि च तिवादिप्रत्ययं कर्तु कर्मणश्चाभिधानानभिधानैर्बोध्यानि कर्तरि कर्मणि च स्थले, तानि साक्षात्समानाधिकरणव्यधिकरणाख्यातविशेषणानि परम्परया वा, प्रयुज्यमानानि अप्रयुज्यमानानि स्यु, तैर्विशेषणैर्विशिष्टस्य आख्यातस्य प्रयुज्यमानस्याप्रयुज्यमानस्य वा वाक्यसज्ञा भवतीत्यभिप्रायेण वदति सूत्रार्थे—**साक्षात्पारम्पर्येण** इत्यादिना । **धर्मो वो रक्षतु**—इत्यादौ, धर्म इति साक्षात्समानाधिकरण प्रयुज्यमान रक्षतु इत्याख्यातविशेषणम्, व इति च कर्म साक्षाद्व्यधिकरण प्रयुज्यमान विशेषणमाख्यातस्य तिवादिनानभिधानात्कर्मण । पूर्वत्र च कर्तु तिवादिनाभिधानात् धर्म इति समानाधिकरणमाख्यातस्य प्रयुज्यमान विशेषणम्, अत्र वाक्यत्वादस्मादेशौ । **शालीना ते ओदनं ददाति**—इत्यादौ 'ददाति' इत्याख्याते ओदन साक्षाद्व्यधिकरण विशेषण, शालीनामिति तु तद्द्वारा इति परम्परया विशेषणम् इति वाक्यत्वात्ते मे इत्यादेशौ । **लुनीहि३पृथुकांश्च खाद, पुनीहि३सक्तूंश्च पिब**—अत्र आख्यातविशेषणाप्रयुज्यमानत्वेऽपि लुनीहि३ पुनीहि३ इत्यनयोर्वाक्यत्वात्प्लुत । **शीलं ते स्वम्**—इत्यादावस्तीत्यप्रयुज्यमानेऽप्याख्याते वाक्यत्वम्, तथा सति ते मे इत्यादेशौ भवत । नन्वप्रयुज्यमानमाख्यात तद्विशेषण चातिप्रसङ्गापादकमविशेषादनियमश्च, अपि च अप्रयुज्यमानोऽपि शब्द शाब्दधीहेतु स्यात्तदा विफल सर्वत्र तत्प्रयोग इत्यत आह—**अर्थात्** इत्यादि । अयमाशय—शब्दप्रयोगो हि परस्यार्थबोधनेच्छया भवति । बोद्धृभिरपेक्षितोऽनवबुद्धश्चार्थं शब्देन वक्त्रा प्रतिपादनीय इति शब्दार्थावबोधे न केवल शब्दसमुपयोग प्रस्तावप्रयोजनयोरपि, उक्तञ्च "प्रस्तावादर्थयौचित्याद्देशकालविभागयो । शब्दाश्चार्था प्रतीयन्ते न शब्दादेव केवलात् ॥" तथाच भर्तृहरि—"ससर्गो विप्रयोगश्च साहचर्यं विरोधिता । अर्थं प्रकरण लिङ्ग शब्दस्यान्यस्य संनिधि ॥" इति शब्दप्रयोगमन्तरा यदोपायान्तरेणापि विशेषण विशेष्य वावगम्यते तदाकाङ्क्षानिराकाङ्क्षत्वादर्थावगमाच्च न प्रयुज्यते तद्बोधक शब्द इत्यप्रयुज्यमानत्व सूपपन्नम् । **अर्थात्**—प्रयोजनात्, **प्रकरणात्**—प्रस्तावात्, **वा**—अथवा, **आख्यातादेः**—अत्रादिपदेन आख्यातविशेषणपरिग्रह । **गतौ**—बोधे सति सर्वे गत्यर्था ज्ञानार्था इत्यभिप्रायेणार्थ । **अप्रयोग.**—प्रयोगाभाव । निरपेक्षपदकदम्बकस्य वाक्यत्व लोकत एव न ज्ञायते, तथाहि—"साकाङ्क्षावयवभेदे परानाकाङ्क्षशब्दकम् । क्रियाप्रधान गुणवदेकार्थं वाक्यमुच्यते ॥" इति किमर्थं वचनमिति चेत्सत्यम् लोको हि सापेक्षितत्वे क्रियाभेदेऽपि एकवाक्यत्व अङ्गीकरोति, इह तु शास्त्रे आख्यातभेदे साकाङ्क्षत्वेऽपि वाक्यभेद इति तदभिप्रायेणाह—**लोकादेव वाक्यसिद्धौ ?** किमर्थं वचनमिति शेष । [अयमभिप्राय—लोके त्याद्यन्तभेदे पदानामाकाङ्क्षया भवत्येकवाक्यत्व, तदेव यदि शास्त्रे गृह्येत तदातिप्रसङ्गोऽतस्तल्लौकिकवाक्यत्वानुपयुक्तत्वसूचनाय वचन, समाधत्ते—**साकाङ्क्षत्वेऽप्याख्यातभेदे**—इत्यादिना । तथाच सिद्ध लोकादन्यच्छास्त्रीय वाक्यत्वम् । नन्वेकस्मिन्नाख्याते सत्येकवाक्यत्व, तद्भेदे वाक्यभेद इति सूत्रे विशेषोक्त्यभावेन विवेकोऽय कुत इत्यत आह—**आख्यातमित्यत्रैकत्वस्य विवक्षितत्वात्**—अयभाव सूत्रे आख्यातमित्येकवचनान्त, एकवचन हि—एकत्व वक्ति इत्यन्वर्थसज्ञा, विवक्षाभिप्रायेण च तल्लभ्यते । यतो हि गुणे संख्याया विवक्षाभाव अत्र त्वाख्यातस्य विधीयमानविषयतया प्राधान्यादेकत्वसंख्याया विवक्षाधीनत्वम् । स्वशास्त्रसंकेतितवाक्यत्वफलमाह—**तेन**—शास्त्रीयवाक्यत्वस्वीकारेण, **ओदनं पच तव भविष्यति, मम भविष्यति**—मम भविष्यति इत्यत्र, ओदन पच इत्यनुवर्तते । ओदन पच इत्यत्र युष्मदर्थकर्तृकेण पचिना कर्मत्वेनापेक्ष्यमाण ओदन तव भविष्यति मम भविष्यति इत्याख्यातान्तरे युष्मदर्थस्वामिकौ भवतिना कर्तृत्वेनापेक्ष्यते इति, साकाङ्क्षत्वेऽप्याख्यातभेदे एकवाक्यत्व लौकिक, न शास्त्रीय आख्यातभेदादिति वाक्यत्वाभावात्ते मयादेशौ न भवत । **पच तव भविष्यति मम भविष्यति,** अत्रौदनमित्याख्यातसाक्षाद्व्यधिकरणविशेषणाप्रयुज्यमानता, त्याद्यन्तभेदाद्भिन्नवाक्यत्वादादेशाभाव । **ओदनं तव भविष्यति मम भविष्यति**—अत्र पच इत्याख्याताप्रयुज्यमानता, तद्विशेषणस्य कर्मणश्चौदनस्य, प्रयुज्यमानता इति लौकिकवाक्यैक्यसत्त्वेऽपि शास्त्रीयस्य तस्याभावात्ते मयादेशाभाव । तदेवाह—*श्रूयमाणे गम्यमाने वा* इत्यादि, *भवन्ति* इत्य-

वस्नसादयो न भवन्ति, लौकिके हि वाक्येऽङ्गीक्रियमाणे आख्यातभेदेऽप्येकवाक्यत्वाद् वस्नसादयः प्रसज्येरन्निति; कुरुकुरु नः कटमित्यादौ तु कृते द्विर्वचनेऽर्थाभेदादेकमेवाऽऽख्यातमित्येकवाक्यत्वाद्वस्नसादयो भवन्ति । वाक्यप्रदेशाः—"पदाद्युग्विभक्त्यैकवाक्ये वस्नसौ बहुत्वे" ॥ २।१।२१ ॥ इत्यादयः ॥ २६ ॥

## अधातुविभक्तिवाक्यमर्थवन्नाम ॥ १ । १ । २७ ॥

अर्थोऽभिधेयः स्वार्थो, द्रव्य, लिङ्ग, संख्या, शक्तिरिति, द्योत्यश्च समुच्चयादिः । तद्वच्छब्दरूप धातुविभक्त्यन्तवाक्यवर्जित नामसंज्ञ भवति । वृक्षः, प्लक्षः, कृष्णः, डित्थः, डवित्थः, स्वः, प्रातः, धवश्च, खदिरश्च । धातुविभक्तिवर्जन किम् ? अहन्, वृक्षान्, अयजन्; अत्र नामत्वाभावे "नाम्नो नोऽनह्नः" ॥२।१।९१॥ इति नलोपो न भवति । विभक्त्यन्तवर्जनाच्चाबादिप्रत्ययान्तानां नामसंज्ञा भवत्येव । आप्—अजा, बहुराजा । ङी—गौरी, कुमारी । डायनि—गार्ग्यायणी, गौकक्ष्यायणी । ति—युवतिः । ऊङ्—ब्रह्मबन्धूः, करभोरूः । कृत्—कारकः, कर्ता, भिनत्तीति भिद्, एव छित् ।

---

न्वेन । लौकिकवाक्यत्वस्वीकारेऽनुपपत्तिमाह—**लौकिके हि** इत्यादि, **प्रसज्येरन्** इत्यन्तेन । स्फुटोऽर्थ । ननु कुरु कुरु न कटमित्यादौ, त्याद्यन्तभेदे वाक्यत्वास्वीकृत्या कथमस्मदो नसादेश इत्यत आह—**कुरु कुरु नः कटमित्यादौ** इत्यादि, **भवन्ति** इत्यन्तेन । इदमत्राकूतम्—कुरु कुरु इति स्थाने द्विर्वचनमिति स्वरूपभेदे **अर्थाभेदात्**—अर्थैक्यात् आख्याताभेदे, सति भिन्नवाक्यत्वाभावान्नसादेश इति सक्षेप । **वाक्यप्रदेशाः**—पूर्ववदेव बोध्यम् ॥ २६ ॥

वाक्यसज्ञां निरूप्य नामसंज्ञामाह—**अधातुविभक्तिवाक्यमर्थवन्नाम** । धातुश्च, विभक्तिश्च, वाक्य च इति समाहारद्वन्द्व । न धातुविभक्तिवाक्यम् अधातुविभक्तिवाक्यम्, विशेषणमिदमर्थवन्नित्यस्य । विभक्तीति विभक्त्यन्तबोध । तथा सति धातुभिन्नं, विभक्त्यन्तभिन्न, वाक्यभिन्न अर्थवत् (अर्थोऽस्यास्तीति विग्रह ) नामपदबोध्य भवति इति मूलसूत्रार्थ । अर्थशब्दो हि प्रयोजनवचननिवृत्तिवचनधनवचनाभिधेयवचनरूपबह्वर्थस्तत्र कस्यात्र परिग्रह इत्यपेक्षायामाह—**अर्थोऽभिधेय** इति । स च द्विविध बुद्धिस्वरूपलक्षणोऽन्तरङ्ग, तद्विषयो बहिरङ्गश्च । तत्र बहिरङ्गार्थाभिधेयस्य पञ्च भेदान्प्रदर्शयति—१ **स्वार्थः**—विशेषण इति, तच्च षड्विध स्वरूपजातिगुणसबन्धक्रियाद्रव्यभेदात् । २ **द्रव्यं**—विशेष्यमिति, तत्त्रिविध जातिगुणद्रव्यभेदात् । अत्रेद रहस्यम्—यदा शब्दस्वरूपेण जातिर्विशेष्या भवति तदा शब्दस्वरूप विशेषणत्वात्स्वार्थं, जातिस्तु विशेष्यत्वाद्द्रव्यम् । यदा जातिविशिष्टो गुणस्तदा जातिर्विशेषणत्वात्स्वार्थं, गुणो विशेष्यत्वाद्द्रव्यम्, यथा पटस्य शुक्लो गुण । यदा गुणविशिष्टद्रव्योक्तिस्तदा गुणो विशेषणत्वात्स्वार्थं, द्रव्य विशेष्यभूत द्रव्य यथा शुक्ल पट । यदा द्रव्य द्रव्यान्तरविशेषणभूत तदा द्रव्यं विशेषणत्वात्स्वार्थं, द्रव्यान्तरं विशेष्यत्वाद्द्रव्यम् । क्वचित्सबन्धोऽपि स्वार्थं, यत्र तन्निमित्तक प्रत्यय यथा दण्डी, अत्र दण्डिना सह दण्डसंयोगरूपसबन्ध स्वार्थ । क्वचित्क्रियापि स्वार्थ, यत्र तन्निमित्तक प्रत्यय यथा पाचक, अत्र पाकक्रिया स्वार्थ इति सक्षेप । ३ **लिङ्गम्**—पुस्त्रीनपुसकरूपम् । ४ **संख्या**—एकाद्या । ५ **शक्तिः**—कर्मत्वकरणत्वसप्रदानादि । समासाद्यभिधीयमान चकारादिना द्योत्योऽपि समुच्चयादिरभिधेय इत्याशयेनाह—**द्योत्यश्च समुच्चयादिः**, अभिधेय इति शेष । न केवल स्वार्थादिरभिधेयो द्योत्यश्च समुच्चयादिरभिधेय इति चार्थ । अत्रादिपदाद्वा विकल्पादौ, एवोऽवधारणे इति च बोध्यम् । **तद्वत्**—स्वार्थद्रव्यलिङ्गसंख्याकारकद्योत्यसमुच्चयरूपाभिधेयार्थवत्, **शब्द**-

तद्धित–औपगवः, आक्षिकः । वाक्यवर्जनं किम् ? साधुर्धर्मं ब्रूते । अर्थवत्समुदायस्य वाक्यस्य नामसंज्ञाप्रतिषेधात् समासादेर्भवत्येव–चित्रगुः, राजपुरुषः, ईषदपरिसमाप्तो गुडो बहुगुडो द्राक्षा । अर्थवदिति किम् ? वनम्, धनम्, नान्तस्यावधेर्मा [१]भूत्, नामत्वे हि स्याद्युत्पत्तौ पदत्वान्नलोपः स्यात् । यदाऽनुकार्यानुकरणयोः स्याद्वादाश्रयणेनाभेदविवक्षा तदाऽर्थवत्त्वाभावान्न भवति नामसंज्ञा–यथा गवित्ययमाहेति, यदा तु भेदविवक्षा तदानुकार्येणार्थेनार्थवत्त्वाद्भवत्येव–पचतिमाह, चः समुच्चये, नेर्विशः, परावेर्जेरित्यादि । नामप्रदेशाः–"नाम सिदय्व्यञ्जने" ॥१।१।२१॥ इत्यादयः ॥ २७ ॥

## शिर्घुट् ॥ १ । १ । २८ ॥

जस्शसादेशः शिर्घुट्संज्ञो भवति । पद्मानि तिष्ठन्ति, पद्मानि पश्य । घुट्प्रदेशाः "घुटि" ॥१।४।६८॥ इत्यादयः ॥२८॥

## पुंस्त्रियोः स्यमौजस् ॥ १ । १ । २९ ॥

औरिति प्रथमाद्वितीयाद्विवचनयोरविशेषेण ग्रहणम् । सि अम् औ जस् इत्येते प्रत्ययाः पुंसि स्त्रियां च घुट्संज्ञा भवन्ति । राजा, राजानम्, राजानौ तिष्ठतः, राजानौ पश्य, राजानः । स्त्रियाम्–सीमा, सीमानम्, सीमानौ तिष्ठतः पश्य वा, सीमानः, "नि दीर्घः" ॥१।४।८५॥ इति दीर्घः । पुंस्त्रियोरिति किम् ? सामनी, वेमनी, घुट्त्वाभावाद् दीर्घो न भवति ।

यग्रहणेन नामसंज्ञाविधिः पर्युदासस्य विधिप्राधान्यात् नाधातुरिति प्रतिषेधप्रवृत्तिः । **औपगवः**–उपगोरपत्यमिति विग्रहे "ङसोऽपत्ये" ६।१।२८। इत्यणि रूपम् । **आक्षिकः**–अक्षैर्दीव्यति इति विग्रहे, "तेनजितजयद्०" ६।४।२। इतीकणि रूपम् । एषु विभक्त्यन्तत्वाभावान्नामत्वे स्यादयः । ननु धातुविभक्त्यन्तभिन्नस्य पदेभ्यो व्यतिरिक्तस्य पदार्थसंबन्धरूपविशिष्टार्थबोधकस्य वाक्यस्यार्थवत्त्वान्नामत्वप्राप्तौ तद्वर्जनमाह–**वाक्यवर्जनं किम् ? साधुर्धर्मं ब्रूते ।** अनावाक्यमिति पर्युदासे नञ् तस्य च सदृग्ग्राहित्वाद्वाक्यभिन्नवाक्यसदृशार्थवत्पदसमुदायस्य समासस्य नामसंज्ञा विधास्यति तदेवाह–**अर्थवत्समुदायस्य वाक्यस्य** इति । पूर्वोक्तार्थवच्छब्दसमूहरूपवाक्यस्य । **नामसंज्ञाप्रतिषेधात्**–पर्युदासमाश्रित्य समासादौ विधिद्वारा वाक्यस्य निषेधात् भवत्येव नामसंज्ञा इति शेषः । **चित्रगुः**–चित्रा गावो यस्य स इति बहुव्रीहिः । **राजपुरुषः**–राज्ञः पुरुषः इति षष्ठीतत्पुरुषः । **ईषदपरिसमाप्तो गुड इति बहुगुडो द्राक्षा** इत्यस्य विवरणम् । अत्र "नाम्नः प्राग्बहुर्वा" ७।३।१२। इति बहौ रूपम् । ननु अधातुविभक्तीत्यत्र पर्युदासाश्रयणेन धात्वादिभिन्नधात्वादिसदृशार्थवतामेव शब्दरूपाणां संभव इति किमर्थमर्थवदित्यभिप्रायेणाशङ्क्य समाधत्ते–**अर्थवदिति किम्** इत्यादि, **मा भूत्** इत्यन्तेन । **नान्तस्य अवधेः**–धन् इत्यस्य वन् इत्यस्य चावधेः । अयमभिप्रायः–अर्थवदिति हि संज्ञिनिर्देशः सदृग्ग्राहि पर्युदासेऽर्थवत्त्वेन धर्मेण सादृश्यसमाश्रयणाय, न च धनं वनमित्यत्र प्रतिवर्णं नामत्वे निरर्थकवर्णेभ्यः स्याद्युत्पत्त्यभावेनेष्टापत्तिरिति वाच्यम्, अवयवसंज्ञाविधानात्स्याद्युत्पत्तेः, तथा सति पदत्वान्नलोप इत्येव वदति–**नामत्वे हि** इत्यादि, स्पष्टोऽर्थः । ननु यदा केनचिदशक्त्या गौ इति प्रयोक्तव्ये गो इति प्रयुक्तं तदा तत्समीपवर्ती च तदुक्तमपरेण पृष्टः सन्ननुकरोति तत्र तदनुकरणे नामसंज्ञा स्याद्वा नवा ? इत्याशङ्कायामाह–**यदानुकार्यानुकरणयोः** । यदा–यस्मिन्काले, अनुकार्यानुकरणयोः–अशक्त्या प्रयुक्तगो इत्यनुकार्यं, तमनुकुर्वतापरपृष्टेन तत्समीपवर्तिना चोक्तमनुकरणं गो इति तयोः, **स्याद्वादाश्रयणेन**–अनेकान्तमताभ्युपगमेन, **अभेदविवक्षा**–इदमत्र रहस्यम्–अनुकार्यस्य गो इत्यस्यानुकरणस्य तदुक्तानुवादकोच्चरितस्य च गो इत्यस्याभेदो विवक्ष्यते तथा सति 'साधुशब्दा एवार्थवन्तः' इति अनुकार्यस्यासाधोरर्थवत्त्वाभावेन तदभेदिनोऽनुकरणस्याप्यर्थवत्त्वाभावान्न नामसंज्ञा । तत्स्थलं प्रदर्शयति–**यथा गवित्ययमाह** । भेदविवक्षायां स्थलप्रदर्शनपूर्वकमर्थवत्त्वं निर्दिशति–**यदा तु**–अनुकार्यानुकरणयोः स्याद्वादसमाश्रयणेनेतिशेषः । **भेदविवक्षा**–पूर्वोक्तयोः, गोइत्यनुकार्यगोइत्यनुकरणयोर्भेदो विवक्ष्यते **तदा अनुकार्येण**–वर्णावलिरूपेण **अर्थेन**–अर्थादनुकरणस्यार्थोऽनुकार्यशब्दानुपूर्वी तेन रूपेण तथाचार्थ**वत्त्वात्** तदनुकरणस्य नामसंज्ञा भवत्येव, तदेव दर्शयति–**पचतिमाह**, **"नेर्विशः"** पा० १।३।१७, **"परावेर्जेः"** ३।३।२८, **"निविशः"** ३।३।२४। स्वसूत्रम् इत्यादिना । **नामप्रदेशाः**–पूर्ववदेव ॥ २७ ॥

अन्ये शि इत्यस्य सर्वनामस्थानमिति गुर्वीं संज्ञां विदधति, अस्मच्छब्दानुशासने लघुभूतां घुट्संज्ञामाह–**शिर्घुट्** । शिरिति घुट्पदबोध्य इत्यर्थः । 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इत्याह–**जस्शसादेश** इति । **पद्मानि**–पद्मशब्दाज्जसि, शसि च "नपुंसकस्य शि" १।४।५५। इति शौ, तस्यानेन घुट्संज्ञायां "स्वराच्छौ" १।४।६५। इति नागमे दीर्घत्वे च रूपसिद्धिः । **घुट्प्रदेशाः**–पूर्ववदेव ॥ २८ ॥

सि, औ, जस्, अम्, औ इत्येषां घुट्संज्ञाविधायकशास्त्रमाह–**पुंस्त्रियोः स्यमौ जस्** । अत्र घुडित्यनुवर्तते । पुमांश्च स्त्री च पुंस्त्रियौ, तयोः पुंस्त्रियोः अलौकिका अपि निर्देशा भवन्ति इत्यनेन ज्ञाप्यते, अन्यथा स्त्रीपुंसयोरिति भाव्यम् । पुमांश्च स्त्री चेति कृतेऽर्च्यत्वात्स्त्रीशब्दस्य प्राग् निपाते "स्त्रियाः पुंसो द्वन्द्वाच्च" ७।३।९६। इति समासान्तविधानेन । **स्यमौजस्**–'स्यौजसमौ' इति निर्देष्टव्ये स्यमौजसिति व्यतिक्रमनिर्देशेन, आवृत्त्या प्रथमाद्वितीयाद्विवचनभूतौकारयोरुपादानं सूच्यते । अम् च औश्च अमौ, सिश्च अमौ च, जस् चेति अम् साहचर्याद्वितीयाद्विवचनग्रहणम् । आवृत्त्या व्याख्याने औश्च जस् च औजस्, सिश्च अम् च औजस् च इति कृते जस्साहचर्यात्प्रथमाद्विवचनग्रहणम् । अथवा–औश्च, औश्च, आवौ इत्येकशेषः, पश्चात् सिश्च अम् च, आवौ च जस् चेति, स्यमौजस् इत्याह–**औरिति प्रथमा** इत्यादिना, **ग्रहणम्** इत्यन्तेन । पुंलिङ्गस्त्रीलिङ्गयोर्वर्तमाना सि, औ, जस्, अम्, औ इत्येते प्रत्यया घुट्पदबोध्यास्तदेवाह–**सि अम्** इत्यादि । घुट्संज्ञाया फलमाह निदर्शनानि प्रदर्श्य–**राजा राजानौ** इत्यादिना, **"नि दीर्घः" इति दीर्घः** इत्यन्तेन । पुंस्त्रियोरित्यस्य प्रयोजनमाह–**पुंस्त्रियोरिति किम् ? सामनी, वेमनी**–नपुंसकप्रथमाद्वितीयाद्विवचने रूपद्वयम् । **घुट्त्वाभावात्**–पुंस्त्रियोरिति सूत्रेण पूर्वोक्तप्रत्ययपञ्चकस्य घुट्त्वविधानात्, नपुंसके तदविधानेन च तत्र प्रथमाद्वितीयाद्विवचनयोरेव घुट्संज्ञाफलरूपदीर्घस्य संभव इत्यभिप्रायेणोदाहरणप्रदर्शनम्, प्रथमाद्वितीयैकवचने फलाभावात् घुट्त्वाप्रवृत्तिः, जस्शसादेशस्य पूर्वसूत्रेण घुट्त्वसिद्धिरिति । **दीर्घः न भवति**–"नि दीर्घः" इत्यनेन । ननु करचरणादिमती पुरुषार्थोपयोगिनी व्यक्तिः पुमान्, तथैव करचरणादिमती स्तनकेशवती स्त्री इति च स्वीकारे सीमा सीमानौ इत्यादौ तल्ल-

१ पुंलिङ्गे स्त्रीलिङ्गे पु० ।

किं पुनः पुमान् स्त्री वा? लिङ्गम्, किं पुनस्तत्? अयमियमिदमिति, यतस्तत् पुमान् स्त्री नपुंसकमिति लिङ्गम्। तच्चार्थधर्म इत्येके, शब्दधर्म इत्यन्ये, उभयथाऽपि न दोषः ॥ २९ ॥

## स्वरादयोऽव्ययम् ॥ १ । १ । ३० ॥

स्वरादयः शब्दा अव्ययसंज्ञा भवन्ति। स्वः सुखयति, एहि जाये स्वा रोहाव, स्वः संजानीते, स्वः स्पृहयति, स्वरागच्छति, छायेव या स्वर्जलधेर्जलेषु, स्वर्वसति, अन्तर्यामि, अन्तर्वसति। अत्युच्चैसौ, अत्युच्चैस इत्यत्रोच्चैरतिक्रान्तो यस्तदभिधायकस्य पूर्वपदार्थप्रधानस्य समासस्य सम्बन्धी स्यादिर्नोच्चैःशब्दस्य, तेन "अव्ययस्य" ॥ ३ । २ । ७ ॥ इति लुप् न भवति, परमोच्चैः, परमनीचैरित्यत्र तूत्तरपदार्थप्रधानत्वात् समासस्याव्ययसंबन्ध्येव स्यादिरिति भवत्येव। अन्वर्थसंज्ञा चेयमव्ययमिति, लिङ्गकारकविभक्तिनानात्वेऽपि न नानारूपतां प्रतिपद्यत इति। यदुक्तम्—"सदृश त्रिषु लिङ्गेषु,

---

क्षणस्याव्याप्तिरित्ययुक्तमिदमित्यभिप्रायेण पृच्छति—किं पुनः पुमान् स्त्री वा? समाधत्ते—लिङ्गम्। ननु लिङ्गमिति हेतु, कारण, निमित्त-मित्याद्यर्थक जगति प्रसिद्धं तदत्र माह्यमित्यभिप्रायवान् पृच्छति—किं पुनस्तत्? इदमत्राकूतम्—स्त्रीत्वादिलिङ्ग यदि गोत्वादिवदवयवसंस्थानव्यङ्ग्य भवेत्तर्हि तस्य तदिव सामान्यविशेषरूपताप्रसङ्ग। अपि च भिन्नावयवसंस्थानत्वेन खट्वाशिंशपादारपुरुषादीना लिङ्गत्वाभाव स्यात्। यदि च तन्नोत्वादिवत्सकृदाख्यात स्वीक्रियते तदापि सुदुर्ग्रह स्त्रीपुनपुंसकेषु व्यञ्जयन्तरेषु तदिति। अथ स्तनकेशवत्त्व स्त्रीत्व, रोमशत्व पुस्त्वं, स्त्रीपुंसयोर्लिङ्गवत्त्वेन सदृशत्व च नपुंसकत्व लिङ्गम्, तथा चोक्त—"स्तनकेशवती स्त्री स्याद्, रोमश पुरुष स्मृत। उभयोरन्तरं यच्च, तदभावे नपुंसकम् ॥" इति चेन्न, तस्याव्याप्त्यतिव्याप्त्यादिबहुविधदोषपराहतत्वात्, तथाहि—स्त्रीवेषधारिणि नटेऽतिव्याप्ति स्तनकेशवत्त्वात्, अव्याप्तिश्च कुमार्यामविशयस्तनाभावादिति। अपि च तद्गृहाभिधायी खरकुटीशब्दस्तत्स्थमनुष्यावाच्यभेदोपचारेण यत्र तत्र खरकुटी पश्य इत्यत्र तदर्थस्य रोमशत्वेन पुस्त्वात्—"शसोऽता०" इति नत्व प्रसज्येत। किं च खट्वावृक्षयोस्तादृशस्त्रीत्वपुस्त्वाभावात्सत्त्वयान्वितया नपुंसकत्व प्रसज्येत इति बहवो दोषा इति वैयाकरणै कश्चन स्वसिद्धान्त समाश्रयणीय इति समाधत्ते—अयमियमिदमिति। भावतत्त्वदृशा शब्दार्थेषु व्यवस्थितानां शिष्टानां प्रयोगाननुसरति लोक क्वचिदयमिति प्रयुङ्क्ते—अय घट इति न तत्रेयमिति वा, क्वचिदियमिति प्रयुङ्क्ते इय कुटीति न तत्रायमिदमिति वा, तथा इद कुड्यमिति प्रयुङ्क्ते न तत्रायमिति वा, तत्र यतः—उत्पादप्रलयस्थितिस्वरूपात् स्वभावादयमियमिदमिति शब्दो व्यवतिष्ठते स तच्छब्दव्यवस्थाहेतु स्वभावो लिङ्गम्। तत्रोत्पाद पुस्त्वम्, प्रलय स्त्रीत्वम्, स्थितिर्नपुंसकम्, तथाहि—रूपादीना पर्यायाणा सवनं प्रसव पुमान्, रूपादीना पर्यायाणामपचय स्त्यान स्त्री, साम्यावस्था स्थितिर्नपुंसकम्, एताश्चावस्था शब्दगोचरा एव, तत्र कश्चिच्छब्द केनचिदेकेन धर्मेण, द्वाभ्यां धर्माभ्यां, त्रिभिश्च धर्मैर्विशिष्टमर्थं नियमविकल्पाभ्यामाचष्टे तत्र शिष्टप्रसिद्धि प्रमाणम्। तस्माच्छिष्टलोकाल्लिङ्गस्य प्रतिपादने व्यवस्थानुमन्तव्येति। तच्च—लिङ्गम्, अर्थधर्मः—अर्थस्य धर्म, अर्थस्य—घटादिशब्दस्यार्थ श्रावणेन विषयीक्रियते, तस्य तदन्वयव्यतिरेकाभ्यामभ्युपगतात्मनोऽर्थस्य धर्म.—स्वभाव। इत्येके—पाणिनीयमहाभाष्यकृन्मतानुयायिन। 'एकार्थे शब्दान्यत्वाद्दृष्ट लिङ्गान्यत्वम् अवयवान्यत्वाच्च' इति हि भगवत्पतञ्जलिवचनात्, यथाक्रम पुष्यस्तारका नक्षत्रम्, कुटी कुटीर इत्यादौ शब्दान्यत्वादवयवान्यत्वाच्चार्थैक्ये लिङ्गान्यत्व दृष्टमिति हि तदर्थं। तच्च—लिङ्ग, शब्दधर्म इत्यन्ये—प्राञ्च—अयमभिप्रायस्तेषाम्—शब्दप्रतीत्यन्वयव्यतिरेकानुगामिनी लिङ्गप्रतीतिर्लिङ्गस्य शब्दधर्मतां गमयति। यद्धि यत्प्रतीत्यन्वयव्यतिरेकानुगामिप्रतीतिस्तत्तद्धर्म इति व्याप्ते, यथा पटप्रतीत्यन्वयव्यतिरेकानुगामिप्रतीति शुक्लो गुण इति। पुल्लिङ्गादिव्यवहारोऽपि शब्दविषय एव, पुल्लिङ्गोऽय शब्द स्त्रीलिङ्ग इत्यादि। तत्र पक्षद्वयस्यापि निर्दोषत्वादुभयपरिग्रह इति स्वसिद्धान्तमाह—उभयथापि न दोष इति ॥ २९ ॥

अव्ययसंज्ञां निरूपयति—स्वरादयोऽव्ययम्। स्वर् आदिर्येषान्ते इति बहुव्रीहि, स्वरादयोऽव्ययपदबोध्या इत्यर्थ। स्व शब्दा-यथायोग सप्तविभक्तीरुदाहरति—स्वः सुखयति इत्यादिना। तत्र वैयाकरणमाघकवे काव्यस्य श्लोकमुदाहरणतयोपन्यस्यति वृत्तिकार—छायेव इत्यादि, "त्वष्टु सदाभ्यासगृहीतशिल्पविज्ञानसंपत्प्रसरस्य सीमा। अदृश्यतादर्शतलामलेषु च्छायेव या स्वर्जलधेर्जलेषु ॥" शिशुपाल० ३।३५ श्लो०। त्वष्टु—विश्वकर्मण, सदाभ्यासगृहीतशिल्पविज्ञानसपत्प्रसरस्य—सदाभ्यासेन गृहीतो लब्धो य शिल्पविज्ञानसपद प्रसर—प्रकर्षस्तस्य सीमा—अवधि, या पू द्वारिकानगरी आदर्शतलामलेषु—दर्पणपृष्ठस्वच्छेषु जलधेर्जलेषु स्वः स्वर्गस्य छाया इव प्रतिबिम्बमिवादृश्यत इत्यर्थ। इद स्व इति लुप्तषष्ठीविभक्त्यन्तोदाहरणप्रदर्शनतयोपयुज्यते। स्वरादीनां तदन्तानामव्ययसंज्ञाप्रयुक्तकार्यविधिप्रतिषेधौ दृश्येते, तौ च कदा कस्येति तद्व्यवस्थापयति—अत्युच्चैसौ इति—उच्चैरतिक्रान्तौ इति तद्विग्रह, अतिक्रान्ताद्यर्थकातिना द्वितीयान्तस्य "प्रात्यव०" ३।१।४७। उच्चै-शब्दस्य समासे अत्युच्चैसौ इति, अत्युच्चैरिति प्रथमैकवचनान्तेऽव्ययत्वप्रयोजनाभावाद्विवचनान्ताद्युदाहरण। अत्र स्वरादेरुच्चैरव्ययस्यार्थो गुणभूत पूर्वपदार्थप्रधानसमासार्थे उच्चैरतिक्रान्तार्थे इति यत्रोपसर्जनस्वराद्यन्तो भवति, तत्रावयवोऽव्ययसंज्ञो भवति न समुदाय इत्यत्युच्चैसावित्यत्र समाससबन्धिन स्यादे औ इत्यस्य, उच्चैरित्यव्ययसबन्धित्वाभावेन। "अव्ययस्य" ३।२।७। इति लुप् न भवति इति अतिक्रान्तार्थकस्यातिशब्दस्य समासावयवभूतस्य लिङ्गकारकविभक्तिसंख्याविशेषान्वयेन सत्त्ववृत्तित्वाच्चाव्ययत्वम्, एतेन पूर्वपदार्थातिक्रान्तार्थप्रधानसमासस्यैव सबन्धी स्यादिरिति "अव्ययस्य" इति लुप् स्यादिति निरस्तम्, वस्तुतस्तु तस्याव्ययत्वेऽपि तदर्थप्रधानसमासत्वेऽपि समुदायसंबन्धी स्यादिर्नाऽव्ययसंबन्धीति सक्षेप। तदभिधायकस्य—उच्चैरतिक्रमणकर्तृवाचकस्य, पूर्वपदार्थप्रधानस्य—समुदायार्थमुख्यस्य, समासस्य सम्बन्धी स्यादिः, न उच्चैःशब्दस्य संबन्धी स्यादिरित्यन्वय, तेन—उच्चै शब्दसबन्धित्वाभावेन। लुप् इति। स्यादेरित्यस्येति शेष। यत्रानुपसर्जनस्वराद्यन्तो भवति, तत्रावयवसमुदाययोरुभयोरव्ययत्व भवति, समासस्योत्तरपदार्थप्रधानत्वात्। तदेवाह—परमोच्चैः परमनीचैरित्यत्र तु इत्यादिना। तुशब्दोऽत्रास्य पूर्वप्रदर्शितात्युच्चैसावित्यादेरत्रकश्चिद्विशेष इति बोधयति तदाह—उत्तरपदार्थ इत्यादिना। अत्र तदन्तस्यापीय संज्ञा उच्चैरर्थस्य नीचैरर्थस्य च मुख्यतया समुदायेनाभिधानात् समासस्योत्तरपदार्थप्रधानाल्लिङ्गादिविशेषानुपादानाच्चेत्यव्ययसबन्ध्येव स्यादिरिति भवत्येव लुप्। ननु सूत्रे विशेषस्याश्रूयमाणत्वाल्लिङ्गादिविशेषानुपादाने स्वरादयोऽव्ययसंज्ञा भवन्तीति कुतोऽवगम्यते इत्याह—अन्वर्थसंज्ञा इत्यादिना। अन्वर्थत्व प्रदर्शयति—लिङ्गकारकविभक्ति इति। स्त्रीपुनपुंसकत्वानि सत्त्वगुणा एकत्वद्वित्वबहुत्वानि च एतानर्थान् ये भर्या न वियन्ति—विविधप्रकारप्रापकान् न प्राप्नुवन्ति इति तदव्ययम् इत्यन्वर्थत्व तस्या, यदुक्त—"तद्धितश्चासर्वविभक्ति" पा० १।१।३७ सूत्रे महाभाष्ये। ननु सञ्ज्ञाविधौ तदन्तप्रतिषेधस्य ज्ञापितत्वाद् नामग्रहणे न तदन्तविधि इति प्रतिषेधाच्च परमोच्चैरिति तदन्तस्य

सर्वासु च विभक्तिषु । सर्वेषु च वचनेषु यन्न व्येति तदव्ययम् ॥" अन्वर्थाश्रयणे च स्वराद्यव्ययमव्ययं भवतीति स्वरादेर्विशेषणत्वेन तदन्तविज्ञानात् परमोच्चैः परमनीचैरित्यादावप्यव्ययसंज्ञा भवति । स्वर् अन्तर् सनुतर् पुनर् प्रातर् ५, सायम् नक्तम् अस्तम् दिवा दोषा १०, ह्यस् श्वस् कम् शम् योस् १५, मयस् विहायसा रोदसी ओम् भूस् २०, भुवस् स्वस्ति समया निकषा अन्तरा २५, पुरा वहिस् अवस् अधस् असांप्रतम् ३०, अद्धा ऋतम् सत्यम् इद्धा मुधा ३५, मृषा वृथा मिथ्या मिथो मिथु ४०, मिथस् मिथुस् मिथुनम् अनिशम् मुहुस् ४५, अभीक्ष्णम् मङ्क्षु झटिति उच्चैस् नीचस् ५०, शनैस् अवश्यम् सामि साचि विष्वक् ५५, अन्वक् ताजक् द्राक् स्राक् ऋधक् ६०, पृथक् धिक् हिरुक् ज्योक् मनाक् ६५, ईषत् जोषम् ज्योषम् तूष्णीम् कामम् ७०, निकामम् प्रकामम् अरम् वरम् परम् ७५, चिरम् आरात् तिरस् मनस् नमस् ८०, भूयस् प्रायस् प्रवाहु प्रवाहुक् प्रवाहुकम् ८५, आर्य हलम् आर्यहलम् स्वयम् अलम् ९०, कु वलवत् अतीव सुष्ठु दुष्ठु ९५, ऋते सपदि साक्षात् सन् प्रशान् १००, सनात् सनत् सना नाना विना १०५, क्षमा शु सहसा युगपत् उपांशु ११०, पुरतस् पुरस् पुरस्तात् शश्वत् कुवित् ११५, आविस् प्रादुस् ११७, इति स्वरादयः ।

कथमव्ययसंज्ञा इत्याह–**अन्वर्थाश्रयणे च** इति । अन्वर्थसंज्ञाबलादुपस्थापितमव्यय विशेष्य सूत्रस्थाव्ययमित्यस्य, तत्र च स्वरादय इति विशेषण "विशेषणमन्त" इति न्यायेन तदन्तबोध , केवलस्वरादेरव्ययत्व व्यपदेशिवद्भावेन तदन्तस्य परमोच्चैरित्यस्य तदन्तविज्ञानेनाव्ययत्वम्, तदेवाह–**स्वराद्यव्ययं** इत्यादिना, **संज्ञा भवति** इत्यन्तेन । परिगणयति स्वरादीन्—**स्वर्** इत्यादिना । **स्वर्**–स्वर्गे च परलोके च । **अन्तर्**–मध्ये । **प्रातर्**–प्रत्यूषे । **पुनर्**–अप्रथमे विशेषे च । **सुनुतर्**–अन्तर्धाने मनोरमाया मतेनेदम्, हैमबृहन्न्यासे तु **सनुतर्** कालवाचीति निर्दिष्टम् । स्वराद्या पञ्च रेफान्ता । **सायं**–निशामुखे । **नक्तं**–रात्रौ । **अस्तम्**–विनाशे, अस्तमदर्शने इत्यभिधानचिन्तामणौ–'यथास्तगत सविता' । **दिवा**–दिवसे । **दोषा**–रात्रौ पर्युषिते च । **ह्यस्**–अतीतेऽह्नि । **श्वस्**–अनागतेऽह्नि । **कम्**–वारिमूर्धनिन्दासुखेषु अयमपि मनोरमाभिप्राय , हैं० बृ० न्या० उदकमाकाश चेति कथितम् । **शम्**–सुखे । **योस्**–विषयसुखे । **मयस्**–सुखे । **विहायसा**–अन्तरिक्षे । **रोदसी**–द्यावापृथिव्यो । **ओम्**–अङ्गीकारे ब्रह्मणि च, अभ्यादानाभिमुखीकरणयोरपि । **भूर्भुवस्**–यथाक्रम नागमनुष्यलोकयो, यथा "भूर्भुव स्वस्त्रयीशानमिति" । **स्वस्ति**–कल्याणे । **समया**–समीपे मध्ये च । **निकषा**–अन्तिके । **अन्तरा**–विनार्थे मध्ये चाधेयप्रधाने २५ । **पुरा**–भूतभविष्यत्परीप्साचिरन्तनेषु, पुरेत्यविरते चिरातीते भविष्यदासन्ने चेति मनोरमायाम् । **वहिस्**–बाह्ये बहिर्भावे अनावृतप्रदेशे, यथा वहिर्योग इत्यत्र बाह्येन योगो वहिर्भावेन योग इति । **अवस्**–वहिरर्थे । **अधस्**–सामीप्यादौ । **असाम्प्रतम्**–अनौचित्ये । अद्धेति स्फुटावधारणयो , तत्त्वातिशययोरित्येके तथाच प्रयोग –"मध्ये श्रुतीनां प्रतिवेशिनीनां सरस्वती वासवती मुखे न । ह्रियेव ताभ्यश्चलतीयमद्धा पथाग्र ससर्गगुणेन नद्धा" ॥ इति नैषधीये, हैं० बृ० न्या० तु अवधारणसत्यातिशययो । **ऋतम्**–शुद्धौ । **सत्यम्**–प्रश्नप्रतिषेधयो । **इद्धा**–प्राकाश्ये । **मुधा**–व्यर्थे, हैं० बृ० न्या० तु निर्निमित्तप्रीतिकरणयो । **मृषा, मिथ्या**– इत्येतौ वितथे । **वृथा**–व्यर्थे । **मिथो**–ओकारान्तो रह सहार्थयो । **मिथु मिथस्**–विजनवियोगेतरेतरार्थे । मिथो मिथस् ( एतौ ) रह सहार्थयोरिति मनोरमायाम् , मिथु–स्वाङ्गे द्वावित्यर्थे इति मनोर० । **मिथुस्**–सगमे । **मिथुनं**–स्त्रीपुससंयोगे । **अनिशं**–नैरन्तर्ये । **मुहुस्** , **अभीक्ष्णं**–एतौ पुन पुनरित्यर्थे । **मंक्षु, झटिति**–शीघ्रार्थौ । **उच्चैस्**–महति । **नीचैस्**–अवकृष्टे, अल्पे इति मनोर० ५० । **शनैस्**–क्रियामान्द्ये । **अवश्यं**–निश्चये आवश्यके । **सामि**–अर्द्धजुगुप्सितयो । **साचि**–वक्रतिर्यगर्थयो । **विष्वक्**–समन्तादित्यर्थे नानार्थे इत्यपि । **अन्वक्**–पश्चादर्थे । **ताजक् द्राक् स्राक्**–शीघ्रार्थे, स्राक् एवार्थे इत्यपि । **ऋधक्**–वियोगे शीघ्रान्वितसामीप्यलाभेषु । ऋधक्–सत्ये, वियोगशीघ्रसामीप्यलाघवेष्विसन्न्ये इति मनोरमायाम् । **पृथक्**–भिन्ने, वियोगे इत्यपि । **धिक्**–निन्दार्थे । **हिरुक्**–वियोगे, 'हिरुग्नानापृथग्विना' इत्यभिधानचिन्तामणौ । **ज्योक्**–कालभूयस्त्वे, प्रश्ने शीघ्रसम्प्रत्यर्थयोश्च । **मनाग्**–ईषदप्राप्तयो , **ईषद्**–अप्राप्ते, इमावल्पे इति मनोर० । **जोषं ज्योषं तूष्णीम्**–एते त्रयोऽप्यभाषणे । **कामं, निकामं, प्रकामं**–एते त्रयोऽतिशयार्थे, काम स्वाच्छन्द्ये इति मनोर०, अक्षमानुमतौ काममित्यभिधानचिन्तामणौ । **अर**–शैघ्र्ये अल्पार्थेऽपि । **वर**–मनागिष्टे, ईषदुत्कर्षे इति मनोर० । **परं**–केवले, किन्त्वर्थे इति मनोर० ७५ । **चिर**–दीर्घकाले । **आरात्**–दूरसमीपयो । **तिरस्**–अन्तर्द्ध्यर्थवशातिर्यग्भावेषु । **मनस्**–नियमे । **नमस्**–नतौ । **भूयस्**–पुनरर्थे आधिक्ये च । **प्रायस्**–बाहुल्ये । **प्रवाहु**–ऊर्द्ध्वार्थे, **प्रवाहुक् प्रवाहुकम्**–द्वावप्यूर्द्ध्वार्थे, **प्रवाहुकमिति** समकालार्थे छिद्रार्थे च, प्रवाहिकेति पाठान्तरमिति मनोरमायाम्, प्रवाहु प्रवाहुक् प्रवाहुकम् इति म० भ०, हैं० प्रका० । **आर्य**–प्रीतिसम्बोधने । **हलं**–प्रतिषेधे विषादे च, समस्तमित्येके । **आर्यहलमिति** बलात्कारे, शाकटायनस्तु आर्येति प्रतिबन्धे, हलमिति प्रतिषेधविवादयोरित्याहेति मनोरमायाम् । **स्वयम्**–आत्मने इत्यर्थे । **अलं**–भूषणपर्याप्तिशक्तिवारणनिषेधेषु । **कु**–कुत्सितेषदर्थयो , पापार्थे इति हैं० बृ० न्या० । **बलवत्**–निर्भरे, बलवदित्यतिशये इति मनोर०, बलवत्सुष्ठु किमुतातीव निर्भरे इत्यभिधानचिन्ता० । **अतीव**–अतिशये । **सुष्ठु, दुष्ठु**–यथाक्रम प्रशसानिन्दयो । **ऋते**–वर्जने, वर्जनेऽत्वतरेणर्ते इति वचनात् वियोग इत्यपि । **सपदि** शैघ्र्ये, द्रुते इति हैं० बृ० न्या० । **साक्षात्**–प्रत्यक्षतुल्ययो । **सन्**–परित्राणे । **प्रशान्**–चिरन्तने, समानार्थे इति मनोर० १०० । **सनात्**–हिंसायां । **सनत्**–वेदर्थे । **सना**–नित्ये, सना सनत् सनात् एते त्रयोऽपि नित्ये इति मनोर० । **नाना**–पृथग्भावे, अनेकविनार्थयोरिति मनोर० । **विना**–योगप्रतिषेधे, वर्जने इति मनोर० । **क्षमा**–सहने । **शु**[१]–पूजायाम् । **सहसा**–अतर्किते, आकस्मिकाविमर्शयोरिति मनोर० । **युगपत्**–क्रियासमभिहारे सहार्थे च । **उपांशु**–अप्रकाशोच्चारणरहस्ययो । **पुरतस्** , **पुरस्**–एतावग्रतोऽर्थे । **पुरस्तात्**–प्रथमे पुरोऽर्थे च । **शश्वत्**–पौन पुन्ये, नित्ये सहार्थे च । **कुवित्**–योगप्रशसास्तिभावेषु, भूर्यर्थे इति मनोर० । **आविस्** **प्रादुस्**–प्राकट्ये इति, प्रादुस् नाम्न्यपि, इति स्वरादय सप्तदशोत्तरं शतमव्यया हैमबृहद्वृत्तिनिर्दिष्टा परिगणिता । "स्वरादय" इति सूत्रे बहुवचनमाकृतिगणार्थं, तेनान्येषामपि यथालक्ष्ममव्ययसंज्ञा भवति । **उपधा**–भेदे । **तोष**–सुखे मौने च । **अम्**–शैघ्र्ये अल्पे च । **आम्**–अङ्गीकारे । **प्रताम्**–ग्लानौ । **साम्प्रत** न्याये । **नित्य, नित्यदा, सदा, अजस्र, सतत**–सातत्ये । **झगिति**–तरसा । **आशु**–शैघ्र्ये । **अञ्जसा**–तत्त्वशीघ्रार्थयो । **सत्यमित्यर्धाङ्गीकारे** । **आनुषक्**–आनुपूर्व्ये । **अत्रस्**–शीघ्रसाम्प्रतिकयो । **स्थाने**–इति युक्ते । **शुदि**–शुक्लपक्षे । **वदि**–कृष्णपक्षे । **संवत्**–वर्षे । अर्थकथन चैषामुपलक्षणमात्रम् , तथा चोक्तम्–"निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रय । अनेकार्था स्मृता लोके पाठस्तेषां निदर्शनम्" इति **स्वरादयः**—एवमेते द्वाविंशति । केचिदेवम् 'अथाव्ययानि वक्ष्यन्ते' इत्यादिभ्योऽभिधानचिन्तामणिपर्यन्तश्लोकेभ्यो ज्ञेया ,

१ सवतीति पु० ।

बहुवचनमाकृतिगणार्थम्, तेनान्येषामपि चादिषूपात्तानामनुपात्तानां च स्वरादिसधर्मणामव्ययसंज्ञा भवति । स्वरादयो हि स्वार्थस्य वाचका, न तु चादिवद् द्योतका इति । अव्ययप्रदेशाः "अव्ययस्य" ॥ ३ । २ । ७ ॥ इत्यादयः ॥ ३० ॥

## चादयोऽसत्त्वे ॥ १ । १ । ३१ ॥

सीदतोऽस्मिँल्लिङ्गसंख्ये इति सत्त्वं लिङ्गसङ्ख्यावद् द्रव्यम्, इदं–तदित्यादिसर्वनामव्यपदेश्य विशेष्यमिति यावत्; ततोऽन्यत्र वर्तमानाश्चादयः शब्दा अव्ययसंज्ञा भवन्ति । निपाता इत्यपि पूर्वेषाम्–वृक्षश्च प्लक्षश्च । असत्त्वे इति किम् ? यत्रैषां सत्त्वरूपेऽनुकार्यादावर्थे वृत्तिस्तत्र मा भूत्–चः–समुच्चये, इव–उपमायाम्, एवोऽवधारणे । च अह ह वा एव ५, एवम् नूनम् शश्वत् सूपत् कूपत् १०, कुवित् नेत् चेत् नचेत् चण् १५, कच्चित् यत्र नह नहि हन्त २०, माकिस् नकिस् मा माङ् न २५, नञ् वाव त्वाव न्वाव वावत् ३०, त्वावत् न्वावत् त्वै तुन्वै न्वै ३५, नुवै रै वै श्रौषट् वौषट् ४०, वषट् वट् वाट् वेट् पाट् ४५, प्याट् फट् हुंफट् छवट् अध ५०, आत् स्वधा स्वाहा अलम् चन ५५, हि अथ ओम् अथो नो ६०, नोहि भोस् भगोस् अघोस् अङ्घो ६५, हहो हो अहो आहो उताहो ७०, हा ही हे है हये ७५, अयि अये अररे अङ्गरे अरे ८०, अवे ननु शुकम् सुकम् तुकम् ८५, हिकम् नहिकम् ऊम् हुम् कुम् ९०, उञ्

---

प्रकारा· स्वरादयो गृह्यन्ते, नत्वेतावन्त इति, ननु परिसमाप्तावपीतिशब्दस्यवर्तमानत्वेनैतावन्त एवेत्यर्थो य इति कुतो न लभ्यते इत्याह—**बहुवचनमि**ति । एव प्रकारार्थकस्येति शब्दस्य ग्रहण स्वरादय इति बहुवचनात्, अन्यथा स्वरादिशब्दस्य सञ्ज्ञितयाव्ययमिति सञ्ज्ञाविशेषणत्वात् संज्ञायाश्चैकवचनान्तत्वाल्लाघवार्य चैकवचने प्राप्ते यद्बहुवचनं तदन्येऽपि बहव स्वरादय सन्तीति ज्ञापनार्थम्, उक्त च–"इयन्त इति सख्यान निपाताना न विद्यते । प्रयोजनवशादेते निपात्यन्ते पदे पदे ॥" **आकृतिगणार्थम्**—आक्रियतेऽनया इत्याकृतिर्वर्णकाप्रकारस्तस्यागणस्तदर्थ-मित्यर्थ । **तेन**—बहुवचनस्याकृतिगणार्थत्वेन तदेव स्पष्टयति–**अन्येषामपि** इत्यादिना, **भवति** इत्यन्तेन च । बहुवचनेन स्वरादिसधर्माणोऽन्येऽपि सगृहीता इति साधर्म्यं दर्शयति—**स्वरादयो हि** इति । अयमाशय –अव्यय द्विविधं, वाचक द्योतक च, तत्र स्वराद्यनन्तर्भूत चादिषूपात्तमनुपात्तं सत्यव्ययत्वे स्वार्थस्य वाचक तत्स्वरादौ द्रष्टव्यमित्यर्थ । **अव्ययप्रदेशाः**—पूर्ववदेवास्यार्थो बोध्य, तत्स्थलप्रदर्शनम्—**"अव्ययस्य"** इत्यादय ॥ ३० ॥

चादीनामव्ययसंज्ञां निरूपयति—**चादयोऽसत्त्वे** । च आदिर्येषान्ते चादय, न सत्त्वं असत्त्व तस्मिन् असत्वे, अव्ययमित्यनुवर्तते । असत्त्वे चादय अव्ययमित्यन्वय । किं नाम सत्त्वमित्यत आह सत्त्वपदार्थे व्युत्पत्तिप्रदर्शनद्वारा–**सीदत** इत्यादिना, **यावदि**त्यन्तेन । **सीदतः**–विशेषणभावेन अन्वित, **अस्मिन्**—बुद्धिस्थे **लिङ्गसंख्ये इति** । **सत्त्वं**–द्रव्य, तदेवाह—**लिङ्गसङ्ख्ये**त्यादि । तस्यैव द्रव्यस्य विवरणम्—**इदं तदित्यादिना, विशेष्यमिति यावत्** इत्यन्तेन च । प्रतियोगिनि प्रसिद्धो सुतरां तदभाव प्रसिद्ध इत्यप्रसिद्धप्रतियोगिकाभावास्वीकारेण पूर्व प्रतियोगिसत्त्व प्रसिद्ध्य तदभाव सुग्रह इति स्पष्टयति—**ततः**–लिङ्गसख्यावत इद तदित्यादि सर्वनामव्यपदेश्यविशेष्याद्द्रव्यात् । **अन्यत्र**—सत्त्वाभावे अर्थाददद्रव्यवाचिन इत्यर्थ । प्राचो वैयाकरणा चादीना निपात इति सञ्ज्ञामभिदधते इत्याह—**निपाता इत्यपि पूर्वेषाम्**–पाणिन्यादीनाम्, तथा च तत्सूत्रम् "प्राग्रीश्वरान्निपाता" पा० ।१।४।५६। 'असत्त्वे' इत्यस्य फल पृच्छति–**असत्त्वे इति किम् ?** । ननु चादय कदा सत्त्ववृत्तय कदा चासत्त्ववृत्तय इति सत्त्ववृत्तित्वप्रदर्शनपूर्वक तत्फलमाह—**यत्रैषां** इत्यादिना, **मा भूत्** इत्यन्तेन । तदेव दृष्टान्तद्वारा स्पष्टयति–च **समुच्चये** इत्यादि । आदिशब्दस्यानुक्तसमुच्चयार्थकत्वादेषा विस्तरत परिगणनमर्थकथन चैवम्—**च**–अन्वाचयसमाहारेतरेतरयोगसमुच्चयेषु । **अह**–निर्देशविनियोगकिलार्थेषु, पूजायामपि । **ह**–अवधारणे पादपूरणे प्रसिद्धावपि । **वा**–स्याद्विकल्पोपमयोरेवार्थे समुच्चये । **एव**–अवधारणपृथक्त्वपरिमाणेषु, अनवक्लृप्तावपि । **एवम्**–उपमानोपदेशप्रश्नावधारणप्रतिज्ञानेषु, उक्तपरामर्शेऽपि । **नूनं**–वितर्के अर्थनिश्चये च । **शश्वत्**–स्वरादावपि पठित । **सूपत्, कूपत्**–द्वावपि प्रश्नवितर्कप्रशंसासु, क्वचित् स्वरादावपि पठित । **नेत्, चेत्**–द्वावपि प्रतिषेधावधारणसमुच्चयेषु, नेदिति शकायां विचारेऽपि, चेदिति यद्यर्थे इति मनोर० । **नचेत्**–निषेधे । **चण्**–अय चेदर्थे णित्, समुच्चयादौ त्वननुबन्ध । **कच्चि**दिष्टप्रश्ने । **यत्र**–कालेऽधिकरणे, मनोरमायां तु यत्रेत्यनवक्लृप्त्यमर्षगर्हाश्चर्येषु, 'नावकल्पयामि न मर्षये गर्हे आश्चर्ये वा, यत्र भवान् वृषल याजयेत्' । **नह**–प्रत्यारम्भविषादप्रतिविधिषु । **नहि**–अभावे । **हन्त**–प्रीतिविषादसम्प्रदानेषु, मनोरमाया हन्तेति हर्षे विषादे अनुकम्पाया वाक्यारम्भे च । **माकिस्, नकिस्**–द्वावपि निषेधे वर्जने च । **मा, माङ्, न, नञ्**–एते सर्वेऽपि निषेधार्थो, माकि माकिं नकिरिति त्रयोऽपि वर्जने इति मनोरमायाम् । **वाव**–सम्बोधने । **त्वाव, न्वाव, वावत्, त्वावत्, न्वावत्**–एते अनुमानप्रतिज्ञाप्रैषसमाप्तिषु । **त्वै, तुवै, न्वै, नुवै**–चत्वारोऽप्येते वितर्के पादपूरणे च । **रै**–दाने अनादरे च, दाने दीप्तौ च इति है० बृ० न्या०, रै करोति ददातीत्यर्थ 'त्वं रे किं करिष्यसि' इति मनोरमायाम् । **वै**–निश्चये, स्फुटार्थे इति है० बृ० न्या० । **श्रौषट्, वौषट्, वषट्**–देवहविर्दानादौ । **वट्, वाट्, वेट्**–एते त्रयोऽपि वियोगपादपूरणयो । **पाट्, प्याट्**–द्वावपि सम्बोधने, अत्र डकार केचित् पठन्ति । **फट्, हुंफट्, छंवट्**–एते त्रयोऽपि निर्भर्त्सनसम्बोधनयो । **अध**–अधोऽर्थे । **आत्**–कोपपीडयो । **स्वधा**–पितृभ्यो हविर्दाने । **स्वाहा**–देवताभ्य । अलमिति स्वरादौ निरूपितम् । **चन**–अप्यर्थे पादपूरणे च । **हि**–हेताववधारणे च । **अथ**–मगलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु, अय स्वरादिरपि तेन मगलवाचकस्य द्रव्यार्थत्वेऽपि अव्ययत्व सिद्ध्यति, तथा च **श्रीहर्षः**–"उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे । यथाकुलाचारमथावनीन्द्रजा पुरन्ध्रिवर्गं स्नपयाम्बभूव" इति, अत्र हि अथ स्नपयाम्बभूवेत्यस्य मङ्गल स्नपन चकारेत्यर्थ, निपातस्तु स्वरूपेणैव मङ्गल मृदङ्गध्वनिवत् इति मनोरमायाम् । **ओमि**ति स्वरादौ पठितम् । **अथो**–अन्वादेशादौ । **नो, नोहि**–एतौ निषेधे । **भोस्, भगोस्, अघोस्, अङ्घो, हंहो, हो, अहो, आहो, उताहो**–नवाप्येते सम्बोधने । **हा, ही**–एतौ विषादविस्मये, हा विषादशु(शो)कार्तिषु, ही विस्मये इति है० बृ० न्या० । **हे, है, हये, अये, अयि, अररे, अङ्ग, रे, अरे, अवे**–हे प्रमुखा दशाप्यनुशयसम्बोधनयो, [ हाप्रभृति ] द्वादशैतेऽनुशयसम्बोधनयोरिति है० बृ० न्या० । **ननु**–विरोधोक्तौ अनन्वयादौ च । **शुकम्, सुकम्, तुकम्, हिकम्, नहिकम्**–पञ्चाप्येते प्रत्याख्याने । **शुकम्**–शैघ्र्ये, शुकमतिशये इति मनोर० । **ऊम्**–प्रश्ने । **हुम्**–भर्त्सने । **कुम्**–प्रश्ने । **उञ्**–

सुञ् कम् हम् किम् ९५, हिम् अद् कद् यद् तद् १००, इद् चिद् किद् स्विद् उत १०५, वत इव तु नु यच्च ११०, कच्चन किमुत किल किकिल किंस्वित् ११५, उदस्वित् आहोस्वित् अहह नहवै नवै १२०, नवा अन्यत् अन्यत्र शव् शप् १२५, अथकिम् विपु पद् पशु खलु १३०, यदिनाम यदुत प्रत्युत यदा जातु १३५, यदि यथाकथाच यथा तथा पुद् १४०, घ पुरा यावत् तावत् दिष्ट्या १४५, मर्या आम नाम स्म इतिह १५०, सह अमा समम् सत्रा साकम् १५५, सार्धम् ईम् सीम् कीम् आम् १६०, आस् इति अव अड अट १६५, वाह्या अनुपक् खोस् १६८, अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ १८२, प्र परा अप सम् अनु अव निस् दुस्–एतौ रान्तावपि १९०, वि आङ् नि प्रति परि उप १९६, अधि अपि सु उद् अति अभि २०२; इति चादयः । बहुवचनमाकृतिगणार्थम् ॥ ३१ ॥

## अधणूतस्वाद्याशसः ॥ १ । १ । ३२ ॥

धणूवर्जितास्तस्वादयः शसूपर्यन्ता ये प्रत्ययास्तदन्तं शब्दरूपमव्ययसंज्ञं भवति । देवा अर्जुनतोऽभवन्, अत्र षष्ठ्यन्तात् "व्याश्रये तसुः" ॥ ७ । २ । ८१ ॥ ततः, अत्र पित्तस् । तत्र, इह, क्व, कदा, एतर्हि, अधुना, इदानीम्, सद्यः,

---

रोपोक्तौ, अस्ति सत्त्वे रोपोक्तौ च । सुन्–उम्वत् इति है० बृ० न्या० । कम्–पादपूरणे, स्वरादौ ज्ञातव्यमिति है० बृ० न्या० । हम्–रोपानुपमादौ, रोपानुकम्पादौ इति है० बृ० न्या० । किम्–प्रश्ने वितर्के च । हिम्–सम्भ्रमभर्त्सनयो । अद्–विस्मये । कद्–कुत्सायाम् । यद्, तद्–हेत्वर्थवाक्योपन्यासयो । इद्–अपूर्वेऽर्थे ईपदर्थे च । चिद्–प्रश्नावधारणयो । किद्–भर्त्सनपादपूरणयो । स्विद्–विमर्शप्रश्नयो । उत–वितर्के, विकल्पे इति है० बृ० न्या० । वत–खेदानुकम्पासतोपविस्मयामन्त्रणेषु । इव–उपमावधारणयो । तु–विशेषणपादपूरणयो । नु–वितर्कपादपूरणयो । यच्च–वाक्यान्तरोपक्रमे । कच्चन–कच्चिदर्थे । किमुत–विकल्पे । किल–सम्प्रश्नवार्तयो , अलीकेऽपि । किंकिल–किलार्थे । किंस्विद्, उदस्विद्, आहोस्विद्–एते त्रयोऽपि प्रश्नवितर्कविकल्पेषु । अहह–अद्भुतखेदयो । नहवै, नवै–द्वावपि प्रत्याख्याने । नवा–विभाषायाम् । अन्यत्–अन्यार्थे । अन्यत्र–अन्याधिकरणे काले । शव्, शप्–द्वावपि प्रतिग्रहे । अथकिम्–अङ्गीकारे । विपु–नानार्थे । पद्–पाटवे । पशु–दृश्यर्थे, पशु सम्यगर्थे 'पशु मन्यमाना' इति मनोर० । खलु–निषेधवाक्यालङ्कारजिज्ञासानुनयेषु । यदिनाम–पक्षान्तरे । यदुत–पराशयप्रकाशनादौ । प्रत्युत–उक्तवैपरीत्ये । यदा–देशाद्यधिकरणे । जातु–कदाचिदित्यर्थे, अवधारणपादपूरणयोरपि । यदि–पक्षान्तरे । यथाकथाच–अनादरे । यथा–योग्यतावीप्सार्थानतिवृत्तिसादृश्येषु । तथा–साम्ये । यथायथमिति मकारान्तमव्ययं, यथास्वमित्यर्थे इति "सामीप्येऽधोध्युपरि" ।७।४।७९। इति द्विर्वचनसूत्रवृत्तौ । पुद्–कुत्सायाम् । घ–हिंसाप्रातिलोम्ययो । पुरा–स्वरादौ पठित सत्त्वभूते काले, अत्र त्वसत्त्वभूते । यावत्, तावद्–एतौ साकल्यावधिमानावधारणेषु, साकल्ये–यावत्कार्यं तावत्कृतम्, अवधौ–यावद्व्रतव्य तावत्तिष्ठ, माने–यावद्दत्त तावद्भुक्तम्, अवधारणे–यावदमत्र ब्राह्मणानामन्त्रयस्व, मर्यादावधिपरिमाणेषु इति है० बृ० न्या० । दिष्ट्या–सम्मदे, पूर्वप्रीतिसेवनयो सभाजनप्रातिलोम्ययोर्वा । मर्या–सीमाबन्धे । आम–पीडायाम् । नाम–प्राकाश्यसंभाव्यक्रोधोपगमकुत्सनेषु । स्म–अतीते पादपूरणे च । इतिह–पुराश्रुतौ । सह–तुल्ययोगविद्यमानयो । अमा–सहार्थे समीपे च । समम्, सत्रा, साकम्, सार्द्धम्–एते सहार्थे, समम् समन्ततोऽर्थे इति है० बृ० न्या० । ईम्, कीम्, सीम्–निर्देशनिवेदनवाक्यपादपूरणेषु । ईम्–अव्यक्ते, कीम्–संशयप्रश्नानुमानेषु, सीम्–अभिनवव्याहरणामर्षपादपूरणेषु इत्येके इति है० बृ० न्या० । आम्–प्रतिवचनावधारणयो । आस्–स्मृतिखेदयो , कोपे च । इति–एवमर्थे, प्रकारार्थे, ग्रन्थसमाप्तौ, शब्दप्रादुर्भावे, अर्थसमाप्तौ, पदार्थविपर्यासादौ, 'एवमर्थे, आश्चर्ये, हेत्वर्थे, प्रकारार्थे, शब्दप्रादुर्भावे, ग्रन्थसमाप्तौ, पदार्थविपर्यासादौ च' इति है० बृ० न्या० । अव, अड, अट–एते त्रयोऽपि भर्त्सने । वाह्या–निष्पत्तौ । अनुषक्–अनुमाने, केचित्तान्तं केचिद्दान्तमपरे दीर्घादि च मन्यन्ते । खोस्–कुत्सायाम् । स्वराश्चतुर्दशापि पूरणभर्त्सनामन्त्रणनिषेधेषु । अ इति सम्बोधनेऽधिक्षेपे निषेधे च, आ इति वाक्यस्मरणयो , इ सम्बोधनजुगुप्साविस्मयेषु, इ ई उ ऊ ए ऐ ओ औ सम्बोधने इति मनोरमायाम् । चादय इत्यत्र बहुवचनमाकृतिगणार्थं तेन आत इतोऽपीत्यर्थे । यत्तत्, यतस्तत–एतौ हेतौ । अनुर्फ–वितर्के । शंवद्–अन्तःकरणे आभिमुख्ये च । व–पादपूरणे इवार्थे च । चाडु, चटु–प्रियवाक्ये । हुं–भर्त्सने । तुमिति तुकारे, शुरु तुकृत्य । इव–सादृश्ये । अद्यत्वे–इदानीमित्यर्थे, इत्यादयो ज्ञेया ॥ ३१ ॥

"व्याश्रये तसु" ७।२।८१। इति सूत्रादारभ्य "संख्यैकार्थाद्वीप्साया शस्" ७।२।१५१। इति सूत्रपर्यन्त ये तस्वादय शस्पर्यन्ता प्रत्यया प्रतिपादिता , तेषु धण वर्जयित्वा तदन्तानामव्ययसंज्ञामाह—अधणतस्वाद्याशस । तसुरादिर्यस्य प्रत्ययसमुदायस्य तत्तस्वादि, न धण् अधण् च तत्तस्वादि च अधणूतस्वादि आशस.—शसमवधीकृत्य इत्यर्थ । अत्राव्ययमित्यनुवर्तते, इमे प्रत्यया प्रकृत्यविनाभाविन इति प्रकृत्याक्षेप , तस्यार्थैते विशेषणत्वेनाश्रीयन्ते "विशेषणमन्त" इति तदन्तबोध , तथा चायमन्वय —आशस य अधणूतस्वादिप्रत्ययसमुदाय तदव्ययम्, शसमवधीकृत्य य धणूवर्जित तस्वादिप्रत्ययसमुदायस्तदन्तमव्ययपदबोध्य भवतीत्यर्थ , तदेवाह—धणूवर्जितास्तस्वादय इत्यादिना, तस्वादिशस्पर्यन्तप्रत्ययान्तानुदाहरति—देवा अर्जुनतोऽभवन्–अर्जुनकर्णयोर्विवदमानयोरर्जुनस्य पक्षे देवा अभवन्नित्यर्थ भवति इत्यन्तेन । तत्र—अत्र इत्यादिना "व्याश्रये तसु." इति । तत–अत्र पित्तस्—"किमद्व्यादिसर्वाद्यवैपुल्यबहो पित्तस्" ७।२।८९। इत्यनेनेति शेष । तत्र–तस्मिन्निति विग्रहे "सप्तम्या" ७।२।९४। इति । इह, क्व–अस्मिन्, कस्मिन् इति विग्रहे षष्ठ्यन्ताद्व्याश्रये गम्यमाने तसुप्रत्ययविधायक सूत्रमाह "क्व कुत्रा०" ७।२।९३। इत्यनेन । कदा—कस्मिन् काले इति विग्रहे, किम्शब्दात् कालेऽर्थे "किं यत्त०" ७।२।९५। इति दाप्रत्यये, "किम" २।१।४०। इति सूत्रेण कादेशे । एतर्हि, अधुना, इदानीम्–अस्मिन् काले इत्यर्थे निपातनानि "सदा०" ७।२।९६। इत्यनेन । सद्यः परेद्यवि–

परेद्यवि, पूर्वेद्युः, उभयद्युः, परुत्, परारि, ऐषमः, कर्हि, यथा, कथम्, पञ्चधा, एकधा, ऐकध्यम्, द्वैधम्, द्वेधा, पञ्चकृत्वः, द्विः, सकृत्, बहुधा, प्राक्, दक्षिणतः, पश्चात्, पुरः, पुरस्तात्, उपरि, उपरिष्टात्, दक्षिणा, दक्षिणाहि, दक्षिणेन, द्वितीया करोति क्षेत्रम्, शुक्लीकरोति, अग्निसात् संपद्यते, देवत्रा करोति; बहुशः । अघणिति किम् ? पथिद्वैधानि, संशयत्रैधानि । आशसः इति किम् ? पचतिरूपम् ॥ ३२ ॥

## विभक्तिथमन्ततसाद्याभाः ॥ १ । १ । ३३ ॥

विभक्त्यन्तप्रतिरूपकास्थमवसाना ये तसादयः प्रत्ययास्तदन्तप्रतिरूपकाश्च शब्दा अव्ययसञ्ज्ञा भवन्ति । अहंयुः, शुभंयुः, अस्तिक्षीरा ब्राह्मणी, कुतः, यथा, तथा; कथम् इति । अहम् शुभम् १, कृतम् पर्याप्तम् २, येन तेन चिरेण

---

समानेऽह्नि सद्य, परस्मिन्नहनि परेद्यवि इति विग्रहे, अह्निकालेऽर्थे "सद्यो०" ७।२।९७ इत्यनेन निपात्येते । **पूर्वेद्यु**—पूर्वस्मिन्नहनीति विग्रहे "पूर्वा०" ७।२।९८। इति सूत्रेण अहन्यर्थे एद्युस् । **उभयद्युः**—उभयस्मिन्नहनीति विग्रहे, "उभयाद्०" ७।२।९९। इति अहन्यर्थे द्युस् । **परुत्, परारि, ऐषमः**—एते "ऐषम ०" ७।२।१००। इति सूत्रेण संवत्सरेऽर्थे निपात्यन्ते, अस्मिन् संवत्सरे ऐषम, पूर्वे-परस्मिन् वा संवत्सरे परुत्, पूर्वतरे परतरे वा संवत्सरे परारि । **कर्हि**—कस्मिन्ननद्यतने कालेऽर्थे "अनद्यतने०" ७।२।१०१। इति र्हि, "किम ०" २।१।४०। इत्यनेन । **यथा**—येन प्रकारेणेति विग्रहे, "प्रकारे था" ७।२।१०२। इति सूत्रेण यथा । **कथम्**—केन प्रकारेणेति विग्रहे, "कथमित्थम्" ७।२।१०३। इति प्रकारार्थे निपातनम् । **पञ्चधा, एकधा**—पञ्चप्रकारैः एकेन प्रकारेण चेति विग्रहे, "संख्याया०" ७।२।१०४। इत्यनेन धा । **ऐकध्यम्**—एकेन प्रकारेणानेकमेकं करोति चेति विग्रहे, एकशब्दात् "वैकाद्०" ७।२।१०६। इत्यनेन प्रकारे विचाले चार्थे ध्यमञि "वृद्धिः स्वरेष्वा०" ७।४।१। इति वृद्धौ रूपम् । **द्वैधम्, द्वेधा**—द्वाभ्यां प्रकाराभ्याम् एकं राशिं द्वौ करोति चेति विग्रहे, द्विशब्दात् "द्वित्रेर्धे०" ७।२।१०७ इति प्रकारे विचाले चार्थे धमञि प्रत्यये वृद्धौ, एधाप्रत्यये "अवर्णे०" ७।४।६८। इति इकारलोप । **पञ्चकृत्वः**—पञ्चवारा अधीते इति विग्रहे, वारवति धात्वर्थे "वारे कृत्वस्" ७।२।१०९। इत्यनेन । **द्विः**—द्वौ वारा अस्य द्विर्भुङ्क्ते इत्यादि विग्रहे, "द्वित्रि०" ७।२।११०। इत्यनेन वारवति धात्वर्थे सुच् । **सकृत्**—एकवारं भुङ्क्ते इत्यादि विग्रहे, "एकात्०" ७।२।१११। इत्यनेन वारवति धात्वर्थे सुचि प्रत्यये सकृत् स् इति स्थिते, "क्रिया०" २।२।४१। इत्यनेन अमि परे पदत्वं, "अव्ययस्य०" ३।२।७। इति तल्लुपि, "पदस्य" २।१।८९। इत्यनेन सकृत् इति सिद्धम् । **बहुधा**—बहव आसन्ना वारा अस्य इति बहुधा रक्षति इति विग्रहे, "बहोर्धाऽऽसन्ने" ७।२।११२। इत्यनेन । **प्राक्**—प्राची दिग् रमणीया, प्राङ्देशः कालो वा रमणीयः प्राग्रमणीयम्, प्राच्या दिशः प्राचो देशात् कालाद्वा प्रागागतः, प्राच्या दिशि प्राचि देशे काले वा वसति इति विग्रहः, प्राञ्चशब्दात् "दिक्शब्दा०" ७।२।११३। इति धा प्रत्यये, "लुबञ्चे" ७।२।१२३। इत्यनेन लुपि च प्राक् । **दक्षिणतः**—दक्षिणा दिग्देशो वा रमणीयः दक्षिणतो रमणीयम्, दक्षिणत आगतो वसति वा इति विग्रहे, दक्षिणाशब्दात् "दक्षिणोत्तराच्चातस्" ७।२।११७ इति अतसि प्रत्यये अवर्णलोप । **पश्चात्**—विग्रहस्तु पूर्ववत्, अपरशब्दात् "अधरा०" ७।२।११८। इति आत् प्रत्यये, "पश्चो०" ७।२।१२४। इति पश्चादेशे च पश्चात् । **पुरः, पुरस्तात्**—विग्रहस्तु पूर्ववत्, पूर्वशब्दात् "पूर्वावरा०" ७।२।११५। इत्यनेन अस् अस्तात् च प्रत्यये, पुरादेशे च पुरः पुरस्तात् । **उपरि, उपरिष्टात्**—विग्रहस्तु पूर्ववत्, ऊर्ध्वशब्दात् "ऊर्ध्वा०" ७।२।११४। इति रि रिष्टात् चेति प्रत्यये उपादेशे च उपरि उपरिष्टात् । **दक्षिणा, दक्षिणाहि, दक्षिणेन**—दिग्देशकालरूपार्थे दक्षिणा-रमणीयम् दक्षिणा वसति, ग्रामाद्दूरा दक्षिणा दिग्देशो वा रमणीयः दक्षिणा दक्षिणाहि, अस्मात् दक्षिणा अदूरा दिक् रमणीया देशः कालो वा दक्षिणेनास्य रमणीयम् वसति वा इति विग्रहः । दक्षिणशब्दात् "वा दक्षिणात्०" ७।२।११९। इति आ प्रत्यये, "आहि दूरे" ७।२।१२०। इति आ आहिच प्रत्यये "अदूरे एनः" ७।२।१२२। एन प्रत्यये च क्रमेण सिध्यन्ति । **द्वितीया करोति क्षेत्रम्**—द्वितीयवारं करोति क्षेत्रम्-कृषति क्षेत्रमित्यर्थ, "तीयशम्ब०" ७।२।१३५। इति कृषिविषये डाचि अन्तलोपे च रूपम् । **शुक्लीकरोति**—न शुक्लं अशुक्लं शुक्लं करोतीति शुक्लीकरोतीति विग्रहः, प्रागशुक्लं शुक्लं करोतीत्यर्थं, शुक्लशब्दात् "कृभ्वस्तिभ्यां०" ७।२।१२६। इति प्रागतत्त्वे च्वि, "ईश्चाव०" ४।३।१११। इतीकारश्च । **अग्निसात् संपद्यते**—अस्याः सेनायाः सर्वं शस्त्रं अग्निसात्-अग्निस्वरूपेण भस्मीभूतं संपद्यते इत्यर्थः, अग्निशब्दात् "जाते सम्पदा च" ७।२।१३१। इत्यनेन । **देवत्राकरोति**—देवेऽधीनं देयं-द्रव्यं करोतीति विग्रहः, देवशब्दात् "देये त्रा च" ७।२।१३३। । **बहुशः**—ग्रामे बहव बहुशः वा ददातीति विग्रहः, बहुशब्दात् "बह्वल्पा०" इति प्शस् प्रत्यये बहुशः । इमे प्रत्ययास्तद्धितस्वार्थिकप्रकरणादवगन्तव्याः, तस्वादिशसन्तप्रत्ययान्तानामव्ययत्वेऽव्ययकार्यस्यादिलुबादिक विज्ञेयम् । तस्वादिषु घण् पर्युदस्तः स किमर्थं ? इत्याह—**अघणिति किम्** इति । **पथिद्वैधानि, संशयत्रैधानि**—द्वौ प्रकारौ येषामित्यर्थे द्विशब्दात् "तद्वति धण्" इति धणि वृद्धौ द्वैधं, त्रयः प्रकारा येषामित्यर्थे त्रिशब्दा "त्तद्वति धण्," इति धणि वृद्धौ त्रैधं, ततः पथो द्वैधानि पथिद्वैधानि, संशयस्य त्रैधानि संशयत्रैधानि, "षष्ठ्ययत्नाच्छेषे" ३।१।७६। इति समासे, "ऐकार्थ्ये" ३।२।८। इति षष्ठीलुपि भवतः, अत्रानेनाव्ययत्वे स्यादेर्लुप् "तृप्तार्थपूरणाव्यया०" ३।१।८५। इति षष्ठीसमासप्रतिषेधश्च स्यातामित्यघण् इति पर्युदासः । शस्पर्यन्ततसादय इति किम् ? इत्याह—**आशस इति किम् ?** । **पचति रूपम्**—प्रशस्तं पचतीति विग्रहः, "त्यादेश्च प्रशस्ते रूपप्" ७।३।१०। इत्यनेन ॥ ३२ ॥

विभक्त्यन्तप्रतिरूपकथमन्ततसादिप्रत्ययान्तप्रतिरूपकशब्दानामव्ययसंज्ञामाह—**विभक्तिथमन्ततसाद्याभाः** । तस् आदिर्येषान्ते तसादयः थमन्ते येषान्ते थमन्ताः, थमन्ताश्च ते तसादयश्च थमन्ततसादयः, विभक्तयश्च थमन्ततसादयश्च विभक्तिथमन्ततसादयः तेषामाभेवाभा येषान्ते तथा, इति बहुव्रीहिगर्भकर्मधारयगर्भद्वन्द्वगर्भबहुव्रीहि । अत्राव्ययमित्यनुवर्तते, विभक्तिथमन्ततसाद्याभा अव्ययमित्यन्वयः, तदन्तविधिरत्र पूर्ववद् बोध्या तदाह सूत्रार्थ—**विभक्त्यन्त** इत्यादि, **भवन्ति** इत्यन्तेन । **अहंयुः**—अहमस्यास्तीति "ऊर्णा०" ७।२।१७। इत्यनेन अहंयु इति विग्रहः, एवं शुभंयु । यदीदं विभक्तिप्रतिरूपकमव्ययं नाभविष्यत्तदा विभक्त्यन्तरानुत्पत्तौ सति "ऐकार्थ्ये" पूर्वविभक्तेर्लुपि मत्पुत्र इत्यादिवद्वैरूप्यमापत्स्यत । एवमेव**अस्तिक्षीरा** इति बोध्यम् । **कुतः** इत्यादयः तसादिप्रतिनिभाः । **अहम्** इति प्रथमैकवचनान्तप्रतिरूपकम्, **शुभादयस्त्रयो** द्वितीयान्तप्रतिरूपकाः, **येन** इत्यादयश्चत्वारस्तृतीयान्तसदृशाः, **ते** प्रभृतयश्चत्वारश्चतुर्थ्यन्त-

अन्तरेण ३, ते मे चिराय अह्नाय ४, चिरात् अकस्मात् ५, चिरस्य अन्योन्यस्य मम ६, एकपदे अग्रे प्रगे प्राह्णे हेतौ रात्रौ वेलायां मात्रायाम् ७; एते प्रथमादिविभक्त्यन्तप्रतिरूपकाः । अस्ति नास्ति असि अस्मि विद्यते भवति एहि ब्रूहि मन्ये शङ्के अस्तु भवतु पूर्यते स्यात् आस आह वर्तते नवर्तते याति नयाति पश्य पश्यत आदह आदङ्क आतङ्क इति तिवादिविभक्त्यन्तप्रतिरूपकाः ॥ ३३ ॥

## वत्तस्याम् ॥ १ । १ । ३४ ॥

वत्तसिआम्प्रत्ययान्तः शब्दोऽव्ययसञ्ज्ञो भवति । वत्तसिसाहचर्यादामिति तद्धितस्य "क्रियाद्येऽव्यया०" ॥ ७ । ३ । ८ ॥ इत्यादिना विहितस्यामो ग्रहणम् । मुनेरर्हं मुनिवद् वृत्तम्, "तस्यार्हे क्रियायां वत्" ॥ ७ । १ । ५१ ॥ इति वत् । क्षत्रिया इव क्षत्रियवद् युध्यन्ते, "स्यादेरिवे" ॥ ७ । १ । ५२ ॥ इति वत् । पीलुमूलेनैकदिक् पीलुमूलतो विद्योतते विद्युत्, "तसिः" ॥ ६ । ३ । २११ ॥ इति तसिः । उरसा एकदिक् उरस्तः, "यश्चोरसः" ॥ ६ । ३ । २१२ ॥ इति तसिः । आम्—उच्चैस्तराम् उच्चैस्तमाम् ॥ ३४ ॥

## क्त्वातुमम् ॥ १ । १ । ३५ ॥

क्त्वा तुम् अम् इत्येतत्प्रत्ययान्तं शब्दरूपमव्ययसञ्ज्ञं भवति । (क्त्वा-) कृत्वा, हृत्वा, प्रकृत्य; प्रहृत्य । तुम्—कर्तुम्, हर्तुम् । अमिति णम्—रुणमोरुत्सृष्टानुबन्धयोर्ग्रहणं, न द्वितीयैकवचनस्य, क्त्वातुम्साहचर्यात्, यावज्जीवमदात्, स्वादुकारं भुङ्क्ते ॥ ३५ ॥

## गतिः ॥ १ । १ । ३६ ॥

गतिसञ्ज्ञाः शब्दा अव्ययसंज्ञा भवन्ति । अदःकृत्य—अत्राव्ययत्वे "अतः कृकमिकंसकुम्भकुशाकर्णीपात्रेऽनव्ययस्य" ॥ २ । ३ । ५ ॥ इति सकारो न भवति ॥ ३६ ॥

## अप्रयोगीत् ॥ १ । १ । ३७ ॥

इह शास्त्रे उपदिश्यमानो वर्णस्तत्समुदायो वा यो लौकिके शब्दप्रयोगे न दृश्यते स एति—अपगच्छतीति इत्संज्ञो भवति । अप्रयोगित्वानुवादेनेत्सञ्ज्ञाविधानाच्चास्य प्रयोगाभावः सिद्धः, उपदेशस्तु—धातुनामप्रत्ययविकारागमेषु कार्यार्थः ।

प्रतिरूपका, **चिरादकस्मात्** इत्येतौ पञ्चम्यन्ततुल्यौ, **चिरस्य** इत्यादयस्त्रय षष्ठ्यन्तनिभा, **एकपदे** इत्यादयष्टौ सप्तम्यन्ताकृतय । तिवादिविभक्त्यन्तप्रतिरूपकानाह—**अस्ति** इत्यादिना ॥ ३३ ॥

वत्प्रत्ययान्तस्य, तस्प्रत्ययान्तस्य, आम्प्रत्ययान्तस्य चाव्ययसञ्ज्ञामाह—**वत्तस्याम्** । अत्राव्ययमित्यनुवर्तते, वत् च तसिश्च, आम् च इत्येषां समाहार वत्तस्याम् अव्ययमित्यन्वय, तदन्तविधि पूर्ववद्बोध्या, तदभिप्रायेणाह सूत्रार्थं—**वत्तस्याम्प्रत्ययान्त** इत्यादिना । नन्वत्राविशेषात् षष्ठीबहुवचनस्यामोऽपि ग्रहण प्राप्नोति, इष्यते च परोक्षास्थाननिष्पन्नस्य तद्धितस्य चाम इति शङ्कायां, 'सहचरितासहचरितयो सहचरितस्यैव ग्रहणमिति न्यायमाश्रित्य समाधत्ते—**वत्तसि साहचर्यात्** इत्यादि, **ग्रहणम्** इत्यन्तेन । **पीलुमूलेनैकदिक्** इति विग्रह —**पीलुमूलतो विद्योतते विद्युत्**—पीलुमूल यस्यां दिशि तस्यां विद्योतते विद्युदित्यर्थः ॥ ३४ ॥

क्त्वाप्रत्ययान्तस्य, तुम्प्रत्ययान्तस्य, अम्प्रत्ययान्तस्य चाव्ययसंज्ञामाह—**क्त्वातुमम्** । अत्राव्ययमित्यनुवर्तते, क्त्वा च तुम् च अम् चेत्येषां समाहारो द्वन्द्व, तदन्तविधि पूर्ववत् तदाह—**क्त्वा** इत्यादि, **भवन्ति** इत्यन्तेन । यथाक्रम तत्प्रत्ययान्तानुदाहरति—**कृत्वा** इत्यादिना । **प्रकृत्य, प्रहृत्य**—अत्राव्ययत्व स्थानिवद्भावेन बोध्यम् । ननु अमिति सामान्यनिर्देशात् स्यादित्यादिसंबन्धिनोरप्यमो कथ न ग्रहणमित्यत आह—**अमिति** इत्यादिना । **उत्सृष्टानुबन्धयोः**—उत्सृष्टस्त्यक्तोऽनुबन्धो ययोरिति विग्रह । **णम्रुणमोः** ग्रहणं अमित्यनेन, क्त्वातुम्साहचर्यान्न द्वितीयैकवचनस्याम ग्रहणमित्यन्वय । क्त्वातुम्साहचर्यं कृत्त्वेन बोध्यम् । **यावज्जीवमदात्**—"यावतो विन्दजीव" ५।४।५५। इत्यनेन णम् । **स्वादुंकारं भुङ्क्ते**—"स्वाद्वर्थाददीर्घाद्" ५।४।५३। इति रुणम्, "खित्यनव्य०" ३।२।१११। इति मागमेऽनुस्वारश्च ॥ ३५ ॥

गतिसञ्ज्ञकशब्दानामव्ययसंज्ञामाह—**गति** । अव्ययमित्यत्रानुवर्तते, गतिरव्ययमित्यन्वय । "अग्रहानु०" ३।१।५। इत्यनेन गतिसञ्ज्ञा भवति । अदस् पूर्वात् कृग त्वाप्रत्ययस्य यपादेशे, "ह्रस्वस्य त ०" ४।४।११३। इत्यनेन तागमे, अद कृत्य इति रूप, अद कृत्यैतत् करिष्यतीति—चिन्तयतीति भाव । अदःकृत्येत्यत्राव्ययसञ्ज्ञाया फलमाह—"**अतः कृकमि०**" इत्यादिना ॥ ३६ ॥

इत् सञ्ज्ञां निरूपयति—**अप्रयोगीत्** । युज्यते—सबध्यते इति योग, प्रकृष्टो योग सबन्ध प्रयोग, न प्रयोग अप्रयोगोऽस्यास्तीति अप्रयोगी, एतेन—यस्य शास्त्रोच्चारणे सबन्धोऽस्ति, लौकिकप्रयोगे च संबन्धाभावस्तस्य नञा निषेध क्रियते । '**सविशेषणौ हि विधिनिषेधौ विशेषणेन संबध्येते**' इति नियमात् सर्वथा यस्य सबन्धाभावस्तस्य तु सिद्ध एवेति नानेन निषेध , अथवा प्रयुज्यते कार्यमनेनेति प्रयोग शास्त्रम्, 'अल्पार्थे नञ्' अल्पत्व च शास्त्र एव य पठ्यते, लौकिकप्रयोगे तु न संबध्यते, तत्कार्यं दृष्ट्वानुमीयते एव केवलम् । नन्वेव सति कुतस्तथाभाव इति चेदुच्यते—कार्यार्थं पठितस्य निष्पन्ने कार्ये तस्य निवृत्ते, उपायस्य चोपेयसिद्धौ परित्यागात्, इत् इति सञ्ज्ञा अप्रयोगिण , तत एव च लोप सिद्ध , तदाह—**इह शास्त्रे** इत्यादिना, **भवति** इत्यन्तेन । ननु प्रमाणमन्तरेण वचनमात्रेणापगमाभावादपगमे यतितव्यमित्यत आह—**अप्रयोगित्वानुवादेन** इत्यादिना । अत्राप्रयोगिण सञ्ज्ञिनमनूद्य इत्सञ्ज्ञा विधीयते, इति संज्ञिनस्तस्य स्वभाव एव प्रयोगाभावरूप स्वत सिद्ध एवेति न प्रमाणान्तरापेक्षा, **चो**—हेतौ समुच्चये च, **अस्य**—अप्रयोगिण । यतोऽ**प्रयोगित्वानुवादेनेत्संज्ञाविधानं** ततोऽ**स्य प्रयोगाभाव सिद्ध** इत्यन्वय । इत् इत्यनेनैव प्रयोगाभावे सिद्धेऽप्रयोगिण पुन कथनेन सुतरा तस्य प्रयोगाभाव इति दार्ढ्यसूचनाय सूत्रे अप्रयोगी इति, एतेन प्रयोगाभावे इत् इति संज्ञाविधान अप्रयोगित्वानुवादश्चेति हेतुद्वय फलितमिति समुच्चयार्थं । अत्रेदमाकूतम्—एतेन पाणिनीयतन्त्रे—"उपदेशेऽजनुनासिक इत्" पा० १।३।२।, "हलन्त्यम्" पा० १।३।३।, "अदर्शन लोप " पा० १।१।६०।, "तस्य लोप " पा० १।३।९। इति सूत्रचतुष्टयलभ्यमर्थं एकेनैव सूत्रेण तदर्थलाभो भगवता वृत्तिकारेण सूचित इति दिक् । अनुबन्धरूपेत्संज्ञिकोपदेशविभागेनाह—**उपदेशस्तु**

१ शास्त्रे° ।

धातौ–एधि एधते, शीङ् शेते ङित्त्वादात्मनेपदम्। यजीं–यजते यजति, चिग्–चिनुते चिनोति, कण्डूग्–कण्डूयते कण्डूयति ईगित्त्वात् फलवत्यात्मनेपदम्। टुदुं–दवथुः, ट्वित्त्वादथुः। नाम्नि–चित्रङ् आश्चर्ये, चित्रीयते। माङ्–मा भवान् कार्षीत्, अत्र "माङ्यद्यतनी" ॥ ५ । ४ । ३९ ॥ प्रत्यये–भवति। विकारे–व्याख्यातासे व्याख्यातासि। आगमे–पपिथ। इत्प्रदेशाः "इङितः कर्तरि" ॥ ३ । ३ । २२ ॥ इत्यादयः ॥ ३७ ॥

## अनन्तः पञ्चम्याः प्रत्ययः ॥ १ । १ । ३८ ॥

पञ्चम्यर्थाद् विधीयमानः शब्दः प्रत्ययसंज्ञो भवति, अनन्तः–न चेदन्तशब्दोच्चारणेन विहितो भवति। "नाम्नः प्रथमैकद्विबहौ" ॥ २ । २ । ३१ ॥ वृक्षः, वृक्षौ, वृक्षाः। "स्त्रियां नृतोऽस्वस्रादेर्ङीः" ॥ २ । ४ । १ ॥ राज्ञी, कर्त्री। "आत्" ॥ २ । ४ । १८ ॥ खट्वा। "गुपौधूपविच्छिपणिपनेरायः" ॥ ३ । ४ । १ ॥ गोपायति, धूपायति। "ऋवर्ण-व्यञ्जनान्ताद् घ्यण्" ॥५।१।१७॥ कार्यम्, पाक्यम्। अनन्त इति किम्?–अन्तशब्दोच्चारणेन विहितस्यागमस्य मा भूत्, यथा "उदितः स्वरान्नोऽन्तः" ॥४।४।९८॥ इत्यादि। प्रत्ययप्रदेशाः–"प्रत्यये च" ॥१।३।२॥ इत्यादयः ॥३८॥

## डत्यतु संख्यावत् ॥ १ । १ । ३९ ॥

डतिप्रत्ययान्तमतुप्रत्ययान्तं च नाम संख्यावद्भवति, एकद्व्यादिका लोकप्रसिद्धा संख्या; तत्कार्यं भजत इत्यर्थः। (डति–)कतिभिः क्रीतः कतिकः, "संख्याडतेश्चाशत्तिष्टेः कः" ॥ ६ । ४ । १३० ॥ इति कः। कतिभिः प्रकारैः कतिधा, "संख्याया धा" ॥७ । २ । १०४॥ इति धा। कति वारा अस्य कतिकृत्वः, "वारे कृत्वस्" ॥७।२।१०९॥ इति कृत्वस्। एवं यतिकः, यतिधा, यतिकृत्वः। ततिकः, ततिधा, ततिकृत्वः। अतु–यावत्कः, यावद्धा, यावत्कृत्वः। तावत्कः, तावद्धा, तावत्कृत्वः। कियत्कः, कियद्धा, कियत्कृत्वः ॥ ३९ ॥

---

इत्यादिना। धातुविषयकानुबन्धफलमाह–**धातौ** इत्यादिना। **एधि, शीङ्** इत्यत्र "इङित कर्तरि" ३।३।२२। इत्यनेन इकारश्च ङकारश्च तयोरित्वादात्मनेपदस्य लाभ, तदाह—**इङित्त्वा** इत्यादिना। **यजीं** देवपूजायर्थे–अत्र अनुस्वारेत्करणे अनिट्फलम्, **चिग्**—चयने, चिंग्ट् इति म०भ०, **कण्डूग्** अत्र त्रिषु धातुषु "ईगित" ३।३।९५। इत्यनेन ईकारश्च गकारश्च तयोरीत्करणे फलवत्यात्मनेपदस्य लाभ, तदाह–**ईगित्वात्** इत्यादिना। **टुदुं**—उपतापेऽर्थे, अत्र "ट्वितोथु" ५।३।८३। इत्यनेन टित्करणेऽथु प्रत्यय स्यात्। **नाम्नि**—नामधातुप्रकरणोपदेशफलमाह—**चित्रङ्** इत्यादिना, **चित्रीयते**—चित्र करोति–नानात्वमालेख्य वा करोतीत्यर्थं, "नमो वरि०" ३।४।३७। इत्यनेनाश्चर्येऽर्थे क्यनि प्रत्यये ङित्वादात्मनेपदम्। अव्ययरूपनाम्न्युपदेशफलमाह—**माङ्** चादित्वादव्ययम्, अत्र ङिति माङि योगेऽद्यतनीप्रत्यय स्यादपि च "अड्धातो०" ४।४।२९। इत्यनेनाटो निषेधो माङ् योगे। प्रत्ययविषयकोपदेशफलमाह—**प्रत्यये–भवति,** अत्र 'भू सत्ताया' इति धातो "वर्तमाना०" ३।३।६। इत्यनेन तिविप्रत्यये, "एता शित" ३।३।१०। इत्यनेन शित्वात्, "कर्तयनद्भ्य शव्" इत्यनेन शितिप्रत्यये परे शव् तस्य वित्वात्, "शिदवित्" ४।३।२०। इत्यनेन ङित्वाभावे नामिनो गुणे कृते सति भवतीति रूप सिद्धम्, अत्रेद रहस्यम्—तिव् प्रत्ययस्य वित्वात् शित्त्वेन शव्, तस्य चाङित्वात् गुण इति प्रत्ययस्यानुबन्धफलम्। धात्वादेशरूपविकारस्य फलमाह—**विकारे** इत्यादिना। **व्याख्यातासे व्याख्यातासि**–अत्र वि–आ उपसर्गपूर्वकस्य 'चक्षिक् व्यक्तायां वाचि' इति धातो "श्वस्तनी०" ३।३।१४। इति द्वि० पु० एक० तासि तासे चाशितिप्रत्यये "चक्षो०" ४।४।४। इति क्शांग् ख्यांग् इत्यादेशौ भवत, तत व्याख्यातासे व्याख्यातासीति सिद्धम्, अत्रेद तत्त्वम्–धात्वादेशरूपविकारस्य 'ख्यांग्' इत्यादेशस्य अनुस्वारेत्करणे इड्भाव, गकारस्येत्करणे उभयपदस्य लाभ, तत पूर्वावस्थितस्य 'चक्षिक्' इत्यस्य स्थानिवद्भावेन नित्यात्मनेपदं न भवतीत्यर्थ। आगमोपदेशस्य लाभमाह—**आगमे—पपिथ,** अत्र 'पां पाने' इति धातो "परोक्षा०" ३।३।१२। इत्यनेन द्वि० पु० एकवचने थवि प्रत्यये, "सृजिदृशि०" ४।४।७८। इत्यनेनेडागमे, "इडेत्पुसि०" ४।३।९४। इत्यनेन पपिथेत्यत्र इडिदिकारस्यागमेनाकारस्य लोप। **इत्प्रदेशा**—पूर्ववद्व्याख्येयम् ॥ ३७ ॥

प्रत्ययसंज्ञाविधानमाह—**अनन्तः पञ्चम्याः प्रत्ययः**। पञ्चम्या प्रत्यय अनन्त इत्यन्वय। अत्र पञ्चमीति प्रत्ययवाची, स च प्रकृतिमन्यथानुपपत्त्याक्षिपति, सा चार्थे तस्माद्विधि इत्याह—**पञ्चम्यर्थाद्** इत्यादिना। प्रकृत्यर्थाद्विधीयमान प्रत्ययपदबोध्य इत्यर्थ। **शब्द** इत्यनेन वर्णस्तत्समुदायो वा कथ्यते। **अनन्त** इत्यस्यार्थमाह—**न चेदिति**। अन्तशब्दमुच्चार्य विधीयमान प्रत्ययसंज्ञा न लभते, अन्यथा प्रत्ययत्वं स्यात्, सति च प्रत्ययत्वे, तस्मात्प्रत्ययोत्पत्तिर्न स्यात्। प्रथमा ङी आप् आय घ्यण् इत्येषां प्रत्ययानां पञ्चम्यर्थात् विधीयमानत्वेन प्रत्ययत्व यथायथ बोध्यमिति हृदि निधाय वृत्तिकारो दृष्टान्तोपन्यासपूर्वक निर्दिशति—**"नाम्नः०"** इत्यादिना, **पाक्यम्** इत्यन्तेन। अनन्त इत्यस्य प्रयोजनमाह—**अनन्त इति किम्?**। यत्र योन्तशब्दमुच्चार्य विधीयते, तत्र तस्य प्रत्ययत्व न भवतीत्याह—**अन्तशब्दोच्चारणेन** इत्यादिना, **मा भूत्** इत्यन्तेन। उदाहरति—**यथा "उदितः०"** इत्यादिना। "ङ्णो कटावन्तौ०" १।३।१७। इत्यादि सूत्रसमुदाय आदिपदेन ग्राह्य। **प्रत्ययप्रदेशाः**—पूर्ववदेव व्याख्येयम् ॥ ३८ ॥

अतिदेशशास्त्रमाह—'वत्पदघटितमतिदेशशास्त्रमिति हि वचनम्' **डत्यतु संख्यावत्**। अत्र तदन्तविधि पूर्ववद्बोध्या तदाह—**डतिप्रत्ययान्त** इत्यादिना, **भवति** इत्यन्तेन। ननु का नामसंख्या? असति तज्ज्ञानेऽसंभव संख्यावद्भावस्य इत्याह—**एकद्व्यादिका** इत्यादिना। अयमर्थ—अनन्यलभ्यो हि शब्दार्थ इति लोकत एव संख्या संप्रत्यये, किमर्थमत्र तत्परिचय इति भाव। किम् शब्दात् "यत्तत्किम" ७।१।१५०। इत्यनेन संख्येये मेये डतिप्रत्यये कति, का संख्या मानमेषां इति विग्रह। कतिभि क्रीत इति विग्रहे कतिक। संख्यावद्भावे सति किमित्याह—**"संख्याडतेश्चा०"** ६।४।१३०। इति। डतिप्रत्ययान्तोदाहरणानि–कतिक इत्यादीनि। **अतु**इति अतुप्रत्ययान्तोदाहरणानि दर्शयति—**यावत्कः**, यद्शब्दात् "यत्तदेतदो०" ७।१।१४९। इत्यनेन मेये डावादिरतुप्रत्यय, शेषेषु यथायथम् ॥ ३९ ॥

## वहुगणं भेदे ॥ १ । १ । ४० ॥

वहु गण इत्येतौ शब्दौ भेदे वर्तमानौ सख्यावद्भवतः, भेदो नानात्वम्—एकत्वप्रतियोगि । वहुकः, वहुधा, वहुकृत्वः । गणकः, गणधा, गणकृत्वः । भेद इति किम्?—वैपुल्ये संघे च सख्याकार्यं मा भूत् । वहुगणौ न नियतावधिभेदाभिधायकाविति संख्याप्रसिद्धेरभावाद्वचनम्, अत एव भूर्यादिनिवृत्तिः ॥ ४० ॥

## कसमासेऽध्यर्द्धः ॥ १ । १ । ४१ ॥

अध्यर्द्धशब्दः कप्रत्यये समासे च विधातव्ये संख्यावद्भवति । अध्यर्द्धेन क्रीतम् अध्यर्धकम्, "संख्याडतेश्चाशत्तिष्टेः कः" ॥ ६ । ४ । १३० ॥ इति कः । अध्यर्धेन शूर्पेण क्रीतम् अध्यर्धशूर्पम्, अत्र सख्यापूर्वत्वेन द्विगुत्वे क्रीतार्थस्येकणः "अनाम्न्यद्विः प्लुप्" ॥ ६ । ४ । १४१ ॥ इति लुप् । कसमास इति किम्? धादिप्रत्ययविधौ न भवति ॥ ४१ ॥

## अर्द्धपूर्वपदः पूरणः ॥ १ । १ । ४२ ॥

समासावयवभूते पदे पूर्वपदमुत्तरपद चेति प्रसिद्धिः, अर्द्धपूर्वपदः पूरणप्रत्ययान्तः शब्दः कप्रत्यये समासे च विधातव्ये सख्यावद्भवति । अर्धपञ्चमकम्, अर्धपञ्चमशूर्पम् ॥ ४२ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां श्रीसिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनतत्त्वप्रकाशिकायां प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः ॥ १ ॥

**हरिरिव वलिवन्धकरस्त्रिशक्तियुक्तः पिनाकपाणिरिव ।**
**कमलाश्रयश्च विधिरिव जयति श्रीमूलराजनृपः ॥ १ ॥**

---

भेदवृत्तिवहुगणयो सख्यावद्भाव वदति—**वहुगण भेदे** । अत्र संख्यावदित्यनुवर्तते, भेदे वहुगणं संख्यावदित्यन्वय , तदर्थमाह—**वहुगण** इत्यादिना । भेदशब्दार्थमाह—**भेदो नानात्वमिति**, तदेव विवृणोति—**एकत्वप्रतियोगि**–एकत्व प्रतियोगि यस्य तत्, एकत्वस्य प्रतियोगि वा नानात्वम् । ननु वहुगणयो संख्यावाचकत्व लोकत एवेति सिद्ध किमर्थ संख्यावद्भाव इत्यत आह—**वहुगणौ न नियतावधि** इत्यादिना ॥ ४० ॥

अध्यर्धशब्द कदा सख्यावदित्यत आह—**कसमासेऽध्यर्धः** । अत्र सख्यावदित्यनुवर्तते, अध्यर्द्ध कसमासे सख्यावदित्यन्वय , तदर्थमाह—**अध्यर्द्धशब्द** इत्यादिना । समास उदाहरति—अध्यर्धशूर्पम्, अत्रानेन सख्यावद्भावे फलमाह—**अत्र संख्यापूर्वत्वेन** इत्यादिना । **धादिप्रत्यय**—अत्रादिपदेन कृत्वस् इति बोध्य ॥ ४१ ॥

अर्धपूर्वपदस्य पूरणप्रत्ययान्तस्य शब्दस्य सख्यावद्भावमाह—**अर्धपूर्वपदः पूरणः** । अत्र संख्यावदित्यनुवर्तते, 'कसमासे' इति च । पूर्वोत्तरपदयो संकेत ग्राहयति—**समासावयवभूते** इत्यादिना ॥ ४२ ॥

**इतिशब्द** पादस्य परिसमाप्त्यर्थ । **आचार्यस्य** पूर्वनिपात शास्त्रार्थोपदेष्टृत्वेन विशेषणतया आचार्यश्रीहरिभद्रवत् ।

सकीर्णविप्रकीर्णातिविस्तृतशब्दानुशासनसमूहसमभ्यासक्लेशदु खितसिद्धराजमहाराजाभ्यर्थनयारचितत्वेनास्मिन् तद्वशसमुत्पन्नमूलराजमहापुरुषादिपुरुषमभिष्टौति काव्यमुखेन—**हरिरिव** इत्यादिना । एव सर्वेष्वध्यायेषु प्रतिपादमुपवर्णन तद्वशस्य मनीषिभिरवधारणीयम् ।

श्रीमूलराजनृपस्य हरिहरब्रह्मभि साम्यमुपवर्णयति—**हरिरिव** इत्यादिना । **श्रीमूलराजनृप॰ जयति** क इव? **वलिवन्धकरः** हरिरिव, **त्रिशक्तियुक्तः पिनाकपाणिः इव, च कमलाश्रयः विधिः इव** इत्यन्वय । इमानि त्रीणि विशेषणानि मूलराजपक्षे समुपयोज्यानि । यथा विष्णुर्वामनरूपधारी, वलिनामकस्य पातालौकसो दैत्याधिराजस्य वन्धस्य कर तथायमपि मूलराज 'वलि करो भागधेय ' इति अ॰ चि॰ का॰ ३ श्लो॰ ४०९, वले —पशुवधरूपस्य राजप्राप्यभागस्य वा वन्धकर इति तयो साम्यम् । यथा पिनाकपाणि –महेश्वर त्रिशक्तियुक्त –तिसृभि शक्तिभिर्युक्त , हरिहरब्रह्मणामभेदेनैकस्यापि सृष्टिस्थितिप्रलयात्मकत्रिशक्तियुक्तत्व वोध्यम्, तथायमपि मूलराजमहीपति 'शक्तयस्तिस्र प्रभुत्वोत्साहमन्त्रजा' इति अ॰ चि॰ का॰ ३ श्लो॰ ३९९ । प्रभुमन्त्रोत्साहाख्यत्रिशक्तियुक्त इति तयो साम्यम् । यथा विधि –प्रजापति , कमलाश्रय –पद्माधिकरण , तथायमपि मूलराज राजलक्ष्मीरूपकमलाया आश्रय परमास्पदमिति तयो साम्यम्, तादृश मूलराज सर्वोत्कर्षेण वर्तते इत्यर्थ ॥ १ ॥

इति श्रीमत्तपागच्छगगनाहर्मणिगीतार्थसार्वभौमाऽऽगमोद्धारकशैलानाद्यपतिपरिपूजितपादारविन्दआगमोदयसमिति–वर्द्धमानजैनागममदिरायनेकशासनहितवर्धकसंस्थानिर्माणोपदेशकभट्टारककुलमूर्द्धन्यश्री **१००८ आनंदसागरसूरीश्वराणां** साम्राज्ये तच्चरणनिलीनमानसेनानयामराधनेकशासनहितवर्धकसंस्थानिर्माणोपदेशकभट्टारककुलमूर्द्धन्य श्रीवर्द्धमानतपोनिष्णातेन श्रीसिद्धचक्रानवपदपीयूषपानोद्यतभव्यभावभावोद्बोधसूर्योदयश्रीसिद्धचक्र–नवपदाराधकसमाजादिविविधसस्थासस्थापकेन श्रीवर्द्धमानतपोनिष्णातेन श्रीसिद्धचक्राराधन–तीर्थोद्धारकेण **पन्यासप्रवरश्रीचन्द्रसागरगणीन्द्रेण** विरचितायां श्रीसिद्धहेमचन्द्रसूत्रवृत्तिन्यासरत्नाकरावतारिकायामाऽऽनन्द**बोधिन्यां** प्रथमस्याध्यायस्य संज्ञाप्रकरण नाम प्रथम पाद ॥

॥ अर्हं ॥

## द्वितीयः पादः ॥

### समानानां तेन दीर्घः ॥ १ । २ । १ ॥

समानसंज्ञकानां वर्णानां तेन परेण समानेन सहितानां दीर्घो भवति, "आसन्नः" ॥ ७ । ४ । १२० ॥—दण्डाग्रम्, तवायुः, खट्वात्र, सागता, दधीदम्, दधीहते, नदीन्द्रः, नदीहते, मधूदकम्, मधूहनम्, वधूदरम्, वधूढा, पितृषभः, मातृकारः; क्लृकारः । समानानामिति किम्? वागत्र । तेनेति किम्? दधि शीतम् । बहुवचनं व्याप्त्यर्थम्, तेनोत्तरसूत्रेण ऋलृतोरपि ऋलृति ह्रस्वो भवति—क्लृऋषभः, होतृलृकारः; अन्यथा "ऋस्तयोः" ॥ १ । २ । ५ ॥ इति परत्वाद्दूरेव स्यात् ॥ १ ॥

### ऋलृति ह्रस्वो वा ॥ १ । २ । २ ॥

समानानामृकारे लृकारे च परे ह्रस्वो भवति वा—बालऋश्यः, बालर्श्यः; खट्वऋश्यः, खट्वर्श्यः; महऋषिः, महर्षिः; धूलिऋतुः, धूल्यृतुः; नदिऋच्छति, नद्यृच्छति; तनुऋजुता, तन्वृजुता; वधुऋणम्, वध्वृणम्; कर्तृऋषभः, कर्तृषभः; बालऌकारः, बालल्कारः; कन्यऌकारः, कन्यल्कारः इत्यादि । ह्रस्वकरणसामर्थ्यादेव कार्यान्तरं न भवति, अत एव ह्रस्वस्यापि ह्रस्वः क्रियते । समानानामित्येव? वृक्षावृच्छति । ऋलृतीति किम्? दण्डाग्रम्, कन्याया ऋकारः कन्यर्कारः । तकार उच्चारणार्थः । कश्चित्तु ह्रस्वत्वाभावपक्षे प्रकृतिभावमपीच्छति, तन्मते—खट्वाऋश्यः, नदीऋश्यः इत्याद्यपि भवति; प्रार्च्छतीत्यादौ तु परत्वादारेव भवति । "ह्रस्वोऽपदे वा" ॥ १ । २ । २२ ॥ इत्येव सिद्धे, अवर्णार्थं पदार्थं स्वार्थं च वचनम् ॥ २ ॥

### लृत लृ ऋलृभ्यां वा ॥ १ । २ । ३ ॥

लृतः स्थाने ऋता लृता च परेण सहितस्य यथासंख्यं ॠ लृ इत्येतावादेशौ वा भवतः—ॠ इति स्वरसमुदायो वा,

---

दीर्घविधिमाह—समामानां तेन दीर्घः । समानानामिति सबन्धे षष्ठी, स च सबन्ध अव्यवहितत्वरूप. । तेनेति "सहार्थे" २।२।४५। इति तृतीया पूर्वपरसमानयोरव्यवहितयोरेवैको दीर्घ, अजाक्षीरेण सहौषध पिबेदितिवद्भवति; एतेन दण्डस्याग्रम् दण्डाग्रमित्यत्र दकारोत्तरवर्तिनोऽकारस्य डकारोत्तरवर्तिनाकारेण सह दीर्घ कथं नेत्याशङ्का निरस्ता । ननु सूत्रे दीर्घ इत्युक्त्या समेऽपि आ ई ऊ इत्यादयो दीर्घा प्राप्नुवन्ति, इत्यत आह—आसन्न इति । आसन्नानासन्नप्रसङ्गे आसन्न एव दीर्घस्तेन दण्डाग्रम्—अत्र पूर्वस्य समानस्याकारस्य परेण समानेन सहितस्य स्थाने आसन्न एवाकारो दीर्घ । यथाक्रममुदाहरति—तवायुः इत्यादिना । 'समानस्य तेन' इति जातिनिर्देशेनैव सिद्धे कथं समानानामिति बहुवचनमित्यत आह—बहुवचनं व्याप्त्यर्थम्—व्याप्ति सबन्धस्तदर्थम्, उपस्थितत्वादुत्तरसूत्रस्य स्वविषये प्रवृत्तिर्यथा भवेदित्यर्थ । तेन—बहुवचनस्य व्याप्त्यर्थकत्वेन, उत्तरसूत्रेण—"ऋलृति ह्रस्वो वा" इत्यनेन, अन्यथा—बहुवचनस्य व्याप्त्यर्थकत्वाभावे क्लृ ऋषभ इत्यादौ "ऋलृति ह्रस्वो वा", "ऋस्तयो" इत्यनयोर्युगपत्प्राप्तौ परत्वाद्दूरेव स्यात् ॥ १ ॥

पाक्षिकह्रस्वविधिमाह—ऋलृति ह्रस्वो वा । अत्र समानानामित्यनुवर्तते । समानाना ऋलृति ह्रस्व वा इत्यन्वय, तदर्थमाह—समानानाम्—इत्यादिना । बालऋश्यः—( मृगजाति ) अत्र समानाकारस्य ऋकाराव्यवहितपूर्वस्य स्थाने ऋकारे परे आसन्नो ह्रस्वो विकल्पेन भवतीति समन्वय, एवमन्यत्रापि । ननु कन्या लृकार इत्यादावनेन ह्रस्वत्वे सति कथ न "अवर्णस्येवर्णादि०" सूत्रे अलादिक भवतीत्यत आह—ह्रस्वकरणसामर्थ्यादेव इति । यदि दीर्घस्थाननिष्पन्नस्य ह्रस्वस्य कार्यान्तरं भवेत्तर्हि कोऽर्थोऽनेन ह्रस्वविधानेनेति तदेव बोधयति यत् विधानसामर्थ्यात् कार्यान्तराभाव इति व्यर्थीभूय वाक्यान्तरकल्पना, ज्ञापनफलमाह—अत एव इति, स्वांशे चारितार्थ्यं स्पष्टमेव । ऋलृतीत्यत्र तकार. किमर्थं इत्यत आह—तकार उच्चारणार्थ इति । दुर्गसिंहन्यासकृतोर्मतमाह—कश्चित्तु इति । क्षीरस्वामिन्यासकृन्मत शेखरे "इकोऽसवर्णे०" पा० ६।१।१२७। सूत्रे द्रष्टव्यम्, तन्मते रूपत्रय बोध्यम् । ननु प्रार्च्छतीत्यत्र "ऋलृति ह्रस्वो वा" इत्यनेन कथ न ह्रस्व इत्यत आह—प्रार्च्छतीत्यादौ इति । नन्विद कथमारभ्यते "ह्रस्वोऽपदेवा" इत्यनेन ह्रस्वत्वमिति चेत् तस्मादस्य विषयभेद निर्दिशति—"ह्रस्वोऽपदे वा" इत्येव इत्यादिना । "ऋलृति ह्रस्वो वा" इति सूत्र अवर्णार्थं पदार्थं स्वार्थं च । "ह्रस्वोऽपदे वा" १।२।२२। इति तु "इवर्णादेरस्वे०" १।२।२१। इत्यनुवृत्त्या—इवर्णाद्यर्थं, अपदार्थं, अस्वार्थं च इति स्पष्ट एवानयोर्विषयभेद इति संक्षेपः ॥ २ ॥

लृकारस्य स्थाने 'ऋकारेण सहितस्य ॠ' लृकारेण सहितस्य च लृ इति विधेय वर्णद्वय विदधाति—लृत लृ ऋलृभ्यां वा इति, तदेवाह—लृतः स्थाने इत्यादिना । अनेन विधीयमानस्य वर्णद्वयस्यान्यमतप्रदर्शनपूर्वकं परिचयमाह—ॠ इति स्वरसमुदायो वा इत्यादिना । इद स्वमत शाकटायनसमतमपि "ऋक्षोस्साच" शा० १।१।७६। इति सूत्रे अमोघावृत्तौ—पृ० २० । वर्णान्तरत्वे

स्वरव्यञ्जनसमुदायो वा; वर्णान्तरं वा[1] । तदपीषत्स्पृष्टकरणं द्विरेफतुरीयमध्यर्धस्वरमात्रमित्येके, संवृततरं सकलरेफकारमर्धमात्रस्वरभक्तिकमित्यन्ये; द्विरेफश्रुतिकमध्यर्द्धस्वरमात्रमित्यपरे । एवं ऌ इत्यपि । ऋता–ऋृकारः, पक्षे–पूर्वेण ह्रस्व, उत्तरेण ऋकारश्च–ऋृऋकारः, कृकारः । ऌता–क्लृकारः, पक्षे-दीर्घत्वं ह्रस्वत्वं च–क्लॄकारः, क्ऌलकारः । लृवर्णस्य स्थानित्वमिच्छन्त्येके ॥ ३ ॥

## ऋतो वा तौ च ॥ १ । २ । ४ ॥

ऋकारस्य स्थाने ऋता ऌता च परेण सहितस्य यथासंख्य ॠऌ इत्येतावादेशौ वा भवतः । 'तौ च'–ऋकारऌकारौ ऋता ऌता च सह ऋकारस्य वा भवतः । ऋता–पितॄषभः, पक्षे–पितृषभः; पितृऋषभः । ऌता–होतॢकारः, पक्षे–होतॄकारः; होतृ ऌकारः । तौ च–पितृषभः, होतॢकारः; पक्षे यथाप्राप्तम् । अत्रापि ऋवर्णस्य स्थानित्वमिच्छन्त्येके ॥ ४ ॥

## ॠस्तयोः ॥ १ । २ । ५ ॥

'तयोः' पूर्वस्थानिनोर्लृकारऋकारयोः स्थाने यथासंख्यमृता ऌता च परेण सहितयोर्ऋकारो द्विमात्र आदेशो भवति । कृपभः, होतॄकारः ॥ ५ ॥

---

मतभेदानाह—तदपीषत्स्पृष्टकरणं द्विरेफतुरीयं अध्यर्धस्वरमात्रम् इत्येके–प्राच , अस्य विधेयस्य वर्णद्वयस्य पादोन मात्राद्वय बोध्यमित्याशय । ईषत्स्पृष्ट करणमस्येति ईषत्स्पृष्टकरण, रेफस्य तुरीयौ रेफतुरीयौ द्वौ रेफतुरीयौ अस्मिन्निति द्विरेफतुरीय, अधिकमर्धं यस्या सा अध्यर्धा स्वरस्य मात्रा स्वरमात्रा अध्यर्धा स्वरमात्रा अस्मिन्निति अध्यर्धस्वरमात्रमिति त्रीणि विशेषणानि विधीयमानस्यास्य बोध्यानि । संवृततर–प्रयत्न, सकलरेफकारम्—सकल –परिपूर्ण रेफ ऋकारश्चात्र तत्तथा, अर्धमात्रस्वरभक्तिकम्—अर्ध मात्रा यस्या सा अर्धमात्रा स्वरस्य भक्ति स्वरभक्ति यस्य तत्तथा, अर्धमात्रस्वरभक्तिकमिद वर्णद्वय विधेय मन्वते अन्ये–प्राच । रेफस्य श्रुति रेफश्रुति , द्वे रेफश्रुती यत्र तत्तथा–'द्विरेफश्रुतिकम्, अध्यर्धा स्वरमात्रा अस्मिन्निति–अध्यर्धस्वरमात्रमित्यपरे—शेषाहिपादा । मतानीमानि महाभाष्ये शाकटायने च दृश्यन्ते, "तुल्यास्य०" इति सूत्रे पा०१।१।९। ऋृकारः–ऋृ ऋकार इत्यत्रानेन ऌकारस्य ऋकारेण सहितस्य स्थाने ॠ इत्यादेश , पक्षे–तदभावे पूर्वेण–"ऋऌती"त्यनेन, उत्तरेण–"ॠस्तयो" इत्यनेन । क्ऌकारः—ऌ ऌकार इत्यत्र ऌकारस्य ऌकारेण सहितस्य स्थाने ऌकारो भवति । पक्षे—तदभावे, दीर्घत्वं—"समानानां तेन दीर्घ" इत्यनेन, ह्रस्वत्वं–"ऋऌती"त्यनेन । अत्र प्राच.-ऌत इति विहाय लृवर्णस्य स्थानितया निर्देश कुर्वन्ति, तथा सति 'वर्णग्रहणे जातिग्रहणमि'ति सर्वविधऌकारग्रहण बोध्यम्, तदेवाह—लृवर्णस्य स्थानित्वमिच्छन्त्येके ॥ ३ ॥

ऋकारस्य परेण ऋकारेण सहितस्य स्थाने ॠ परेण ऌकारेण सहितस्य च ॡ इति वर्णद्वय विदधाति—ऋतो वा तौ च इति । अत्र पूर्व सम्पूर्ण सूत्रमनुवर्तते ऌत इति स्थानिन विहाय वेति च । अशद्वयमत्र—ऋतो वा इत्येकोंऽश , तौ च इत्यपरस्तत्र पूर्वस्मादृत इति, ऋऌभ्यामिति वेति चाभिसंबध्यते । ऋत ॠऌ ऋऌभ्यां वा इति, ऋत तौ ऋऌभ्यां वा इति चान्वय । उभयोरंशयोरर्थमाह—ऋकारस्य स्थाने इत्यादिना । अपरांशे—तौ इत्यनेन स्थानितया प्रसिद्धावेव ऋकारऌकारौ विधेयतया गृह्येते । पितृ ऋषभः—अत्र परस्थितऋकारेण सहितस्य ऋकारस्य स्थाने ॠ इत्यादेशो विकल्पेन भवति—पितॄषभः, पक्षे "समानानां तेन दीर्घ" इत्यनेन दीर्घे-पितॄषभः, "ऋऌति ह्रस्वो वा" इत्यनेन ह्रस्वत्वे-पितृऋषभ इति । एवमन्यत्रापि । पितृ ऋषभ इत्यत्र तौ चेत्यनेन ऋकारस्य परेण ऋकारेण सहितस्य स्थाने ऋ इत्यादेशे पितृषभ इति । एवमन्यत्रापि । केचन मूले ऋत इति विहाय ऋवर्णस्य स्थानितया निर्देश कुर्वन्ति, तथा सति 'वर्णग्रहणे जातिग्रहणमि'ति सर्वविधऋकारग्रहण बोध्यम्, तदेवाह—अत्रापि इत्यादिना ॥ ४ ॥

ॠस्तयोः—अत्र ऋऌभ्या इत्यनुवर्तते, तयोरिति पूर्वसूत्रयोरुपात्तयो स्थानिनोर्ग्रहणम्, ऌत इति ऋत इति च, तयो ऋऌभ्या ॠ इत्यन्वय , तदेवाह-तयोः पूर्वस्थानिनोरिति । "ऌत०" १।२।३। इति "ऋत०" १।२।४। इति सूत्रयो स्थानितया निर्दिष्टयोरित्यर्थस्तदाह—लृकारऋकारयोः इत्यादिना । ऌकारस्य परस्थितऋकारेण सहितस्य स्थाने ॠ, ऋकारस्य परस्थितऌकारेण सहितस्य स्थाने ॠ इत्यर्थ । कृपभः—ऌ ऋषभ इत्यत्रानेन ऌकारस्य परेण ऋता सह ॠ इत्यादेश । होतॄकारः—होतृ ऌकार इत्यत्रानेन ऋकारस्य परेण ऌता सह ॠ इत्यादेश । नन्विद किमर्थं ऌ ऋषभ इत्यादौ ऌऋतो स्वत्वेन द्विमात्रऋकार "समानाना तेन दीर्घ" इत्यनेन सेत्स्यति इति चेदुच्यते-"समानानां तेन०" इति द्वयो षष्ठीतृतीयानिर्दिष्टयो स्थानित्वमिति ऋकारस्यैव स्थानित्वे नियामकाभावेन पूर्वं परं वा ऌकाररूप स्थानिनमाश्रित्य दीर्घे क्रियमाणे ॡकारोऽपि स्यादिति ॠकार एव स्यादित्येतदर्थमस्यारम्भात् ॥ ५ ॥

अत्र प्रकरणे ऋकारस्य ऋकारे दीर्घत्वात् पितॄषभ , ह्रस्वत्वात् पितृऋषभ , "ऋतो वा तौ च" इत्यनेन ॠ ऋ इत्यादेशद्वयात् पितॄषभ , पितृषभ इति रूपचतुष्टय सिद्धम् ॥ १ ॥ ऌकारस्य ऌकारे दीर्घत्वात् क्ॡकार , ह्रस्वत्वात् क्ऌ ऌकार , "ऌत ॠऌ ऋऌभ्या" वा इति ॡसद्भावात् क्ॡकार इति रूपत्रय सिद्धम् ॥२॥ ऋकारस्य ऋकारे, ऌकारस्य ऌकारे च दीर्घत्वह्रस्वत्वमतान्तरप्रकृतिवद्भावैस्त्रीणि त्रीणि रूपाणि ॥३॥४॥ ऋकारस्य ऌकारे "ऋऌति" इति ह्रस्वत्वात् विकल्पपक्षे मतान्तरेण प्रकृतिवद्भावात् "ऋतो वा तौ च" इत्यत्र मतान्तरेण ऋवर्णस्थानित्वात् ॠ ऋ इत्यादेशद्वयात् "ॠस्तयो" इति ॠविधानाच्च रूपपञ्चकम् ॥ ५ ॥ एव ऌकारस्य ऋकारे "ऋऌति" इति ह्रस्वत्वात् विकल्पपक्षे मतान्तरेण प्रकृतिवद्भावात् ऌत ॠ इति ॠभावात् ॠस्तयोरिति ॠभावाच्च रूपचतुष्टयम् ॥ ६ ॥ तथा ऋकारस्य ऌकारे "ऋऌति०" इति ह्रस्वत्वात् "ऋतो वा तौ च" इत्यनेन ॠ ऋ इत्यादेशद्वयात् "ॠस्तयो" इति ॠविधानाच्च रूपचतुष्टयम् ॥ ७ ॥ तथा ऌकारस्य ऋकारे ऋऌति० इति ह्रस्वत्वात् ऌत ॠ इति ॠविधानात् "ॠस्तयो" इति ॠविधानाच्च रूपत्रयम् ॥ ८ ॥ एवमष्टभिर्विकल्पैः रूपाण्येकोनत्रिंशत् ॥

---

[1] वर्णान्तरमपि पु० ।

## अवर्णस्येवर्णादिनैदोदरल् ॥ १ । २ । ६ ॥

अवर्णस्य स्थाने इवर्णउवर्णऋवर्णलृवर्णैः परैः सहितस्य यथासंख्यमेत् ओत् अर् अल् इत्येते आदेशा भवन्ति । देवेन्द्रः, तवेहा, मालेयम्, सेक्षते, तवोदकम्, तवोढा, गङ्गोदकम्; सोढा । वृक्ष इन्द्र, त इन्द्रमित्यादौ च ङौ जस् इकारे चैकपदाश्रयत्वेनान्तरङ्गमेत्वमेव भवति, न तु परपदाश्रितं बहिरङ्गमिकारस्य दीर्घत्वम् । परमर्षिः, तवकारः, महर्षिः, सर्कारेण, तवल्कारः; सल्कारेण । त्रिमात्रादेरपि स्थानिनः स्थाने द्विमात्रावेवैदोतौ भवतः, सूत्रे तयोरेव विवक्षितत्वात् । अवर्णस्येति किम्? दधीदम्, मधूदकम्, पितृषभः; क्लृकारः । इवर्णादिनेति किम्? दण्डाग्रम् ॥ ६ ॥

## ऋणे प्रदशार्णवसनकम्बलवत्सरवत्सतरस्यार् ॥ १ । २ । ७ ॥

प्रादीनामवर्णस्य ऋणशब्दे परे परेण ऋकारेण सहितस्यारित्ययमादेशो भवति । अरोऽपवादः । प्रगतमृणं प्रार्णम्, दशानामृण दशार्णम्, दश ऋणान्यस्य दशार्णः क्षत्रियः, दश ऋणानि जलदुर्गाण्यस्यां दशार्णा नदी, ऋणस्यावयवतया

तथा हि—

| | | | | | | |
|---|---|---|---|---|---|---|
| ऋकारस्य ऋकारे | समानाना० | ऋलृति० | ऋतो वा (वर्णान्तरं) | तौ च | | उदा० |
| पितृ ऋषभ | पितृषभ | पितृऋषभ. | पितृषभ | पितृषभ | | ४ |
| लृकारस्य लृकारे | | | लृत वृलृ० (वर्णान्तरं) | | | |
| क्लृ लृकार | क्लृकार | क्लृ लृकार | क्लृकार | | | ३ |
| ऋकारस्य ऋकारे | | | मतान्तर प्रकृ० | | | |
| कृ ऋकार | कृकार | कृ ऋकार. | कृ ऋकार. | | | ३ |
| लृकारस्य लृकारे | | | मतान्तर प्रकृ० | | | |
| क्लृ लृकार. | क्लृकार | क्लृ लृकार. | क्लृ लृकार | | | ३ |
| ऋकारस्य लृकारे | ऋलृति० | मतान्तरप्रकृ० | ऋतो वा (मतान्तरेण ऋवर्ण०स्था०) | तौ च | ऋस्तयो. | ५ |
| कृ लृकार | कृ लृकार | कृ लृकार | क्लृकार | क्लृकार. | कृकार. | |
| लृकारस्य ऋकारे | | | लृत वृ लृ० (मतान्तरेण लवर्ण०स्था०) | | | ४ |
| क्लृ ऋकार | क्लृ ऋकार | क्लृ ऋकारः | कृकार | | कृकारः | |
| ऋकारस्य लृकारे | | ऋतो वा(वर्णान्तरं) | तौ च | | | |
| कृ लृकार | कृ लृकार | क्लृकार. | क्लृकार. | | कृकार. | ४ |
| लृकारस्य ऋकारे | | लृत वृलृ० (वर्णान्तरं) | | | | |
| क्लृ ऋकार | क्लृ ऋकार | कृकार | | | कृकारः | ३ |
| | | | | | | २९ |

"समानानाम्०", "ऋलृति०", "लृत ऋलृ०", "ऋतो वा तौ च०", "ऋस्तयो ०", कश्चित्तु ह्रस्वत्वाभावपक्षे०, ऋवर्णस्यापि स्थानित्वमते०, लृवर्णस्यापि स्थानित्वमते० चेमानि रूपाणि यथायथ बोध्यानि ।

**अवर्णस्येवर्णादिनै०** इति । अवर्णस्य परेण इवर्णेन सह एत्, अवर्णस्य परेण उवर्णेन सह ओत्, अवर्णस्य परेण ऋवर्णेन सह अर्, अवर्णस्य परेण लृवर्णेन सह अल् इत्यन्वय । **देवेन्द्रः**–देव इन्द्र इति स्थिते अत्रावर्णस्य परेण इवर्णेन सहितस्य स्थाने एत्वम् । एवमन्यत्रापि । वाक्यसंस्कारपक्षे—वृक्ष इ इन्द इत्यत्र ङौ, त इ इन्द्रमित्यत्र च जस इकारे "समानानाम्" इति दीर्घे "अवर्णस्येवर्णादिना०" इति अवर्णस्ये-वर्णेन सह एत्व च प्राप्नोतीति, 'असिद्ध बहिरङ्गमन्तरङ्गे' इति न्यायेनैत्वमेवेति समाधत्ते—**वृक्ष इन्द्रं, त इन्द्रमित्यादौ चेति । एकपदा-श्रयत्वेनेति**–हेतुरयमेत्वस्यान्तरङ्गत्वे । **परपदाश्रितं** इति–दीर्घस्य बहिरङ्गत्वे निमित्तम् । अन्यत्सर्वं स्पष्टम् । ननु रमा इन्द्र, खट्वा ईश इत्यादौ त्रिमात्रचतुर्मात्राणा स्थानिनां कथ द्विमात्रावेदोतावित्यत आह—**त्रिमात्रादेरपीत्यादिना** । यदाह–श्रीशेषभट्टारक "एओङ्ऐऔच्" पा० १।१।४। सूत्रे कस्मादेवान्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति? इत्याशङ्क्य तपरे गुणवृद्धी इति समाहितवान् ॥ ६ ॥

**ऋणे प्रदशार्ण०** इति । अत्र अवर्णस्येत्यनुवर्तते । तत्र प्रादीनामवयवावयविभावेनान्वयस्तदाह—**प्रादीनामवर्णस्य** इति । स्पष्टो-ऽन्वयार्थ । ननु प्र ऋणमित्यादौ "अवर्णस्येवर्णादिना" इति अर् कथम्न भवतीत्याह—**अरोऽपवाद** इति, निरवकाशत्वादपवादत्वं बोध्यम् । यथेद सूत्रमपवादत्वादरो बाधक तथा ह्रस्व प्रबाधते न वा? इत्यत आह–**समानानामित्यादि** । **उक्तत्वात्**—"समानानां तेन दीर्घ" इति सूत्रे तत्त्वप्रकाशिकायामिति शेष । **इह**–एतत्सूत्रविषये, **उत्तरत्र**–"ऋते तृतीयासमासे" इति सूत्रविषये च भाष्यविशेषचिन्तापक्षाश्रयणम् । **ह्रस्वः**–

१ परे × ऋकारेण पु०, ख० ता० ।

संवन्धि ऋणमृणार्णम्, वसनानामृणं वसनार्णम्, एवं कम्बलार्णम्, वत्सरार्णम्; वत्सतरार्णम् । समानानामिति बहुवचनस्य व्याप्त्यर्थत्वेनोक्तत्वादिहोत्तरत्र च ह्रस्वोऽपि भवति—प्रऋणम्, दशऋणमित्यादि । वत्सरशब्दस्यारं नेच्छन्त्येके ॥७॥

## ऋते तृतीयासमासे ॥ १ । २ । ८ ॥

ऋतशब्दे परे यदवर्णं तस्य स्थाने परेण ऋकारेण सहितस्यारित्ययमादेशो भवति, तौ चेन्निमित्तनिमित्तिनावेकत्र तृतीयासमासे भवतः । शीतेन ऋतः शीतार्तः, दुःखेन ऋतः दुःखार्तः; ह्रस्वोऽपि भवति—शीतऋतः, दुःखऋतः । ऋत इति किम्? सुखेतः, दुःखेतः । तृतीयाग्रहणं किम्? परमर्तः । समास इति किम्? दुःखेनर्तः—दुःखेन ऋतः । 'ऋतेन कृतः ऋतकृतः, परमश्चासौ ऋतकृतश्च परमर्तकृतः' इत्यत्र तु निमित्तनिमित्तिनौ नैकत्र तृतीयासमास इति न भवति । अवर्णस्येत्येव? पितृतः । कथं 'क्षुधार्तः सन् शालीन् कवलयति मांस्पाकवलितान्', क्षुध्शब्दस्य हि व्यञ्जनान्तत्वात् क्षुदृत इति प्राप्नोति? नैवम्, आङ्पूर्वे ऋते तृतीयान्तस्यासमस्तस्यायं प्रयोगः, आ ऋत इति उत्तरेणार् आर्तः; ततः क्षुधेत्यनेन संवन्धः । यस्य तु व्यञ्जनान्तादप्याप्, तन्मते क्षुधया ऋत इति समस्तप्रयोग एवायम् ॥ ८ ॥

## ऋत्यारुपसर्गस्य ॥ १ । २ । ९ ॥

उपसर्गसंवन्धिनोऽवर्णस्य स्थाने ऋकारादौ धातौ परे परेण ऋकारेण सहितस्यारादेशो भवति । सर्वापवादः । प्रार्च्छति, परार्च्छति, प्रार्घ्नोति; परार्घ्नोति । ऋतीति किम्? उपेतः । उपसर्गस्येति किम्? इहर्च्छति, इहऋच्छति । येन धातुना युक्ताः प्रादयस्तं प्रत्युपसर्गसंज्ञाः, तेनेह न भवति—प्रगता ऋच्छका अस्मात् प्रर्च्छको देशः, एवं प्रर्षभ, प्रर्श्यवनम् । आरिति वर्तमाने पुनरार्ग्रहणमारेव यथा स्यादित्येवमर्थम्, तेनेहोत्तरयोश्च ह्रस्वत्व बाध्यते ॥ ९ ॥

## नाम्नि वा ॥ १ । २ । १० ॥

उपसर्गसंवन्धिनोऽवर्णस्य स्थाने ऋकारादौ 'नाम्नि'—नामावयवे धातौ परे परेण ऋकारेण सहितस्यारादेशो वा भवति । प्रार्षभीयति, प्रर्षभीयति । केचित्तु पक्षे ह्रस्वत्वमपि मन्यन्ते—प्रऋषभीयति । उपसर्गस्येत्येव? इहर्षभीयति । ऋतीत्येव? उपोष्ट्रीयति । ऋकारमिच्छति उपर्कारीयति ॥ १० ॥

---

"ऋलृति॰" इत्यनेनेति शेष । **वत्सरशब्दस्यार नेच्छन्त्येके**—पाणिनिशाकटायनदेवनन्द्यादय, "प्रवत्सतरकम्बलवसनार्णदशानामृणे" "एत्येधत्यूठ्सु" पा॰ ६।१।८९। इति सूत्रे वार्तिकम्, "प्रदशार्णवसनकम्बलवत्सतरस्यर्णे" शा॰ १।१।९०। इति शाकटायनः ॥ ७ ॥

**ऋते तृतीयासमासे** । अत्रावर्णस्येत्यनुवर्तते आर् इति च, तत्र **ऋते** इति वैयधिकरण्येन विशेषणम्, ऋते अवर्णस्य आर् तृतीयासमासे इत्यन्वय ; तदर्थमाह—**ऋतशब्दपरे** इत्यादिना । स्थानिनिमित्तयोरुभयो स्थितिस्तृतीयासमासेऽपेक्ष्यते नत्वेकतरस्येत्याह—**तृतीयासमासे** इत्यस्यार्थ—**तौ चेदिति** । **शीतार्त्तः**—अत्र ऋतशब्दाव्यवहितपूर्वस्य अवर्णस्य आर् ऋकारेण सहितस्य स्थाने भवति, स्थानिनिमित्तयोस्तृतीयासमासवृत्तित्व स्पष्टमेव । एवमन्यत्रापि । ह्रस्वः—"ऋलृति॰" इत्यनेन । **दुःखेनर्तः**—अत्र समासो न । **परमर्तकृत** इत्यत्र तृतीयातत्पुरुषसमासानन्तरं कर्मधारये निमित्तस्य तृतीयासमासे वर्तमानत्वेऽपि निमित्तिनस्तत्राभावान्न भवत्यार्, तदेवाह—**परमर्तकृतः इत्यत्र तु** इत्यादि, **न भवति** इत्यन्तेन । **पितृत**—अत्र ऋतशब्दाव्यवहितपूर्वोऽवर्णो नास्त्यतो न भवत्यार् । "तृषा शुष्यत्यास्ये पिवति सलिल स्वादु सुरभि, क्षुधार्त सन् शालीन् कवलयति मांस्पाकवलितान् । प्रदीप्ते रागाग्नौ घननिविडमाश्लिष्यति वधूं, प्रतीकारे व्याधे सुखमिति विपर्यस्यति जन ॥" इद पद्य बुद्धिमद्भिस्तु मृग्यम्, शिखरिणीवृत्तमिदम् । अस्मिन्पद्ये क्षुधार्त इत्यत्र ऋतशब्दाव्यवहितपूर्वस्यावर्णस्याभावादार् कथ भवति? इत्याशङ्कते—**कथं** इत्यादिना, **प्राप्नोति** इत्यन्तेन । समाधत्ते—**नैवम्** इत्यादिना, **संवन्ध** इत्यन्तेन । मतान्तरेण समाधानमाह—**यस्य तु व्यञ्जनान्तादप्याप्** इत्यादिना । इद भागुरिमतम्—"वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः । आप चैव हलन्तानां यथा वाचा निशा दिशा ॥" इद वार्तिकम्, सि॰ कौ॰ अव्ययप्रकरणे । भागुरि –व्यञ्जनान्तादापमिच्छति तस्य मते क्षुधार्त्त इति अनेनार् भवत्येव ॥ ८ ॥

**ऋत्यारुपसर्गस्य** । अत्रावर्णस्य आर् इति चानुवर्तते । उपसर्गस्येत्यनेन धातुरित्याक्षिप्यते उपसर्गत्वान्यथानुपपत्त्या, तत्र धातौ ऋति इति विशेषण, तथा सति "सप्तम्या आदि"रित्यादिपदोपस्थित्या ऋकारादौ धातावित्यर्थलाभ । अवर्णस्येत्यत्र उपसर्गस्येत्यस्यान्वयोवयवद्वारा, उपसर्गस्यावर्णस्य ऋकारादौ धातौ आर् इत्यन्वय , तदर्थमाह—**उपसर्गसंवन्धिन** इत्यादिना । अनेन स्वविषये यद्यत्प्राप्त तत्सर्वं वाध्यते, इति बाध्यसामान्यचिन्तापक्षाभिप्रायेणाह—**सर्वापवाद** इति । **प्रार्च्छति**—अत्र ऋकारादिधात्वव्यवहितपूर्वस्य प्रोपसर्गसंवन्धिनोऽवर्णस्य, ऋकारेण सहितस्य स्थाने आरादेश इति । 'ऋधूद्' वृद्धौ, प्र ऋध्नोति इति स्थिते—**प्रार्घ्नोति** । एवमन्यत्रापि । धातुभिर्योगे प्रादीनामुपसर्गत्वमित्याह न्यायमुखेन—**येन धातुना** इत्यादिना । ननु "ऋत्यारुपसर्गस्ये"ति सूत्रे पूर्वस्मादारित्यनुवृत्तौ किमर्थमार् इत्युपादानमित्यत आह—**आरिति वर्तमाने** इत्यादिना, तत्फलमाह—**तेन** इत्यादिना । **इह**—अस्मिन्सूत्रे, च **उत्तरयो**—"नाम्नि वा", "लृत्याल्वा" इत्युत्तरसूत्रयोरित्यर्थ ॥ ९ ॥

**नाम्नि वा** । अत्रावर्णस्येति समग्र पूर्वसूत्र चानुवर्तते । उपसर्गस्यावर्णस्य नाम्नि ऋकारादौ धातौ आर् वा इत्यन्वय । अन्यत्सर्वं प्राग्वद्बोध्यम् । **नाम्नि** इत्यवयवतया धातौ इत्यत्रान्वेति, तदर्थमाह—**उपसर्गस्य** इत्यादिना । **नामावयवे**—नाम अवयवो यस्य स इति विग्रह । **केचित्तु**—शाकटायना "सुपि वा" शा॰ १।१।९१। अमोघावृत्तौ । उप ऋकारयतीत्यत्र धातुर्दीर्घऋकारादिस्तस्य ऋति इत्यनेनाग्रहण निर्दिशति—**ऋकारमिच्छति** इत्यादिना ॥ १० ॥

---

१ सुखेनर्त दु खेनर्त इति म॰ म॰ । २ दु खेन ऋत इति पाठो नास्तीति म॰ म॰ ।

## लृत्याल्वा ॥ १ । २ । ११ ॥

उपसर्गसंबन्धिनोऽवर्णस्य 'लृति'–लृकारादौ नामावयवे धातौ परे परेण लृकारेण सहितस्य आल् वा भवति । अलोऽपवादः । उपाल्कारीयति, उपल्कारीयति । अत्रापि पक्षे ह्रस्वत्वमिच्छन्त्येके–उपलृकारीयति । उपसर्गस्येत्येव ? इहल्कारीयति । लृतीति किम् ? लृकारमिच्छति उपल्कारीयति ॥ ११ ॥

## ऐदौत् संध्यक्षरैः ॥ १ । २ । १२ ॥

अवर्णस्य स्थाने संध्यक्षरैः परैः सहितस्य ऐत् औत् इत्येतावादेशावासन्नौ भवतः, एवं चैकारैकाराभ्यां सहितस्य ऐकारः, ओकारौकाराभ्यां त्वौकारः । तवैषा, खट्वैषा, तवैन्द्री, सैन्द्री, तवौदनः, खट्वौदनः, तवौपगवः, खट्वौपगवः । अवर्णस्येत्येव ? दध्येतत्, दध्यैच्छत्, मध्वोदनः; साध्वौषधम् । संध्यक्षरैरित्यैत्वनिर्देशादुपसर्गस्येति निवृत्तम् ॥ १२ ॥

## ऊटा ॥ १ । २ । १३ ॥

अवर्णस्य परेणोटा सहितस्य स्थाने औकारादेशो भवति आसन्नः । धौतः, धौतवान्, लावयति पावयति इति क्विपि, णिलोपे, "अनुनासिके च छ्वः शूट्" ॥ ४ । १ । १०८ ॥ इत्यूटि; लौः, पौः । ओकारापवादो योगः ॥ १३ ॥

## प्रस्यैषैष्योढोढ्यूहे स्वरेण ॥ १ । २ । १४ ॥

प्रशब्दसंबन्धिनोऽवर्णस्य एष एष्य ऊढ ऊढि ऊह इत्येतेषु परेषु परेण स्वरेण सहितस्य स्थाने ऐदौतावादेशौ भवतः आसन्नौ । प्रैषः, प्रैष्यः, प्रौढः, प्रौढिः, प्रौहः । ऊहे नेच्छन्त्येके । प्रस्येति किम् ? अपोढः, उपोढः । एषादिष्विति किम् ? प्रेतः, प्रोतः । कथं प्रेषः, प्रेष्यः ? ईषे ईष्ये च भविष्यति, यदापि आ ईष्य एष्य इति तदापि "ओमाङि" ॥ १ । २ । १८ ॥ इत्यवर्णलोपे प्रेष्य इत्येव भवति । 'यस्मिन् प्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति न्यायात् "उपसर्गस्यानिणेधेदोति" ॥ १ । २ । १९ ॥ इत्यस्यैवायं बाधको, न "ओमाङि" ॥ १।२।१८ ॥ इत्यस्य । अथेह कस्मान्न भवति–प्रेषते, प्रेष्यते, प्रोढवानिति ? 'अर्थवद् ग्रहणेऽनर्थकस्याग्रहणात्' । कथं तर्हि ऊढिशब्दस्य ण्यन्तस्य सार्थकस्य प्रयोगे प्रोढयतीति ? ऊढशब्देन सार्थकेन स्याद्यन्तेन साहचर्यात्, ण्यन्ते औत्वाभावात्; प्रौढादिशब्दात्तु णौ प्रौढयतीत्यादि भवत्येव ॥ १४ ॥

---

**लृत्याल्वा** । अत्रावर्णस्य उपसर्गस्य नाम्नि इति चानुवर्तते, उपसर्गस्यावर्णस्य लृति नाम्नि धातौ आल् वा इत्यन्वय, तदर्थमाह—**उपसर्गस्य** इत्यादिना । "अवर्णस्येवर्णादिनै०" १।२।६। इत्यनेन प्राप्तमलमपवादत्वेन बाधते, तदाह—**अलोऽपवाद** इति । **अत्रापि पक्षे ह्रस्वत्वमिच्छन्त्येके**—शाकटायना "लृपि वा" शा० १।१।९१। इति सूत्रे ॥ ११ ॥

**ऐदौत्संध्यक्षरैः** । अत्रावर्णस्येत्यनुवर्तते । अवर्णस्य सध्यक्षरै ऐदौतौ इत्यन्वय, तदर्थमाह—**अवर्णस्य स्थाने** इत्यादिना । तव एषा अत्र एकारसहितस्यावर्णस्य स्थाने ऐकार —**तवैषा,** एवमन्यत्रापि । त्रिमात्रचतुर्मात्रस्थानिना स्थाने द्विमात्रादेशो भवति इति बोधनार्थं सदुपसर्गस्येति निवर्तक सध्यक्षरैरिति बहुवचनमित्यत आह—**संध्यक्षरैरित्यैत्वनिर्देशात्** इत्यादिना, अन्यथा 'स्थान्यासन्न' इति न्यायेन त्रिमात्रचतुर्मात्रौ प्राप्नुयाताम् इति ॥ १२ ॥

**ऊटा** । अत्रावर्णस्येत्यनुवर्तते । "ऐदौत्०" इति समुदायानुवृत्तौ 'आसन्न' इति न्यायेन औदित्येव समुपयुज्यते । अवर्णस्य ऊटा औत् इत्यन्वय, तदर्थमाह—**अवर्णस्य परेण** इत्यादिना । **'लौ'**रित्यादेर्निष्पत्तिप्रकारमाह—**लावयति, पावयति** इत्यादिना । सूत्रमिद "अवर्णस्येवर्णादिनै०" १।२।६। इत्यस्यापवादत्वेन बाधक, तदाह—**ओकारापवादो योग** इति ॥ १३ ॥

**प्रस्यैषैष्योढोढ्यूहे स्वरेण** । अत्रावर्णस्येति ऐदौदिति चानुवर्त्तते । प्रस्य अवर्णस्य एषैष्योढोढ्यूहे स्वरेण ऐदौत् इत्यन्वय, तदर्थमाह—**प्रशब्दसबन्धिनोऽवर्णस्य** इत्यादिना । प्र एष इत्यत्र प्रोपसर्गसबन्धिनोऽवर्णस्य एष इत्यस्य एकारेण सहितस्य स्थाने ऐदादेशे—**प्रैषः,** एवमन्यत्रापि । ऊहशब्दस्वरेण सहितस्य प्रशब्दसबन्ध्यवर्णस्य स्थाने औत न मन्यते केचिदित्याह—**ऊहं नेच्छन्त्येके**–प्राच , कस्येद मतमिति तु मृग्यम् । यदीद सूत्रन्तर्हि [2] **प्रेषः, प्रेष्य इति कथम्** [2] इत्याशङ्कते । समाधत्ते—**ईषे ईष्ये च** इति, नेमौ एष एष्यौ इत्याशय । ननु 'पूर्वं धातूपसर्गयो कार्यमन्तरङ्गमि'ति न्यायेन आ ईष्य एष्यस्तत प्र इत्यनेन योगे प्रैष्य इत्यत्रानेन कथमैत्वमित्यत आह—**यदापि** इत्यादिना । प्र एष्य इत्यत्र "ओमाङि"इत्यस्य कथमनेन बाध इत्यत आह—**यस्मिन् प्राप्ते यो विधि०** इत्यादिना । सूत्रमिद प्रोपसर्गयुक्ते एष एष्य इत्यत्र "ऐदौत्सध्यक्षरै"रित्यस्य बाधकस्य "उपसर्गस्यानिणेधेदोति" इत्यस्य बाधनार्थम्, एवमेव प्रोपसर्गयुक्ते ऊढ इत्यादौ "अवर्णस्येवर्णादिनै०" इत्यनेन प्राप्तस्य ओत्वस्य बाधकम् इति विवेक । ननु प्रेषते प्रेष्यते प्रोढवानिति प्रयोगेषु "प्रस्यैषै०" इत्यादिना ऐदौतौ कथ न भवत इत्याशङ्कते—**अथेह कस्मान्न** इत्यादिना । तामाशङ्का निराकरोति—**अर्थवद्ग्रहणे** इत्यादिना । एतत्प्रयोगान्तर्भूतानामेषादीनामर्थवत्त्वाभावादस्य सूत्रस्याप्रवृत्तिरित्याशय । प्रोढयतीत्यत्र ण्यन्तस्य ऊढिशब्दस्यार्थवत्त्वात् कथ न औत्वमित्यत आशङ्कते—**कथं तर्हि** इत्यादिना । "प्रस्यैषैष्योढोढ्यूहे स्वरेण" इति सूत्रेऽर्थवत स्याद्यन्तस्य ऊढशब्दस्योपादानात्तत्साहचर्यात्तादृशस्यैवोढिशब्दस्य ग्रहणाच्च प्रोढयतीत्यत्र नौत्वमित्याशयेन समाधत्ते—**ऊढशब्देन** इत्यादिना । ननु प्रौढयतीति प्रयोगदर्शनं कुत इत्याह—**प्रौढादिशब्दात्तु** इत्यादिना ॥ १४ ॥

१ लृतीत्येव माण्डा० ।

## स्वैरस्वैर्यक्षौहिण्याम् ॥ १ । २ । १५ ॥

स्वैर स्वैरिन् अक्षौहिणीत्येतेषु अवर्णस्य परेण स्वरेण सहितस्य ऐत् औत् इत्येतौ[1] भवतः । स्वस्येरः स्वैरः घञ्, स्व ईरोऽत्रेति स्वैरमास्यताम्, स्वयमीरति ईर्ते वा स्वैरः-नाम्युपान्त्यलक्षणः कः । स्वयमीरितु शीलमस्येति स्वैरी, 'नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति स्वैरिणी । अक्षाणामूहोऽस्यामस्तीति अक्षौहिणी । स्वैरशब्दान्मत्वर्थीयेनैव इना सिद्धे, पृथक् स्वैरिन्ग्रहणं ताच्छीलिकादिणिन्नन्तेऽपीरिन्शब्दे ऐत्वार्थम् ॥ १५ ॥

## अनियोगे लुगेवे ॥ १ । २ । १६ ॥

नियोगो-नियमोऽवधारणम्, तदभावोऽनियोगोऽनवक्लृप्तिः; तद्विषये एवशब्दे परे अवर्णस्य लुग् लोपोऽदर्शनं भवति । इहेव तिष्ठ, अद्येव गच्छ, स्वेच्छावृत्तिरत्र गम्यते नावधारणम्; नियोगे तु इहैव तिष्ठ मा गाः । ये त्वनियोगेऽव्यापारणे इच्छन्ति तन्मते शास्त्रलोकप्रतीतप्रयोगविरोधः, तथा हि—"अमैवाव्ययेन" पा० ॥ २ । २ । २० ॥, "धातोस्तन्निमित्तस्यैव" पा० ॥ ६ । १ । ८० ॥, "तपस्तपःकर्मकस्यैव" पा० ॥ ३ । १ । ८८ ॥, "लङः शाकटायनस्यैव" पा० ॥ ३ । ४ । १११ ॥, येनैव हेतुना वाक्यं भवति तेनैव वृत्तिरपि प्राप्नोति, यथैव तर्हि, इहैव स्यादिति । 'यदैव पूर्वे जनने शरीरम्', 'दृशैव कोपारुणया रिपोरुरः', 'अद्यैवावां रणमुपगतौ'; 'तरसैव कोऽपि भुवनैकपुरुष[2] पुरुषस्तपस्यतीति' । कथं शकानामन्धुः शकन्धुः, अटतीत्यटा, कुलात् कुलस्य वाऽटा कुलटा, पततीति पतोऽञ्जलेः पतञ्जलिः, सीम्नोऽन्तः सीमन्तः-केशविन्यास एव, प्रार्थनायाध्ययन प्रध्ययनम्, हलस्य ईषा हलीषा, एव लाङ्गलीषा, मनस ईषा मनीषा, हलीशा लाङ्गलीशेत्यादि पृषोदरादित्वाद्भविष्यति । कथ तुवै त्वै नुवै न्वै ? निपातान्तरमेतत् ॥ १६ ॥

## वौष्ठौतौ समासे ॥ १ । २ । १७ ॥

ओष्ठशब्दे ओतुशब्दे च परे अवर्णस्य लुग्वा भवति, तौ चेन्निमित्तनिमित्तनावेकत्र समासे भवतः । बिम्बोष्ठी, बिम्बौष्ठी, बिम्बोष्ठा, बिम्बौष्ठा, स्थूलोतुः, स्थूलौतुः । समास इति किम् ? हे राजपुत्र ! ओष्ठ पश्य । हे छात्र ! ओतुस्वर शृणु । अवर्णस्येत्येव ? शुच्योष्ठी ॥ १७ ॥

---

**स्वैरस्वैर्यक्षौहिण्याम्** । अत्रावर्णस्येत्यनुवर्तते । अस्मिन्सूत्रे विहितैदौत स्वैरस्वैर्यक्षौहिणीशब्दा निर्दिष्ट्य, तदेव विवृणोति—**स्वैरस्वैरिन्** इत्यादिना । स्वैरशब्दनिष्पत्तिप्रकारमाह—**स्वस्येर** इत्यादिना, क इत्यन्तेन । **घञ्**—"भावाऽकर्त्रो" ५।३।१८। इत्यनेन । **नाम्युपान्त्यलक्षण॰ कः**—"नाम्युपान्त्य॰" ५।१।५४। इत्यनेन क इत्याशय । स्वैरिणित्यस्य व्युत्पत्तिमाह—**स्वयमीरितु** इत्यादिना । ननु सूत्रे स्वैरिन् इत्युपादानात् स्वैरिणी इति कथमित्यत आह—**नामग्रहणे** इत्यादिना । अक्षौहिणीशब्दस्य विग्रहमाह—**अक्षाणामूह** इत्यादिना । ऊह'-समूहो रचना वा, उक्तच—"स्यात्सेनाऽक्षौहिणीनामस्वाऽगाष्टकद्विकैर्गजैः । रथैश्चैभ्यो हयैस्त्रिघ्नैः पञ्चघ्नैश्च पदातिभि ॥" स्वोपज्ञवृत्तिसमेताऽभिधानचिन्तामणौ ३ मर्त्यकाण्डे श्लो० ४१३ । ननु स्वैरशब्दात् मत्वर्थीये इनि स्वैरिन् इति सिद्धे, किमर्थं सूत्रे स्वैरिन् इत्युपादानमित्याशङ्क्य समाधत्ते—**स्वैरशब्दान्मत्वर्थीयेनैव** इत्यादिना, **ऐत्वार्थम्** इत्यन्तेन ॥ १५ ॥

**अनियोगे लुगेवे** । अत्रावर्णस्येत्यनुवर्तते । अनियोगे एवे अवर्णस्य लुक् इत्यन्वय । प्रतियोगिनोऽर्थबोधे सुतरा तदभावार्थबोध इत्याह—**नियोगो-नियमोऽवधारणम्** इत्यादिना । **अनवक्लृप्तिः**-अनिश्चय इत्यर्थ, सूत्रार्थमाह—**तद्विषये** इत्यादिना । **अद्येव गच्छ** इत्यत्र एवशब्दस्यानिश्चयार्थकत्व दर्शयति—**स्वेच्छावृत्तिरत्र** इत्यादिना । **नियोगे**-अवधारणे, निदर्शनमाह—**इहैव** इत्यादिना । प्राञ्चस्तु नियोजन नियोगो व्यापार इति व्याचक्षते, तेषा मत प्रदर्श्य विरोध शास्त्रप्रयोगस्य लोकप्रसिद्धप्रयोगस्य च दर्शयति—**ये त्वनियोगेऽव्यापारणे इच्छन्ति** इत्यादिना । **ये**-शिवमुख्या । तत्रादौ शास्त्रप्रतीतप्रयोगविरोध दर्शयति—**"अमैवाव्ययेन"** इत्यारभ्य, **इहैव स्यादि**त्यन्तेन । **"अमैवाव्ययेन"**, **"धातोस्तन्निमित्तस्यैव"**, **"तपस्तपःकर्मकस्यैव"**; **"लङः शाकटायनस्यैव"** इतीमानि पाणिनिसूत्राणि । **येनैव हेतुना वाक्यं भवति तेनैव वृत्तिरपि प्राप्नोति, यथैव तर्हि, इहैव स्यादिति**—पाणिनीयमहाभाष्यस्य वाक्यानीमानि संभाव्यन्ते । लौकिकप्रयोगविरोध दर्शयति—**"यदैव पूर्वे जनने शरीर** सा दक्षरोषात् सुदती ससर्ज । तदाप्रभृत्येव विमुक्तसग पति पशूनामपरिग्रहोऽभूत् ॥ ५३ ॥" प्रथमसर्गे कुमारसम्भवस्य । "जयत्युपेन्द्र स चकार दूरतो विभित्सया य क्षणलब्धलक्ष्यया । **दृशैव कोपारुणया रिपोरुरः** स्वयमयाद्भिन्नमिवास्रपाटलम् ॥" श्लो० ३ कादम्बर्यां मङ्गलम् । **"अद्यैवावां रणमुपगतौ तातमम्बा च नत्वा** घ्रातस्ताभ्या शिरसि विनतोऽह च दुःशासनश्च । तस्मिन्बाले प्रसभमरिणा प्रापिते तामवस्थां पार्श्वे पित्रोरपगतघृण किन्तु वक्ष्यामि गत्वा ॥ १५ ॥" चतुर्थाङ्के वेणीसंहारे । **"तरसैव कोऽपि भुवनैकपुरुष! पुरुषस्तपस्यति** । ज्योतिरमलवपुषोऽपि रवेरभिभूय वृत्र इव भीमविग्रह ॥ २६ ॥" किरातार्जुनीये द्वादशसर्गे । ननु शकन्धु, कुलटा इत्यादौ कथमवर्णादिलुगित्याशङ्कते—**कथम्** इत्यादिना, **लाङ्गलीशा** इत्यन्तेन । समाधत्ते-पृषोदरादित्वादिति । ननु तुवै इत्यस्य त्वै, नुवै इत्यस्य न्वै **कथम् ?** इत्याशङ्कते । समाधत्ते—**निपातान्तर**मिति ॥ १६ ॥

**वौष्ठौतौ समासे** । अत्रावर्णस्य लुगिति चानुवर्तते । ओष्ठौतौ अवर्णस्य लुक् वा समासे इत्यन्वय, तदर्थमाह—**ओष्ठशब्दे** इत्यादिना । **बिम्बोष्ठी**-बिम्बमिव ओष्ठौ यस्या सा इति विग्रह, "नासिकोदरौष्ठ॰" २।४।३९। इत्यनेन ङीर्वा । अत्रौष्ठशब्दाव्यवहितपूर्वस्यावर्णस्य लुक् स्थानिनिमित्तयोरेकसमासवृत्ते । एवमन्यत्रापि । **हे राजपुत्र ! ओष्ठं**—अत्र समासाभावादोष्ठशब्दे परे नावर्णलुक् किन्त्वेकसमासे वृत्तित्वेऽपि स्थानिनोऽवर्णस्याभावान्नेकारलुक् ॥ १७ ॥ **शुच्योष्ठी**—अत्र निमितनिमितिनोत्वम् । **हे छात्र ! ओतुस्वर**—अत्र समासेऽपि निमित्तनिमित्तिनोरेकत्र समासेऽवृत्त्यावर्णलुक् न ।

---

१ °त्येतावादेशौ° २ वा लुग्॰ भाष्ट॰ ।

## ओमाङि ॥ १ । २ । १८ ॥

अवर्णस्य ओमि आङादेशे च परे लुग् भवति । आङि दीर्घत्वेनैव सिद्धे लुग्विधानमनर्थकं स्यादिति आङिति आङादेशो गृह्यते–अद्योङ्कारः, सोमित्यवोचत् । आङि–आ ऊढा ओढा, अद्य ओढा अद्योढा; सा ओढा सोढा । आ ऋश्यात् अर्श्यात्, अद्य अर्श्यात् अद्यर्श्यात्; खट्वा अर्श्यात् खट्वर्श्यात् । आ इहि एहि, उप एहि–उपेहि, परा एहि–परेहि । एवमुपेतः । ओमाङीति किम्? तवौदनः । अवर्णस्येत्येव? आ ऋतोः अर्तोः दध्यर्तोः ॥ १८ ॥

## उपसर्गस्यानिणेधेदोति ॥ १ । २ । १९ ॥

उपसर्गसंबन्धिनोऽवर्णस्य इणएधतिवर्जिते एकारादावोकारादौ च धातौ परे लुग् भवति । प्रेलयति, परेलयति, प्रोखति; परोखति । उपसर्गस्येति किम्? प्रगता एलका अस्मात् प्रैलको देशः । अनिणेधिति किम्? उपैति, परैति, उपैधते; परैधते । एदोतीति किम्? उपायते, प्लायते ॥ १९ ॥

## वा नाम्नि ॥ १ । २ । २० ॥

नामावयवे एकारादावोकारादौ च धातौ परे उपसर्गसंबन्धिनोऽवर्णस्य लुग्वा भवति । उपेकीयति, उपैकीयति । प्रोषधीयति, प्रौषधीयति ॥ २० ॥

## इवर्णादेरस्वे स्वरे यवरलम् ॥ १ । २ । २१ ॥

इवर्णउवर्णऋवर्णऌवर्णानामस्वे स्वरे परे यथासंख्यं य् व् र् ल् इत्येते आदेशा भवन्ति । दध्यत्र, नद्येषा, मध्वत्र, वध्वासनम्, पित्रर्थः, ऌकादयः, लनुबन्धः, लाकृतिः । इवर्णादेरिति किम्? पचति । अस्व इति किम्? दधीदम् । स्वर इति किम्? मधु पिबति । केचित्त्विवर्णादिभ्यः परान् यवरलानिच्छन्ति–दधियत्र, तिरियङ्, मधुवत्र, भूवादयः, तन्मतसंग्रहार्थमिवर्णादेरिति पञ्चमी व्याख्येया ॥ २१ ॥

---

**ओमाङि** । अत्रावर्णस्य लुगिति चानुवर्तते, अवर्णस्य ओमाङि लुक् इत्यन्वय, तदर्थमाह—**अवर्णस्य ओमि आङादेशे च** इत्यादिना । ननु सूत्रे आङीत्युक्त्या वृत्तौ तस्याङादेश इत्यर्थं कथमित्यत आह—**आङि दीर्घत्वेनैव** इत्यादिना । अत्रायमाशय –यद्याङीत्यनेनाङादेशो न गृह्येत तर्हि केवलेन आङा सहावर्णस्य "समानाना तेन दीर्घ" १।२।१। इति दीर्घत्वे सर्वत्राङोऽसम्भवेन तस्मिन् परेऽनेनावर्णलुक् विधान व्यर्थमिति आङीत्यनेनाङादेशो गृह्यते इति । अद्य ओङ्कार इत्यत्र अवर्णस्य ओमि परे लुकि सति—**अद्योङ्कारः** । एवमन्यत्रापि । **दध्यर्तोः**–असमस्त प्रयोगोऽयम्, ततो भक्षणीय वर्जनीय वेति योग ॥ १८ ॥

**उपसर्गस्यानिणेधेदोति** । अत्रावर्णस्य लुगिति चानुवर्तते । प्रादीनामुपसर्गत्वान्यथानुपपत्त्याधात्वाक्षेप । तच्च अनिणेधेदोति इत्यनेन विशिष्यते । इण् च एध् च इणेधु, न इणेधू अनिणेध् च (विशेषणमिद एत ओतस्त्वसम्भवादिति) एच्च, अनिणेधेत् च ओच्च तस्मिन् वा न विद्येते इणेधौ यत्र स अनिणेध्, च एच्चेत्यादिप्राग्वत् । "सप्तम्या आदि" इत्यादिपदोपस्थितिश्च । उपसर्गस्यावर्णस्यानिणेधेदोति लुगित्यन्वय, तदर्थमाह—**उपसर्गसंबन्धि** इत्यादिना । 'इलण्' प्रेरणे–**प्रेलयति**—अत्र प्रोपसर्गावर्णस्य इणेधूवर्जितेकारादिधात्वेलाव्यवहितपूर्वस्य लुक् इति समन्वय । सूत्रमिदमैदौत्सध्यक्षरैरित्यस्य बाधकम् । **प्लायते**–अत्र "उपसर्गस्यायौ" २।३।१००। इत्यनेन रस्य लत्वम् ॥ १९ ॥

**वा नाम्नि** । अत्रोपसर्गस्य अवर्णस्य एदोति लुगिति चानुवर्तते । अवयवद्वारा नाम्नीत्युपसर्गाक्षिप्तधातावित्यत्रान्वेति, "सप्तम्या आदि" इत्यादिपदोपस्थितिश्च । उपसर्गस्यावर्णस्य नामावयवे एकारादावोकारादौ च धातौ लुक् वा इत्यन्वय, तदर्थमाह—**नामावयवे** इत्यादिना । उप एकीयति इति विश्लेषे अत्र नामावयवएकारादिएकीय्धात्वव्यवहितपूर्वस्य उपोपसर्गावर्णस्य लुक्विकल्पेन—**उपेकीयति** । अत्र "धुटस्तृतीय" २।१।७६। इति पस्य बत्व न भवति, 'असिद्ध बहिरङ्गमन्तरङ्गे' इति न्यायात् । एवमन्यत्रापि ॥ २० ॥

**इवर्णादेरस्वेस्वरेयवरलम्** । स्पष्टोऽन्वय । यवरलम् इत्यादेशचतुष्टयनिर्देशेन स्थानिचतुष्टयलाभ, अन्यथा इवर्णादेरित्यादिपदादेकारादीनामपि ग्रहण प्रसज्येत इत्याह—**इवर्णउवर्णऋवर्ण** इत्यादि । ननु द्विसप्तति स्थानिन आदेशाश्च सप्त इति कथमादेशादेशिनोर्यथासंख्यमिति चेन्न सूत्रे वर्णग्रहणेन जातिग्रहणाद्यथासंख्योपपत्ते । दधि अत्र–अत्रेकारस्य अस्वस्वराव्यवहितपूर्वस्य यकार—**दध्यत्र**, एवमन्यत्रापि समन्वय । ये इवर्णादिभ्यो यवरलान् विदधति तेषा मतमाह—**केचित्तु** इत्यादिना । देवनन्द्यादय इति शेष, मतमिद "अस्वे" शा० १।१।७३। सूत्रे अमोघावृत्तौ प्रदर्शितम् । दधि अत्र इत्यवस्थायां पञ्चमीव्याख्यानपक्षे इकारात् परत्र यत्वथा सति—**दधियत्र** । एकेनापि प्रयत्नेनोभय लभ्यमिति तन्मताभिप्रायेणाप्यस्य सूत्रस्य व्याख्यान समर्थयतीत्याह—**तन्मतसंग्रहार्थम्** इत्यादिना । "इवर्णादेरस्वे स्वरे यवरलम्" इति यत्वपक्षे षड्रूपाणि भवन्ति, तथाहि–दध्यत्र दध्य्यत्र दद्ध्यत्र दद्ध्य्यत्र दध्ध्यत्र दद्ध्ध्यत्र इति "अदीर्घाद्विरामैकव्यञ्जने", "ततोऽस्याः", "तृतीयस्तृतीयचतुर्थे" इति शास्त्रसहकारेण । पञ्चमी व्याख्याने–दधियत्र, तकारद्वित्वे सति दधिय्यत्र, ह्रस्वपक्षे दधिअत्र, तकारद्वित्वे दधि अत्र एव दशरूपाणि ॥ २१ ॥

---

१ ओमि आङादेशे च परे अवर्णस्य० ख० ता० । २ स्यादित्या × × × आदेशो० पु०, माण्डा० । ३ अद्योंकार ख० ता०, माण्डा० । ४ मेपते पु०, × × × ख० मा०, × × × माण्डा०, × × × म०भ० ।

## ह्रस्वोऽपदे वा ॥ १ । २ । २२ ॥

इवर्णादीनामस्वे स्वरे परे ह्रस्वो वा भवति, अपदे—न चेत् तौ निमित्तनिमित्तिनावेकत्र पदे भवतः । नदिएषा, नद्येषा । दधिअत्र, दध्यत्र । मधुअत्र, मध्वत्र । अतिएति, अत्येति । अनुएति, अन्वेति । ह्रस्वस्यापि ह्रस्वः पर्जन्यवल्लक्षणप्रवृत्तेः, ह्रस्वविधानसामर्थ्याच्च कार्यान्तरं न भवति । कश्चित्तु पक्षे प्रकृतिभावमपीच्छति—कुमारी अत्र । अपदे इति किम् ? नद्यौ, वध्वौ; नद्युदकम्, वध्वासनम्, नद्यर्थः, गौर्याराधः—अन्तर्वर्तिविभक्त्यपेक्षया पदभेदेऽपि समासे सत्यैकपद्यम्; एवमनुव्यचलत् । अथवा अनुप्राविशदित्यादिवदखण्डमव्ययं विभक्त्यन्तत्वाच्चैकपदत्वम् । अत एवैतद्योगे "सपूर्वात् प्रथमान्ताद्वा" ॥ २ । १ । ३२ ॥ इति विकल्पेन वस्नसादयो भवन्ति—अथो अनुव्यचलद् वो देवदत्तः, अथो अनुव्यचलद् युष्माकं देवदत्तः, अथो अनुप्राविशद् वो जिनदत्तः; अथो अनुप्राविशद् युष्माकं जिनदत्त इत्यादि । इवर्णादेरित्येव ? हे मुनयाचर, हे साधवाचर । स्वर इत्येव ? नदी वहति । अस्व इत्येव ? दधीदम् ॥ २२ ॥

## एदैतोऽयाय् ॥ १ । २ । २३ ॥

एकारैकारयोः स्थाने स्वरे परे यथासंख्यमय् आय् इत्येतावादेशौ भवतः । नयनम्, नायकः । अस्व इति इवर्णादिसंबद्धं तन्निवृत्तौ निवृत्तम्, तेन स्वेऽपि भवति—वृक्षयेव, रायैन्द्री । स्वर इत्येव ? जले पद्मम्, रैधृतिः ॥ २३ ॥

## ओदौतोऽवाव् ॥ १ । २ । २४ ॥

ओकारौकारयोः स्थाने स्वरे परे यथासंख्यमव् आव् इत्येतावादेशौ भवतः । लवनम्, लावकः, पटवोतुः, गावौ । स्वर इत्येव ? गोशृङ्गम्, नौकाष्ठम् ॥ २४ ॥

## य्यक्ये ॥ १ । २ । २५ ॥

ओकारौकारयोः स्थाने क्यवर्जिते यकारादौ प्रत्यये परे यथासंख्यमव् आव् इत्येतावादेशौ भवतः—गव्यति, गव्यते ।

---

ह्रस्वोऽपदेवा । अत्र इवर्णादे अस्वे स्वरे इति चानुवर्तते, इवर्णादे अस्वे स्वरे ह्रस्व वा अपदे इत्यन्वय, तदर्थमाह—इवर्णादीनामित्यादिना । नदी एषा इत्यत्र अस्वस्वराव्यवहितपूर्वस्येकारस्य ह्रस्वो भिन्नपदवृत्ते स्थानिनिमित्तयो—नदिएषा १, पक्षे "इवर्णादे०" १।२।२१। इति यत्व—नद्येषा २, "अदीर्घादिति०" द्वित्वे—नद्द्येषा ३, "ततोऽस्या" इति द्वित्वे—नद्य्येषा ४, इवर्णादेरिति पञ्चमी व्याख्यानपक्षे—नदीयेषा ५, मतान्तरप्रकृतिभावपक्षे—नदी एषा ६, इतिवत् सर्वत्रोदाहरणेषु भावनीयम्, एवमन्यत्रापि । इद सूत्र 'अनु एति' इत्यादौ ह्रस्वस्यापि ह्रस्वत्वं विदधाति, कथमित्याह—पर्जन्यवल्लक्षणप्रवृत्तेः—यथा मेघः यावदून पूर्णे च सर्वमभिवर्षति तद्वदित्यर्थ । नन्वेव सति कार्यान्तरं कथन्न भवतीत्याह—ह्रस्वविधानसामर्थ्याच्च इत्यादिना । यत्र दीर्घस्यानेन ह्रस्वत्व, तत्र पक्षे प्रकृतिभावमिच्छतोर्मतविशेषमाह—कश्चित्तु इति । दुर्गसिंहन्यासकृतोर्मत प्रागुपदर्शितम्—"ऋलृति" १।२।२। इति सूत्रे । ननु नद्या उदकम् नद्युदकम्, गौरीमाराध्नोतीति "कर्मणोऽण्" ५।१।७२। गौर्याराध इत्यादौ समासेऽपि अन्तर्वर्तिनीं विभक्तिमाश्रित्य स्थानिनिमित्तयोर्भिन्नपदवृत्ते कथन्नानेन ह्रस्वत्वमित्याह—अन्तर्वर्तिविभक्त्यपेक्षया इत्यादिना । एवं—अन्तर्वर्तिविभक्तिं समाश्रित्य पदभेदेऽपि प्रथम वे पश्चादनो समासे सत्येकपदत्वमित्याह—अनुव्यचलत् । अत्रसमासात् सेऽक् । अनुव्यचलत् इति तु "स्वरादयोऽव्ययम्" १।१।३०। इति स्वरादेराकृतिगणत्वात्, "विभक्तिथमन्त०" १।१।३३। इति विभक्त्यन्तप्रतिरूपकत्वाद्वाव्ययमेकपदत्व च विभक्त्यन्तत्वात्तस्येत्यादिदृष्टान्तसमुपन्यासपुर सरं निर्दिशति—अनुप्राविशत् इति । अनुप्राविशत् इत्यादिवत् अखण्ड अव्ययम् अनुव्यचलत्—इति एकपदत्व च विभक्त्यन्तत्वात् इत्यन्वय । तदेकपदत्वफलमाह—अत एव इत्यादिना । अनुव्यचलदित्यस्यैकपदत्वादेव । एतद्योगे—अनुव्यचलदित्यादियोगे, युष्मच्छब्दस्य "सपूर्वात् प्रथमान्ताद्वा" २।१।३२। इत्यनेन विकल्पेन वस्नसादयो भवन्ति । तदुदाहरति—अथो अनुव्यचलद् वो देवदत्तः इत्यादिना ॥ २२ ॥

एदैतोऽयाय् । अत्रस्वरे इत्यनुवर्तते, एदैत स्वरे अयाय् इत्यन्वय, तदर्थमाह—एकारैकारयोः इत्यादि । आदेशादेशिनो समसख्याकत्वेन यथासख्यलाभस्तदाह—यथासंख्यमिति । नयनम्—अत्र स्वराव्यवहितपूर्वस्य एकारस्य अयादेशे सति रूपनिष्पत्ति । एवमन्यत्रापि । ननु यथा स्वरे इत्यनुवर्तते तथा 'अस्वे' इति कथन्नानुवर्तते इत्याह—अस्व इति इवर्णादिसंबद्धं इत्यादिना । यत्रेवर्णादेरित्यस्य संबन्धस्तत्रास्व इति संबध्यते, तत्संबद्धस्यैव तस्यानुवृत्ते, असमस्तनिर्देशाच्चान्यथास्वस्वरे इत्येव निर्दिशेत् इत्याशय । तन्निवृत्तिफलमाह—तेन इत्यादिना । यथा—वृक्षयेव, रायैन्द्री—वृक्षे एव, रै ऐन्द्री क्रमेणात्रोभयोरेकारैकारयोश्च स्वत्वमेव, तथासति तदव्यवहितपूर्वस्य एकारस्य ऐकारस्य च अय् आय् । स्वर इति वृत्तिपदोपादानफलमाह—स्वरे इत्येव ? इत्यादिना ॥ २३ ॥

ओदौतोऽवाव् । अत्र स्वरे इत्यनुवर्तते । ओदौत स्वरे अवाव् इत्यन्वय, तदर्थमाह—ओकारौकारयोरित्यादिना । सर्वमन्यत् प्राग्वद्बोध्यम् । लवनम्—अक्ये लो अनमित्यत्र स्वराव्यवहितपूर्वस्य ओकारस्य अव् । एवमन्यत्रापि ॥ २४ ॥

य्यक्ये । अत्र "ओदौतोऽवाव्" इत्यनुवर्तते । यि अक्ये इति सूत्रस्थपदविश्लेष, अक्ये इत्यत्र पर्युदासार्थको नञ् तेन च प्रत्यये इति लभ्यते । तत्र अक्ये यि इति च विशेषणतया अन्वित, यि इति यकारादावित्यर्थकं "सप्तम्या आदि" ७।४।११४। इत्यादिपदोपस्थिते ओदौत अक्ये यकारादौ प्रत्यये अवाव् इत्यन्वय, तदर्थमाह—ओकारौकारयोः स्थाने इत्यादिना । गव्यति—अत्र क्यवर्जितयकारादि-

---

१ भवति भा । ख० ता०, पु० । २ विभक्त्यन्तपदत्वा० ख० ता०, पु० । ३ मुनयाचर साधवाचर ख० ता०, भ० म० । ४ गावौ गाव. मान्धा० ।

नाव्यति, नाव्यते, लव्यम्, पव्यम्, अवश्यलाव्यम्, अवश्यपाव्यम्, गव्यम्; नाव्यम् । यीति किम्? गोभ्याम्, नौभ्याम् । अक्य इति किम्? उपोयते, औयत, लौयमानिः । क्यवर्जनाद्यकारादिः प्रत्ययो गृह्यते, तेनेह न भवति—गोयूतिः, नौयानम् । कथं गव्यूतिः—क्रोशद्वयम्? क्रोशयोजनादिवदव्युत्पन्नः सञ्ज्ञाशब्दोऽयम्, गवां यूतिर्गव्यूतिरिति व्युत्पत्तिपक्षे तु पृषोदरादित्वाद् भविष्यति । शरव्यमिति तु शरसमानार्थात् शरुशब्दादुवर्णान्तलक्षणे ये, शरान् व्ययतीति वा डे भविष्यतीति ॥ २५ ॥

## ऋतो रस्तद्धिते ॥ १ । २ । २६ ॥

ऋत ऋकारस्य यकारादौ तद्धिते परे रादेशो भवति । पितरि साधु पित्र्यम्, भ्रात्र्यम् । तद्धित इति किम्? कार्यम् ॥२६॥

## एदोतः पदान्तेऽस्य लुक् ॥ १ । २ । २७ ॥

एदोद्भ्यां पदान्ते वर्तमानाभ्यां परस्याकारस्य लुग् भवति । तेऽत्र, पटोऽत्र; यजन्तेऽत्र । एदोत इति किम्? दध्यत्र । पदान्त इति किम्? नयनम्, लवनम् । अस्येति किम्? तयिह, पटविह ॥ २७ ॥

## गोर्नाम्न्यवोऽक्षे ॥ १ । २ । २८ ॥

गोरोकारस्य पदान्ते वर्तमानस्याक्षशब्दे परे नाम्नि—सञ्ज्ञायां गम्यमानायामव इत्ययमादेशो भवति । गोरक्षीव- अप्राण्यङ्गत्वात् समासान्तेऽति गवाक्षो—वातायनः । नाम्नीति किम्? गवामक्षाणि गोऽक्षाणि, गोअक्षाणि । कश्चित्त्वसञ्ज्ञायां गवाक्षाणीत्यपीच्छति ॥ २८ ॥

## स्वरे वाऽनक्षे ॥ १ । २ । २९ ॥

गोरोकारस्य पदान्ते वर्तमानस्य स्वरे परे अव इत्ययमादेशो वा भवति, अनक्षे—स चेत् स्वरोऽक्षशब्दस्थो न

---

प्रत्ययक्यनव्यवहितपूर्वस्य गोरोकारस्य अव्, एवमन्यत्रापि । यि इति सूत्रस्थपदोपादानफलमाह—**यीति किम्?** इत्यादिना । क्य पर्युदस्त स किमर्थं इत्याह—**अक्य इति किम्** इत्यादिना । 'वेंग्'—तन्तुसन्ताने, कर्मणि यप्रत्यये, "यजादिवचे किति" ४।१।७९। इति सम्प्रसारणे, "दीर्घ-श्विवयङ्यक्येषु च" ४।३।१०८। इति दीर्घे, उप ऊयते इति स्थितौ "अवर्णस्ये०" १।२।६। इत्योत्वे—**उपोयते** । अत्र क्यवर्जितयकारादिप्रत्यया-भावाभाव् । 'अक्ये' इत्यत्र नञ पर्युदासार्थकत्वेन प्रत्ययलाभ इत्याह भगवान् वृत्तिकृत्—**क्यवर्जनात्** इत्यादिना । तत्फलमाह—**तेनेह** इत्यादिना । नन्वेवं क्रोशद्वयार्थके गव्यूतिशब्दे कथमव् इत्याशङ्कते—**कथम्** इत्यादिना । समाधत्ते—**क्रोश** इत्यादिना, **संज्ञाशब्दोऽयम्** इत्यन्तेन । नन्वेतदव्युत्पत्तिपक्षाभिप्रायेण, यदि चेत् व्युत्पत्तिपक्षस्तदा का गतिरित्याह—**गवां यूतिः** इत्यादिना । शरशब्दाद्यप्रत्यये ओकाराभावादवादेशा-भावे कथं शरव्यमित्याशङ्क्याह—**शरव्यमिति** इत्यादिना, **ये** इत्यन्तेन । शरवे हितमित्यर्थे "उवर्णयुगादेर्य" ७।१।२०। इति ये, "अस्वयम्भुवोऽव्" ७।४।७०। इत्यवादेशे शरव्यमिति सिध्यति, अथवा **शरान्** इत्यादिनापि सिध्यति ॥ २५ ॥

**ऋतो रस्तद्धिते** । अत्र यीत्यनुवर्तते, तच्च सूत्रोपात्ते **तद्धिते** इत्यस्य विशेषणं, तथासति "सप्तम्या आदि" इत्यादि पदोपस्थिति, ऋत यादौ तद्धिते र इत्यन्वय, तदर्थमाह—**ऋत ऋकारस्य** इत्यादिना । **पितरि साधु** पित्र्यमित्यस्यार्थ, पितृ यम् इति स्थितौ यकारादि-तद्धिताव्यवहितपूर्वस्य ऋकारस्य रादेशे सति **पित्र्यम्**, इत्यमन्यत्र समन्वय । तद्धिते इत्यस्य फलमाह—**तद्धित इति किम्? कार्यम्** । नन्विदं तद्धितग्रहणप्रयोजनमयुक्त, कार्यमित्यत्र "ऋवर्णे०" ५।१।१७। इति घ्यणि, तस्य णोपदेशाद्वृद्धेरेव प्राप्तेरिति चेदुच्यते—जागृयात्, इयृयात् इत्यत्र तद्धितग्रहणाभावे रत्वापत्ते ॥ २६ ॥

**एदोतः पदान्तेऽस्य लुक्** । पदान्ते एदोत अस्य लुक् इत्यन्वय, तदर्थमाह—**एदोद्भ्याम्** इत्यादिना । अत्र यद्यपि भिन्न-विभक्त्यन्त **पदान्ते** इति यथा **एदोतो** विशेषणं तथा **अस्य** इत्यस्यापि प्राप्नोति, तथापि "गोर्नाम्न्यवोऽक्षे" इत्यस्याकारलोपापवादत्व न सम्भवेत्, यतोऽक्षशब्दाकारस्यापदान्तत्वात् । न च एदोत इति सूत्रवैयर्थ्यात् पदान्ते इत्यस्य अस्य इत्यनेनासम्बन्ध इति वाच्यम्, तस्य तत्सूत्राशे **'पदान्ते अस्य'** इत्यत्र "नामसिद०" इति अस्य इत्यत्राकारस्य पदान्तत्वेनाकारलोपे चारितार्थ्यात् । ते अत्र इत्यवस्थाया पदान्तस्थैकारात् परस्याकारस्य लुक् इति समन्वय, एवमन्यत्र ॥ २७ ॥

**गोर्नाम्न्यवोऽक्षे** । अत्र ओत पदान्ते इति चानुवर्तते, पदान्ते गो ओत अक्षे अव नाम्नि इत्यन्वय, तदर्थमाह—**गोरोकारस्य** इत्यादिना । अत्र **नाम्नि** इत्यनेन लौकिकी नाम सञ्ज्ञा बोध्या, न तु "अधातु विभक्ति०" इति शास्त्रविहिता, तस्या अत्र व्यभिचाराभावात् इत्याह भगवान् वृत्तिकार—**नाम्निसंज्ञायां** । **गोरक्षीव**—इति विग्रह । "अक्ष्णोऽप्राण्यङ्गे" ७।३।८५। इति **अप्राण्यङ्गत्वात् समासान्तेऽति** गो अक्ष इति स्थिते, सञ्ज्ञायामनेन पदान्तस्थस्य गोराकारस्य अक्षशब्दाव्यवहितपूर्वस्य अव इत्यादेशे गवाक्ष इति सिध्यति, वातायन इति गवाक्ष इत्यस्यार्थ । एवमन्यत्रापि । **गोऽक्षाणि**—"एदोत" इति अकारलुक्, **गो अक्षाणि**—"वाऽत्यसंधि" १।२।३१। इत्यसंधि । **कश्चित्त्वसंज्ञायां गवाक्षाणीत्यपीच्छति**—इदं मतं पाणिने "अवङ् स्फोटायनस्य" पा० ६।१।१२३। इति हि तत्सूत्र, 'व्यवस्थितविभाषया गवाक्ष' इति च तद्व्याख्यातार, भोजदेवसमत । जैनेन्द्रप्रक्रियाया देवनन्द्याचार्य "विभाषाऽन्यत्र" जै० ४।३।१०२। इति च सूत्रितवान् । शाकटायनस्य सर्वज्ञभगवतो हेमचन्द्रस्य चास्मिन्विषये समानं मतं, तथाहि—शाकटायनसूत्र, "वातायनेऽक्षे" शा० १।१।९८। इति "अवोऽन्यनक्षे" शा० १।१।९६। इति च ॥२८॥

**स्वरे वाऽनक्षे** । अत्र गोरोत अव इति पदान्ते इति चानुवर्तते, पदान्ते गोरोत अनक्षे स्वरे अव वा इत्यन्वय, तदर्थमाह—**गोरोकारस्य** इत्यादिना । **अनक्षे** इति नञ प्रसज्यप्रतिषेधार्थकत्व दर्शयति—**स चेत्स्वरोऽक्षशब्दस्थो** इत्यादिना । पर्युदासो हि विधि-प्रधान, निषेधस्तु तत्र सामर्थ्यात् प्राप्नोति इति तत्स्वीकारे गोऽक्षसंघात इत्यादावक्षभिन्नाक्षसदृशाक्षसंघातस्थस्वरे परे अव इत्यादेश स्यात्,

भवति । गवाग्रम्, गवाजिनम्, गवोष्ट्रः, गवौदनः, गवेश्वरः; पक्षे यथाप्राप्तम्—गोऽग्रम्, गोअग्रम्, गोऽजिनम्, गोअजिनम्, गवुष्ट्रः, गवोदनः; गवीश्वरः । स्वर इति किम् ? गोकुलम् । अनक्ष इति किम् ? गोऽक्षम्, गोअक्षम् । पदान्त इत्येव ? गवि । ओत इत्येव ? चित्रग्वर्थः । गोरित्येव ? द्योऽग्रम् । हे चित्रगवुदकमित्यत्र तु लाक्षणिकत्वाद् गोशब्दस्य न भवति ॥ २९ ॥

## इन्द्रे ॥ १ । २ । ३० ॥

गोरोकारस्य पदान्ते वर्तमानस्येन्द्रस्थे स्वरे परे अव इत्ययमादेशो भवति । गवेन्द्रः, गवेन्द्रयज्ञः । नित्यार्थं वचनम् ॥३०॥

## वाऽत्यसंधिः ॥ १ । २ । ३१ ॥

गोरोकारस्य पदान्ते वर्तमानस्यात्यकारे स्वरे परे असंधिः—प्रकृतिभावो वा भवति । गोअग्रम्, गोअजिनम् । पक्षे यथाप्राप्तम्—गोऽग्रम्, गवाग्रम्, गोऽजिनम्; गवाजिनम् । अतीति किम् ? गवेङ्गितम्, गवाननम् । गोरित्येव ? द्योऽग्रम् । ओत इत्येव ? चित्रग्वग्रम् । हे चित्रगोऽग्रमित्यत्र तु लाक्षणिकत्वान्न भवति । पदान्त इत्येव ? गौरिवाचरति गवति ॥ ३१ ॥

## प्लुतोऽनितौ ॥ १ । २ । ३२ ॥

इतिशब्दवर्जिते स्वरे परे प्लुतोऽसंधिर्भवति, संधिकार्यभाग् न भवतीत्यर्थः । देवदत्त३ अत्र न्वसि, जिनदत्त३ इदमानय, सुश्लोक३ आगच्छ; सुमङ्गल३ इदमानय । अनिताविति किम् ? सुश्लोकेति, सुमङ्गलेति । केचित्तु इतिशब्दे विकल्पमिच्छन्ति—सुश्लोक३ इति, सुश्लोकेति; सुमङ्गल३ इति, सुमङ्गलेति ॥ ३२ ॥

## इ३ वा ॥ १ । २ । ३३ ॥

इ३ इति प्लुतः स्वरे परे वाऽसन्धिर्भवति, इतावप्राप्तेऽन्यत्र च प्राप्ते उभयत्र विकल्पोऽयम् । लुनीहि३ इति, लुनीहीति । चिनुहि३ इदम्, चिनुहीदम् । कथं वशा३ इयम् ? वशेयम् ?—छान्दसावेतौ ॥ ३३ ॥

---

प्रसज्ये तु प्रतिषेधस्य प्रधानत्वात् अक्षादिसमुदायस्थेऽप्यक्षशब्दाश्रित प्रतिषेध इत्याशय । गो अग्रम्—अत्र पदान्ते गोरोत स्थाने अनक्षशब्दावयवस्वराव्यवहितपूर्वस्य अव इत्यादेश —गवाग्रम्, पक्षे "वात्यसंधि" १।२।३१। इति—गोअग्रम्, उभयोरप्यभावे "एदोत ०" १।२।२७। इति लुक्—गोऽग्रम्, एवमन्यत्र । स्वरे, अनक्षे, पदान्ते इति च क्रमेण प्रयोजनपूर्वकमुदाहरति—स्वर इति किम् ? इत्यादिना, पदान्त इत्येव ? गवि इत्यन्तेन । ओकारानुवृत्तिफलमाह—ओत इत्येव ? इति । चित्रग्वर्थः—चित्रा गावो यस्य स चित्रगु, चित्रगवेऽय चित्रग्वर्थं, अत्रौत इत्यननुवृत्तौ 'एकदेशविकृतमनन्यवत्' इति न्यायेन 'गु' इत्यत्रैकदेशविकृतत्वेऽपि गोशब्दव्यवहारात्तस्योकारस्य अव इत्यादेश स्यात्तन्मा भूदिति 'ओत' इत्यनुवृत्तिर्बोध्या । हे चित्रगो उदकम्—अत्र "ओदौतोऽवाव्" १।२।२४। इत्यनेन अव् एव, ननु गोरोतो विद्यमानत्वेन कथन्नाव इत्यादेश इत्याह—हे चित्रगवुदकमित्यत्र इत्यादिना । समाधानमुखेन हेतुपूर्वकं स्पष्टयति—लाक्षणिकत्वात्—लक्षणनिष्पन्नत्वात् 'लक्षणप्रतिपदोक्त०' इति परिभाषया गोशब्दस्य न भवति इत्यन्वय ॥ २९ ॥

इन्द्रे । अत्र गोरोत, पदान्ते, अव, स्वरे इति चानुवर्तते । सूत्रे इन्द्रे स्वरे इत्यन्वयेन "सप्तम्या आदि" ७।४।११४। इत्यादिपदोपस्थिति, तथा सति पदान्ते गोरोत इन्द्रादौ स्वरे अव इत्यादेश इत्यन्वय । नन्वेव गवेन्द्रयज्ञ इति सिद्धावपि गवेन्द्र इति कथमिति चेदाद्यन्तवद्भावेन तत्सिद्धे, तदर्थमाह—गोरोकारस्य इत्यादिना । गो इन्द्र—अत्र गोरोत इन्द्रादिशब्दस्वराव्यवहितपूर्वस्य नित्य अव इत्यादेशे—गवेन्द्रः । एव गवेन्द्रयज्ञ इत्यपि । ननु पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्याह—नित्यार्थं वचनम् ॥ ३० ॥

वाऽत्यसंधिः । अत्र गोरोत, पदान्ते, स्वरे इति चानुवर्तते । पदान्ते गो ओत अति स्वरे असंधि वा इत्यन्वय, तदर्थमाह—गोरोकारस्य इत्यादिना । असंधिरित्यस्य पर्याय —प्रकृतिभावः । गोअग्रम्—अत्र अकाररूपस्वराव्यवहितपूर्वस्य गोरोत पदान्तस्थस्य प्रकृतिभाव, पक्षे यथाप्राप्तम्—"एदोत पदान्ते०", "स्वरे वाऽनक्षे" इति च । ओकारानुवृत्तिफलमाह—ओत इत्येव ? चित्रग्वग्रम्—चित्रग्वर्थ इतिवद्बोध्यम् । ननु चित्रगो अग्रम्—अत्र गोरोतो विद्यमानत्वेन कथन्नासंधिरित्याह—हे चित्रगोऽग्रमित्यत्र तु इत्यादिना ॥ ३१ ॥

प्लुतोऽनितौ । अत्रासंधि स्वरे इति चानुवर्तते, अतीति नानुवर्ततेऽन्यथा इतिशब्दवर्जनवैयर्थ्यं स्यात्; तदर्थमाह—इतिशब्दवर्जिते स्वरे इत्यादिना । असंधिः इत्यस्यार्थमाह—संधिकार्यभाग् इत्यादिना । देवदत्त३ अत्रन्वसि—अत्र "दूरादामन्त्र्यस्य०" ७।४।९९। इति प्लुतोऽकार । नन्वस्य वाक्यान्तत्वाभावात् कथ प्लुत इति चेत्, कस्यचिद्वाक्यस्यान्तमिद गृहाण इति प्लुतोऽकार संधिकार्यं दीर्घादिक न भजते, इतिशब्दवर्जितस्वराव्यवहितपूर्वस्थेति समन्वय । एवमन्यत्र । इतिशब्दवर्जनफल दर्शयति—अनिताविति इत्यादिना, सुमङ्गलेति इत्यन्तेन । केचित्तु इतिशब्दे विकल्पमिच्छन्ति, अत्र केचित्तु—पाणिनीया । "अप्लुतवदुपस्थिते" पा० ६।१।१२९।, शा० अमोघावृत्तौ—"न प्लुतस्यानितौ" शा० १।१।९९। सूत्रे 'सर्व एव प्लुत साहसमनिच्छता विभाषा वक्तव्य' इति दृश्यते, पाणिनीयभाष्येऽपि "अमीत्रेषणे परस्य" पा० ८।२।९२। इति सूत्रे च दृश्यते ॥ ३२ ॥

इ३ वा । अत्र प्लुत, स्वरे, असन्धि इति चानुवर्तते । इ३ प्लुत स्वरे असंधिर्वा इत्यन्वय, तदर्थमाह—इ३ इति प्लुत इत्यादिना । प्राप्ताप्राप्तविभाषारूपमुभयत्र विकल्पविधायक शास्त्रमिद क्व प्राप्ते विभाषा क्व चाप्राप्तविभाषा इति निर्दिशति—इतावप्राप्तेऽन्यत्र च प्राप्ते इत्यादिना । लुनीहि३ इति—अत्रेकार प्लुत सन्धिकार्यं न भजते इति समन्वय । कथं वशा३ इयम् ? वशेयम् ? अत्र कथ प्लुत, कथ च प्रकृतिभाव इत्याह—छान्दसावेतौ ॥ ३३ ॥

## ईदूदेत् द्विवचनम् ॥ १ । २ । ३४ ॥

ईत् ऊत् एत् इत्येवमन्तं द्विवचनं स्वरे परेऽसंधिर्भवति । त्रपुणी अत्र, मुनी इह, साधू एतौ, अमू इति, कुण्डे अत्र, माले इति, पचेते इति, पचेथे इति, पचावहे आवाम् । ईदूदेदिति किम्? वृक्षावत्र । द्विवचनमिति किम्? कुमार्यत्र । एषां प्लुतानामितावपि संधिर्न भवति—अग्नी३ इति, वायू३ इति । स्वर इत्येव? तव ई—कामौ तवे, प्रत्यासत्तेः स्वरनिमित्तककार्यप्रतिषेधात् इह भवत्येव; तव ई तवे आसाते । केचित्तु—'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इति प्रयोगदर्शनात् मणी इव मणीवेत्यादावसन्धिप्रतिषेधं वर्णयन्ति, तदयुक्तम्; वाशब्देनोपमार्थेन सिद्धत्वात्, 'मणी इवोद्भिन्नमनोहरत्विषौ' इत्यादावसंधिदर्शनाच्च । अन्ये तु यथादर्शनं संधिमसधिं वेच्छन्ति—मणीव, दंपतीव, रोदसीव मणी इव ॥३४॥

## अदोमुमी ॥ १ । २ । ३५ ॥

अदस्संबन्धिनौ मुमी इत्येतावसंधी भवतः स्वरे परे । अमुमुईचा, अमी आसते, अमी अश्वाः । अदसिति किम्? अम्यत्र ॥ ३५ ॥

---

**ईदूदेत् द्विवचनम्** । अत्र स्वरे असधिरिति चानुवर्तते, ईदूदेत् द्विवचनम् स्वरे असधि इत्यन्वय । ननु ईदूदेत् द्विवचनम् इत्यस्य कोऽर्थ ? यदि ईदूदेद्रूप द्विवचनमित्यर्थस्तदा मुनी, धेनू, खट्वे इति सिद्धावपि पचेते इत्यादावसधिर्न स्यात्, तत्र द्विवचनस्यैदन्तत्वेन एद्रूपत्वाभावात् । यदि च शब्दरूप विशेष्यमादाय "प्रत्यय प्रकृत्यादे" ७४।११५१, "विशेषणमन्त" ७४।११३। इति च न्यायद्वयसहकारेण ईदूदेदन्त यद्द्विवचनान्त[1] शब्दरूपमित्यर्थस्तदा मुनी, धेनू, खट्वे, पचेते इत्यादिसिद्धावपि कुमार्यो अगारं—कुमार्यगारम्, वध्वो अगारम्—वध्वगारं इत्यादौ ईदाद्यन्तस्वतो द्विवचनान्तत्वञ्च प्रत्ययलक्षणेन इति असधि स्यादनेन इति, तदभावे यत्न कर्तव्य इत्याशयेन तदर्थमाह भगवन्तो वृत्तिकारा —**ईत् ऊत्, एत् इत्येवमन्तं** इत्यादिना । नन्वेव मुनी, साधू, खट्वे इत्यादौ ईदूदेद्रूपद्विवचनसत्त्वेन तदन्तद्विवचनाभावात् कथमसधिरिति चेदाद्यन्तवद्भावेन तत्सिद्धे । **त्रपुणी अत्र** इत्यादौ आद्यन्तवद्भावेन ईकारान्तद्विवचन स्वराव्यवहितपूर्वं सधिकार्यं न लभते इति समन्वय , एवमन्यत्र । "प्लुतोऽनितौ" इत्यनेन इतिशब्दवर्जिते स्वरे सधिकार्यप्रतिषेध प्लुताना, इतिशब्दस्वरे तु ईदूदेता प्लुतानां सधिकार्यप्रतिषेधोऽनेन, व्यवस्थेय तदा भवेद्यदा सूत्रे तपरकरण न स्यात्, तेन च तत्कालानां बोध इति "ईदूदेत्" इत्यत्र तपरकरण मुखसुखार्थमसदेहार्थमुच्चारणार्थं वा स्वीकृत्य आह—**एषा** इत्यादिना । **एषाम्**—ईदादीनां प्लुतानां, "ईदूदेत् द्विवचनम्" इति सूत्रेण सधिर्न भवति इतौ स्वरे परे । **अपि**शब्दात्तु सिद्ध अनितौ स्वरे प्लुतानामसधि पूर्वसूत्रेण, तदुदाहरति—**अग्नी३ इति** । स्वरे इत्यनुवृत्तिफलमाह—**स्वर इत्येव ?** इत्यादिना । 'सप्तम्यानिर्दिष्टे पूर्वस्य' इति न्यायेन स्वराव्यवहितपूर्वस्य ईदादे संधिनिषेधो, न तु पूर्वस्थिते स्वरे ईदादे सधिनिषेध इत्यत उदाहरति—**तव ई—कामौ तवे**—कामार्थक'इ'शब्दद्विवचन 'ई' इति वृत्तौ प्रदर्शितम् । अत्र यदि तव इत्यत्र अकारे पूर्वस्थिते स्वरे ईदादे सधिनिषेध स्यात्तर्हि तवे इति न सिद्ध्येत् इति भाव । ननु 'तव ई आसाते' इत्यत्र स्वराव्यवहितपूर्वस्य ई इति द्विवचनस्यासधौ पूर्वेणापि तव इत्यस्याकारेण सहासधि स्यादित्यत आह—**प्रत्यासत्तेः** इत्यादिना । अय भाव 'यस्मिन् सति यद्भवति तत्तस्य निमित्तम्' इति 'तव ई आसाते' इत्यत्र परे स्वरे सति "इवर्णादे०" इति यत्व, 'तवे आसाते' इत्यत्र च परे स्वरे सति "एदैतोऽयाय्०" इति अयादेशश्च न भवति, यत्वायादेशयो स्वरप्रत्यासन्नत्वात् स्वरनिमित्तकत्वाच्च, तव ई आसाते इत्यत्र "अवर्णस्येवर्णादिना०" इत्येत्व तु परस्वरमन्तरेणापि भवतीति, एत्वं न स्वरनिमित्तम् न तत्प्रत्यासन्न चेति प्रत्यासत्तिन्यायात् स्वरप्रत्यासन्नस्य स्वरनिमित्तकस्यैव च कार्यस्यानेन निषेधो, न स्वराप्रत्यासन्नस्य स्वरानिमित्तकस्य च कार्यस्य निषेध इति । **प्रत्यासत्तेः**—पूर्वप्रदर्शितप्रत्यासत्तिन्यायात्, **स्वरनिमित्तककार्यप्रतिषेधात्**—स्वरो निमित्त यस्य तत्कार्यं, तस्य प्रतिषेधोऽसधिरित्यनेन सूत्रेण इति शेष तस्मात्, इह—तव ई इत्यत्र **भवत्येव**, एत्वमिति शेष । काशिकाकारवामनजयादित्यमतमाह—**केचित्तु** इत्यादिना, **वर्णयन्ति** इत्यन्तेन । 'म्रियमाणौ च तौ दृष्ट्वा मङ्कित्त्वेदमब्रवीत्' इति पूर्वार्द्ध, तदनन्तर 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इति महाभारतप्रयोग समर्थयन्ते—जयादित्यादयः काशिकाकारा , 'ईदादीना प्रगृह्यत्वे मणीवादीना प्रतिषेधो वक्तव्य' इति हि तद्वचनम्, नेद भाष्यकारवार्तिककारसमतम्, कलिकालसर्वज्ञमतेन तत्प्रयोगसमाधानमाह—**तदयुक्तम्** इत्यादिना, **सिद्धत्वात्** इत्यन्तेन । **वाशब्देनोपमार्थत्वेन सिद्धत्वात्**—उपमार्थत्वेन वाशब्देन सिद्धत्वात् इत्यन्वय । 'व वा यथा तथैवैवम्' इत्यमर । 'व प्रचेतसि जानीयादिवार्थे च तदव्ययम्' इति मेदिनी । अन्यकविप्रयोगद्वारा तमेवासधिं द्रढीकरोति—**मणी इवोद्भिन्न** इत्यादिना, **दर्शनाच्च** इत्यन्तेन । इद पद्य विद्वद्भिस्तु मृग्यम् । **अन्ये तु**—उत्पलादय । **यथा दर्शनम्**—दर्शनमनतिक्रम्य वर्तते इति विग्रह ॥ ३४ ॥

**अदोमुमी** । अत्र स्वरे असधि इति चानुवर्तते, अदोमुमी (अदसो मुमी इति विग्रह ) असधी स्वरे इत्यन्वय , तदर्थमाह—**अदस्संबन्धिनौ** इत्यादिना । **अमुमुइचा**—अमुमञ्चतीति क्विप्, "सर्वादिविष्वग्देवाड्डद्रि क्वयञ्चौ" ३।२।१२२। इति ड्रद्रिरागम , "डिलन्त्यस्वरादे" २।१।११४। इति डिति अन्त्यस्वरादिलोप, "अञ्चोऽनर्चायाम्" ४।२।४६। इति नलोप , टाविभक्तौ अदद्रि अच् आ इत्यवस्थाया "अच् प्राग् दीर्घश्च" २।१।१०४। इति अच च् इकारस्य च दीर्घे, अदद्रीच् आ इति स्थिते, "वाऽद्रौ" २।१।४६। इति उभयोर्दकारयोर्मत्वे, "मादुवर्णोऽनु" २।१।४७। इति अकारस्य रेफस्य च उत्वे अमुमुईचा इत्यत्र स्वराव्यवहितपूर्वं अदस्सबन्धि मु इति संधिकार्यं न भजते इति समन्वय , एवमन्यत्र । मुमी इत्यनयोरदस्संबन्धित्वविशेषण किमर्थमिति पृच्छति—**अदसिति किम् ?** इति । **अम्यत्र**—अमी अत्र इति स्थिते, 'अम्' धातु गत्यर्थ , भावे घञि, तत "अतोऽनेकस्वरात्" ७।२।६। इति इनि च सति सिद्ध्यति, अय मी नादस्संबन्धी इत्यसधिर्न भवति इति भाव ॥ ३५ ॥

---

१ °चनान्त° पु० ।

गवति । गवाग्रम्, गवाजिनम्, गवोष्ट्रः, गवौदनः, गवेश्वरः, पक्षे यथाप्राप्तम्—गोऽग्रम्, गोअग्रम्, गोऽजिनम्, गोअजिनम्, गवुष्ट्रः, गवौदनः; गवीश्वरः। स्वर इति किम्? गोकुलम्। अनक्ष इति किम्? गोऽक्षम्, गोअक्षम्। पदान्त इत्येव? गवि। ओत इत्येव? चित्रग्वर्थ। गोरित्येव? घोऽग्रम्। हे चित्रगवुदकमित्यत्र तु लाक्षणिकत्वाद् गोशब्दस्य न भवति ॥ २९ ॥

## इन्द्रे ॥ १ । २ । ३० ॥

गोरोकारस्य पदान्ते वर्तमानस्येन्द्रस्थे स्वरे परे अव इत्ययमादेशो भवति। गवेन्द्रः, गवेन्द्रयज्ञः। नित्यार्थं वचनम् ॥ ३० ॥

## वाऽत्यसंधिः ॥ १ । २ । ३१ ॥

गोरोकारस्य पदान्ते वर्तमानस्यात्यकारे स्वरे परे असंधिः—प्रकृतिभावो वा भवति। गोअग्रम्, गोअजिनम्। पक्षे यथाप्राप्तम्—गोऽग्रम्, गवाग्रम्, गोऽजिनम्; गवाजिनम्। अतीति किम्? गवेङ्गितम्, गवाननम्। गोरित्येव? घोऽग्रम्। ओत इत्येव? चित्रग्वग्रम्। हे चित्रगोऽग्रमित्यत्र तु लाक्षणिकत्वान्न भवति। पदान्त इत्येव? गौरिवाचरति गवति ॥ ३१ ॥

## प्लुतोऽनितौ ॥ १ । २ । ३२ ॥

इतिशब्दवर्जिते स्वरे परे प्लुतोऽसंधिर्भवति, संधिकार्यभाग् न भवतीत्यर्थः। देवदत्त३ अत्र न्वसि, जिनदत्त३ इदमानय, सुश्लोक३ आगच्छ; सुमङ्गल३ इदमानय। अनिताविति किम्? सुश्लोकेति, सुमङ्गलेति। केचित्तु इतिशब्दे विकल्पमिच्छन्ति—सुश्लोक३ इति, सुश्लोकेति; सुमङ्गल३ इति, सुमङ्गलेति ॥ ३२ ॥

## इ३ वा ॥ १ । २ । ३३ ॥

इ३ इति प्लुतः स्वरे परे वाऽसन्धिर्भवति, इतावप्राप्तेऽन्यत्र च प्राप्ते उभयत्र विकल्पोऽयम्। लुनीहि३ इति, लुनीहीति। चिनुहि३ इदम्, चिनुहीदम्। कथं वशा३ इयम्? वशेयम्?—छान्दसावेतौ ॥ ३३ ॥

---

प्रसज्ये तु प्रतिषेधस्य प्रधानत्वात् अक्षादिसमुदायस्थेऽप्यक्षशब्दाश्रित प्रतिषेध इत्याशय। गो अग्रम्—अत्र पदान्ते गोरोत स्थाने अनक्षशब्दावयवस्वराव्यवहितपूर्वस्य अव इत्यादेश —**गवाग्रम्**, पक्षे "वात्यसंधि" १।२।३१। इति—**गोअग्रम्**, उभयोरप्यभावे "एदोत०" १।२।२७। इति लुक्—**गोऽग्रम्**, एवमन्यत्र। स्वरे, अनक्षे, पदान्ते इति च क्रमेण प्रयोजनपूर्वकमुदाहरति—**स्वर इति किम्?** इत्यादिना, **पदान्त इत्येव? गवि** इत्यन्तेन। ओकारानुवृत्तिफलमाह—**ओत इत्येव?** इति। **चित्रग्वर्थ**.—चित्रा गावो यस्य स चित्रगु, चित्रगवेऽय चित्रग्वर्थं, अत्रोत इत्यननुवृत्तौ 'एकदेशविकृतमनन्यवत्' इति न्यायेन 'गु' इत्यत्रैकदेशविकृतत्वेऽपि गोशब्दव्यवहारात्तस्योकारस्य अव इत्यादेश स्यात्तन्मा भूदिति 'ओत' इत्यनुवृत्तिर्बोध्या। हे चित्रगो उदकम्—अत्र "ओदौतोऽवाव्" १।२।२४। इत्यनेन अव् एव, ननु गोरोतो विद्यमानत्वेन कथन्नाव इत्यादेश इत्याह—**हे चित्रगवुदकमित्यत्र** इत्यादिना। समाधानमुखेन हेतुपूर्वकं स्पष्टयति—**लाक्षणिकत्वाद्**—लक्षणनिष्पन्नत्वात् 'लक्षणप्रतिपदोक्त०' इति परिभाषया **गोशब्दस्य न भवति** इत्यन्वय ॥ २९ ॥

**इन्द्रे**। अत्र गोरोत, पदान्ते, अव, स्वरे इति चानुवर्तते। सूत्रे इन्द्रे स्वरे इत्यन्वयेन "सप्तम्या आदि" ७।४।११४। इत्यादिपदोपस्थिति, तथा सति पदान्ते गोरोत इन्द्रादौ स्वरे अव इत्यादेश इत्यन्वय। नन्वेव गवेन्द्रयज्ञ इति सिद्धावपि गवेन्द्र इति कथमिति चेदायन्तवद्भावेन तत्सिद्धे, तदर्थमाह—**गोरोकारस्य** इत्यादिना। गो इन्द्र—अत्र गोरोत इन्द्रादिशब्दस्वराव्यवहितपूर्वस्य नित्य अव इत्यादेशे—**गवेन्द्रः**। एव गवेन्द्रयज्ञ इत्यपि। ननु पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्याह—**नित्यार्थं वचनम्** ॥ ३० ॥

**वाऽत्यसंधि**.। अत्र गोरोत, पदान्ते, स्वरे इति चानुवर्तते। पदान्ते गो ओत अति स्वरे असंधि वा इत्यन्वय, तदर्थमाह—**गोरोकारस्य** इत्यादिना। असंधिरित्यस्य पर्याय—**प्रकृतिभाव**। **गोअग्रम्**—अत्र अकाररूपस्वराव्यवहितपूर्वस्य गोरोत पदान्तस्थस्य प्रकृतिभाव, **पक्षे यथाप्राप्तम्**—"एदोत पदान्ते०", "स्वरे वाऽनक्षे" इति च। ओकारानुवृत्तिफलमाह—**ओत इत्येच? चित्रग्वग्रम्**—चित्रग्वर्थं इतिवद्बोध्यम्। ननु चित्रगो अग्रम्—अत्र गोरोतो विद्यमानत्वेन कथन्नासंधिरित्याह—**हे चित्रगोऽग्रमित्यत्र तु** इत्यादिना ॥ ३१ ॥

**प्लुतोऽनितौ**। अत्रासंधिः स्वरे इति चानुवर्तते, अतीति नानुवर्ततेऽन्यथा इतिशब्दवर्जनवैयर्थ्यं स्यात्; तदर्थमाह—**इतिशब्दवर्जिते स्वरे** इत्यादिना। **असंधिः** इत्यस्यार्थमाह—**संधिकार्यभाग्** इत्यादिना। **देवदत्त३ अत्रन्वसि**—अत्र "दूरादामन्त्र्यस०" ७।४।९९। इति प्लुतोऽकार। नन्वस्य वाक्यान्तत्वाभावात् कथ प्लुत इति चेत्, कस्यचिद्वाक्यस्यान्तमिदं गृहाण इति प्लुतोऽकार संधिकार्यं दीर्घादिकं न भजते, इतिशब्दवर्जितस्वराव्यवहितपूर्वश्चेति समन्वय। एवमन्यत्र। इतिशब्दवर्जनफलं दर्शयति—**अनिताविति** इत्यादिना, **सुमङ्गलेति** इत्यन्तेन। **केचित्तु इतिशब्दे विकल्पमिच्छन्ति**, अत्र **केचित्तु**—पाणिनीया। "अप्लुतवदुपस्थिते" पा० ६।१।१२९।, शाकटायनीयामोघावृत्तौ—"न प्लुतस्यानितौ" शा० १।१।९९। सूत्रे 'सर्व एव प्लुत साहसमनिच्छता विभाषा वक्तव्य' इति दृश्यते, पाणिनीयभाष्येऽपि "अभीत्प्रेषणे परस्य" पा० ८।२।९२। इति सूत्रे च दृश्यते ॥ ३२ ॥

**इ३ वा**। अत्र प्लुत, स्वरे, असन्धि इति चानुवर्तते। इ३ प्लुत स्वरे असंधिर्वा इत्यन्वय, तदर्थमाह—**इ३ इति प्लुत** इत्यादिना। प्राप्ताप्राप्तविभाषारूपमुभयत्र विकल्पविधायक शास्त्रमिदं क्व प्राप्ते विभाषा क्व चाप्राप्तविभाषा इति निर्दिशति—**इतावप्राप्तेऽन्यत्र च प्राप्ते** इत्यादिना। **लुनीहि३ इति**—अत्रेकार प्लुत सन्धिकार्यं न भजते इति समन्वय। **कथं वशा३ इयम्? वशेयम्?** अत्र कथ प्लुत, कथ न प्रकृतिभाव इत्याह—**छान्दसावेतौ** ॥ ३३ ॥

## ईदूदेत् द्विवचनम् ॥ १ । २ । ३४ ॥

ईत् ऊत् एत् इत्येवमन्तं द्विवचनं स्वरे परेऽसंधिर्भवति । त्रपुणी अत्र, मुनी इह, साधू एतौ, अमू इति, कुण्डे अत्र, माले इति, पचेते इति, पचेथे इति; पचावहे आवाम् । ईदूदेदिति किम् ? वृक्षावत्र । द्विवचनमिति किम् ? कुमार्यत्र । एषां प्लुतानामितावपि संधिर्न भवति—अग्नी३ इति, वायू३ इति । स्वर इत्येव ? तव ई—कामौ तवे, प्रत्यासत्तेः स्वरनिमित्तककार्यप्रतिषेधात् इह भवत्येव, तव ई तवे आसाते । केचित्तु—'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इति प्रयोगदर्शनात् मणी इव मणीवेत्यादावसन्धिप्रतिषेधं वर्णयन्ति, तदयुक्तम्; वाशब्देनोपमार्थेन सिद्धत्वात्, 'मणी इवोद्भिन्नमनोहरत्विषौ' इत्यादावसंधिदर्शनाच्च । अन्ये तु यथादर्शनं संधिमसधिं चेच्छन्ति—मणीव, दंपतीव, रोदसीव मणी इव ॥३४॥

## अदोमुमी ॥ १ । २ । ३५ ॥

अदस्संबन्धिनौ मुमी इत्येतावसंधी भवतः स्वरे परे । अमुमुईचा, अमी आसते, अमी अश्वाः । अदसिति किम् ? अम्यत्र ॥ ३५ ॥

---

**ईदूदेत् द्विवचनम्** । अत्र स्वरे असंधिरिति चानुवर्तते, ईदूदेत् द्विवचनम् स्वरे असंधि इत्यन्वय । ननु ईदूदेत् द्विवचनम् इत्यस्य कोऽर्थ ? यदि ईदूदेद्रूप द्विवचनमित्यर्थस्तदा मुनी, धेनू, खट्वे इति सिद्धावपि पचेते इत्यादावसंधिर्न स्यात्, तत्र द्विवचनस्येदन्तत्वेन एद्रूपत्वाभावात् । यदि च शब्दरूप विशेष्यमादाय "प्रत्यय प्रकृत्यादे" ७।४।११५।, "विशेषणमन्त" ७।४।११३। इति च न्यायद्वयसहकारेण ईदूदेदन्त यद्द्विवचनान्त शब्दरूपमित्यर्थस्तदा मुनी, धेनू, खट्वे, पचेते इत्यादिसिद्धावपि कुमार्यो अगारं—कुमार्यगारम्, वध्वो. अगारम्—वध्वगारं इत्यादौ ईदाद्यन्त स्ततो द्विवचनान्तत्वञ्च प्रत्ययलक्षणेन इति असंधि स्यादनेन इति, तदभावे यत्न कर्तव्य इत्याशयेन तदर्थमाह भगवन्तो वृत्तिकारा —**ईत् ऊत्, एत् इत्येवमन्तं** इत्यादिना । नन्वेव मुनी, साधू, खट्वे इत्यादौ ईदूदेद्रूपद्विवचनसत्त्वेन तदन्तद्विवचनाभावात् कथमसंधिरिति चेदाद्यन्तवद्भावेन तत्सिद्धे. । **त्रपुणी अत्र** इत्यादौ आद्यन्तवद्भावेन ईकारान्तद्विवचन स्वराव्यवहितपूर्व संधिकार्यं न लभते इति समन्वय , एवमन्यत्र । "प्लुतोऽनितौ" इत्यनेन इतिशब्दवर्जिते स्वरे संधिकार्यप्रतिषेध प्लुतानां, इतिशब्दस्वरे तु ईदूदेतां प्लुतानां संधिकार्यप्रतिषेधोऽनेन, व्यवस्थेयं तदा भवेद्यदा सूत्रे तपरकरणं न स्यात्, तेन च तत्कालाना बोध इति "ईदूदेत्" इत्यत्र तपरकरण मुखसुखार्थमसंदेहार्थमुच्चारणार्थं वा स्वीकृत्य आह—**एषां** इत्यादिना । **एषाम्**—ईदादीनां प्लुताना, "ईदूदेत् द्विवचनम्" इति सूत्रेण संधिर्न भवति इतौ स्वरे परे । **अपि**शब्दात्तु सिद्ध अनितौ स्वरे प्लुतानामसंधि पूर्वसूत्रेण, तदुदाहरति—**अग्नी३ इति** । स्वरे इत्यनुवृत्तिफलमाह—**स्वर इत्येव ?** इत्यादिना । 'सप्तम्यानिर्दिष्टे पूर्वस्य' इति न्यायेन स्वराव्यवहितपूर्वस्य ईदादे संधिनिषेधो, न तु पूर्वस्थिते स्वरे ईदादे संधिनिषेध इत्यत उदाहरति—**तव ई—कामौ तवे**—कामार्थकं'ई'शब्दद्विवचन 'ई' इति वृत्तौ प्रदर्शितम् । अत्र यदि तव इत्यत्र अकारे पूर्वस्थिते स्वरे ईदादे संधिनिषेध स्यात्तर्हि तवे इति न सिद्ध्येत् इति भाव । ननु 'तव ई आसाते' इत्यत्र स्वराव्यवहितपूर्वस्य ई इति द्विवचनस्यासवौ पूर्वेणापि तव इत्यस्याकारेण सहासंधि स्यादित्यत आह—**प्रत्यासत्तेः** इत्यादिना । अय भाव 'यस्मिन् सति यद्भवति तत्तस्य निमित्तम्' इति 'तव ई आसाते' इत्यत्र परे स्वरे सति "इवर्णादे०" इति यत्वं, 'तवे आसाते' इत्यत्र च परे स्वरे सति "एदैतोऽयाय्०" इति अयादेशश्च न भवति, यत्वायादेशयो स्वरप्रत्यासन्नत्वात् स्वरनिमित्तकत्वाच्च, तव ई आसाते इत्यत्र "अवर्णस्येवर्णादिना०" इत्येत्व तु परस्वरमन्तरेणापि भवतीति, एत्व न स्वरनिमित्तम् न तत्प्रत्यासन्न चेति प्रत्यासत्तिन्यायात् स्वरप्रत्यासन्नस्य स्वरनिमित्तकस्यैव च कार्यस्यानेन निषेधो, न स्वराप्रत्यासन्नस्य स्वरानिमित्तकस्य च कार्यस्य निषेध इति । **प्रत्यासत्तेः**—पूर्वप्रदर्शितप्रत्यासत्तिन्यायात्, **स्वरनिमित्तककार्यप्रतिषेधात्**—स्वरो निमित्त यस्य तत्कार्यं, तस्य प्रतिषेधोऽसंधिरित्यनेन सूत्रेण इति शेष तस्मात्, **इह**—तव ई इत्यत्र **भवत्येव**, एत्वमिति शेष । काशिकाकारवामनजयादित्यमतमाह—**केचित्तु** इत्यादिना, **वर्णयन्ति** इत्यन्तेन । 'म्रियमाणौ च तौ दृष्ट्वा माद्रिस्त्वत्रेदमब्रवीत्' इति पूर्वार्द्धे, तदनन्तर 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इति महाभारतप्रयोग समर्थयन्ते—जयादित्यादय· काशिकाकारा , 'ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्य' इति हि तद्वचनम्, नेद भाष्यकारवार्तिककारसंमतम्, कलिकालसर्वज्ञमतेन तत्प्रयोगसमाधानमाह—**तदयुक्तम्** इत्यादिना, **सिद्धत्वात्** इत्यन्तेन । **वाशब्देनोपमार्थत्वेन सिद्धत्वात्**—उपमार्थत्वेन वाशब्देन दृढीकरोति—**मणी इवोद्भिन्न** इत्यादिना, **दर्शनाच्च** इत्यन्तेन । इद पद्य विद्वद्भिस्तु मृग्यम् । **अन्ये तु**—उत्पलादय । **यथा दर्शनम्**—दर्शनमनतिक्रम्य वर्तते इति विग्रह. ॥ ३४ ॥

सिद्धत्वात् इत्यन्वय । 'व वा यथा तथैवैवम्' इत्यमर । 'व प्रचेतसि जानीयादिवार्थे च तदव्ययम्' इति मेदिनी । अन्यकविप्रयोगद्वारा तमेवासंधिं

**अदोमुमी** । अत्र स्वरे असंधि इति चानुवर्तते, अदोमुमी (अदसो मुमी इति विग्रह ) असंधी स्वरे इत्यन्वय , तदर्थमाह—**अदस्संबन्धिनौ** इत्यादिना । **अमुमुईचा**—अमुमञ्चतीति क्विप्, "सर्वादिविष्वग्देवाड्ड्रि क्वयञ्चौ" ३।२।१२२। इति ड्द्रिरागम , "डित्यन्त्यस्वरादे " २।१।११४। इति डिति अन्त्यस्वरादिलोप, "अञ्चोऽनर्चायाम्" ४।२।४६। इति नलोप , द्याविभक्तौ अदद्रि अच् आ इत्यवस्थायां "अच् प्राग् दीर्घश्च" २।१।१०४। इति अच च् इकारस्य च दीर्घे, अदद्रीच् आ इति स्थिते, "वाऽद्रौ" २।१।४६। इति उभयोर्दकारयोर्मत्वे, "मादुवर्णोऽनु" २।१।४७। इति अकारस्य रेफस्य च उत्वे अमुमुईचा इत्यत्र स्वराव्यवहितपूर्व अदस्सम्बन्धि मु इति संधिकार्यं न भजते इति समन्वय , एवमन्यत्र । मुमी इत्यनयोरदस्सम्बन्धित्वविशेषण किमर्थमिति पृच्छति—**अदसिति किम् ?** इति । **अम्यत्र**—अमी अत्र इति स्थिते, 'अम्' धातु गत्यर्थ , भावे घञि, तत "अतोऽनेकस्वरात्" ७।२।६। इति इनि च सति सिद्ध्यति, अयं **मी** नादस्सम्बन्धी इत्यसंधिर्न भवति इति भाव ॥ ३५ ॥

---

१ °चनान्त° पु० ।

## चादिः स्वरोऽनाङ् ॥ १ । २ । ३६ ॥

आङ्वर्जितश्चादिरव्ययसंज्ञकः स्वरः स्वरे परेऽसंधिर्भवति । अ अपेहि, आ एवं किल मन्यसे ? आ एवं नु तत्, ई इन्द्रं पश्य, ई ईदृशः संसारः, उ उत्तिष्ठ, ऊ ऊपरे बीजं वपसि, ए इतो भव; ओ ओश्रावय । चादिरिति किम् ? अ ( विष्णो ! ) आगच्छ-आगच्छ । कथं तितउः-परिपवनम् ? "तनेर्डउः" इति डउविधानबलादसंधिर्भविष्यति । उत्तरत्रान्तग्रहणादिह केवलो गृह्यते, तेनेह न भवति-चेति, इतीह, नन्विति; वेति । स्वर इत्येव ? जानु उ जानू । स्वरे परे इति प्रत्यासत्तेस्तन्निमित्तकसंधिप्रतिषेधात्, इह दीर्घत्वलक्षणः संधिर्भवत्येव-जानु उ अस्य रुजति, जानू अस्य रुजति । केचित्तु चाच्चादिस्थानस्याचादिरूपत्वात् स्वरनिमित्तकमपि संधिमिच्छन्ति-जानु उ अस्य रुजति, जान्वस्य रुजति । अनाङिति किम् ? आ ईषदुष्णमोष्णम्, आ इहि एहि, आ उदकान्तात्-ओदकान्तात् प्रिय प्रोथमनुव्रजेत्; आ आर्येभ्यः-आर्येभ्यो यशो गत गौतमस्य । "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्" ॥ ३६ ॥

## ओदन्तः ॥ १ । २ । ३७ ॥

ओकारान्तश्चादिः स्वरे परेऽसंधिर्भवति । अहो अत्र, उताहो इदम्, आहो एतत्, अथो असौ, हहो आगच्छ, अहो एहि; नो इन्द्रियम् । चादिरित्येव ? गवीश्वरः, अगौर्गौः समपद्यत गोऽभवत्; मिथोऽत्र-मिथोशब्दः स्वरादि-

---

चादिः स्वरोऽनाङ् । अत्र स्वरे असंधिरिति चानुवर्त्तते, अनाङ् चादिः स्वरः स्वरे असंधिरित्यन्वयः । अनाङित्यत्र पर्युदासार्थकनञा आङ्भिन्नआङ्सदृशस्योपादानेन "विशेषणमन्तः" इति तदन्तबोधासंभवात् सामानाधिकरण्यलाभः चादिरिति स्वरविशेषणस्य । तथा सति चाद्यन्तर्गतः केवलः स्वरः एवाव्ययसंज्ञकः स्वरेऽसंधिरित्यभिप्रेत्य, तदर्थमाह—आङ्वर्जितश्चादिः इत्यादिना । अ अपेहि-अत्र स्वराव्यवहितपूर्वः आङ्भिन्नआङ्सदृशः, चादिरव्ययसंज्ञकः स्वरः अ इति संधिकार्यं न लभते इति समन्वयः, एवमन्यत्रापि । सूत्रे चादिरित्यस्य फलं पृच्छति—चादिरिति किम् ? अ !(विष्णो !) आगच्छ-अत्र विष्णुवाचकअशब्दस्य संबोधनैकवचनान्तस्य चादित्वाभावादसंधिरिति भावः । तितउशब्दे उकारस्य चादित्वाभावात् कथमसंधिरित्याशङ्कते—कथं तितउः-परिपवनम् ?-चालनीत्यर्थः । समाधत्ते—"तनेर्डउः" उ० ७४८। इत्यादिना । यदि तितउरित्यत्र संधिः स्यात्तर्हि डउप्रत्ययविधानं किमर्थमिति तद्विधानसामर्थ्यादसंधिर्बोध्यः । अत्र चादिपठितः केवल एव स्वरो गृह्यते इत्यत्र मानान्तरमाह—उत्तरत्रान्तग्रहणात्-इत्यादिना । उत्तरत्र-"ओदन्तः" इति सूत्रे अन्तग्रहणं विनाऽपि ओदिति चादिरित्यस्य विशेषणं, तथाच "विशेषणमन्तः" इति न्यायेन तदन्तबोधे सूत्रस्थमन्तग्रहणं बोधयति यत्केवलस्वरग्रहणं भवतीति व्यर्थीभूय ज्ञाप्यान्तरकल्पना, फलमन्यत्र "चादिः स्वरोऽनाङ्" इत्यत्र केवलस्वरबोधः, स्वांशे चारितार्थ्यं "ओदन्तः" इति सूत्रे, यदीदानीमन्तग्रहणं न स्यात्तर्हि केवलस्य ओकारस्य संधिप्रतिषेधः प्रसज्येत न त्वोदन्तस्येति अन्तग्रहणं चरितार्थम् । तेन-केवलस्वरग्रहणेन, इह-चेति इत्यादौ, न भवति-असंधिरिति प्रतिषेधः इति शेषः । स्वरे इत्यनुवृत्तिफलमाह—स्वर इत्येव ? जानु उ-अत्र यः स्वराव्यवहितपूर्वः स न चादिः, यश्चादिः स न स्वराव्यवहितपूर्वः इति दीर्घे सति जानू इति भवति । ननु जानु उ अस्य रुजति इत्यत्र स्वराव्यवहितपूर्वस्य चादेः स्वरस्थानेन संधिप्रतिषेधे पूर्वेण सहाप्यसंधिरित्याह—स्वरे परे इति प्रत्यासत्तेः इत्यादिना । अयं भावः-'यस्मिन् सति यद्भवति तत्तस्य निमित्तमिति' स्वरनिमित्तः यत्वः निषिध्यते, स्वरप्रत्यासन्नत्वात्, स्वरनिमित्तकत्वाच्च, दीर्घत्वं तु स्वरमन्तरेणापि भवति इति न तत्स्वरनिमित्तं, न स्वरप्रत्यासन्नं चेति प्रत्यासत्तिन्यायात्तन्निमित्तकस्यैव कार्यस्य प्रतिषेधो नातन्निमित्तकस्येति सुस्पष्टम् । प्रत्यासत्तेः-प्रत्यासत्तिन्यायात्, तन्निमित्तकसंधिप्रतिषेधात्-तत्-स्वरो निमित्तं यस्य स चासौ संधिप्रतिषेधश्च, तस्मादित्यर्थः । इह-जानु उ अस्य इत्यादौ, दीर्घत्वलक्षणः-दीर्घत्वं-लक्षणं स्वरूपं यस्य स इति विग्रहः । संधिर्भवत्येव-"समानानां तेन०" १।२।१। इत्यनेनेति शेषः, तदुदाहरति-जानु उ अस्य रुजति-जानू अस्य रुजति इति । जानु उ जानू इत्यत्र दीर्घो हि चादिस्थाननिष्पन्नोऽचादिस्थाननिष्पन्नश्च, जानु इत्यत्र उकारस्य अचादित्वात्, उ इत्यस्य चादित्वाच्च, इत्थं च 'उभयस्थाननिष्पन्नोऽन्यतरव्यपदेशभागिति' न्यायेन दीर्घोऽचादिरूप एवेति स्वीकुर्वतां प्राचां मतविशेषमवतारयति—केचित्तु इत्यादिना । चाच्चादिस्थानस्य-चादिश्च अचादिश्च तौ स्थानं यस्य तस्य, अर्थात्-चाच्चादिस्थानजातस्येत्यर्थः, अचादिरूपत्वात्-उभयस्थानजातत्वेन अचादिरूपत्वं दीर्घस्य तस्मादित्यर्थः । स्वरनिमित्तकम्-स्वरो निमित्तं यस्य तम्, संधिम्-यत्वमपि, इच्छन्ति केचित्—प्राञ्च इत्यन्वयः । नञनाङ् इति पर्युदासः, स किमर्थः इति पृच्छति—अनाङिति किम् ? ईषदुष्णम्-ओष्णम्-इत्यादौ आङ्, अतो न संधिप्रतिषेधः । ननु सर्वत्र 'आ' इत्यस्यैव श्रवणं तथाच कथं बोध्यमयमाकारः आङोऽयमनाङ् इति तद्व्यवस्थापकं श्लोकं वक्ति—ईषदर्थे इत्यादिना । श्लोकसमन्वयो यथाक्रमं पूर्वोक्तोदाहरणेषु ओष्णमित्यादिषु बोध्यः ॥ ३६ ॥

ओदन्तः । अत्र चादिः स्वरे असंधिरिति चानुवर्तते, ओदन्तः चादिः स्वरे असंधिरित्यन्वयः, तदर्थमाह—ओकारान्त इत्यादिना । अहो अत्र इत्यत्र स्वराव्यवहितपूर्वस्य अहो इत्योकारान्तस्य चादेः संधिप्रतिषेधः, एवमन्यत्र भाव्यः । चादिरित्यनुवृत्तिफलमाह—चादिरित्येव ? गवीश्वर इत्यादिना । गोशब्दस्य ओकारान्तस्य स्वराव्यवहितपूर्वस्य चादित्वाभावेन नासंधिः । अगौर्गौः समपद्यत इति तु—गोऽभवत् इत्यस्यार्थबोधनम् । अत्रासंधिर्न भवति ओदन्तत्वेऽपि चादित्वाभावात्, "अधण्तस्वाद्याशसः" इत्यव्ययत्वे "गतिः" इति वाऽव्ययत्वे सत्यपि, "एदोत०" इत्यकारलोपः । मिथोऽत्र-अत्र मिथो इत्यस्यौदन्तत्वेऽप्यसंधिर्न भवति स्वरादिपाठेन चादित्वाभावात्, संधिस्तु प्राग्वद्बोध्यः, तदेव दर्शयति-मिथो शब्दः स्वरादि इत्यादिना । तिरोऽभवत्, नमोऽकरोत्, अदोऽभवत् एषु प्रतिपदोक्तौकारान्तत्वाभावेन लक्षणनिष्पन्नौकारान्तत्वात्, लक्षणप्रतिपदोक्तपरिभाषया "ओदन्तः" इति सूत्रेण नासंधिः । एवमेवैषां स्वरादित्वेन चादित्वाभावोऽप्यसंध्यभावे निमित्तम् तदाह—

---

१ विस्मये इ इन्द्र० म०म०, अहो इ इन्द्र माण्डा० । २ आगच्छ इति द्वितीयपदं नास्तीति माण्डा० । ३ स्वरे०×× इति० म० म० । ४ अथो म० म० ।

र्नतु चादिः । तिरोऽभवत्, नमोऽकरोत्, अदोऽभवदित्यादिषु लाक्षणिकत्वाच्च न भवति । अहो इत्यादयोऽखण्डाश्चादय इति पृथग्योगः ॥ ३७ ॥

## सौ नवेतौ ॥ १ । २ । ३८ ॥

सिनिमित्तो य ओदन्तः स इतौ परेऽसंधिर्वा भवति । पटो इति, पटविति; साधो इति, साधविति । साविति किम्? अहो इति । गवित्ययमाह—गौरिति वक्तव्येऽशक्त्या गो इत्युक्तमनुक्रियते, स्याद्वादाश्रयणाच्चानुकार्यानुकरणयोरभेदविवक्षायामसत्यर्थवत्त्वे विभक्तिर्न भवति । इताविति किम्? पटोऽत्र ॥ ३८ ॥

## ॐ चोञ् ॥ १ । २ । ३९ ॥

उञ्शब्दश्चादिरितिशब्दे परे वाऽसंधिर्भवति, असंधिपक्षे च उञ् ॐ इत्येवंरूपो दीर्घोऽनुनासिको वा भवति; तथाच सति त्रैरूप्यं सिद्धं भवति । उ इति, ॐ इति; विति । इताविल्येव? उ उत्तिष्ठ । ञित्करणं स्वरूपपरिग्रहार्थम्, तेन विकृतस्य न भवति—अह उ अहो, अहो इति; एवमुताहो इति । अथ ॐ इत्येव चादिषु पठ्यतां किमादेशेन? नैवम्, तस्यानितावपि प्रयोगः प्रसज्येत तन्निषेधार्थमादेशवचनम् ॥ ३९ ॥

## अञ्वर्गात् स्वरे वोऽसन् ॥ १ । २ । ४० ॥

ञकाररहितेभ्यो वर्गेभ्यः पर उञ् स्वरे परे वकारो वा भवति, स चासन्—अभूतवत् । कुङ्ङ्वास्ते, कुङ्ङ् आस्ते, किम्वावपनम्, किमु आवपनम्; किम्वुष्णम्, किमु उष्णम्, किम्विति, किमु इति, किमूँ इति, किंविति, किँविँति, जानु उ जानू

---

तिरोऽभवत्, नमोऽकरोत्, अदोऽभवदित्यादिषु इत्यादिना, न भवति इत्यन्तेन । लाक्षणिकत्वाच्च—अत्र च समुच्चये चादित्वाभावात् इति समुच्चिनोति । °अदोऽभवदित्याद्यपि° पु० प्रतौ पाठस्तत्रापि शब्दात् समुच्चय, तिरस् नमस् अदस् इत्याद्यपि मिथोशब्दवत् स्वरादिर्न चादि, परन्त्वस्मिन् पाठेऽसध्यभावे हेतुद्वय चादित्वाभावो लाक्षणिकत्व च न प्राप्नोति, इति पूर्वोक्तताडपत्रीयप्रतिपाठ समीहित आभातीति दिक् । यद्यपि 'अहो' इत्यादिचादिसमुदायस्यापि चादित्वात् पूर्वेण संधिप्रतिषेध प्राप्नोति, तथाप्येषामखण्डत्वात् चादि स्वर इति संधिप्रतिषेधो न भवति । स च प्रतिषेध एकनिपातरूपचादिस्वरेषु प्रवर्तत इति पृथग्योगारम्भ इत्याह—अहो इत्यादय इत्यादिना ॥ ३७ ॥

सौ नवेतौ । अत्रासंधिः ओदन्त इति चानुवर्तते, सौ ओदन्त इतौ असंधि नवा इत्यन्वय, तदर्थमाह—सिनिमित्तो य इत्यादिना । पटो इति—अत्र इतिशब्दाव्यवहितपूर्वे सिप्रत्यय मत्वा जातोदन्त पटो इति विभाषा संधिप्रतिषेध लभते, तदभावेऽव्-पटविति, तत्र "स्वरे वा" इत्यनेन वस्य विभाषा लुकि पट इति भवति, एवमन्यत्र । सौ इत्यस्य फल पृच्छति—साविति किम्? गवित्ययमाह—अत्र गो इत्योदन्तो न सिनिमित्त, किन्तु अनुकरण, अशक्त्योच्चारयित्रोक्तमन्यपृष्टेन तत्समीपवर्तिना केनचिदनुकृत तन्निदिशति—गौरिति वक्तव्ये इत्यादिना । नन्वत्रानुकरणे विभक्ति कथन्न भवति इति विशङ्क्य स्याद्वादसमाश्रयणेन अनुकार्यानुकरणयोर्भेदाभेदविवक्षापक्षद्वयेऽभेदविवक्षायामर्थवत्त्वाभावेन नामत्वाभावाच्च विभक्त्युत्पत्तिरित्याह—स्याद्वादाश्रयणाच्च इत्यादिना । अत्र चो हेतौ यत स्याद्वादाश्रयणमतोऽनुकार्यानुकरणयो पूर्वोक्तपक्षद्वय इत्यक्षरार्थ । अत्र नवेत्युक्तिरधिकाराय, अन्यथात्र वेत्युक्तावपि विकल्पसिद्धेस्तेन यत्र नवेत्युक्तिस्तत्र साधिकारार्था वेदितव्या, यत्र तु वेति तत्र नाधिकार, रीतिरिय भगवतामाचार्याणां नवेत्युक्त्या ज्ञायते ॥ ३८ ॥

ॐ चोञ् । अत्रासंधि चादि नवा इतौ इति चानुवर्तते, चादि उञ् इतौ नवा असंधि च नवा ॐ इत्यन्वय, तदर्थमाह—उञ्शब्द इत्यादिना । उइति—अत्र इतिशब्दाव्यवहितपूर्वे उञ् शब्दश्चादिर्नवा असंधि, असंधिपक्षे ॐ इत्यादेशो दीर्घानुनासिकरूपो यथा—ॐइति । असंधिपक्षे ॐ इत्यादेशाभावे असंध्यभावे च "इवर्णादे०" १।२।२१। इति वत्वे—विति इति रूपत्रयम् विकल्पद्वयेन सिध्यति । अत्र सूत्रे उञित्यत्र ञकारानुबन्ध किमर्थ? उ इत्येवोच्यतामित्यत आह—ञित्करणं स्वरूपपरिग्रहार्थम् । उञ् इत्यत्र ञकारानुबन्धकरणफल स्वरूपस्वीकृत्यर्थम्, तत्फलमाह—तेन विकृतस्य न भवति । अयमाशय—निरनुबन्धसानुबन्धभेदेन उकारद्वय, तत्र निरनुबन्धस्योकारसौत्व भवति, यथा अह उ—अहो इति, अत्र सूत्रमिद न प्रवर्तते, उकारस्य ञित्वाभावेन विकृतत्वात् । कृतादेशेऽस्याप्रवृत्तेरेव जानू अस्य इत्यत्र वत्व "अञ्वर्गात्०" इति भवति, अन्यथानेनासंधि स्यात् । अथवा—ॐचोञ् इत्यत्र उकारप्रश्लेषात् उ उञ् इति उकाररूप उञ् गृह्यते, तेन अहो इत्यादौ उकाररूपस्य तयोऽभावेन नानेनासंधि । नन्वत उञिति एतदर्थक अञ्वर्गादित्यत्रानुवर्तते, तथा सति जानू अस्य० इत्यादौ कथ "अञ्वर्गात्०" इति वत्वमिति चेत्, उच्यते—तत्र जातिपक्षाश्रयणेन दीर्घीभूतोकारस्यापि वत्वसिद्धे । ननु ॐ इति, चादिगणपाठे "चादि स्वरोऽनाङ्" इत्यनेनासंधौ सति सिद्ध उ इति, उञ् इत्येतत्सूत्रेण सिद्ध, तदभावपक्षे "इवर्णादे०" इति वत्वे विति इति रूपत्रयसिद्धौ ॐ च इत्यादेशवचन किमर्थम्? इत्याशङ्कते—अथ ॐ इत्येव चादिषु इत्यादिना । समाधत्ते—नैवम् इत्यादिना, आदेशवचनम् इत्यन्तेन । अय भाव यद्युकारीसा चादिपाठे ॐ इत्यस्य रूपत्रयसिद्धावपि अनितौ—'ॐ अत्र' इत्यादिरपि प्राप्येत तन्मा भूदिति ॐ च इत्यादेशवचनमिति ॥ ३९ ॥

अञ्वर्गात् स्वरे वोऽसन् । अत्र नवा उञ् इति चानुवर्तते । अञ्वर्गात् उञ् स्वरे व नवा, स च व असन् इत्यन्वय, न ञ् अञ् स चासौ वर्गश्च अञ्वर्ग तस्मात् इति अञ्वर्गादित्यस्य विग्रह, तदर्थमाह—ञकाररहितेभ्यो वर्गेभ्य इत्यादिना । स च—व इति, असन्—अभूतवत्, मुख्यार्थबाधे लक्षणाबललभ्योऽयमर्थ, अन्यथा वकारादेशोऽसन्नित्युक्त्या तद्विधानवैयर्थ्यं स्यात् । अतिदेशे तु कुङ्ङ्आस्ते इत्यत्र स्वराव्यवहितपूर्वो ञकाररहितवर्गङकारात् परश्च उञ् दकारो भवतीति कुङ्ङ्वास्ते इत्यवस्थायामनेन असिद्धवद्भावे च वकार स्वर मत्वा "ह्रस्वान्ङ्णनो द्वे" १।३।२७। इत्यनेन ङ्द्वित्वम् भवति । अतिदेशाभावे तु द्वित्व स्वराभावान्नस्यात् । एवमन्यत्र । किम्विति—अनेन सूत्रेण वत्वे सति भवति । किमु इति—"ॐ चोञ्" इत्यनेनासंधौ सति भवति । किमूँ इति—असंधिपक्षे दीर्घानुनासिकादेशे सति भवति । किंविति—"इवर्णादे०" इति वत्वे, "तौ मुमो०" १।३।१४। इत्यनुस्वारे च सति भवति । किँविँति—"इवर्णादे०" इति वत्वे, "तौ मुमो०"

१ °लाक्षणिकत्वाच्च न भवति अय पाठो नास्तीति पु० ।

जान्व्वस्य रुजति, जानू अस्य रुजति; तद्व्वस्य मतम्, तदु अस्य मतम् । वर्गादिति किम्? स्वरु उपैति, अन्तरु उपैति । अञिति किम्? धत्तु एति । स्वर इति किम्? किमु गच्छति । असत्त्वाद् द्वित्वमनुस्वारानुनासिकाभावश्च ॥ ४० ॥

## अइउवर्णस्यान्तेऽनुनासिकोऽनीदादेः ॥ १ । २ । ४१ ॥

अवर्णस्येवर्णस्योवर्णस्यच अन्ते—विरामे वर्तमानस्यानुनासिक आदेशो वा भवति, **अनीदादेः**—न चेदयम् "ईदूदेत् द्विवचनम्" ॥ १ । २ । ३४ ॥ इत्यादिसूत्रसंबन्धी भवति । पदान्ताधिकारेऽन्तग्रहणं विरामप्रतिपत्त्यर्थम्, स च विरामो भवन् पदस्यान्ते भवति, केवलमुपसर्गस्य समासान्तर्वर्तिनश्च न भवति । सामँ, साम, खट्वाँ, खट्वा, दधिँ, दधि; कुमारीँ, कुमारी; मधुँ, मधु, वृक्षेणँ, वृक्षेण, नामँ अत्र, नाम अत्र, दधिँ अत्र, दधि अत्र, मधुँ अत्र, मधु अत्र, वृक्षेणँ अत्र, वृक्षेण अत्र; विरामत्वाच्च सन्धिर्न भवति । अइउवर्णस्येति किम्? कर्तृ, हर्तृ । अन्त इति किम्? दधि करोति, मधु करोति, वृक्षः । अनीदादेरिति किम्? अग्नी, वायू, अमू, अमी, किमु । चादिसूत्रे चादेः स्वरस्य केवलस्याङ्वर्जितस्य च ग्रहणादिह भवत्येव—अँ इति विष्णोः सबोधनम्, प्लक्षश्चँ, न्यग्रोधश्चँ, पाटलिपुत्रादाँ ॥ ४१ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां श्रीसिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनतत्त्वप्रकाशिकावृत्तौ प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ २ ॥

**पूर्वभवदारगोपीहरणस्मरणादिव ज्वलितमन्युः ।**
**श्रीमूलराजपुरुषोत्तमोऽवधीद्दुर्मदाभीरान् ॥ २ ॥**

---

इत्यनुनासिके च सति भवति । **जान्व्वस्य रुजति**—अत्र असन्नित्यत्र वा इति योजने पक्षे वस्य सत्त्वविधानात् "ततोऽस्याः" १।३।३४। इत्यनेन वकारद्वित्वम् । अथवा 'नञा निर्दिष्टमनित्यम्' इति न्यायस्य "ह्स्वान्ङ्णनो द्वे", "तौ मुमो व्यञ्जने स्वौ" इत्यनयोरेव विषये नित्यत्वम्, अन्यत्र च तस्यानित्यत्वेन सत्त्व बोध्यमिति "ततोऽस्याः" इति विषये वस्य सत्त्वेनापि द्वित्व भवति । **तद्व्वस्य मतम्—तदु अस्य मतम्** इत्यवस्थायामनेन वत्वे तद्वस्य इत्यत्र "ततोऽस्याः" इत्यनेन वकारस्य सत्त्वपक्षे द्वित्व, नित्यत्वादिकारणेभ्य "अदीर्घाद्वि०" इति बाधित्वा प्रवर्तते । वर्गात् इत्यस्य फल समाधानमुखेनाह—**वर्गादिति किम्?** इत्यादिना, **उपैति** इत्यन्तेन । अञ् इत्यस्य फल समाधानमुखेन पृच्छति—**अञिति** इत्यादिना, **एति** इत्यन्तेन । स्वरे परे इति वृत्तिस्थपदस्य फलमाह—**स्वर इति किम्** इत्यादिना । ननु कुड्ङ्वास्ते इत्यत्र परत्वाद्वत्यपेक्षया पूर्वं "ह्स्वा०" इति द्वित्वे, ततोऽनेन वत्वे रूपसिद्धौ असन् इति किमर्थमिति चेदुच्यते ततोऽपि नित्यत्वात् पूर्व वत्वप्रवृत्तेरिति असन्नित्यभावे परत्र स्वराभावेन द्वित्वाप्राप्तेरित्याह—**असत्त्वाद्द्वित्वम्** । **किम्विति** इत्यादावनेन वत्वे तस्य चासत्त्वे "तौ मुमो०" इत्यनेन परत्र व्यञ्जनाभावेन अनुस्वारानुनासिकौ न भवत इत्याह—**अनुस्वारानुनासिकाभावश्च** असत्त्वादिति शेष ॥ ४० ॥

**अइउवर्णस्यान्तेऽनुनासिकोऽनीदादेः** । अत्र नवा इत्यनुवर्तते पदान्त इति च, अनीदादे अन्ते अइउवर्णस्य नवा अनुनासिक इत्यन्वय । ईदूदेद्द्विवचनमित्यादिसूत्राविषयाणामन्ते वर्तमानानां पदान्तानां, अइउवर्णानां नवा अनुनासिकादेश इत्यर्थमाह—**अवर्णस्य** इत्यादिना । ननु पदान्ते इत्यनुवृत्तौ सूत्रेऽन्तग्रहण किमर्थमित्यत आह—**पदान्ताधिकारे** इत्यादिना, **प्रतिपत्त्यर्थम्** इत्यन्तेन । अन्ते—विरामे वर्तमानानां सतां पदान्तानां, अइउवर्णानाम् इत्यर्थ, तदाह—**स च विरामो** इत्यादिना, तदर्थफलमाह—**केवलमुपसर्गस्य** इत्यादिना । अयमाशय —केवल 'प्र' इत्याद्युपसर्गाणां पदान्तत्वेऽपि विरामावृत्तेर्न भवत्यनुनासिकोऽनेन । एवमेव समासान्तर्वर्तिनां पदान्तत्वेऽपि विरामावृत्तेर्न भवत्यनुनासिक इति । **सामँ**—अत्र विरामवृत्ते सत पदान्तस्याकारस्य, "ईदूदेद्०" इत्यादिसूत्राविषयस्यानुनासिकादेशस्तदभावे—**साम** इति भवति, एवमन्यत्र । ननु **नामँ अत्र, नाम अत्र** इत्यादौ अनुनासिकादेशे वा तदभावे कथं न सन्धिरित्याह—**विरामत्त्वाच्च संधिर्न** इत्यादिना । "न सन्धि" इति सूत्रेणेति शेष । सूत्रे अइउवर्णस्य इति फल पृच्छति—**अइउवर्णस्येति किम्? कर्तृ**—अत्र ऋकारस्य अइउवर्णत्वाभावेन नानुनासिकादेश । सूत्रे अन्त इति फल पृच्छति—**अन्त इति किम्? दधि करोति**—अत्र विरामाविवक्षया विरामवृत्तित्वाभावान्नानुनासिक । **वृक्षः**—ननु वृक्ष इत्यत्राकारस्य पदान्तत्वाभावेन सूत्राप्रवृत्ते, पदान्त इति अन्त इति च पदद्वयफलमिदं कथ भगवता वृत्तिकृता अन्त इत्यस्यैव फलतया प्रदर्शितमिति चेत् वृक्षाकारस्य "कादि"रिति कस्यादिरिति विग्रहे विसर्गस्य व्यञ्जनत्वेन तस्मिन् परे "नामसिद०" इत्यनेन पदान्तत्वाद्युक्त फलम् । सूत्रे अनीदादेरिति फल पृच्छति—**अनीदादेरिति किम्? अग्नी, वायू, अमू, अमी, किमु**—एषु यथाक्रम "ईदूदेत् द्विवचनम्" "अदो मुमी" "अन्वर्गात्स्वरे वोऽसन्" इति सूत्रविषयत्वमतो नास्य सूत्रस्य प्रवृत्ति । अनीदादेरित्युक्त्याऽस्य सूत्रस्य "चादि स्वरोऽनाङ्" इति सूत्रविषयेऽप्रवृत्ति, किन्तु विष्णुवाचकअशब्दसंबोधने तदविषयमवबुध्यैतत्सूत्रप्रवृत्तौ न कश्चिद्दोष । ननु कथ अ—विष्णो इत्यत्र चादिरिति सूत्राविषय इत्यत आह—**चादिसूत्रे चादेः स्वरस्य** इत्यादिना । **'अ—विष्णो'** इत्यत्र चादित्वाभावात् तदविषय स्पष्ट एव । **प्लक्षश्चँ**—इत्यादौ चस्य चादित्वेऽपि केवलस्वराभावात्तदविषय । **पाटलिपुत्रादाँ**—अत्राङ्ग युक्तात् पाटलिपुत्रशब्दात् पञ्चमी "आङावधौ" २।२।७०। इति, "चादि स्वरोऽनाङ्" इति सूत्रेऽनाङित्युक्ते स्पष्टमेव तदविषयत्वमिति भाव, सर्वेष्वेतेषूदाहरणेष्वनेनानुनासिक इति दिक् ॥ ४१ ॥

**पूर्वभवदारगोपी०** । पूर्वस्मिन् भवे ये दारा—प्रमदा एव गोप्यो—विषयगामीनीन्द्रियाणि, तासां हरण तस्य स्मरण तस्मादिव, अत एव **ज्वलितः**—प्रदीप्त, **मन्युः**—क्रोधो यस्य तथोक्त श्रिया युतो **मूलराजः पुरुषोत्तमः**—श्रीकृष्ण इव वा तादृशो **मूलराज** एव **पुरुषोत्तमः** । **दुर्मदा**—दुष्टा मदादय एव आभीरास्तान् **अवधीत्**—जघान । अथवा—पूर्वभवे दारा एव गा—इन्द्रियाणि तानि पान्तीति पूर्वभवदारगोपा वाचयमा—वशीकृतेन्द्रिया —सत्पुरुषास्तेषाम् ई —सपत्ति साधुतारूपा तस्या हरण इत्यादि प्राग्वद्बोध्यम् । गोपीत्यत्र हलीशावत् पृषोदरादित्वादकारलुक्, अतएव मूलराज पुरुषोत्तमोऽन्यथा तु पुरुष एव । सत्पुरुषा हि स्वीयसाधुतासंपत्तिविनाशकविनाशप्रवीणा अयं तु तेष्वुत्तमस्तेषां विनाशस्मृते प्रदीप्तकोपत्व । अस्य तु परमपरोपकारप्रवणत्वेनान्यधनविनाशेऽपि क्रोधो जायते इति महद्वैशिष्ट्य मूलराजस्य ॥ २ ॥

विश्रुत जगति कस्यचन पुरुषविशेषस्य स्वधनस्वस्य च साधुताया अवने बद्धपरिकर एतावता स्पष्टमेव तस्य पुरुषोत्तमत्व, ज्वलितमन्युत्व च ।

इति श्रीमत्तपागच्छगगनाहर्मणिगीतार्थसार्वभौमाऽऽगमोद्धारकशैलानान्नृपतिपरिपूजितपादारविन्दआगमोदयसमिति—वर्द्धमानजैनागममन्दिरायनेकशासनहितवर्धकसस्थानिर्माणोपदेशकभट्टारककुलमूर्द्धन्यश्री १००८ **आनंदसागरसूरीश्वराणां** साम्राज्ये तच्चरणनिलीनमानसेनानवाप्तनवपदपीयूषपानोद्यतभव्यभावभावोद्बोधसूर्योदयश्रीसिद्धचक्र—नवपदाराधकसमाजादिविविधसस्थासंस्थापकेन श्रीवर्द्धमानतपोनिष्णातेन श्रीसिद्धचक्राराधन—तीर्थोद्धारकेण **पन्न्यासप्रवरश्रीचन्द्रसागरगणीन्द्रेण** विरचितायां श्रीसिद्धहेमचन्द्रसूत्रशतिन्यायरत्नाकरावतारिकायाम् **आऽऽनन्दबोधिन्यां** प्रथमस्याध्यायस्य स्वरसंधिप्रकरण नाम द्वितीय पाद ॥२॥

---

१ जान्वस्य रुमति खं० ता०, म० म० । २ तद्द्वस्य मतम् म० म०, तद्वस्य मतम् ख० ता० । ३ विरामे म० म० ।

## ॥ अर्हं ॥

# तृतीयः पादः ॥

## तृतीयस्य पञ्चमे ॥ १ । ३ । १ ॥

वेति, पदान्त इति; अनुनासिक इति चानुवर्तते । वर्गतृतीयस्य पदान्ते वर्तमानस्य वर्गपञ्चमे परे वाऽनुनासिको भवति, स्थान्यासन्नः । वाङ् ङवते, वाग् ङवते, वाङ्ञकारः, वाग्ञकारः, वाङ् णकारीयति, वाग् णकारीयति, वाङ् नयति, वाग् नयति, वाङ् मधुरा, वाग् मधुरा; एव पण् नयाः, पड् नयाः, तन्नयनम्, तद् नयनम्; ककुम्मण्डलम्, ककुब्मण्डलम् । तृतीयस्येति किम्? स्वर्नयति, हल्मात्रम् । पदान्त इत्येव? विद्मः । पञ्चम इति किम्? वागत्र, पड् गच्छन्ति । केचित्तु व्यञ्जनस्य स्थानेऽनुनासिके वाऽनुनासिकमिच्छन्ति, तस्य तु "ह्रस्वान्ङणनो द्वे" ॥ १ । ३ । २७ ॥ इति द्वित्वं च नेच्छन्ति, तन्मते-त्वङ्ँ इति, त्वगँ इति; श्वलिँण्ँ इति, श्वलिड्ँ इति; तनँ इति, तद्ँ इति, हल्ँमात्रम्, हलँमात्रम् । ननु पणनया इत्यादौ "अदीर्घाद्विरामैकव्यञ्जने" ॥ १ । ३ । ३२ ॥ इत्यनेन तृतीयस्य द्वित्वे कृतेऽन्तस्यानुनासिके च तृतीयस्यापि श्रुतिः प्राप्नोति? नैवम्, अनुनासिके कृते पश्चाद् द्वित्वस्य भावात्-तेन पण्ण्नयाः, पड्ड्नयाः इत्यादि सिद्धम् ॥ १ ॥

---

**तृतीयस्य पञ्चमे** । अत्र "सौ नवेतौ" इत्यतो नवेति, "एदोतः पदान्तेऽस्य लुक्" इत्यतः पदान्त इति, "अड्डयोर्ग्यां०" इति अनुनासिक इति चाऽनुवर्तते, स च विधेयस्तस्मिन् नवेति सम्बध्यते, पदान्त इति तृतीयस्य इत्यनेनान्वेति । कस्य तृतीयः? कस्य पञ्चमः? इति च जिज्ञासायां वर्गस्येति लभ्यते, तथा च-पदान्ते वर्गतृतीयस्य वर्गपञ्चमे नवाऽनुनासिक इत्यन्वयः, तत्प्रर्थमभिप्रेत्यान्वयार्थमाह—**वेति पदान्त** इत्यादिना, **भवति** इत्यन्तेन भगवन्तो वृत्तिकाराः । ननु वर्ग्या अनुनासिकाः पञ्च ङञणनमाः इति वर्गतृतीयस्यैकस्य स्थाने कथमादेशपञ्चकमित्याह—**स्थान्यासन्न** आदेश इति शेषः । यद्वर्ग्यस्तृतीयस्तद्वर्ग्य एवानुनासिकादेश इत्यतो नानुनासिकपञ्चकादेशापत्तिरिति भावः । **वाङ् ङवते**-वाच् ङवते इत्यवस्थायां सैद्धेकि "चजः०" २।१।८६। इति चस्य कत्वे, "धुटस्तृतीयः" २।१।७६। इति गत्वे—**वाग् ङवते** इति स्थिते वर्गपञ्चमङकाराव्यवहितपूर्वस्य पदान्तस्यस्य वर्गतृतीयगकारस्य स्थाने स्थान्यासन्ने पाक्षिकेऽनुनासिकादेशे सति सिध्यति, एवमन्यत्रापि । **वाङ् ञकारः**—वाचो ञकार इति समासः । **वाङ् णकारीयति**-णकारमिच्छति "अमाव्ययात्०" ३।४।२३। इति क्यनि । **वाङ् मधुरा**—वाचा मधुरा इति तृतीया समासोऽसमासो वा । **पण् नयाः**—पष्शब्दाद्विहितजसो "डतिष्ण सङ्ख्यायाः०" १।४।५४। इति लुपि षस्य "धुटस्तृतीयः" इति डत्वे पड् नयाः इति स्थितेऽनेनानुनासिके णे सति सिध्यति, टवर्गयोगेऽत्र "तवर्गस्य०" १।३।६०। इति नस्य णत्वं "पदान्तात्०" १।३।६३। इति निषेधान्न भवति । **तन्नयनम्**—तद् नयनम् इति स्थिते, "धुटस्तृतीयः" इति दस्य दत्वे, तस्यानेनानुनासिके तन् नयनम् इत्यत्र "नाम्नो नोऽनह्नः" २।१।९१। इति न लोपो न भवति, दस्यासत्त्वेन तत्स्थानापन्नस्य नस्याप्यसत्त्वात् । **ककुम्मण्डलम्**—ककुभां मण्डलमिति विग्रहः, ककुभ् मण्डलम् इत्यत्र "धुटस्तृतीयः" इति भस्य बत्वेऽनेन तस्यानुनासिके सति सिध्यति, "तौ मुमो०" १।३।१४। इति अनुस्वारस्तु पूर्वस्मादसदित्यनुवृत्तेर्मस्य न भवति, 'लक्षणपरिभाषया', 'असिद्धमिति' न्यायेन वा । सूत्रे तृतीयस्येत्यस्य फलं पृच्छति—**तृतीयस्येति किम्?** इति । **हल्मात्रम्**—हलेव हल्मात्रम्, कश्चित्स्वार्थे मात्रट् । हल् च तत् मात्रं चेति 'मात्रमवधारणे', हल् मात्राऽस्येति वा विग्रहः, अत्र नानुनासिको लस्य वर्गतृतीयत्वाभावात् । पदान्त इत्यस्य फलमाह—**पदान्त इत्येव?** इति । **विद्मः**-विदेर्मसिरूपम्, अत्र न वर्गतृतीयस्य दस्यानुनासिकः पदान्तत्वाभावात् । पञ्चम इत्यस्य फलं पृच्छति—**पञ्चम इति किम्? वागत्र**—अत्र वर्गपञ्चमाव्यवहितपूर्वत्वं वर्गतृतीयस्य नास्ति किन्त्वकाराव्यवहितपूर्वत्वमस्तीति भावः । व्यञ्जनस्य स्थानित्वमनुनासिकमात्रस्य तु निमित्तत्वमिच्छतां पाणिनिशाकटायनदेवनन्दिविश्रान्तविद्याधराणां मतमाह—**केचित्तु** इत्यादिना । "यरोऽनुनासिकेऽनुनासिको वा" पा० ८।४।४५।, "हलोऽनुनासिकेऽनुनासिकः स्वः" शा० १।१।१०६।, "यरो ङो विभाषा ङे" जै०५।४।१२५। देवनन्दी इति जैनेन्द्रप्रक्रियायां । ननु येषां मते व्यञ्जनस्य स्थानेऽनुनासिके परेऽनुनासिक इति तन्मते "ह्रस्वान्ङणनो द्वे" १।३।२७। इति द्वित्वं भवति नवेत्यत आह—**तस्य तु "ह्रस्वान्ङणनो द्वे"** इत्यादिना । **तस्य**—अनुनासिकस्य, तु इत्यग्रिमेण सम्बध्यते, **नेच्छन्ति** पाणिन्यादय इति, **तन्मते**—उदाहरति **त्वङ्ँ** इत्यादिषु त्रिषु च उभितिः कृतगडदानां ङणना सिद्धाः, असदित्यधिकाराच्च "ह्रस्वात्०" इति द्वित्वाभावः । **हलँमात्रम्**-अत्र चतुर्थे प्रयोगे सानुनासिको लकारः, इमेऽलौकिका अत उपेक्षिताः । ननु पड्नया इत्यादौ अनुनासिकात् पूर्वं डकारद्वित्वे पड्डनया इति स्थितेऽन्त्यडस्थानेनानुनासिके पड्डनया इति भाव्यमित्याशंकते—**ननु** इत्यादिना, समाधत्ते-**नैवम्** इत्यादिना । "अदीर्घात्०" १।३।३२। इत्यत्रान्वित्यधिकारात् द्वित्वात् पूर्वमनुनासिकप्रवृत्तेः । तत्फलमाह—**तेन** इत्यादिना । अपि च व्यञ्जनस्य स्थानित्वेऽपि पदान्ते वर्तमानानां वर्गप्रथमद्वितीयचतुर्थाक्षराणां "धुटस्तृतीयः" इति तृतीयः । यलवानां प्रायेण पदान्ते प्रयोगाभावः, सस्य च "सोरुः" २।१।७२। इति रुत्वम्, शस्य च "यजसृज०" २।१।८७। इति षत्वम्, पारिशेष्यात् तृतीय एव लभ्यते, इति कृत्वा भगवता व्यञ्जनमात्रस्य स्थानित्वमुपेक्षितमनुनासिकस्य च निमित्तत्वमिति भावः ॥ १ ॥

---

१ °केपरे मा° म० म०, °केनिमित्तभूते मा° पु० ।

जान्वस्य रुजति, जानू अस्य रुजति; तद्व्वस्य मतम्, तदु अस्य मतम् । वर्गादिति किम् ? स्वरु उपैति, अन्तरु उपैति । अञिति किम् ? घञ्जु एति । स्वर इति किम् ? किमु गच्छति । असत्त्वाद् द्वित्वमनुस्वारानुनासिकाभावश्च ॥ ४० ॥

**अइउवर्णस्यान्तेऽनुनासिकोऽनीदादेः ॥ १ । २ । ४१ ॥**

अवर्णस्येवर्णस्योवर्णस्यच अन्ते–विरामे वर्तमानस्यानुनासिक आदेशो वा भवति, **अनीदादेः**–न चेदयम् "ईदूदेत् द्विवचनम्" ॥ १ । २ । ३४ ॥ इत्यादिसूत्रसम्बन्धी भवति । पदान्ताधिकारेऽन्तग्रहण विरामप्रतिपत्त्यर्थम्, स च विरामो भवन् पदस्यान्ते भवति, केवलमुपसर्गस्य समासान्तर्वर्तिनश्च न भवति । सामँ, साम; खट्वाँ, खट्वा; दधिँ, दधि, कुमारीँ, कुमारी; मधुँ, मधु, वृक्षेणँ, वृक्षेण; नामँ अत्र, नाम अत्र, दधिँ अत्र, दधि अत्र, मधुँ अत्र, मधु अत्र, वृक्षेणँ अत्र, वृक्षेण अत्र; विरामत्वाच्च सन्धिर्न भवति । अइउवर्णस्येति किम् ? कर्तृ, हर्तृ । अन्त इति किम् ? दधि करोति, मधु करोति, वृक्षः । अनीदादेरिति किम् ? अग्नी, वायू, अमू, अमी, किमु । चादिसूत्रे चादेः स्वरस्य केवलस्याङ्वर्जितस्य च ग्रहणादिह भवत्येव–अँ इति विष्णोः सम्बोधनम्, प्लक्षश्चँ, न्यग्रोधश्चँ, पाटलिपुत्रादाँ ॥ ४१ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां श्रीसिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनतत्त्वप्रकाशिकावृत्तौ प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ २ ॥

**पूर्वंभवदारगोपीहरणस्मरणादिव ज्वलितमन्युः ।**
**श्रीमूलराजपुरुपोत्तमोऽवधीद्दुर्मदाभीरान् ॥ २ ॥**

---

इत्यनुनासिके च सति भवति । **जान्वस्य रुजति**–अत्र असन्नित्यत्र वा इति योजने पक्षे वस्य सत्त्वविधानात् "ततोऽस्या" १।३।३४।
इत्यनेन वकारद्वित्वम् । अथवा 'नया निर्दिष्टमनित्यम्' इति न्यायस्य "ह्रस्वान्ङणनो द्वे", "तौ मुमो व्यञ्जने स्वौ" इत्यनयोरेव विषये नित्यत्वम्,
अन्यत्र च तस्यानित्यत्वेन सत्त्व वोध्यमिति "ततोऽस्या" इति विषये वस्य सत्त्वेनापि द्वित्व भवति । **तद्व्वस्य मतम्–तदुअस्य मतम्**
इत्यवस्थायामनेन वत्वे तद्वस्य इत्यत्र "ततोऽस्या" इत्यनेन वकारस्य सत्त्वपक्षे द्वित्व, नित्यत्वादिकारणेभ्य "अदीर्घाद्वि०" इति बाधित्वा
प्रवर्तते । वर्गात् इत्यस्य फल समाधानमुखेनाह–**वर्गादिति किम् ?** इत्यादिना, **उपैति** इत्यन्तेन । अञ् इत्यस्य फल समाधानमुखेन
पृच्छति–**अञिति** इत्यादिना, **एति** इत्यन्तेन । स्वरे परे इति वृत्तिस्थपदस्य फलमाह–**स्वर इति किम्** इत्यादिना । ननु कुड्ङ्वास्ते इत्यत्र
परत्वाद्वत्यापेक्षया पूर्वं "ह्रस्वा०" इति द्वित्वे, ततोऽनेन वत्वे रूपसिद्धौ असन् इति किमर्थमिति चेदुच्यते ततोऽपि नित्यत्वात् पूर्वं वत्वप्रवृत्तेरिति
असन्नित्यभावे परत्र स्वराभावेन द्वित्वाप्राप्तेरित्याह–**असत्त्वाद्द्वित्वम्** । **किम्विति** इत्यादावनेन वत्वे तस्य चासत्त्वे "तौ मुमो०" इत्यनेन
परत्र व्यञ्जनाभावेन अनुस्वारानुनासिकौ न भवत इत्याह–**अनुस्वारानुनासिकाभावश्च** असत्त्वादिति शेष ॥ ४० ॥

**अइउवर्णस्यान्तेऽनुनासिकोऽनीदादेः** । अत्र नवा इत्यनुवर्तते पदान्त इति च, अनीदादे अन्ते अइउवर्णस्य नवा अनुनासिक
इत्यन्वय । ईदूदेद्विवचनमित्यादिसूत्राविषयाणामन्ते वर्तमानानां पदान्तानां, अइउवर्णानां नवा अनुनासिकादेश इत्यर्थमाह–**अवर्णस्य** इत्या-
दिना । ननु पदान्ते इत्यनुवृत्तौ सूत्रेऽन्तग्रहण किमर्थमित्यत आह–**पदान्ताधिकारे** इत्यादिना, **प्रतिपत्त्यर्थम्** इत्यन्तेन । अन्ते–विरामे वर्त-
मानानां सतां पदान्तानां, अइउवर्णानाम् इत्यर्थ, तदाह–**स च विरामो** इत्यादिना, तदर्थफलमाह–**केवलमुपसर्गस्य** इत्यादिना ।
अयमाशय –केवल 'प्र' इत्याद्युपसर्गाणां पदान्तत्वेऽपि विरामावृत्तेर्न भवत्यनुनासिकोऽनेन । एवमेव समासान्तर्वर्तिनां पदान्तत्वेऽपि विरा-
मावृत्तेर्न भवत्यनुनासिक इति । **सामँ**–अत्र विरामवृत्ते सत पदान्तस्याकारस्य, "ईदूदेद्०" इत्यादिसूत्राविषयस्यानुनासिकादेशस्तदभावे–**साम**
इति भवति, एवमन्यत्र । ननु **नामँ अत्र, नाम अत्र** इत्यादौ अनुनासिकादेशे वा तदभावे कथ न सन्धिरित्याह–**विरामत्त्वाच्च संधिर्न**
इत्यादिना । "न सन्धि" इति सूत्रेणेति शेष । सूत्रे अइउवर्णस्य इति फल पृच्छति–**अइउवर्णस्येति किम् ? कर्तृ**–अत्र ऋकारस्य अइउवर्णे-
त्वाभावेन नानुनासिकादेश । सूत्रे अन्त इति फल पृच्छति–**अन्त इति किम् ? दधि करोति**–अत्र विरामाविवक्षया विरामवृत्तित्वाभावान्ना-
नुनासिक । **वृक्ष**–ननु वृक्ष इत्यत्राकारस्य पदान्तत्वाभावेन सूत्राप्रवृत्ते, पदान्त इति अन्त इति च पदद्वयफलमिद कथ भगवता वृत्तिकृता अन्त
इत्यस्यैव फलतया प्रदर्शितमिति चेत् वृक्षाकारस्य "कादि"रिति कस्यादिरिति विग्रहे विसर्गस्य व्यञ्जनत्वेन तस्मिन् परे "नामसिद०" इत्यनेन पदान्तत्वा-
द्युक्त फलम् । सूत्रे अनीदादेरिति फल पृच्छति–**अनीदादेरिति किम् ? अग्नी, वायू, अमू, अमी, किमु**–एषु यथाक्रम "ईदूदेत् द्विवच-
नम्" "अदो मुमी" "अञ्वर्गात्स्वरे वोऽसन्" इति सूत्रविषयत्वमतो नास्य सूत्रस्य प्रवृत्ति । अनीदादेरित्युक्त्याऽस्य सूत्रस्य "चादि स्वरोऽनाङ्"
इति सूत्रविषयेऽप्रवृत्ति, किन्तु विष्णुवाचकअशब्दसंबोधने तदविषयमवबुध्यैतत्सूत्रप्रवृत्तौ न कश्चिद्दोष । ननु कथ अ–विष्णो इत्यत्र चादिरिति
सूत्राविषय इत्यत आह–**चादिसूत्रे चादेः स्वरस्य** इत्यादिना । **'अ–विष्णो'** इत्यत्र चादित्वाभावात् तदविषय स्पष्ट एव । **प्लक्षश्चँ**–
इत्यादौ चस्य चादित्वेऽपि केवलस्वराभावात्तदविषय । **पाटलिपुत्रादाँ**–अत्राङ्ग युक्तात् पाटलिपुत्रशब्दात् पञ्चमी "आङावधौ" २।२।७०।
इति, "चादि स्वरोऽनाङ्" इति सूत्रेऽनाङित्युक्ते स्पष्टमेव तदविषयत्वमिति भाव, सर्वेष्वेतेषूदाहरणेष्वनेनानुनासिक इति दिक् ॥ ४१ ॥

**पूर्वंभवदारगोपी०** । पूर्वस्मिन् भवे ये दारा –प्रमदा एव गोप्यो–विषयगामीनीन्द्रियाणि, तासां हरण तस्य स्मरण तस्मादिव,
अत एव **ज्वलित**–प्रदीप्त, **मन्युः**–क्रोधो यस्य तथोक्त श्रिया युतो **मूलराजः पुरुषोत्तम**–श्रीकृष्ण इव वा तादृशो **मूलराज** एव
**पुरुषोत्तम** । **दुर्मदा**–दुष्टा मदादय एव आभीरास्तान् **अवधीत्**–जघान । अथवा–पूर्वभवे दारा एव गा–इन्द्रियाणि तानि पान्तीति पूर्वभव-
दारगोपा वाचयमा–वशीकृतेन्द्रिया –सत्पुरुषास्तेषाम् ई –सपत्ति साधुतारूपा तस्या हरण इत्यादि प्राग्वद्बोध्यम् । गोपीत्यत्र हलीशावत् पृषोदरा-
दित्वादकारलुक्, अतएव मूजराज पुरुषोत्तमोऽन्यथा तु पुरुष एव । सत्पुरुषा हि स्वीयसाधुतासपत्तिविनाशकविनाशप्रवीणा अथ तु तेष्वुत्तमस्तेषां
स्वस्य च साधुताया अवने वद्धपरिकर एतावता स्पष्टमेव तस्य पुरुषोत्तमत्व, ज्वलितमन्युत्व च । विश्रुत जगति कस्यचन पुरुषविशेषस्य स्वधन-
विनाशस्मृते प्रदीप्तकोपत्व । अस्य तु परमपरोपकारप्रवणत्वेनान्यधनविनाशेऽपि क्रोधो जायते इति महद्वैचित्र्य मूलराजस्य ॥ २ ॥

इति श्रीमत्तपागच्छगगनाहर्मणिगीतार्थसार्वभौमाऽऽगमोद्धारकशैलानानृपतिपरिपूजितपादारविन्दआगमोदयसमिति–वर्द्धमानजैनागममन्दि-
रायनेकशासनहितवर्धकसंस्थानिर्माणोपदेशकभट्टारककुलमूर्द्धन्यश्री **१००८ आनंदसागरसूरीश्वराणा** साम्राज्ये तच्चरणतिलीनमानसेनानवास-
नवपदपीयूषपानोद्यतभव्यभावभावोद्बोधसूर्योदयश्रीसिद्धचक्र–नवपदाराधकसमाजादिविविधसंस्थासंस्थापकेन श्रीवर्द्धमानतपोनिष्णातेन श्रीसिद्धचक्रा-
राधन–तीर्थोद्धारकेण **पन्यासप्रवरश्रीचन्द्रसागरगणीन्द्रेण** विरचितायां श्रीसिद्धहेमचन्द्रसूत्रवृत्तिन्यासरत्नाकरावतारिकायाम् **आऽऽनन्द-
बोधिन्यां** प्रथमस्याध्यायस्य स्वरसन्धिप्रकरण नाम द्वितीय पाद ॥२॥

---

१ जान्वस रुजति खं० ता०, म० म० । २ तद्व्वस्य मतम् म० म०, तद्वस्य मतम् ख० ता० । ३ विरामे° म० म० ।

॥ अर्हं ॥

# तृतीयः पादः ॥

## तृतीयस्य पञ्चमे ॥ १ । ३ । १ ॥

वेति, पदान्त इति; अनुनासिक इति चानुवर्तते । वर्गतृतीयस्य पदान्ते वर्तमानस्य वर्गपञ्चमे परे वाऽनुनासिको भवति, स्थान्यासन्नः । वाङ् ङवते, वाग् ङवते, वाङ्ञकारः, वाग्ञकारः; वाङ् णकारीयति, वाग् णकारीयति; वाङ् नयति, वाग् नयति; वाङ् मधुरा, वाग् मधुरा, एव षण् नयाः, षड् नयाः; तन्नयनम्, तद्नयनम्; ककुम्मण्डलम्, ककुब्मण्डलम् । तृतीयस्येति किम्? स्वर्नयति, हल्मात्रम् । पदान्त इत्येव? विद्मः । पञ्चम इति किम्? वागत्र, षड् गच्छन्ति । केचित्तु व्यञ्जनस्य स्थानेऽनुनासिके वाऽनुनासिकमिच्छन्ति, तस्य तु "ह्रस्वान्ङणनो द्वे" ॥ १ । ३ । २७ ॥ इति द्वित्वं च नेच्छन्ति, तन्मते—त्वङ्ँ इति, त्वग्ँ इति; श्लिण्ँ इति, श्लिड्ँ इति; तन्ँ इति, तद्ँ इति; हल्ँमात्रम्, हल्ँमात्रम् । ननु षण्णया इत्यादौ "अदीर्घाद्विरामैकव्यञ्जने" ॥ १ । ३ । ३२ ॥ इत्यनेन तृतीयस्य द्वित्वे कृतेऽन्तस्यानुनासिके च तृतीयस्यापि श्रुतिः प्राप्नोति? नैवम्, अनुनासिके कृते पश्चाद् द्वित्वस्य भावात्—तेन षण्णयाः, षड्ड्नयाः इत्यादि सिद्धम् ॥ १ ॥

---

**तृतीयस्य पञ्चमे** । अत्र "सौ नवेतौ" इत्यतो नवेति, "एदोत पदान्तेऽस्य लुक्" इत्यत पदान्त इति, "अइउवर्णस्या०" इति अनुनासिक इति चाऽनुवर्तते, स च विधेयस्तस्मिन् नवेति सबध्यते, पदान्त इति तृतीयस्य इत्यनेनान्वेति । कस्य तृतीय ? कस्य पञ्चम ? इति च जिज्ञासाया वर्गस्येति लभ्यते, तथा च–पदान्ते वर्गतृतीयस्य वर्गपञ्चमे नवाऽनुनासिक इत्यन्वय , तत्सर्वमभिप्रेत्यान्वयार्थमाह—**वेति पदान्त** इत्यादिना, **भवति** इत्यन्तेन भगवन्तो वृत्तिकारा । ननु वर्ग्या अनुनासिका पञ्च ङञणनमा इति वर्गतृतीयस्यैकस्य स्थाने कथमादेशपञ्चकमित्याह—**स्थान्यासन्न** आदेश इति शेष । यद्वर्ग्यस्तृतीयस्तद्वर्ग्य एवानुनासिकादेश इत्यतो नानुनासिकपञ्चकादेशापत्तिरिति भाव । **वाङ् ङवते**—वाच् ङवते इत्यवस्थाया सेर्लुकि "चज०" २।१।८६। इति चस्य कत्वे, "धुटस्तृतीय" २।१।७६। इति गत्वे—**वाग् ङवते** इति स्थितौ वर्गपञ्चमङकाराव्यवहितपूर्वस्य पदान्तस्थस्य वर्गतृतीयगकारस्य स्थाने स्थान्यासन्ने पाक्षिकेऽनुनासिकादेशे सति सिद्ध्यति, एवमन्यत्रापि । **वाङ् ञकारः**—वाचो ञकार इति समास । **वाङ् णकारीयति**–णकारमिच्छति "अमाव्ययात्०" ३।४।२३। इति क्यनि । **वाङ् मधुरा**—वाचा मधुरा इति तृतीया समासोऽसमासो वा । **षण् नयाः**—षष्शब्दाद्विहितजसो "डतिष्ण सख्याया०" १।४।५४। इति लुपि षस्य "धुटस्तृतीय" इति डत्वे षड् नया इति स्थितेऽनेनानुनासिके णे सति सिध्यति, टवर्गयोगेऽत्र "तवर्गस्य०" १।३।६०। इति नस्य णत्व "पदान्तात्०" १।३।६३। इति निषेधान्न भवति । **तन्नयनम्**—तद् नयनम् इति स्थिते, "धुटस्तृतीय" इति दस्य दत्वे, तस्यानेनानुनासिके तन् नयनम् इत्यत्र "नाम्नो नोऽनन्ह" २।१।९१। इति न लोपो न भवति, दस्यासत्त्वेन तत्स्थानापन्नस्य नस्याप्यसत्वात् । **ककुम्मण्डलम्**—ककुभां मण्डलमिति विग्रह , ककुभ् मण्डलम् इत्यत्र "धुटस्तृतीय" इति भस्य बत्वेऽनेन तस्यानुनासिके सति सिद्ध्यति, "तौ मुमो०" १।३।१४। इति अनुस्वारस्तु पूर्वस्यादसदित्यनुवृत्तेर्मस्य न भवति, 'लक्षणपरिभाषया', 'असिद्धमिति' न्यायेन वा । सूत्रे तृतीयस्येत्यस्य फल पृच्छति—**तृतीयस्येति किम्?** इति । **हल्मात्रम्**—हलेव हल्मात्रम्, कचित्स्वार्थे मात्रट् । हल् च तद् मात्र चेति 'मात्रमवधारणे', हल् मात्राऽस्येति वा विग्रह , अत्र नानुनासिको लस्तस्य वर्गतृतीयत्वाभावात् । पदान्त इत्यस्य फलमाह—**पदान्त इत्येव?** इति । **विद्मः**–विदेर्मसिरूपम्, अत्र न वर्गतृतीयस्य दस्यानुनासिक पदान्तत्वाभावात् । पञ्चम इत्यस्य फल पृच्छति—**पञ्चम इति किम्? वागत्र**—अत्र वर्गपञ्चमाव्यवहितपूर्वत्व वर्गतृतीयस्य नास्ति किन्त्वकाराव्यवहितपूर्वत्वमस्तीति भाव । व्यञ्जनस्य स्थानित्वमनुनासिकमात्रस्य तु निमित्तत्वमिच्छता पाणिनिशाकटायनदेवनन्दिविश्रान्तविद्याधराणा मतमाह—**केचित्तु** इत्यादिना । "यरोऽनुनासिकेऽनुनासिको वा" पा० ८।४।४५।, "हलोऽनुनासिकेऽनुनासिक स्व" शा० १।१।१०६।, "यरो ङो विभाषा ङे" जै०५।४।१२५। देवनन्दी इति जैनेन्द्रप्रक्रियाया । ननु येषा मते व्यञ्जनस्य स्थानेऽनुनासिके परेऽनुनासिक इति तन्मते "ह्रस्वान्ङणनो द्वे" १।३।२७। इति द्वित्व भवति नवेत्यत आह—**तस्य तु "ह्रस्वान्ङणनो द्वे"** इत्यादिना । **तस्य**—अनुनासिकस्य, तु इत्यग्रिमेण संबध्यते, **नेच्छन्ति** पाणिन्यादय इति, **तन्मते**—उदाहरति **त्वङ्ँ** इत्यादिषु त्रिषु च उभिति कृतगडदाना ङणना सिद्धा , असदित्यधिकाराच्च "ह्रस्वात्०" इति द्वित्वाभाव । **हल्ँमात्रम्**–अत्र चतुर्थे प्रयोगे सानुनासिको लकार , इमेऽलौकिका अत उपेक्षिता । ननु षड्नया इत्यादौ अनुनासिकात् पूर्वं डकारद्वित्वे षड्ड्नया इति स्थितेऽन्त्यडस्यानेनानुनासिके षड्ण्नया इति भाव्यमित्याशंकते—**ननु** इत्यादिना, समाधत्ते–**नैवम्** इत्यादिना । "अदीर्घात्०" १।३।३२। इत्यत्रान्वित्यधिकारात् द्वित्वात् पूर्वमनुनासिकप्रवृत्ते । तत्फलमाह—**तेन** इत्यादिना । अपि च व्यञ्जनस्य स्थानित्वेऽपि पदान्ते वर्तमानाना वर्गप्रथमद्वितीयचतुर्थाक्षराणा "धुटस्तृतीय" इति तृतीय । यलवाना प्रायेण पदान्ते प्रयोगाभाव , सस्य च "सोरु" २।१।७२। इति रुत्वम्, शस्य च "यजसृज०" २।१।८७। इति षत्वम्, पारिशेष्यात् तृतीय एव लभ्यत, इति कृत्वा भगवता व्यञ्जनमात्रस्य स्थानित्वमुपेक्षितमनुनासिकस्य च निमित्तत्वमिति भाव ॥ १ ॥

---

१ °कपरे वा° म० म०, °कनिमित्तभूते वा° पु० ।

## प्रत्यये च ॥ १ । ३ । २ ॥

पदान्ते वर्तमानस्य तृतीयस्य स्थाने पञ्चमादौ प्रत्यये परेऽनुनासिको भवति । नित्यार्थं वचनम् । वाङ्मयम्, गुडलिण्मान्; षण्णाम् । पदान्त इत्येव ? यज्ञः, सद्म । चकार उत्तरत्र विकल्पानुवृत्त्यर्थः ॥ २ ॥

## ततो हश्चतुर्थः ॥ १ । ३ । ३ ॥

पदान्ते वर्तमानात् ततस्तृतीयात् परस्य हकारस्य स्थाने प्रत्यासत्त्या पूर्वसवर्गश्चतुर्थो वा भवति । वाग्घीनः, वाग्हीनः, अज्झलौ, अज्हलौ, षड्ढलानि, षड्हलानि, तद्धितम्, तद्हितम्, ककुब्भासः, ककुब्हासः । तत इति किम् ? प्राङ् हसति, भवान् हरति ॥ ३ ॥

## प्रथमादधुटि शश्छः ॥ १ । ३ । ४ ॥

पदान्ते वर्तमानात् प्रथमात् परस्य शकारस्य स्थानेऽधुटि परे छकारादेशो वा भवति । वाक्छूरः, वाक्शूरः; वाक्छ्लक्ष्णः, वाक्श्लक्ष्णः, तच्छ्वेतम्, तच्श्वेतम्, उच्छ्मश्रुः, उच्श्मश्रुः; तच्छ्मीलति, तच्श्मीलति; षट्छ्यामाः, षट्श्यामाः; त्रिष्टुप्छ्रुतम्, त्रिष्टुप्श्रुतम् । प्रथमादिति किम् ? वाङ्शूरः, भवाञ् शोभनः । अधुटीति किम् ? वाक्श्च्योतति ॥ ४ ॥

---

प्रत्यये च । अत्र पदान्ते अनुनासिक तृतीयस्य पञ्चमे इति चानुवर्तते, पञ्चमे इति 'प्रत्यये' इत्यस्य विशेषण, "सप्तम्या आदि" ७।४।११४। इति आदिपदोपस्थित्या पञ्चमादौ प्रत्यये इत्यर्थलाभ , पदान्ते वर्गतृतीयस्य पञ्चमादौ प्रत्ययेऽनुनासिक इत्यन्वय , तदर्थमाह—पदान्ते इत्यादिना । ननु पूर्वसूत्रेणैव पदान्तस्थस्य वर्गतृतीयस्य पञ्चमादौ प्रत्ययेऽनुनासिकसिद्धे किमर्थमिदमित्याह—नित्यार्थम् इत्यादिना । वाङ्मयम्- वाच आगतमित्यर्थे विकारोऽवयवो वा इत्यर्थे, "नृ हेतुभ्यो०" ६।३।१५६। इत्यनेन, "एकस्वराव०" ६।२।४८। इत्यनेन वा मयट्, वाच् मयम्-इत्यत्र चस्य कत्वे, तस्य च गत्वेऽनेनानुनासिक । गुडलिण्मान्—गुड लेढीतिविग्रहे, "क्विप्०" ५।१।१४८। इति क्विपि, "होधुट्०" २।१।८२। इति ढत्वे, "धुट०" इति डत्वे, गुडलिड् अस्यास्तीति विग्रहे, "तदस्याऽस्त्यस्मि०" ७।२।१। इति मतौ, प्रथमैकवचने गुडलिड्मान् इत्यत्र डस्यानेन ण । षण्णाम्—षष "सख्यानां र्णाम्" १।४।३३। इत्यामो नामादेशे, तृतीयत्वेऽनेन णत्वे षण् नाम् इत्यत्र 'असिद्धं बहिरङ्गमन्तरङ्गे' 'षत्वतुकोरसिद्धः' इति दृष्ट्या 'अनाम्नग-रीनवते'रित्युक्त्या "पदान्ताव०" १।३।६३। इति प्रतिषेधाभावात्, "तवर्गस्य०" १।३।६०। इति नामो नस्य णत्वम् । पदान्त इत्यनुवृत्तिफलमाह- पदान्त इत्येवेति । यज्ञ.-"यजिस्वपिरक्षि०" ५।३।८५। इति ने, नस्य च "तवर्गस्य०" इति ञत्वे, यज् ञ इत्यत्रापदान्तत्वाज्जस्यानेनानु-नासिको न । "प्रत्यये च" इति सूत्रे चकार किमर्थ इत्याह—चकार इत्यादिना । चकार पूर्वसूत्रस्यैवास्य योगस्य शेषता प्रतिपादयन्नात्मनि वेत्यस्य सबन्धाभाव तदनुवृत्तेश्चाव्यवधान सूचयतीति भाव ॥ २ ॥

ततो हश्चतुर्थः । अत्र पदान्ते नवेति चानुवर्तते, पदान्ते तत ह चतुर्थ इत्यन्वय । अत्र तत इति तच्छब्दात् पूर्वप्रक्रान्तवर्गतृतीय परामृश्यते । ननु तत इति किमर्थ ? यतो'ऽर्थवशाद्विभक्तिपरिणाम' इति न्यायात् पूर्वस्मात्तृतीयस्येत्यनुवृत्त्यात्र पञ्चम्यन्तत्वेन विपरिणामात्तृतीयादि-त्यर्थलाभादिति चेदुच्यते-'तृतीयस्य' इत्यनुवृत्तौ तत इत्यभावे हकारात् परस्य तृतीयस्येति सूत्रार्थ स्यात्तन्मा भूत् इति तदावश्यकत्वात्, न च पदान्ते हकारासभव , भूतपूर्वगत्या तत्सभवात् । पञ्चम इत्यस्यानुवृत्त्यर्थ च तत इति, अन्यथा तद्धुते, तद्धुलयति इत्यादावेव चतुर्थ स्यान्तु वाग्घीन इत्यादौ । यद्यपि हकारस्य कण्ठ्यत्वेन तदासन्नघकारेणैव भाव्य न झढधभैरिति पूर्वग्रहण कर्तव्य, तथापि सूत्रे चतुर्थ इत्युक्त्या निमित्त-प्रत्यासत्तिराश्रीयते, अन्यथा ह्वो घ इति विदध्यात् । तदेतन्मनसि निधायाह-पदान्ते वर्तमानात् इत्यादिना । वाग्घीनः-वाचा हीन इति विग्रह । अत्र चस्य कत्वे गत्वे च तस्मात् परस्य हस्य गजातीयो घ , एवमन्यत्र । अज्झलौ—अच् च हल् चेति विग्रह । 'अच्' इति प्राचा सज्ञा इत्यत्र चस्य कत्वाभाव सज्ञात्वादित्याऽन्यथाक् इति समानाना अइउऋऌ इत्येषां हल् इति च । अत्र जकारात् परस्य, हस्यानेन झ । 'अच्' बोध स्यादिति चस्य "धुट०" इति जत्वे सर्वेष्टसग्रह । एतेन "स्रिजयतन्याम्" ३।४।५३। इत्यादिप्रयोगा व्याख्याता । षड्ढलानि— असमस्तप्रयोग , अत्र पदान्तडात् परस्य हस्य पूर्वसवर्गश्चतुर्थो ढ । तद्धितम्—तस्मै हितमिति विग्रह , अत्र पदान्तवर्गतृतीयदात् परस्य हस्य ध पूर्वसवर्गे । ककुब्भास.-ककुभां हास इति विग्रह , अत्र भस्य तृतीयबत्वे तत्परस्य हस्य तत्सजातीयश्चतुर्थो भ । सूत्रे तत इत्यस्य फल पृच्छति—प्राङ् हसति । प्रपूर्वकाञ्चते क्वौ, "अञ्चोऽनर्चायाम्" ४।२।४६। इति नलोपे, सेर्लुकि "अच" १।४।६९। इति नागमे, "पदस्य" २।१।८९। इति चकारलोपे, "युजञ्च०" २।१।७१। इति नस्य ङकारे-प्राङ् हसतीत्यत्र ङात् परस्य हस्य घो मा भूदिति तत इति ॥ ३ ॥

प्रथमादधुटि शश्छः । अत्र पदान्ते नवा इति चानुवर्तते, पदान्ते प्रथमात् श अधुटि छ नवा इत्यन्वय । अधुटि इत्यत्र पर्युदासार्थको नञ्, तेन धुड्भिन्नधुट्सदृशा स्वरान्त स्थानुनासिका एव अधुट , तेषु परेषु वर्गप्रथमात् परस्य शस्य पदान्तस्थस्य 'छ' इत्या-देशो नवा भवतीत्यर्थमाह—पदान्ते वर्तमानात् प्रथमात् इत्यादिना । वाक्छूर.—वाचा शूर इति विग्रह । अत्र वाच् इत्यत्र चस्य कत्वे तस्य गत्वे तत शूर इति योगे, "अघोषे प्रथमोऽशिट" १।३।५०। इति प्रथमे, वाक् शूर इति स्थिते पदान्तवृत्तेर्वर्गप्रथमात् कात् परस्य अधुट-स्वरोकारपरस्य च शस्य विभाषा छ इति समन्वय । वाक्छ्लक्ष्णः—वाचा श्लक्ष्ण इति विग्रह । अत्र कात् परस्य अधुटपरस्य च शस्य स्थाने छ । तच्छ्वेतम्—अत्र "धुटस्तृतीय" इति दकारस्य दकारे तस्मात् परस्य अधुद परस्य च शस्य स्थाने छ । उच्छ्मश्रु.—उद्गतानि श्मश्रूणि यस्य स इति विग्रह । षट्छ्यामा.—षण्णां श्यामा । त्रिष्टुप्छ्रुतम्—त्रिष्टुभ श्रुतम् । नन्वेतेषु तृतीयस्य प्रथमे सत्यस्य प्रवृत्तेरिति पूर्वोक्त इत्य-नुवृत्त्य सर्वेष्टसिद्धौ "प्रथमात्" इति किमर्थ ? न चैतत्सूत्रापेक्षया "अघोषे०" इति परत्वात् पूर्वमेव प्रथमो विधास्यति, यतस्तत्रान्नित्याधिकार-सत्वात् इति चेदुच्यते तृतीयादनेन तदपेक्षया प्रागेव छत्वे पश्चात्प्रथमत्वानापत्तेर्विधानसामर्थ्यात्, अन्यथाय कथं तृतीयात् छो विदध्यात् । वाक्श्च्योतति–वर्गप्रथमात् कात् परस्य शस्य अधुट्परकत्वाभावान्न छ । पर्युदासफल तु वाक् श इत्यत्र छत्वाभाव ॥ ४ ॥

## र: कखपफयोः ᳵकᳶपौ ॥ १ । ३ । ५ ॥

पदान्ते वर्तमानस्य रेफस्य कखे पफे च परे यथासङ्ख्यं ᳵकᳶपौ जिह्वामूलीयोपध्मानीयावादेशौ वा भवतः, ककारपकाराकारा उच्चारणार्थाः । कᳵकरोति, कᳵखनति, कᳶपचति, कᳶफलति, अन्तᳵकरोति, अन्तᳶफलति, पक्षे "र: पदान्ते विसर्गस्तयोः" ॥ १ । ३ । ५३ ॥ इत्यनेन विसर्गः—कः करोति, कः खनति, कः पचति, कः फलति, अन्तः करोति; अन्तः फलति । विसर्गापवादोऽयम्, एवमुत्तरावपि ॥ ५ ॥

## शषसे शषसं वा ॥ १ । ३ । ६ ॥

पदान्ते वर्तमानस्य रेफस्य शषसेषु परेषु यथासङ्ख्यं श ष स इत्येते आदेशा वा भवन्ति । कश्शेते, कः शेते; कष्षण्डः, कः षण्डः; कस्साधुः, कः साधुः; अन्तश्शेते, अन्तः शेते, मातष्षण्डे, मातः षण्डे, पयस्सु, पयःसु । कथं गीर्षु, धूर्षु ? अरो रेफस्य सुपि रेफो वक्ष्यते । कः श्शकार इत्यादिषु त्वघोषे शिट्परे विसर्जनीयस्य विधानाद् रेफ एव नास्तीति न भवति, एवं पूर्वोत्तरयोरपि योगयोर्द्रष्टव्यम्—वासः क्षौमम्, अद्भिः प्सातम्; असेः त्सरुः । नवाऽधिकारे वाग्रहणमुत्तरत्र विकल्पनिवृत्त्यर्थम् ॥ ६ ॥

## चटते सद्वितीये ॥ १ । ३ । ७ ॥

पदान्ते वर्तमानस्य रेफस्य चटतेषु सद्वितीयेषु परेषु यथासङ्ख्यं श ष स इत्येते आदेशा भवन्ति । चछयोः शः—

---

**र: कखपफयोः ᳵकᳶपौ** । अत्र पदान्ते नवेति चानुवर्तते, पदान्ते र कखपफयो ᳵकᳶपौ इत्यन्वय । कश्च खश्च कखौ, पश्च फश्च पफौ, कखौ च पफौ च इति कखपफौ तयोरिति द्वन्द्वगर्भो द्वन्द्व । जिह्वामूलीयोपध्मानीयौ इति पूर्वाचार्याणां सज्ञा, तदेतदाह—**पदान्ते वर्तमानस्य** इत्यादिना । ᳵकᳶपौ इत्यत्र ककारपकाराकाराणां किं प्रयोजनमित्याह—**ककारपकाराकारा** इत्यादिना । **कᳵकरोति**—अत्र "किम कस्तसादौ च" २।१।४०। इति कादेशे सेस्तु "सो रु"रिति रुत्वे, कर् करोति इति स्थिते काव्यवहितपूर्वस्य पदान्तरेफस्य ᳵक. पक्षे विसर्ग "र पदान्ते०" १।३।५३। इति । एवमन्यत्रापि । यद्यपि 'निरनुबन्धग्रहणे न सानुबन्धस्ये'ति न्यायादत्र सानुबन्धस्यादेशो न प्राप्नोति तथापि "अरो सुपि०" १।३।५७। इति सूत्रे "र पदान्ते०" इत्यनेन र इत्यनुवृत्तौ रुवर्जितस्य रेफस्य रेफे परे रेफ एव सेत्स्यति किमर्थं 'अरो ' इति ? तद्बोधयति 'निरनुबन्धग्रहणे सामान्यग्रहणम्', तथा चात्र सामान्यग्रहण भवति । "र पदान्ते विसर्गस्तयो " इत्यनेन विसर्गे प्राप्ते तदपवादभूत योगत्रयमित्याह—**विसर्गापवादोऽयम्** इत्यादिना । **एवमुत्तरावपि**—"शषसे शषस वा", "चटते सद्वितीये" इति योगौ ॥ ५ ॥

**शषसे शषसं वा** । अत्र पदान्ते र इति चानुवर्तते, पदान्ते र शषसे शषस वा इत्यन्वय । अत्र निमित्तादेशयो समाहारद्वन्द्वो यथासङ्ख्यलाभाय, तदाह-**पदान्ते वर्तमानस्य** इत्यादिना । ननु शषसमिति विहाय स इति न्यासेन 'शषसे सो वा' इत्येव सूत्र्यताम्, कश्शेते कष्षण्ड कस्साधुरिति "सस्य शषौ" १।३।६१। इत्यनेनैतद्विहितसकारस्य शषौ, कस्साधुरित्यत्रानेन स इति सकलाभीष्टप्रयोगसिद्धे । न च "चटते सद्वितीये" इत्युत्तरार्थमिद, तत्रापि स इत्यनुवृत्त्या तस्य—"सस्य शषौ" इत्यनेन 'शषौ' सिध्यत –कश्चरति, कष्टीकते इत्यादौ । नच कश्शेते इत्यादौ "धुटस्तृतीय" इति तृतीयबाधनाय शषयोर्विधानमिति वाच्यम्, 'असिद्ध बहिरङ्गमन्तरङ्गे' इति न्यायेन कश्शेते इत्यादौ अन्तश्शेते इत्यादौ च रुत्वस्य शत्वस्य चासिद्धत्वेन तृतीयाप्रवृत्तेरिति चेत्, पृथग्विधान शषयोस्तस्यायानित्यत्वज्ञापनार्थम् । अपि च 'शषस' इति शषसानामेतद्विलक्षण कार्यान्तरं न भवतीति सूचयति, तेन अन्तश्शेते मातष्षण्ड इत्यादौ "धुटस्तृतीय" इति जत्वडत्वादिक न भवति । कश्शेते इत्यादौ तु तृतीयाभावो रो परेऽसत्त्वादपि सिध्यति । सर्पिष्षु इत्यादौ अनेन रेफस्य सत्त्वे "नाम्यन्तस्था०" २।३।१५। इत्यनेन प्रत्ययसस्य षत्वे, प्रकृतिसस्य "सस्य शषौ" इत्यनेन षयोगे षस्तु भवत्येव तस्य षरूपत्वेन विलक्षणाभावात्, विलक्षणस्य च तृतीयत्वादिकस्याभाव स्पष्ट एव । **कश्शेते**—अत्र किम काऽऽदेशे, से सस्य "सो रु"रिति रुत्वे, कर् शेते इति स्थितौ शपरस्य पदान्तस्थस्य रेफस्य श । एवमन्यत्र । ननु गीर्षु धूर्षु इत्यादौ "नामिसिद०" इति पदान्तरेफस्य षपरस्य कथ न ष इति शङ्कते–**कथं** इत्यादिना । समाधत्ते—**अरो रेफस्य** इत्यादिना । "अरो सुपि र" १।३।५७। इत्यनेन रेफस्य कार्यान्तरबाधकरेफविधानात् न भवति ष । मातुश्शाकार पितुश्शाकार इत्यादिवाक्यस्थस्य वाक्यैकदेशस्य प्रश्न —**कः श्शकार** इति । क श्वस्य शकार इति विग्रहार्थ । अत्र कर् श्शकार इत्यवस्थायां पदान्तस्थस्य शपरस्य रेफस्य कुतो न श इत्याशङ्कायां "शिट्यघोषात्" १।३।५५। इति शिट्परेऽघोषे पदान्तरेफस्य विसर्ग एवेति रेफाभावान्न श इति भाव , तदाह—**कः श्शकार इत्यादिषु त्वघोषे शिट्परे** इत्यादिना । ननु वासर् क्षौमम्, अद्भिर् प्सातम्–अत्र पदान्तसस्य "सो रु"रिति रुत्वे, "र कख०" इति कथ न भवति ? असेर् त्सरु –अत्र पदान्तसस्य रेफे सति "चटते सद्वितीये" इति कथ न स ? इत्याह—**एवं पूर्वोत्तरयोरपि** इत्यादिना । पूर्वस्मिन्–"र कख०" इत्यत्र, उत्तरत्र–"चटते०" इत्यत्र, पूर्ववद्विसर्गविधानाद्रेफाभावाच्च भवति तत्प्राप्त कार्यम् । ननु नवा इत्यनुवृत्तिस्वीकारेण विकल्पबोधेऽत्र वा इति किमर्थमित्याह—**नवाधिकारे वा ग्रहणमुत्तरत्र** इत्यादिना । अयमभिप्राय –नवेति वेति च विकल्पे वर्तेते, विकल्पश्च सामर्थ्यात् कार्यस्य प्रवृत्तिनिवृत्तिरूप , प्रवृत्तिनिवृत्ती च कार्यस्य नवाधिकारेणैव विहिते इति तत्रानर्थक सन् वाशब्द प्रवृत्तिनिवृत्ती प्रतिबध्नन् स्वप्रतिबध्यप्रवृत्तिनिवृत्ती व्यवस्थापयति तत्प्रतिबद्धश्च नोत्तरत्रानुवर्तते ॥ ६ ॥

**चटते सद्वितीये** । अत्र पदान्ते र शषस इति चानुवर्तते, पदान्ते र सद्वितीये चटते शषस इत्यन्वय । चश्च टश्च तश्च इति समाहारद्वन्द्व तस्मिन्, सह द्वितीयेन स्थानगुणाभ्यां प्रत्यासन्नेन वर्तत इति सद्वितीय तस्मिन्निति च विग्रह । नन्वत्र स्वरूपेण 'चछटठतथे' इत्यसन्देहार्थं किम निर्दिश्यते ? इति चेत्, सत्यम्, आदेशनिमित्तयोर्यथासङ्ख्यलाभाय तथा निर्देशोऽन्यथा निमित्तषट्कस्य आदेशत्रयस्य च यथासंख्याभाव स्यादित्याह तदर्थं—**पदान्ते** इत्यादिना । नन्वेव सत्यपि चविशिष्ट छ, टविशिष्ट ठ, तविशिष्ट थ, इति यत्र

---

१ अन्तः खनति इत्यधिक पाठ ख० ता०, पु० । २ °मुत्तरत्रापि ख० ता० ।

६

कश्चरति, कश्छादयति, अन्तश्चरति; अन्तश्छादयति। टठयोः षः–कष्टीकते, कष्ठकारेण, पुनष्टीकते; पुनष्ठकारेण। तथयोः सः–कस्तरति, कस्थुडति, अन्तस्तरति; अन्तस्थुडति ॥ ७ ॥

## नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे ॥ १ । ३ । ८ ॥

पदान्ते वर्तमानस्य प्रशान्वर्जितशब्दसंबन्धिनो नकारस्य स्थाने चटतेषु सद्वितीयेष्वधुट्परेषु परेषु यथासंख्यं[1] श ष स इत्येते आदेशा भवन्ति। अनुस्वारानुनासिकौ च पूर्वस्य–अनुस्वार आगमोऽनुनासिकश्चादेशः पूर्वस्य क्रमेण भवत इत्यर्थः। भवाँश्चरति, भवांश्चरति, भवाँश्छादयति, भवांश्छादयति, भवाँष्टीकते, भवांष्टीकते, भवाँष्ठकारेण, भवांष्ठकारेण; भवाँस्तरति, भवांस्तरति; भवाँस्थुडति, भवांस्थुडति। अप्रशान इति किम्? प्रशाञ् चरति, प्रशाण् टीकते, प्रशान् तरति। अधुट्पर इति किम्? भवान् त्सरुकः। पदान्त इत्येव? भवन्तः। विरामे प्रतिषेधस्य वक्ष्यमाणत्वादिह न भवति–भवान् चरति, भवान् टीकते, भवान् तरति ॥ ८ ॥

## पुमोऽशिट्यघोषेऽख्यागि रः ॥ १ । ३ । ९ ॥

पुमिति पुम्सोः कृतसंयोगान्तलोपस्यानुकरणम्, अधुट्परेऽघोषे शिट्ख्यागवर्जिते परे पुमित्येतस्य रोऽन्तादेशो भवति; अनुस्वारानुनासिकौ च पूर्वस्य। पुंस्कामा, पुँस्कामा; पुंस्कोकिलः, पुँस्कोकिलः; पुंस्खातम्, पुँस्खातम्[2]; पुंश्चली, पुँश्चली; पुंश्छत्रम्, पुँश्छत्रम्; पुंष्टिट्टिभः, पुँष्टिट्टिभः; पुंस्पुत्रः, पुँस्पुत्रः; पुंस्फलम्, पुँस्फलम्। अशिटीति किम्? पुंशरः। अघोष इति किम्? पुंदासः, पुंगवः। अधुट्पर इत्येव? पुंक्षुरः, पुंक्षारः। अख्यागीति किम्? पुंख्यातः, पुंख्यातिः ॥ ९ ॥

---

भवेत्, तन्नैवेद स्यादिति नाशङ्कनीयम्, "उदश्चर ०" इति ३।३।३१, "चरेष्ट." ५।१।१३८। इत्यादिनिर्देशात्तदाशङ्कानिवृत्ते। कश्चरति–अत्र पदान्तरेफस्य चपरस्य श। एवमन्यत्रापि ॥ ७ ॥

**नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे।** अत्र पदान्ते चटते सद्वितीये शषसं इति चानुवर्तते, पदान्ते अप्रशान न अधुट्परे सद्वितीये चटते शषस च पूर्वस्यानुस्वारानुनासिकौ इत्यन्वय। अत्र सूत्रे न इति भवानित्यादिप्रयोगस्थो नकारोऽनुकृतस्तस्य षष्ठ्येकवचनम्, नासदादेशस्य नसस्तथासति पूर्वस्यानुस्वारानुनासिकलक्षणप्रयोजनसद्भाव स्यात्, किं च प्रशान्शब्दे प्राप्त्यभावेन तद्वर्जनवैयर्थ्यमपीत्याह—**पदान्ते वर्तमानस्य** इत्यादिना। ननु सूत्रेऽधुटीत्युक्त्याऽधुटि परतो शचटत तस्मिन् नकारस्य शादयो भविष्यन्तीति किमर्थं परग्रहण इति चेत्, सत्यम्, विनिगमनाविरहेण चटते परतो योऽधुट् तस्मिन्नित्यर्थापत्तिवारकतया परग्रहणसाफल्यात्, अन्यथा भवानाचरति इत्यादावेव सूत्रप्रवृत्तिर्न तु भवाँश्चरति इत्यादौ, सति परग्रहणे न विद्यते धुट् परो यस्मादिति बहुव्रीहि सूपपन्न। धुट्परोऽस्मादिति धुट्पर, न धुट्पर अधुट्परस्तस्मिन्निति तु विग्रहो न कार्यो यत प्रसज्यप्रतिषेधाशङ्कया परत्र वर्णाभावेऽपि सूत्र प्रवर्तेत, यथा भवान् त् इत्यत्र। सूत्रे पूर्वस्येत्येकापीय षष्ठ्यपेक्षाभेदाद्विधते अनुस्वारानुनासिकयोरागमादेशत्वात्, तदाह—**पूर्वस्य अनुस्वार आगमो** इत्यादिना। तथाहि–अनुस्वारापेक्षया सा अवयवषष्ठी अनुनासिकापेक्षया तु स्थानषष्ठी इति। **भवाँश्चरति**–अत्र प्रशान्शब्दानवयवस्य पदान्तस्थस्य अकाररूपाधुडक्षरपरकचपरस्य नकारस्य शस्तत्पूर्वस्य चानुनासिक, अनुस्वारश्चेत्याह—**भवांश्चरति**। एवमन्यत्र समन्वय। **अप्रशान्** इत्यस्य फल पृच्छति–**अप्रशान इति किम्? प्रशाञ् चरति।** अत्र पदान्तनस्य प्रशान्शब्दावयवत्वान्न भवति अधुट्परे चकारे शस्तत्पूर्वस्य चानुस्वारानुनासिकौ, किन्तु "तवर्गस्य०" इति नस्य ञः। अधुट्परे इत्यस्य फल पृच्छति—**अधुट्पर इति किम्? भवान्त्सरुकः**–त्सरौ कुशल-त्सरुक, "कोऽश्मादे" ६।३।९७। इति कप्रत्यय; अत्र नस्य न सः तस्य धुट्परकत्वेनाधुट्परकत्वाभावात्। ननु **भवान् चरति** इत्यादौ कथमस्य न प्रवृत्तिरित्याह—**विरामे प्रतिषेधस्य** इत्यादिना। "न संधि" १।३।५२। इत्यनेनेति भाव ॥ ८ ॥

**पुमोऽशिट्यघोषेऽख्यागिरः।** अत्र अधुट्परे अनुस्वारानुनासिकौ च पूर्वस्य इति चानुवर्तते, पुम अधुट्परे अशिटि अख्यागि अघोषे र च पूर्वस्य अनुस्वारानुनासिकौ इत्यन्वय। पुम इति पुस इत्यस्य य सकारात् पूर्वो भागस्तस्यानुकरण तस्मात् षष्ठी, ततश्च "षष्ठ्याऽन्त्यस्य" ७।४।१०६। इति न्यायादन्त्यस्यैवादेश इति लभ्यते, तदेतत्सर्वमाह–**पुमिति पुम्सो०** इत्यादिना। **पुंस्कामा**–पुमांसं कामयते "शीलिकामि०" ५।१।७२। इति सणपवादे णे, "ङस्युक्त कृता" ३।१।४९। इति समासे, आपि च "पदस्य" २।१।८९। इति सकारलोपे, पुम् कामा इति स्थिते, आकाररूपाधुट्परे ख्यागनवयवे शिड्भिन्ने ककाराघोषे पुमित्येतस्य मस्य र, तस्मात् पूर्वस्य उकारस्यानुस्वारागमानुनासिकादेशौ च रस्य "पुस" २।३।३। इति स। एव **पुँस्कामा** इत्यपि। एवमन्यत्र समन्वय। **पुंस्कोकिल०**–पुमांश्चासौ कोकिलश्चेति कर्मधारय। **पुंस्खातम्**–पुंस खातमिति तत्पुरुष। **पुंश्चली**–पुमांस चलयति "कर्मणोऽण्" ५।१।७२। ङीश्च। अत्रानेन जातरेफस्य "चटते सद्वितीये" इत्यनेन चे परे श। **पुंश्छत्रम्**–पुस छत्रमिति विग्रह, रेफस्य श। **पुंष्टिट्टिभः**–पुमान् टिट्टिभ इति कर्मधारय, अत्र रेफस्य ष टे परे "चटते०" इत्यनेन। अशिटि इत्यस्य फल पृच्छति—**अशिटि इति किम्? पुंशरः**–पुस शर इति समास, "तौ मुमो०" १।३।१४। इत्यनुस्वारो मस्य, नतु पुमित्येतस्यानेन र शिड्भिन्नाघोषपरत्वाभावात्। अघोषे इत्यस्य फल पृच्छति—**अघोष इति किम्? पुंदासः**–अत्र घोषपरत्वेन न भवति पुमित्येतस्य मस्य र, किन्तु "तौ मुमो०" इत्यनुस्वार, पुमान् दास पुसो दास इति वा विग्रह। अधुट्परे इत्यस्य फल पृच्छति–**अधुट्पर इत्येव? पुंक्षुरः**–पुस क्षुर इति विग्रह, अत्र ककारस्य षरूपधुट्परत्वान्न भवति र। **पुंख्यात०**–अत्र ख्यागवयवाघोषपरत्वेन न र इति अख्यागि इति, पुसा ख्यात इति च विग्रह ॥ ९ ॥

---

१ यथासङ्ख्य इति पाठो नास्तीति ख० ता०, पु०। २ पुस्खातम्, पुँस्खातम् भ० भ०।

## नृनः पेषु वा ॥ १ । ३ । १० ॥

नृनिति शसन्तस्य नृशब्दस्यानुकरणम्, नृनः पकारे परे रोऽन्तादेशो वा भवति; अनुस्वारानुनासिकौ च पूर्वस्य। नृंःपाहि, नॅ्ःपाहि, नृंःपाहि, नॅ्ःपाहि, नृन्पाहि; नृंःप्रीणीहि, नँ्ःप्रीणीहि, नृंःप्रीणीहि, नँ्ःप्रीणीहि; नृन्प्रीणीहि । पेष्विति किम्? नृन् योजयति । बहुवचनस्य व्याप्त्यर्थत्वादधुट्पर इति निवृत्तम् ॥ १० ॥

## द्विः कानः कानि सः ॥ १ । ३ । ११ ॥

कानिति किमः शसन्तस्यानुकरणम्, द्विरुक्तस्य कानः कानि परे सकारान्तादेशो भवति; अनुस्वारानुनासिकौ च पूर्वस्य । काँस्कान्, कांस्कान् । द्विरिति किम्? कान् कान् पश्यति, अत्रैकः किम् प्रश्नेऽन्यस्तु क्षेपे । कानीति किम्? कांस्कान् पश्यति । रस्याधिकारेणैव सिद्धे सविधानं रुत्वबाधनार्थम् ॥ ११ ॥

## स्सटि समः ॥ १ । ३ । १२ ॥

समित्येतस्य स्सटि परे सकारोऽन्तादेशो भवति, अनुस्वारानुनासिकौ च पूर्वस्य । सँस्स्कर्ता, संस्स्कर्ता, सॅस्स्कर्तुम्; संस्स्कर्तुम् । स्सटीति किम्? संकृतिः । सचस्कारेत्यत्र तु व्यवधानान्न भवति । सम इति किम्? उपस्कर्ता ॥ १२ ॥

---

**नृनः पेषु वा** । अत्र र अनुस्वारानुनासिकौ च पूर्वस्य इति चानुवर्तते, नृन पेषु रो वा पूर्वस्य चानुस्वारानुनासिकौ इत्यन्वय । नृन इति शसन्तनृशब्दानुकरणात् षष्ठी ततश्च "षष्ठ्याऽन्त्यस्य" इति अन्तस्यादेशो लभ्यते, तदेतदाह—**नृनिति** इत्यादिना । अत्र सूत्रे **पेषु** इत्यनेन पकारमात्रमेव निमित्तम्, अन्यथा यदि पकाराकारौ निमित्तौ स्यातान्तर्हि नृप्ध्यचतीत्यादावेव सूत्रप्रवृत्तिर्न तु नृ पाहि इत्यादौ । पकारमात्रे तु निमित्तत्वेनाश्रीयमाणे पकारादाविव सूत्रार्थो न भवति पकारमात्रस्य भावादिति सर्वत्र सिद्ध भवति । **नृंःपाहि**–नृन् पाहि इति स्थितौ पकाराव्यवहितपूर्वस्य नृनो नस्य रपक्षेऽनुस्वार, "र कख०" इति रस्य पपरस्य ःप इत्युपध्मानीयः, तदभावे "र पदान्ते विसर्ग०" इति विसर्गे—**नृंःपाहि** इति । एवमेव रपक्षेऽनुनासिके उपध्मानीये तदभावे च विसर्गे रूपद्वयम्—**नँ्ःपाहि, नॅ्ःपाहि** इति । रत्वाभावपक्षे तत्पृष्ठभावित्वादनुस्वारानुनासिकयोरप्यभावे—**नृन्पाहि** । एवमन्यत्र । सूत्रे पेष्वित्यस्य फल पृच्छति—**पेष्विति किम्? नृन् योजयति**—अत्र नृनो न र पकारपरत्वाभावात् । अथाधुट्परे इत्यनुवर्तमानात्तस्य च निमित्तविशेषत्वात् नृन् प्साति इत्यादावप्रसङ्ग इत्याशङ्कायामाह—**बहुवचनस्य व्याप्त्यर्थत्वात्** इत्यादिना । अधुट्परे धुट्परे च पकारमात्रेऽस्य सूत्रस्य प्रवृत्तिर्व्याप्तिस्तदर्थत्वादित्यर्थ ॥ १० ॥

**द्विः कानः कानि स.** । अत्र अनुस्वारानुनासिकौ च पूर्वस्य इत्यनुवर्तते, द्वि कान कानि स पूर्वस्य च अनुस्वारानुनासिकौ इत्यन्वय । द्वौ वारौ अस्येति विग्रहे "द्वित्रिचतुरः सुच्" ७।२।११०। इति सुचि, उक्तिक्रियापेक्षया क्रियाविशेषणम्, क्रियाविशेषणाना कर्मत्वमित्यनुशासनादमि "अव्ययस्य" इति तल्लुपि—**द्विः** । अनुकार्यानुकरणयोर्भेदस्य विवक्षितत्वात् शसन्तकिम्शब्दानुकरणादपि षष्ठी—**कानः** । तथैव सप्तम्यपि—**कानि**, तदेतदाह—**द्विरुक्तस्य** इत्यादिना । **कांस्कान्, काँस्कान्**–किम शसि कादेशे "शसोऽता सश्च न पुंसि" १।४।४९। इति दीर्घत्वे नत्वे "वीप्सायाम्" ७।४।८०। इति द्विरुक्तावनेन चानुस्वारानुनासिकपूर्वकसादेशे सिद्ध्यति । द्विरित्यस्य फल पृच्छति—**द्विरिति किम्? कान् कान् पश्यति**–अत्र द्विरुक्तत्वाभावान्न सो भवतीत्याह—**अत्रैकः किं क्षेपे** इत्यादिना । तेन कुत्सितान् कान् पश्यतीत्यर्थो भवति । कानीत्यस्य फल पृच्छति—**कानीति किम्? कांस्कान्**–अत्रोत्तरस्य कानो न भवतीत्याशय । ननु 'कांस्कान्' इत्यत्रानेन सकारे सति "सो रु"रिति रुत्वं कुतो न भवतीत्याह—**रस्य** इत्यादिना । अयं भाव –यद्यत्र सकारे कृते रुत्व विधेय स्यात्तर्हि पूर्वस्माद् र इत्यधिकारेणैव सिद्धे सविधान किमर्थं? अपि चैव कृते प्रक्रियालाघव च भवतीत्याह—**सविधानं रुत्वबाधनार्थम्**मिति । ननु कस्यादिरिति तत्पुरुषपक्षेऽनुस्वारस्य व्यञ्जनत्वेनैतत्सूत्रविहितसस्य "पदस्ये"ति लोप कथ न भवतीति चेदुच्यते–तत्र सूत्रे मुख्यव्यञ्जनसंयोगस्यैवाश्रितत्वादस्य तु सामर्थ्यप्रापितत्त्वेनामुख्यव्यञ्जनत्वादिति भाव ॥ ११ ॥

**स्सटि समः** । अत्र स अनुस्वारानुनासिकौ च पूर्वस्य इति चानुवर्तते, सम स्सटि स पूर्वस्य च अनुस्वारानुनासिकौ इत्यन्वय । सम इति प्रादिपठितस्यैव ग्रहण, न तु 'षम्' वैक्लव्ये, इत्यस्य क्विबन्तस्य, "संस्कृते भक्ष्ये" ६।२।१४०। इत्यादिज्ञापकात् तत स्थानषष्ठी, "षष्ठ्याऽन्त्यस्ये"ति न्यायेनान्तस्यादेश इत्याह—**समित्येतस्य** इत्यादिना । **सॅस्स्कर्ता, संस्स्कर्ते**त्यादि । सपूर्वात् करोते "सपरे कृग स्सट्" ४।४।९१। इति स्सटि श्वस्तन्यास्ताप्रत्यये तुम्प्रत्यये च गुणे क्रमेणानुस्वारानुनासिकपूर्वकसादेश । अत्रानुस्वारपक्षे तस्य पूर्वोक्तरीत्या व्यञ्जनत्वेन "धुटो धुटि स्वे वा" इति सकारलोपे संस्कर्ता इति भवति । एवमन्यत्रापि । स्सटीत्यस्य फल पृच्छति—**स्सटीति किम्? संकृतिः**–सपूर्वात् कृग क्तौ रूपम्, गर्गादिपाठात् स्सडागमाभाव । **संचस्कारेत्यत्र तु**–सम्पूर्वात् कृग स्सटि णवि प्रत्यये, "द्विर्धातु ०" ४।१।१। इति द्विर्वचने, "अघोषे शिट" ४।१।४५। इति सलोपे, "ऋतोऽत्" ४।१।३८। इत्यत्वे, "कङश्चञ्" ४।१।४६। इति कस्य चत्वे, "नामिनोऽकलिहले" ४।३।५१। इति वृद्धौ च सचस्कार इत्यत्र सम् स्सटोरव्यवहितत्वाभावान्न भवति । न चात्र सम् स्कृ इत्यवस्थायां प्रत्ययात् पूर्वमेव सर्वस्य निमित्तस्य सद्भावात् "स्सटि सम" इति सादादेशप्रसङ्ग इति वाच्यम्, परत्वान्नित्यत्वाद्धातुमात्राश्रयणेनान्तरङ्गत्वाच्च प्रत्यये सति तत्कार्ये च स्सटो विधानेन प्रत्ययोत्पत्तेः पूर्वं "स्सटि सम" इति सादादेशाप्रसक्ते । यद्यपि "अघोषे शिट" ४।१।४५। इति लुप्तसकारस्य "स्थानीवाऽवर्णविधौ" ७।४।१०९। इति स्थानित्वे, "स्सटि सम" इति प्राप्नोति स्सटीति वर्णसमुदायाश्रयणेनावर्णविधित्वात्तथापि सकारादि सट् स्सट् तस्मिन्निति व्याख्यानेन तस्य वर्णविधित्वात् स्थानित्वाभाव इत्याशय । यद्यपि सचस्कार इत्यत्र द्वित्वेन समो व्यवधानात् कृग सड्भावो 'निमित्ताभावे नैमित्तकस्याप्यपाय' इति न्यायेन प्राप्नोति, तथापि 'स्वाङ्गमव्यवधायकमि'ति न्यायेन द्वित्वरूपस्य स्वाङ्गस्य कृग प्रति व्यवधायकत्वायोगात् न सड्भाव । सम इत्यस्य फल पृच्छति—**सम इति किम्? उपस्कर्ता**–उपपूर्वात् करोतेस्तृचि "उपाद्भूषासमवायप्रतियत्नविकारवाक्याऽध्याहारे" ४।४।९२। इति स्सटि च भवति ॥ १२ ॥

## लुक् ॥ १ । ३ । १३ ॥

समित्येतस्य स्सटि परे लुगन्तादेशो भवति । पृथग्योगादनुस्वारानुनासिकौ च पूर्वस्येति निवृत्तम् । सस्कर्ता, सस्कर्तुम् । केचित्तु अत्राप्यनुनासिकमिच्छन्ति-सँस्कर्ता, सँस्कर्तुम् ॥ १३ ॥

## तौ मुमो व्यञ्जने स्वौ ॥ १ । ३ । १४ ॥

मोर्म्वागमस्य पदान्ते वर्तमानस्य च मकारस्य व्यञ्जने परे तस्यैव स्वौ तावनुस्वारानुनासिकौ वर्णौ पर्यायेण भवतः । मग्रहणेनैव सिद्धे, मुंग्रहणमपदान्तार्थम् । स्वेत्यनुनासिकस्य विशेषणं नानुस्वारस्य, असंभवात् । (मु-)चक्रम्यते, चङ्क्रम्यते, चंचूर्यते, चञ्चूर्यते, दद्रम्यते, दन्द्रम्यते, वंभण्यते, बम्भण्यते, यंयम्यते, यय्यँम्यते, वंवम्यते, वव्वँम्यते । मे-वहंलिहो गौः, वहलिँहो गौः, त्व करोषि, त्वङ्करोषि, त्व चरसि, त्वञ्चरसि, त्व टीकसे, त्वण्टीकसे; त्वं तरसि, त्वन्तरसि-नकारस्य लाक्षणिकत्वादत्र "नोऽप्रशानोऽनु०" ॥ १ । ३ । ८ ॥ इत्यादिना सकारो न भवति; त्वं पचसि, त्वम्पचसि, सयतः, सय्यँतः, अहंयुः, अहय्यँुः, त्व लोकः, त्वँल्लोकः, सवत्सरः, सव्वँत्सरः, कवः, कव्वँः; किलराम्, किन्तराम् । पदान्त इत्येव ? गम्यते, रम्यते । व्यञ्जन इति किम् ? किमत्र । स्वाविति किम् ? ररम्यते, शशम्यते, त्वं रमसे, त्व शण्ढः, त्वं[3] षण्ढः, त्व साधुः; त्व हससि ॥ १४ ॥

---

लुक् । अत्र स्सटि सम इत्यनुवर्तते, सम स्सटि लुक् इत्यन्वय, तदर्थमाह—**समित्येतस्य** इत्यादिना । ननु 'स्सटि समोलुक् च' इत्येव योगविन्यासे लक्ष्यससिद्धौ कथ "लुक्" इति भिन्नयोगारम्भ, न चैकयोगे लुक्पक्षे अनुस्वारानुनासिकौ स्याताम्, सकारसंनियोगशिष्टत्वादनुस्वारानुनासिकयो सकारनिवृत्तावनुस्वारानुनासिकयोरपि निवृत्तिरिति चेत्, सत्यम्, अनुस्वारानुनासिकौ हि कार्यसंनियोगशिष्टौ ततश्च लुक्कार्यसनियोगशिष्टत्वमपि तयोरिति लुक्पक्षेऽपि स्यातामित्याह-**पृथग्योगात्** इत्यादिना । **सस्कर्ता**-अत्र समो मस्य लुगन्तादेश स्सटि परे । येषा मते लुक्पक्षेऽप्यनुस्वारानुनासिकौ तन्मतमुपन्यस्यति—**केचित्तु** इत्यादिना । पाणिनीयसूत्रेषु "सम सुटि" पा० ८।३।५। इति पठ्यते, तत्र 'समो वा लोपमेके' इति भाष्येष्टिरिति लोपपक्षेऽप्यनुस्वारानुनासिकौ भवत । उत्पलोऽप्याह-सम सुटि लोप, लोपपूर्ववर्तिनोऽनुस्वारानुनासिकौ चेति । "समस्स्कृति ग्लुक् च" शा० १।१।१५२। इति सूत्रयत शाकटायनस्यापीद मतम्, कार्यद्वयमप्येकेनैव सूत्रेण प्रतिपादितमिति दिक्, तन्मते उदाहरति—**सँस्कर्ता** इति ॥ १३॥

**तौ मुमो व्यञ्जने स्वौ** । अत्र पदान्ते इत्यनुवर्तते, पदान्ते मुम व्यञ्जने स्वौ तौ इत्यन्वय । **मुः** ( "मुरतोऽनुनासिकस्य" ४।१।५१। इति विहित ) सच मश्चेत्यनयो समाहारद्वन्द्वात् षष्ठ्यां **मुम** इति भवति । पूर्ववस्तु परामृशति तच्छब्द इति तावित्यनेन अनुस्वारानुनासिकाविति लभ्यते, तदेतदाह—**मोर्म्वागमस्य** इत्यादिना । ननु पूर्वस्मादनुवृत्त पदान्त इति मुमोश्चैकविभक्तिनिर्दिष्टत्वात् कथ मकारस्यैव विशेषणं मुश्च न म्वागमस्येत्यत आह—**मग्रहणेनैवेति** । अयमाशय -'सम्भवे व्यभिचारे च विशेषणमर्थवद्भवति' क्वचिदापो द्रव्यमितिवत्सम्भवमात्रेऽपि न सम्भवाभावे क्वचिदपि, मोश्च पदान्तेऽसम्भवाद्विशेषणाभाव इति । यद्यपि सूत्रे तावित्यभावे स्वाविति विशेषणस्य विशेष्यसापेक्षत्वाधिकारानुविद्धावनुस्वारानुनासिकावेवानुवर्त्स्येतस्तथापि तौग्रहणमवधारणार्थमवगम्यतेऽन्यथा अव्यवहितपूर्वोक्ता लुक् पूर्वस्य इति चानुवृत्तौ मुमोर्लुग्भवति पूर्वस्य चानुस्वारानुनासिकौ इति सूत्रार्थे चक्रम्यते इति सिद्धावपि चुक्रम्यते इत्यनिष्टमापद्येत । यतो हि निमित्तभूतवर्णापेक्षया ककारात् पूर्वस्य चकारोत्तरवर्तिनोऽकारस्यानुनासिकप्रवृत्ते, तदर्थके तस्मिन् सति तु अनुस्वारानुनासिकयोरेवानुवृत्त्या न कश्चिद्दोष । पूर्ववस्तुपरामर्शित्वेऽपि तच्छब्दस्य सकारलुको स्वरत्वासम्भवादनुनासिकस्य च समवस्तस्यैव परामर्शे, द्विवचनोपादानात्तत्प्रविवद्धानुस्वारस्य चेत्याह—**चंक्र-स्वेती**त्यादिना । मूलस्थ स्वौ इति अनुनासिकस्य विशेषण, न अनुस्वारस्य विशेषण, असंभवात्, हेतुरय स्वेत्यस्यानुस्वारविशेषणाभावे । **चंक्रम्यते, चङ्क्रम्यते**-कुटिल क्रामतीत्यर्थे, 'क्रमु'पादविक्षेपे इति धातो "गत्यर्थात् कुटिले" ३।४।११। इति यङि, ते प्रत्यये, "मुरतोऽनुनासिकस्य" ४।१।५१। इति द्वित्वे सति लुकि च पूर्वस्य मु, "कङश्चम्" इति चस्य कत्वे, चम् क्रम्यते इति स्थिते म्वागमस्य मस्य व्यञ्जनपरस्य परस्थितव्यञ्जनसजातीयोऽनुनासिकश्चानुस्वार । **चंचूर्यते, चञ्चूर्यते**-गर्हित चरतीत्यर्थ, "गृलुपसदचरजपजभदशदहोगर्ह्ये" ३।४।१२। इति यङि, आत्मनेपदे तेप्रत्यये, "सन्यङश्च" ४।१।३। इति द्वित्वे, "चरफलाम्" ४।१।५३। इति पूर्वस्यम्वागमे, "तिचोपान्त्यातोऽनोदु" ४।१।५४। इति द्वितीयचकाराकारस्योत्वे, चम् चुर्यते इति स्थिते व्यञ्जने परे म्वागमस्य तस्यैव स्वावनुस्वारानुनासिकौ "भ्वादेर्नामि०" २।१।६३। इति दीर्घे च सिद्ध्यति । **दंद्रम्यते, दन्द्रम्यते**-कुटिल द्रमतीत्यर्थ, चक्रम्यते इतिवत्साध्यम् । **वंभण्यते, बम्भण्यते**-'भण्' शब्दे, भृश पुन पुनर्वा भणतीत्यर्थ । **वंवम्यते, वव्वँम्यते**-'टुवम्' उद्गिरणे, भृश पुन पुनर्वा वमतीत्यर्थ । **यंयम्यते, यय्यँम्यते**-'यम्' उपरमे, भृश पुन पुनर्वा यच्छतीत्यर्थ । एभ्यो धातुभ्यो यङि द्विर्वचनादौ कृते पूर्वस्य म्वागमस्य क्रमेणानुस्वारोऽनुनासिकश्च । इति म्वागमोदाहरणानि । **वहंलिहो गौः, वहलिँहो गौ**,-वह लेढीत्यर्थ "वहाभ्राल्लिह" ५।१।१२३। इति खश्, "खित्यनव्ययाऽरुषोर्मोऽन्तोह्रस्वश्च" ३।२।१११। इति मागमेऽनेन मकारस्यानुस्वारेऽनुनासिके च, "ङस्युक्त कृता" इति समासे च भवति । **त्वंकरोषि, त्वङ्करोषि** इत्यादय । युष्मद "त्वमह सिना प्राक्चाक" २।१।१२। इति त्वमादेशेऽनेनानुस्वारेऽनुनासिके च भवन्ति । त्वन्तरसीत्यादौ एतत्सूत्रविहितनकारस्य "नोऽप्रशानो०" इति कस्मान्न भवतीत्याह-**नकारस्य** इत्यादिना । लक्ष्यतेऽनेनेति लक्षण-लिङ्ग तत आगतो "अध्यात्मादिभ्य इकण्" ६।३।७८। इतीकणि, लाक्षणिकोऽनुमेय उच्यते, अय च नकारानुनासिको लक्षणनिष्पन्न इति 'लक्षणप्रतिपदोक्तयो प्रतिपदोक्तस्यैव' इति न्यायेन तत्र न गृह्यते । **संयत , सय्यँतः**-सम्पूर्वात्यमे क्तप्रत्यये, "यमिरमिनमिगमि०" ४।२।५५। इति मलोपेऽनेनानुस्वारेऽनुनासिके च सिद्ध्यत । एवमुत्तरेष्वपि यँल्वँौ सिद्धा । कव -कमस्यास्तीति विग्रहे "कशम्भ्यां युस्तियस्तुतवभम्" ७।२।१८। इति वप्रत्यय । सूत्रे स्वावित्यस्य फल पृच्छति—**स्वाविति किम् ? ररम्यते, शंशम्यते**-'रमि' क्रीडायाम्, 'शमूच्' उपशमे, यङि द्वित्वे रेफोष्मणा रेफोष्मव्यतिरेकेणाऽन्ये स्वा न सन्ति, स्थानास्यप्रयत्नैक्याभावात्, रेफोष्मणा चानुनासिकत्वाभावात्, स्वग्रहणादनुस्वार एव । स्वग्रहणमन्तरेणानुस्वारानुनासिकविधानेऽत्रापि मकारस्य एव णकारादिर्निमित्तप्रत्यासत्त्या प्रसज्येत इति भाव ॥ १४ ॥

---

१ म् ग्रह० पु० । २ मु० पु० । ३ त्व षण्ढ इद रूप नास्तीति ख० टा० ।

## मनयवलपरे हे ॥ १ । ३ । १५ ॥

मनयवलपरे हकारे परे पदान्ते वर्तमानस्य मकारस्य स्थानेऽनुस्वारानुनासिकौ स्वौ पर्यायेण भवतः । किं ह्मलयति, किम् ह्मलयति, किं ह्नुते, किन्ह्नुते, किं ह्यः, किय्ँह्यः, किं ह्वलयति, किव्ँह्वलयति, किं ह्लादते, किल्ँह्लादते । मादिपर इति किम्? किं हसति । ह इति किम्? किं ज्वलति ॥ १५ ॥

## सम्राट् ॥ १ । ३ । १६ ॥

समो मकारस्य राजतौ क्विबन्ते परेऽनुस्वाराभावो निपात्यते । सम्राट् भरतः, सम्राजौ; सम्राजः । साम्राज्यम् ॥ १६ ॥

## ङ्णोः कटावन्तौ शिटि नवा ॥ १ । ३ । १७ ॥

पदान्ते वर्तमानयोर्ङकारणकारयोः शिटि परे यथासङ्ख्यं क् ट् इत्येतावन्तौ वा भवतः । प्राङ्क् शेते, प्राङ्क् छेते, प्राङ् शेते; प्राङ्क् षण्डे, प्राङ् षण्डे; प्राङ्क् साये, प्राङ् साये, सुगण्ट् शेते, सुगण्ट् छेते, सुगण् शेते, वण्ट् षण्डे, वण् षण्डे; वण्ट् साये, वण् साये, क्रुङ्क्षु, क्रुङ्षु; सुगणट्सु, सुगण्सु । ङ्णोरिति किम्? भवान् शेते, महान् षण्डे । शिटीति किम्? प्राङ्करोषि, सुगण् चरति । पदान्त इत्येव? वभण्षि ॥ १७ ॥

## ङ्नः सः त्सोऽश्चः ॥ १ । ३ । १८ ॥

पदान्ते वर्तमानाद् डकारान्नकाराच्च परस्य सकारस्य स्थाने त्स इत्ययं तकारादिः सकारादेशो वा भवति । अश्च-श्च-संयोगावयवश्चेत् सकारो न भवति । षड्त्सीदन्ति—डकारनिर्देशाट्टत्वं न भवति, केचित्तु टत्वमपीच्छन्ति—षट्त्सीदन्ति । भवान्त्साधुः, पक्षे—षट् सीदन्ति, भवान् साधुः । स इति किम्? षड् भवन्ति, महान् पण्डः । अश्च इति किम्? षट्श्च्योतन्ति,

---

**मनयवलपरे हे** । अत्र पदान्ते म तौ स्वौ इति चानुवर्तते, पदान्ते म मनयवलपरे हे स्वौ तौ इत्यन्वय । ननु 'मनयवले' इति सप्तम्यन्तपाठे परशब्दाभावे च मकारादौ परे यो हकारस्तस्मिन् इत्यर्थेनाभिप्रेतलक्ष्यससिद्धौ किमर्थं परग्रहणमिति चेदुच्यते—यद्यपि परशब्दाभावे विनिगमकाभावेन हकारपरे मकारादाविति विपरीतार्थविज्ञाने 'येन नाव्यवधानं तेन व्यवहितेऽपि स्यात्' इति न्यायेन अकारादिव्यवधाने किं मह्यति, किं नह्यति, किं याहि, किं वहसि, किं लिह्यते इत्यत्रैव सूत्रं प्रवर्तेत न तु किं ह्मलयति इत्यादौ, तथापि विपरीतार्थविज्ञाने पूर्वेणैव 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेनेदं मकारादौ हपर एव इति नियमयति । तथासति त्वं मन्यसे इत्यादौ पूर्वेणापि न स्यादिति परग्रहणम्, सति च तस्मिन् मनयवला परे यस्मादिति बहुव्रीहिर्न तु मनयवलेभ्य परस्तस्मिन्निति तत्पुरुष इति भाव । **किम् ह्मलयति**—अत्र मपरे हे मस्य पदान्तस्थस्य हकारस्य स्वो नास्तीति व्यवहितमकाराद्यपेक्षयाऽनुनासिक स्वो मकार एवेत्याशय, अनुस्वारे तु—**किं ह्मलयति** ॥ १५ ॥

**सम्राट्** । अत्र "तौ मुमो व्यञ्जने स्वौ" इति प्राप्तानुस्वारस्याभावोऽनेन निपात्यतेऽनुनासिकस्य चाप्राप्ति स्वत्वाभावादेकस्येत्याह—**समो मकारस्य** इत्यादिना । 'राजृग्' दीप्तौ पातो, सपूर्वात् सराजते इति क्विपि, तल्लुकि "गतिकन्य०" ३।१।४२। इति समासे, सेर्लुकि "यजसृज०" इति षत्वे, धुटस्तृतीयत्वे प्रथमत्वे च—**सम्राट्** । अत्रैकवचनमविवक्षितम् तेन "सम्राजौ" इत्यादावप्यनुस्वाराभावस्तदाह—**सम्राजौ** इत्यादि ॥१६॥

**ङ्णो॰ कटावन्तौ शिटि नवा** । अत्र पदान्ते इत्यनुवर्तते, पदान्ते ङ्णो शिटि नवा कटौ अन्तौ इत्यन्वयस्तदर्थमाह—**पदान्ते वर्तमानयोः** इत्यादिना । ननु अन्तग्रहणं निष्फलं ङ्णो कटौ इत्युक्त्या ङ्ण कटमिति समाहारद्वन्द्वं कृत्वा पञ्चम्यन्तत्वेनादेशत्वनिरासे लक्ष्यसिद्धेरिति चेन्नैवम्, अन्तग्रहणाभावे "अनन्त पञ्चम्या प्रत्यय" इति कस्य प्रत्ययत्वे सन्धिनामकारकसमासरूपचतुष्कवृत्तित्वेन ऐकार्थ्ये सति विभक्तिलोपे धुटिपरे "अच" १।४।६९। इति सूत्रेण विहितस्य नस्य "नाम्नो नोऽनह्न" २।१।९१। इति लोप स्यात्, तथाच प्राङ्क्शेते इति न भवेदिति । अन्तग्रहणे सति प्राङ्क्छेते इत्यत्र ककारस्य पूर्वपदचरमावयवत्वेन पदान्तत्वात् "प्रथमादधुटि शश्छ" इति छत्वं सिद्धम् । एवं प्राङ्क्साये इत्यत्र पूर्ववत् ककारस्य पदान्तत्वात् "नाम्यन्तस्था०" २।३।१५। इति पदस्य अन्तर्मध्ये विधीयमानं षत्वं न भवति । अन्तग्रहणाभावे कस्य प्रत्ययत्वे साये इति सकारस्य तेन पदादित्वविघातात् षत्वं स्यात् । एवं सुगणट्सु इत्यत्र "नाम सिदय्०" इत्यनेन टस्य पदान्तत्वेन "पदान्तात् टवर्गा०" १।३।६३। इति सूत्रेण "सस्य शषौ" १।३।६१। इति प्राप्तं सकारस्य षत्वं प्रतिषिध्यते, अन्यथा प्रतिषेधाभावादपदान्तत्वेन सस्य षत्वं स्यादेव । प्राञ्चतीति अञ्चे क्विपि अनर्चाया नलोपे सेर्लुकि "अच" इति नागमे "पदस्य" इत्यन्तलोपे "युजञ्चक्रुञ्चो०" २।१।७१। इति नस्य ङकारे—प्राङ् शेते इत्यवस्थाया पदान्तस्थस्य शिट्परस्य ङकारस्य विभाषया कागमे "प्रथमाद०" इति शस्य छत्वे—**प्राङ्क्छेते** । छत्वाभावे—**प्राङ्क् शेते** । उभयोरभावे—**प्राङ्शेते** । एवमन्यत्र समन्वय । **महान् षण्डे**—अत्र "षि तवर्गस्य" १।३।६४। इति प्रतिषेधात् "तवर्गस्य०" १।३।६०। इति णत्वं न । **वंभण्षि**—अत्र सिप्रत्ययसस्य "सस्य शषौ" इति षत्वम् ॥ १७ ॥

**ङ्न॰ सः त्सोऽश्च** । अत्र पदान्ते नवा इति चानुवर्तते, पदान्ते ङ्न अश्च स त्सो नवा इत्यन्वय, तदर्थमाह—**पदान्तेवर्तमानात्** इत्यादिना । **षड्त्सीदन्ति**—षषो "डति ष्ण०" १।४।५४। इति जसो लुपि "धुटस्तृतीय" इति तृतीयत्वे—षड्, सदेरन्तौ शवि सीदादेशे—सीदन्ति इति षड् सीदन्ति इत्यत्र पदान्तडात् परस्य सस्य त्सादेशे षड्त्सीदन्ति । अत्र "पदान्ताट्टवर्गाद०" इति निषेधात्तस्य "तवर्गस्य०" इति टवर्गो न भवति । ननु षड् इत्यत्र "अघोषे प्रथमोऽशिट" इति टत्वं कथं न भवतीत्याह—**डकारनिर्देशात्** इति । अयमाशय—सूत्रे षडिति प्रयोगस्थो डकारोऽनुकृतस्तस्मादेव टत्वं न भवति । अन्ये तु सूत्रे टकारमनुकुर्वन्ति तस्य तृतीयत्वे ङ्न इति निर्देश इति तन्मतमुपन्यस्यति—**केचित्तु** इति । पाणिनीया शाकटायनाश्च । "ड सि धुट्" पा० ८।३।२९।, "ङ्नखड् सोऽश्च" शा० १।१।१४६। तट्टीकाकृद्भ्याम् षट्त्सन्त, मधुलिट्त्सीदति इति चोदाहृतम् । तन्मते ग्रन्थकृदेवोदाहरति—**षट्त्सीदन्ति** । **भवान्त्साधु**—अत्र नकारस्य "नोऽप्रशानो०" इति न भवत्यनुस्वारानुनासिकपूर्वः सकारोऽधुट्पर इति वचनात्, अत्र हि धुट्परस्तकार इति । **षट्श्च्योतन्ति**—'स्च्युतृ' क्षरणे, "सस्य शषौ" इति शे, अन्ति प्रत्यये शवि, उपान्त्यगुणे च—श्च्योतन्तीति भवति । यद्यपि "सस्य शषौ" इत्यत्रानु इत्यधिकारेऽश्च इत्यभावे दन्त्यसकारस्य त्स प्राप्नोति, तथाप्युपदेशावस्थायां तालव्यपाठं विहाय दन्त्यं पठन्नाचार्यो बोधयति यद्दन्त्यस्थाननिष्पन्नस्य तालव्यस्यापि दन्त्यापदिष्टं कार्यं भवतीति प्राप्तमिदं अश्च इत्यनेन

१ सुगणटति म० म० । २ श्च्° म० म० । ३ शाका° म० म० ।

भवाञ् श्च्योतति । श्च्युतेः सोपदेशत्वात् शकारस्य सकारोपदिष्टं कार्यं विज्ञायते, तेन मधु श्च्योततीति क्विप्, मधुश्च्युतमाचष्ट इति णावन्त्यस्वरादिलोपे, पुनः क्विपि, णिलोपे[1], सौ, तल्लुकि च यलोपे; "संयोगस्यादौ स्कोर्लुक्" २ । १ । ८८ ॥ इति शलोपे चस्य कत्वे मधुगिति सिद्धम् ॥ १८ ॥

## नः शि ञ्च् ॥ १ । ३ । १९ ॥

पदान्ते वर्तमानस्य नकारस्य स्थाने शि-शकारे परे ञ्च् इत्ययमादेशो वा भवति । अश्च:-श्चंसंयोगावयवश्चेच्छकारो न भवति । भवाञ्छूरः, भवाञ्शूरः, पक्षे-भवान् शूरः, एवं कुर्वञ्छेते, कुर्वञ्शेते, कुर्वन् शेते । आदेशबलात् कत्व न भवति । शीति किम्? भवान् करोति । अश्च इत्येव? भवाञ्श्च्योतति । राजा शेते इत्यत्र तु परत्वान्नलोपः ॥ १९ ॥

## अतोऽति रोरुः ॥ १ । ३ । २० ॥

वेति निवृत्तम् । अतोऽकारात् परस्य पदान्ते वर्तमानस्य रोः स्थाने अति-अकारे परे उकारादेशो भवति । कोऽत्र, कोऽर्थः । अत इति किम्? अग्निरत्र, देवा अत्र, सुश्रोत३यत्र न्वसि । अतीति किम्? क इह, सर्वज्ञ आस्ते; पय अ३श्वदत्त । रोरिति किम्? पुनरत्र ॥ २० ॥

---

र्यते, तदाह-श्च्युतेः इत्यादिना । शकारस्य सकारोपदिष्ट कार्यं विज्ञायतेऽत्र हेतु -श्च्युते. सोपदेशत्वादिति, अन्यथा तालव्यमेवोपदिशेदिति भाव. । तत्फलमाह—तेन इत्यादिना । मधुश्च्योततीति विग्रहे "क्विप्" ५।१।१४८। इति क्विपि, मधुश्च्युतमाचष्टे इति विग्रहे "णिज्बहुल नाम्न कृगादिषु" ३।४।४२। इति णौ, "त्र्यन्त्यस्वरादे." ७।४।४३। इत्यन्त्यस्वरादिलोपे, ण्यन्तात् पुन क्विपि, "णेरनिटि" ४।३।८३। इति णिलोपे, "नाम्न प्रथमैकद्विबहौ" २।२।३१। इति सौ, "दीर्घङ्याब्व्यञ्जनात् से" १।४।४५। इति सिलुकि, "पदस्य" इति यलोपे, "संयोगस्यादौ स्कोर्लुक्" २।१।८८। इति शलोपे, चस्य "चज कगम्" इति कत्वे—मधुक् इति भवति । यदि सकारोपदिष्ट कार्यं तत्स्थाननिष्पन्नशस्य न भवेत्तर्हि "संयोगस्यादौ०" इति अत्र प्रयोगे शलोपो न स्यात्तेन हि सकारस्य लोपो विधीयत इति भाव । ननु मधुक् इत्यत्र "णेरनिटि" इति जातस्य णिलोपरूपस्वरादेशस्य "स्वरस्य परे प्राग्विधौ ७।४।११०। इति सूत्रेण स्थानिवत्वात् शलोप "संयोगस्यादौ०" इति न प्राप्नोति, "न सन्धिङीयक्विद्विदीर्घासद्विधावस्क्लुकि" ७।४।१११। इत्यत्रास्क्लुकीतिवचनात् स्थानित्वप्रतिषेधाभावादिति चेन्न-अस्क्लुकीत्यत्र नञ्निर्देशेन 'नञानिर्दिष्टमनित्यमि'ति न्यायात् स्थानित्वाभाव । त्स इत्यत्र सकारस्य सकारविधाने प्रयोजनाभावेऽपि तद्विधान तकारस्य तदवयवत्वप्रतिपत्त्यर्थम्, तच्च तदनुवादमन्तरेणाशक्यमन्यथा प्रकारान्तरेण सन्देहगौरवयोरापत्ते । ननु ञ्च इति कथम्? ञ्च इति "तवर्गस्य०" इत्यनेन भाव्यमिति चेत्, सत्यम्, "पदान्तात्०" इति निषेधान्न भवति ण ॥ १८ ॥

नः शि ञ्च् । अत्र पदान्ते नवा अश्च इति चानुवर्तते, पदान्ते न अश्चे शि ञ्च् नवा इत्यन्वय । ननु "ङ्न स त्सोऽश्च" इति सूत्रे न इति पृथग्योगविधानेन 'अर्थवशाद्विभक्तिपरिणाम' इति न्यायेन पञ्चम्यन्तस्य तस्य षष्ठ्या विपरिणामेनात्रानुवृत्तौ स्थानित्व भविष्यति किमर्थं सूत्रे न इत्युपादानम्? यदि चोच्येत तुल्ययुक्त्या सूत्रे शि इति षष्ठ्या विपरिणामे शकारस्य स्थानित्व कस्मान्न? इति चेत्, शि इति सप्तमीनिर्देश एव तत्र मानमन्यथा षष्ठीनिर्देशमेव कुर्यादिति चेदत्रोच्यते-ततोऽनुवृत्तस्य 'न' इत्यस्यात्र षष्ठ्या विपरिणामेऽपि श इति षष्ठीनिर्देशे सति पञ्चमीसन्देहे शकारात् परस्य नस्य स्थानित्व स्यात् तन्मा भूदिति सप्तमीनिर्देशादत्रैव विपरिणामो नान्यत्रेति तस्मात् स्थानित्वप्रतिपत्त्यर्थं सूत्रे नकारकरणमिति भाव । तदाह—पदान्ते वर्तमानस्य नकारस्य इत्यादिना । कुर्वञ्छेते—करोते "शत्रानशावेष्यति तु सस्यौ" ५।२।२०। इत्यनेन शतृप्रत्यये, "कृतनादेरु" ३।४।८३। इत्युप्रत्यये गुणे, "अत शित्युत्" ४।२।८९। इत्युकारे, "ऋदुदित" १।४।७०। इति नागमेऽनेन पदान्तस्थस्य शपरस्य नस्य विभाषया 'ञ्च्' इत्यादेशे "प्रथमादधुटि" इति शस्य छत्वे सिध्यति, छत्वाभावे—कुर्वञ्शेते । उभयोरभावे "तवर्गस्य०"इति सर्वत्र नकार -कुर्वञ्शेते । नन्वत्र "चज कगम्" इत्यनेन कत्व कथ न भवतीत्याह—आदेशबलात् इत्यादिना । अन्यथा ककारमेव कुर्यात्, असन्नित्यधिकारादत्रासद्रूपादेशबलाद्वा कत्व "चज कगमि"ति न भवतीत्यर्थो वा । उपलक्षणमिद तत "पदस्य" इति लोपोऽपि न भवति । राजा शेते-अत्र राजन्शब्दात् सौ, तल्लुकि "नि दीर्घ" १।४।८५। इति दीर्घे, राजान् शेते इत्यत्र उभय प्राप्नोति "नाम्नो नोऽनह" इति "न शि ञ्च्" इति च, 'अन्यत्रान्यत्रलब्धावकाशयो शास्त्रयोरेकत्र युगपत्प्राप्तौ परं भवति' इति नियमादाह—परत्वान्न लोपः—"नाम्नो नोऽनह" इत्यनेनेति शेष ॥ १९ ॥

अतोऽति रोरुः । अत्र पदान्ते इत्यनुवर्तते, अत पदान्ते रो अति उ इत्यन्वय । पूर्वं स्थानी निमित्तम्, कार्यमिति क्रमेण अतो रोः अति उ इति निर्देशे कर्त्तव्ये "अतोऽति रोरु"रिति निर्देशक्रमातिक्रम कुर्वन्नाचार्योऽधिकारातिक्रम सूचयति, तदाह—वेति निवृत्तम् । अतोऽतिनिर्देश सूत्रकृत सूचयति 'यत्सन्निपातलक्षणो विधिरनिमित्त तद्विघातस्य' इति न्यायोऽत्र न प्रवर्ततेऽन्यथाऽकारसन्निपात मत्वा जायमानो रोरुकारविधि "एदोत पदान्ते०" इति लुक्द्वाराऽकारविघाते निमित्त न भवेत् । अपि चातोऽति रोरुरिति ज्ञापकात् तरौ अयन तर्वयनमित्यत्र रुशब्दस्यैव न ग्रहण, अन्यथाऽतोति रोरुरिति सूत्रेऽप्युत्वाप्रवृत्त्या विकृतसूत्रस्वरूपापत्ते, किन्तु "सो रु"रिति सूत्रविहितस्य उदित एव रोर्ग्रहणम् । किं च भो भगोऽघोभ्य परस्य पदान्तस्थस्य रोरन्यस्यासम्भवादत्रत्यस्यैव रोरित्यनुवृत्तेरिति "सो रु"रित्युदित एव ग्रहणम् । कोऽत्र—"किम" सौ कादेशे, "सो रु" इति रुत्वेऽनेन उकारे, क उ अत्र इत्यवस्थाया "अवर्णस्य०" इति "इवर्णादेर०"इति च सूत्रद्वयप्राप्तौ 'अन्तरङ्गबहिरङ्गयो' इति न्यायादोत्वप्रवृत्तिर्वत्वनिवृत्तिश्च, "एदोत पदान्ते०" इत्यकारलुक् । सुश्रोत३ यत्रन्वसि-शोभन श्रोतोऽस्येति बहुव्रीहौ, आमन्त्र्यसेर्लुपि, सस्य रुत्वे, परत्वादन्तरङ्गत्वाच्च "दूरादामन्त्र्यस्य०" ७।४।९९। इत्युकारात् पूर्वमेव प्लुते अत इति तकारस्य स्वरूपग्रहणार्थत्वादकारस्वरूपादनेन पश्चादुत्व न भवति "रोर्ये" इति च भवतीत्यत इत्यस्येद फलम् । पय अ३श्वदत्त-अत्र ह्रस्वाकारपरत्वाभावान्न रोरु, पय शब्दात् "अनतो लुप्" १।४।५९। इति सेरमो वा लुपि सस्य रुत्वे, अश्वदत्त इति आमन्त्र्यपदे "दूरादामन्त्र्यस्य०" इति प्लुते रुत्वे "रोर्ये" इति यस्य "स्वरे वा" इति लुग्भवति । "सो रु" इत्यनेन विहितस्य रोर्ग्रहण किमर्थमिति पृच्छति-रोरिति किम्? पुनरत्र-अत्र रेफस्य उदित्वाभावादुत्व न भवति ॥ २० ॥

१ ञ्च्° म० म० ।

---

१ णिग्लोपे पु०, ख० ता०, मान्दा० । २ चयलोपे° इति पाठो नास्तीति पु०, ख० ता०, मान्दा० ।

## घोषवति ॥ १ । ३ । २१ ॥

अतः परस्य पदान्ते वर्तमानस्य रोः स्थाने घोषवति परे उकारो भवति । को गच्छति, धर्मो जयति; अहोभ्याम् । घोषवतीति किम्? कः करोति । अत इत्येव? मुनिर्गच्छति, सुश्रोत३ देहि । रोरित्येव? स्वर्याति, पुनर्वक्ति । उत्तरेण लुकि प्राप्तेऽपवादोऽयम् ॥ २१ ॥

## अवर्णभोभगोऽघोर्लुगसंधिः ॥ १ । ३ । २२ ॥

अवर्णाद् भोभगोऽघोभ्यश्च परस्य पदान्तस्थस्य रोर्घोषवति परे लुग्भवति, स चासंधिः-संधेर्निमित्तं न भवति । श्रमणा गच्छन्ति, धार्मिका जयन्ति । अकारात्तु परस्य रोः पूर्वेणापवादत्वादुत्वमेव । भो गच्छसि, भगो हससि; अघो यासि । भोभगोअघो इत्येते आमन्त्रणार्थाः सकारान्ता अव्ययाः । केचित्तु भवद्भगवदघवतां संबोधने सौ परतोऽवशब्दस्यौत्वं तकारस्य च रुत्वं कृत्वा एतानि रूपाणीच्छन्ति, तेषां द्विवचनबहुवचनयोः स्त्रियां च न सिध्यन्ति-भो ब्राह्मणौ, भो ब्राह्मणाः; भो ब्राह्मणि । भगो ब्राह्मणौ, भगो ब्राह्मणाः; भगो ब्राह्मणि । अघो ब्राह्मणौ, अघो ब्राह्मणाः; अघो ब्राह्मणि । घोषवतीत्येव? कुमाराः क्रीडन्ति । असंधिरित्युत्तरार्थम् ॥ २२ ॥

## व्योः ॥ १ । ३ । २३ ॥

अवर्णात् परयोः पदान्ते वर्तमानयोर्व्योर्विकारयकारयोर्घोषवति परे लुग्भवति, स चासंधिः । वृक्ष वृश्चति क्विप्, वृक्षवृश्चमाचष्टे इति णावन्त्यस्वरादिलोपे वृक्षवयतीति विचि सिद्धं वृक्षव्, वृक्ष गच्छति, एव माला हसति, अव्य गच्छति ।

---

**घोषवति** । अत्र अत रोः पदान्ते उ इति चानुवर्तते । अति इति नानुवर्तते घोषवति इति निमित्तान्तरस्योपादानात् । अत पदान्ते रो घोषवति उ इत्यन्वयस्तदाह—**अतः परस्य** इत्यादिना । ननु पूर्वसूत्र एव घोषवद्ग्रहणं क्रियतामर्थस्य समानत्वात् किं पृथग्योगेन, सत्यं, घोषवतीत्येवोत्तरत्रानुवर्तेत इत्येतदर्थं पृथग्योगोऽन्यथात्वेकयोगनिर्दिष्टत्वादतीत्यप्यनुवर्तेत इति भाव । **अहोभ्याम्**-अहन्शब्दाद्भ्यामि "अह्न" २।१।७४। इति नकारस्य रुत्वेऽनेनोत्वेऽवर्णस्यौत्वे च सिध्यति । **सुश्रोत३ देहि**-अत्र पदान्तस्थस्य रोर्घोषवत्परत्वेऽपि ह्रस्वाकारात् परत्वाभावान्न उत्व, किन्तु "अवर्णभोभगोऽघोर्लुक्०" इति रोर्लुक् । को गच्छतीत्यादौ "अवर्णभोभगोऽघोरिति" उत्तरसूत्रेण लुकि प्राप्ते तदपवादेनानेनोत्वं विधीयत इत्याह—**उत्तरेण** इत्यादिना ॥ २१ ॥

**अवर्णभोभगोऽघोर्लुगसंधिः** । अत्र पदान्ते रो घोषवति इति चानुवर्तते, अवर्णभोभगोऽघो पदान्ते रो घोषवति लुक् स च असन्धिरित्यन्वय, तदर्थमाह—**अवर्णभोभगोऽघोभ्यश्च** इत्यादिना । ननु सन्धिरूपतायामसन्धिरिति प्रतिषेधो युक्त, लुक् तु अभावरूपत्वात् सन्धिरूप एव न भवतीति कथ स प्रतिषेध्य? इत्यत आह-**सचासंधिः-संधेर्निमित्तं न भवतीति** । अत्र सन्धिशब्देन सन्धिनिमित्तस्योपचारादभिधानमित्यर्थ । **श्रमणा गच्छन्ति**-श्रमणशब्दाज्जसि "अत आः स्यादौ०" १।४।१। इत्याकारे, "समानानां तेन०" इत्येकादेशे सस्य रुत्वे तस्यानेन लोपे सति भवति । एवमन्यत्र । ननु को गच्छतीत्यादौ पूर्वेणोत्व अनेन च लोप प्राप्त इत्युभयप्राप्तौ परत्वात् लोप एव स्यात्, इति चेन्न, निरवकाशत्वेनापवादत्वादुत्वमेव प्रवर्तते । नच "अवर्णभो०" इति सूत्रे 'अवर्ण' इत्यत्र वर्णग्रहणाज्जातिग्रहणेन सर्वविधाकारग्रहणे प्रतिलक्ष्य लक्षणोपप्लव इति सिद्धान्तादरे ह्रस्वाकारविषयकस्याऽस्यापि निरवकाशत्वमिति वाच्यम्, तस्योत्तरार्थत्वादित्याह—**अकारात्तु** इत्यादिना । भोभगोअघो इत्येषां परिचय दर्शयति—**भोभगोअघो इत्येते आमन्त्रणार्थाः** इत्यादि । **अव्ययाः**—चादेराकृतिगणत्वादिति शेष । "विभाषा भवद्भगवदघवतामोच्चावस्य" इति वार्तिककृत कात्यायनस्य मतमाह—**केचित्तु** इत्यादिना, इच्छन्तीत्यन्वेन । भवत् सर्वादि उकारस्येत्वे, अवशब्दस्य ओत्वे, तकारस्य च रुत्वे भोर् । "गोचरसंचर०" ५।३।१३१। इति घे भग तत "तदस्याऽस्त्य०" ७।२।१। इति मतौ, "मावर्णा०" २।१।९४। इति वत्वे भगवत्, अत्रावस्य ओत्वे तस्य च रुत्वे भगोर् । 'अघण्' पापकरणे इत्यस्मादलि मतौ वत्वे अघवत्, अवस्य ओत्वे तस्य च रुत्वे अघोर् । इत्येषां घोषवति परेऽनेन लुक्, तन्मतेऽनुपपत्तिमाह—**तेषां** इत्यादिना । तन्मतेऽनुपपन्नप्रयोगसमुदायं दर्शयति—**भो ब्राह्मणौ** इत्यादि । ननु सति सद्भावे प्रतिषेध उपपद्यते-अवर्णादिभ्यस्तु घोषवति रोर्लुकि सन्धिसंभव एव नास्तीत्यत आह—**असंधिः** इत्यादि । नच "स्वरे वा" इत्यत्रैवासन्धिरिति कार्यमिति वाच्यम् असंधेर्लुक्सनियोगशिष्टत्वस्य ज्ञापनार्थमत्रोपादानमिति भाव ॥२२॥

**व्योः** । अत्र अवर्णात् पदान्ते घोषवति लुक् असंधि इति चानुवर्तते, अवर्णात् पदान्ते व्यो घोषवति लुक् स च असंधिरित्यन्वय, तदर्थमाह—**अवर्णात् परयोः** इत्यादिना । **वृक्षं वृश्चति** इत्यर्थे **क्विप्**—"क्विप्०" ५।१।१४८। इत्यनेन, **वृक्षवृश्चमाचष्टे** इत्यर्थे **णौ**—"णिज्बहुलं नाम्नः कृगादिषु" ३।४।४२। इत्यनेन, **अन्त्यस्वरादिलोपे**—"त्र्यन्त्यस्वरादे" ७।४।४३। इत्यनेन, **वृक्षवयति** इति विग्रहे **विचि**—"मन्वन्क्वनिप्विच् क्वचित्" ५।१।१४७। इत्यनेन । क्विप्प्रत्यये सति तु "अनुनासिके च च्छ्वः शूट्" ४।१।१०८। इत्यूट् स्यादित्यत उक्त-**विचि सिद्धं** इति । "स्वरस्य परे प्राग्विधौ" ७।४।११०। इति णिलुक स्थानिवत्त्वेन "य्वो प्वऽय्व्यञ्जने लुक्" ४।४।१२१। इति न वस्य लुक् । "नसन्धिङीयक्वि०" ७।४।१११। इति स्थानिवद्भावप्रतिषेधस्तु क्विविधौ प्रवर्ततेऽत्र तु विच्प्रत्ययसत्त्वेन तन्निषेधानवकाश । तथाच—**वृक्षव् गच्छति** इत्यवस्थायां अवर्णात् परस्य पदान्तस्थस्य घोषवत्परस्य च वस्य स्थाने लुगनेनेति समन्वय । एवमन्यत्र । **अव्य गच्छति**-अव्ययतीति विग्रहे विचि क्विपि वा अव्यय् इत्यत्र णिलुक स्थानिवत्त्वेन "य्वो प्व०" इति यस्य न लुक् । क्विपि तु यद्यपि "स्वरस्य०" इति णिज स्थानिवत्त्वस्य "न सन्धिङीयक्वि०"इति निषेध प्राप्नोति तथाच—"य्वो प्व०"इति यस्य लुक् प्राप्तस्तथापि तेन लुक न भवति-"इसास शासोऽङ्व्यञ्जने" ४।४।११८। इत्यनेन व्यञ्जनद्वारा क्विपि परे इसित्यादेशे सिद्धे "क्वौ" ४।४।११९। इति सूत्र क्विपि क्वचित् व्यञ्जनकार्यमनित्यमिति ज्ञापयतीति यल्लुक् न भवति । अथवा 'संज्ञापूर्वको विधिरनित्य' इति न्यायेन "य्वोः" इति न प्रवर्तते, न चानेनापि सूत्रेण स्थानिवद्भावाल्लोपो न भविष्यतीति वाच्यम्, सन्धिविधौ तत्प्रतिषेधादिति । परे तु व्यो पदान्तयोरसंभवाद् घोषवति लोप नारभन्ते, 'नहि यण पदान्ता सन्तीति' हि

---

१ चादौ म० पु० । २ सिध्यति॰ म० म०, माण्डा०, ख० ता० ।

घोषवतीत्येव ? वृक्षव् करोति, अव्यय् करोति । अवर्णादित्येव ? तरुव् गच्छति । पदान्त इत्येव ? भव्यम्, जय्यम् । कश्चित्तु स्वरजयोरनादिस्थयोर्यकारवकारयोर्घोषवत्यवर्णादन्यतोऽपि लोपमिच्छति–अध्यारूढ उम्–ईशम् अध्युः, स चासाविन्दुश्च–अध्विन्दुः । साधोरीः–श्रीः साध्वी, तस्या उदयः साध्युदयः इत्यादि ॥ २३ ॥

## स्वरे वा ॥ १ । ३ । २४ ॥

अवर्णभोभगोऽघोभ्यः परयोः पदान्ते वर्तमानयोर्वकारयकारयोः स्वरे परे लुग्वा भवति, स चासंधिः । पट इह, पटविह; अवर्णादीषत्स्पृष्टतरस्य विकल्पेन विधास्यमानत्वात् त्रैरूप्यम् पटविह[1] । वृक्ष अत्र, वृक्षवत्र, वृक्षवत्र । वृक्षा इह, वृक्षाविह; वृक्षाविह । त आहुः, तयाहुः; तयाहुः । तस्मा इदम्, तस्मायिदम्; तस्मायिदम् । क आस्ते, कयास्ते; कयास्ते । देवा आहुः, देवायाहुः; देवायाहुः । भो अत्र, भोप्रभृतिभ्य उत्तरेणेषत्स्पृष्टतरस्य नित्यं विधानाद् द्वैरूप्यम्–भोयत्र । भगो अत्र, भगोयत्र । अघो अत्र, अघोयत्र । उञ्यपि द्वैरूप्यमेव–पट उ, पटवु इत्यादि । पदान्त इत्येव ? लवनम्, नयनम् । अवर्णादिभ्य इत्येव ? मध्वत्र, दध्यत्र । स्वर इति किम् ? वृक्षव् करोति ॥ २४ ॥

## अस्पष्टाववर्णात् त्वनुञि वा ॥ १ । ३ । २५ ॥

अवर्णभोभगोऽघोभ्यः परयोः पदान्ते वर्तमानयोर्वकारयकारयोः स्थानेऽस्पष्टावीषत्स्पृष्टतरौ प्रत्यासत्तेर्वकारयकारावेवादेशौ[2] स्वरे परे भवतः, अवर्णात्तु परयोर्व्योरुञ्वर्जिते स्वरे परेऽस्पष्टौ वा भवतः । पट्वु, वृक्षवु, असावु, कयु, देवायु, भोयत्र, भोयु, भगोयत्र, भगोयु, अघोयत्र, अघोयु । अवर्णात्त्वनुञि वा–पटविह, पटविह, असाविन्दुः, असाविन्दुः; तयिह, तयिह, तस्मायिदम्, तस्मायिदम्, कयिह, कयिह, देवायाहुः, देवायाहुः । अनुञीति किम् ? उञि अस्पष्टावेव यथा स्याताम्, तथा च–उदाहृतम् । केचित्तु रुस्थानस्य यकारस्योञि परे लोपमेवेच्छन्ति–क उ आगतः, भो उ एहि, भगो उ एहि, अघो उ याहि । अपरे तु भोभगोऽघोभ्यः स्वरे नित्य लोपमेवेच्छन्ति–भो अत्र, भगो अत्र; अघो अत्र ॥ २५ ॥

---

तेषां वचनम् । **भव्यम्**–भवतेर्भावे ये गुणे "य्यक्ये" इति अवादेशे च सिद्ध्यति । **जय्यम्**–जेतु शक्यमित्यर्थे 'जिं' अभिभवे, धातो शक्यार्थे ये "क्षय्यजय्यौ शक्तौ" ४।३।९०। इत्ययादेशे च सति सिध्यति, अत्र वयोरपदान्तत्वान्नेद प्रवर्त्तते । विश्रान्तविद्याधरमतमाह–**कश्चित्तु** इत्यादिना । **स्वरजयोः**–"इवर्णादे०" इत्यादिना कृतयो स्वरस्थानिकयोरित्यर्थ । **अनादिस्थयो.**–आदाववर्तमानयो । अवर्णात् अन्यत अपि परयो स्वरजयो अनादिस्थयो यकारवकारयो घोषवति परे लोपम् इच्छति इत्यन्वय, स्फुटोऽर्थ । तन्मते उदाहरति–**अध्विन्दु., साध्युदयः**–अत्र यथाक्रम यकारस्य वकारस्य च लोप, अन्यमते–अध्य्विन्दु, साध्व्युदय इति ॥ २३ ॥

**स्वरे वा** । अत्र अवर्णभोभगोऽघो पदान्ते व्यो लुक् असंधि. इति चानुवर्तते, अवर्णभोभगोऽघो पदान्ते व्यो स्वरे लुग्वा असंधिरित्यन्वयस्तदर्थमाह–**अवर्णभोभगोऽघोभ्य** इत्यादिना । **पट इह**–पटो इह इत्यवस्थायां "ओदौतोऽवाव्" इत्यवादेशे पटव् इह इति स्थिते अवर्णात् परस्य पदान्तस्थस्य स्वरपरस्य वस्यानेन लुक्यसंधौ च सिध्यति, तदभावे "अस्पष्टाववर्णात्त्वनुञि वा" इत्यनेन अस्पष्टवकारादेशे–**पटविह,** लुकि अस्पष्टवकाराभावे च–पटविह, तदाह–**अवर्णात्** इत्यादिना । **त्रैरूप्यम्**–"स्वरे वा" "अस्पष्टाववर्णात्त्वनुञि वा" इति विकल्पद्वयेनेति भाव । **वृक्षवत्र**–वृक्षव् इति तु साधितमेव । **वृक्षा इह**–वृक्षशब्दादौ प्रत्यये वृक्षौ इह "ओदौतो०" इति आवि वस्यानेन लुक्, पक्षे यथाप्राप्तम् । **त आहु.**–तच्छब्दाज्जसि अत्वादौ "जस इ" इतीत्वे एत्वे च–ते आहुरित्यत्र अयादेशे यस्यानेन लुक् । **तस्मा इदम्**–तच्छब्दाच्चतुर्थ्येकवचने अत्वादौ स्मायादेशे आयादेशे च यस्यानेन लुक् । **भो अत्र**–"सोरु"रित्यनेन जातस्य भोपरस्य पदान्तस्थस्य स्वरपरकस्य रो स्थाने यत्वे तस्य लुकि सिद्ध्यति । अत्र "अस्पष्टाववर्णात्०" इति सूत्रेण नित्य रोर्ये इति जातस्य यस्य अस्पष्टविधानात् रूपद्वयमित्याह–**भो प्रभृतिभ्य** इत्यादिना–**भो यत्र** । अवर्णादीषत्स्पृष्टतरस्य विकल्पेन अनुञि विधानाद्रूपद्वयमित्याह–**उञ्यपि द्वैरूप्यमेव**–**पटउ, पटवु** । अत्रावादेशे वस्यानेन लुक् "अस्पष्टाववर्णात्०" इत्यादिना पक्षे नित्यमीषत्स्पृष्टतरवकारश्च ॥ २४ ॥

**अस्पष्टाववर्णात्त्वनुञि वा** । अवर्णभोभगोऽघो पदान्ते व्यो स्वरे इति चानुवर्तते, अवर्णभोभगोऽघो पदान्ते व्यो अस्पष्टौ स्वरे, अवर्णात् तु व्यो अनुञि स्वरे अस्पष्टौ वा इत्यन्वय, तदर्थमाह–**अवर्णभोभगोऽघोभ्य.** इत्यादिना । **अस्पष्टौ–ईषत्स्पृष्टतरौ**–उच्चारणे लघुप्रयत्नतरौ–मन्दतरप्रयत्नौ–प्रशिथिलस्थानकरणपरिस्पन्दाविति यावत्, एतदुक्त भवति–शिथिलस्थानकरणाभ्यां उच्चार्यमाणौ वकारयकारौ अस्पष्टौ इति भाव । आदेशश्च तयोरदृष्टार्थं दृष्टस्य प्रयोजनाभावात् अस्पष्ट इति सामान्यशब्देनापि वकारो यकारश्चाभिधीयते । व्योर्हि स्थाने ईषत्स्पृष्टतर आसन्न आदिश्यते तयोश्चासन्नो वकारो यकारश्चेत्याह–**प्रत्यासत्तेरित्यादि** । सूत्रे तुशब्दो भिन्नवाक्यत्वप्रतिपादनार्थ इत्याह–**अवर्णात्तु**–इत्यादिना । न उञ् अनुञ् तस्मिन्ननुञीति स्वरे इत्यस्य विशेषणमित्याह–**उञ् वर्जिते स्वर** इति । **पट्वु**–अत्र "स्वरे वा" इति लुगभावपक्षेऽनेनावर्णात् परस्य पदान्तस्थस्य वस्य नित्यमस्पष्टो वकार । एवमन्यत्र समन्वय । पाणिन्याद्याचार्याणां मतमाह–**केचित्तु** इति । **रुस्थानस्य यकारस्य**–"रोर्ये" इत्यनेन विहितस्येत्यर्थ । **लोपमेवेच्छन्ति**–न ईषत्स्पृष्टतरमिति शेष । "उञि च पदे" पा० ८।३।२१। इति सूत्रे आचार्यपाणिनि, तन्मते उदाहरति–क उ आगत इत्यादि । भो भगोऽघोभ्य स्वरे परे नित्य लोपमिच्छतो गार्ग्यस्य मतमाह–**अपरे तु** इत्यादिना । शाकटायनमते लघुप्रयत्नतरौ वयौ इत्याह पाणिनि–"व्योर्लघुप्रयत्नतर शाकटायनस्य" पा० ८।३।१८। इति । गार्ग्यमते तु "ओतो गार्ग्यस्य" । पा० ८।३।२०। इत्युवाच, तन्मते उदाहरति–**भो अत्र, भगो अत्र; अघो अत्र** ॥ २५ ॥

---

१ पटविहँ म० म० । २ °यकारवकारावेवा० मु०, °वकारयकारा×वा° ख० सा० ।

## रोर्यः ॥ १ । ३ । २६ ॥

अवर्णभोभगोऽघोभ्यः परस्य पदान्ते वर्तमानस्य रोः स्थाने स्वरे परे यकार आदेशो भवति । कयास्ते, देवायासते, भोयत्र, भगोयत्र, अघोयत्र । रोरिति किम् ? पुनरिह । अवर्णादिभ्य इत्येव ? मुनिरत्र । स्वर इत्येव ? कः करोति, भोः करोषि ॥ २६ ॥

## ह्रस्वाद् ङ्णनो द्वे ॥ १ । ३ । २७ ॥

ह्रस्वात् परेषां पदान्ते वर्तमानानां ङ् ण् न् इत्येषां वर्णानां स्थाने स्वरे परे द्वे रूपे भवतः । कुङ्ङास्ते, सुगण्णिह, पचन्नास्ते । कुर्वन्नास्ते, कृषन्नास्ते इत्यत्र तु बहिरङ्गस्य द्वित्वस्यासिद्धत्वात् णत्वं न भवति । ह्रस्वादिति किम् ? प्राङास्ते, वाणास्ते, भवानास्ते, राजऽनिह । ङ्णन इति किम् ? त्वमत्र । स्वर इत्येव ? प्रत्यङ् शेते, गच्छन् भुङ्क्ते । पदान्त इत्येव ? वृत्रहणौ, दण्डिनौ । "उणादयः" ॥ ५ । २ । ९३ ॥ इत्यादौ स्वरूपनिर्देशात्, "अनतो०" ॥ १ । ४ । ५९ ॥ इत्यादौ त्वनुविधानबलात् न भवति ॥ २७ ॥

## अनाङ्माङो दीर्घाद् वा छः ॥ १ । ३ । २८ ॥

आङ्माङ्वर्जितपदसम्बन्धिनो दीर्घात् पदान्ते वर्तमानात् परस्य छकारस्य द्वे रूपे वा भवतः । कन्याच्छत्रम्, कन्याछत्रम्; कुटीच्छाया, कुटीछाया; जम्बूच्छाया, जम्बूछाया, मुने च्छाया, मुने छाया, रैच्छाया, रैछाया, गोच्छाया,

---

रोर्यः । अत्र अवर्णभोभगोऽघो पदान्ते स्वरे इति चानुवर्तते, अवर्णभोभगोऽघो पदान्ते रो स्वरे य इत्यन्वय । रेफमात्रस्यात्र यत्वविधाने प्राप्तस्यातिप्रसङ्गस्य परिहारार्थमुकारो विशेषणमाश्रीयते, यद्यप्यत्रास्पष्टयवर्णात्वनुविवेत्यतोऽवर्णादित्येवाव्यवहितत्वेनानुवर्तनीय, तथापि भोप्रभृतिभ्यो यकारस्यास्पष्टयकारविधानाव् व्यवहितमपि अवर्णभोभगोऽघोरित्येवानुवर्तत इत्याह—**अवर्णभोभगोऽघोभ्य** इत्यादि । **कयास्ते**—किम्शब्दात् सौ कादेशेऽनुबन्धलोपे "सो रु"रिति रुत्वेऽनेन तस्य यकार । पक्षे "स्वरे वा" इति यलोपे—क आस्ते । एवमन्यत्र । उदनुबन्धफल पृच्छति—**रोरिति किम् ? पुनरिह**—अत्र उदनुबन्धो रेफो नास्त्यतो न तस्य योऽनेनेत्याशय ॥ २६ ॥

**ह्रस्वाद् ङणनो द्वे** । अत्र पदान्ते स्वरे इति चानुवर्तते, ह्रस्वात् पदान्ते ङ्णन स्वरे द्वे इत्यन्वय । ङ्णन इति ङश्च णश्च नश्चेत्येषां समाहारद्वन्द्वस्तस्मात् षष्ठी, द्वे इति द्विशब्दात् प्रथमाद्विवचने "आद्वेर" २।१।४१। इत्यत्वे, रूपापेक्षया नपुंसकत्वात् "औरी" १।४।५६। इतीकारे एकादेशे भवति, तदर्थमाह—**ह्रस्वात् परेषा** इत्यादिना । **कुङ्ङास्ते**—अत्र ह्रस्वोकारात् परस्य पदान्तस्थस्याऽऽकाररूपस्वरपरस्य ङस्य रूपद्वयम् । एवमन्यत्र समन्वय । ननु कुर्वन्नास्ते, कृषन्नास्ते इत्यत्रानेन नस्य द्वित्वे सति द्वितीयनस्य पदान्तत्वेऽपि पूर्वस्य नस्यानन्त्यस्य "रपृवर्णान्नो ण०" २।३।६३। इत्यनेन णत्व कथन्न भवतीत्याह—**बहिरङ्गस्य द्वित्वस्य** इत्यादि । उभयपदापेक्षत्वाद्द्वित्व बहिरङ्ग णत्व तु द्वित्वशास्त्रनिमित्तान्तर्भूतनिमित्तकत्वेनान्तरङ्गमिति 'असिद्ध बहिरङ्गमन्तरङ्गे' इति न्यायेन न भवति । **राजऽनिह**—राजन्शब्दादामन्त्र्ये सेर्लुकि "नामन्त्र्ये" २।१।९२। इति नलोपप्रतिषेधादन्तरङ्गत्वात् परत्वाच्च प्लुते कृते ह्रस्वाभावाद्द्वित्व न भवति । **प्रत्यङ् शेते**—प्रतिपूर्वादञ्चतेः क्विप् "अञ्चोऽनर्चायाम्" इति अर्चायां नलोपाभावात् सेर्लुकि, "पदस्य" इति चलोपे, "युजञ्चक्रुञ्चो नो ङ" २।१।७१। इति ङकारे, तस्य द्वित्वमनेन न भवति स्वरपरत्वाभावात् । ननु चात्र मा भूदनेन द्वित्व "अदीर्घाद् विरामैकव्यञ्जने" इत्यनेन द्वित्व भविष्यति तत्किमर्थमेतन्निवृत्तये स्वर इत्युच्यते इति चेत्, सत्यम्; यद्यनेन द्वित्व तर्हि नित्यं स्यात्तेन तु विकल्पेनेति तदर्थं स्वर इत्युपादीयते । **वृत्रहणौ**—वृत्रपूर्वाद्धन्ते "ब्रह्मभ्रूण०" ५।१।१६१। इति क्विपि, "अहन्पञ्चमस्य०" ४।१।१०७। इति इन्वर्जनाद्दीर्घत्वाभावे स्यादौ औकारे "कवर्गैकस्वरवति" २।३।७६। इति णत्व, अत्र णस्य ह्रस्वात् परत्वेऽपि पदान्तत्वाभावान्न द्वित्वम् । **दण्डिनौ**—दण्डोऽस्यास्तीति "अतोऽनेकस्वरात्" ७।२।६। इति मत्वर्थे इनि, अकारलोपादौ अनेन नस्य ह्रस्वात् परत्वेऽपि अपदान्तत्वान्न भवति द्वित्वम् । ननु ह्रस्वात् परेषां पदान्ते वर्तमानानां ङ्णनां अनेन द्वित्वे सति कथ "उणादय", "अनत" इत्यादयो निर्देशा इत्यत आह—**उणादय० इत्यादौ स्वरूपनिर्देशात्** इत्यादि, अन्यथा तत्रैव प्रक्रियालाघवार्थं द्विनकारमादेश विदध्यादित्यर्थ ॥ २७ ॥

**अनाङ्माङो दीर्घाद् वा छः** । अत्र पदान्ते इत्यनुवर्तते द्वे इति च, तत्र दीर्घादित्यनेनान्वेति छेन त्वसंभवान्नान्वय, पदान्ते च तस्याऽऽदेशेन भाव्यम्—शब्दशाद इति । अनाङ्माङ इति द्वन्द्वगर्भात्तत्पुरुषान्ङसि भवति, तत्रापि दीर्घादित्यनेनान्वेति । यद्यप्यनाङिति पर्युदासस्य सदृशग्राहितया दीर्घादित्यस्य लाभस्तथापि तयोरव्ययत्वेन सादृश्यग्रहणे दीर्घादव्ययादित्यनर्थ स्यादिति दीर्घादिति । तथाच—अनाङ्माङो पदान्ते दीर्घात् छ द्वे वा इत्यन्वयस्तदर्थमाह—**आङ्माङ्वर्जितपदसंबन्धिन** इत्यादिना । **कन्याच्छत्रम्**—अत्र षष्ठीसमासे सति अनाङ्माङ पदान्ते वर्तमानाद्दीर्घाकारात् परस्य विकल्पेन छस्य द्वित्व, पक्षे—**कन्याछत्रम्** । एवमन्यत्र । **मुनेच्छाया**—मुनि छाया इति स्थिते "स्वरेभ्य" इति द्वित्व "आमन्त्र्ये" इति सिश्च प्राप्नोति, तत्रान्तरङ्गत्वात् परत्वाच्चित्यत्वाच्च "आमन्त्र्ये" इति पूर्वं सिस्ततो "ह्रस्वस्य गुण" १।४।४१। इति सिना सह गुणेऽनेन विकल्पेन छस्य द्वित्वम् । "स्वरेभ्य" इति नित्य द्वित्वे प्राप्ते विकल्पार्थोऽयमारम्भ । अनाङ्माङ इत्यस्य फल

---

१ अनज ख० ता०, माध्वा०, पु० ।

घोषवतीत्येव ? वृक्षान् करोति, अत्याय् करोति । अवर्णादित्येव ? तरून् गच्छति । पदान्त इत्येव ? भव्यम्, जय्यम् । कश्चित्तु स्वरजयोरनादिस्थयोर्वकारयकारयोर्घोषवत्यवर्णादन्यतोऽपि लोपमिच्छति—अध्यारूढ उम्—ईशम् अध्युः, स चासा-विन्दुश्च—अध्विन्दुः । साध्वी—श्रीः साध्वी, तस्या उदयः साध्युदयः इत्यादि ॥ २३ ॥

## स्वरे वा ॥ १ । ३ । २४ ॥

अवर्णभोभगोअघोभ्यः परयोः पदान्ते वर्तमानयोर्वकारयकारयोः स्वरे परे लुग्वा भवति, स चासंधिः । पट इह, पटविह; अवर्णादीषत्स्पृष्टतरस्य विकल्पेन विधानसामर्थ्यात् त्रैरूप्यम् पटविह । वृक्ष अत्र, वृक्षवत्र; वृक्षवत्र । वृक्षा इह, वृक्षाविह; वृक्षाविह । त आहुः, तयाहुः; तयाहुः । तस्मा इदम्, तस्मायिदम्; तस्मायिदम् । क आस्ते, कयास्ते, कयास्ते । देवा आहुः, देवायाहुः; देवायाहुः । भो अत्र, भोप्रभृतिभ्य उत्तरेणेषत्स्पृष्टतरस्य नित्य विधानाद् द्वैरूप्यम्—भोयत्र । भगो अत्र, भगोयत्र । अघो अत्र, अघोयत्र । उञ्यपि द्वैरूप्यमेव—पट उ, पटवु इत्यादि । पदान्त इत्येव ? नयनम्, नयनम् । अवर्णादिभ्य इत्येव ? मध्वत्र, दध्यत्र । स्वर इति किम् ? वृक्षव् करोति ॥ २४ ॥

## अस्पष्टाववर्णात् त्वनुञि वा ॥ १ । ३ । २५ ॥

अवर्णभोभगोअघोभ्यः परयोः पदान्ते वर्तमानयोर्वकारयकारयोः स्थानेऽस्पष्टावीषत्स्पृष्टतरौ प्रत्यासत्तेर्वकारयकारावेवा-देशौ स्वरे परे भवतः, अवर्णात्तु परयोर्व्योरुञ्वर्जिते स्वरे परेऽस्पष्टौ वा भवतः । पटवु, वृक्षवु, असावु, कयु, देवायु, भोयत्र, गोयु, भगोयत्र, भगोयु, अघोयत्र; अघोयु । अवर्णात्त्वनुञि वा—पटविह, पटविह; असाविन्दुः, असाविन्दुः, तयिह, तयिह; तस्मायिदम्, तस्मायिदम्; कयिह, कयिह, देवायाहुः, देवायाहुः । अनुञीति किम् ? उञि अस्पष्टावेव यथा स्याताम्, तथा च—उदाहृतम् । केचित्तु रुस्थानस्य यकारस्योञि परे लोपमेवेच्छन्ति—क उ आगतः, भो उ एहि, भगो उ एहि; अघो उ याहि । अपरे तु भोभगोअघोभ्यः स्वरे नित्य लोपमेवेच्छन्ति—भो अत्र, भगो अत्र; अघो अत्र ॥ २५ ॥

---

वेदो वयाम् । भव्यम्—भवतेर्णाभे ये गुणे "व्यक्ये" इति अवादेशो न सिद्ध्यति । जय्यम्—जेतु शक्यमित्यर्थे 'जि' अभिभवे, धातो शक्यार्थे ये "क्षय्यजय्यौ शक्तौ" ४।३।९०। इत्ययादेशे च सति सिध्यति, अत्र ययोरपदान्तत्वादेव प्रवर्तते । विश्रान्तविद्याधरमतमाह—कश्चित्तु इत्यादिना । स्वरजयोः—"इवर्णादे०" इत्यादिना कृतयोः स्वरस्थानिकयोरित्यर्थः । अनादिस्थयोः—आदाववर्तमानयोः । अवर्णात् अन्यत अपि परयोः स्वरजयोः अनादिस्थयोः वकारयकारयोः घोषवति परे लोपम् इच्छति इत्यन्वयः, स्फुटोऽर्थः । तन्मते उदाहरति—अध्विन्दुः, साध्युदयः—अत्र यथाक्रमं वकारस्य यकारस्य च लोपः, अन्यमते—अध्व्विन्दुः, साध्य्युदय इति ॥ २३ ॥

स्वरे वा । अत्र अवर्णभोभगोऽघो पदान्ते व्यो लुक् असंधिः इति चानुवर्तते, अवर्णभोभगोऽघो पदान्ते व्यो स्वरे लुग्वा असंधि-रित्यन्वयस्तदर्थमाह—अवर्णभोभगोऽघोभ्य इत्यादिना । पट इह—पटो इह इत्यवस्थायां "ओदौतोऽवाव्" इत्यवादेशे पटव् इह इति स्थिते अवर्णात् परस्य पदान्तस्थस्य स्वरपरस्य वस्यानेन लुक्यसंधौ च सिध्यति, तदभावे "अस्पष्टाववर्णात्त्वनुञि वा" इत्यनेन अस्पष्टवकारादेशे—पटविह, उक्ति अस्पष्टवकाराभावे च—पटविह, तदाह—अवर्णात् इत्यादिना । त्रैरूप्यम्—"स्वरे वा" "अस्पष्टाववर्णात्त्वनुञि वा" इति विक-ल्पद्वयेनेति भावः । वृक्षवत्र—रूपम् इति तु साधितमेव । वृक्षा इह—वृक्षशब्दादौ प्रत्यये वृक्षौ इह "ओदौतो०" इति आवि वस्यानेन लुक्, पक्षे यथाप्राप्तम् । त आहुः—तच्छब्दाज्जसि अत्वादौ "जस इः" इतीत्वे एत्वे च—ते आहुरित्यत्र अयादेशे यस्यानेन लुक् । तस्मा इदम्—तच्छब्दाच्चतुर्थ्येकवचने अत्वादौ स्मायादेशे आयादेशे च यस्यानेन लुक् । भो अत्र—"सोरु"रित्यनेन जातस्य भोपरस्य पदान्तस्थस्य स्वर-परकस्य रो स्थाने यत्वे तस्य लुकि सिद्ध्यति । अत्र "अस्पष्टाववर्णात्०" इति सूत्रेण नित्य रोर्य इति जातस्य यस्य अस्पष्टविधानात् रूपद्वय-मित्याह—भो प्रभृतिभ्य इत्यादिना—भो यत्र । अवर्णादीषत्स्पृष्टतरस्य विकल्पेन अनुञि विधानाद्रूपद्वयमित्याह—उञ्यपि द्वैरूप्यमेव—पटउ, पटवु । अत्रावादेशे वस्यानेन लुक् "अस्पष्टाववर्णात्०" इत्यादिना पक्षे नित्यमीषत्स्पृष्टतरवकारश्च ॥ २४ ॥

अस्पष्टाववर्णात्त्वनुञि वा । अवर्णभोभगोऽघो पदान्ते व्यो स्वरे इति चानुवर्तते, अवर्णभोभगोऽघो पदान्ते व्यो अस्पष्टौ स्वरे, अवर्णात् तु व्यो अनुञि स्वरे अस्पष्टौ वा इत्यन्वयः, तदर्थमाह—अवर्णभोभगोऽघोभ्यः इत्यादिना । अस्पष्टौ—ईषत्स्पृष्टतरौ—उच्चारणे लघुप्रयत्नतरौ—मन्दतरप्रयत्नौ—प्रशिथिलस्थानकरणपरिस्पन्दाविति यावत्, एतदुक्तं भवति—शिथिलस्थानकरणाभ्यां उच्चार्यमाणौ वकारयकारौ अस्पष्टौ इति भावः । आदेशश्च तयोरदृष्टार्थं इत्यस्य प्रयोजनाभावात् अस्पष्ट इति सामान्यशब्देनापि वकारो यकारश्चाभिधीयते । व्योर्हि स्थाने ईषत्स्पृष्टतर आसन्न आदिश्यते तयोश्चासन्नो वकारो यकारश्चेत्याह—प्रत्यासत्तेरित्यादि । सूत्रे तुशब्दो भिन्नवाक्यत्वप्रतिपादनार्थं इत्याह—अवर्णात्तु—इत्यादिना । न उञ् अनुञ् तस्मिन्ननुञीति स्वरे इत्यस्य विशेषणमित्याह—उञ् वर्जिते स्वर इति । पटवु—अत्र "स्वरे वा" इति लुगभावपक्षेऽनेनावर्णात् परस्य पदान्तस्थस्य वस्य नित्यमस्पष्टो वकारः । एवमन्यत्र समन्वयः । पाणिन्याद्याचार्याणां मतमाह—केचित्तु इति । रुस्थानस्य यकारस्य—"रोर्यः" इत्यनेन विहितस्येत्यर्थः । लोपमेवेच्छन्ति—न ईषत्स्पृष्टतरमिति शेषः । "उञि च पदे" पा० ८।३।२१। इति सूत्रे आचार्यपाणिनिः, तन्मते उदाहरति—क उ आगत इत्यादि । भो भगोऽघोभ्य स्वरे परे नित्य लोपमिच्छतो गार्ग्यस्य मतमाह—अप-रे तु इत्यादिना । शाकटायनमते लघुप्रयत्नतरौ वयौ इत्याह पाणिनिः—"व्योर्लघुप्रयत्नतरः शाकटायनस्य" पा० ८।३।१८। इति । गार्ग्यमते तु "ओतो गार्ग्यस्य" । पा० ८।३।२०। इत्युवाच, तन्मते उदाहरति—भो अत्र, भगो अत्र; अघो अत्र ॥ २५ ॥

---

१ पटविह म० म० । २ °यकारवकारावेवा० पु०, °वकारयकारा°वा° ख० ता० ।

## रोर्यः ॥ १ । ३ । २६ ॥

अवर्णभोभगोऽघोभ्यः परस्य पदान्ते वर्तमानस्य रोः स्थाने स्वरे परे यकार आदेशो भवति । कयास्ते, देवायासते, भोयत्र, भगोयत्र, अघोयत्र । रोरिति किम्? पुनरिह । अवर्णादिभ्य इत्येव? मुनिरत्र । स्वर इत्येव? कः करोति, भोः करोषि ॥ २६ ॥

## ह्रस्वाद् ङ्णनो द्वे ॥ १ । ३ । २७ ॥

ह्रस्वात् परेषां पदान्ते वर्तमानानां ङ् ण् न् इत्येषां वर्णानां स्थाने स्वरे परे द्वे रूपे भवतः । क्रुङ्ङास्ते, सुगण्णिह, पचन्नास्ते । कुर्वन्नास्ते, कृषन्नास्ते इत्यत्र तु बहिरङ्गस्य द्वित्वस्यासिद्धत्वात् णत्वं न भवति । ह्रस्वादिति किम्? प्राङास्ते, बाणास्ते, भवानास्ते, राजइनिह । ङ्णन इति किम्? त्वमत्र । स्वर इत्येव? प्रत्यङ् शेते, गच्छन् भुङ्क्ते । पदान्त इत्येव? वृत्रह्णौ, दण्डिनौ । "उणादयः" ॥ ५ । २ । ९३ ॥ इत्यादौ स्वरूपनिर्देशात्, "अनतो०" ॥ १ । ४ । ५९ ॥ इत्यादौ त्वनुविधानबलात् न भवति ॥ २७ ॥

## अनाङ्माङो दीर्घाद् वा छः ॥ १ । ३ । २८ ॥

आङ्माङ्वर्जितपदसम्बन्धिनो दीर्घात् पदान्ते वर्तमानात् परस्य छकारस्य द्वे रूपे वा भवतः । कन्याच्छत्रम्, कन्याछत्रम्; कुटीच्छाया, कुटीछाया, जम्बूच्छाया, जम्बूछाया, मुने च्छाया, मुने छाया, रैच्छाया, रैछाया, गोच्छाया,

---

रोर्यः । अत्र अवर्णभोभगोऽघो पदान्ते स्वरे इति चानुवर्तते, अवर्णभोभगोऽघो पदान्ते रो स्वरे य इत्यन्वय । रेफमात्रस्यात्र यत्वविधाने प्राप्तस्यातिप्रसङ्गस्य परिहारार्थमुकारो विशेषणमाश्रीयते, यद्यप्यत्रास्पष्टावर्णात्यनुपिवेत्यतोऽवर्णादित्येवाव्यवहितत्वेनानुवर्तनीय, तथापि भोप्रभृतिभ्यो यकारस्यास्पष्टयकारविधानात् व्यवहितमपि अवर्णभोभगोऽघोरित्येवानुवर्तते इत्याह—अवर्णभोभगोऽघोभ्य इत्यादि । कयास्ते—किम्शब्दात् सौ कादेशेऽनुबन्धलोपे "सो रु"रिति रुत्वेऽनेन तस्य यकार । पक्षे "स्वरे वा" इति यलोपे—क आस्ते । एवमन्यत्र । उदनुबन्धफलं पृच्छति—रोरिति किम्? पुनरिह—अत्र उदनुबन्धो रेफो नास्त्यतो न तस्य योऽनेनेत्याशय ॥ २६ ॥

ह्रस्वाद् ङ्णनो द्वे । अत्र पदान्ते स्वरे इति चानुवर्तते, ह्रस्वात् पदान्ते ङ्णन स्वरे द्वे इत्यन्वय । ङ्णन इति ङश्च णश्च नश्चेत्येषां समाहारद्वन्द्वस्तस्मात् षष्ठी, द्वे इति द्विशब्दात् प्रथमाद्विवचने "आद्वेर" २।१।४१। इत्यत्वे, रूपापेक्षया नपुंसकत्वात् "औरी" १।४।५६। इतीकारे एकादेशे भवति, तदर्थमाह—ह्रस्वात् परेषा इत्यादिना । क्रुङ्ङास्ते—अत्र ह्रस्वोकारात् परस्य पदान्तस्थस्याऽऽकाररूपस्वरपरस्य ङस्य रूपद्वयम् । एवमन्यत्र समन्वय । ननु कुर्वन्नास्ते, कृषन्नास्ते इत्यत्रानेन नस्य द्वित्वे सति द्वितीयनस्य पदान्तत्वेऽपि पूर्वस्य नस्यानन्त्यस्य "रपृवर्णान्नो ण०" २।३।६३। इत्यनेन णत्वं कथं न भवतीत्याह—बहिरङ्गस्य द्वित्वस्य इत्यादि । उभयपदापेक्षत्वाद्द्वित्वं बहिरङ्गं णत्वं तु द्वित्वशास्त्रनिमित्तान्तर्भूतनिमित्तकत्वेनान्तरङ्गमिति 'असिद्धं बहिरङ्गमन्तरङ्गे' इति न्यायेन न भवति । राजइनिह—राजन्शब्दादामन्त्र्यसेर्लुकि "नामन्त्र्ये" २।१।९२। इति नलोपप्रतिषेधादन्तरङ्गत्वात् परत्वाच्च प्लुते कृते ह्रस्वाभावाद्द्वित्वं न भवति । प्रत्यङ् शेते—प्रतिपूर्वादञ्चते क्विप् "अञ्चोऽनर्चायाम्" इति अर्चायां नलोपाभावात् सेर्लुकि, "पदस्य" इति चलोपे, "युजञ्चक्रुञ्चो नो ङ" २।१।७१। इति ङकारे, तस्य द्वित्वमनेन न भवति स्वरपरत्वाभावात् । ननु चात्र मा भूदनेन द्वित्वं "अदीर्घाद् विरामैकव्यञ्जने" इत्यनेन द्वित्वं भविष्यति तत्किमर्थमेतन्निवृत्तये स्वर इत्युच्यते इति चेत्, सत्यम्; यथनेन द्वित्वं तर्हि नित्यं स्यात्तेन तु विकल्पेनेति तदर्थं स्वर इत्युपादीयते । वृत्रह्णौ—वृत्रपूर्वाद्धन्ते "ब्रह्मभ्रूण०" ५।१।१६१। इति क्विपि, "अहन्पञ्चमस्य०" ४।१।१०७। इति हन्वर्जनाद्दीर्घत्वाभावे स्यादौकारे "कवर्गैकस्वरवति" २।३।७६। इति णत्वं, अत्र णस्य ह्रस्वात् परत्वेऽपि पदान्तत्वाभावान्न द्वित्वम् । दण्डिनौ—दण्डोऽस्यास्तीति "अतोऽनेकस्वरात्" ७।२।६। इति मत्वर्थे इनि, अकारलोपादौ अनेन नस्य ह्रस्वात् परत्वेऽपि अपदान्तत्वान्न भवति द्वित्वम् । ननु ह्रस्वात् परेषां पदान्ते वर्तमानानां ङ्णनां अनेन द्वित्वे सति कथं "उणादय", "अनत" इत्यादयो निर्देशा इत्यत आह—उणादय इत्यादौ स्वरूपनिर्देशात् इत्यादि, अन्यथा तत्रैव प्रक्रियालाघवार्थं द्विनकारमादेशं विदध्यादित्यर्थ ॥ २७ ॥

अनाङ्माङो दीर्घाद् वा छः । अत्र पदान्ते इत्यनुवर्तते द्वे इति च, तत्र दीर्घादित्यनेनान्वेति छेन त्वसम्भवाचान्वय, पदान्ते तु तस्याऽऽदेशेन भाव्यम्—शब्दस्थाद इति । अनाङ्माङ इति द्वन्द्वगर्भात्तत्पुरुषात् ङसि भवति, तथापि दीर्घादित्यनेनान्वेति । यद्यप्यनाङिति पर्युदासस्य सदृग्ग्राहितया दीर्घादित्यस्य लाभस्तथापि तयोरव्ययत्वेन सादृश्यग्रहणे दीर्घादव्ययादित्यनर्थं स्यादिति दीर्घादिति । तथाच—अनाङ्माङो पदान्ते दीर्घात् छ द्वे वा इत्यन्वयस्तदर्थमाह—आङ्माङ्वर्जितपदसंबन्धिन इत्यादिना । कन्याच्छत्रम्—अत्र षष्ठीसमासे सति अनाङ्माङ पदान्ते वर्तमानाद्दीर्घाकारात् परस्य विकल्पेन छस्य द्वित्वं, पक्षे—कन्याछत्रम् । एवमन्यत्र । मुनेच्छाया—मुनि छाया इति स्थिते "स्वरेभ्य" इति द्वित्वं "आमन्त्र्ये" इति सिश्च प्राप्नोति, तत्रान्तरङ्गत्वात् परत्वान्नित्यत्वाच्च "आमन्त्र्ये" इति पूर्वं सिस्ततो "ह्रस्वस्य गुण" १।४।४१। इति सिना सह गुणेऽनेन विकल्पेन छस्य द्वित्वम् । "स्वरेभ्य" इति नित्यं द्वित्वे प्राप्ते विकल्पार्थोऽयमारम्भ । अनाङ्माङ इत्यस्य फल

---

१ अनत खं० सा०, माण्डा०, पु० ।

गोच्छाया; गोछाया, गोछाया । अनाङ्माङ इति किम् ? आच्छाया, आच्छिनत्ति, आ च्छायायाः, मा च्छिदत्—"स्वरेभ्यः" ॥ १ । ३ । ३० ॥ इति नित्यमेव । विकल्पादिषु विकल्प एव—आ च्छाया मन्यसे, आ छाया मन्यसे, आ च्छाया मा भूत्, आ छाया मा भूत्, वाक्यस्मरणयोरयमाकारः, मा च्छिन्धि, मा छिन्धि, प्रमाच्छन्दः, प्रमाछन्दः, पुत्रो मा च्छिनत्ति, पुत्रो मा छिनत्ति । आङ्साहचर्येणाऽव्ययस्य माङो ग्रहणादिहापि विकल्प एव—प्रमिमीत इति प्रमाः विच्, प्रमाच्छात्रः, प्रमाछात्रः । दीर्घादिति किम् ? श्वेतच्छाम्, वाक्छत्रम् । पदान्त इत्येव ? ह्रीच्छति ॥ २८ ॥

## प्लुताद् वा ॥ १ । ३ । २९ ॥

पदान्ते वर्तमानात् दीर्घस्थानात् प्लुतात् परस्य छकारस्य द्वे रूपे वा भवतः । आगच्छ भो इन्द्रभूते३ च्छत्रमानय, आगच्छ भो इन्द्रभूते३ छत्रमानय । दीर्घादित्येव ? आगच्छ भो देवदत्त३ च्छत्रमानय ॥ २९ ॥

## स्वरेभ्यः ॥ १ । ३ । ३० ॥

बहुवचनं व्याप्त्यर्थम्, तेन पदान्त इति निवृत्तम्, स्वरात् परस्य छकारस्य पदान्तेऽपदान्ते च द्वे रूपे भवतः । इच्छति, म्लेच्छति, गच्छति, ह्रीच्छति, म्लेच्छति, चाच्छायते, चोच्छुप्यते; वृक्षच्छाया । स्वरेभ्य इति किम् ? वाक्छत्रम् ॥ ३० ॥

## हर्दादर्हस्वरस्याऽनु नवा ॥ १ । ३ । ३१ ॥

स्वरेभ्यः परौ यौ रेफहकारौ ताभ्यां परस्यार्हस्वरस्य—रेफहकारस्वरवर्जितस्य वर्णस्य स्थाने द्वे रूपे वा भवतः । अनु—यदन्यत्कार्यं प्राप्नोति तस्मिन् कृते पश्चादित्यर्थः । (र्—) अर्क्कः, अर्कः, मूर्क्खः, मूर्खः, स्वर्ग्गः, स्वर्गः, अर्घ्घः, अर्घः,

---

ऋच्छति—अनाङ्माङ इति किम् ? आच्छाया—ईषच्छाया इति ईषदर्थे वर्तमानस्य आङो ङित प्रतिषेधः । आच्छिनत्ति—क्रियायोगे वर्तमानस्य आङो ङित्त्वात् प्रतिषेधः । आच्छायायाः—अनाऽऽच्छायायाः इत्यर्थः तद्योगे "आङावधौ" इति पञ्चमी छायां परिहृत्य इत्यर्थः, अभिविधौ वा छायामभिव्याप्येत्यर्थः । अत्र मर्यादाभिविधौ वर्तमानस्य आङो ङित्त्वात् प्रतिषेधः । मा च्छिदत्—अत्र प्रतिषेधार्थे वर्तमानस्य माङो ङित्त्वात् प्रतिषेधः । एतेषु प्रयोगेषु विकल्पेनाप्राप्ते द्वित्वाभावे "स्वरेभ्यः" १।३।३० इति नित्यमेव द्वित्वे पश्चात् "अघोषे प्रथमोऽशिटः" इति प्रथमः । तदाह—स्वरेभ्य इति । वाक्यस्मरणयोर्वर्तमानात् आकारात् अङित परस्य छस्यानेन वैकल्पिकं द्वित्वम्, तदाह उदाहरणोपन्यासपुरःसरं—विकल्पादिषु इत्यादिना, वाक्यस्मरणयोरयमाकार इत्यन्तेन । मा च्छिन्धि—अत्र प्रतिषेधवचनस्य मा इत्यङितोऽव्ययस्यानेन विकल्पेन द्वित्वम् । प्रमाच्छन्दः—प्रगीयते इति "उपसर्गादातः" ५।३।११० । इत्यङ् प्रमा स चासौ छन्दश्चेति विग्रहः । अनाङ्ङितो माशब्दस्यानेन वैकल्पिकं द्वित्वम् । "अनाङ्माङो दीर्घाद्०" इति सूत्रे माङव्ययं एव गृह्यते, आङ्साहचर्यात्, अन्यथा माङ्धातोराकारात् परस्य छस्य वैकल्पिकं द्वित्वं न स्यात् प्रतिषेधादित्याह—आङ्साहचर्येण इत्यादिना । प्रमिमीते विचि प्रमाः, प्रमाश्चासौ छात्रश्चेति—प्रमाच्छात्रः, यद्यपि धातुगणोऽस्ति सूत्रे नाविशेषस्तथाप्यव्ययत्वेनाव्यभिचारिणा आङा साहचर्येण माङोऽप्यव्ययस्य ग्रहणात् प्रतिषेधाभावाद्विकल्पः ॥ २८ ॥

प्लुताद् वा । अत्र पदान्ते दीर्घात् छ द्वे इति चानुवर्तते, पदान्ते दीर्घात् प्लुतात् छो द्वे वा इत्यन्वयः । दीर्घादित्यनुवृत्तावपि द्विमात्रत्रिमात्रयोर्विरोधात् सामानाधिकरण्यासंभवेऽपि मञ्चाः क्रोशन्तीतिवत् स्थानोपचारात्तद्व्यपदेशाद्विशेषणविशेष्यभावः । दीर्घशब्देन प्लुतोऽभिधीयते दीर्घोऽस्यास्ति स्थानित्वेनाऽऽदित्येनात्प्रत्ययात्, तदाह—पदान्ते वर्तमानाद्दीर्घस्थानात् इत्यादिना । आगच्छ भो इन्द्रभूते३च्छत्रमानय—अत्र "ह्रस्वस्य गुणः" इत्यामन्त्र्यविना गुणे, "दूरादामन्त्र्यस्य०" इत्येकारस्य दीर्घस्य स्थाने प्लुतेऽनेन छकारस्य विकल्पेन द्वित्वमिति । आगच्छ भो देवदत्त३च्छत्रमानय—अनाकारस्य प्लुतो न दीर्घस्थान इति दीर्घादित्यधिकारादनेनात्र विकल्पाभावे सत्युत्तरेण नित्यमेव ॥ २९ ॥

स्वरेभ्यः । अत्र छ द्वे इति चानुवर्तते, स्वरेभ्यः छ द्वे इत्यन्वयः । ननु स्वरादित्युक्तेऽपीष्टस्य सिद्धत्वाद्बहुवचनं व्यर्थमित्यत आह—बहुवचनम् व्याप्त्यर्थम्—पदान्तेऽपदान्ते चास्य प्रवृत्त्यर्थम्, तत्फलमाह—तेन इत्यादि । पदान्त एवेति निवृत्तमित्यर्थः, तेनास्य पदान्तापदान्तस्वरात् परस्य छस्य रूपद्वयं सिद्धम् । पूर्वोक्तार्थाभावे तु "गच्छति पथिदूते" ६।३।२०३। इति निर्देशादेव पदान्तनिवृत्तिमात्रस्य सिद्धत्वादित्याह—स्वरात् परस्य छकारस्य पदान्तेऽपदान्ते च इत्यादि । इच्छति—'इषत्' इच्छायाम्, धातोः तिवि, शे, "गमिषद्यमश्छः" ४।२।१०६। इति छत्वेऽनेन द्वित्वे "अघोषे प्रथमोऽशिटः" इति प्रथमत्वे सति सिध्यति । चाच्छायते—'छोद्' छेदने, धातोर्यङि, "सन्यङश्च" ४।१।३। इति द्वित्वे, "ह्रस्वः" ४।१।३९। इति ह्रस्वे, "व्यञ्जनस्याऽनादेर्लुक्" ४।१।४४। इति लोपे, "द्वितीयतुर्ययोः पूर्वौ" ४।१।४२। इति छस्य चत्वे, "आगुणावन्यादेः" ४।१।४८। इत्याऽऽत्वेऽनेन द्वित्वे च, "अघोषे प्रथमोऽशिटः" इति प्रथमत्वे, तेप्रत्यये शवि च सिध्यति । चोच्छुप्यते—'छुपत्' स्पर्शे, धातोर्यङि द्वित्वे ह्रस्वे लोपे छस्य चत्वे गुणेऽनेन द्वित्वे च प्रथमे तेप्रत्यये शवि च भवति । वृक्षच्छाया—वृक्षस्य छायेति षष्ठीसमासोऽसमासो वा, अत्र पदान्तस्थस्याकारात् परस्य छस्यानेन द्वित्वम् । वाक् छत्रम्—अत्र व्यञ्जनात् परस्य छस्य न द्वित्वम् ॥ ३० ॥

हर्दादर्हस्वरस्याऽनु नवा । रश्च हश्चेत्यादिसमाहारद्वन्द्वः, तस्मान्ङसि—हर्दात् इति । रश्च हश्च स्वरश्चेत्येषां समाहारद्वन्द्वे सति नञ्तत्पुरुषः, न र्हस्वरः अर्हस्वरस्तस्य—अर्हस्वरस्य इति पर्युदाससमाश्रयणात् वर्णस्येति लभ्यते । स्वरेभ्य द्वे इति चानुवर्तते, स्वरेभ्य इति च हर्दात् इत्यनेन सह व्यधिकरणविशेषणतयान्वेति । तथाच—स्वरेभ्यः हर्दात् अर्हस्वरस्य वर्णस्य द्वे नवा अनु इत्यन्वयस्तदर्थमाह—स्वरेभ्य इत्यादिना । अनुशब्दः पश्चादर्थे, पश्चादिति सापेक्षं पूर्वं वाऽपेक्ष्य पश्चादिति भवति, तत्रापेक्ष्य विशेषपरिग्रहाभावात् सम्भवमात्रं विज्ञायत इति तद्विवृणोति—अनु—यदन्यत्कार्यं इत्यादिना । अर्क्कः—अकाररूपस्वरात् परो हि रेफस्तस्मात् परस्य कस्य रेफहकारस्वरभिन्नत्वेन सर्वान्यकार्येभ्यः पश्चाद्द्वित्वं विकल्पेन । मूर्क्खः—ऊकारात् परो रेफस्तस्मात् परस्य खस्य द्वित्वे प्रथमः । एवमन्यत्र । अर्हस्वरस्य इत्यस्य

---

१ ऋच्छति इति पाठो नास्तीति म० म० ।

अर्चा, अर्चा । (ह्-) ब्रह्मा, ब्रह्मा, जिह्मः, जिह्मः, वाह्यम्, वाह्यम्; जिह्वा, जिह्वा । अर्हस्वरस्येति किम्? पद्महृदः, अर्हः, करः । स्वरेभ्य इत्येव? अभ्यते, हुते । अन्विति किम्? प्रोर्णुनाव-अत्र द्विर्वचने कृते द्वित्वं यथा स्यात् ॥ ३१ ॥

## अदीर्घाद् विरामैकव्यञ्जने ॥ १ । ३ । ३२ ॥

अदीर्घात् स्वरात् परस्य र्हस्वरवर्जितस्य वर्णस्य स्थाने **विरामैकव्यञ्जने**-विरामेऽसयुक्तव्यञ्जने च परेऽनु द्वे रूपे वा भवतः । (विरामे) त्वक्क्, त्वक्, त्वग्ग्, त्वग्, पट्ट्, षट्, षड्ड्, षड्, तत्त्, तत्, तद्द्, तद् । एकव्यञ्जने-दद्ध्यत्र, दध्यत्र, पत्थ्यदनम्, पथ्यदनम्, मद्ध्वत्र, मध्वत्र, पित्त्रर्थः, पित्रर्थः, त्वङ्ङ्मधुरा, त्वङ्मधुरा, त्वङ्ङ्करोषि, त्वङ् करोषि, सँय्यँतः, सँय्यँतः, उरःः्कः, उरः्कः, उरःः्कः, उरः्कः, उर ःकः, उरः कः, गो३ञ्ञात, गो३ञात, नौ३ञ्ञात, नौ३ञात । अन्वित्यधिकारात् कत्वगत्वादिषु कृतेषु पश्चाद् द्वित्वम् । अदीर्घादिति किम्? वाक्, भवान्, सूत्रम्, पात्रम्, नेत्रम्; होत्रम् । विरामैकव्यञ्जन इति किम्? इन्द्रः, चन्द्रः, कृत्स्नम्, मृत्स्ना, उष्ट्रः, दधि, मधु । संयुक्तव्यञ्जनेऽपीच्छन्त्येके-प्रत्त्तम्, प्रत्तम् । अर्हस्वरस्येत्येव? वर्या, वह्यम्; तितउ । अत एवादेशबलात् संयोगान्तलोपो न भवति, प्रथमत्वादिकं तु द्वित्वस्याबाधनात् भवत्येव ॥ ३२ ॥

---

फल पृच्छति-**अर्हस्वरस्येति किम्? पद्महृदः**-यद्यप्यत्रानेनाकारात् परो हकारस्तस्मात् परस्य रेफस्य द्वित्वे सति "रो रे लुक्०" १।३।४१। इति रलोपे न कश्चिद्दोष, तथाप्यत्र रवर्जनाभावे उत्तरसूत्रे तदननुवृत्त्या अर्ह इत्यत्र "अदीर्घात्०" १।३।३२। इत्यदीर्घस्वरात् परस्य ह्स्वरवर्जितस्य वर्णस्य रेफस्य द्वित्वे "रो रे लुक्०" इति रेफलोपे दीर्घे च आर्ह इत्यनिष्ट स्यादिति रेफवर्जनम् । **अर्हः**-अत्र हस्य द्वित्व न भवति, हवर्जनात् । **करः**-अत्र स्वरात् परो रेफस्तस्मात् परस्य रेफहकारभिन्नस्याकारस्य द्वित्व न भवति, स्वरवर्जनात्, यद्यप्यनेनाकारस्य द्वित्वे सति "लुगस्या-देत्यपदे" २।१।११३। इत्यनेनास्य लुकि नात्र कश्चिद्दोषस्तथापि चारु दारु वारीत्यादौ चारू दारू वारीत्याद्यनिष्ट प्रसज्येत इति स्वरवर्जन बोध्यम् । **अभ्यते**-अत्र भात् परो रेफस्तस्मात् परस्य यस्य द्वित्व न भवति स्वरेभ्य इत्यनुवृत्ते, यथ स्वरात् परो भस्तस्य रेफहकारभिन्नत्वात् तत परस्य च रेफस्यार्हस्वरत्वाभावाद्द्वित्वं न । **हुते**-अत्र हात् परस्य नस्य द्वित्व न, हकारस्य स्वरात् परत्वाभावात् । अन्विति विधानेनानिष्टनिवृत्तिं च दर्शयति—**अन्विति किम्?** इत्यादिना । **प्रोर्णुनाव**-'ऊर्णुञ्क्' आच्छादने, धातो प्रपूर्वात् परोक्षाया णवि द्वित्वे णत्वे वृद्धौ प्रोर्णुनाव, अत्रानेन पश्चाद् द्वित्वे प्रोर्णुनाव भवति, यद्यत्रान्विति न स्यात्तदान्तरङ्गत्वादनेन द्वित्वे कृते पश्चात् परोक्षानिमित्तत्वेन बहिरङ्ग द्विर्वचन स्यात्, ततश्च प्रोर्णुन्नावेत्य-निष्टरूपापत्ति । ननु द्वित्व कृतमपि 'निमित्ताभावे नैमित्तिकस्याप्यपाय' इति न्यायेन निवर्त्स्यति किमनुग्रहणेन? इति चेन्न, अनुग्रहणात्तन्न्यायानि-त्यत्वकल्पनेनादोषात् ॥ ३१ ॥

**अदीर्घाद् विरामैकव्यञ्जने** । अत्र स्वरेभ्य अर्हस्वरस्य अनु नवा द्वे इति चानुवर्तते, अदीर्घादिति पर्युदास स्वरेभ्य इत्यनेनान्वेति । तथाचायमन्वय -अदीर्घात् स्वरात् मर्हस्वरस्य विरामे एकव्यञ्जने अनु द्वे नवा । **त्वक्क्**-त्वच्शब्दात् से "दीर्घङ्याब्व्यञ्जनात्०" १।४।४५। इति लोपे, "चज कगम्" २।१।८६। इति कत्वे, "धुटस्तृतीय" २।१।७६। इति गत्वे, "विरामे वा" १।३।५१। इति पक्षे कत्वे, अनेन द्वित्वे सति सिद्ध्यति । कत्वाभावपक्षे गस्य द्वित्वे-**त्वग्ग्** इति । **दद्ध्यत्र**-दकाराऽकारात् परस्य रहस्वरभिन्नस्य धस्य द्वित्वे "तृतीयस्तृतीयचतुर्थे" १।३।४९। इति पूर्वधस्य दकारोऽसयुक्तव्यञ्जने यकारे परे । **पत्थ्यदनम्**-पकारोत्तरवर्तिनो ह्स्वाकारात् परस्य रहस्वरवर्जितस्य थस्यानेन द्वित्वे प्रथम । **मद्ध्वत्र**-धस्यानेन द्वित्वे पूर्वधस्य तृतीयो दकार । **पित्त्रर्थः**-तस्यानेन द्वित्व सयुक्तव्यञ्जनपरत्वाभावात् । **त्वङ्ङ्मधुरा**-ङस्यानेन द्वित्वम् । **सँय्यँतः**-"तौ मुमो व्यञ्जने०" इति मस्य स्वानुनासिकर्यं इत्यादेशे तस्यानेन द्वित्वमेतेन "लि लौ" १।३।६५। इति सूत्रेण लौ इति द्विवचननिर्दे-शात् सानुनासिकस्यापि निरनुनासिक एवादेश इति ज्ञापनादत्र कथ सानुनासिको यकार इति निरस्तम् । **उरःः्कः**-जिह्वामूलीयस्य वर्णत्वस्य प्रागुक्तत्वेनानेन तस्य द्वित्व, **उरः.कः**-विसर्गस्यानेन द्वित्व, अदीर्घस्वरपरत्वात्, रहस्वरभिन्नवर्णत्वाच्च । **गो३ञ्ञात**-गोपूर्वाज्ञायते के "दूरा-दामन्त्र्यस्य०" इति प्लुतेऽनेन द्वित्व दीर्घभिन्नस्वरात् परस्य ञस्य । एपूदाहरणेषु अनु इत्यधिकारात् द्वित्वादन्यस्मिन् कार्ये कृते तत्प्रवर्तते, तदाह—**अन्वित्यधिकारात्** इत्यादिना । अदीर्घादित्यस्य फल पृच्छति—**अदीर्घादिति किम्? वाक्**-अत्र कस्य न द्वित्व विरामे दीर्घस्वरात् पर-त्वात् । **इन्द्रः**-नस्यानेन न द्वित्व सयुक्तव्यञ्जनपरकत्वात् विरामत्वाभावाच्च । **दधि**-अत्र धस्यानेन न द्वित्व विरामाप्रवृत्ते, इकारे परे च सति व्यञ्जनपरकत्वाभावेनासंयुक्तव्यञ्जनस्य परत्र सुतरामभावाच्च । "त्रिप्रभृतिषु शाकटायनस्य" पा० ८।४।५०। इति सूत्रयत पाणिनेर्मतमाह—**संयु-क्तव्यञ्जनेऽपीच्छन्त्येके**-पाणिन्यादय । शाकटायनमतेऽपि न भवति "न संयोगे" शा० १।१।११९। इति हि तत्सूत्रम् तन्मत उदाहरति—**प्रत्त्तम्**-प्रदातुमारब्धमित्यर्थ, "प्राद् दागस्त आरम्भे क्ते" ४।४।७। इत्यनेन क्ते परे दाग त्तादेश पश्चादेकेषां मतेऽनेन द्वित्वे तकारचतुष्टय रूपम् । पक्षे—**प्रत्तम्**-तकारत्रयमत्र । **वर्या**-अर्हस्वरस्येत्युक्त्या अत्र न रेफस्य द्वित्वम् । **वह्यम्**-हस्यानेन न द्वित्वम्, तद्वर्जनात् । **तितउ**-उकारस्यानेन न द्वित्व स्वरवर्जनात् । ननु त्वक्क् इत्यादौ "पदस्य" इति संयोगान्तलोपः कथं न भवतीत्याह—**अत एवादेशबलात्** इत्यादिना । यदि द्वित्वेऽस्मिन् कृतेऽपि "पदस्य" इति लोप स्यात्, तदा द्वि श्रुतिर्नास्ति किं द्वित्वादेशेनेति भाव । पत्थ्यदनमित्यादिषु थकारादेश्चानेन द्वित्वे कृते प्रथमत्वादिक प्रवर्तते द्वि श्रुतेर्विघाताभावादित्याह—**प्रथमत्वादिकं तु** इत्यादि । द्वित्वस्य अबाधनात् प्रथमत्वादिक तु भवत्येव इत्यन्वय । यद्यपि त्वक्क् इत्यत्र "पदस्य" इति संयोगान्तलोपस्यादेशबलादभावेऽपि "संयोगस्यादौ स्कोर्लुक्" इति लोप पूर्वककारस्य प्राप्तस्तथापि ककारादन्यत्र द्वित्वश्रुतेश्चारितार्थ्येऽपि सूत्रे पूर्वस्मादर्हस्वरस्येत्यनुवृत्त्या तत्र रेफहकाररूपव्यक्त्युपादानात् 'व्यक्तिः पदार्थ माश्रीयते' तत्र च ककारविषयस्य द्वित्वस्यानर्थक्य मा भूदिति न भवति ॥ ३२ ॥

---

१ महृत्म, अक्ष मान्डा०, पु० । २ द्वित्व इति पाठो नास्तीति म० म० । ३ मर्या म० म० ।

## अञ्वर्गस्याऽन्तस्थातः ॥ १ । ३ । ३३ ॥

अन्तस्थातः परस्य ञकारवर्जितस्य वर्गस्य स्थानेऽनु द्वे रूपे वा भवतः । उल्क्का, उल्का, वल्म्मीकः, वल्मीकः; वृक्षव् व्करोति, वृक्षव् करोति । वर्गस्येति किम् ? सव्यम् । अञिति किम् ? हल्ञ्नकारो । अन्तस्थात इति किम् ? भवान्मधुरः ॥३३॥

## ततोऽस्याः ॥ १ । ३ । ३४ ॥

ततोऽञ्वर्गात् परस्या अस्या अन्तस्थायाः स्थाने द्वे रूपे वा भवतः । दध्य्यत्र, दध्यत्र, मध्व्वत्र, मध्वत्र । तत इति किम् ? बाल्यम् । अस्या इति किम् ? वाग् जयति ॥ ३४ ॥

## शिटः प्रथमद्वितीयस्य ॥ १ । ३ । ३५ ॥

शिटः परयोः प्रथमद्वितीययोः स्थाने द्वे रूपे वा भवतः । त्वं क्करोपि, त्वं करोपि, त्वं क्खनसि, त्वं खनसि, कः क्खनति, कः खनति, कः प्पचति, कः पचति, कः क्ख्खनति, कः ख्खनति, कः क्क्ष्लति कः क्ष्लति, कश्छ्चरति कश्चरति, कश्छ्छादयति, कश्छादयति; कष्ट्टीकते, कष्टीकते, कष्ठ्ठकार , कष्ठकार , स्थ्थाली, स्थाली, स्प्फीता, स्फीता । शिट इति किम् ? भवान् करोति । प्रथमद्वितीयस्येति किम् ? आस्यम् । अनुनासिकादप्यादेशरूपात् केचिदिच्छन्ति—त्वञ्छ्छात्रः, त्वञ्छात्रः इत्यादि ॥ ३५ ॥

## ततः शिटः ॥ १ । ३ । ३६ ॥

ततः—प्रथमद्वितीयाभ्यां परस्य शिटः स्थाने द्वे रूपे वा भवतः । तच्श्शेते, तच्शेते, षट्ष्षण्डे, षट्षण्डे, तत्स्साधुः;

---

अञ्वर्गस्यान्तस्थातः । अथानु द्वे नवा इति चानुवर्तते । अञ्वर्गस्य—न ञ् अञ्, सचासौ वर्गस्तस्येति स्थानषष्ठी । अन्तस्थातः— स्त्रीलिङ्गान्तस्थाशब्दात् "श्रायादिभ्यः" ७।२।८४। इति योगवदुदिमत्यन्तेभ्यस्तस् अन्तस्थात अञ्वर्गस्य अनु द्वे नवा इत्यन्वयस्तदर्थमाह— अन्तस्थातः परस्य इत्यादिना । उल्क्का—लकारान्तस्थात परस्य ञकारवर्जितवर्ग्यस्य कस्य विभाषया द्वित्वम् । वल्म्मीकः—मस्थानेन द्वित्व । सव्यम्—सुनोते "य एचातः" ५।१।२८। इति ये, गुणे, "य्यक्ये" १।२।२५। इत्यवादेशे यस्यानेन न द्वित्वं वर्ग्यत्वाभावात् । हल्ञ्नकारो—लात् परस्य ञस्याञ्वर्ग्यत्वाभावान्न द्वित्वम् । भवान्मधुरः—नकारात् परस्य मस्य न द्वित्वम्, तस्य अन्तस्थात परत्वाभावात् ॥ ३३ ॥

ततोऽस्याः । अनु द्वे नवा इति चानुवर्तते । तत इति तच्छब्देन "अञ्वर्ग०" इति पञ्चमीविपरिणतोऽनुकृष्यते, अन्यथापूर्वेणैव सिद्धे पृथगारम्भो निरर्थकः स्यात् । अस्याः इति स्त्रीलिङ्गनिर्देशादन्तस्थाया इति षष्ठ्यन्तस्य लाभः, तत्र च ततः इत्यस्यान्वयः । ततः अस्याः अनु द्वे नवा इत्यन्वयस्तदर्थमाह—ततोऽञ्वर्गात् इत्यादिना । दध्य्यत्र—अत्राञ्वर्गात् धकारात् परस्या अन्तस्थाया यस्यानेन विकल्पेन द्वित्वम् । नन्वस्मिन्नन्तरङ्गे द्वित्वे कर्तव्ये 'असिद्धं बहिरङ्गमि'ति न्यायेन बहिरङ्गो यादेशः कथमसिद्धो भवति ? न चास्य योगस्य वैयर्थ्यम्, स्थानमित्यादावनादेशरूपे यादौ तस्य सावकाशत्वात् इति चेत्, सत्यम्, "न सन्धिङीयक्विद्विदीर्घासद्विधावस्क्लुकि" ७।४।१११। इत्युत्पन्नस्य द्वित्वस्य सन्धिविधित्वेन स्थानिवत्त्वप्रतिषेधे सिद्धे द्विग्रहणम्, 'असिद्धं बहिरङ्गमन्तरङ्गे' इति न्यायस्य बाधनार्थमिति द्वित्वमुपपद्यते । ननु दध्य्यत्र इत्यादौ यकारात् परस्य रस्य कस्मान्न द्वित्वमिति चेदर्द्रन्यस्येत्यधिकाराद्रस्य च वर्जितत्वाददोषः । क्लाम्यतीत्यादौ ककारात् परस्य लस्यानेन द्वित्वं भवति तस्याञ्वर्जनादितिभावः । बाल्यम्—बालस्य भावः कर्म वा इत्यर्थः, "पतिराजान्तगुणाङ्गराजादिभ्यः कर्मणि च" ७।१।६०। इति ट्यण्, लात् परस्य यस्यानेन न द्वित्वं लस्य वर्ग्यत्वाभावात् । वाग् जयति—अत्रान्तस्थाया अभावाद्द्वित्वमनेन भवति ॥ ३४ ॥

शिटः प्रथमद्वितीयस्य । द्वे नवा इति चानुवर्तते । शिट इति पञ्चमी, प्रथमद्वितीयस्य—समाहारद्वन्द्वात्षष्ठी, शिटः प्रथमद्वितीयस्य द्वे नवा इत्यन्वयः, तदर्थमाह—शिटः परयोः इत्यादिना । त्वं क्करोपि—अत्र त्वमो मकारस्य "तौ मुमो व्यञ्जने स्वौ" इत्यनुस्वारे, तस्माच्च शिडन्तर्गतात् परस्य प्रथमस्य कस्यानेन वैकल्पिकं द्वित्वम् । त्वं क्खनसि—अत्रानेन खस्य द्वित्वे "अघोषे प्रथमोऽशिटः" इति खकारस्य ककारः । एवमन्यत्रापि । भवान् करोति—नकारस्य शिट्त्वाभावेन ततः परस्य कस्यानेन न द्वित्वम् । आस्यम्—असत इति घ्यणि रूपम्, तत्र सकारात् परस्य यस्य प्रथमद्वितीयत्वाभावेनानेन द्वित्वं न भवति । यथा "तौ मुमो व्यञ्जने०" इत्यनेन यत्रानुस्वारस्तस्माच्च "शिटः प्रथमद्वितीयस्य" द्वित्वं भवति, तथा तेन यत्रानुनासिकादेशस्तस्मादपि प्रथमद्वितीयस्य द्वित्वमिच्छता प्राचां मतमुपन्यस्यति—अनुनासिकादप्यादेशरूपात् केचिदिच्छन्तीति । केचित्—शाकटायनादय इति लघुन्यासकारः । वस्तुतस्तु—शाकटायनीये द्वित्वप्रकरणे "खय् खय शरि वा" शा० ११।११४।, "शरोऽनु द्वे" शा० १।१।११५।, "यमो मय" शा० ११।११६।, "अचो ह्रोऽहच" शा० ११।११७।, "अदीर्घात्" शा० ११।११८। इत्येव सूत्रपाठः । पाणिनीयतन्त्रे माहेश्वरेषु सूत्रेष्वसमाम्नातानां विसर्गजिह्वामूलीयोपध्मानीयानुस्वारनासिक्ययमानामयोगवाहपदाभिधेयानामट्सु खर्षु च पाठस्योपसंख्यातत्वेन तेषामच्त्वेन "अनचि च" पा० ८।४।४७। इति सूत्रेण द्वित्वं सम्भवति "हयवरट्" शि० ५। सूत्रभाष्यपर्यालोचनया, किन्तु ञकारस्यानुनासिकस्याच्त्वं भवितुं नार्हतीति । तथैव त्वञ्छ्छात्रः इत्यत्र भगवद्धेमचन्द्रशब्दानुशासनेन द्वित्वाभावः स्पष्ट एव । शाकटायनसूत्रेण "अदीर्घात्" इत्यनेन यदि ञकारस्याच्त्वे सति ततः परस्य छस्य द्वित्वं विधीयेत, परन्त्वच्त्वमेव दुर्लभमिति तन्मतेऽपि छस्य द्वित्वं न भवति । पाणिनीयेऽपि अनुस्वारानुनासिकानामयोगवाहानां शरि अटि च पाठः, अस्य त्वनुनासिकस्य हलि पाठः, तथाच तन्मतेऽपि छस्य द्वित्वं न भवतीति प्राचो मतविशेषः पूर्वोक्तः सम्भाव्यते ॥ ३५ ॥

ततः शिटः । अत्र द्वे नवा इति चानुवर्तते । ततः—ताभ्यामिति तच्छब्देन पञ्चमीविपरिणतौ प्रथमद्वितीयौ अनुकृष्येते । शिट इति स्थानषष्ठी । यद्यपि 'अर्थवशाद्विभक्तिपरिणाम' इति न्यायेन पूर्वसूत्रस्थशिटः पञ्चम्यन्तस्यात्र षष्ठ्यन्तत्वेन विपरिणामेऽपि न्यायोऽयमसार्वत्रिक इति भगवदुक्त्या प्रतीयते, तदर्थमाह—ततः प्रथमद्वितीयाभ्याम् इत्यादिना । ततः शिटः द्वे नवा इत्यन्वयः । तच्श्शेते—तद् शेते इति स्थिते, "धुटस्तृतीयः" इति दकारस्य दकारे, ततो दकारस्य "तवर्गस्य०" इति जकारे, "अघोषे प्रथमोऽशिटः" इति प्रथमत्वे, तच् शेते इत्यवस्थायां वर्गप्रथमात् चात् परस्य शिटः शस्य विभाषया द्वित्वम् । षट्ष्षण्डे—टात् परस्य षस्यानेन द्वित्वम् । तत्स्साधुः—तकारात् परस्य

तत्साधुः, वत्स्सः, वत्सः, क्ष्षीरम्, क्षीरम्, अप्स्सराः, अप्सराः । तत इति किम्? भवान् साधुः । शिट इति किम्? मथ्नाति, ख्याति ॥ ३६ ॥

## न रात् स्वरे ॥ १ । ३ । ३७ ॥

रात् परस्य शिटः स्थाने स्वरे परे द्वे रूपे न भवतः । दर्शनम्, विमर्शः, कर्षति, वर्षति, वृस्या इद वार्सम्[1]; कृसराया इदं कार्सरम् । रादिति किम्? तच्छ्शेते, षट्ष्षण्डे; वत्स्सः । स्वर इति इति किम्? कश्श्र्यते, वर्ष्ष्यते । शिट इत्येव? अर्कः, वर्चः । "र्हादर्हस्वरस्या०" ॥ १ । ३ । ३१ ॥ इति विकल्पे प्राप्ते प्रतिषेध. ॥ ३७ ॥

## पुत्रस्याऽऽदिन्पुत्रादिन्याऽऽक्रोशे ॥ १ । ३ । ३८ ॥

आदिन्शब्दे पुत्रादिन्शब्दे च परे पुत्रशब्दसंबन्धिनस्तकारस्याऽऽक्रोशविषये द्वे रूपे न भवतः । "अदीर्घाद् विरामैकव्यञ्जने" ॥ १ । ३ । ३२ ॥ इति विकल्पे प्राप्ते प्रतिषेधः । पुत्रादिनि त्वमसि पापे, पुत्रपुत्रादिनी भव । आदिन्पुत्रादिनीति किम्? पुत्त्रहती, पुत्रहती; पुत्त्रजग्धी, पुत्रजग्धी; "अनाच्छादजात्यादेर्नवा" ॥ २ । ४ । ४७ ॥ इति वा ङी. । आक्रोश इति किम्? पुत्त्रादिनी शिशुमारी, पुत्रादिनीति वा; पुत्त्रपुत्त्रादिनी नागी, पुत्रपुत्रादिनीति वा ॥ ३८ ॥

## म्नां धुड्वर्गेऽन्त्योऽपदान्ते ॥ १ । ३ । ३९ ॥

अन्विति वर्तते, अपदान्ते वर्तमानानां मकारनकाराणां धुट्संज्ञके वर्गे परे प्रत्यासत्तेर्निमित्तवर्गस्यैवान्त्योऽनु भवति । म्-गन्ता, गन्तुम्, न्-शङ्किता, शङ्कितुम्, अञ्चिता, अञ्चितुम्, कुण्ठिता, कुण्ठितुम्, नन्दिता, नन्दितुम्, कम्पिता,

---

सस्य द्वित्वम् । वत्स्सः-सस्य द्वित्व पूर्ववत् । क्ष्षीरम्-अत्र कात् परस्य षस्य द्वित्वम्, "शिट्याद्यस्य०"इति खत्वे-ख्षीरमित्यपि भवति । अप्स्सराः-अत्र पकारात् परस्य सस्य द्वित्वम् । अप्सराः-अत्र "शिट्याद्यस्य द्वितीयो वा" १।३।५९। इति पकारस्य फकारे कृते द्वितीयादपि सस्य द्वित्वे अफ्स्सरा इत्यपि भवति । भवान् साधुः-वर्गपञ्चमात् नकारात् परस्य सस्य द्वित्व न, तस्य वर्गप्रथमद्वितीयत्वाभावात् । मथ्नाति-'मन्थश्' विलोडने, तिवि, "क्र्यादे" ३।४।७९। इति श्नाप्रत्यये, "नो व्यञ्जनस्यानुदित" ४।२।४५। इति नलोपे, नस्य द्वितीयात् परत्वेऽपि शिट्त्वाभावान्न द्वित्वम् ॥ ३६ ॥

न रात् स्वरे । शिट द्वे इति चानुवर्त्तते, रात् शिट· स्वरे न द्वे इत्यन्वय, तदाह—रात् परस्य इत्यादिना । दर्शनम्-'दृशृ' प्रेक्षणे, धातो करणे आधारे वाऽनटि भवति, तत्र "र्हादर्हस्वरस्य०" इत्यनेन स्वरात् परो यो रेफस्तस्मात् परस्य अर्हस्वरस्य वर्णस्य शस्य द्वित्व प्राप्तम्यनेन रात् परस्य शस्य द्वित्व स्वरे परे निषिध्यते । एवमन्यत्रापि । तच्छ्शेते-अत्र शिट शस्य स्वरपरकत्वेऽपि रात् परत्वस्याभावान्न द्वित्वप्रतिषेध, किंतु पूर्वेण द्वित्वम् । कश्श्र्यते-'कृश'धातोर्णौ, गुणे तेप्रत्यये, "क्य शिति" ३।४।७०। इति क्ये, "णेरनिटि" ४।३।८३। इति णिलुकि, अस्य द्वित्वविधौ स्थानिवद्भावप्रतिषेधे, शस्य रेफात् परत्वेऽपि स्वरपरकत्वाभावान्न द्वित्वप्रतिषेध, किन्तु "र्हादर्हस्वरस्या०"इति द्वित्वम् । अर्कः-अत्र नानेन द्वित्वप्रतिषेध, शिटोऽभावात् । द्वित्वप्रतिषेधस्यास्य प्राप्तिपूर्वकत्व दर्शयति—"र्हादर्हस्वरस्या०" इति विकल्पे प्राप्ते इत्यादि । प्रतिषेध.-"न रात् स्वरे" इत्यनेनेति शेष ॥ ३७ ॥

पुत्रस्याऽऽदिन्पुत्रादिन्याऽऽक्रोशे । अत्र द्वे न इति चानुवर्तते, आदिन्पुत्रादिनि पुत्रस्य आक्रोशे द्वे न इत्यन्वय, तदर्थमाह—आदिन्शब्दे पुत्रादिन्शब्दे च इत्यादिना । अत्र "नाम्नोऽनोऽनह्न" २।१।९१। इति लक्षणेन नकारान्तताभिव्यक्त्यर्थं नलोपो भगवता सूत्रकृता न कृत । निषेधस्य प्राप्तिपूर्वकत्व दर्शयति—"अदीर्घाद् विरामैकव्यञ्जने" १।३।३२। इति । स्त्रीष्वाक्रोश प्रायेण प्रवर्तत इति स्त्रीलिङ्गमुदाहरति—पुत्रादिनी त्वमसि पापे-पुत्रानत्ति तच्छीला पुत्रादिनी, "अजातेः शीले" ५।१।१५४। इति णिनि, "स्त्रियां नृतोऽस्वस्रादेर्ङी" २।४।१। इति ङीप्रत्यय, हे पापे ! त्व पुत्रादिनी इत्यन्वय पुत्रघातिनीत्यर्थ । पाप विद्यते अस्या इत्यभ्रादित्वादति "एदाप" १।४।४२। इत्येकारे-पापे इति । पापस्वभावेनात्रसंबोधन न तु पुत्रादित्वेनेति । पुत्र पुत्रादिनी भव-पुत्राणा पुत्रा पुत्रपुत्रास्तान् अत्तीति पूर्ववत् णिनि पुत्रपुत्रादिनी, सूत्रे आदिन्पुत्रादिनीत्युपादानेऽपि 'नामग्रहणे लिङ्गविशिष्टस्य ग्रहणम्' इति न्यायात् स्त्रियामुदाहृतम् । स्त्रीवत् पुंसोऽपि पुत्रादनेनाऽऽक्रोशसंभवे तत्रापि प्रतिषेधो भवत्येव पुत्रादी भव इति । पुत्त्रहती-तकारद्वित्वे रूपम्, पुत्रो हतो ययेति विग्रह । एव पुत्त्रजग्धी-अद्यते स्मेति क्ते "घस्लृसनद्यतन्घञच्-" नहि "अदो जग्ध्" ४।४।१६। इति जग्धादेशे, "अघश्चतुर्था०" २।१।७९। इति तस्य धत्वे, "तृतीयस्तृतीयचतुर्थे" १।३।४९। इति धस्य तृतीयत्वे, तस्य च "धुटो धुटि स्वे वा" १।३।४८। इति दस्य पाक्षिके लोपे, तत पुत्रशब्देन बहुव्रीहिसमासो भवति । तत्र ङीप्रत्ययविधायक योगमाह—"अनाच्छाद०" इति । आक्रोशे इति किम्-आक्रोश इत्यस्य किं प्रयोजनमित्यर्थ । पुत्त्रादिनी शिशुमारी-अत्राऽऽक्रोशाप्रतीतेर्वस्तुस्थितिकथने न द्वित्वप्रतिषेध, शिशून् मारयती "कर्मणोऽण्" ५।१।७२। इत्यणि, ङ्यां शिशुमारी । नागी-"जातेरयान्त०" २।४।५४। इति ङी ॥ ३८ ॥

म्नां धुड्वर्गेऽन्त्योऽपदान्ते । अनु इत्यधिक्रियते, तदाह—अन्विति वर्तते । अपदान्ते म्नां धुड्वर्गे अन्त्य अनु इत्यन्वय, तदर्थमाह—अपदान्ते वर्तमानानां इत्यादि । अत्र स्थानिनिमित्तयो प्रत्यासन्नत्वेऽपि स्थानिनोर्मकारनकारयोरन्त्यत्वाभावादन्त्यशब्दस्य च सापेक्षत्वान्निमित्तस्यैवान्त्यो गम्यत इत्याह-प्रत्यासत्तेर्निमित्तवर्गस्यैव इति । गन्ता, गन्तुम्-'गम्लृ' गतौ, धातोस्तृच्तुम्प्रत्ययौ तत्र मकारस्यापदान्तत्वात् नकार । शङ्किता, शङ्कितुम्-'शकुङ्' शङ्कायाम्, धातोस्तृच्तुम्प्रत्ययौ तत्र "उदित स्वराच्नोन्त" ४।४।९८। इति नकारागमस्या-

---

[1] वार्सम् म० म० ।

## अञ्वर्गस्याऽन्तस्थातः ॥ १ । ३ । ३३ ॥

अन्तस्थातः परस्य अञ्कारवर्जितस्य वर्गस्य स्थानेऽनु द्वे रूपे वा भवतः । उल्क्का, उल्का, वल्म्मीकः, वल्मीकः, वृक्षम्क् करोति, वृक्षम् करोति । वर्गस्येति किम् ? सव्यम् । अञिति किम् ? हल्ञकारौ । अन्तस्थात इति किम् ? भवान्मधुरः ॥३३॥

## ततोऽस्याः ॥ १ । ३ । ३४ ॥

ततोऽञ्वर्गात् परस्या अस्या अन्तस्थायाः स्थाने द्वे रूपे वा भवतः । दध्य्यत्र, दध्यत्र, मध्व्वत्र, मध्वत्र । तत इति किम् ? बाल्यम् । अस्या इति किम् ? वाग् जयति ॥ ३४ ॥

## शिटः प्रथमद्वितीयस्य ॥ १ । ३ । ३५ ॥

शिटः परयोः प्रथमद्वितीययोः स्थाने द्वे रूपे वा भवतः । त्वं क्करोपि, त्वं करोपि, त्वं क्खनसि, त्वं खनसि, कः क्खनति, कः खनति, कः प्पचति, कः पचति, कष्क्खनति, कष्खनति, कष्क्कलति कष्कलति, कश्चरति कश्चरति, कश्छ्छादयति, कश्छादयति, कष्ट्टीकते, कष्टीकते, कष्ठ्ठकारः, कष्ठकारः, स्थ्थाली, स्थाली, स्फ्फीता, स्फीता । शिट इति किम् ? भवान् करोति । प्रथमद्वितीयस्येति किम् ? आस्सम् । अनुनासिकादप्यादेशरूपात् केचिदिच्छन्ति—त्वञ्छ्छात्रः, त्वञ्छात्रः इत्यादि ॥ ३५ ॥

## ततः शिटः ॥ १ । ३ । ३६ ॥

ततः प्रथमद्वितीयाभ्यां परस्य शिटः स्थाने द्वे रूपे वा भवतः । तच्छ्शेते, तच्शेते, षट्ष्षण्डे, षट्षण्डे, तत्स्साधुः,

---

अञ्वर्गस्यान्तस्थातः । अत्रानु द्वे नवा इति चानुवर्तते । अञ्वर्गस्य—न अ् अञ्, सचासौ वर्गस्तस्येति स्थानषष्ठी । अन्तस्थातः—स्त्रीलिङ्गान्तस्थाशब्दात् "आद्यादिभ्यः" ७।२।८४। इति सप्तम्यन्तविभक्त्यन्तेभ्यस्तस् अन्तस्थातः अञ्वर्गस्य अनु द्वे नवा इत्यन्वयस्तदर्थमाह—अन्तस्थात परस्य इत्यादिना । उल्क्का—लरूपान्तस्थात परस्य अञ्कारवर्जितवर्ग्यस्य कस्य विभाषया द्वित्वम् । वल्म्मीकः—मस्यानेन द्वित्वं । सव्यम्—सुनोतेः "य एचातः" ५।१।२८। इति ये, गुणे, "य्यक्ये" १।२।२५। इत्यवादेशे यस्यानेन न द्वित्वं वर्ग्यत्वाभावात् । हल्ञकारौ—लात् परस्य ञस्याञ्वर्गत्वाभावान्न द्वित्वम् । भवान्मधुरः—नकारात् परस्य मस्य न द्वित्वम्, तस्य अन्तस्थात परत्वाभावात् ॥ ३३ ॥

ततोऽस्याः । अनु द्वे नवा इति चानुवर्तते । ततः इति तच्छब्देन "अञ्वर्ग०" इति पञ्चमीविपरिणतोऽनुकृष्यते, अन्यथापूर्वेणैव सिद्धे पृथगारम्भो निरर्थकः स्यात् । अस्याः इति स्त्रीलिङ्गनिर्देशादन्तस्थाया इति पष्ठ्यन्तस्य लाभः, तत्र च ततः इत्यस्यान्वयः । ततः अस्याः अनु द्वे नवा इत्यन्वयस्तदर्थमाह—ततोऽञ्वर्गात् इत्यादिना । दध्य्यत्र—अत्राञ्वर्गात् धकारात् परस्या अन्तस्थाया यस्यानेन विकल्पेन द्वित्वम् । नन्वलिमन्तरङ्गे द्वित्वे कर्तव्ये 'असिद्धं बहिरङ्गमि'ति न्यायेन बहिरङ्गो यावादेशः कथमसिद्धो भवति ? न चास्य योगस्य वैयर्थ्यम्, ध्यानमित्यादावनादेशरूपे यादौ तस्य सावकाशत्वात् इति चेत्, सत्यम्, "न सन्धिङीयक्विद्वदीर्घासद्विधावस्क्लुकि" ७।४।१११। इत्युत्पन्नस्य द्वित्वस्य सन्धिविधित्वेन स्थानिवत्त्वप्रतिषेधे सिद्धे द्विग्रहणम्, 'असिद्धं बहिरङ्गमन्तरङ्गे' इति न्यायस्य बाधनार्थमिति द्वित्वमुपपद्यते । ननु वध्य्यत्र इत्यादौ तकारात् परस्य रस्य कस्मान्न द्वित्वमितिचेदर्हस्वरस्येत्यधिकारादस्य च वर्जितत्वाददोषः । क्लाम्यतीत्यादौ ककारात् परस्य लस्यानेन द्वित्वं भवति तस्यावर्जनादितिभावः । बाल्यम्—बालस्य भावः कर्म वा इत्यर्थे, "पतिराजान्तगुणाङ्गराजादिभ्यः कर्मणि च" ७।१।६०। इति ट्यण, लात् परस्य यस्यानेन न द्वित्वं लस्य वर्ग्यत्वाभावात् । वाग् जयति—अत्रान्तस्थाया अभावाद्द्वित्वमनेन भवति ॥ ३४ ॥

शिटः प्रथमद्वितीयस्य । द्वे नवा इति चानुवर्तते । शिटः इति पञ्चमी, प्रथमद्वितीयस्य—समाहारद्वन्द्वान्तस्, शिटः प्रथमद्वितीयस्य द्वे नवा इत्यन्वयः, तदर्थमाह—शिटः परयोः इत्यादिना । त्वं क्करोपि—अत्र त्वमो मकारस्य "तौ मुमो व्यञ्जने स्वौ" इत्यनुस्वारे, तस्माच्च शिडन्तर्गतात् परस्य प्रथमस्य कस्यानेन वैकल्पिकं द्वित्वम् । त्वं क्खनसि—अत्रानेन खस्य द्वित्वे "अघोषे प्रथमोऽशिटः" इति खकारस्य ककारः । एवमन्यत्रापि । भवान् करोति—नकारस्य शिट्त्वाभावेन ततः परस्य कस्यानेन न द्वित्वम् । आस्सम्—अस्यतः इति घ्यणि रूपम्, तत्र सकारात् परस्य यस्य प्रथमद्वितीयत्वाभावेनानेन द्वित्वं न भवति । यथा "तौ मुमो व्यञ्जने०" इत्यनेन यत्रानुस्वारस्तस्माच्च "शिटः प्रथमद्वितीयस्य" द्वित्वं भवति, तथा तेन यत्रानुनासिकादेशस्तस्मादपि प्रथमद्वितीयस्य द्वित्वमिच्छतां प्राचां मतमुपन्यस्यति—अनुनासिकादप्यादेशरूपात् केचिदिच्छन्तीति । केचित्—शाकटायनादय इति लघुन्यासकारः । वस्तुतस्तु—शाकटायनीये द्वित्वप्रकरणे "स्नय् खय शरि वा" शा० १।१।११४।, "शरोऽनु द्वे" शा० १।१।११५।, "यनो मय" शा० १।१।११६।, "अचो ह्रोऽहृच" शा० १।१।११७।, "अदीर्घात्" शा० १।१।११८। इत्येव सूत्रपाठः । पाणिनीयतन्त्रे माहेश्वरेषु सूत्रेष्वसमाम्नातानां विसर्गजिह्वामूलीयोपध्मानीयानुस्वारनासिक्ययमानामयोगवाहपदाभिधेयानामट्सु शर्षु च पाठस्योपसंख्यातत्वेन तेषामच्त्वेन "अनचि च" पा०८।४।४७। इति सूत्रेण द्वित्वं सम्भवति "हयवरट्" शि०५ । सूत्रभाष्यपर्यालोचनया, किन्तु अकारस्यानुनासिकस्याच्त्वं भवितुमर्हतीति । तथैव त्वञ्छ्छात्रः इत्यत्र भगवद्धेमचन्द्रशब्दानुशासनेन द्वित्वाभावः स्पष्ट एव । शाकटायनसूत्रेण "अदीर्घात्" इत्यनेन यदि अकारस्याच्त्वे सति ततः परस्य छस्य द्वित्वं विधीयेत, परन्त्वच्त्वमेव दुर्लभमिति तन्मतेऽपि छस्य द्वित्वं न भवति । पाणिनीयेऽपि अनुस्वारानुनासिकानामयोगवाहानां शरि अटि च पाठः, अस्य त्वनुनासिकस्य हलि पाठः, तथाच तन्मतेऽपि छस्य द्वित्वं न भवतीति प्राचो मतविशेषः पूर्वोक्तः संभाव्यते ॥ ३५ ॥

ततः शिटः । अत्र द्वे नवा इति चानुवर्तते । ततः शिटः द्वे नवा इत्यन्वयः । ततः—ताभ्यामिति तच्छब्देन पञ्चमीविपरिणतौ प्रथमद्वितीयौ अनुकृष्येते । शिटः इति स्थानषष्ठी । यद्यपि 'अर्थवशाद्विभक्तिपरिणामः' इति न्यायेन पूर्वसूत्रस्थशिटः पञ्चम्यन्तस्यात्र षष्ठ्यन्तत्वेन विपरिणामेऽपि न्यायोऽयमसार्वत्रिक इति भगवदुक्त्या प्रतीयते, तदर्थमाह—ततः प्रथमद्वितीयाभ्यां इत्यादिना । तच्छ्शेते—तद् शेते इति स्थिते, "धुटस्तृतीयः" इति दकारस्य दकारे, ततो दकारस्य "तवर्गस्य०" इति जकारे, "अघोषे प्रथमोऽशिटः" इति प्रथमत्वे, तच् शेते इत्यवस्थायां वर्गप्रथमात् चात् परस्य शिटः शस्य विभाषया द्वित्वम् । षट्ष्षण्डे—टात् परस्य षस्यानेन द्वित्वम् । तत्स्साधुः—तकारात् परस्य

तत्साधुः, वत्स्सः, वत्सः, क्ष्षीरम्, क्षीरम्, अप्स्सराः, अप्सराः । तत इति किम्? भवान् साधुः । शिट इति किम्? मथ्नाति, स्थाति ॥ ३६ ॥

## न रात् स्वरे ॥ १ । ३ । ३७ ॥

रात् परस्य शिटः स्थाने स्वरे परे द्वे रूपे न भवतः । दर्शनम्, विमर्शः, कर्षति, वर्षति, तृस्या इदं तार्सम्; कृसराया इदं कार्सरम्[1] । रादिति किम्? तच्छ्शेते, पट्ष्षण्डे; वत्स्सः । स्वर इति इति किम्? कर्श्श्र्यते, वर्ष्ष्र्यते । शिट इत्येव? अर्क्कः, वर्च्चः । "र्हादहस्वरस्या०" ॥ १ । ३ । ३१ ॥ इति विकल्पे प्राप्ते प्रतिषेध. ॥ ३७ ॥

## पुत्रस्याऽऽदिन्पुत्रादिन्याऽऽक्रोशे ॥ १ । ३ । ३८ ॥

आदिन्शब्दे पुत्रादिन्शब्दे च परे पुत्रशब्दसम्बन्धिनस्तकारस्याऽऽक्रोशविषये द्वे रूपे न भवतः । "अदीर्घाद् विरामैकव्यञ्जने" ॥ १ । ३ । ३२ ॥ इति विकल्पे प्राप्ते प्रतिषेधः । पुत्रादिनि त्वमसि पापे, पुत्रपुत्रादिनी भव । आदिन्पुत्रादिनीति किम्? पुत्त्रहती, पुत्रहती; पुत्त्रजग्धी, पुत्रजग्धी; "अनाच्छादजात्यादेर्नवा" ॥ २ । ४ । ४७ ॥ इति वा ङी. । आक्रोश इति किम्? पुत्त्रादिनी शिशुमारी, पुत्रादिनीति वा, पुत्त्रपुत्त्रादिनी नागी, पुत्रपुत्रादिनीति वा ॥ ३८ ॥

## म्नां धुड्वर्गेऽन्त्योऽपदान्ते ॥ १ । ३ । ३९ ॥

अन्विति वर्तते, अपदान्ते वर्तमानानां मकारनकाराणां धुट्संज्ञके वर्गे परे प्रत्यासत्तेर्निमित्तवर्गस्यैवान्त्योऽनु भवति । म्-गन्ता, गन्तुम्, न्-शङ्किता, शङ्कितुम्, अञ्चिता, अञ्चितुम्, कुण्ठिता, कुण्ठितुम्, नन्दिता, नन्दितुम्, कम्पिता,

---

सस द्वित्वम् । वत्स्सः-सस द्वित्व पूर्ववत् । क्ष्षीरम्-अत्र कात् परस्य षस्य द्वित्वम्, "शिट्याद्यस्य०" इति खत्वे-क्ख्षीरमित्यपि भवति । अप्स्सराः-अत्र पकारात् परस्य सस्य द्वित्वम् । अप्सराः-अत्र "शिट्याद्यस्य द्वितीयो वा" १।३।५९। इति पकारस्य फकारे कृते द्वितीयादपि सस्य द्वित्वे अफ्स्सरा इत्यपि भवति । भवान् साधु.-वर्गपञ्चमात् नकारात् परस्य सस्य द्वित्वं न, तस्य वर्गप्रथमद्वितीयत्वाभावात् । मथ्नाति-'मन्थश्' विलोडने, तिवि, "क्र्यादे" ३।४।७९। इति श्नाप्रत्यये, "नो व्यञ्जनस्यानुदित" ४।२।४५। इति नलोपे, नस्य द्वितीयात् परत्वेऽपि शिट्त्वाभावान्न द्वित्वम् ॥ ३६ ॥

न रात् स्वरे । शिट द्वे इति चानुवर्तते, रात् शिट स्वरे न द्वे इत्यन्वय, तदाह—रात् परस्य इत्यादिना । दर्शनम्-'दृशृ' प्रेक्षणे, धातो करणे आधारे वाऽनटि भवति, तत्र "र्हादहस्वरस्य०" इत्यनेन स्वरात् परो यो रेफस्तस्मात् परस्य अहस्वरस्य वर्णस्य शस्य द्वित्व प्राप्तमप्यनेन रात् परस्य शस्य द्वित्व स्वरे परे निषिध्यते । एवमन्यत्रापि । तच्छ्शेते-अत्र शिट शस्य स्वरपरकत्वेऽपि रात् परत्वस्याभावान्न द्वित्वप्रतिषेध, किंतु पूर्वेण द्वित्वम् । कर्श्श्र्यते-'कृश'धातोर्णौ, गुणे तेप्रत्यये, "क्य शिति" ३।४।७०। इति क्ये, "णेरनिटि" ४।३।८३। इति णिलुकि, अस्य द्वित्वविधौ स्थानिवद्भावप्रतिषेधे, शस्य रेफात् परत्वेऽपि स्वरपरकत्वाभावान्न द्वित्वप्रतिषेध, किन्तु "र्हादहस्वरस्या०" इति द्वित्वम् । अर्क्कः-अत्र नानेन द्वित्वप्रतिषेध, शिटोऽभावात् । द्वित्वप्रतिषेधस्यास्य प्राप्तिपूर्वकत्व दर्शयति—"र्हादहस्वरस्या०" इति विकल्पे प्राप्ते इत्यादि । प्रतिषेध.-"न रात् स्वरे" इत्यनेनेति शेष ॥ ३७ ॥

पुत्रस्याऽऽदिन्पुत्रादिन्याऽऽक्रोशे । अत्र द्वे न इति चानुवर्तते, आदिन्पुत्रादिनि पुत्रस्य आक्रोशे द्वे न इत्यन्वय, तदर्थमाह—आदिन्शब्दे पुत्रादिन्शब्दे च इत्यादिना । अत्र "नाम्नोऽनोऽनह्न" २।१।९१। इति लक्षणेन नकारान्तताभिव्यक्त्यर्थं नलोपो भगवता वृत्तिकृता न कृत । निषेधस्य प्राप्तिपूर्वकत्व दर्शयति-"अदीर्घाद् विरामैकव्यञ्जने" १।३।३२। इति । स्त्रीष्वाक्रोश प्रायेण प्रवर्तत इति स्त्रीलिङ्गमुदाहरति-पुत्रादिनी त्वमसि पापे-पुत्रानत्ति तच्छीला पुत्रादिनी, "अजाते शीले" ५।१।१५४। इति णिनि, "स्त्रियां नृतोऽस्वस्रादेर्ङी" २।४।१। इति ङीप्रत्यय, हे पापे ! त्व पुत्रादिनी इत्यन्वय पुत्रघातिनीत्यर्थ । पाप विद्यते अस्या इत्यभ्रादित्वादवि "एदाप" १।४।४२। इत्येकारे-पापे इति । पापस्वभावेनात्रसम्बोधन न तु पुत्रादित्वेनेति । पुत्र पुत्रादिनी भव-पुत्राणा पुत्रा पुत्रपुत्रास्तान् अत्तीति पूर्ववत् णिनि पुत्रपुत्रादिनी, सूत्रे आदिन्पुत्रादिनीत्युपादानेऽपि 'नामग्रहणे लिङ्गविशिष्टस्य ग्रहणम्' इति न्यायात् स्त्रियामुदाहृतम् । स्त्रीवत् पुंसोऽपि पुत्रादनेनाऽऽक्रोशसम्भवे तत्रापि प्रतिषेधो भवत्येव पुत्रादी भव इति । पुत्त्रहती-तकारद्वित्वे रूपम्, पुत्रो हतो ययेति विग्रह । एव पुत्त्रजग्धी-अद्यते स्मेति क्ते "घस्ऌ सनद्यतनीघञचलि" ४।४।१७। इति घस्लादेशे, "अघश्चतुर्था०" २।१।७९। इति तस्य धत्वे, "तृतीयस्तृतीयचतुर्थे" १।३।४९। इति घस्य तृतीयत्वे, तस्य च "धुटो धुटि स्वे वा" १।३।४८। इति दस्य पाक्षिके लोपे, तत पुत्रशब्देन बहुव्रीहिसमासो भवति । तत्र ङीप्रत्ययविधायकयोगमाह—"अनाच्छाद०" इति । आक्रोशे इति किम्-आक्रोश इत्यस्य किं प्रयोजनमित्यर्थं । पुत्त्रादिनी शिशुमारी-अत्राऽऽक्रोशाप्रतीतेर्वस्तुस्थितिकथने न द्वित्वप्रतिषेध, शिशून् मारयती "कर्मणोऽण्" ५।१।७२। इत्यणि, ङ्या शिशुमारी । नागी-"जातेरयान्त०" २।४।५४। इति ङी ॥ ३८ ॥

म्नां धुड्वर्गेऽन्त्योऽपदान्ते । अनु इत्यधिक्रियते, तदाह—अन्विति वर्तते । अपदान्ते म्ना धुड्वर्गे अन्त्य अनु इत्यन्वय, तदर्थमाह—अपदान्ते वर्तमानाना इत्यादि । अत्र स्थानिनिमित्तयो प्रत्यासत्त्वेऽपि स्थानिनोर्मकारनकारयोरन्त्यत्वाभावादन्त्यशब्दस्य च सापेक्षत्वान्निमित्तस्यैवान्त्यो गम्यत इत्याह-प्रत्यासत्तेर्निमित्तवर्गस्यैव इति । गन्ता, गन्तुम्-'गम्लृ' गतौ, धातोस्तृच्तुम्प्रत्ययौ तत्र मकारस्यापदान्तत्वात् नकार । शङ्किता, शङ्कितुम्-'शकुङ्' शङ्कायां, धातोस्तृच्तुम्प्रत्ययौ तत्र "उदित स्वराज्नोन्त" ४।४।९८। इति नकारागमस्या-

---

[1] कार्षरम् म० म० ।

## अञ्वर्गस्याऽन्तस्थातः ॥ १ । ३ । ३३ ॥

अन्तस्थातः परस्य ञकारवर्जितस्य वर्गस्य स्थानेऽनु द्वे रूपे वा भवतः । उल्क्का, उल्का, वल्म्मीकः, वल्मीकः; वृक्षव् क्करोति, वृक्षव् करोति । वर्गस्येति किम् ? सव्यम् । अञिति किम् ? हल्ञकारौ । अन्तस्थात इति किम् ? भवान्मधुरः ॥३३॥

## ततोऽस्याः ॥ १ । ३ । ३४ ॥

ततोऽञ्वर्गात् परस्या अस्या अन्तस्थायाः स्थाने द्वे रूपे वा भवतः । दध्य्यत्र, दध्यत्र, मध्व्वत्र, मध्वत्र । तत इति किम् ? वाल्यम् । अस्या इति किम् ? वाग् जयति ॥ ३४ ॥

## शिटः प्रथमद्वितीयस्य ॥ १ । ३ । ३५ ॥

शिटः परयोः प्रथमद्वितीययोः स्थाने द्वे रूपे वा भवतः । त्वं क्करोषि, त्वं करोषि, त्वं क्खनसि, त्वं खनसि, कः क्खनति, कः खनति, कः प्पचति, कः पचति, कक्क्खनति, कक्खनति, कक्क्लति कक्लति, कश्चरति कश्चरति, कश्छ्छादयति, कश्छादयति; कष्ट्टीकते, कष्टीकते, कष्ठ्ठकारः, कष्ठकारः, स्थ्थाली, स्थाली; स्प्फीता, स्फीता । शिट इति किम् ? भवान् करोति । प्रथमद्वितीयस्येति किम् ? आस्यम् । अनुनासिकादप्यादेशरूपात् केचिदिच्छन्ति—त्वञ्छ्छात्रः, त्वञ्छात्रः इत्यादि ॥ ३५ ॥

## ततः शिटः ॥ १ । ३ । ३६ ॥

ततः—प्रथमद्वितीयाभ्यां परस्य शिटः स्थाने द्वे रूपे वा भवतः । तच्श्शेते, तच्शेते, षट्ष्षण्डे, षट्षण्डे, तत्स्साधुः,

---

**अञ्वर्गस्यान्तस्थातः** । अत्रानु द्वे नवा इति चानुवर्तते । **अञ्वर्गस्य**—न ञ् अञ्, सचासौ वर्गस्तस्येति स्थानषष्ठी । **अन्तस्थात.**—
स्त्रीलिङ्गान्तस्थाशब्दात् "आद्यादिभ्य" ७।२।८४। इति सभवद्विभक्त्यन्तेभ्यस्तस् अन्तस्थात अञ्वर्गस्य अनु द्वे नवा इत्यन्वयस्तदर्थमाह—
**अन्तस्थातः परस्य** इत्यादिना । उल्क्का—लरूपान्तस्थात परस्य ञकारवर्जितवर्ग्यस्य कस्य विभाषया द्वित्वम् । **वल्म्मीकः**—मस्यानेन द्वित्व ।
**सव्यम्**—सुनोते "य एचात" ५।१।२८। इति ये, गुणे, "य्यक्ये" १।२।२५। इत्यवादेशे यस्यानेन न द्वित्व वर्ग्यत्वाभावात् । **हल्ञकारौ**—लात्
परस्य ञस्याञ्वर्गत्वाभावान्न द्वित्वम् । **भवान्मधुरः**—नकारात् परस्य मस्य न द्वित्वम्, तस्य अन्तस्थात परत्वाभावात् ॥ ३३ ॥

**ततोऽस्या.** । अनु द्वे नवा इति चानुवर्तते । **तत** इति तच्छब्देन "अञ्वर्गा०" इति पञ्चमीविपरिणतोऽनुकृष्यते, अन्यथापूर्वेणैव
सिद्धे पृथगारम्भो निरर्थक स्यात् । **अस्या** इति स्त्रीलिङ्गनिर्देशादन्तस्थाया इति षष्ठ्यन्तस्य लाभ, तत्र च तत इत्यस्यान्वय । तत अस्या
अनु द्वे नवा इत्यन्वयस्तदर्थमाह—**ततोऽञ्वर्गात्** इत्यादिना । दध्य्यत्र—अत्राञ्वर्गात् धकारात् परस्या अन्तस्थाया यस्यानेन विकल्पेन
द्वित्वम् । नन्वस्मिन्नन्तरङ्गे द्वित्वे कर्तव्ये 'असिद्ध बहिरङ्गमि'ति न्यायेन बहिरङ्गो यादेश कथमसिद्धो भवति ? न चास्य योगस्य वैयर्थ्यम्, ध्यान-
मित्यादावनादेशरूपे यादौ तस्य सावकाशत्वात् इति चेत्, सत्यम्, "न सधिङीयक्विद्विदीर्घासद्विधावस्क्लुकि" ७।४।१११। इत्युत्पन्नस्य द्वित्वस्य
सधिविधित्वेन स्थानिवत्त्वप्रतिषेधे सिद्धे द्विग्रहणम्, 'असिद्ध बहिरङ्गमन्तरङ्गे' इति न्यायस्य बाधनार्थमिति द्वित्वमुपपद्यते । ननु दध्य्यत्र इत्यादौ
तकारात् परस्य रस्य कस्मान्न द्वित्वमितिचेदर्हस्वरस्येत्यधिकारादस्य च वर्जितत्वाददोष । क्लाम्यतीत्यादौ ककारात् परस्य लस्यानेन द्वित्व भवति तस्मा-
वर्जनादितिभाव । **वाल्यम्**—बालस्य भाव कर्म वा इत्यर्थ, "पतिराजान्तगुणाङ्गराजादिभ्य कर्मणि च" ७।१।६०। इति व्यण्, लात् परस्य
यस्यानेन न द्वित्व लस्य वर्ग्यत्वाभावात् । **वाग् जयति**—अत्रान्तस्थाया अभावाद्द्वित्वमानेन भवति ॥ ३४ ॥

**शिटः प्रथमद्वितीयस्य** । द्वे नवा इति चानुवर्तते । **शिट** इति पञ्चमी, **प्रथमद्वितीयस्य**—समाहारद्वन्द्वान्ङस्, शिट प्रथम-
द्वितीयस्य द्वे नवा इत्यन्वय, तदर्थमाह—**शिट. परयोः** इत्यादिना । **त्वं क्करोषि**—अत्र त्वमो मकारस्य "तौ मुमो व्यञ्जने स्वौ" इत्यनुस्वारे,
तस्माच्च शिडन्तर्गतात् परस्य प्रथमस्य कस्यानेन वैकल्पिक द्वित्वम् । **त्वं क्खनसि**—अत्रानेन खस्य द्वित्वे "अघोषे प्रथमोऽशिट" इति खकारस्य
ककार । एवमन्यत्रापि । **भवान् करोति**—नकारस्य शिट्त्वाभावेन तत परस्य कस्यानेन न द्वित्वम् । **आस्यम्**—अस्यत इति घ्यणि रूपम्,
तत्र सकारात् परस्य यस्य प्रथमद्वितीयत्वाभावेनानेन द्वित्व न भवति । यथा "तौ मुमो व्यञ्जने०" इत्यनेन यत्रानुस्वारस्तस्माच्च "शिट प्रथमद्विती-
यस्य" द्वित्व भवति, तथा तेन यत्रानुनासिकादेशस्तस्मादपि प्रथमद्वितीयस्य द्वित्वमिच्छता प्राचा मतमुपन्यस्यति—**अनुनासिकादप्यादेश-
रूपात् केचिदिच्छन्तीति** । **केचित्**—शाकटायनादय इति लघुन्यासकार । वस्तुतस्तु—शाकटायनीये द्वित्वप्रकरणे "खय् खय शरि वा"
शा० १।१।११४।, "शरोऽनु द्वे" शा० १।१।११५।, "यमो मय" शा० १।१।११६।, "अचो ह्रोऽह्च" शा० १।१।११७।, "अदीर्घात्" शा०
१।१।११८। इत्येव सूत्रपाठ । पाणिनीयतन्त्रे माहेश्वरेषु सूत्रेष्वसमाम्नातानां विसर्गजिह्वामूलीयोपध्मानीयानुस्वारनासिक्ययमानामयोगवाह-
पदाभिधेयानामट्सु शर्षु च पाठस्योपसंख्यातत्वेन तेषामच्त्वेन "अनचि च" पा०८।४।४७। इति सूत्रेण द्वित्व सभवति "हयवरट्" शि०५ । सूत्र-
भाष्यपर्यालोचनया, किन्तु ञकारस्यानुनासिकस्याच्त्व भवितुं नार्हति । तथैव **त्वञ्च्छात्र.** इत्यत्र भगवद्धेमचन्द्रशब्दानुशासनेन द्वित्वाभाव
स्पष्ट एव । शाकटायनसूत्रेण "अदीर्घात्" इत्यनेन यदि ञकारस्याच्त्वे सति तत परस्य छस्य द्वित्व विधीयेत, परन्त्वच्त्वमेव दुर्लभमिति तन्म-
तेऽपि छस्य द्वित्व न भवति । पाणिनीयेऽपि अनुस्वारानुनासिकानामयोगवाहाना शरि अटि च पाठ, अस्य त्वनुनासिकस्य हलि पाठ, तथाच
तन्मतेऽपि छस्य द्वित्व न भवतीति प्राचो मतविशेष पूर्वोक्त सभाव्यते ॥ ३५ ॥

**ततः शिट.** । अत्र द्वे नवा इति चानुवर्तते । तत शिट द्वे नवा इत्यन्वय । **तत.**—ताभ्यामिति तच्छब्देन पञ्चमीविपरिणतौ
प्रथमद्वितीयौ अनुकृष्येते । **शिट** इति स्थानषष्ठी । यद्यपि 'अर्थवशाद्विभक्तिपरिणाम' इति न्यायेन पूर्वसूत्रस्थशिट पञ्चम्यन्तस्यात्र षष्ठ्यन्तत्वेन
विपरिणामेऽपि न्यायोऽयमसार्वत्रिक इति भगवदुक्त्या प्रतीयते, तदर्थमाह—**तत. प्रथमद्वितीयाभ्या** इत्यादिना । **तच्श्शेते**—तद् शेते
इति स्थिते, "धुटस्तृतीय" इति दकारस्य दकारे, ततो दकारस्य "तवर्गस्य०" इति जकारे, "अघोषे प्रथमोऽशिट" इति प्रथमत्वे, तच् शेते इत्य-
वस्थाया वर्गप्रथमात् चात् परस्य शिट शस्य विभाषया द्वित्वम् । **षट्ष्षण्डे**—टात् परस्य षस्यानेन द्वित्वम् । **तत्स्साधु.**—तकारात् परस्य

## रो रे लुग् दीर्घश्चादिदुतः ॥ १ । ३ । ४१ ॥

अपदान्त इति नानुवर्तते, रेफस्य रेफे परे लुग् भवति; अकारेकारोकाराणां चानन्तराणां दीर्घो भवति । पुना रमते, माता रौति, अग्नी रथेन, नीरक्तम्, दूरक्तम्, पटू राजा, उच्चै रौति । अन्वित्येव ? अहोरूपम्–अत्र पूर्वमेव रोरुत्वे, रेफाभावाल्लुग्दीर्घाभावः सिद्धः ॥ ४१ ॥

## ढस्तड्ढे ॥ १ । ३ । ४२ ॥

तन्निमित्तो ढस्तड्ढः, ढकारस्य तड्ढे परेऽनु लुग् भवति; अकारेकारोकाराणां च दीर्घो भवति । महतेः क्तौ माढिः, लीढम्, मीढम्, गूढम्, तड्ढ इति किम् ? मधुलिड् ढौकते–नाय लुप्यमानढकारनिमित्तो ढः, एवं चकृड्ढे, लुलुविड्ढे इत्यादावपि ढकारस्य द्वित्वे सति ढकारयोर्निमित्तनिमित्तिभावो नास्तीति लुग् न भवति । अदिदुत इत्येव ? आतृढम्, आवृढम् । अन्वित्येव ? लेढा, मोढा–अत्र गुणे कृते, पश्चात् ढलोपः, अन्यथा हि पूर्वमेव ढलोपे दीर्घे च लीढा मूढेत्यनिष्टं रूपं स्यात् ॥ ४२ ॥

---

**रो रे लुग् दीर्घश्चादिदुतः ।** रो रे लुक् च अदिदुत दीर्घ इत्यन्वय । अच इच उच इत्येषां समाहारद्वन्द्वात्पञ्चम्य् । नन्वत्रापदान्त इत्यनुवर्तेत तदा अजर्घा अपास्पा अचोकू अचाखा अचाका अपापा इत्यादिष्वेव सूत्र प्रवर्तेत न स्वाराज्यमित्यादौ इति चेद्, सत्य, सूत्रे अदिदुत इत्यत्र इद्ग्रहणात्तदननुवृत्ते । न हीकारात् परस्य रेफस्य रेफेऽपदान्ते सम्भवोऽस्ति यथा–अग्नी रथेन, नीरक्तम् इत्यादौ । अकारोकाराभ्या परस्य रेफस्य हि रेफेऽपदान्ते पदान्ते च सम्भव यथा–अजर्घा, अचोकू, पुना रमते, दूरक्तमित्यादौ । इत्थ च सर्वलक्ष्यपर्यालोचनया पदान्तेऽपदान्ते चाविशेषात् सूत्रप्रवृत्तिमभ्युपगम्याह–**अपदान्त इति नानुवर्त्तत** इति । अपि च सूत्रे भिन्नस्थानिनिमित्तकथनेनापि तदननुवृत्तिरेव बोध्या । ननु सूत्रे रो इत्यनेन सानुबन्धो निरनुबन्धो वा [1] नाद्य, तथासति अग्नी रथेनेत्यादि सिद्धावपि पुना रमते इत्यादि न सिद्ध्येत्, न द्वितीय, तथासति पुना रमते इत्यादिसिद्धावपि अग्नी रथेनेत्यादि न सिद्ध्येत्, न च लक्ष्यानुरोधेन उभयपरिग्रह, तस्य सर्वत्र नियामकत्वेऽतिप्रसङ्गात् इति चेदत्र सूत्रे रोरिति सानुबन्धस्य रे इति निरनुबन्धस्य चैकप्रयत्नेनोभयमुच्चार्य निर्देशात् 'निरनुबन्धग्रहणे सामान्यग्रहणमि'ति न्यायाच्च सामान्येन ग्रहण भवतीत्याह–**रेफस्य** इत्यादि । अदिदुत इत्यस्यार्थमाह–**अकारेकारोकाराणां** इति । अथ अग्नी रथेनेत्यादौ व्यवहितस्याकारस्य दीर्घ कस्मान्न भवतीत्याशङ्कायामाह–**अनन्तराणां** इति । ननु सामान्यनिर्देशादनन्तराणामेवेति कुतो लभ्यते इति चेत्, उच्यते–रे इत्युपश्लेषसप्तमीनिर्देशात् लुगिव दीर्घोऽपि रेफोपश्लिष्टस्यैव भवतीति भाव । **पुना रमते**–पुनर् रमते इति स्थिते, रेफस्य रेफे परेऽनेन लोपे पूर्वाकारस्य च दीर्घे सिध्यति । एवमन्यत्र । **अहोरूपम्**–अत्र अहन् रूपम् इति स्थिते नकारस्य "अह्नः" २।१।७४। इति रत्वे, "घोषवति" "रो रे लुक्०" इति सूत्रद्वयप्रसङ्गे परत्वात् "रो रे लुग् दीर्घश्चा०" इति रेफस्य लोपो दीर्घश्च प्राप्नोतीत्याह–**अन्वित्येव ? अहोरूपम्** इत्यादि । अन्वित्यधिकारात्तु पूर्वमेवोत्वे रेफाभावादस्य अप्रवृत्तिरित्याह–**अत्र पूर्वमेव** इत्यादि ॥ ४१ ॥

**ढस्तड्ढे ।** अत्र अनु लुग् दीर्घश्चादिदुत इति चानुवर्तते, ढ तड्ढे अनु लुक् च अदिदुत दीर्घ इत्यन्वय । तड्ढे–"तवर्गस्य०" इति टवर्गयोगे दस्य ढ, तस्य–लुप्यमानढकारस्य कार्यत्वेन ढस्तड्ढस्तस्मिन्निति समासस्तदाह–**तन्निमित्तो ढस्तड्ढ** इति । अत्र ढ इति वर्णमात्र निमित्तत्वेनाश्रीयते, अकारस्तु मुखसुखार्थं, अन्यथाकारविशिष्टो यत्र ढकारस्तत्रैव सूत्र प्रवर्तेत । सूत्रार्थमाह–**ढकारस्य** इत्यादिना । **माढि:**–'महण्' पूजाया, धातो क्तौ "तेर्ग्रहादिभ्य" ४।४।३३। इति नियमादिडभावे, "हो धुट्पदान्ते" २।१।८२। इति हस्य ढत्वे, "अधश्चतुर्थात्तथोर्ध" २।१।७९। इति तस्य धत्वे, "तवर्गस्य०" इति धस्य ढत्वेऽनेन प्रकृतिढस्य लोपे दीर्घत्वे च सिद्ध्यति । **लीढम्, मीढम्, गूढम्**–'लिहींक्' आस्वादने, 'मिह्'सेचने, 'गुहौग्' संवरणे इत्येभ्य क्ते पूर्ववत् ढत्वादौ भवन्ति । **मधुलिड्ढौकते**–मधु लेढीति विग्रहे क्विप्, मधुलिह् इति स्थिते से "दीर्घङ्याब्व्यञ्जनात्०" इति लुकि, "हो धुट्०"इति ढत्व, 'ढौकृङ्' गतौ, तेप्रत्यये शवि च–ढौकते, मधुलिढ् ढौकते इति स्थिते नाय ढकारस्तन्निमित्त इति लोपदीर्घौ न भवत । अत्र सूत्रे यदि तड्ढे इति निमित्तमनुपादाय ढे इति ढकारमात्रस्य निमित्तत्वे तृतीय बाधित्वा विशेषविहितत्वेनापवादत्वादत्रापि तौ स्यातामित्याह–**नायं लुप्यमान** इत्यादिना । लुप्यमानो ढकारो निमित्त यस्य स तथोक्तो ढ इत्यर्थ । **एवं**–पूर्ववत् । **चकृड्ढ्वे, लुलुविड्ढ्वे**–करोते 'लूञ्' छेदने च धातो परोक्षाया ध्वेप्रत्यये "द्विर्धातु परोक्षाङे प्राक्तु स्वरे स्वरविधे" ४।१।१। इति द्वित्वे, "ऋतोऽत्" ४।१।३८। इति अत्वे, "कङश्च" ४।१।४६। इति चत्वे, "नाम्यन्तात्०" २।१।८०। इति ढत्वे, "अघोषे०" १।३।२२। इति तस्य द्वित्वे, तन्निमित्तत्वाभावाल्लुगभावे "तृतीयस्तृतीयचतुर्थे" इति तृतीयत्वे–चकृड्ढ्वे भवति । एव लुञ्धातौ इटि ढत्वे उवादेशे च सति तृतीय –लुलुविड्ढ्वे इति भवति । एतदेवाह–**चकृड्ढ्वे, लुलुविड्ढ्वे इत्यादावपि** इत्यादिना । **आतृढम्, आवृढम्**–आङ्पूर्वात् तृहेर्वृहेश्च क्ते "हो धुट्०"इति ढत्वे, "अधश्चतुर्थात्०" इति तस्य धत्वे, "तवर्गस्य०" इति ढत्वे, "ढस्तड्ढे" इति लोपे–आतृढम्, आवृढमिति रूपे, अत्रानन्तराणामकारेकारोकाराणामभावान्न दीर्घ । **लेढा, मोढा**–लिहेर्मुहेश्च तृचि ढत्वादौ यद्यप्यापाततोऽन्वित्यभावे परत्वात् गुणो ढलोप बाधित्वा प्राप्नोति तथापि ढलोपस्याश्रितत्वेनान्तरङ्गत्वाद्गुणादपि पूर्वं प्रवृत्तिरित्यन्वित्यधिकार । नच वाच्य "हो धुट्०"इति विहितढत्वस्यासत्वात् ढलोपस्याप्यसत्वेन गुणो भविष्यतीति, 'वार्णात्प्राकृतं' इति न्यायेनान्तरङ्गे ढत्वे विधेयेऽवार्णविधेर्गुणस्य बहिरङ्गत्वेनासिद्धत्वादितीद कार्यासत्वपक्षाभिप्रायेणोक्तम् । शास्त्रासत्वपक्षे तु गुणे कृते ढत्व भवति । अन्वित्यधिकारस्य फलमाह–अत्र–लिह् ता, मुह् ता इत्यत्र, **गुणे कृते**–लेढ्ढा, मोढ्ढा इति जाते सति, **ढलोपः**–अनेनेति शेष । अन्यथा–अन्वित्यधिकाराभावे, **पूर्वमेव**–गुणादिति शेष । **ढलोपे, दीर्घे च**–अनेनेति शेष । तस्मिन्सति किं स्यादित्याह–**लीढा, मूढेत्यनिष्टं रूपं स्यादिति** ॥ ४२ ॥

---

१ °चानन्तराणां दी° पु० ।

कम्पितुम् । ञ्रामिति बहुवचनं वर्णान्तरबाधनार्थम्, तेन–कुर्वन्ति, कृपन्ति, विस्रम्भः, सरम्भः इत्यत्र नकारस्य णत्वं बाधित्वा अनेन वर्गान्त्य एव भवति । क्रान्त्वा, भ्रान्त्वा इत्यत्रापि नकारे कृते णत्वबाधनार्थं पुनर्नकारः । धुडिति किम्? आहन्महे, प्रहन्मः । धुड्वर्गे इति किम्? गम्यते, हन्यते । अपदान्त इति किम्? भवान् करोति । अन्वित्यधिकारात् व्यङ्क्ता, व्यङ्क्तुमित्यत्राञ्जेर्गत्वे, कत्वे च कृते, पश्चात् कवर्गान्त्यः, अन्यथा चवर्गान्त्यः स्यात् ॥ ३९ ॥

## शिड्हेऽनुस्वारः ॥ १ । ३ । ४० ॥

अपदान्ते वर्तमानानां ञ्रां स्थाने शिटि हकारे च परे अनुस्वार आदेशोऽनु भवति । म्–पुंसि, गंस्यते । न्–दंशः, सुदंशि[1] कुलानि, वपूंषि, धनूंषि, यशांसि, पयांसि, गुडलिंहि, स्वनड्वांहि कुलानि । ञ्रामिति बहुवचनाद् बृंहणमित्यत्र णत्वं, दंश इत्यादौ ञत्वं च बाधित्वाऽनेनानुस्वार एव भवति, एवं सर्पींषि, सुदंशि । शिड्हे इति किम्? गम्यते, हन्यते । अपदान्त इत्येव? भवान् साधुः, श्रेयान् हेतुः । अन्वित्येव? पिण्ढि, शिण्ढि–अत्र पिष्लृशिषोर्हौ, तस्य धित्वे, षस्य डत्वे च शिडभावाच्छ्नन्नकारस्यानुस्वारो न भवति ॥ ४० ॥

---

पदान्तत्वात् एकार । एवमन्यत्र यथायथं समन्वय । ननु सूत्रे ञ्रामिति बहुवचनं किमर्थमित्यत आह—ञ्रामिति बहुवचनमिति । अय भाव —'वर्णग्रहणे जातिग्रहणमि'ति जातिनिर्देशे प्राप्ते बहुवचनं व्यक्तिनिर्देशार्थम्, तेन सर्वेषु मकारनकारेष्वपदान्तेषु प्रतिव्यक्ति वैयर्थ्यं मा भूदिति प्रवर्तमानोऽनेनान्त्यो कार्यान्तरबाधायै प्रभवति, तत्फलमाह—तेन इत्यादि । तेन–वर्णान्तरबाधनार्थकबहुवचनेन इत्यर्थ । कुर्वन्ति–'डुकृग्' करणे, धातोर्वर्तमानाया अन्तौ, "कृत्तनादेरु" ३।४।८३। इत्युप्रत्यये, "उश्नो" ४।३।२। इति गुणे, "अत शित्युत्" ४।२।८९। इत्य- कारस्योकारस्तस्य यण् कुर्वन्तीति रूपम्, अत्र "रपृवर्णान्नोण०" २।३।६३। इति णत्वं प्राप्तमप्यनेन बाधित्वा वर्गान्त्यो नस्य न । कृपन्ति– 'कृपीत्' विलेखने, धातोरन्तौ प्रत्यये, शे चाकारलुकि प्राप्तं णत्वं बाधित्वा अनेन वर्गान्त्य । विस्रम्भः–विपूर्वात् 'स्रम्भुङ्' विश्वासे, धातोर्भावे घञि, "उदित०" इति नागमे रूपम्, तत्र नस्यानेन वर्गान्त्यो णत्वं बाधित्वा भवति । संरम्भ–सपूर्वात् 'रभुङ्' शब्दे, धातोर्नागमे घञि च णत्वं बाधित्वा वर्गान्त्य एव । क्रान्त्वा, भ्रान्त्वा–'क्रमू' पादविक्षेपे, 'भ्रमू' चलने इति धातुभ्यां क्त्वायां "अहन्पञ्चम०" ४।१।१०७। इति दीर्घ, मस्यानेन नकारे कृते पुनर्नकारविधानं किमर्थमित्यत आह—णत्वबाधनार्थम् इत्यादिना । बहुवचनं वर्णान्तरबाधनार्थमित्युक्तं ततो बहुवचनादनयोरादेशस्यापि कार्यान्तराभाव, तेन 'शङ्किता' इत्यादौ "अदीर्घात्०" इति द्वित्वमपि न भवति, असन्नित्यधिकाराद्वा । एवं च नका- रस्य पुनर्नकारो भवति । धुडिति किम्–धुडित्यस्य किं प्रयोजनमित्यर्थ । आहन्महे–अत्र मस्य वर्गत्वेऽपि धुट्त्वाभावान्न नस्यापदान्तस्या- ऽनेन वर्गान्त्य, "आङो यमहन०" ३।३।८६। इत्यात्मनेपदम् । गम्यते, हन्यते–गमेर्हनेश्च तेप्रत्यये, "क्य शिति" ३।४।७०। इति क्ये रूपे भवत, अत्र यकारस्य धुट्त्वाभावाद्वर्गत्वाभावाच्चापदान्तस्य मस्य नस्य चानेनाऽन्त्यो न भवति । भवान् करोति–अत्र नस्याऽपदान्तत्वाभावाच्चेद प्रवर्तते । अधिकृतस्यान्वित्यस्य फलमाह—अन्वित्यधिकारात् व्यङ्क्ता, व्यङ्क्तुमित्यत्र इति । विपूर्वादञ्जेस्तृच्तुम्प्रत्ययौ, तत "चज कगम्"िति गत्वे, प्रथमत्वेऽनेन वर्गान्त्य एव । यदत्राऽन्वित्यधिकारो न स्यात्तदाऽन्तरङ्गत्वात् प्रत्ययोत्पत्ते पूर्वमेव चवर्गान्त्यत्वे प्रत्यये सति तस्यैव भवनं स्यादित्याह—अन्यथा चवर्गान्त्यः स्यात् इति ॥ ३९ ॥

शिड्हेऽनुस्वारः । अत्रापदान्ते ञ्रां अनु इति चानुवर्तते, अपदान्ते ञ्रां शिड्हे अनुस्वारोऽनु इत्यन्वय । शिड्हे इति समाहार- द्वन्द्वात् सप्तमी । धुड्वर्गे इति नानुवर्तते निमित्तान्तरोपादानात्, तदर्थमाह—अपदान्ते इत्यादिना । पुंसि–पुम्स्शब्दस्य ङौ अनेनानु- स्वारे रूपम् । गंस्यते–गमेर्भावे कर्मणि वा स्यतेप्रत्यये, अनेनानुस्वार इत्यपदान्तमकारोदाहरणे । दंशः–'दंश' दशने, धातो घञि रूपम्, अत्रानेन नस्यानुस्वार । सुदंशि कुलानि–शोभना दिशो येषां कुलानामिति बहुव्रीहौ जसि "नपुंसकस्य शि" १।४।५५। इति शौ, "धुटां प्राक्" १।४।६६। इति नागमेऽनेनानुस्वार । वपूंषि, धनूंषि, यशांसि, पयांसि–वपुस्धनुस्यशस्पयस्शब्देभ्यो जसो "नपुंस- कस्य शि"रिति शौ, "धुटां प्रागि"ति नागमे, "न्स्महतो" १।४।८६। इति दीर्घत्वे, यथासंभवं षत्वेऽनेनानुस्वारे रूपाणि भवन्ति । स्वनड्वांहि कुलानि–शोभना अनड्वाहो येषु कुलेषु इति बहुव्रीहि, तस्माज्जसि "वा शेषे" १।४।८२। इति वादेशे पूर्ववत्प्रक्रिया । ञ्रामिति बहुवचना- न्तानुवृत्ते प्रयोजनमाह—ञ्रामिति इत्यादि । बहुवचनाद्–पञ्चम्या इति शेष । बृंहणम्–बृन्हेरनटि णत्वे च नकारस्यानेन "रपृवर्णात्०" इति णत्वं बाधित्वा अनुस्वार । दंश इत्यादौ–"तवर्गस्य०" इति नकारस्य प्राप्तं ञत्वं बाधित्वा अनुस्वार । एवं–पूर्वोक्तरीत्या । सर्पींषि– अत्र नागमस्य णत्वं बाधित्वा अनुस्वार । सुदंशि–अत्र "तवर्गस्य०"इति ञत्वं न भवति, एतत्सूत्रविहितानुस्वारबाधात् । गम्यते, हन्यते– अत्रापदान्तस्य मस्य शिड्हे परेऽभावान्नानेनानुस्वार । भवान्साधुः–पदान्तस्य नस्य सत्वान्नानुस्वार । अन्वित्यधिकारफलमाह—अन्वित्येव? पिण्ढि, शिण्ढि–'पिष्लृप्' सञ्चूर्णने, 'शिष्लृप्' विशेषणे इत्याभ्याम् धातुभ्याम् पञ्चम्यां हौ "रुधां स्वराच्छ्नो नलुक् च" ३।४।८२। इति श्न- प्रत्यये, "श्नास्त्योर्लुक्" ४।२।९०। इति श्नप्रत्ययाऽकारलोपे, पिन्ष् हि, शिन्ष् हि इत्यत्र "हु धुटो हेर्धि" ४।२।८३। इति धौ, "तृतीयस्तृतीय- चतुर्थे" इति षस्य डत्वे, "तवर्गस्य०"इति धस्य ढत्वे, "ञ्रां धुड्वर्गे०" इति णत्वे, "धुटो धुटि स्वे वा" इति डलोपे सिद्धम् । यद्यत्रान्विति न स्यात्तदा डकारात् पूर्वमेव शिट्परकत्वसम्भवेनापदान्तस्य श्नो नकारस्यानेनानुस्वार स्यात्तदधिकारसत्त्वे तु डकारानन्तरं परत्र शिडभावान्नानेनानु- स्वारस्तदाह—अत्र पिष्शिषोर्हौ इत्यादि ॥ ४० ॥

---

१ सुदंशि कु० ख० सा०, म० म०, माण्डा० ।  २ शिट इति° म० म० ।

## रो रे लुग् दीर्घश्चादिदुतः ॥ १ । ३ । ४१ ॥

अपदान्त इति नानुवर्तते, रेफस्य रेफे परे लुग् भवति; अकारेकारोकाराणां चानन्तराणां दीर्घो भवति । पुना रमते, प्राता रौति, अग्नी रथेन, नीरक्तम्, दूरक्तम्, पटू राजा; उच्चै रौति । अन्वित्येव ? अहोरूपम्—अत्र पूर्वमेव रोरुत्वे, रेफाभावाल्लुग्दीर्घाभावः सिद्धः ॥ ४१ ॥

## ढस्तड्ढे ॥ १ । ३ । ४२ ॥

तन्निमित्तो ढस्तड्ढः, ढकारस्य तड्ढे परेऽनु लुग् भवति; अकारेकारोकाराणां च[1] दीर्घो भवति । महतेः क्तौ माढिः, लीढम्, मीढम्, गूढम्, तड्ढ इति किम् ? मधुलिड् ढौकते—नायं लुप्यमानढकारनिमित्तो ढः, एव चकृड्ढ्वे, लुलुविड्ढ्वे इत्यादावपि ढकारस्य द्वित्वे सति ढकारयोर्निमित्तनिमित्तिभावो नास्तीति लुग् न भवति । अदिदुत इत्येव ? आतृढम्, आवृढम् । अन्वित्येव ? लेढा, मोढा—अत्र गुणे कृते, पश्चात् ढलोपः, अन्यथा हि पूर्वमेव ढलोपे दीर्घे च लीढा मूढेत्यनिष्टं रूपं स्यात् ॥ ४२ ॥

---

**रो रे लुग् दीर्घश्चादिदुत.** । रो रे लुक् च अदिदुत दीर्घ इत्यन्वय । अच इच उच इलेषा समाहारद्वन्द्वान्ङस् । नन्वत्रापदान्त इत्यनुवर्तेत तदा अजर्घा अपास्पा अचोकू अचाखा अचाका अपापा इत्यादिष्वेव सूत्र प्रवर्तेत न खाराज्यमित्यादौ इति चेत्, सत्य, सूत्रे अदिदुत इत्यत्र इद्ग्रहणात्तदननुवृत्ते । न हीकारात् परस्य रेफस्य रेफेऽपदान्ते सम्भवोऽस्ति यथा—अग्नी रथेन, नीरक्तम् इत्यादौ । अकारोकाराभ्या परस्य रेफस्य हि रेफेऽपदान्ते पदान्ते च सम्भव यथा—अजर्घा, अचोकू, पुना रमते, दूरक्तमित्यादौ । इत्थ च सर्वलक्ष्यपर्यालोचनया पदान्तेऽपदान्ते चाविशेषात् सूत्रप्रवृत्तिमभ्युपगम्याह—**अपदान्त इति नानुवर्त्तत** इति । अपि च सूत्रे भिन्नस्थानिनिमित्तकथनेनापि तदननुवृत्तिरेव बोध्या । ननु सूत्रे रो इत्यनेन सानुबन्धो निरनुबन्धो वा ? नाद्य, तथासति अग्नी रथेनेत्यादि सिद्धावपि पुना रमते इत्यादि न सिद्ध्येत्, न द्वितीय, तथासति पुना रमते इत्यादिसिद्धावपि अग्नी रथेनेत्यादि न सिद्ध्येत्, न च लक्ष्यानुरोधेन उभयपरिग्रह, तस्य सर्वत्र नियामकत्वेऽतिप्रसङ्गात् इति चेदत्र सूत्रे रोरिति सानुबन्धस्य रे इति निरनुबन्धस्य चैकप्रयत्नेनोभयमुच्चार्य निर्देशात् 'निरनुबन्धग्रहणे सामान्यग्रहणमि'ति न्यायाच्च सामान्येन ग्रहण भवतीत्याह—**रेफस्य** इत्यादि । **अदिदुत** इत्यस्यार्थमाह—**अकारेकारोकाराणां** इति । अथ अग्नी रथेनेत्यादौ व्यवहितस्याकारस्य दीर्घ कस्मान्न भवतीत्याशङ्कायामाह—**अनन्तराणा** इति । ननु सामान्यनिर्देशादनन्तराणामेवेति कुतो लभ्यते इति चेत्, उच्यते—रे इत्युपश्लेषसप्तमीनिर्देशात् लुगिव दीर्घोऽपि रेफोपश्लिष्टस्यैव भवतीति भाव । **पुना रमते**—पुनर् रमते इति स्थिते, रेफस्य रेफे परेऽनेन लोपे पूर्वाकारस्य च दीर्घे सिध्यति । एवमन्यत्र । **अहोरूपम्**—अत्र अहन् रूपम् इति स्थिते नकारस्य "अह्न" २।१।७४। इति रत्वे, "घोषवति" "रो रे लुक्०" इति सूत्रद्वयप्रसङ्गे परत्वात् "रो रे लुग् दीर्घश्चा०" इति रेफस्य लोपो दीर्घश्च प्राप्नोतीत्याह—**अन्वित्येव ? अहोरूपम्** इत्यादि । अन्वित्यधिकारात्तु पूर्वमेवोत्वे रेफाभावान्नास्य प्रवृत्तिस्तदाह—**अत्र पूर्वमेव** इत्यादि ॥ ४१ ॥

**ढस्तड्ढे** । अत्र अनु लुग् दीर्घश्चादिदुत इति चानुवर्तते, ढ तड्ढे अनु लुक् च अदिदुत दीर्घ इत्यन्वय । **तड्ढे**—"तवर्गस्य०"इति टवर्गयोगे दस्य ढ, तस्य—लुप्यमानढकारस्य कार्यत्वेन ढस्तड्ढस्तस्मिन्निति समासस्तदाह—**तन्निमित्तो ढस्तड्ढ** इति । अत्र ढ इति वर्णमात्र निमित्तत्वेनाश्रीयते, अकारस्तु मुखसुखार्थं, अन्यथाकारविशिष्टे यत्र ढकारस्तत्रैव सूत्र प्रवर्तेत । सूत्रार्थमाह—**ढकारस्य** इत्यादिना । **माढिः**—'महण्' पूजाया, धातो क्तौ "तेर्ग्रहादिभ्य" ४।४।३३। इति नियमादिडभावे, "हो धुट्पदान्ते" २।१।८२। इति हस्य ढत्वे, "अधश्चतुर्थात्तथोर्ध" २।१।७९। इति तस्य धत्वे, "तवर्गस्य०" इति धस्य ढत्वेऽनेन प्रकृतिढस्य लोपे दीर्घत्वे च सिद्ध्यति । **लीढम्, मीढम्, गूढम्**—'लिहींक्' आस्वादने, 'मिह'सेचने, 'गुहौग्' संवरणे इत्येभ्य क्ते पूर्ववत् ढत्वादौ भवन्ति । **मधुलिड्ढौकते**—मधु लेढीति विग्रहे क्विप्, मधुलिह् इति स्थिते से"दीर्घङ्याब्व्यञ्जनात्०" इति लुकि, "हो धुट्०"इति ढत्व, 'ढौकृङ्' गतौ, तेप्रत्यये शवि च—**ढौकते**, मधुलिड् ढौकते इति स्थिते नाय ढकारस्तन्निमित्त इति लोपदीर्घौ न भवत । अत्र सूत्रे यदि तड्ढे इति निमित्तमनुपादाय ढे इति ढकारमात्रस्य निमित्तत्वे तृतीय बाधित्वा विशेषविहितत्वेनापवादत्वादत्रापि तौ स्यातामित्याह—**नायं लुप्यमान** इत्यादिना । लुप्यमानो ढकारो निमित्त यस्य स तथोक्तो ढ इत्यर्थ । **एवं**—पूर्ववत् । **चकृड्ढ्वे, लुलुविड्ढ्वे**—करोते 'लूग्' छेदने च धातो परोक्षायां ध्वेप्रत्यये "द्विर्धातु परोक्षाङे प्राक्तु स्वरे स्वरविधे" ४।१।१। इति द्वित्वे, "ऋतोऽत्" ४।१।३८। इति अत्वे, "कङश्चञ्" ४।१।४६। इति चत्वे, "नाम्यन्तात्०" २।१।८०। इति ढत्वे, "अधीर्घात्०" १।३।३२। इति तस्य द्वित्वे, तन्निमित्तत्वाभावाल्लुगभावे "तृतीयस्तृतीयचतुर्थे" इति तृतीयत्वे—चकृड्ढ्वे भवति । एव लुलुवे इटि ढत्वे उवादेशे च सति तृतीय—लुलुविड्ढ्वे इति भवति । एतदेवाह—**चकृड्ढ्वे, लुलुविड्ढ्वे इत्यादावपि** इत्यादिना । **आतृढम्, आवृढम्**—आङ्पूर्वात् तृहेर्वृहेश्च क्ते "हो धुट्०"इति ढत्वे, "अधश्चतुर्थात्०" इति तस्य धत्वे, "तवर्गस्य०" इति ढत्वे, "ढस्तड्ढे" इति लोपे—आतृढम्, आवृढमिति रूपे, अत्रानन्तराणामकारेकारोकाराणामभावान्न दीर्घ । **लेढा, मोढा**—लिहेर्मुहेश्च तृचि ढत्वादौ यद्यप्यापाततोऽन्वित्यभावे परत्वात् गुणो ढलोप बाधित्वा प्राप्नोति तथापि ढलोपस्यास्थितत्वेनान्तरङ्गत्वाद्गुणादपि पूर्वं प्रवृत्तेरित्यन्वित्यधिकार । नच वाच्य "हो धुट्०"इति विहितढत्वस्यासत्वात् ढलोपस्याप्यसत्वेन गुणो भविष्यति इति, 'वार्णोविधि' इति न्यायेनान्तरङ्गे ढत्वे विधेयेऽवार्णविधेर्गुणस्य बहिरङ्गत्वेनासिद्धत्वादितीद कार्यासत्वपक्षाभिप्रायेणोक्तम् । शास्त्रासत्वपक्षे तु गुणे कृते ढत्व भवति । अन्वित्यधिकारस्य फलमाह—अत्र—लिह् ता, मुह् ता इत्यत्र, **गुणे कृते**—लेह्ता, मोह्ता इति जाते सति, **ढलोपः**—अनेनेति शेष । **अन्यथा**—अन्वित्यधिकाराभावे, **पूर्वमेव**—गुणादिति शेष । **ढलोपे, दीर्घे च**—अनेनेति शेष । तस्मिन्सति किं स्यादित्याह—**लीढा, मूढेत्यनिष्टं रूपं स्यादिति** ॥ ४२ ॥

---

[1] °चानन्तराणां दी° पु० ।

## सहिवहेरोच्चावर्णस्य ॥ १ । ३ । ४३ ॥

सहि वहि इत्येतयोर्ढस्य तद्धे परेऽनु लुग् भवति, अवर्णस्य च ओकारो भवति । सोढा, वोढा; उदवोढाम् । अवर्णस्येति किम्? ऊढः ॥ ४३ ॥

## उदः स्थास्तम्भः सः ॥ १ । ३ । ४४ ॥

उदः परयोः स्थास्तम्भ इत्येतयोः सकारस्य लुग् भवति । उत्थाता, उत्थातुम्, उत्तम्भिता; उत्तम्भितुम् । उद इति किम्? संस्थाता, संस्तम्भिता । स्थास्तम्भ इति किम्? उत्स्नोता, उत्स्कन्नः । स इति किम्? उत्तिष्ठति, उदस्थात्, उदस्तभत्; उत्तिस्तम्भिषति । प्रत्यासत्तेः स्थास्तम्भविशेषणस्यैवोदो ग्रहणादिह न भवति ऊर्ध्वं स्थानमस्योत्स्थानः । कथमुत्स्कन्दतीति उत्कन्दको रोग इति पृषोदरादित्वात् भविष्यति ॥ ४४ ॥

## तदः सेः स्वरे पादार्था ॥ १ । ३ । ४५ ॥

तदः परस्य सेः स्वरे परे लुग् भवति, सा चेत् पादार्था–पादपूरणी भवति । सैष दाशरथी रामः, सैष राजा युधिष्ठिरः, सौषधीरनुरुध्यते । पादार्थेति किम्? स एष भरतो राजा ॥ ४५ ॥

---

**सहिवहेरोच्चावर्णस्य ।** अत्र ढ तद्धे लुक् अनु इति चानुवर्तते, सहिवहे ढ तद्धे अनु लुक् च अवर्णस्य ओत् इत्यन्वयस्तदर्थमाह—**सहिवहि इत्येतयोः** इत्यादिना । **सोढा, वोढा**–सहिवहिभ्यां तृचि ताप्रत्यये वा ढत्वादौ कृते सढ् ढा, वढ् ढा इति स्थितेऽनेन लोपे कृतेऽवर्णस्यौकार । **उदवोढाम्**–उत्पूर्वाद्वहेर्ह्यस्तन्यास्ताम्मि "छिजद्यतन्याम्" ३।४।५३। इति सिचि, "धुड्ह्स्वाल्लुगनिटस्तथो" ४।३।७०। इति तल्लुपि, "व्यञ्जनानामनिटि" ४।३।४५। इति वृद्धौ, अनेन ढलोपेऽवर्णस्य ओत्वे च उदवोढामिति भवति । **ऊढः**–वहे के यवृति च अवर्णत्वाभावान्नानेनौत्वम्, किन्तु पूर्वेण ढलोपो दीर्घश्च ॥ ४३ ॥

**उदः स्थास्तम्भः सः ।** अत्र लुक् इत्यनुवर्तते, उद. स्थास्तम्भ सः लुक् इत्यन्वय । **उद** इति पञ्चमी, **स्थास्तम्भ** इति समाहारद्वन्द्वात् षष्ठी इति तदर्थमाह—**उदः परयोः** इत्यादिना । **उत्थाता, उत्थातुम्**–उत्पूर्वात्तिष्ठते तृच्तुम्प्रत्ययौ अनेन सलोपे "अघोषे०" इति प्रथमत्वे भवत । **उत्तम्भिता, उत्तम्भितुम्**–उत्पूर्वात् स्तम्भे सौत्रात्तृचि तुमि वाऽनेन सलोपे इडागमे "म्नामि"ति नस्य मत्वे च सिद्ध्यत । **संस्थाता, संस्तम्भिता**–संपूर्वाभ्या तृचि भवत , उद परत्वाभावान्नानेन सकारलुक् । **उत्स्नोता**–उत्पूर्वात् स्नौते तृचि गुणे प्रथमे च रूपम्, अत्र स्थास्तम्भोऽभावात् सलोपो न भवति । **उत्स्कन्नः**–उदः स्कन्दे के "रदादमूर्च्छमद क्तयोर्दस्य च" ४।२।६९। इत्युभयत्र नत्वे उत्स्कन्न इति भवति, स्थास्तम्भोऽभावाच्च सलोप । **उत्तिष्ठति**–उत्पूर्वात्तिष्ठतेस्तिवि शवि तिष्ठादेशश्चात्र सकाराभावादेव प्रवर्तते । **उदस्थात्**–उत्पूर्वात् ष्ठाधातोर्ह्यस्तन्या दिप्रत्यये सिज्लुबादौ उदस्थादत्र सकारलोप कस्मान्न भवति? अडिन प्रत्ययस्य व्यवधायकत्वाभावेऽपि अत्र प्रत्ययस्य व्यवधायकत्वस्य सर्वजनविदितत्वात् । एतच्च व्यवधायकत्वमावृत्तिव्याख्याने भवति । आवृत्तिव्याख्यानस्येद तात्पर्यम्–उद इति आवृत्त्या स्थास्तम्भ स इति चोभयत्र सम्बध्यते, तथा चायमर्थ –उद परयो स्थास्तम्भ इत्येतयो सकारस्य लुक् इत्येक, उद परस्यैव सस्येत्यपर इति । ननूदस्थादित्यत्राडागमात् पूर्वं कथ न सलोप ? इति चेदन्तिसधिकारात् । **उदस्तम्भत्**–उत्पूर्वात् स्तम्भेर्दिप्रत्यये "ऋदिच्छ्विस्तम्भू०" ३।४।६५। इत्यङि, नलोपेऽडागमे सिध्यति । **उत्तिस्तम्भिषति**–उत्तम्भितुमिच्छतीत्यर्थे सनि द्विर्वचनादौ च सति सिध्यति । ननु उत्स्थान इत्यत्र उद परत्र स्थाधातोर्विद्यमानत्वात् कुतो न सलोप इत्यत आह—**प्रत्यासत्तेरि**ति । प्रत्यासत्तिन्यायादित्यर्थ । **स्थास्तम्भविशेषणस्य**–स्थास्तम्भयोर्विशेषण तस्यैव उद इत्यन्वय , **ग्रहणादिह**–अस्मिन्सूत्रे इत्यर्थ , **न भवति**–सलोप इति शेष । ननु उत्स्थान इत्यत्र कुतो ज्ञायते उद इत्यविशेषण स्थाधातोरिति विग्रहोपदर्शनपूर्वक तत्स्थल दर्शयति—**ऊर्ध्वं स्थानमस्योत्स्थान** इति । अत्र स्थानस्य विशेषण उदिति, न तु तिष्ठतेरिति भाव । उद स्कन्दे रोगे इति वक्तव्यम्–उद परस्य स्कन्दे सकारस्य लोपो भवति, कथमन्यथा उत्कन्दको रोग इति सिध्यतीति पृच्छति–**कथमुत्स्कन्दतीति** इत्यादिना । समाधत्ते—**पृषोदरादित्वात्** इत्यादि ॥ ४४ ॥

**तद. से. स्वरे पादार्था ।** अत्र लुक् इत्यनुवर्तते, तद से स्वरे लुक् सा चेत्पादार्था इत्यन्वय । परशब्दाध्याहारात् तद इति पञ्चमी च तद इत्यनेन तदादेशस्य सस्य ग्रहणम्, अन्यथा व्यञ्जनात् सिलोप सिद्ध एव । एतच्च पादार्थेति ग्रहणाल्लभ्यते, अन्यथा तदेव पादस्य पूरितत्वात्स्यर्थमिदमिति । अनुकरणत्वात्पदार्थत्वाभाव । 'शब्दार्थानुकरणे हि प्रकृतिवदनुकरणमिति' न्याय प्रवर्तते, शब्दानुकरणे तु नेति कथमिदमिति चेत्, "तद से स्वरे०" इति सूत्रसूत्रणात् । **पादार्था**–पादाय इय पादोऽर्थो यस्यामिति वा विग्रह । पादो नाम नियतवर्णमात्रावयवपिण्ड । लुकैव यदि पाद पूर्येत, यत्र लुच्यलुचि पादपूरणमवशिष्ट तत्र लोपाभावो यथा–सोऽयमित्यभिसबन्धे प्रत्यभिज्ञोपजायते, अत्र लुच्यपि पादपूरण भवति यथा–सायमित्यभिसबन्धे इत्यादि । **सैष दाशरथी राम.**—अत्र तद सकारात् परस्य से रुत्वे प्राप्तेऽनेन लुच्येकादेशे ऐकार , अन्यथा से "रोर्ये" इति यत्वे तल्लुकि सन्धिप्रतिषेधादेत्वाभावादष्टाक्षररूपपादपूरणाभाव । सैष भीमो महाबल, सैष कर्णो महात्यागी, **सैष राजा युधिष्ठिरः** इति सम्पूर्णं वृत्तम् । **पादार्थेति किम्? स एष भरतो राजा**–अत्र हि सिलोपे सन्धिसद्भावे सप्ताक्षरभावात् पादाभावे लुगभाव । सूत्रमिद 'विशेषेण सामान्य बाधते न सामान्येन विशेष' इति न्यायात् "रोर्ये" इति सामान्यस्वरनिमित्तसूत्रविषये "सो रु" इत्यस्य बाधक, न, पुन स्वरविशेषनिमित्तस्य "अतोऽति रोरु" इत्यस्य विषये "सो रु" इत्यस्य, तेन 'सोऽह तथापि तव भक्ति०' इति भीमभारतस्थप्रयोगो व्याख्यात ॥ ४५ ॥

## एतदश्च व्यञ्जनेऽनग्नञ्समासे ॥ १ । ३ । ४६ ॥

एतदस्तदश्च परस्य सेर्व्यञ्जने परे लुग् भवति, अकि नञ्समासे च सति न भवति । एष ददाति, स ददाति, परमैष करोति; परमस ददाति । एतदश्चेति किम्? को दाता, यो धन्यः । सेरित्येव? एतौ गच्छतः, तौ तिष्ठतः । अनुबन्धग्रहणादिह न भवति–एतेषु चरति, तेषु याति । अनग्नञ्समास इति किम्? एषकः करोति, सको याति–'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति साकोऽपि प्राप्तिरिति प्रतिषेधः; अनेषो गच्छति, असो याति । व्यञ्जन इति किम्? एषोऽत्र, सोऽत्र ॥४६॥

## व्यञ्जनात् पञ्चमान्तस्थायाः सरूपे वा ॥ १ । ३ । ४७ ॥

व्यञ्जनात् परस्य पञ्चमस्यान्तस्थायाश्च सरूपे वर्णे परे लुग् वा भवति । कुञ्चो ङ्कौ–कुङ्ङौ, कुङ्ङ्ङौ; अदितेरयमादित्यः स देवता अस्य आदित्यः स्थालीपाकः आदित्य्य इति वा । व्यञ्जनादिति किम्? अन्नम्, भिन्नम् । सरूप इति किम्? वर्ण्यते, पिन्यम् । केचित्तु पञ्चमान्तस्थायाः पञ्चमान्तस्थामात्रे लोपमिच्छन्ति, न तु सरूप एव; तन्मते–चम्यते, वम्यते; मम्यते, मम्यते इत्यादावपि भवति । अपरे तु अभ्रवभ्रमभ्राणां त्रयाणां धातूनां धुटि रेफलोपं नित्यमिच्छन्ति–अभ्रतः "तिकृतौ नाम्नि" ॥ ५ । १ । ७१ ॥ इति तिकि अब्धिः, वभ्रमभ्रोर्यङ्लुपि वावब्धिः, मामब्धिः; सिद्धान्ते तु अभ्रिः, वावभ्रिः, मामभ्रिः ॥ ४७ ॥

---

**एतदश्च व्यञ्जनेऽनग्नञ्समासे ।** अत्र से लुक् इति चानुवर्त्तते । एतदश्च इति चकारेण पूर्वसूत्रस्थ तद इति समुच्चीयते । नञ समासो नञ्समास अक् च नञ्समासश्च अग्नञ्समास, न अग्नञ्समास अनग्नञ्समासस्तस्मिन्निति विग्रह । एतद तदश्च से. व्यञ्जने लुक् अनग्नञ्समासे इत्यन्वयस्तदर्थमाह–**एतदस्तदश्च** इत्यादिना । अनग्नञ्समासे इत्यत्र नञो भवतिक्रियया सबन्ध दर्शयन् प्रसज्यप्रतिषेधार्थकत्व सूचयति–**अकि नञ्समासे च सति न भवतीति** । पर्युदासे हि सति 'नञ्युक्त तत्सदृशे' इति न्यायेन नञ्समासादन्यत्रापि समास एव वर्त्तमानाभ्यामेतत्तच्छब्दाभ्यां सिलोप स्यात् । अपि च अनग्नञ्समासे इत्यनेन तदन्तविधि 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायश्च ज्ञाप्यते, अन्यथाऽकृविशिष्टस्यैतत्तच्छब्दाभावान्नञ्समासापन्नस्य च प्राप्त्यभावेऽनेन तन्निषेधासम्भवात्, तस्य च प्राप्तिपूर्वकत्वात्, तेन परमस ददाति इत्यादौ तदन्तादपि सेर्लुक्, असो यातीत्यादौ तन्निषेधश्च प्राप्तिपूर्वक, केवलस्यैतद तदश्चाद्यन्तवद्भावेन सेर्लुक्, न्यायज्ञापनेन सको याति इत्यादौ प्राप्तिपूर्वकत्व निषेधस्य सूपपन्नम् । ननु प्रसज्यप्रतिषेधार्थकनञो ग्रहणे वाक्यभेद इति चेदस्तु पर्युदास, तथासति नञ्समाससदृशस्योत्तरपदार्थप्राधान्यस्य समासान्तरस्य ग्रहणात् परमैष ददाति इत्यत्र भविष्यति, अकोऽसमासरूपस्य प्रतिषेधात् केवलस्यापि भविष्यति–स ददाति इत्यादौ, इत्यश्च प्रसज्याश्रितवाक्यभेददोषोऽपि परिहृतो भवति । **एष ददाति, स ददाति**–एतत्तद्भ्या सौ त्यदाद्यत्वे अनेन व्यञ्जने सेर्लुक् । **परमैष करोति**–परमश्चासौ एषश्चेति विग्रह । **को दाता, यो धन्यः**–अत्र न विलुग्, एततद परत्वाभावात् । **एतौ गच्छत., तौ तिष्ठतः**–अत्र एतत्तच्छब्दाभ्या परस्य सेरभावान्न लुक् । सेरिति सानुबन्धोपादान कथमित्यत आह–**अनुबन्धग्रहणात्**–सेरित्यत्र इति शेष । अय भाव –व्यञ्जन इति विषयसप्तम्यामपि सेरिति इदनुबन्धग्रहणात् अन्यानुबन्धसमुदायस्य लोपाभाव –**एतेषु चरतीत्यादौ** । अथात्र परत्वादेत्वे षत्वे च कृते सकारस्याभावाल्लोपो न भविष्यतीति चेत्, उच्यते–विशेषविहितत्वादेत्वषत्वाभ्या पूर्वमेव लोप स्यादिति, किंच एतत्स्कुभ्नातीत्यादावपि स्यात् । **एषकः करोति, सको याति**–एतत्तद्भ्या कुत्सितादावकि अनेन निषेधात् न सेर्लुक् । निषेधस्य प्राप्तिपूर्वकत्व प्रागुपदर्शित, तदाह–**'तन्मध्यपतितस्त०'** इत्यादिना । **अनेषो गच्छति**–न एष अनेष "अन् स्वरे" ३।२।१२९। इत्यनादेश । **असो याति**–न स अस "नञत्" ३।२।१२५। इत्यकार, अत्र न सेर्लुक्, नञ्समासे निषेधात्, समासग्रहणाद्वाक्ये प्रतिषेधो न भवतीति भाव । **एषोऽत्रे**त्यादौ व्यञ्जनपरकत्वाभावान्न सेर्लुक् ॥ ४६ ॥

**व्यञ्जनात् पञ्चमान्तस्थायाः सरूपे वा ।** अत्र लुक् इत्यनुवर्त्तते, व्यञ्जनात् पञ्चमान्तस्थाया सरूपे लुक् वा इत्यन्वय । **पञ्चमान्तस्थाया.**–समाहारद्वन्द्वात् षष्ठी, सूत्रकृन्निर्देशबलात् ह्रस्वाभाव । **सरूपे**–समान रूप यस्य तस्मिन्निति बहुव्रीहि, "समानस्य धर्मादिषु" ३।२।१४९। इति समानशब्दस्य सादेश । सूत्रान्वयार्थमाह–**व्यञ्जनात् परस्य** इत्यादिना । ङ्च ङ्च ङ्कौ ततस्तत्पुरुषमाह–**कुञ्चो ङ्कौ, कुङ्ङौ**–अत्र त्रयो ङकारा मध्यमस्यानेन विकल्पेन लुक्, पक्षे–**कुङ्ङ्ङौ** । **अदितेरयमादित्य.**–अत्र "अनिदम्यणपवादे च०" ६।१।१५। इति ञ्ये, "वृद्धि स्वरेष्वादेर्ञ्णि०" ७।४।१। इति वृद्धौ, "अवर्णेवर्णस्य" ७।४।६८। इतीकारलोपे रूपम्, तत आदित्यो देवता अस्येति विग्रहे पुनर्ञ्ये, अकारलोपे लुक उभिविधित्वात् स्थानिवद्भावप्रतिषेधेऽनेन पक्षे यलोपे–**आदित्यः**, लुगभावपक्षे–**आदित्य्यः**, तदाह–**स देवता अस्य** इत्यादिना । **अन्नम्, भिन्नम्**–अत्र सरूपे वर्णे परे व्यञ्जनात् परत्वाभावान्न नकारस्य लुक् । **वर्ण्यते, पिन्यम्**–व्यञ्जनात् परस्य पञ्चमस्य अन्तस्थायाश्च सरूपनिमित्ताभावाल्लोपाभाव । मतान्तरमाह–**केचित्तु** इत्यादिना । केचित्तु–चान्द्रप्रभृतय । केषाञ्चित् "यमामि"ति पाठस्तेषा वचनभेदाद्यथासख्य नास्तीत्याशय इत्युवाच शाकटायन "हलो यमि यमो वा" शा० १।१।१२२। इति सूत्रे, उदाहरति–**तन्मते** इत्यादिना । **चम्यते, वम्यते, मम्यते, मम्यते** इति । 'वभ्र', 'मभ्र' गत्याधाभ्या तेप्रत्यये, क्ये, पक्षे रलोपे रूपाणि भवन्ति । पुनर्मतान्तरं दर्शयति–**अपरे तु** इत्यादिना । अपरे–शाकटायनादय, वभ्रादीना त्रयाणा झलि रलोप केचिदिच्छन्तीति अमोघावृत्तौ तद्व्याख्यातारः । पाणिनीये न्यासे तु "हलो यमां यमि लोप" पा० ८।४।६४। इत्येव पाठ, वचनभेदेऽपि यथासख्यसूत्र प्रवर्त्तत इति तट्टीकाकृत । **अब्धिः**–'अभ्र'धातो कौ रलोपे धत्वे तृतीय । **वावब्धिः, मामब्धिः**–वभ्रमभ्रो"र्गत्यर्थात् कुटिले" ३।४।११। इति यङि, तल्लुपि, द्वित्वादौ, तिवि, रलोपे "अधश्चतुर्था०"इति धत्वे, "तृतीयस्तृतीय०"इति तृतीयत्वे सिद्ध्यत । सिद्धान्त दर्शयति–**सिद्धान्ते तु** इति । स्वमत इत्यर्थ । अभ्रवभ्रमभ्राणा स्वमत उदाहरणान्याह–**अभ्रिः, वावभ्रिः, मामभ्रिः**–एषु व्यञ्जनात् परस्यान्तस्थाया रस्य सरूपनिमित्ताभावान्न लुक् ॥ ४७ ॥

## धुटो धुटि स्वे वा ॥ १ । ३ । ४८ ॥

व्यञ्जनात् परस्य धुटो धुटि स्वे परे लुग् वा भवति । प्रत्तम्, प्रत्त्तम्; अवत्तम्, अवत्त्तम्—अत्र त्रयस्तकारा मध्यमस्य वा लोपः, शिण्ढि, शिण्ड्ढि; पिण्ढि, पिण्ड्ढि; भिन्थः, भिन्त्थः । धुट इति किम् ? शार्ङ्गम्, भार्ङ्गम् । धुटीति किम् ? सक्थ्ना, सक्थ्ने । स्व इति किम् ? तर्प्ता, दर्प्ता । व्यञ्जनादित्येव ? वोढा, योद्धा ॥ ४८ ॥

## तृतीयस्तृतीयचतुर्थे ॥ १ । ३ । ४९ ॥

धुटः स्थाने तृतीये चतुर्थे च परे स्थानिप्रत्यासन्नस्तृतीयो भवति । मज्जति, भृज्जति, दोग्धा, दोग्धुम्, पिण्ड्ढि, शिण्ड्ढि; योद्धा, योद्धुम्; लब्धा, लब्धुम् । तृतीयचतुर्थे इति किम् ? लिख्यते । धुट इत्येव ? वल्मते । पदान्ते "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ इति अपदान्तार्थं वचनम् ॥ ४९ ॥

## अघोषे प्रथमोऽशिटः ॥ १ । ३ । ५० ॥

शिड्वर्जितस्य धुटः स्थानेऽघोषे परे प्रथमो भवति । वाक्पूता, देवच्छत्रम्, षट् कुर्वन्ति, दृषत्कल्पः, ककुप्सु, भेत्ता; लप्स्यते । अघोष इति किम् ? मज्यते, भिद्यते । धुट इत्येव ? भवान् खनति, कण्ठः, कन्था । अशिट इति किम् ? श्च्योतति, कष्टीकते; पयस्सु ॥ ५० ॥

---

**धुटो धुटि स्वे वा ।** अत्र व्यञ्जनात् लुक् इति चानुवर्त्तते, व्यञ्जनात् धुट धुटि स्वे लुग् वा इत्यन्वयस्तदर्थमाह—**व्यञ्जनात् परस्य** इत्यादिना । **प्रत्तम्, अवत्तम्**-प्रपूर्वादवपूर्वाच्च ददाते "प्रादागस्त आरम्भे क्ते" ४।४।७, "निविस्वन्ववात्" ४।४।८। इति च तादेशेऽत्र त्रयस्तकारास्ततोऽनेन पक्षे मध्यमस्य लोप , पक्षे—**प्रत्त्तम् , अवत्त्तम् । शिण्ढि, पिण्ढि**-शिष्पिषो पञ्चम्यां हौ, "रुधां स्वरादि०" इति श्नप्रत्यये, "श्नास्त्योर्लुगि"त्यकारलोपे, "हुधुटो हेर्धि" इति धौ, "तृतीयस्तृतीय०" इति तृतीयत्वे, "तवर्गस्य०" इति डत्वे, "म्नां धुड्वर्गे०" इति णत्वेऽनेन पक्षे डलोपे सिद्ध्यत , पक्षे—**शिण्ड्ढि, पिण्ड्ढि । भिन्थः**-भिदेस्थसि श्नप्रत्ययादौ "अघोषे प्रथमो०" इति प्रथमत्वे, पक्षेऽनेन धुटो लोपे सिध्यति, पक्षे-**भिन्त्थः । शार्ङ्गम् , भार्ङ्गम्**-अत्र व्यञ्जनात् परस्य कस्य धुट्त्वाभावाल्लोपो न भवति । **सक्थ्ना, सक्थ्ने**-सक्थिशब्दात्तृतीयैकवचने चतुर्थ्येकवचने च "दध्यस्थि०" १।४।६३। इत्यन्तस्यानि, "अनोऽस्य" २।१।१०८। इत्यकारलोपे, धुट्परत्वाभावात् थस्य लोपो न भवति । **तर्प्ता, दर्प्ता**-तृपेर्दृपेश्च धातोस्तृचि ताप्रत्यये वा रूपे, यद्यत्र स्वे इति न स्यात्तर्हि अत्रापि पकारस्य लुक्प्रसङ्ग स्यात् । नन्वत्र स्थानिनिमित्तयो समसङ्ख्यावचनत्वात् यथासङ्ख्यप्रतिपत्तौ पकारस्य पकारे एव लोपो विज्ञायेत इत्यत्र प्रसङ्ग एव नास्तीति किमेतन्निवृत्त्यर्थेन स्वे इति ग्रहणेन ? इति चेदुच्यते—स्वग्रहणादिह यथासङ्ख्य नास्तीति विज्ञायते, अत एव शिण्ढीत्यादौ णकाराद्व्यञ्जनात् परस्य डकारस्य ढकारे लुगुदाहृतेति भाव । **वोढा, योद्धा**-'बुधिंच्' ज्ञाने, 'युधिंच्' संप्रहारे आभ्यां तृचि, धत्वे, तृतीयत्वे व्यञ्जनात् परत्वाभावात् दस्यानेन न लुक् ॥ ४८ ॥

**तृतीयस्तृतीयचतुर्थे ।** अत्र धुट इति अनुवर्त्तते, धुट तृतीय तृतीयचतुर्थे इत्यन्वय । पूर्वसूत्रादत्र स्थान्येवानुवर्त्तते, न कार्यनिमित्ते । अथ पृथक् निमित्तत्वेनोपस्थानान्निमित्तानुवृत्ति कथ नेष्यते ? इति चेत्, "तृतीयस्तृतीयचतुर्थे" इत्यत्र निमित्तान्तरस्य प्रधानस्यानवकाशस्य बाधकत्वात् । तथा च तत्र तत्र प्रकृतानुप्रकर्षणाय चकारस्य क्रियमाणत्वं यथा "मो नो म्वोश्च" २।१।६७। इत्यादौ, इह तु तदकरणात् प्रकृते तदननुवृत्तिरेव इत्याह—**धुट** इत्यादिना । **मज्जति, भृज्जति**-'टुमस्जोंत्' शुद्धौ, 'भ्रस्जींत्' पाके आभ्यां "सस्य शषौ" १।३।६१। इति कृतशकाराभ्यां तिवि, शेऽनेन शस्य स्थान्यासन्नो जकार । **दोग्धा, दोग्धुम्**-एव 'दुहींक्' क्षरणे, धातोस्तृचि, तुमि, चोपान्त्यगुणे "भ्वादेर्दादेर्घ" २।१।८३। इति हस्य घे, "अधश्चतुर्थात्तथोर्ध" २।१।७९। इति तकारस्य धकारेऽनेन तृतीयो गकार । **पिण्ड्ढि, शिण्ड्ढि**-अत्रानेन तृतीयो डकार , शेष पूर्ववत् । **योद्धा, योद्धुम्**-अत्रानेन तृतीयो दकार । **लब्धा, लब्धुम्**-अत्रानेन तृतीयो बकार । **लिख्यते**-'लिखत्' अक्षरविन्यासे, धातोस्तेप्रत्यये "क्य शिती"ति क्ये, तृतीयादिनिमित्ताभावात् खस्य धुट्त्वेऽपि तृतीयो गो न भवति । **वल्मते**-'वल्भि' भोजने, धातोस्तेप्रत्यये, शवि, निमित्तसद्भावेऽपि लकारस्य धुट्त्वाभावात्तृतीयाभाव । अथ "धुटस्तृतीय" इत्यनेन तृतीयचतुर्थयोर्निमित्तयोस्तृतीयस्य सिद्धत्वात् किमर्थमिदमित्याह—**पदान्ते "धुटस्तृतीय."** इत्यादिना ॥ ४९ ॥

**अघोषे प्रथमोऽशिट. ।** अत्र धुट इत्यनुवर्तते, तत्र अशिट इति विशेषणतया सबध्यते, अशिटो धुट अघोषे प्रथम इत्यन्वयस्तदर्थमाह—**शिड्वर्जितस्य** इत्यादिना । **वाक्पूता**-वाचा पूता इति समासोऽसमासो वा, अत्रानेन प्रथम ककार । **देवच्छत्रम्**-देव छत्रम् इति स्थिते "स्वरेभ्य" इति द्वित्वे, पूर्वस्यानेन प्रथम । **षट् कुर्वन्ति**-षडिति पूर्ववत्साध्यम्, तत ककारेऽघोषे परेऽनेन प्रथम । **दृषत्कल्प.**-ईषदसमाप्ता दृषदित्यर्थ ,"अतमबादेरीषदसमाप्ते कल्पप्देश्यप्देशीयर्" ७।३।११। इति कल्पपि दृषद् कल्प इति स्थितेऽनेन ककारेऽघोषे तकार । **ककुप्सु**-ककुभ् सु इति स्थिते अनेन भकारस्य पकार । **भेत्ता**-भिदेस्तृजादौ दकारस्यानेन तकार । **लप्स्यते**-लभे स्यतेप्रत्यये भकारस्यानेन पकार । **भज्यते, भिद्यते**-भजेर्भिदेश्च तेप्रत्यये क्येऽघोषाभावात् प्रथमत्वाभाव । **भवान् खनति**-अत्र नस्य धुट्त्वाभावादघोषेऽपि परे प्रथमत्वाभाव । **कण्ठः, कन्था**-पूर्ववत् णनयो प्रथमो न धुडभावात् । **श्च्योततीत्यादि** पूर्ववत्, अत्र शषसां धुट्त्वेऽपि अशिट इत्युक्त्या अघोषे प्रथमो न भवति । यद्यपि पयस्सु इत्यत्र "शषसे शषस वा" इत्यनेन सविधानात् प्रथमत्वाप्राप्त्या अशिट इति व्यर्थं तथापि तदभावे श्च्योतति **कष्टीकते** इत्यादावनेन चटौ प्रामुत , एवमेव अस्ति, आस्ते इत्यादिषु तकारश्च, वृक्ष पुरुष इत्यादौ कस्यादिरिति "कादि०" इति व्याख्यया विसर्गस्यापि "अपञ्चमान्तस्थो०" इति धुट्त्वादवर्णहविसर्गकवर्गत्वेन कण्ठ्य ककार स्यात्तन्मा भूदित्यशिट इति ॥ ५० ॥

१ धुटं म० म० । २ दृप्ता म० म० ।

## विरामे वा ॥ १ । ३ । ५१ ॥

विरामे वर्तमानस्याशिटो धुटः स्थाने प्रथमो वा भवति । वाक्, वाग्; पट्, पड्; तत्, तद्; ककुप्, ककुब् । विराम इति किम्? वागत्र । धुट इत्येव? क्रुङ्, सुगण्, भवान्, त्वम् ॥ ५१ ॥

## न संधिः ॥ १ । ३ । ५२ ॥

उक्तो वक्ष्यमाणश्च विरामे सन्धिर्न भवति । दधि अत्र, ते आहुः, तत् लुनाति, भवान् लुनाति, कुर्वन् शेते, वृक्षस्य छाया, ब्राह्मणस्य छत्रम्, भवान् छादयति, नॄन् पाहि, कुण्डम् हसति, वृक्षव् याति, कुर्वन् आस्ते । विरामादन्यत्र तु संहितायां सन्धिरेव सा च-"संहितैकपदे नित्या, नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु, सा विवक्षामपेक्षते" ॥ ५२ ॥

## रः पदान्ते विसर्गस्तयोः ॥ १ । ३ । ५३ ॥

पदान्ते वर्तमानस्य रेफस्य स्थाने विसर्ग आदेशो भवति, तयोर्विरामेऽघोषे च । (विरामे-) वृक्षः, प्लक्षः, प्रातः, पुनः, अग्निः अत्र, पटुः इह । अघोषे-कः करोति, कः खनति, पुनः पचति, पुनः फलति, कः शेते, कः पण्डे; कः साधु । कश्चरति, कष्टीकते; कस्तरति इत्यादिषु तु शादय एवापवादत्वाद् भवन्ति । पदान्त इति किम्? ईर्त्तेः[2], अर्कः, सूर्प्पः; सर्प्पः । कथं नृपतेरपत्यं नार्पत्यः? नृकुट्यां भवो नार्कुटः? तवर्कारः? प्राच्छंति इत्यादि? 'असिद्धं बहिरङ्गमन्तरङ्गे' इति वृद्ध्यरारादेशाश्रयस्य रेफस्यासिद्धत्वाद् विसर्गो न भवति, एवं छ्रुप्म्णावपि । अन्वित्यधिकारात् गीः, धूः, सजूःषु, आशीःषु इत्यादिषु दीर्घत्वे कृते पश्चाद् विसर्गः, अन्यथा हि पूर्वं विसर्गे कृते इरुरोरभावात् दीर्घो न स्यात् ॥ ५३ ॥

## ख्यागि ॥ १ । ३ । ५४ ॥

पदान्ते वर्तमानस्य रेफस्य ख्यागि परे विसर्ग एव भवति । कः ख्यातः, नमः ख्यात्रे, पूर्वेणैव सिद्धे नियमार्थमिदम्, तेन जिह्वामूलीयो न भवति ॥ ५४ ॥

---

**विरामे वा ।** अत्र अशिट धुट प्रथम इति चानुवर्त्तते, विरामे अशिटो धुट प्रथमो वा इत्यन्वय । विरामे इति तु वैषयिकमिदमधिकरणम्, तथाच विरामविषये इत्यर्थो लभ्यते । विरामश्चावसान अवसानेन च पदस्य पौर्वापर्यं न सम्भवति, तथाहि-येन वर्णेन विरम्यते स चावसान स्यात् । अथवा विरामो विरतिर्वर्णानामुच्चारणाभाव । अन्ये तु अवसानमभावरूपमाहु । तदर्थमाह—**विरामे वर्तमानस्य** इत्यादिना । **वाक्** इत्यादिष्वनेन विरामे विकल्पेन प्रथम । **वागत्र**-विरामाभावात् प्रथमत्व न भवति । क्रुङ् इत्यादिषु विरामेऽपि धुट्त्वाभावात् प्रथमा न भवन्ति, अन्यथा कटतपा स्यु, "पदरुजविशस्पृशो घञ्" ५।३।१६। अत्र जकारस्य चकार स्यादिति **धुट इति** ॥ ५१ ॥

**न संधिः ।** सन्धिप्रतिषेधोऽयम्, स च प्राप्तिपूर्वक एव सम्भवति, विरामे च प्राप्ति सन्धेरुक्तस्य वक्ष्यमाणस्य चेत्यविशेषनिर्देशात् सर्वं प्रतिषिध्यते इत्याह—**उक्त** इत्यादिना । **दधि अत्र** इत्यादिषु सामान्येन विधानात् विरामेऽपि प्राप्त सन्धिर्न भवति । विरामाभावे सन्धिमाह—**विरामादन्यत्र** इति । वर्णाना पर संनिकर्ष संहिता इति तस्या विषय दर्शयति—**संहितैकपदे** इत्यादिना । अयमर्थ -विरामे एव सन्धिप्रतिषेध , धातूपसर्गयोस्तु नित्यसमुदितत्वात् समासस्यापि निरन्तरानेकपदात्मकत्वात् पदधातूपसर्गसमासाना नियमेनैकप्रयत्नोच्चार्यत्वाद्विरामाभावे नित्य संहितेति, वाक्ये तु सर्वत्रैकप्रयत्नोच्चार्य्यत्वानियमाद्विरामसद्भावाच्च संहितेति ॥ ५२ ॥

**रः पदान्ते विसर्गस्तयोः ।** पदान्ते र विसर्ग तयो इत्यन्वय । पदान्ते इति प्रत्यासन्नत्वात् र इत्यस्य विशेषण, तदाह—**पदान्ते वर्तमानस्य रेफस्य** इति । **विसर्ग** इति । ताल्वोष्ठपुटसगृहीतस्य वायोर्विसर्जन स च विसर्ग पार्श्ववर्त्तिबिन्दुद्वय रूढ । **तयो**.-तच्छब्द पूर्ववस्तु परामृशति, तथा च विरामाघोषयोरिति लभ्यते । तयोरित्यत्रैकापि सप्तम्यर्थवशात् द्विधा भिद्यते, एका वैषयिकेऽधिकरणेऽपरात्वौपश्लेषिक इति भेदेन तद्दर्शयति—**विरामे अघोषे च** इति । **वृक्षः**, प्लक्ष इत्यादिषु "सो रु"रिति यथायोग रुत्वे कृते पदान्ते वर्त्तमानत्वेन रेफस्य विरामेऽनेन विसर्ग । **क. करोति** इत्यादिषु सौ, किम कादेशे, "सो रु"रिति यथायोग रुत्वे कृते पदान्ते वर्त्तमानत्वात् रेफस्य पुन शब्दाच्चाव्ययस्येति सिद्धपि पदान्तरेफस्य कादावघोषे अनेन विसर्ग । **क. शेते**-इत्यादिषु "शषसे शषस वे"ति शषसाना वैकल्पिकत्वाद्विसर्गो भवति शादावघोषे । कश्चरतीत्यादिषु "चटते सद्वितीये" इति विशेषविहितत्वेनापवादत्वात् शादय एवेत्याह—**कश्चरति** इत्यादिना, **भवन्ति** इत्यन्तेन । **इर्त्तें**-इत्यादिषु रेफस्य पदान्तेऽवर्त्तमानत्वान्न विसर्ग । **नार्पत्यो नार्कुट** इत्यादिषु अन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदान्तत्वाद्रेफस्य विसर्ग कुतो न भवतीत्याशङ्कते—**कथम्** इत्यादिना । समाधत्ते—**असिद्धं बहिरङ्गमन्तरङ्गे** इत्यादिना । अन्तरङ्गे वर्णपदाश्रये विसर्गे कर्त्तव्ये प्रकृत्यर्थसबद्धे भवादावर्थे प्रत्यये उत्पन्नाया बहिरङ्गाया वृद्धेरुभयवर्णाश्रयत्वादरारादेशयोश्चासिद्धत्वात् तदाश्रयस्यापि रेफस्यासिद्धत्वात् रेफान्त पदमघोषे नास्तीति कथ विसर्ग इति भाव । **वृद्ध्यरारादेशाश्रयस्य**-वृद्धि अरादेश आरादेशश्च आश्रयो यस्य तस्य रेफस्यासिद्धत्वात् इत्यन्वय । **छ्रुप्म्णावपि**-न भवन इति शेष । ननु गीरित्यादौ दीर्घात् पूर्वमेव विरामाघोषयोरनेन विसर्गे निमित्तरेफस्याभावात् कथ "पदान्ते" २।१।६४। इति दीर्घ इत्यत आह—**अन्वित्यधिकारात्** इत्यादिना । अन्यथा-अन्वित्यधिकाराभावे । 'गॄ' शब्दे, 'धुर्वै' हिंसायां च धातो "गॄपॄदुर्विधुर्विभ्य क्विप्" उ० ९४३। इति क्विपि, "ऋता क्ङितीर्" ४।४।११६। इतीरादेशे च, "राल्लुक्" ४।१।११०। इति वलोपे, सौ, तल्लुकि, "पदान्त" इति दीर्घेऽनेन विसर्गे—**गी** , धूरिति सिद्ध्यत । **सजुःषु, आशीःषु**-सजुष् सु, आशिस् सु इति स्थिते "सजुष " २।१।७३। इति "सो रु"रिति च रुत्वे पूर्ववद्दीर्घेऽनेन विसर्ग ॥ ५३ ॥

**ख्यागि ।** अत्र र पदान्ते विसर्ग इति चानुवर्त्तते, पदान्ते र ख्यागि विसर्ग इत्यन्वयस्तदर्थमाह—**पदान्ते वर्तमानस्य** इत्यादिना । **कः ख्यातः**-ख्यात इति 'चक्षिङ्' व्यक्तायां वाचि, धातो "चक्षो वाचि क्शाङ् ख्याङ्" ४।४।४। इति ख्यागादेशे क्ते रूपम्, **नमः ख्यात्रे**-ख्यात्रे इति चक्षिङ ख्यागादेशे तृचि चतुर्थ्येकवचने रूपम्, अत्रानेन पदान्तरेफस्य ख्यागि विसर्ग । अथ किमर्थमिद ख्यागि रेफस्य पदान्तत्वात् पूर्वेणैव सिध्यतीति चेत्, सत्यम्, 'सिद्धे सत्यारम्भो नियमार्थ'इतिन्यायात् कार्यान्तरबाधनार्थमिदमित्याह—**पूर्वेणैवेत्यादि** । अत एव वृत्तौ विसर्ग एवेत्युक्तम् । नियमफलमाह—**तेन** इत्यादिना । **जिह्वामूलीयः**-"र कखे०" १।३।५। इत्यनेनेति शेष ॥ ५४ ॥

---

१ वृक्षम्° पु० । २ इर्त्तें, अर्कं, सूर्पं, सर्पं म० म० ।

## शिट्यघोषात् ॥ १ । ३ । ५५ ॥

अघोषात् परे शिटि परतः पदान्ते वर्तमानस्य रेफस्य विसर्ग एव भवति। पुरुषः त्सरुकः, सर्पिः प्सातिं, सर्पिः प्सातम्, वासः क्षौमम्; अद्भिः प्सातम्। इदमपि नियमार्थम्, तेन सत्वषत्वक्ष्प्ष्वा न भवन्ति ॥ ५५ ॥

## व्यत्यये लुग् वा ॥ १ । ३ । ५६ ॥

शिटः परोऽघोष इति व्यत्ययः, तस्मिन् सति पदान्ते वर्तमानस्य रेफस्य लुग् वा भवति। चक्षु श्च्योतति, पक्षे–चक्षुश्श्च्योतति, चक्षुः श्च्योतति; क ष्ठीवति, कष्ष्ठीवति, कः ष्ठीवति, चेत स्खलति, चेतस्स्खलति, चेतः स्खलति, चक्षु स्पन्दते, चक्षुस्स्पन्दते, चक्षुः स्पन्दते; पुन स्पन्दते, पुनस्स्पन्दते, पुनः स्पन्दते ॥ ५६ ॥

## अरोः सुपि रः ॥ १ । ३ । ५७ ॥

रुवर्जितस्य रेफस्य स्थाने सुपि परे रेफ एव भवति, कार्यान्तरबाधनार्थः गीर्षु, धूर्षु, वार्षु; द्वार्षु–विसर्गसकारौ न भवतः। अरोरिति किम्? पयःसु, पयस्सु; अहःसु, अहस्सु। सुपीति किम्? गीः, धूः। र इत्येव? महत्सु ॥५७॥

## वाहर्पत्यादयः ॥ १ । ३ । ५८ ॥

अहर्पत्यादयः शब्दा यथायोगमकृतविसर्गाः कृतोत्वाभावाश्च वा निपात्यन्ते। अहर्पतिः, अहःपतिः, अहप्पतिः। गीर्पतिः, गीःपतिः; गीष्पतिः। धूर्पतिः, धूःपतिः; धूष्पतिः। एषु पक्षे विसर्गाभावो निपात्यते। हे प्रचेता राजन्, हे प्रचेतो राजन्–अत्र पक्षे उत्वाभावो निपात्यते। बहुवचनमाकृतिगणार्थम् ॥ ५८ ॥

## शिट्याद्यस्य द्वितीयो वा ॥ १ । ३ । ५९ ॥

आद्यस्य–प्रथमस्य स्थाने शिटि परे द्वितीयो वा भवति। ख्षीरम्, क्षीरम्; तछ्शोभनम्, तच्शोभनम्, सम्राठ्सु,

---

**शिट्यघोषात्**। अत्र पदान्ते र विसर्ग इति चानुवर्तते, अघोषात् शिटि पदान्ते र विसर्ग इत्यन्वयस्तदर्थमाह—**अघोषात् परे शिटि** इत्यादिना। ननु र पदान्ते इत्यनेन विसर्गे सिद्धे किमर्थमिदमित्यत आह—**इदमपि** इत्यादिना। नियमफलमाह—**तेन** इत्यादिना। **पुरुषः त्सरुकः**–अत्रानेन नियमेन "चटते सद्वितीये" इति सत्व निषिध्यते। **सर्पिः प्साति, सर्पि॰ प्सातम्**–अत्र नियमेन "वेष्ठसोऽपेक्षायाम्" २।३।११। इति षत्व नियम्यते। **वासः क्षौमम्**–अत्र जिह्वामूलीयाभाव। **अद्भि॰ प्सातम्**–अत्रोपध्मानीयाभाव ॥ ५५॥

**व्यत्यये लुग्वा**। अत्र र पदान्ते इति चानुवर्तते, व्यत्यये पदान्ते र लुग् वा इत्यन्वय। व्यत्ययो नाम अभिहितनिमित्तयो॰ पूर्वपरभावविपर्यय इत्याह—**शिटः परोऽघोष इति**। पूर्वत्र अघोषात् शिटि इत्युक्तमत्र शिट परो योऽघोषस्तस्मिन् परे पदान्तरेफस्य लुग् वा इति विस्फुटमाभाति। **चक्षुश्च्योतति**–इत्यादिषु पदान्तरेफस्य शषसविसर्जनीयादिषु प्राप्तेषु लोपोऽनेन विधीयते। **पक्षे**–लोपविमुक्तपक्षे शषसविसर्जनीयादयोऽपि भवन्तीत्युदाहरति–**चक्षुश्श्च्योतति** इत्यादि ॥ ५६ ॥

**अरोः सुपि रः**। र इत्यनुवर्तते, तत्र अरोरिति विशेषणतया संबध्यते, तथा च–अरो र सुपि र इत्यन्वयस्तदर्थमाह—**रुवर्जितस्य** इत्यादिना। ननु रेफस्य सिद्धत्वाद् विधेश्चाप्राप्तप्रापणरूपत्वात् रेफस्य रेफविधानमनर्थक, सत्वनर्थक, नियमार्थत्वेन कार्यान्तरबाधनार्थत्वादित्याह—**रेफ एव** इत्यादिना। **गीर्षु**–इत्यादिषु "र पदान्त॰" इति विसर्ग प्राप्नोति "शषसे शषसं वा" इति सकारश्चेत्ये तौ बाधित्वाऽनेन रेफस्य रेफ एव क्रियते, तदाह—**विसर्ग** इत्यादिना। **पयःसु, पयस्सु, अहःसु; अहस्सु**–अत्र रो रेफस्य सत्वाभियमो न प्रवर्तते। **गीः, धू॰**–सुपि परेऽभावादनेन न रेफस्य रेफ। **महत्सु**–अत्र सुपि परे रुवर्जितस्य रेफस्याभावान्न भवति रेफ ॥ ५७ ॥

**वाहर्पत्यादयः**। एते अहर्पत्यादय इति ज्ञात शिष्टेभ्यस्तत्र च क्वचिद्रेफस्य विसर्ग प्राप्त क्वचिदुत्व च, निपातनाच्च पक्षे तयोरभाव इत्याह–**अहर्पत्यादय** इत्यादिना। **यथायोगम्**–योगमनतिक्रम्येत्यर्थ। **अकृतविसर्गाः**–न कृतो विसर्गो येषान्ते तथोक्ता अहर्पत्यादय इति भाव। **कृतोत्वाभावा॰**–कृत उत्वाभावो येषा ते तथोक्ता इति विग्रह। **अहर्पति॰**–अह्नां पतिरिति विग्रहे "अह्न" २।१।७४। इति नकारस्य रुत्वेऽनेन पक्षे विसर्गाभावे तद्विमुक्तपक्षे ष्प्यादेशे विसर्गे च विकल्पद्वयेन रूपत्रयम्। एव **गीर्पति**रित्यादिष्वपि। **विसर्गाभावः**–"र पदान्त" इति प्राप्तस्य विसर्गस्याभाव इत्यर्थ। **हे प्रचेता राजन्**–प्रशान्त चेतोऽस्येति विग्रहे, "दीर्घङ्याब्॰" १।४।४५। इत्यामन्त्र्यसेर्लुकि, ततो राजन्–शब्दे परे "सो रु"रिति रुत्वेऽनेनोत्वाभावे, "रो रे लुग्॰" इति रेफस्य लोपे दीर्घत्वे च सिद्ध्यति। पक्षे "घोषवति" इत्युत्वे—**हे प्रचेतो राजन्**। **उत्वाभावः**–"घोषवति॰" इत्युत्वस्याभाव इत्यर्थ। आमन्त्र्योदाहरणमात्रमिद, संबोधनादन्यत्राप्युदाहार्य, तच्च समासे एव अन्यत्र तु "अभ्वादेरत्वस सौ" १।४।९०। इति दीर्घत्वे विशेषाभाव। यदुत्पल–कर्मधारयात् समासान्ते प्रचेताराज। शाकटायनोऽप्याह–प्रचेतसो राजा प्रचेताराज प्रचेतोराज। प्रचेता राजा अस्य प्रचेताराजा प्रचेतोराजेति। ननु वृत्तिप्रदर्शितेभ्योऽन्यान्यपि सन्तीति कुत एतदुच्यते–बहुवचनसामर्थ्यात्, अन्यथाऽहर्पत्यादिरित्येकवचनेनैव निर्दिशेदित्याह—**बहुवचनम्** इत्यादिना। बहुवचनस्याऽऽकृतिगणार्थत्वेन वारि चरति इति विग्रहे "क्वचित्" ५।१।१७१। इति डप्रत्यये–वार्चो हस इत्यत्र "चटते॰" इति शत्व न भवति, उषसि बुध्यते इति विग्रहे "नाम्युपान्त्य॰" इति के, "घोषवति" इत्युत्व उषर्बुध इत्यत्र न भवति ॥ ५८ ॥

**शिट्याद्यस्य द्वितीयो वा**। आद्यस्य शिटि द्वितीयो वा इत्यन्वयस्तदर्थमाह—**आद्यस्य** इत्यादिना। अत्राद्यत्व प्रतिवर्गपञ्चकप्रथमाक्षरापेक्ष तदपेक्ष च द्वितीयत्वमिति, तेनायमर्थ–कचटतपानां क्रमेण खछठथफा शिटि भवन्ति। क्रमेणोदाहरति–**ख्षीर**मित्यादि। अत्र कस्य शिटि परे द्वितीय ख। **तछ्शोभनम्**—तद् शोभनम् इति स्थिते "धुटस्तृतीय" इति तृतीयत्वे, तस्य च "तवर्गस्य॰"इति जकारे, "अघोषे प्रथमो॰" इति प्रथमत्वेऽनेन तस्य द्वितीये रूप सिद्ध्यति। **सम्राठ्सु**–सम्राज् सु इति स्थिते, "यजसृज॰" इति षत्वे, "धुटस्तृतीय"

---

१ °पका° म० म०।

सम्राट्सु; भवत्सु, भवत्सु; अप्सु, अप्सु; अप्सराः, अप्सराः । आद्यस्येति किम् ? भवान् साधुः । शिटीति किम् ? वाक् चरति, सत्यम् ॥ ५९ ॥

## तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ ॥ १ । ३ । ६० ॥

तवर्गस्य स्थाने शकारचवर्गाभ्यां षकारटवर्गाभ्यां च योगे यथासंख्यं चवर्गटवर्गावादेशौ भवतः, स्थान्यासन्नौ । समुदायद्वयापेक्षया यथासंख्यार्थं तृतीयाद्विवचनम्, योगग्रहणम्-स्थानित्वाऽऽशङ्कानिरासार्थं पूर्वापरभावानियमार्थं च । शकारेण योगे-तच् शेते, तच् श्च्योतति, भवाञ् शेते, चवर्गेण-तच्चरति, तच्छादयति, तज्जयति, तज्झापयति, तञ्ञकारेण-अत्र दकारस्य जकारे "तृतीयस्य पञ्चमे" ॥ १ । ३ । १ ॥ इति ञकारः, प्रशाञ् चरति, प्रशाञ् छिनत्ति, प्रशाञ्छादयति, भवाञ् जयति, भवाञ् झापयति, भवाञ् ञकारेण, पूर्वेण चवर्गेण-याच्ञा, यज्ञः, राज्ञः, मज्ज्ञः । पूर्वेण शकारेण परेण च षकारेण प्रतिषेधो वक्ष्यते । पूर्वेण तु षकारेण-पेष्टा, पेष्टुम्, पूष्णः, वृष्णः, पूष्णा, दोष्णा इत्यादि णत्वेनापि सिध्यति । टवर्गेण-तट्टीकते, तट्ठकारेण, तड्डीनम्, तड्ढौकते, तण्णकारेण, अदट्-अड्डति, अदटि-अट्टते,

---

इति डत्वे, "अघोषे प्रथमो०" इति प्रथमत्वेऽनेन द्वितीयत्वे रूपम् । एवं भवथ्सु इत्यादय । भवान् साधुः—अत्र नस्याद्यत्वाभावान्न द्वितीय शिटि परे । वाक् चरति, सत्यम्-अत्राद्ययो चकारतकारयो शिट्परत्वाभावान्न द्वितीय ॥ ५९ ॥

**तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ** । तवर्गस्येति स्थानषष्ठी । **श्चवर्गष्टवर्गाभ्यां**—शश्च चवर्गश्चेति षश्च टवर्गश्चेति च समाहारद्वन्द्वद्वयं कृत्वा श्चवर्गष्टवर्गौ पुनर्द्वन्द्वे तत समुदायद्वयापेक्षं तृतीयाद्विवचनं संख्यातानुदेशार्थमिति भगवद्वृत्तिकार एव वक्ष्यति—**समुदायद्वयापेक्षया** इत्यादिना । **योगे**—योग सम्बन्धस्तस्मिन्, स च योग स्थानिन पूर्वत्र परत्र वा यथासंभव स्यात् श्चवर्गष्टवर्गयो । **चटवर्गौ**—चश्च टश्च चटौ तयोर्वर्गौ इति तत्पुरुषे प्रथमाद्विवचनम् विधेयसमर्पकम् । तवर्गस्य शकारेण चवर्गेण च योगे चवर्ग, तवर्गस्य षकारेण टवर्गेण च योगे टवर्ग इति विवेकस्तदेतत्सर्वमाह दृष्टान्तोपन्यासपूर्वकं—**तवर्गस्य स्थाने** इत्यादिना । श्चवर्गष्टवर्गाभ्यामिति द्विवचनं कथमित्युपपादयति—**समुदायद्वयापेक्षया** इत्यादि । **योगग्रहणमिति** । अयमाशय -सूत्रे योगग्रहणाभावे "समानानां तेन दीर्घ " इत्यादिवत् श्चवर्गष्टवर्गाभ्यामिति सहार्थे तृतीयाया तस्य स्थानित्व स्यादतस्तन्मा भूदिति योगग्रहणम्, एवमेव परदिग्योगपञ्चम्या तु "पञ्चम्या निर्दिष्टे परस्य" इति न्यायात् परस्यैव तवर्गस्य स्यात् न पूर्वस्येत्यर्थमपि योगग्रहणम् । तदाह—**स्थानित्वाशङ्कानिरासार्थं**-स्थानित्वस्य आशङ्का प्राक् प्रदर्शिता तस्या निरास इत्येवमर्थं, **च पूर्वापरभावानियमार्थम्**—पूर्वभावस्य अपरभावस्य च योऽनियमो-नियमाभावस्तदर्थमित्यर्थोऽन्यथा पूर्वपरभावनियम स्यादिति । **तच् शेते**—तद् शेते इति स्थिते तृतीयत्वे परत्र शयोगे दस्यानेन जत्वे तस्य प्रथम । ननु तवर्गस्य कार्यित्वात्तेन च विशिष्टवर्णसमुदायस्याभिधानात् तच् शेते इत्यादिषु एकैकस्य तवर्गशब्दाप्रतीतौ कथं कार्यित्वमिति चेदुच्यते-समुदायैकदेशस्यापि तदात्मकत्वात् समुदायशब्देनाभिधानं यथा-ग्रामे वसति, गृहे वसतीति, नहि देवदत्तादिरेवमभिधीयमानो ग्राम गृह वा व्याप्य वसति, किंतु तदेकदेशे, तत्र स एवैकदेशो ग्रामो गृह चोच्यते तद्वदत्रापीत्यदोष । **तच् श्च्योतति**—अत्र 'श्चुतिर्' इति शवि धातो सस्य "सस्य शषौ" इति शयोगेऽनेन दस्य जत्वस्य प्रथम । **भवाञ् शेते**—अत्र नकारस्यानेन ञ । **तच्चरति**—दकारस्य चवर्गेण योगेऽनेन जत्वे सति प्रथम । **तच्छादयति**—'छदण्' संवरणे इत्यस्य, 'छदण्' अपवारणे इत्यस्य वा युजादे स्वार्थणिजन्तस्य रूपम्, अत्र छकारेण योगे दस्यानेन जत्वे प्रथम । **तज्जयति**—तद् जयति इति स्थिते जकारेण योगेऽनेन दस्य ज । **तज्झापयति**—'झप्' हिंसायाम्, धातो "प्रयोक्तृव्यापारे णिग्" ३।४।२०। इति णिगि वृद्धौ तिवादौ च-झापयति, तद् झापयति इति स्थितेऽनेन दस्य ज । **तञ्ञकारेण**—तद् ञकारेण इत्यवस्थाया प्रक्रियामाह—**अत्र दकारस्य** इत्यादिना । **प्रशाञ् चरति**—नस्यानेन ञ । पूर्वापरभावानियमाय योगग्रहणादुदाहरति—**पूर्वेण चवर्गेण याच्ञा**—'डुयाचृग्' धातोर्भावे "मृगयेच्छायाच्ञा०" ५।३।१०१। इति निपातनान्नकारे तस्यानेन ञ । यज्ञः—यजेर्भावे "यजिस्वपि०" ५।३।८५। इति नेऽनेन ञकार । **राज्ञः**—राजन्शब्दस्य शसि ङसौ ङसि वा "अनोऽस्य" २।१।१०८। इत्यकारलोपेऽनेन नकारस्य ञकार । **मज्ज्ञः**—'टुमस्जोंत्' शुद्धौ, धातो "उक्षितक्ष्यक्षीशि०" उणा० ९००। इति सूत्रेणानि "सस्य शषौ" १।३।६१। इति शत्वे "तृतीयस्तृतीय०" १।३।४९। इति जकारे मज्जन्-शब्दस्य शसि ङसौ ङसि वा "अनोऽस्य" २।१।१०८। इत्यकारलोपेऽनेन नकारस्य ञकार, (मज्ज्ञ) "धुटो०" इति लोपपक्षे-मज्ञ इति, नकारान्तोऽयं पुंसि । मज्जा स्त्रीलिङ्गो "भिदादय " ५।३।१०८। इत्यङि भवति, 'मज्जा तु कौशिक शुक्रकरोऽस्थ स्नेहसंभवो' इति अ०चि० ३।२९२श्लो०, 'सारो मज्जा नरि' इत्यमर २।१२ श्लो० वनौषधिवर्गे, श्रावन्तोऽयं भागुरिमते-'लज्जावद्राजवन्मज्जा मांससारास्थिसारयो' इति । ननु यथा पूर्वेण चवर्गेण योगे तवर्गस्य चवर्ग इत्युदाहृते कथं नोदाहृत पूर्वेण शकारेण इत्यत आह—**पूर्वेण शकारेण** इति । प्रतिषेधो वक्ष्यते इत्यन्वय -"न शात्" १।३।६२। इत्यनेनेति शेष । ननु पूर्ववत् परत्र षकारेण योगेऽपि कथंनोदाहृतमित्यत आह—**परेण षकारेण** इति । प्रतिषेधो वक्ष्यते इत्यन्वय -"षि तवर्गस्य" १।३।६४। इत्यनेनेति शेष । **पेष्टा, पेष्टुम्**-पिषेस्तृन्वि तुमि चानेन टत्वमिति भाव । **पूष्णः**—'पूष' वृद्धौ, धातो "उक्षितक्ष्यक्षीशि०" इति अनि पूर्ववत् शसादावकारलोपेऽनेन णत्वम् । **वृष्णः**—'वृषू' सेचने, धातो "लूपूयुवृषि०" उणा० ९०१। इति कित्यनि पूर्ववत् शसादावकारलोपेऽनेन णत्वम् । **पूष्णा**—पूषन्शब्दात् टाप्रत्यये रूपम् । **दोष्णा**—'दमूच्' उपशमे, धातो "यमिदमि डोस्" उणा० १००५। इति डित्योसि "डित्यन्त्यस्वरादे" २।१।११४। इत्यन्त्यस्वरादिलोपे दोस् ततस्तृतीयैकवचने "दन्तपादनासिका०" २।१।१०१। इति दोषन्नादेशे पूर्ववत् अकारलोपादौ णत्वम् । यद्वा "रषृवर्णान्नो०" २।३।६३। इति णत्वमित्याह—**णत्वेनापि** इत्यादिना । **तट्टीकते**-तद् टीकते इति स्थितेऽनेन दकारस्य डकारे "अघोषे प्रथमो०" इति प्रथम । एवं **तट्ठकारेण, तड्डीनम्**-तद् डीनम् इति स्थितेऽनेन डकार । डीनमिति तु 'डीङ्च्' गतौ, धातो डीयते स्म इति विग्रहे "गत्यर्थाऽकर्मक०" ५।१।११। इति क्ते, "डीयश्व्यैदित ०" ४।४।६१। इति इडभावे, "सूयत्याद्योदित" ४।२।७०। इति तस्य नत्वे रूपम् । तत्पलक्षु भौवादिकस्य दैवादिकस्य च डीयो डीनमिति प्रयोगमिच्छति, यदाह—डयते स्म, डीयते स्म इति वा डीन । **तड्ढौकते**-अत्रानेन ढकारेण योगे दस्य डत्वम् । **तण्णकारेण**-तद् णकारेण इति स्थिते दस्यानेन डत्वे तस्य "तृतीयस्य पञ्चमे"

---

१ °क्तोति म० म० । २ °ति, × × × × × × तञ्ञ° ख० ता० ग्रन्थे नास्ति । ३ अत्र दकारस्य इत्यादिना, भवाञ् ञकारेण इत्यन्तेन, पाठो नास्तीति ख० ता० ।

भवाण्डीनः, भवाण्ढौकते, भवाण्णकारेण । पूर्वेण टवर्गेण—ईट्टे । तवर्गस्य चवर्गे कृते "चजः कगम्" ॥ २ । ७ । ८६ ॥ इति न भवति, 'असिद्धं बहिरङ्गमन्तरङ्गे' इति । तत्र च प्रत्ययाधिकारात् मज्जतीत्यादावपि न भवति । एवमुत्तरत्रापि शकारस्य षत्वमपि न भवति ॥ ६० ॥

## सस्य शषौ ॥ १ । ३ । ६१ ॥

सकारस्य स्थाने श्चवर्गष्टवर्गाभ्यां योगे यथासंख्य शकारषकारावादेशौ भवतः । चवर्गेण—श्च्योतति, वृश्चति, मज्जति लज्जते, भृज्जति, सज्जति । षकारेण—सर्पिष्षु, धनुष्षु, दोष्षु, अत्र सो रुत्वं, तस्य सत्वं, सुपः षत्वं; ततोऽनेन पूर्वसस्य षत्वम् । टवर्गेण—पापट्षि, वंभण्षि ॥ ६१ ॥

## न शात् ॥ १ । ३ । ६२ ॥

शकारात् परस्य तवर्गस्य स्थाने यदुक्तं तन्न भवति, किमुक्तम् ? चवर्गः । अश्नाति, अश्नुते, विश्नः, प्रश्नः ॥ ६२ ॥

## पदान्ताट्टवर्गादनाम्नगरीनवतेः ॥ १ । ३ । ६३ ॥

पदस्यान्ते वर्तमानाट्टवर्गात् परस्य नाम्नगरीनवतिसवन्धिवर्जितस्य तवर्गस्य सकारस्य च यदुक्तं तन्न भवति, किमुक्तम् ? टवर्गषकारौ । षट्तयम्, मधुलिट् तरति, मधुलिट् थुडति, मधुलिड् दुनोति, मधुलिड् धुनोति, षण्नयाः, मधुलिट् सीदति, मधुलिट् साये, मधुलिट् स्यात्; मधुलिट्सु । टवर्गादिति किम् ? चतुष्टयम्, सर्पिष्ष्म् । पदान्तादिति

---

इति णकार । अद्ड् अड्डति—दोपान्त्यात् 'अद्ड्' अभियोगे, धातोस्तिवि शवि अनेन दकारस्य डकार । अट्टि, अट्टते—'अहि' हिंसातिक्रमयो, दोपान्त्यस्तोपान्त्यो वा तत्र दोपान्त्यात् तेप्रत्यये दस्यानेन डत्वे प्रथम, तोपान्त्यात्तु टकारस्तस्यानेन । भवाण्डीनः—अत्रानेन नस्य णो डकारयोगे । भवाण्ढौकते—अत्रानेन नस्य णो ढकारयोगे । भवाण्णकारेण—अत्रानेन णकारयोगे नस्य ण । ईट्टे—'ईडिक्' स्तुतौ, धातोस्तेप्रत्ययेऽनेन तस्य टत्वे, "अघोषे प्रथमो०" इति प्रथमष्टकार । अथ तच्च् शेते मज्जति इत्यादौ "चज कगम्" २।१।८६। इति आदेशभूतयोश्चजयो कगौ कस्मान्न भवत ? उच्यते—चजयोरसिद्धत्वादित्याह—तवर्गस्य इत्यादिना, 'असिद्धं बहिरङ्गमन्तरङ्गे' इति इत्यन्तेन । अत्र इतियैसादर्थे, तथाचायमर्थो लभ्यते—यस्मादन्तरङ्गे पदमात्राश्रये चस्य कत्वे क्रियमाणे तच् शेते तच्चरतीत्यादौ उभयाश्रितत्वाद्बहिरङ्ग चत्वमत कत्व न भवतीति, "तवर्गस्य०" इति "अघोषे प्रथमो०" इति चानयोरुभयाश्रितत्वाद्बहिरङ्गत्वेनासिद्धत्वं, "चज कगम्"इति पदमात्राश्रयत्वेनान्तरङ्गमिति विवेक । ननु तच्शेते इत्यादौ मा भूत् चस्य कत्व, मज्जति इत्यादौ जकारस्य धुडाश्रय गत्व कस्मान्न भवति ? इत्याह—तत्र च इत्यादिना । तत्र—"चज कगम्"इति सूत्रे धुट्प्रत्ययो गृह्यते, अत्र हि धुटि परे सत्वेऽपि तस्य प्रत्ययत्वाभावान्न भवति । प्रत्ययाधिकारात्—"गडदवादेश्च०" २।१।७७। इत्यस्मात् प्रत्यये इत्यस्याधिकारादित्यर्थ । मज्जति इत्यादावपि न भवति—तेन सूत्रेण गत्वमिति शेष । एवम्—पूर्ववत् "यज-सृज०" २।१।८७। इति सूत्रेऽपि प्रत्ययाधिकारादिति भाव । उत्तरत्रापि—"सस्य शषौ" इत्यत्रापि, शकारस्य—वृश्चतीत्यादौ तद्विहितशकारस्येत्यर्थ । षत्वमपि न भवति—"यजसृज०" इत्यनेन धुडाश्रित षत्वं प्रत्ययाभावान्न भवति इत्यर्थ ॥ ६० ॥

सस्य शषौ । सस्येति स्थानिनिर्देशात्तवर्गस्येति निवृत्तम्, शषाविति च निर्देशात् चटवर्गावित्यपि, शेष त्वनुवर्तते श्चवर्गष्टवर्गाभ्या योग इति । यथासङ्ख्यमपि पूर्ववद्बोद्धव्यमित्याह—सकारस्य स्थाने इत्यादिना । श्च्योतति—श्च्युतेस्तिवि, शवि, उपान्त्यगुणे, अनेन चवर्गयोगे सस्य श । वृश्चति—'ओव्रश्चौत्' छेदने, धातोस्तिवि, शे, य्वृति सस्यानेन श । मज्जति—मस्जेस्तिवि, शेऽनेन सस्य शत्वे "तृतीय०" इति शस्य ज । एव लज्जते इत्याद्यपि । सर्पिष्षु—सर्पिस् सुप् इतिस्थिते वृत्तौ कृता रूपसिद्धिर्बोद्धव्या । अत्र सो रुत्वं—"सो रु"रित्यनेन, "नामसिद०" इत्यनेन पदान्तत्वात् । तस्य सत्वं—पदान्तरेफस्य "शषसे शषसं वा" इति सत्वम् । सुप॰ षत्वं—"नाम्यन्तस्था०" २।३।१५। इत्यनेनेति शेष । ततोऽनेन—"सस्य शषौ" इत्यनेनेति भाव । पूर्वसस्य—सर्पिस् इत्यत्र सस्येत्यर्थ । एव धनुष्षु इत्यादय । पापट्षि, वंभण्षि—'पट्'गतौ कुटिल पटसि, 'भण'शब्दे भृश भणसि इति वार्यं, अत्र "गत्यर्थात्०" ३।४।११। इति "व्यञ्जनादे०" ३।४।९। इति च यङि द्वित्वे, "आगुणावन्यादे" ४।१।४८। इति आत्वे, "मुरतोऽनुनासिकस्य" ४।१।५१।इति म्वागमे, "तौ मुमो व्यञ्जने०" इत्यनेनानुस्वारे सस्य टवर्गयोगे ष ॥६१॥

नेति प्रतिषेधोऽय प्राप्तिपूर्वक एव न शात् । अत्र तवर्गस्येत्यनुवर्तते, सस्येत्यसम्भवान्न सम्बध्यते, शात् तवर्गस्य न इत्यन्वय । भवतीति शकारात् परस्य कार्यिण शकारेणैव योगे यत्कार्यं प्राप्नोति तदेव निषिध्यते, तदाह—शकारात् परस्य इत्यादिना । किमुक्तम्—शकारात् परस्य तवर्गस्य किं कार्यमुक्तमिति प्रश्नार्थ । समाधत्ते—चवर्ग इति । अश्नाति, अश्नुते—'अशश्' भोजने, 'अशौटि' व्याप्तौ आभ्या तिवि, तेप्रत्यये च श्नाश्नुप्रत्यये रूपे, भवत, अत्रानेन शात् परस्य नस्य पूर्वेण प्राप्तश्चवर्गो निषिध्यते । विश्नः, प्रश्न —'विच्छे' 'प्रच्छे'श्च नङि नेप्रत्यये च छस्य शत्वे च रूपे, अत्रानेन शात् परस्य नस्य प्राप्तश्चवर्गो निषिध्यते ॥ ६२ ॥

पदान्ताट्टवर्गादनाम्नगरीनवते॰ । उत्तरत्र तवर्गस्येति भणनात् तवर्गस्य सस्य चेति लभ्यतेऽत्र । अनाम्नगरीनवते — द्वन्द्वगर्भनञ्तत्पुरुषात् षष्ठी । न इति अनुवर्तते, पदान्तात् टवर्गात् अनाम्नगरीनवते तवर्गस्य सस्य च न इत्यन्वयस्तदर्थमाह—पदस्यान्ते इत्यादिना । किमुक्तम्—पदान्तात् टवर्गात् परस्य तवर्गस्य सस्य च किं कार्यमुक्तमित्यर्थ । टवर्गादुत्तरस्य तवर्गस्य सकारस्य च टवर्गषकारावेव प्राप्नुत इत्याह—टवर्गषकारौ इति । षट्तयम्—षड् अवयवा अस्य तदित्यर्थ, षष्शब्दात् "अवयवात्तयट्" ७।१।१५१। इति तयटि, षस्य तृतीयत्वे, तस्य प्रथमत्वे, "तवर्गस्य०"इति तकारस्य टकारोऽनेन प्रतिषिध्यते । मधुलिट् तरति—मधु लेढि इति विग्रहे, क्विप्, हो हस्य ढत्वे, तस्य तृतीयत्वे च तस्य प्रथमत्वेऽनेन निषेध । एवमन्यत्रापि । षण्नयाः—अत्र डकारस्य "तृतीयस्य०" इति णत्वे तस्मात् परस्य नस्य पूर्वेण टवर्गयोगे प्राप्तं णत्वमनेन निषिध्यते । मधुलिट् सीदति—अत्र "सस्य शषौ" इति सकारस्य षकार प्राप्तोऽनेन प्रतिषिध्यते । एव मधुलिट् साये इत्यादि । चतुष्टयम्—चत्वारोऽवयवा अस्य तदित्यर्थ, "अवयवात्तयट्" इति तयटि पदान्तरेफस्य "चटते०"इति सकारे तस्य "नाम्यन्तस्था०" २।३।१५। इति षकारस्तेन योगे तकारस्य "तवर्गस्य०"इति टकार, अनेन निषेधस्तु न, टवर्गादित्युक्ते षकारात् प्रतिषेधाभाव । सर्पिष्ष्म्—

किम्? ईट्टे । अनाम्नगरीनवतेरिति किम्? षण्णाम्, षण्णगरी; षण्णवतिः । नामित्याऽऽमादेशस्य ग्रहणादिह प्रतिषेधो भवत्येव–षड्नाम ॥ ६३ ॥

## षि तवर्गस्य ॥ १ । ३ । ६४ ॥

पदान्ते वर्तमानस्य तवर्गस्य स्थाने षकारे परे यदुक्तं तन्न भवति, किमुक्तम्? टवर्गः । तीर्थकृत् षोडशः शान्तिः, भवान् षण्डः । षीति किम्? तट्टीकते । तवर्गस्येति किम्? सर्पिष्षु ॥ ६४ ॥

## लि लौ ॥ १ । ३ । ६५ ॥

पदान्ते वर्तमानस्य तवर्गस्य स्थाने लकारे परे स्थान्यासन्नावनुनासिकाननुनासिकौ लकारौ भवतः । तल्लुनाति, भवाल्ँलुनाति । "आसन्नः" ॥ ७ । ४ । १२० ॥ इत्येव सिद्धे द्विवचनमन्यत्राऽनुनासिकस्यापि स्थानेऽननुनासिकार्थम्, तेन "वाष्टन आः स्यादौ" ॥ १ । ४ । ५२ ॥ इत्यादावननुनासिक एव भवति ॥ ६५ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां श्रीसिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनतत्त्वप्रकाशिकावृत्तौ प्रथमस्याध्यायस्य तृतीयः पादः समाप्तः ॥ ३ ॥

**चक्रे श्रीमूलराजेन नवः कोऽपि यशोऽर्णवः ।**
**परकीर्तिस्रवन्तीनां न प्रवेशमदत्त यः ॥ ३ ॥**

---

एव सर्पिषो भाव इति विग्रहे त्वे रूपम् । **ईट्टे**—अत्र पदान्तात्टवर्गात् परत्वाभावात्तकारस्यानेन टकारनिषेधो न भवति । **षण्णाम्**—षष आम· "संख्यानां र्ष्णाम्" १।४।३३। इति नामादेशे षकारस्य डकारे तस्यानुनासिके "तवर्गस्य०"इति नाम्नो नकारस्य णत्वम्, प्रतिषेधाभावस्तु 'अनाम्नगरीनवतेरि'ति वचनात् । **षण्णगरी**—षण्णां नगराणामिति समाहार, "द्विगोः समाहारात्" २।४।२२। इति ङ्या अनुनासिके, "तवर्गस्य०"इति णत्व, प्रतिषेधाभावात् । **षण्णवति·**—षड्भिरधिका नवतिरित्यर्थ, अत्र य आमादेशो नाम् तस्यैवार्थवत्वात् 'प्रत्ययाप्रत्यययो प्रत्ययस्यैवे'ति न्यायाद्वा ग्रहणमित्याह—**नामित्यामादेशस्य** इत्यादिना । **षड्नाम**–अत्र भवन्तस्य घञन्तस्य च नमतेरव्ययो नाम् इति प्रतिषेधो "पदान्तात्०" इति भवत्येव ॥ ६३ ॥

**षि तवर्गस्य** । अत्र पदान्तादित्यनुवृत्त 'अर्थवशाद्विभक्तिपरिणाम' इति न्यायेन षष्ठ्यन्ततया विपरिणम्यते, न इत्यनुवर्तते, पदान्तस्य तवर्गस्य षि न इत्यन्वयस्तदर्थमाह—**पदान्ते वर्तमानस्य** इत्यादिना । षकारे परे तवर्गस्य टवर्ग एव प्राप्नोतीति प्रश्नपूर्वकमाह—**किमुक्तम्** इत्यादि । समाधत्ते—**टवर्ग** इति । **तीर्थकृत् षोडशः शान्तिः**-तीर्थं करोतीति क्विपि, तागमे तीर्थकृत्, षोडश—"एकादश०" ३।२।९१। इति निपातनात् भवति, अत्र तवर्गस्य टवर्गो न भवति षकारयोगेऽनेन प्रतिषेधात् । **भवान् षण्डः**–अत्र तवर्गस्य न टवर्गोऽनेन प्रतिषेधात् । **तट्टीकते**–अत्र तवर्गस्येति टत्व नानेन निषिध्यते, षकारे परेऽभावात् । **सर्पिष्षु**–सर्पिस् सु इति स्थिते "सो रु"इति रुत्वे पदान्तरेफस्य "शषसे शषसं वा" इति सत्वे, "नाम्यन्तस्था०" इति सुप षत्वे, "तवर्गस्य०"इति वचनात् प्रतिषेधाभावात् प्रकृतिसकारस्य "सस्य शषौ" इति षकार ॥ ६४ ॥

**लि लौ** । पदान्त इति तवर्गस्येति चानुवर्तते, पदान्तस्य तवर्गस्य लि लौ इत्यन्वयस्तदर्थमाह—**पदान्ते वर्तमानस्य** इत्यादिना । **तल्लुनाति, भवाल्ँलुनाति**–तद्लुनाति, भवान् लुनाति इति स्थितेऽनुनासिकाननुनासिकौ लकारौ भवत । अथ किमर्थं सूत्रे लौ इति द्विवचन भवाल्ँलुनातीत्यादौ अनुनासिकस्य तवर्गस्य स्थानेऽनुनासिको लकारो यथा स्यादित्येवमर्थम्, यद्येव न कर्तव्य, ल इति सामान्यमात्रोपादानेऽपि "आसन्न" इत्यनुनासिकस्य स्थानेऽनुनासिकोऽननुनासिकस्य चाऽननुनासिको लकारो भविष्यतीत्याह–**"आसन्न."** ७।४।१२०। **इत्येव सिद्धे** इत्यादिना । **द्विवचनम्**–लौ इति द्विवचनमितिभाव । **अन्यत्र**–एतद्व्यतिरिक्तस्थले । **आसन्न इत्येव सिद्धे द्विवचनम्** किमर्थं? इति पूर्वपक्ष । समाधत्ते—**अन्यत्रानुनासिकस्यापि स्थानेऽननुनासिकार्थम्**–द्विवचनमिति शेष । ज्ञापनफलमाह–**तेन** इत्यादि । **अननुनासिक एव** इति । विपरीतनियमस्तु निरनुनासिकस्य सानुनासिक इति "हृदयस्य हृल्लस०" ३।२।९४। इत्यत्र हृल्लसेति करणान्न भवति, अन्यथा हृल्ँलस इत्यनिष्ट स्यात् । प्रायिक चैतज्ज्ञापकम्, तेन "समानानां तेन दीर्घ" इत्यादौ "आसन्न" एव भवतीति ॥ ६५ ॥

**चक्रे** इत्यादि । **श्रीमूलराजेन**–तन्नाम्ना भूपतिना, **नवः**–अभिनव, **क· अपि**–अनिर्वचनीयोऽपि, **यशोऽर्णव·**–कीर्तिनदीपति, **चक्रे**–निर्ममे । मूलराजमहीपतेर्यशोऽर्णवस्यानिर्वचनीयत्वे हेतुमाह–**य** इत्यादि । **य·**–पूर्वोक्तस्तस्य नृपस्य यशोर्णव, **परकीर्तिस्रवन्तीना**–वैरिभूपालकीर्तिनिम्नगानां, **प्रवेशं**–सगम, **न अदत्त**–न ददातित्यर्थ । अयभाव –जगति विश्रुतस्य महोदधेर्नदनदीपतित्वमन्यासां नदीनां सगमेन, अस्य तु भूपतेर्यशोजलधेर्जलधित्वमन्यकीर्तिनदीप्रवेशादानेन इति ततो महद्वैलक्षण्यमस्य यशोऽर्णवस्येति तत्त्वम् ॥ ३ ॥

इति श्रीमत्तपागच्छगगनाहर्मणिगीतार्थसार्वभौमाऽऽगमोद्धारकशैलानानृपतिपरिपूजितपादारविन्दआगमोदयसमिति–वर्द्धमानजैनागममंदिरायनेकशासनहितवर्धकसस्थानिर्माणोपदेशकभट्टारककुलमूर्द्धन्यश्री **१००८ आनंदसागरसूरीश्वराणां** साम्राज्ये तच्चरणनिलीनमानसेनानवासनवपदपीयूषपानोद्यतभव्यभावभावोद्बोधसूर्योदयश्रीसिद्धचक्र–नवपदाराधकसमाजादिविविधसस्थासस्थापकेन श्रीवर्द्धमानतपोनिष्णातेन श्रीसिद्धचक्राराधन–तीर्थोद्धारकेण वैयाकरणकेसरिणा **पन्न्यासप्रवरश्रीचन्द्रसागरगणीन्द्रेण** विरचितायां श्रीसिद्धहेमचन्द्रसूत्रवृत्तिन्यासरत्नाकरावतारिकायामाऽऽ**नन्दबोधिन्यां** प्रथमस्याध्यायस्य व्यञ्जनसंधिप्रकरण नाम तृतीय पाद ॥३॥

---

किम्? ईट्टे । अनाम्नगरीनवतेरिति किम्? षण्णाम्, षण्णगरी; षण्णवतिः । नामित्याऽऽमादेशस्य ग्रहणादिह प्रतिषेधो भवत्येव-षड्नाम ॥ ६३ ॥

## षि तवर्गस्य ॥ १ । ३ । ६४ ॥

पदान्ते वर्तमानस्य तवर्गस्य स्थाने षकारे परे यदुक्तं तन्न भवति, किमुक्तम्? टवर्गः । तीर्थकृत् षोडशः शान्तिः, भवान् षण्ढः । षीति किम्? तट्टीकते । तवर्गस्येति किम्? सर्पिष्षु ॥ ६४ ॥

## लि लौ ॥ १ । ३ । ६५ ॥

पदान्ते वर्तमानस्य तवर्गस्य स्थाने लकारे परे स्थान्यासन्नावनुनासिकाननुनासिकौ लकारौ भवतः । तल्लुनाति, भवाँल्लुनाति । "आसन्नः" ॥ ७ । ४ । १२० ॥ इत्येव सिद्धे द्विवचनमन्यत्राऽनुनासिकस्यापि स्थानेऽननुनासिकार्थम्, तेन "वाष्टन आः स्यादौ" ॥ १ । ४ । ५२ ॥ इत्यादावननुनासिक एव भवति ॥ ६५ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां श्रीसिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनतत्त्वप्रकाशिकावृत्तौ प्रथमस्याध्यायस्य तृतीयः पादः समाप्तः ॥ ३ ॥

**चक्रे श्रीमूलराजेन नवः कोऽपि यशोऽर्णवः ।**
**परकीर्तिस्रवन्तीनां न प्रवेशमदत्त यः ॥ ३ ॥**

---

एव सर्पिषो भाव इति विग्रहे त्वे रूपम् । **ईट्टे**—अत्र पदान्ताट्टवर्गात् परत्वाभावात्तकारस्यानेन टकारनिषेधो न भवति । **षण्णाम्**—षष आम॰ "सख्याना ष्णीम्" १।४।३३। इति नामादेशे षकारस्य डकारे तस्यानुनासिके "तवर्गस्य॰"इति नाम्नो नकारस्य णत्वम्, प्रतिषेधाभावस्तु 'अनाम्नगरीनवतेरि'ति वचनात् । **षण्णगरी**—षण्णां नगराणामिति समाहार, "द्विगो समाहारात्" २।४।२२। इति ङ्या अनुनासिके, "तवर्गस्य॰"इति णत्व, प्रतिषेधाभावात् । **षण्णवति**—षड्भिरधिका नवतिरित्यर्थं, अत्र य आमादेशो नाम् तस्यैवार्थवत्त्वात् 'प्रत्ययाप्रत्यययो प्रत्ययस्यैवे'ति न्यायाद्वा ग्रहणमित्याह—**नामित्यामादेशस्य** इत्यादिना । **षड्नाम**—अत्र षन्नन्तस्य षनन्तस्य च नमतेरवयवो नाम् इति प्रतिषेधो "पदान्तात्॰" इति भवत्येव ॥ ६३ ॥

**षि तवर्गस्य** । अत्र पदान्तादित्यनुवृत्त 'अर्थवशाद्विभक्तिपरिणाम' इति न्यायेन षष्ठ्यन्ततया विपरिणम्यते, न इत्यनुवर्त्तते, पदान्तस्य तवर्गस्य षि न इत्यन्वयस्तदर्थमाह—**पदान्ते वर्तमानस्य** इत्यादिना । षकारे परे तवर्गस्य टवर्ग एव प्राप्नोतीति प्रश्नपूर्वकमाह—**किमुक्तम्** इत्यादि । समाधत्ते—**टवर्ग** इति । **तीर्थकृत् षोडशः शान्तिः**-तीर्थं करोतीति क्विपि, तागमे तीर्थकृत्, षोडश—"एकादश॰" ३।२।९१। इति निपातनात् भवति, अत्र तवर्गस्य टवर्गो न भवति षकारयोगेऽनेन प्रतिषेधात् । **भवान् षण्ढ**-अत्र तवर्गस्य न टवर्गोऽनेन प्रतिषेधात् । **तट्टीकते**-अत्र तवर्गस्येति टत्व नानेन निषिध्यते, षकारे परेऽभावात् । **सर्पिष्षु**-सर्पिस् सु इति स्थिते "सो रु"इति रुत्वे पदान्तरेफस्य "शषसे शषस वा" इति सत्वे, "नाम्यन्तस्था॰" इति सुप षत्वे, "तवर्गस्य॰"इति वचनात् प्रतिषेधाभावात् प्रकृतिसकारस्य "सस्य शषौ" इति षकार ॥ ६४ ॥

**लि लौ** । पदान्त इति तवर्गस्येति चानुवर्तते, पदान्तस्य तवर्गस्य लि लौ इत्यन्वयस्तदर्थमाह—**पदान्ते वर्तमानस्य** इत्यादिना । **तल्लुनाति, भवाँल्लुनाति**-तद्लुनाति, भवान् लुनाति इति स्थितेऽनुनासिकाननुनासिकौ लकारौ भवत । अथ किमर्थं सूत्रे लौ इति द्विवचन भवाँल्लुनातीत्यादौ अनुनासिकस्य तवर्गस्य स्थानेऽनुनासिको लकारो यथा स्यादित्येवमर्थम्, यद्येव न कर्तव्य, ल इति सामान्यमात्रोपादानेऽपि "आसन्न" इत्यनुनासिकस्य स्थानेऽनुनासिकोऽननुनासिकस्य चाऽननुनासिको लकारो भविष्यतीत्याह—"**आसन्न**" ७।४।१२०। **इत्येव सिद्धे** इत्यादिना । **द्विवचनम्**—लौ इति द्विवचनमितिभाव । **अन्यत्र**-एतद्व्यतिरिक्तस्थले । **आसन्न इत्येव सिद्धे द्विवचनम्** किमर्थं? इति पूर्वपक्ष । समाधत्ते—**अन्यत्रानुनासिकस्यापि स्थानेऽननुनासिकार्थम्**-द्विवचनमिति शेष । ज्ञापनफलमाह—**तेन** इत्यादि । **अननुनासिक एव** इति । विपरीतनियमस्तु निरनुनासिकस्य सानुनासिक इति "हृदयस्य हृल्लास॰" ३।२।९४। इत्यत्र हृल्लासेति करणान्न भवति, अन्यथा हृल्लाँस इत्यनिष्ट स्यात् । प्रायिक चैतज्ज्ञापकम्, तेन "समानानां तेन दीर्घ" इत्यादौ "आसन्न" एव भवतीति ॥ ६५ ॥

चक्रे इत्यादि । **श्रीमूलराजेन**-तन्नाम्ना भूपतिना, **नव**-अभिनव, **कः अपि**-अनिर्वचनीयोऽपि, **यशोऽर्णवः**-कीर्तिनदीपति, **चक्रे**-निर्ममे । मूलराजमहीपतेर्यशोऽर्णवस्यानिर्वचनीयत्वे हेतुमाह—**य** इत्यादि । **य**-पूर्वोक्तस्य नृपस्य यशोर्णव, **परकीर्तिस्रवन्तीनां**-वैरिभूपालकीर्त्तिनिम्नगानां, **प्रवेशं**-संगम, **न अदत्त**-न ददावित्यर्थ । अयभाव -जगति विश्रुतस्य महोदधेर्नदनदीपतित्वमन्यासा नवीना सगमेन, अस्य तु भूपतेर्यशोजलधेर्जलधित्वमन्यकीर्तिनदीप्रवेशादानेन इति ततो महद्वैलक्षण्यमस्य यशोऽर्णवस्येति तत्त्वम् ॥ ३ ॥

इति श्रीमत्तपागच्छगगनाह्मर्मणिगीतार्थसार्वभौमाऽऽगमोद्धारकशैलानाधिपतिपरिपूजितपादारविन्दआगमोदयसमिति-वर्द्धमानजैनागममन्दिरायनेकशासनहितवर्धकसंस्थानिर्माणोपदेशकभट्टारककुलमूर्द्धन्यश्री **१००८ आनंदसागरसूरीश्वराणा** साम्राज्ये तच्चरणनिलीनमानसेनानवासनवपदपीयूषपानोद्यतभव्यभावभावोद्बोधसूर्योदयश्रीसिद्धचक्र-नवपदाराधकसमाजादिविविधसस्थासस्थापकेन श्रीवर्द्धमानतपोनिष्णातेन श्रीसिद्धचक्राराधन-तीर्थोद्धारकेण वैयाकरणकेसरिणा **पन्न्यासप्रवरश्रीचन्द्रसागरगणीन्द्रेण** विरचितायां श्रीसिद्धहेमचन्द्रसूत्रवृत्तिन्यासरत्नाकरावतारिकायामाऽऽनन्दबोधिन्या प्रथमस्याध्यायस्य व्यञ्जनसन्धिप्रकरण नाम तृतीय पाद ॥३॥

---

अत इत्येव ? मुनिभिः, शालाभिः; दृषद्भिः । स्यादेरित्येव ? चैत्रभिस्सा, ओदनभिस्सा ॥ २ ॥

## इदमदसोऽक्येव ॥ १ । ४ । ३ ॥

इदम् अदस् इत्येतयोरक्येव सत्यकारात् परस्य भिस ऐस् भवति । इमकैः, अमुकैः । अक्येवेति किम् ? एभिः, अमीभिः । पूर्वेणैव सिद्धे नियमार्थमिदम्, एवकारस्त्विष्टावधारणार्थः ॥ ३ ॥

## एद्बहुस्भोसि ॥ १ । ४ । ४ ॥

बह्वर्थविषये सकारादौ भकारादावोसि च स्यादौ परेऽकारस्य एकारादेशो भवति । एषु, एषाम्, अमीषाम्, सर्वेषाम्, एभिः, एभ्यः, वृक्षेभ्यः, श्रमणयोः, सयतयोः । बहिति किम् ? वृक्षस्य, वृक्षाभ्याम् । स्भोसीति किम् ? सर्वे । अत इत्येव ? साधुषु, साधुभ्यः, खट्वासु, खट्वाभ्यः, अग्न्योः; दृषदोः ॥ ४ ॥

## टाङसोरिनस्यौ ॥ १ । ४ । ५ ॥

अकारात् परयोः टाङसोः स्याद्योः स्थाने यथासङ्ख्यं इन स्य इत्येतावादेशौ भवतः । वृक्षेण, अतिजरेण, वृक्षस्य; अतिजरस्य । अत इत्येव ? अतिजरसा, अतिजरसः—अत्र परत्वान्नित्यत्वाच्च प्रागेव जरसादेशे कृते अकारान्तत्वाभावः, अन्ये

---

स्त्वयोर्द्विमात्रत्वाविशेषादिति भाव । गोनर्दीय आह—इष्टमेवैतत्सगृहीत भवति, अतिजरैरिति भवितव्यम्, सत्यामेतस्या परिभाषायां 'सनिपात लक्षण०' इत्यादि "जराया जरसन्यतरस्याम्" पा० ७।२।१०१। इति सूत्रे भाष्ये तदुक्त । गोनर्द(गोंडा)देशवासी स एवेति सनामग्राहमुल्लिख्य स्वेष्टत्व ध्वनयति । अत इत्यनुवृत्तिफलमाह—**अत इत्येव ? मुनिभिः**—अत्रेकाराद् परस्य भिस ऐस्त्व न भवति । **शालाभिः**—दीर्घाकाराद् परस्य भिस ऐस्त्वन्न । **दृषद्भिः**—व्यञ्जनात् परस्य भिसो न भवत्यैस्त्वम् । स्यादेरित्यधिकारप्रयोजनमाह—**स्यादेरित्येव ? चैत्रभिस्सा, ओदनभिस्सटा** इति । 'प्सांक्' भक्षणे, धातोरभिपूर्वात् "उपसर्गादात" ५।३।११०। इत्यङि पृषोदरादित्वादभेरकारलोपे परस्य सकारे, आपि, एकत्र टागमे भिस्सा भिस्सटा इति भवतस्तत चैत्रौदनयो समास, अत्र स्याद्यधिकाराभाव भिस् स्यादेरिति । ननु विनापि स्याद्यधिकार 'अर्थवद्ग्रहणे नानर्थकस्य' इति न्यायाद् भिस्साभिस्सटाशब्दयोरेकदेशस्य भिसोऽनर्थकत्वादैस् न भविष्यति, सत्यम्, अविच्छेदार्थं स्याद्यधिकार स चेह्यानुवर्तमान 'अर्थवद्ग्रहणे नानर्थकस्य' इत्येतन्न्यायानपेक्ष विशिष्टस्यैव भिस ऐसादेश नियमयतीत्येतदर्थं नायमपेक्षणीय इति । अपेक्ष्यमाणश्च न्यायो गौरवमादधाति अनित्यश्चेति ॥ २ ॥

**इदमदसोऽक्येव** । अत्र भिस ऐस् अत इति चानुवर्तते । **इदमदस** इति समाहारद्वन्द्वान्ङस् । इदमदसोऽक्येवातो भिस ऐस् इत्यन्वयस्तदर्थमाह—**इदम्, अदस् इत्येतयो** इत्यादिना । **इमकैः, अमुकैः**—इदम्अदस्शब्दाभ्यां भिसि "आद्वेर" २।१।४१। इत्यत्वे, "लुगस्यादेत्यपदे" २।१।११३। इत्यकारलोपे, "त्यादिसर्वादे स्वरेष्व०" ७।३।२९। इत्यकि, "दो म स्यादौ" २।१।३९। इति "मोऽवर्णस्य" २।१।४५। इति च दस्य मत्वे, "मादुवर्णोऽनु" २।१।४७। इत्युत्वेऽनेन भिस ऐस्त्वे, "ऐदौत् सन्ध्यक्षरै" १।२।१२। इत्यैत्वम् । **अक्येवेति किम् ?** नियमस्य किं प्रयोजनमित्यर्थ । **एभिः**—इदमो भिसि "अनक्" २।१।३६। इत्यदादेशे, "एद्बहुस्भोसि" इत्येत्वम्, अत्रानेन नियमेन भिस ऐस्त्व पूर्वेण प्राप्तं न भवति । **अमीभिः**—अदस्शब्दाद्भिसि "आद्वेर" इत्यत्वे, "मोऽवर्णस्य" इति दस्य मत्वेऽनेन नियमेन भिस ऐस्त्वाभावे "एद्बहुस्भोसि" इत्येत्वे, "बहुष्वेरी" २।१।४९। इतीकार । **पूर्वेणैव सिद्धे** इत्यादि । अयमाशय —इमकैरमुकैरित्यत्र "भिस ऐस्" इत्यनेनैस्त्वे 'सिद्धे सत्यारम्भो नियमार्थ' इति न्यायेन सूत्रमिदमिदमदसोऽकि सत्येवैस् इति नियमयति, नियमफल प्रागुपदर्शितम् । ननु तेन न्यायेनावधारणस्य लब्धत्वात्तदर्थ एवकारोऽनर्थक इत्याह—**एवकारस्तु** इत्यादि । अयमर्थ —अक्येवेत्यत्रैवकारमन्तरेण इदमदस एवेत्यपि नियम स्यात् स चानिष्ट इति, तत तकैर्विश्वकैरित्यादि सिद्धमन्यथा इदमदस एव अकि ऐस्त्वेऽत्र तदभाव स्यात् । **इष्टावधारणार्थ** इति । इष्टस नियमस्य अवधारणायेत्यर्थ ॥ ३ ॥

**एद्बहुस्भोसि** । सश्च भश्च स्भौ बहुषु स्भौ बहुस्भौ च ओस् च इत्यनयो समाहारस्तत सप्तम्या एकवचनम् । अत इति स्यादाविति चानुवर्तते, बहुस्भोसि स्यादौ अत एत् इत्यन्वयस्तदर्थमाह—**बह्वर्थविषये** इत्यादि । **सकारादौ** इत्यत्र "सप्तम्या" आदिरित्यादिपदयोगस्थिस्सा । **एषु, एषाम्**—इदम्शब्दात् सप्तमीबहुवचने षष्ठीबहुवचने च एकत्र "अवर्णस्याम साम्" १।४।१५। इति नामपवादसामादेशे, "अनक्" इत्यदादेशे, "एद्बहुस्भोसि" इत्येत्वे, "नाम्यन्तस्था०" इति षत्वम् । **अमीषाम्**—अदस्शब्दादामि अत्वादौ सामादेशेऽनेन एत्वे ईत्वे न षत्वम् । **सर्वेषाम्**—सर्वशब्दादामि सामादेशेऽनेन एत्वे षत्वम् । **एभिः**—इदमो भिसि अदादेशेऽनेनैत्वम् । **एभ्यः**—इदम्शब्दाद्भ्यसि अने नैत्वम् । एव **वृक्षेभ्य** इत्यादि । **श्रमणयोः**—श्रमणशब्दात् षष्ठीसप्तम्योर्द्विवचने ओसि एत्वे चायादेश । एव **संयतयो**रित्यादि । **वृक्षस्य**—वृक्षशब्दात् "टाङसो०" १।४।५। इत्यनेन ङस स्याऽऽदेश, **वृक्षाभ्याम्**—एव भ्यामि "अत आ स्यादौ०" इत्याकार, अनयोर्बह्वर्थविषयसकाराद्यभावादेत्वाभाव । **सर्वे**—सर्वशब्दाज्जसि "जस इ" १।४।९। इति जस इकारादेशे "अवर्णस्येवर्णादिना०" इत्येदादेश, अत्र बह्वर्थविषये स्वरादिस्यादेर्वर्तमानत्वेन सकाराद्यभावादेत्वाभाव । अत इत्यधिकारात् साधुष्वित्यादौ उकारस्य बह्वर्थविषयसकारादावप्येत्व न भवति, अत आह—**अत इत्येव ? साधुषु**—साधुशब्दात् सुपि षत्वेऽनेन न भवत्येत्वम् । **साधुभ्यः**—साधुशब्दाद् भ्यसि बह्वर्थविषयभकारादौ स्यादौ परेऽकाराभावान्नैत्वम् । **खट्वासु**—आबन्तात् खट्वाशब्दात् सप्तमीबहुवचने सकारादौ स्यादौ परे आकारस्य एत्व न भवति । एव भ्यसि—**खट्वाभ्य** । **अग्न्यो**—अग्निशब्दात् षष्ठीसप्तम्योर्द्विवचने "इवर्णादे०" इति यत्वम्, **दृषदोः**—दृषद्शब्दादोसि रूपम्, अनयोरोसि प्रत्यये परे इकारस्य एकत्र व्यञ्जनस्य च सत्त्वेन एत्वं न भवति ॥ ४ ॥

**टाङसोरिनस्यौ** । अत इति स्यादौ इति चानुवर्तते । टा च ङस् च इत्यनयोर्द्वन्द्वात् षष्ठ्या द्विवचनम्—**टाङसोरि**ति । **इनस्यौ** इति द्वन्द्व कृत्वा तत प्रथमाद्विवचनम् । अत स्याद्यो टाङसो इनस्यौ इत्यन्वयस्तदर्थमाह—**अकारात्** इत्यादिना । आदेशाऽऽदेशिनो समसङ्ख्यकात्वेन यथासङ्ख्यलाभ इत्यत आह—**यथासंख्यम्** इति । **वृक्षेण**—वृक्षशब्दात् टायामनेन इनादेशे "अवर्णस्ये०" इति एत्वे च णत्वम् । एवमति**जरेण** । **वृक्षस्य**—अत्र ङस स्याऽऽदेश । **एवमतिजरस्य** । अत इत्यनुवर्तनादाह—**अत इत्येव ?** इति । **अतिजरसा, अतिजरस** इति । अतिजरशब्दात् टाङसोरिनस्यौ कुतो न भवत इत्याह—**अत्र परत्वात्** इत्यादिना । अयमर्थ —वृक्षेण, वृक्षस्य, जरसावित्यादौ "टाङसोरिनस्यौ" इति

तु प्रागेवेनाऽऽदेशे संनिपातलक्षणन्यायस्यानित्यत्वाश्रयणात् पश्चाज्जरसादेशं चेच्छन्तोऽतिजरसिनेत्यपि मन्यन्ते ॥ ५ ॥

## ङेङस्योर्यातौ ॥ १ । ४ । ६ ॥

अकारात् परयोर्ङे ङसि इत्येतयोर्यथासंख्यं य आत् इत्येतावादेशौ भवतः । वृक्षाय, वृक्षात्, अतिजराय, अतिजरात् । अत इत्येव ? अतिजरसे, अतिजरसः । केचित्तु प्रागेवादादेशे जरसादेशमिच्छन्तोऽतिजरसादित्यपि मन्यन्ते ॥६॥

## सर्वादेः स्मैस्मातौ ॥ १ । ४ । ७ ॥

सर्वादेरकारान्तस्य संबन्धिनोर्ङेङस्योर्यथासंख्यं स्मै स्मात् इत्येतावादेशौ भवतः । सर्वस्मै, परमसर्वस्मै; सर्वस्मात्, परमसर्वस्मात्; असर्वस्मै, असर्वस्मात्; किंसर्वस्मै, किंसर्वस्मात्, एवं विश्वस्मै, विश्वस्मात् । उभशब्दस्य द्विवचन-

---

"जरसो वा" इति नाम्योऽर्थावर्णत्वादी जरसादो च युगपत्प्राप्त्या स्पर्धसम्भवात् परत्वात् कृतेऽपि प्रातिरकृतेऽपि च प्राप्तिरिति कृताकृतप्रसङ्गित्वान्नित्यत्वाच्च प्रागेव जरसादेशे कृतेऽकारान्तत्वाभावादिनादेशाभाव इति । अत्र विषये वृत्तिकृदुत्प्रेक्षितं मतान्तरमाह—अन्ये तु–आचार्यमतानुसारिणः । "टाङसोरिनस्यौ" इति सूत्रे नाऽऽदेशविधानेनैव वृक्षेणेत्यादिरूपसिद्धौ इनादेशविधानेन प्रमाणसिद्धमित्यादिमत पाणिनीयानुसारिभिरुक्तं तत् मतान्तराभ्यां प्रदर्शितम्, भाष्यकैयटानुसारीति जयादित्यहरदत्ताभ्यां स्पष्टीकृतम्, मुख्यत इदं मतं वामनस्यैव धारणीयम् । परन्तु श्लोकवार्ती "एद्वहुस्भोसि" इत्यत्र टाग्रहणाप्रक्षेपात् । प्रागेव–जरसादेशादित्यादि । ननु सत्यां सन्निपातपरिभाषायां कृते इनादेशे कथं जरस् इत्याह—सनिपातलक्षणन्यायस्यानित्यत्वाश्रयणात्–ईदृशमिनादेशस्य पश्चाज्जरसादेशप्रवृत्तौ ॥ ५ ॥

ङेङस्योर्यातौ । अकारात् इत्यनुवर्तते, अत ङेङसो यातौ इत्यन्वयसूत्रदयमाह—अकारात् परयोर्ङेङसोः इत्यादिना । वृक्षाय–वृक्षशब्दात् ङेप्रत्यये सत्यनेन यादेशे "अत आः स्यादौ०" इत्यात्वे च "समानानां०" इति दीर्घे । वृक्षात्–एवं तत एव ङसौ प्राप्तेऽनेनात्वादेशे दीर्घे । अतिजराय, अतिजरात्–अत्र जरसादेशस्य वैकल्पिकत्वेन तदभावेऽकारान्तत्वात् ङेङस्योर्यातौ भवतः । अत इत्यधिकारफलमाह—अत इत्येव ? अतिजरसे, अतिजरसः–अतिजरशब्दात् ङेङसौ स्वरादित्वेन परत्वान्नित्यत्वाच्च यादात्वादेशात् प्रागेव जरसादेशेऽकारान्तत्वाभाव । वृत्तिकृदुत्प्रेक्षितं मतान्तरमाह—केचित्तु–पाणिनिसूत्रानुसारिणः, काशिकाकृन्मतमित्यनुपदमेव स्पष्टीकृतम्, अयमभिप्रायस्तेषाम्–परिशेष विभाषायां आदिभागसामर्थ्यात् प्रागेव जरसादेशात् ङसेरादादेशे स्वरादित्वाज्जरसादेशे च अतिजरसादिति मन्यन्ते, अन्यथाऽकारोपदेशमेव कुर्यात्, न च अतिजर इत्यत्र "लुगस्यादेत्यपदे" इति अकारलोपे वृक्षादित्यायसिद्धौ कथमादिविधानमतिजरसादित्यर्थमिति वाच्यम्, तथा सति न इति शक्तिभाग आदिधानं "लुगस्या०" इति बाधकमेव सति "समानानां०" इति दीर्घे वृक्षादित्यादिसिद्धेः । तथा चादिति करणसामर्थ्यादतिजरसादिति सिद्ध्यर्थं मतान्तरे । एतेन सम्मतमतिरपि सूचिता ॥ ६ ॥

सर्वशब्दात् चतुर्थ्येकवचने पञ्चम्येकवचने च "ङेङस्योर्यातौ" इति प्राप्ते विशेषमाह–सर्वादेः स्मैस्मातौ । अत इति ङेङसोरिति चानुवर्तते, सर्वादेरतो ङेङसोः स्मैस्मातौ इत्यन्वयसूत्रदर्थमाह—सर्वादेरिति । सर्वशब्द आदिर्यस्य स सर्वादिरिति बहुव्रीहिः । ननु बहुव्रीहेरन्यपदार्थप्रधानत्वात् सर्वशब्दस्य च समाससंनिविष्टपदार्थत्वादन्यपदार्थत्वाभावाद्विश्वादिशब्दानामेव सर्वादिशब्देन बहुव्रीहिणावगमात् सर्वादिकार्यं स्यात्तु सर्वशब्दस्य, यथा–चित्रगुरानीयतामित्युक्ते स्वामिन एवानयनं न तु गवां, न च वाच्यं यथा चित्रा गावो या अस्येति गवो विशेष्यत्व प्रवृत्तश्च विशेषणत्वमवगम्यते तथेहाप्यवगस्यते इति, तदर्थे बहुव्रीहेरनेवपणीयत्वात्, यदा हि स्वामिनः प्राधान्यं गवां विशेषणभावस्तदा बहुव्रीहिरेव एव चित्रा गावो यस्य स चित्रगुरिति गवां स्वामिनः प्राधान्यं प्रदर्श्यते, तस्मात् सर्वशब्दसंग्रहार्थं बहुव्रीहितत्पुरुषयोरेकशेष आश्रयितव्याऽऽश्रयितव्या, तत्र तत्पुरुषार्थं–सर्वस्यादिरिव सर्वादिरित्यादिशब्द उपादीयते नान्यस्य प्रयोजनान्तरमस्ति । तथा च–कर्मधारय बहुव्रीहिश्च सर्वादिशब्दस्य कृत्वा तयोर्बहुव्रीहेः शेषे सौत्रत्वादेकवचन भविष्यति । अथवा–सर्वादेरित्यस्यावृत्त्या समीहितलाभ इति चेत्, सत्यम्, संयोगसमवायलक्षणसम्बन्धे यदा बहुव्रीहिस्तदा तद्गुणसंविज्ञान भवति–शुक्लवासा लम्बकर्ण इति । अत्र हि दण्डी विषाणी चानीयतामित्यादिवत्संयोगसमवायलक्षणेन सम्बन्धेन संबन्धिनि कार्ये विधीयमाने उपलक्षणस्याप्यन्तर्भावो भवति । सम्बन्धान्तरे तु बहुव्रीहौ तद्गुणसंविज्ञानाभावश्चित्रगुरानीयतामिति, अत्र हि स्वस्वामिभावसंबन्ध पाक्षर्य इति सविशेषोपलक्षितस्य स्वामिन एवानयनं न गवाम् । सर्वादिरित्यत्रादिशब्दोऽवयववाची–सर्वं आदिरवयवः इत्यर्थः, समवायसम्बन्धादुद्भूतावयवभेद (आरोपितावयवभेदसमूह इत्यर्थः) समुदायस्तद्गुणसंविज्ञानस्य बहुव्रीहेरर्थः, तस्य च समुदायस्य युगपत्कार्ये प्रयोगाभावात् 'आनर्थक्यात्तदङ्गेषु' इति न्यायेन तदवयवेषु प्रवर्तमानं सर्वादिकार्यमविशेषात् सर्वशब्देऽपि प्रवर्तते इति युक्तं तद्गुणसंविज्ञानत्वम् । यथा–देवदत्तशालाया आढ्या आनीयतामित्युक्ते देवदत्तोऽपि यदि आढ्यो भवति स्वशालास्थश्च तदा सोऽप्यानीयत एवेति निष्प्रयोजने एकशेषापत्ती । तस्य–अन्यपदार्थस्य, गुणा–वर्तिपदार्थरूपाणि विशेषणानि, तेषां संविज्ञान–क्रियान्वयित्वेन विज्ञानं, यत्र स तद्गुणसंविज्ञान इति व्युत्पत्तिः । यत्र तु तिरोहितावयवभेदं समुदायस्तद्गुणसंविज्ञानबहुव्रीहिसमासार्थो यथा–लम्बकर्ण आनीयतामिति, सप्तोच्यते–अवयवेन विग्रहः समुदायः समासार्थः । इह तत्र समवतीति यत्र संयोगसमवायान्यतरसंबन्धेनान्यपदार्थे वर्तिपदार्थान्वयस्तत्र प्रायेण तद्गुणसंविज्ञानो बहुव्रीहिः, प्रकृते च समुदायेऽन्यपदार्थे सर्वशब्दस्य समवायान्तर्गतारोपितावयवावयविभावसम्बन्धसत्त्वात्तद्गुणसंविज्ञानत्वम् । स्वस्वामिभावादिसंबन्धेनान्यपदार्थे वर्तिपदार्थान्वये त्वतद्गुणसंविज्ञानो बहुव्रीहिः, यथा–चित्रगुमानयेत्यादावित्यन्यत्र विस्तरः । अत्रादिशब्दोऽवयववाची न व्यवस्थावाचितामतिक्रामति, उत्तरावयवानपेक्ष्य यत्र कश्चिदाद्यो भवितुमर्हति तेन गणपाठव्यवस्थिता सर्वविश्वउभउभयडित्यादयो गृह्यन्ते । नन्वेवं मध्यमस्यामवसामिति न आप्नोति, गणे पाठाभावात्, तस्मादस्तु प्रकारार्थोऽयमादिशब्दः । प्रकारार्थप्रदर्शनाय पश्चादमियुक्ता गणान् पठन्ति, यथोक्त–भेण्यादय पठ्यन्ते कृतादिराकृतिगण इति कृतादयश्च निदर्शनार्थं भगवद्वृत्तिकारैः पठिता इति, नैष दोषः, मध्यमस्यामवमस्यामिति प्रयोगस्यार्षत्वात् सिद्धेः । प्रकारार्थत्वे च सति कृत्स्नजगदादिशब्दानामपि सर्वादिकार्यप्रसङ्गात् । अत इत्यनुवृत्तस्य विशेषणत्वात्तदन्तविधिस्तदाह—अकारान्तस्य इति । सर्वस्मै–चतुर्थ्येकवचनस्य ङेप्रत्ययस्य स्मैरादेशः । परमसर्वस्मै–स्यादाक्षिप्तस्य नाम्नः सर्वादिविशेषणात् विशेषणेन च तदन्तविधेर्भावात् "न सर्वादि" १।४।१२। इति द्वन्द्वनिषेधाच्च 'ग्रहणवता नाम्ना न तदन्तविधि'रित्यनुपस्थानात् तदन्त परमसर्वस्मात्मित्युदाहृतम् । सर्वस्मात्–सर्वशब्दान्ङसे स्मादित्यादेशः । एवं परमसर्वस्मात् इति । असर्वस्मै, असर्वस्मात्–न सर्वोऽसर्वस्तस्मात् ङेङसौ स्मैस्मादादेशः । एवमन्यदपि । उभशब्दे तु विशेषमाह—उभशब्दस्य इत्यादि । अयमर्थः–उभशब्दस्य नित्यं द्विवचनविषयत्वात्

स्वार्थिकप्रत्ययविषयत्वात् स्मैप्रभृतयो न भवन्ति, गणपाठस्तु हेत्वर्थप्रयोगे सर्वविभक्त्यर्थः–उभौ हेतू २, उभाभ्यां हेतुभ्याम् ३; उभयोर्हेत्वोः २। उभयस्मै, उभयस्मात्; अन्यस्मै, अन्यस्मात्; अन्यतरस्मै, अन्यतरस्मात्, डतरग्रहणेनैव सिद्धेऽन्यतरग्रहणं डतमप्रत्ययान्तस्यान्यशब्दस्य सर्वादित्वनिवृत्त्यर्थम्–अन्यतमाय, अन्यतमं वस्त्रम्, अन्यतमे। एके त्वाहुः—'नायं डतरप्रत्ययान्तोऽन्यतरशब्दः, किन्त्वव्युत्पन्नस्तरोत्तरपदस्तरवन्तो वा'; तन्मते डतमान्तस्याप्यन्यशब्दस्य सर्वादित्वम्–अन्यतमस्मिन्। इतरस्मै, इतरस्मात्; डतरडतमौ प्रत्ययौ, तयोः स्वार्थिकत्वात् प्रकृतिद्वारेणैव सिद्धे पृथगुपादानमत्र प्रकरणेऽन्यस्वार्थिकप्रत्ययान्तानामग्रहणार्थमन्यादिलक्षणदार्थं च–कतरस्मै, कतमस्मै; यतरस्मै, यतमस्मै; ततरस्मै, ततमस्मै; एकतरस्मै, एकतमस्मै; इह न भवति–सर्वतमाय, सर्वतमात् । त्वशब्दोऽन्यार्थः–

---

सर्वादिकार्यस्य "सर्वादे स्मै स्मातौ", "ङे स्मिन्", "जस इ", "अवर्णस्याम साम्" इत्येतस्य बहुत्वैकत्वविषयत्वेन द्विवचनेऽभावात्, तद्वृत्तिविषये च उभये देवमनुष्या उभयो मणि उभयपुत्र इत्यभेदविषयस्योभयशब्दस्यैव प्रयोगात्, उभा बाहु इत्यादे "द्विदण्ड्यादि" ७।३।७५। इति सूत्रेण द्विदण्ड्यादित्वेन साधुत्वात् सर्वादौ व्यर्थ पाठ । अगर्थस्तर्हि तस्येह पाठ, अन्यया यदप्याकि के च रूपयोरभेदस्तथापि द्विवचनेऽनन्तरे श्रूयमाणे उभशब्देन साधुना भाव्य न लुप्ते नापि व्यवहिते इति प्रतिज्ञानस्य बाध स्यात्, अकज्जन्मध्यपतितत्वेन तु व्यवहितत्वाभावात्, के पुन सति पूर्वस्य द्विवचनस्य लुप्तत्वादपरस्य च केन व्यवधानात् । तत्र कविषये व्यवहितद्विवचनविषय उभशब्द साधुर्भवतीति वक्तव्य स्यादिति चेत्तदर्थोऽपि न युक्त, कस्य स्वार्थिकत्वात् 'स्वार्थिकाश्च प्रत्यया प्रकृतितोऽविशिष्टा भवन्ति' इति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणात् । वृत्तौ द्विवचनविषयत्वादित्यत्र द्विवचनशब्देन प्रत्ययो न गृह्यते, किं तर्हि? द्व्यर्थाभिधानसमर्थ इत्यर्थस्य विवक्षितत्वात् द्विवचनशब्देन स्यादिप्रत्ययाग्रहणात् स्वार्थिकत्वेन चोभार्थस्याहानात् आप्वत् वचनमन्तरेण द्विवचनपरताया सिद्धत्वात् । ननु यथा स्वार्थिकत्वेन पर्यायेणाभिधानात् कपरस्य साधुत्वमेव त्रतसूपरस्यापि साधुत्वप्रसङ्ग, नैव, त्रतसादीनां विभक्त्यर्थमात्रवचनत्वेन सर्वस्यैव भेदस्य परित्यक्तत्वादसाधुत्वमुभशब्दस्य । अत एवोच्यते पूर्ववार्तिकक्रुद्धि "उभयोऽन्यत्र", "सर्वादीनि सर्वनामानि" पा० १।१।२७। इति सूत्रे भाष्ये, उभयेति य स्वार्थिकोऽयजन्त सोऽन्यत्र प्रयुज्यते, न तु द्विवचने परत इत्यर्थ । एव तर्हि हेत्वर्थप्रयोगे "सर्वादे सर्वा" २।२।११५। इति सर्वविभक्त्यर्थ इत्याह— गणपाठस्तु इत्यादि। पाणिनीयतन्त्रे तूभशब्दपाठ सर्वविभक्त्यर्थोऽपि न कर्तव्य, 'निमित्तकारणहेतुषु सर्वासा प्रायदर्शनमि'ति वचनादित्यन्यत्र विस्तर । उभौ हेतू–उभशब्दाद्धेतुशब्दाच्चौकारे "ऐदौत् सन्ध्यक्षरे" १।२।१२। इत्यौत्त्वं "इदुतोऽस्त्रेरीदूत्" १।४।२१। इत्यूत्त्वे च सिद्धत । एवमन्यदपि। अन्यतरस्मै–अन्यतरशब्दात् ङेप्रत्ययस्य स्मैरादेश । नन्वन्यतरशब्दस्य डतरप्रत्ययान्तत्वेन सर्वादिकार्य गणपाठाभावेऽपि भविष्यति, तत्र डतरग्रहणादित्याह—डतरग्रहणेनैव सिद्धे इत्यादि। अय भाव –डतरग्रहणेनैवान्यतरशब्दस्य डतमग्रहणेनान्यतमशब्दस्यापि सर्वादित्व स्यादिति, तेन—अन्यतमाय, अन्यतमं वस्त्रं, अन्यतमे इत्यादौ स्मै दकार स्मिन्नादयो न भवन्ति। अन्ये तु डतरडतमविधावन्यशब्द न कथयन्ति तेषामयं डतरार्थ एव पाठ, अन्यतरमिति त्वन्य एवायमव्युत्पन्न इति। अपरे तु ब्रुवन्ति–अयमन्यतरशब्दो डतरान्तो न भवति निर्धारणे हि स, अनिर्धारणेऽयमव्युत्पन्न । यद्वा तरण तर अन्यश्चासौ तरश्चेति, अन्यस्तरोऽस्येति वा, द्वयो प्रकृष्टोऽन्य इति वाऽन्यतर, तन्मते डतमान्तस्यापि सर्वादित्वमस्तीत्याह—एके त्वाहुः इत्यादिना, सर्वादित्वम् इत्यन्तेन। अयं अन्यतरशब्दो न डतरप्रत्ययान्त इत्यन्वय । ननु तर्हि स कथ साधुरित्याह—किंतु अव्युत्पन्नः–डित्थादिशब्दवत्प्रकृतिप्रत्ययविभागहीन इत्यर्थ, अन्यथा तस्य व्याख्यानमाह—तरोत्तरपदः–तर उत्तरपद यस्य स इत्यर्थं । वा–अथवेति पक्षान्तरे, तरवन्तः–तरवन्ते यस्य स इत्यर्थ, साधुताप्रकारत्रिविध प्रागुपदर्शित- प्रतीकोत्थाने। तन्मते–एकेषां मते । डतमान्तस्यापि–डतमोऽन्ते यस्य स तथोक्तस्यापि। अन्यशब्दस्य–अन्यतमशब्दस्येत्यर्थ । सर्वादित्वम्–तत्सत्वे तु तत्प्रयुक्त कार्यं भवतीत्याशय । अन्यतमस्मिन्–मतान्तरेणायं साधु, स्वमते तु गणे पाठाभावात्तस्य न सिध्यति। ननु डतरडतमशब्दयो क्वापि प्रयोगादर्शनात् किमर्थस्तयो पाठ इत्यत आह—डतरडतमौ प्रत्ययौ इति। "वैकाद् द्वयोर्निर्धार्ये डतर" ७।३।५२।, "यत्तत्किमन्यात्" ७।३।५३।, "बहूनां प्रश्ने डतमश्च वा" ।७।३।५४। इति सूत्रविहितौ, तयोर्यदादिभ्यो विधीयमानयो केवलयो प्रयोगाभावात् डतरडतमग्रहण तदन्तान् प्रयोजयति। एव तर्हि स्वार्थिकत्वात् प्रकृत्यविशिष्टतया यत्तदादिप्रकृतिद्वारकमेव सर्वादित्व भविष्यति किमनयोरुपादानेनेत्याह—तयोः स्वार्थिकत्वात् इत्यादिना। तयोः–डतरडतमयो । स्वार्थिकत्वात्–प्रकृत्यर्थे जायमानत्वात् । प्रकृतिद्वारेणैव सिद्धे–यदादिप्रकृतिद्वारेणैव तयो प्रयोगार्हत्वेन तत एव सर्वादित्वं सेत्स्यति किमर्थं तयोर्गणे पृथगुपादानमित्याशय प्रश्नकर्तु । समाधत्ते—पृथगुपादानम् इत्यादिना । अत्र प्रकरणे–सर्वादिगणे । पृथगुपादानं–डतरडतमयो प्रकृतिद्वारेण सर्वादित्वे लब्धेऽपि प्रकृतेर्भिन्नोपादानम् । अन्यस्वार्थिकप्रत्ययान्तानां–डतरडतमभिन्नस्वार्थिकप्रत्ययान्तानामित्यर्थ । अग्रहणार्थम्–ग्रहणाभावाय । अय भाव –यदि हि डतरडतमयो पाठो गणे न क्रियेत तदेतरस्वार्थिकप्रत्ययान्तस्यापि सर्वादे सर्वतमायेत्यादावपि सर्वादिकार्यं स्यादिति । प्रयोजनान्तरं चाह—अन्यादि इत्यादिना । डतरडतमान्तानां "पञ्चतोऽन्यादेरनेकतरस्य द" १।४।५८। इत्यन्यादित्वेन दादेशो यथा स्यादित्येवमर्थं च डतरडतमग्रहणम्, न ह्यन्यान्यतरइतरडतरडतमेत्यपाठे पञ्चतोऽन्यादेरुच्यमानो दादेशो लभ्येत । ननु च सत्यस्मिन् प्रयोजने कथं स्वार्थिकप्रत्ययान्तानां सर्वादित्वाभावार्थं स्यात् ज्ञापकमिद, अन्यथा चानुपपद्यमान ज्ञापक भवति, न च सत्यस्मिन् प्रयोजनेऽस्यान्यथानुपपत्तिरस्ति। न च दादेशार्थमात्रत्वे दादेशविधौ डतरडतमग्रहण कर्तव्य, गणे तु करणात् स्वार्थिकप्रत्ययान्तानां सर्वादित्वाभावार्थमपि भवतीति वाच्य, गणेकरणसर्वसंज्ञायामिति विशेषणार्थं स्यात्, गुरुश्च अन्यान्यतरइतरडतरडतमस्येति निर्देश स्यादित्युच्यते–यथा स्मै स्मादाद्यर्थमपि स्यात् सर्वादित्वात्, तथा हि–यदि स्वार्थिकप्रत्ययान्ताना सर्वादित्व स्यात्तदा स्मैस्मादादेशार्थं डतरडतमोपादानमनर्थकमत स्वार्थिकप्रत्ययान्ताना सर्वादित्वाभावार्थं विज्ञायत इति तदुदाहरति—कतरस्मै, कतमस्मै–किम्शब्दात् "यत्तत्किमन्यात्" ७।३।५३। इति "बहूनां०" ७।३।५४। इति च डतरप्रत्यये डतमप्रत्यये चान्त्यस्वरादिलोपे कतरशब्दात् कतमशब्दाच्च ङेप्रत्ययस्यानेन स्मायादेश । एवं यतरस्मै इत्यादिबोध्यम्। एकतरस्मै, एकतमस्मै–एकशब्दात् "वैकाद् द्वयोर्निर्धार्ये०" ७।३।५२। इति "वैकात्" ७।३।५५। इति च डतरे डतमे च प्रत्ययेऽन्त्यस्वरादिलोपे एकतरशब्दादेकतमशब्दाच्च ङे इत्यस्य स्मायादेश । डतरडतमभिन्नस्वार्थिकप्रत्ययान्तस्य सर्वादित्वाभावात्तत्प्रयोजनमाह—इह न भवति सर्वतमाय इत्यादि। सर्वशब्दात्तमप्प्रत्यये तदन्तस्य स्वार्थिकप्रत्ययान्तस्य सर्वतमशब्दस्य प्रकृतिद्वारेण प्राप्तसर्वादित्वस्य गणे डतरडतमोपादानेन तदभावबोधनेन तत्प्रयुक्तमत्र कार्यं न भवति । त्वशब्दोऽन्यार्थः–अन्यशब्दसार्थोऽस्येत्यन्यार्थ त्वशब्द इत्यन्वय ।

बाह्येन वा योगे उपसंव्याने उपसंवीयमाने चार्थे वर्तमानो अन्तरशब्दः, न चेद् बहिर्योगेऽपि पुरि वर्तते; अन्तरस्मै गृहाय-नगरबाह्याय चाण्डालादिगृहायेत्यर्थः, चण्डालादिगृहयुक्ताय वा नगराभ्यन्तरगृहायेत्यर्थः; अन्तरस्मै पटाय-पटचतुष्टये तृतीयाय चतुर्थाय वेत्यर्थः, प्रथमद्वितीययोर्बहिर्योगेणैव सिद्धत्वात्; पुरि तु न भवति-अन्तरायै पुरे क्रुध्यति-चण्डालादिपुर्यै इत्यर्थः, बहिर्योगोपसंव्यानादेरन्यत्र तु न भवति-अयमनयोर्ग्रामयोरन्तरात् तापस आयातः-मध्यादित्यर्थः। त्यस्मै, तस्मै, यस्मै, अमुष्मै, अस्मै, एतस्मै, एकस्मै; द्वियुष्मद्भवत्वस्मदां स्मायादयो न सम्भवन्तीति सर्वविभक्त्यादयः प्रयोजनम् (द्वौ[1] हेतू २), द्वाभ्यां हेतुभ्याम् ३, द्वयोर्हेत्वोः २; अज्ञाते द्वे द्वके स्त्रियौ कुले वा, द्वकौ पुरुषौ। युवाभ्यां हेतुभ्याम् ३, युवयोर्हेत्वोः २, युवकाभ्याम्, युष्मादृशः। भवद्भ्यां हेतुभ्याम् ३, भवतोर्हेत्वोः २; भवकान्, भवादृशः; स च भवांश्च भवन्तौ, अत्र त्यदादित्वात् परत्वाच्च भवच्छेषः, भवान् पुत्रोऽस्येति भवत्पुत्रः-अत्र सर्वादित्वात् पूर्वनिपातः, भवतोऽपत्यं भावतायनिः-अत्र त्यदादित्वादायनिञ्, भवत्याः पुत्रो भवत्पुत्रः-अत्र सर्वादित्वात् पुंवद्भावः, भवन्तमञ्चतीति क्विपि, भवद्र्यङ्-अत्र "सर्वादिविष्वग्देवाड्डद्रिः क्व्यञ्चौ" ॥ ३ । २ । १२२ ॥ इति डद्र्यागमः; उकारो ङ्यर्थो नागमार्थो दीर्घार्थश्च-भवती, भवान्। आवाभ्यां हेतुभ्याम् ३, आवयोर्हेत्वोः २, आवकाभ्याम्, अस्मादृशः, कस्मै, कस्मात्। सर्वेऽपि चामी संज्ञायां सर्वादयो न भवन्ति, तेनेह न भवति-सर्वो नाम कश्चित् सर्वाय,

उपसंव्याने इति। **न चेद्बहिर्योगेऽपि पुरि वर्त्तते** इति। पुरि इति शब्दप्रधानो निर्देश, यदा अन्तरशब्दस्य पुर् व्यञ्जनान्तो वाच्यो भवति तदा सर्वादित्वस्य निषेध, यदा अकारान्त ईकारान्तो वा पुरं पुरी इत्यादयश्च वाच्या भवन्ति तदा सर्वादित्वमस्त्येव। ननु कर्मार्थकरणार्थभेदाद्भिन्नस्याप्युपसंव्यानशब्दस्य ग्रहणमनर्थकम्, सर्वत्र बहिर्योगेण सिद्धत्वादिति चेदुच्यते-समानप्रमाणे शाटकयुगे परिहिते इद न ज्ञायते किमुत्तरीयं किमन्तरीयमिति तदर्थमेतद्भविष्यतीति वक्तुं न शक्य, यतस्तत्र यथा प्रेक्षापूर्वकारी भाविबुद्ध्योपसंव्यानत्व व्यवस्थापयति तथा बहिर्योगमपीत्यर्थ, उच्यते-पटचतुष्टयार्थम्, तत्र शाटकाना त्रये चतुष्टये वा प्रथमद्वितीययोर्बहिर्योगेणैव सिद्धत्वात् तृतीयचतुर्थयोर्बहिर्योगाभावात् उपसंव्यानग्रहण कर्तव्यमित्याह—**अन्तरस्मै पटाय** इत्यादि । **पुरि तु न भवति** इति । अपुरीति प्रतिषेधादिति शेष, तेन **अन्तरायै पुरे क्रुध्यति** इत्यत्र "सर्वादेर्डस्पूर्वाः" १।४।१८। इति डस् न भवति, पू कस्मिंश्चिद्देशे प्राकाराभ्यन्तरे क्रियते, क्वचित्प्राकाराद्बहिरित्यस्ति पुरो बहिर्योग । पूर्वोक्तस्यान्तरायै पुरे इत्यस्यार्थमाह—**चाण्डालादीति** । बहिर्योगोपसंव्यानयोरवर्त्तमानस्यान्तरशब्दस्य सर्वादित्वाभावमाह—**बहिर्योगोपसंव्यानादेरन्यत्र** इत्यादिना । **अयमनयोर्ग्रामयोरन्तरात्तापस आयात**-अत्रान्तरशब्दस्य मध्यवाचित्वात् सर्वादित्वाभाव इत्यर्थ, तदाह—**मध्यादित्यर्थ** इति । **त्यस्मै** इत्यादि । पूर्ववद्बोध्यम्। द्व्यादीनामनकारान्तत्वात् स्मायादे सर्वादिकार्यस्यासम्भवेऽपि प्रयोजनान्तरमस्तीति तदाह—**द्वियुष्मद्भवत्वस्मदामि**त्यादि । **स्मादयो न संभवन्तीति**-तेषामकारान्तत्वाभावादिति हेतोरिति शेष । **सर्वविभक्त्यादय** इति। "सर्वादे सर्वा" इति हेतुप्रयोगे सर्वविभक्तय इत्याशय । **आदि**शब्दाद्यथायोगमेकशेषपूर्वनिपातपुंवद्भावडद्र्यादायनिञ्मयट्त्क प्रयोजनानि ज्ञायन्त इति । सर्वविभक्त्यादीनुदाहरति द्व्यादिशब्देभ्य—**द्वौ हेतू** इत्यादिना । द्विशब्दाद्धेतुशब्दाच्चौकारे "आद्वेर" २।१।४१। इत्यत्वे, "ऐदौत् सन्ध्यक्षरै"रित्यौत्त्वे, "इवृतोऽस्त्रेरीदूत्" इत्यूत्त्वे च सिध्यत । **द्वाभ्याम्** इति । "सर्वादे सर्वा" इत्यत्र मतद्वयाभिप्रायेण प्रथमाद्वितीयावर्जनात् तृतीयां आरभ्यात्रोदाहरणानि दर्शितानि, स्वमते द्वौ हेतू इत्यादि भवत्येव, तदुक्त वृत्तिकृता तत्सूत्रे प्रथमा नेच्छन्त्येके, द्वितीयामपरे इति। द्विशब्दस्याज्ञातार्थे "त्यादिसर्वादे स्वरेष्वन्त्यात् पूर्वोऽक्" इत्यन्त्यात् स्वरात् पूर्वमकि स्त्रीनपुंसकयो प्रथमाद्वितीयाद्विवचने विग्रहोपन्यासपूर्वक रूपमाह—**अज्ञाते द्वे द्वके स्त्रियौ कुले वा** इति। पुंस्त्वे चाह—**द्वकौ पुरुषौ**-अत्र द्विशब्दात् प्रथमाद्वितीयाद्विवचनेऽन्त्यात् स्वरात् पूर्वमक्। एवमन्यदपि। **युष्मादृशः**-"त्यदाद्यन्य०" ५।१।१५२। इति टकि, अत्र "अन्यत्यदादेरा" इत्याकारान्तादेशश्च। **भवकान्**-भवच्छब्दस्यान्त्यात् स्वरात् पूर्वोऽक्। **भवादृशः**-अत्र टकि सत्याकारान्तादेश । **स च भवांश्च भवन्तौ** इति । अत्र "त्यदादि" ३।१।१२०। इति सूत्रेण त्यदादित्वात् भवच्छेष । ननु तच्छब्दभवच्छब्दयोस्त्यदादित्वाविशेषात् कस्य शेष इत्यत आह—**परत्वाच्चेति**। "स्पर्धे" परमिति त्यदादीनां मिथ सहोक्तौ यद्यत् पाठे परं तत्तदेवैक शिष्यत इत्याशय । **भवान् पुत्रोऽस्येति भवत्पुत्र** इति। "विशेषण सर्वादिसंख्यं बहुव्रीहौ" ३।१।१५०। इति सर्वादित्वाद्भवच्छब्दस्य पूर्वनिपातस्तदाह—**अत्र सर्वादित्वादिति** । **भवतोऽपत्यं भावतायनिः**-अत्र "त्यदादि" ६।१।७। इति त्यदादित्वाद्भवच्छब्दस्य दुसंज्ञायां "अवृद्धाद्दोर्नवा" ६।१।११०। इत्यायनिञ्, तदाह—**अत्र त्यदादित्वादायनिञ्** इति । **भवत्याः पुत्रो भवत्पुत्र** इति । "सर्वादयोऽस्यादौ" ३।२।६१। इति पुंवद्भाव, तदाह—**अत्र सर्वादित्वात् पुंवद्भाव** इति । **भवन्तमञ्चतीति क्विपि भवद्र्यङ्**-अत्र डद्र्यागम केनेत्यत आह—"**सर्वादिविष्वग्दे०**" इत्यादिना । भवतु इत्यत्र किमर्थं उकार इत्यत आह—**उकारो ङ्यर्थ** इत्यादिना । "अधातूदृदित" २।४।२। इति ङीप्रत्ययार्थ उकार इति भाव । एवं **नागमार्थ** उकार इति । "ऋदुदित" १।४।७०। इत्यनेनेति शेष । एवं **दीर्घार्थश्च उकार** इति "अभ्वादेरत्वस सौ" इत्यनेनेति शेष, तदुदाहरति—**भवती, भवान्** इति। **आवाभ्याम् हेतुभ्याम्** ३ इत्यादि पूर्ववद्बोध्यम्। ननु सूत्रे विशेषस्यानिर्देशात् संज्ञायामपि सर्वादीनां सर्वादिकार्यप्रसङ्ग, नैष दोष; तत्र गणपाठात् पर्युदास शुद्धान्येव हि गणे सर्वादीनि सन्निविष्टानि न संज्ञाभूतानि, तेन यत्सामान्य स्मायादि कार्यं यच्च विशिष्ट "पञ्चतोऽन्यादेरनेकतरस्य दः", "आद्वेर" इति तत्सर्व गणपाठोपलक्षितानामेव। यत्तु कार्यं "अमौ म" २।१।१६। इत्यादिस्वरूपमात्राश्रय न सन्निवेशापेक्ष, तदविशेषेण भवति, तत्र हि न गणपठितयोर्युष्मदस्मदोर्निर्देशोऽपि त्वौणादिकयो । अथवा सर्वादिविशेषणार्थमसंज्ञायामिति गणे साक्षात्पठनीयमित्याह—**सर्वेऽपि चामी संज्ञायां सर्वादयो न भवन्ति** इति। ननु संज्ञायां गौणत्वादेव न भविष्यति-सर्वाय देहीति, प्रसिद्धिवशात् सम्भवत्येव 'गौणमुख्यन्याय' इति किमसंज्ञायामिति विशेषणेन? नैव, पदकार्येष्वेवाय न्याय उपतिष्ठते न नामकार्ये इति, तथाहि-स्वार्थे वृत्तानाम वतरणायां विभक्तौ तत्तत्कार्येषु शब्दान्तरसन्निधानात् गौणत्व प्रतीयते, यथा-गां वाहीकमानयेति पूर्वं क्रियाभिसम्बन्धापेक्षया विभक्त्युत्पत्त्याया वाक्यीयाध्यायात् (आकाङ्क्षादिमूलकशक्त्या) सामानाधिकरण्याद्गौणार्थप्रादुर्भावो भवतीति। तस्य तु स्वार्थस्य मुख्यव्यपदेशो नास्ति, गौणापेक्षया सम्बन्धिशब्दत्वात् मुख्यव्यपदेशस्य गौणाभावेऽभावात्, न चैवं शब्दान्तरात् संज्ञाप्रतीतिरस्ति। यदि वा गुणादा-

[1] द्वौ हेतू° पु०, ख० ता०।

त्वस्मै, त्वस्मात् । त्वच्छब्दः समुच्चयपर्यायः, तस्य स्मायादयो न संभवन्तीति हेत्वर्थयोगे सर्वविभक्तित्वमक्प्रत्ययश्च प्रयोजनम्–त्वतं हेतुम्, त्वता हेतुना वसति, अज्ञातात् त्वतस्त्वकतः । नेमशब्दोऽर्धार्थः–नेमस्मै, नेमस्मात् । समसिमौ–सर्वार्थौ, समस्मै, समस्मात्, सिमस्मै, सिमस्मात्, सर्वार्थत्वाभावे न भवति–समाय देशाय, समाद्देशाद् धावति । स्वाभिधेयापेक्षे चावधिनियमे व्यवस्थापरपर्याये गम्यमाने–पूर्वपरावरदक्षिणोत्तरापराधराणि, पूर्वस्मै, पूर्वस्मात्; परस्मै, परस्मात्, अवरस्मै, अवरस्मात्; दक्षिणस्मै, दक्षिणस्मात्; उत्तरस्मै, उत्तरस्मात्; अपरस्मै, अपरस्मात्; अधरस्मै, अधरस्मात्; व्यवस्थाया अन्यत्र न भवति–दक्षिणाय गाथकाय देहि, प्रवीणायेत्यर्थः, दक्षिणायै द्विजाः स्पृहयन्ति । आत्माऽऽत्मीयज्ञातिधनार्थवृत्तिः स्वशब्दः, आत्माऽऽत्मीययोः–यत्स्वस्मै रोचते तत्स्वस्मै ददाति, यदात्मने रोचते तदात्मीयाय ददातीत्यर्थः, ज्ञातिधनयोस्तु न भवति–स्वाय दातुं स्वाय स्पृहयति, ज्ञातये दातुं धनाय स्पृहयतीत्यर्थः । बहिर्भावेन

---

त्वस्मै–अन्यस्मै इत्यर्थः । त्वच्छब्द इति । अकारान्तत्वशब्दस्येह व्युदासार्थं त्वच्छब्द इति निर्देशः । **समुच्चयपर्याय** इति । तत्रैकमर्थं प्रति क्ष्मादीनां क्रियाकारकद्रव्यगुणानां तुल्यबलानां अविरोधिनामनियतक्रमयौगपद्यानां आत्मरूपभेदेन चीयमानता समुच्चयस्तस्य पर्यायस्तद्वाचक इत्यर्थः । अथास्य तकारान्तत्वात् स्मायादेः सर्वादिकार्यस्यायोगादिह तदुपादानमनर्थकमित्याह—**तस्य** इत्यादिना, **प्रयोजनम्** इत्यन्तेन । **तस्य**–त्वच्छब्दस्य । **स्मायादयः**–"सर्वादेः स्मै स्मातौ" इत्यादिसूत्रविहिताः । **न संभवन्ति**–त्वच्छब्दस्याकारान्तत्वाभावान्न प्राप्नुवन्ति । **इति**–हेतौ । **हेत्वर्थयोगे**–निमित्तकारणहेतुशब्दयोगे । **सर्वविभक्तित्वम्**–"सर्वादेः सर्वाः" इति सर्वविभक्तयः स्युस्त्वच्छब्दादिति प्रथमं प्रयोजनम् । तस्य हेत्वर्थयोगे सर्वविभक्तित्वं प्रयोजनम् च तस्य **अक्प्रत्ययः**–"स्यादिसर्वादेः स्व०" ७।३।२९। इति सूत्रविहित इति द्वितीयं प्रयोजनमित्यन्वयः । तदुदाहरति—**त्वतं हेतुम्** इत्यादि । त्वच्छब्दस्याज्ञातार्थे "स्यादिसर्वादेः स्वरेष्वन्त्यात् पूर्वोऽक्" इत्यन्त्यात् स्वरात् पूर्वमकि पञ्चम्येकवचने विग्रहोपदर्शनपूर्वकं रूपमाह—**अज्ञातात् त्वकत** इति । **नेमशब्दोऽर्धार्थ** इति । अर्धशब्दस्यार्थोऽस्येति विग्रहः । **समसिमौ सर्वार्थौ**–सर्वशब्दसमानार्थकावेव समसिमशब्दौ सर्वादिगणे पठितावित्यर्थः । उदाहरति—**समस्मै** इत्यादि । पूर्ववत्प्रक्रिया । **सर्वार्थत्वाभावे न भवति** इत्यनेनार्थान्तरवृत्तित्वव्यवच्छेदः, फलं दर्शयति—**समाय** इत्यादि । अविषमायेत्यर्थः । **स्वाभिधेयापेक्षे** इति । पूर्वादीनां शब्दानां स्वाभिधेयो दिग्देशकालस्वभावोऽर्थः, तमपेक्षते यः स स्वाभिधेयापेक्षस्तस्मिन् । **च**ोऽवधारणे । **अवधिनियमे**–अवधिर्मर्यादा तस्य नियमोऽवश्यंभावोऽवधिमावादप्रमादस्तस्मिन् । अयं भावः–दिगादीनां ह्यर्थानां पूर्वादिशब्दाभिधेयानां यत्पूर्वादित्वं तत् नियमेन कंचिदवधिमपेक्ष्य संपद्यते नत्ववधिनिरपेक्षम्, तथाहि–पूर्वस्य देशस्य यत्पूर्वत्वं तत्परं देशमवधिमपेक्ष्य भवति, परस्यापि यत्परत्वं तत्पूर्वदेशमपेक्ष्य भवति, तस्मात् पूर्वादिशब्दवाच्यापेक्षणेऽवश्यं केनचिदवधिना भाव्यम्, तत्र तस्यैवावधेर्ये पूर्वादिशब्दाभिधेयापेक्षोऽवधिभाव ऐकान्तिकः स नियमो व्यवस्थापरपर्यायः । तस्मिन् गम्यमाने पूर्वादीनां शब्दानां स्वाभिधेय एव वर्तमानानां सर्वादिकार्यं न तु वाच्ये । यो हि पूर्वादिशब्दाभिधेयादर्थादन्यस्यावधिभूतस्य नियमः स कथं पूर्वादिशब्दवाच्यो भविष्यतीत्यतस्तस्मिन्नान्तरीयकतया गम्यमाने पूर्वं परं अवरं दक्षिणं उत्तरं अपरं अधरं इत्येतानि सप्तशब्दरूपाणि सर्वादीनि भवन्ति । अवधिमति दिगादिलक्षणे वर्तमानानि पूर्वादीनि सर्वादीनि भवन्ति इत्युदाहरति—**पूर्वस्मै** इत्यादि । **अधराणि** इति । शब्दरूपापेक्षया नपुंसकनिर्देशो नार्थापेक्षया, तेन स्त्रीपुंनपुंसकेषु सर्वेष्वप्यर्थेषु सर्वादित्वमिति । व्यवस्थापरपर्याय इत्यस्य व्यवच्छेद्यं दर्शयति—**व्यवस्थाया** इत्यादिना । **दक्षिणाय**–प्रवीणायेत्यर्थः, अत्र हि प्रावीण्यमात्रेण निमित्तेनावधिनिरपेक्ष एव दक्षिणशब्दो वर्तते इति व्यवस्था न गम्यते । केचित्तु यावद्द्रव्यभाविनी व्यवस्थेत्याहुः, तेषां पूर्वस्मै पुरुषायेत्यादि न भवति, नहि दिग्योगलक्षणं पूर्वत्वादि पुरुषे यावद्द्रव्यभावीति । **दक्षिणायै द्विजाः स्पृहयन्ति** इति । यज्ञकर्मकृतां वेतनदानं दक्षिणा, तस्यै दक्षिणायै इति चतुर्थ्येकवचनम् "स्पृहेर्व्याप्यं वा" २।२।२६। इत्यनेन । **आत्माऽऽत्मीयज्ञातिधनार्थवृत्तिः स्वशब्दः**–आत्मा च आत्मीयश्च ज्ञातिश्च धनं च तान्येवार्थस्तत्र वृत्तिर्यस्येति विग्रहः, "स्वात् मिन्नीशे" ७।२।४९। इति मिन्प्रत्ययविषये त्वैश्वर्यवाची । **आत्माऽऽत्मीययोः**–स्वशब्द आत्माऽऽत्मीययोः सर्वादिरिति शेषः । **यत्स्वस्मै रोचते तत्स्वस्मै ददाति**—अत्रात्माऽऽत्मीययोरर्थयोर्वर्तमानत्वात् स्वशब्दस्य "सर्वादेः०" इत्यादिसूत्रे स्मायादयो भवन्ति, तस्यार्थं व्याचष्टे—**यदात्मन** इत्यादिना । यत्र शब्दान्तरनिरपेक्षः स्वशब्दो ज्ञातिधने स्वरूपेणाचष्टे तत्रासौ संज्ञारूपेण तयोर्वर्तते इति तत्र न भवति इत्याह—**ज्ञातिधनयोस्तु** इत्यादिना । कथं पुनरयमर्थो यावता स्वे पुत्रा इति ज्ञात्यर्थो गम्यते स्वे गाव इति धनार्थः, नैतदस्ति, पुत्रगोशब्दयोरिह सन्निधानेनोभयं गम्यते, स्वशब्दात्त्वात्मीयत्वमात्रं प्रतीयते । ननु यदि शब्दान्तरनिरपेक्ष एव स्वशब्दो ज्ञातिधनयोर्वर्तते कथं तर्हि "धूमायन्त इवाक्लिष्टाः प्रज्वलन्तीव सहताः । उल्मुकानीव मेऽमी स्वा ज्ञातयो भरतर्षभ ॥" इत्यादौ ज्ञातिशब्दस्यानुप्रयोगः ? नैष दोषः, यत्र हि शब्दोऽनेकार्थो भवति सन्दिग्धार्थो वा तत्र तदर्थस्य व्यक्तीकरणे पर्यायशब्दस्यानुप्रयोगो न विरुध्यते, यथा मेषाद्यर्थकस्य वराहशब्दस्य प्रयोगः । तथा स्वशब्दश्चायमनेकार्थस्तत्रासत्यनुप्रयोगे किं विषयोऽयं प्रयुक्त इति संदेहः स्यादतस्तन्निरासार्थमुपपद्यते ज्ञातिशब्दस्यानुप्रयोगः । एवं धनशब्दस्यापि द्रष्टव्यम् । **स्वाय दातुं स्वाय स्पृहयति**–अत्र स्वशब्दस्य ज्ञातिधनवृत्तित्वात् सर्वादित्वाभाव इत्यर्थः । चतुर्थ्येकवचनद्वयं तु स्वाय स्वायेति दाधात्वपेक्षया स्पृहधात्वपेक्षया च बोध्यम्, तस्यार्थं व्याचष्टे–**ज्ञातये दातुं धनाय** इत्यादिना । अन्तरं बहिर्योगोपसंव्यानयोरिति वक्ष्यति, तदर्थं व्यक्तीकुर्वन्नुदाहरति–**बहिर्भावेन** इत्यादिना । बहिरित्यनावृतो देश उच्यते, तस्य भावः स एव वा भावस्तेन योगः स च बाह्यस्याबाह्यस्य च भवति, यथा—**अन्तरस्मै गृहाय—नगरबाह्यायेत्यादि** । नगरं हि चतुष्प्रतोलीयुक्तप्राकारावृतमुच्यते, यदाह–'नगरमुरुचतुर्गोपुरोद्भासि सालमिति' । तत्र प्राकारावृतदेशे चण्डालादिगृहस्यानौचित्यादनावृतप्रदेशेन योगो गम्यत इति, यदा तु बहिःशब्देन बाह्य उच्यते तदा बाह्येनानावृतदेशयुक्तेन चण्डालादिगृहेण योगे आभ्यन्तरस्य, अनाभ्यन्तरस्य बहिर्भावेनैव सिद्धत्वात् इत्यर्थः, अर्थभेदेऽपि रूपस्य समानत्वात् पृथक् प्रयोगो न, उक्तोऽर्थभेदस्तु भगवद्वृत्तिकारेणाग्रे दर्शितश्चण्डालादिगृहयुक्ताय वा **नगराभ्यन्तरगृहायेत्यर्थ** इत्यनेन । उपसंव्यानशब्द कर्मकरणार्थभेदाद्विधार्थः, यदोपसंवीयते यदिति विग्रहस्तदा "भुजिपत्यादिभ्यः कर्मापादाने" ५।३।१२८। इति कर्मण्यनट्, यदा तूपसंवीयतेऽनेनेति तदा "करणाऽऽधारे" ५।३।१२९। इति करणेऽनट्, इत्थमस्य कर्मसाधनतया करणसाधनतया वा स्फुटमेव भिन्नार्थत्वम्; तदाह—

बाह्येन वा योगे उपसंव्याने उपसंवीयमाने चार्थे वर्तमानो अन्तरशब्दः, न चेद् बहिर्योगेऽपि पुरि वर्तते; अन्तरस्मै गृहाय—नगरबाह्याय चाण्डालादिगृहायेत्यर्थः, चण्डालादिगृहयुक्ताय वा नगराभ्यन्तरगृहायेत्यर्थः; अन्तरस्मै पटाय—पटचतुष्टये तृतीयाय चतुर्थाय वेत्यर्थः, प्रथमद्वितीययोर्बहिर्योगेणैव सिद्धत्वात्, पुरि तु न भवति—अन्तरायै पुरे क्रुध्यति—चण्डालादिपुर्यै इत्यर्थः, बहिर्योगोपसंव्यानादेरन्यत्र तु न भवति—अयमनयोर्ग्रामयोरन्तरात् तापस आयातः—मध्यादित्यर्थः। त्यस्मै, तस्मै, यस्मै, अमुष्मै, अस्मै, एतस्मै, एकस्मै; द्वियुष्मद्भवत्वस्मदां स्मायादयो न संभवन्तीति सर्वविभक्त्यादयः प्रयोजनम् ([1]द्वौ हेतू २), द्वाभ्यां हेतुभ्याम् ३, द्वयोर्हेत्वोः २; अज्ञाते द्वे द्वके स्त्रियौ कुले वा, द्वकौ पुरुषौ। युवाभ्यां हेतुभ्याम् ३, युवयोर्हेत्वोः २; युवकाभ्याम्, युष्मादृशः। भवद्भ्यां हेतुभ्याम् ३, भवतोर्हेत्वोः २; भवकान्, भवादृशः; स च भवांश्च भवन्तौ, अत्र त्यदादित्वात् परत्वाच्च भवच्छेषः, भवान् पुत्रोऽस्येति भवत्पुत्रः—अत्र सर्वादित्वात् पूर्वनिपातः, भवतोऽपत्यं भावतायनिः—अत्र त्यदादित्वादायनिञ्, भवत्याः पुत्रो भवत्पुत्रः—अत्र सर्वादित्वात् पुंवद्भावः, भवन्तमञ्चतीति क्विपि, भवद्यङ्—अत्र "सर्वादिविष्वग्देवाड्डद्रिः क्व्यञ्चौ" ॥ ३ । २ । १२२ ॥ इति ड्द्यागमः; उकारो ङ्यर्थो नागमार्थो दीर्घार्थश्च—भवती, भवान्। आवाभ्यां हेतुभ्याम् ३, आवयोर्हेत्वोः २, आवकाभ्याम्, अस्मादृशः, कस्मै, कस्मात्। सर्वेऽपि चामी संज्ञायां सर्वादयो न भवन्ति, तेनेह न भवति—सर्वो नाम कश्चित् सर्वाय,

**उपसंव्याने** इति। **न चेद्बहिर्योगेऽपि पुरि वर्त्तते** इति। पुरि इति शब्दप्रधानो निर्देश, यदा अन्तरशब्दस्य पुर् व्यञ्जनान्तो वाच्यो भवति तदा सर्वादित्वस्य निषेध, यदा अकारान्त ईकारान्तो वा पुरं पुरी दृशादयश्च वाच्या भवन्ति तदा सर्वादित्वमस्त्येव। ननु कर्मार्थकरणार्थभेदाद्भिन्नस्याप्युपसंव्यानशब्दस्य ग्रहणमनर्थकम्, सर्वत्र बहिर्योगेण सिद्धत्वादिति चेदुच्यते—समानप्रमाणे शाटकयुगे परिहिते इद न ज्ञायते किमुत्तरीयं किमन्तरीयमिति तदर्थमेतद्भविष्यतीति वक्तु न शक्य, यतस्तत्र यथा प्रेक्षापूर्वकारी भाविबुद्ध्योपसंव्यानत्व व्यवस्थापयति तथा बहिर्योगमपीत्यर्थं, उच्यते—पटचतुष्टयार्थम्, तत्र शाटकाना त्रये चतुष्टये वा प्रथमद्वितीययोर्बहिर्योगेणैव सिद्धत्वात् तृतीयचतुर्थयोर्बहिर्योगाभावात् उपसंव्यानग्रहण कर्तव्यमित्याह—**अन्तरस्मै पटाय** इत्यादि। **पुरि तु न भवति** इति। अपुरीति प्रतिषेधादिति शेष, तेन **अन्तरायै पुरे क्रुध्यति** इत्यत्र "सर्वादेर्डस्पूर्वा" १।४।१८। इति डस् न भवति, पू कस्मिंश्चिद्देशे प्राकाराभ्यन्तरे क्रियते, क्वचित्प्राकाराद्बहिरित्यस्ति पुरो बहिर्योग। पूर्वोक्तस्यान्तरायै पुरे इत्यस्यार्थमाह—**चाण्डालादीति**। बहिर्योगोपसंव्यानयोरवर्तमानस्यान्तरशब्दस्य सर्वादित्वाभावमाह—**बहिर्योगोपसंव्यानादेरन्यत्र** इत्यादिना। **अयमनयोर्ग्रामयोरन्तरात्तापस आयातः**—अत्रान्तरशब्दस्य मध्यवाचित्वात् सर्वादित्वाभाव इत्यर्थ, तदाह—**मध्यादित्यर्थ** इति। **त्यस्मै** इत्यादि। पूर्ववद्बोध्यम्। द्यादीनामनकारान्तत्वात् स्मायादे सर्वादिकार्यस्यासम्भवेऽपि प्रयोजनान्तरमस्तीति तदाह—**द्वियुष्मद्भवत्वस्मदामित्यादि**। **स्मादयो न संभवन्तीति**—तेषामकारान्तत्वाभावादिति हेतोरिति शेष। **सर्वविभक्त्यादय** इति। "सर्वादे सर्वा" इति हेतुप्रयोगे सर्वविभक्तय इत्याशय। **आदि**शब्दाद्यथायोगमेकशेषपूर्वनिपातपुंवद्भावड्द्रिभात् आयनिञ्मयट्क्षक प्रयोजनानि ज्ञायन्त इति। सर्वविभक्त्यादीनुदाहरति द्यादिशब्देभ्य—**द्वौ हेतू** इत्यादिना। द्विशब्दाद्धेतुशब्दाच्चौकारे "आद्वेर" २।१।४१। इत्यत्वे, "ऐदौत् सन्ध्यक्षरै"रित्यौत्वे, "इवृतोऽस्त्रेरीदूत्" इत्यूत्वे च सिध्यत। **द्वाभ्याम्** इति। "सर्वादे सर्वा" इत्यत्र मतद्वयाभिप्रायेण प्रथमाद्वितीयावर्जनात् तृतीयां प्रारभ्यात्रोदाहरणानि दर्शितानि, स्वमते द्वौ हेतू इत्यादि भवत्येव, तदुक्त वृत्तिकृता तत्सूत्रे प्रथमां नेच्छन्त्येके, द्वितीयामपरे इति। द्विशब्दस्याज्ञातार्थे "त्यादिसर्वादे स्वरेष्वन्त्यात् पूर्वोऽक्" इत्यन्त्यात् स्वरात् पूर्वमकि स्त्रीनपुंसकयो प्रथमाद्वितीयाद्विवचने विग्रहोपन्यासपूर्वक रूपमाह—**अज्ञाते द्वे द्वके स्त्रियौ कुले वा** इति। पुंस्त्वे चाह—**द्वकौ पुरुषौ**—अत्र द्विशब्दात् प्रथमाद्वितीयाद्विवचनेऽन्त्यात् स्वरात् पूर्वमक्। एवमन्यदपि। **युष्मादृशः**—"त्यदाद्यन्य०" ५।१।१५२। इति टकि, अत्र "अन्यत्यदादेरा" इत्याकारान्तादेशश्च। **भवकान्**—भवच्छब्दस्यान्त्यात् स्वरात् पूर्वोऽक्। **भवादृशः**—अत्र टकि सत्याकारान्तादेश। **स च भवांश्च भवन्तौ** इति। अत्र "त्यदादि" ३।१।१२०। इति सूत्रेण त्यदादित्वात् भवच्छेष। ननु तच्छब्दभवच्छब्दयोस्त्यदादित्वाविशेषात् कस्य शेष इत्यत आह—**परत्वाच्चेति**। "स्पर्धे" परमिति त्यदादीनां मिथ सहोक्तौ यद्यत् पाठे पर तत्तदेवैक शिष्यत इत्याशय। **भवान् पुत्रोऽस्येति भवत्पुत्र** इति। "विशेषण सर्वादिसंख्य बहुव्रीहौ" ३।१।१५०। इति सर्वादित्वाद्भवच्छब्दस्य पूर्वनिपातस्तदाह—**अत्र सर्वादित्वादिति**। **भवतोऽपत्यं भावतायनिः**—अत्र "त्यदादि" ६।१।७। इति त्यदादित्वाद्भवच्छब्दस्य दुसंज्ञायां "अमृद्वाद्बोर्नवा" ६।१।११०। इत्यायनिञ्, तदाह—**अत्र त्यदादित्वादायनिञ्** इति। **भवत्याः पुत्रो भवत्पुत्र** इति। "सर्वादयोऽस्यादौ" ३।२।६१। इति पुंवद्भाव, तदाह—**अत्र सर्वादित्वात् पुंवद्भाव** इति। **भवन्तमञ्चतीति क्विपि भवद्र्यङ्**—अत्र ड्द्यागम केनेत्यत आह—**"सर्वादिविष्वक्०"** इत्यादिना। भवतु इत्यत्र किमर्थं उकार इत्यत आह—**उकारो ङ्यर्थ** इत्यादिना। "अधातूदृदित" २।४।२। इति ङीप्रत्ययार्थं उकार इति भाव। एव **नागमार्थ** उकार इति। "ऋदुदित" १।४।७०। इत्यनेनेति शेष। एवं **दीर्घार्थश्च उकार** इति "अभ्वादेरत्वस सौ" इत्यनेनेति शेष, तदुदाहरति—**भवती, भवान्** इति। **आवाभ्याम् हेतुभ्याम्** ३ इत्यादि पूर्ववद्बोध्यम्। ननु सूत्रे विशेषस्यानिर्देशात् संज्ञायामपि सर्वादीनां सर्वादिकार्यप्रसङ्ग, नैष दोष, तत्र गणपाठात् पर्युदास शुद्धान्येव हि गणे सर्वादीनि सन्निविष्टानि न संज्ञाभूतानि, तेन यत्सामान्य स्मायादि कार्यं यच्च विशिष्ट "पञ्चतोऽन्यादेरनेकतरस्य द", "आद्वेर" इति तत्सर्वं गणपाठोपलक्षितानामेव। यत्तु कार्यं "अमौ म" २।१।१६। इत्यादिस्वरूपमात्राश्रय न सन्निवेशापेक्ष, तदविशेषेण भवति, तत्र हि न गणपठितयोर्युष्मदस्मदोर्निर्देशोऽपि त्वौणादिकयो। अथवा सर्वादिविशेषणार्थमसंज्ञायामिति गणे साक्षात्पठनीयमित्याह—**सर्वेऽपि चामी संज्ञायां सर्वादयो न भवन्ति** इति। ननु संज्ञायां गौणत्वादेव न भविष्यति—सर्वाय देहीति, प्रसिद्धिवशात् समयत्येव 'गौणमुख्यन्याय' इति किमसंज्ञायामिति विशेषणेन? नैव, पदकार्येष्वेवाय न्याय उपतिष्ठते न नामकार्ये इति, तथाहि—स्वार्थे वृत्तावाश्च तत्पञ्चाया विभक्तौ तत्तत्कार्येषु शब्दान्तरसन्निधानात् गौणत्व प्रतीयते, यथा—गां वाहीकमानयेति पूर्वं क्रियाभिसम्बन्धापेक्षया विभक्तावुत्पन्नायां वाक्यीयाध्यायात् (आकाङ्क्षादिमूलकशक्त्या) सामानाधिकरण्याद्गौणार्थप्रादुर्भावो भवतीति। तस्य तु स्वार्थस्य मुख्यव्यपदेशो नास्ति, गौणापेक्षया सम्बन्धिशब्दत्वात् मुख्यव्यपदेशस्य गौणाभावेऽभावात्; न चैवं शब्दान्तरात् संज्ञाप्रतीतिरस्ति। यदि वा गुणादा-

१ द्वौ हेतू० पु०, सं० ता०।

सर्वात्, उत्तराय कुरवे स्पृहयति । अत इत्येव ? भवते, भवतः । सर्वादेरिति षष्ठीनिर्देशेन तत्संबन्धिविज्ञानादिह न भवति– प्रियाः सर्वे यस्य तस्मै प्रियसर्वाय, सर्वानतिक्रान्तायातिसर्वाय, द्वावन्यावस्यै द्व्यन्याय, त्र्यन्याय; प्रियपूर्वाय । सर्व, विश्व, उभ, उभयट्, अन्य, अन्यतर, इतर, डतर, डतम, त्व, त्वत्, नेम, समसिमौ–सर्वार्थौ, पूर्वपरावरदक्षिणोत्तरापराधराणि– व्यवस्थायाम्, स्वमज्ञातिधनाख्यायाम्, अन्तरं–बहिर्योगोपसंव्यानयोरपुरि, त्यद, तद्, यद्, अदस्, इदम्, एतद्, एक, द्वि, युष्मद्, भवतु, अस्मद्, किम्; इत्यसंज्ञायां सर्वादिः । उभयडिति टकारो ङ्यर्थः–उभयी दृष्टिः ॥ ७ ॥

---

गतो गौण, यथा–गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीक, मुख्यमिव प्रधानत्वात् मुख्य । तत्र 'स्व रूप'इत्यत्र रूपग्रहणेनार्थपरिग्रहणस्य ज्ञापितत्वादर्थवत कार्येण भवितव्यम् । स चार्थ प्राथम्यान्मुख्य एव गृह्यते । गौणे ह्यर्थे शब्द प्रवर्तमानो मुख्यार्थारोपेणैव प्रवर्त्तते । अनियतश्च गौणोऽर्थ । न च सज्ञाशब्दो गुणद्वारेण प्रवर्त्तते, येन प्रसिद्ध्यप्रसिद्धिवशाद्गौणत्व तस्य संभवति । ननु मा भूत्सर्वो नाम कश्चित्सर्वायेत्यादौ असज्ञायामिति विशेषणात् सर्वादिकार्यं प्रिया सर्वे यस्य सर्वानतिक्रान्तो य इत्युपसर्जनस्य प्राप्नोति इत्याह—सर्वादेरित्यादि । अयमर्थ – पञ्चा यदुच्यते तद्गृह्यमाणविभक्तेर्भवति, यथैव परमसर्वस्मै इत्यादौ स्मायादि न प्राप्नोति, न ह्यत्र गृह्यमाणात् सर्वादेर्विहिता विभक्तिरपि तु समासादिति चेत्, न, गृह्यमाणस्य सर्वादेरर्थद्वारेण संबन्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मादिवाचिनी तस्या सर्वादिकार्यमित्ययोऽत्र विवक्षित, सर्वादिसंख्याप्रधानश्चैष समास इति । अथवा–सर्वमाधीयते गृह्यतेऽभिधेयत्वेन येनेत्यन्वर्थाश्रयणात् सर्वेषां यानि नामानि तानि सर्वादीनि । संज्ञोपसर्जने च विशेषेऽवतिष्ठते, तथाहि–यदा सर्वशब्द सज्ञात्वेन विनियुज्यते, तदा प्रसिद्धप्रवृत्तिनिमित्तपरित्यागेन स्वरूपमात्रोपकारी प्रवर्त्तते इति विशेष एवावतिष्ठते । उपसर्जनमपि जहत्स्वार्थमजहद्वाऽतिक्रान्तार्थविशेषणतामापन्नमतिक्रान्तार्थवृत्ति भवत्यतिसर्वायेत्यत्र । एव बहुव्रीहावपि प्रियसर्वाय । द्वावन्यावस्येत्यादावन्यपदार्थसंक्रमात् विशेषार्थवृत्तिवाक्ये त्वसंश्लिष्टार्थत्वात् स्वार्थमात्र प्रतिपादयतो न विशेषेऽवस्थानमिति स्यात् सर्वादित्वम् । यद्येवं सकलकृत्स्नजगदादेरपि प्राप्नोति, एतेषामपि शब्दानामेकैकस्य स स विषयस्तस्मिंस्तस्मिन् विषये यो य शब्दो वर्त्तते, तस्य तस्य तस्मिंस्तस्मिन् वर्त्तमानस्य सर्वादिकार्यं प्राप्नोति, ततश्च सर्वस्मिन्नोदने इत्योदनशब्दस्यापि स्मिन्नादिप्रसङ्ग सामानाधिकरण्यादनयो । ननु प्रतिनियतभागाभिनिवेशित्वाच्छब्दानां सर्वत्वमोदनशब्देन नाभिहितम्, ओदनत्वमपि सर्वशब्देनेति कुतोऽय प्रसङ्ग ? तत्रेदं दर्शनं–सर्वशब्दोऽप्योदनार्थावग्रहेण प्रवृत्त, ओदनशब्दोऽपि सर्वार्थावग्रहेण, प्रतिपत्ता तु केवलात् सर्वशब्दात् विशेष न प्रतिपद्यते रूपसादृश्यात्, नाप्योदनशब्दादिति तत्प्रतिपत्त्यर्थमुभयोरुपादानम्, तत्रैकस्य सर्वादिकार्यं भवति नापरस्येति प्रमाणाभावादतिप्रसङ्ग उद्भावित । एव तर्ह्युभयमनेन क्रियते–पाठश्चैव विशेष्यते विधिश्च, कथ पुनरेकेन यत्नेनोभय लभ्यते ? तन्त्रेणावृत्त्या वा सर्वेषा यानि प्रतिपादनानि तानि सर्वादीनि तेभ्य, संज्ञोपसर्जने च विशेषेऽवतिष्ठते । एव च सर्वादीनां विशिष्टधर्मोऽनुमीयते–नूनमेवान्वर्थप्रवृत्तिनिमित्तेन सर्वाभिधेयत्वेन युक्तानि सर्वादीनि, अत सर्वादिकार्यमन्तर्गणकार्यं च सर्वाभिधेयत्वयुक्तानामेव भवति न संज्ञोपसर्जनानामिति सिद्धम् । अथाढ्यो भूतपूर्वो मयूरव्यंसकादित्वात् समासे आढ्यपूर्वस्तस्मै आढ्यपूर्वाय देहीत्यत्र कथ सर्वादिकार्यं न भवति ? न च व्यवस्थाया अभाव, पूर्वमाढ्यो न च संप्रतीति व्यवस्था प्रतीयते, उच्यते–अत्र हि पूर्वत्वमाढ्यत्वस्य विशेषणम्, यथाऽतिपूर्वायेति पूर्वार्थोऽतिक्रान्तस्येत्युपसर्जनत्वात् पूर्वार्थस्य स्मायादिर्न भवति । ननु अहक पिता यस्य मकत्पितृक, त्वक पिताऽस्य त्वकत्पितृक द्वकौ पुत्रावस्य द्वकपुत्र इति अन्तरङ्गत्वात् सर्वाभिधाननिमित्तेनाका तावद्भाव्य, पश्चात् पदान्तरसंनिधाने वार्त्तिपदार्थविशेषणाऽन्यपदार्थविवक्षायां बहिरङ्गेण बहुव्रीहिणेत्यनुपसर्जनत्वात् प्राप्नोति । मत्कपितृक त्वत्कपितृक द्विकपुत्र इति चेष्यते इति तदर्थे बहुव्रीहेरप्रयोगसमवायि यत्प्रक्रियाया वाक्य तत्राय प्रतिषेधो न लौकिके वाक्ये प्रयोगानर्हे तस्याकप्रयुक्तस्यैव प्रयोगात्, तन्न, तत्राप्यक्प्रयोग एवेष्ट । यदाह गोनर्दीय–'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्ग मुक्तसंशयौ' । मकत्पितृक त्वकत्पितृक इति । न चान्तरङ्गानपि विधीन् बहिरङ्गो विधिर्बाधते इति वक्तु शक्यम्, लुग्विषयत्वे एव तस्य ज्ञापितत्वात् । सर्वः—"लटिखटि०" उ० ५०५। इति 'सृ'गतौ धातोर्व । विश्वः– "निघृषीष्यृषि०" उ० ५११। इति 'विशत्' प्रवेशने, धातोर्व कित् । उभ–'उम्भत्' पूरणेऽतो "नाम्युपान्त्य०" इति क । उभयट्–उम्भतेस्तरपूर्वाद्धाते "आतोडोऽह्वावाम" ५।१।७६। इति डे, निपातनात् टित्वम् । अन्य–'अनक्' प्राणने, धातो "स्याछामा०" उ०३५७। इति य । अन्यतर—अन्यशब्दात् डतर । इतर–"इण्पूभ्यां कित्" उ०४३८। इति 'इण्क्' गतौ, धातो कित् तर प्रत्यय । डतरडतम–इति प्रत्यानुकरणम् । त्व–'भित्वरिष्' संभ्रमे धातो "क्वचित्" इति डे सिध्यति । त्वत्–अस्यैव धातो "संश्चद्वेहत्साक्षादादय" ८८२। इति निपातनाद् भवति । नेम–नयते "अर्त्तीरिस्तु०" । उ० ३३८। इति म । समसिमौ इति । 'षम'वैक्लव्ये, धातोरच्प्रत्यय, सिम इति अत्र "सेरी च वा" उ० ३४३। इति किन्म । पूर्व–पूरणेऽत उणादयकारो वा 'पूर्ण' पालनपूरणयोरतो "निघृषीष्यृषि०" उ० ५११। इति किति वे "ओष्ठ्यादुर्" ४।४।११७। इत्युरे, "भ्वादेर्नामिनो०"२।१।६३। इति दीर्घ । पर–'पृट्'प्रीतौ, अत औणादिकाकारप्रत्यय । अवर–'अव'रक्षणादावतः "अवेर्ध च वा" उ० ३९८। इत्यरप्रत्यय । दक्षिण–'दक्षि'शैघ्र्ये चेत्यस्मात् "द्रुहवृहिदक्षिभ्य इण" उ० १९४। इतीण प्रत्यय । उत्तर– उत्पूर्वात्तरतेरचि औणादिकेऽकारे वा भवति । अपर–नञ्पूर्वात् पृणातेरकार । अधर–अवते "अवेर्ध च वा" इत्यरे धादेशश्च । स्व–असवतेः "प्रह्वाह्वाय०" उ० ५१४। इति निपातनाद्भवति । अन्तर–'अनक्' प्राणनेऽत "अनिकाभ्यां तर" उ० ४३७। इति तर । त्यद्, तद्, यद्– 'त्यज' हानौ, 'तनूयी' विस्तारे, 'यजी' देवपूजासंगतकरणदानेष्वित्येभ्य "तनित्यजियजिभ्यो डद्" उ०८९५। इति डिदद् प्रत्ययेऽन्त्यस्वरादिलोपे सति भवन्ति । अदस्–'अदक्' भक्षणेऽत "अदेरन्ध च वा" उ० ९६३, इत्यस्प्रत्यय । इदम्–प्रत्यक्षनिर्देशे "इणो दमक्" उ० ९२८। इति 'इण्क्' गतावित्यस्मात् दमक् । एतद्–समीपवाची शब्द, तत एव धातो "इणस्तद्" उ० ८९६। इति तद् प्रत्यय । एक–एकत्वसंख्यायाम्, तत एव धातो "भीण्शलिवलि०" उ० २१। इति क । द्वि–द्वित्वे 'उभत्' पूरणेऽत, "उभेर्द्वश्च" उ० ६१५। इतीकारे द्वादेश । भवतु–परोक्षवचन, 'भाक्'दीप्तावतो "भातेर्डवतु" उ० ८८६। इति डवतु । युष्मद्–प्रत्यक्षवचन, 'युषे' सेवायाम्, सौत्रात् "युष्यसिभ्यां क्मद्" उ०८९९। इति क्मद् प्रत्यय । अस्मद्–प्रत्यात्मवचन "असूच" क्षेपणे, धातो "युष्यसि०" इति क्मद्प्रत्यय । किम्–प्रश्ने क्षेपे च, "कोर्डिम्" उ० ९३९। इति 'कुङ्' शब्दे इत्यस्मात् डिदम्प्रत्यय ॥ ७ ॥

---

१ °स्य तस्मै° म०म० । २ °मे पु०, मा० ।

## ङेः स्मिन् ॥ १ । ४ । ८ ॥

सर्वादेरकारान्तस्य संबन्धिनः सप्तम्येकवचनस्य ङेः स्थाने स्मिन् इत्ययमादेशो भवति-सर्वस्मिन्, विश्वस्मिन् । अत इत्येव ? भवति । सर्वादेरित्येव ? सर्वो नाम कश्चित्-सर्वे, समे देशे धावति । तत्संबन्धिविज्ञानादिह न भवति-प्रियसर्वे, अतिविश्वे ॥ ८ ॥

## जस इः ॥ १ । ४ । ९ ॥

सर्वादेरकारान्तस्य संबन्धिनो जसः स्थाने इकार आदेशो भवति, एकवर्णोऽपि "प्रत्ययस्य" ॥ ७ । ४ । १०८ ॥ इति सर्वस्य भवति । सर्वे, विश्वे, उभये; ते । अत इत्येव ? भवन्तः, सर्वाः । तत्संबन्धिविज्ञानादिह न भवति-प्रियसर्वाः पुमांसः । सर्वाणि कुलानि इत्यत्र तु परत्वान्नपुंसके शिरेव ॥ ९ ॥

## नेमाऽर्धप्रथमचरमतयाऽयाऽल्पकतिपयस्य वा ॥ १ । ४ । १० ॥

नेमादीनि नामानि, तयायौ प्रत्ययौ, तेषामकारान्तानां संबन्धिनो जसः स्थाने इर्वा भवति । नेमस्य प्राप्ते इतरेषामप्राप्ते विभाषा । नेमे, नेमाः; अर्धे, अर्धाः, प्रथमे, प्रथमाः; चरमे, चरमाः, द्वितये, द्वितयाः, त्रितये, त्रितयाः; द्वये, द्वयाः; त्रये, त्रयाः; उभयट्शब्दस्य त्वयट्प्रत्ययरहितस्याखण्डस्य सर्वादौ पाठात् पूर्वेण नित्यमेवेत्वं भवति-उभये । अल्पे, अल्पाः; कतिपये, कतिपयाः; परमनेमे, परमनेमाः इत्यादि । तत्संबन्धिविज्ञानादिह न भवति-प्रियनेमाः, अतिनेमाः । स्वार्थिकप्रत्ययान्ताग्रहणादिह न भवति-अर्धकाः । सर्वादेरित्येव ? नेमा नाम केचित् । व्यवस्थितविभाषाविज्ञानादर्धादीनामपि संज्ञायां न भवति-अर्धा नाम केचित् । अत इत्येव ? नेमाः स्त्रियः ॥ १० ॥

---

**ङेः स्मिन्** । अत्र पूर्वस्मात् सर्वादेरत इति चानुवर्तते । अत इत्यस्य विशेषणत्वात्तदन्तविधि । ङेरिति स्थानषष्ठी । सर्वादे अकारान्तस्य ङे स्मिन्नित्यन्वयस्तदर्थमाह-**सर्वादेरकारान्तस्य** इत्यादि । **संबन्धिनः**-सर्वादे शब्दरूपस्य य सबन्धी ङिस्तस्येत्यर्थ , तत्सबन्धित्वं तु तदर्थगतसंख्यादौ विधानादर्थद्वारकमेव द्रष्टव्यम् । **सर्वस्मिन्, विश्वस्मिन्** इति । सर्वविश्वशब्दाभ्या ङे स्मिन्नादेश । अत इत्यधिकारफलमाह—**अत इत्येव ? भवति**-भवच्छब्दस्य सर्वादित्वेऽपि व्यञ्जनान्तत्वेनाकारान्तत्वाभावान्न ङे स्मिन्नादेश । सर्वादेरित्यनुवृत्तस्य फलमाह—**सर्वादेरित्येव** इति । अय भाव -सर्वादेरित्यस्य असंज्ञायामिति विशेषणात् अर्थविशेषे च सर्वादित्वात् सज्ञायामर्थविशेषाभावे च न सर्वादित्वमित्यर्थः । तदाह-**सर्वो नाम कश्चित्-सर्वे** इति । सर्व इ इति स्थिते "अवर्णस्येवर्णादिना०" इत्येत्त्वम् । **समे देशे** इति । अविषम इत्यर्थ । सर्वादेरकारान्तस्य संबन्धिन ङेरित्युक्त्या तदसबन्धिनो ङे स्मिन्नादेशाभावमाचष्टे—**तत्संबन्धिविज्ञानादिह न** इत्यादि । **प्रियसर्वे, अतिविश्वे**-प्रियसर्व इ, अतिविश्व इ इति स्थिते "अवर्णस्ये०" इत्येत्त्वम् । अत्र सूत्रे ङेरिति सप्तम्येकवचनस्य परिग्रहस्तु "तदस्यास्त्यस्मिन्नि०"इति ज्ञापकात् ॥ ८ ॥

**जस इः** । "सर्वादे स्मै स्मातौ" इत्यत सर्वादेरिति, "अत आ स्या०"इत्यत अत इति चानुवर्तते, सर्वादेरकारान्तस्य जस इ इत्यन्वयस्तदर्थमाह—**सर्वादेरकारान्तस्य** इत्यादिना । सर्वशब्दात् प्रथमाबहुवचने "जस इ" "अनेकवर्ण सर्वस्य" ७।४।१०७। इति परिभाषाया अप्रवृत्तौ सर्वस्य कथं भवतीत्याह—**एकवर्णोऽपि** इत्यादिना । सर्व इ इति स्थिते "अवर्णस्ये०" इत्येत्त्वे रूपम् । एवमन्यत्रापि । अथ नपुसके सर्वशब्दात् 'नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात्' जस स्थाने इकारादेश कस्मान्न भवति ? उच्यते-परत्वाच्छिरादेश एव भवति बाधक इत्याह—**सर्वाणि इत्यादि** ॥ ९ ॥

**नेमार्धप्रथमचरमतयायाल्पकतिपयस्य वा** । "जस इ" इत्यनुवर्तते, नेमार्धप्रथमचरमतयायाल्पकतिपयस्य जस इर्वा इत्यन्वय । अत्र नेमादीनां समाहारद्वन्द्वात् षष्ठी । नेमादीना परिचयमाह—**नेमादीनि नामानि** इति । तयाययोर्नामत्वाभावमाह—**तयायौ प्रत्ययौ**—"अवयवात्तयट्" ७।१।१५१।, "द्वित्रिभ्यामयट् वा" ७।१।१५२। इति सूत्रविहितौ । सूत्रार्थमाह—**तेषामकारान्तानाम्** इत्यादिना । **प्राप्ते**-सर्वादित्वात् पूर्वेण इति शेष । **इतरेषाम्**-नेमशब्दव्यतिरिक्तानां अर्धादिशब्दानाम् । **अप्राप्ते**-सर्वादित्वाभावात् पूर्वेण इति शेष । **नेमे** इत्यादि पूर्ववत् ससाध्यम् । 'तय' रक्षणे च, 'अय' गतावित्याभ्यामचि तयायौ शब्दावपि स्त , परं व्याख्यानात् तयायौ प्रत्ययौ गृह्येते, तयोश्च केवलयोरसंभवात् तदन्तस्य कार्यं दर्शयति—**द्वितये** इत्यादि । द्वित्रिशब्दाभ्यामवयवात्तयटि "द्वित्रिभ्यामयट् वा"इत्ययटि च ततो जसोऽनेन विकल्पेन इकारादेश , व्युत्पत्तिपक्षेऽपि तयट्साहचर्यात् अयस्य तद्धितस्य ग्रहणम्, न तु "गयहृदया०" उ०३७०। इत्यौणादिकस्य । उभयट्शब्दस्य जस इकारादेशो विकल्पेन कस्मान्न भवतीत्याह—**उभयट्शब्दस्य** इत्यादि । प्रागेव निर्णीतम् । अयट्प्रत्ययरहितस्य अखण्डस्य उभयट्शब्दस्य तु सर्वादौ पाठात् पूर्वेण "जस इ"रित्यनेन नित्यमेव इत्वमित्यन्वय । **उभये** इत्यादि पूर्ववद्बोध्यम् । **तत्संबन्धिविज्ञानात्**-जसो नेमादिसबन्धिविज्ञानादित्यर्थ । इह न भवतीति तत्स्थलमाह—**प्रियनेमा** इत्यादि । **स्वार्थिकप्रत्ययान्ताग्रहणात्** इत्यादि । अय भाव-"सर्वादे स्मै स्मातौ" सूत्रे सर्वादिगणे डतरडतमग्रहणेनान्यस्वार्थिकप्रत्ययान्तानां ग्रहणमत्र प्रकरणे नेति पूर्वं ज्ञापितत्वादिति । **इह न भवति अर्धका** इति । कुत्सिता अर्धा अज्ञाता वा अर्धा इत्यर्थे कप्रत्यय स्वार्थिक । नेमशब्दस्य सर्वादित्वात् सर्वादेश्चासज्ञायामिति विशेषणात् नेमा नाम केचिदित्यत्रानेन जस पाक्षिक इकारादेशो न भवतीत्याह-**सर्वादेरित्येव ? नेमा नाम केचित्** इति । नामेत्यदन्तमव्ययम्, नाम्ना संज्ञया नाम प्रसिद्धार्थो वा । नन्वसंज्ञायामित्यस्य सर्वादेर्विशेषणत्वेनासर्वादीनामर्धादीनां संज्ञायामनेन विकल्पेन जस इकारादेश कथन्न भवतीत्याह—**व्यवस्थितविभाषाविज्ञानात्** इत्यादि । अर्धादीनामपि व्यवस्थितविभाषाविज्ञानात् संज्ञायां न भवति विकल्पेन जस इकारादेश इति शेष । व्यवस्थित-मर्यादानतिक्रान्त प्रयोगजात विशेषेण भाषते इति व्यवस्थितविभाषा तस्या विज्ञान तस्मादित्यर्थ । **अर्धादीनामपि** इत्यत्रापि शब्दात् नेमशब्दस्य सर्वादेरित्यत्रासज्ञायामिति विशेषणात् संज्ञायां विकल्पेन जस इकारादेशाभावसमुच्चय । अत इत्यधिकारफलमाह—**अत इत्येव ? नेमाः स्त्रियः**-अत्राऽकारान्तत्वाभावान्न भवति विकल्पेन जस इकारादेश ॥ १० ॥

## द्वन्द्वे वा ॥ १ । ४ । ११ ॥

द्वन्द्वे समासे वर्तमानस्याकारान्तस्य सर्वादेः सबन्धिनो जसः स्थाने इर्वा भवति । पूर्वोत्तरे, पूर्वोत्तराः, कतरकतमे, कतरकतमाः, दन्तकतमे, दन्तकतमाः; परमकतरकतमे, परमकतरकतमाः । तत्संबन्धिविज्ञानादिह न भवति–प्रियकतरकतमाः, वस्त्रान्तरवसनान्तराः । उत्तरेण निषेधे प्राप्ते प्रतिप्रसवार्थो योगः ॥ ११ ॥

## न सर्वादिः ॥ १ । ४ । १२ ॥

द्वन्द्वे समासे सर्वादिः सर्वादिर्न भवति, सर्वे सर्वादिकार्यं न भवतीत्यर्थः । पूर्वापराय, पूर्वापरात्, पूर्वापरे, कतरकतमानाम्, दक्षिणोत्तरपूर्वाणाम्–अत्र "सर्वादयोऽस्यादौ" ॥ ३ । २ । ६१ ॥ इति पुंवद्भावो भवत्येव, तत्र भूतपूर्वस्यापि सर्वादेर्ग्रहणात्, कतरकतमकाः–अत्र सर्वादित्वनिषेधादक्प्रत्ययाभावे कप्रत्यये सति स्वार्थिकप्रत्ययान्ताग्रहणाद् "द्वन्द्वे वा" ॥ १ । ४ । ११ ॥ इति जस इर्न भवति ॥ १२ ॥

## तृतीयान्तात् पूर्वावरं योगे ॥ १ । ४ । १३ ॥

पूर्व अवर इत्येतौ सर्वादी तृतीयान्तात् पदात् परौ योगे सबन्धे सति सर्वादी न भवतः । मासेन पूर्वाय,

---

**द्वन्द्वे वा** । सर्वादेरत इति "जस इ"रिति च सबध्यते, द्वन्द्वे अकारान्तस्य सर्वादेर्जस इर्वा इत्यन्वयस्तदर्थमाह—**द्वन्द्वे समासे** इत्यादिना । पूर्वसूत्रे नेम प्रति व्यभिचाराभावात् विशेषणानर्थक्यात् इतरान्प्रत्यसंभवाच्चस सर्वादेरित्यनेन संबन्धो न दर्शित , इह तु सम्भवव्यभिचारयोर्भावात् प्रदर्शित इत्याह–**सर्वादे**• **सम्बन्धिनो जस** इति । **पूर्वोत्तरे** इति । पूर्वाश्चोत्तराश्चेति द्वन्द्वाद्विकल्पेन जस इ । पक्षे रूपमाह—**पूर्वोत्तरा**• । **कतरकतमे**–कतरे च कतमे चेति द्वन्द्वस्ततो विभाषा जस इस्तदभावे चाह—**कतरकतमाः** । एव **दन्तकतमे** इत्यादयो बोध्या । सर्वादे संबन्धिनो जस इत्युक्तिप्रयोजनमाह—**तत्सबन्धिविज्ञानात्** इत्यादि । **प्रियकतरकतमाः**–प्रिया कतरकतमे कतरकतमा वा येषामिति विग्रह । **वस्त्रान्तरवसनान्तराः**–वस्त्रमन्तरं येषा ते वस्त्रान्तरा इति विग्रह , सर्वादित्वादन्तरशब्दस्य पूर्वनिपाते प्राप्ते राजदन्तादित्वाद्वस्त्रस्य पूर्वनिपात , एव वसनमन्तरं येषान्ते वसनान्तरा , ततो वस्त्रान्तराश्च वसनान्तराश्चेति कृते समानार्थत्वादेकशेष प्राप्नोति, नैवम्, अत्र वसनशब्दो गृहपर्याय इति न समानार्थत्वम् । यद्वा एकोऽन्तरशब्दो व्यवधानार्थो अन्यस्तु विशेषार्थ । ननु चान्तरशब्दो बहुव्रीहौ वर्तते न द्वन्द्वे इति कथमद प्रत्युदाहरणम्, न, तदवयवको बहुव्रीहिर्द्वन्द्व इति सोऽपि द्वन्द्व इति प्रत्युदाह्रियते, अत्र द्वन्द्वाधिकरणत्वेऽपि वस्त्रान्तरवसनान्तरशब्दयोस्तत्सबन्धिजस सर्वादिसबन्धित्वाभावाच्च भवति विकल्पेन इ । **उत्तरेण** इत्यादि । अय भाव –द्वन्द्वस्य शब्दप्रधानत्वादुत्तरपदस्य सर्वादे सर्वादित्वात् "जस इ"रिति प्राप्तस्य "न सर्वादि"रित्युत्तरसूत्रेण निषेधादप्राप्तस्य च जस इकारस्यानेन पुन पक्षे विधि क्रियते इति ॥११॥

**न सर्वादिः** । सर्वसर्वादिकार्यविधिवैयर्थ्यप्रसङ्गात् सर्वत्र सर्वादे सर्वादित्वनिषेधयोगायोगादनन्तरं द्वन्द्व इत्यनुवर्तनीयमित्याह—**द्वन्द्वे** इत्यादि । निषेधविषयमर्थात् सर्वादिरिति प्रकरणाच्च प्राप्तमाह—**सर्वमित्यादि** । **पूर्वापराय, पूर्वापरात्, पूर्वापरे** इति । पूर्व चापरं चेति समाहारद्वन्द्वात् सर्वादित्वनिषेधात्वादे स्मायादिर्न भवति । **कतरकतमानाम्** इति । कतरे च कतमे चेति द्वन्द्वात् सर्वादित्वनिषेधात् आमः "अवर्णस्याम साम्" इति साम् न भवति । **दक्षिणोत्तरपूर्वाणाम्** इति । दक्षिणा च उत्तरा च पूर्वा चेति द्वन्द्व । ननु सर्वस्य सर्वादिकार्यस्य निषेधात् कथमत्र "सर्वादयोऽस्यादौ" इति पुवद्भाव ? उच्यते–सर्वादय इत्यत्र बहुवचनस्य व्याप्त्यर्थत्वाद् भूतपूर्वस्यापि सर्वादेर्ग्रहणात् पुवद्भावो भवतीत्यर्थ । बहुवचनलभ्यमेवार्थं दर्शयन्नाह—**अत्र** इत्यादि । **कतरकतमका**• । ननु कतरे च कतमे चेति द्वन्द्वे सर्वादिकार्यस्य निषेधादज्ञाताद्यर्थेऽक् प्रत्ययाभावेऽपि कप्रत्यये सति स्वार्थिकत्वेन प्रकृत्यर्थाविशिष्टत्वात् कतरकतमका इति "द्वन्द्वे वा"इति "जस इ" कस्मान्न भवति अत आह—**अत्र सर्वादित्वनिषेधादित्यादि** । डतरडतमग्रहण हि तत्रेतरस्वार्थिकप्रत्ययान्ताग्रहणार्थमुक्तमित्यर्थ , डतरडतमौ च प्रकृतेरन्ते समागच्छतस्ततोऽन्योऽपि स्वार्थिक प्रत्ययो योऽन्ते समभ्येति तदन्तस्यैवाग्रहणम्, तेन अक्प्रत्यये सति एतत्प्रकरणविहित कार्यं भवत्येव । तत• सर्वके इति सिद्धम् ॥ १२ ॥

**तृतीयान्तात् पूर्वावरं योगे** । न सर्वादिरित्यनुवर्तते, पूर्वावरं तृतीयान्तात् योगे न सर्वादीत्यन्वय । **पूर्वावरम्**–"अश्ववडव०" ३।१।१३१। इति पूर्वशब्दस्यापरेण स्वेन समाहृतिर्भणिष्यते इति सूत्रत्वात् समाहार । कर्मधारयो वा पूर्वावयवयोगादिति । **योगे** इति । योग एकार्थीभावो व्यपेक्षा चोभय गृह्यते । **तृतीयान्तात्**–अत्रान्तग्रहण समासभेदप्रतिपत्त्यर्थम्, अनेकविभक्तिश्चात्र समास , तत्रैकार्थीभावे तृतीयाया अन्तो विनाशोऽस्त्यस्येत्यर्थ । स च समासे भवति । तत्र जहत्स्वार्थायामजहत्स्वार्थायां वा वृत्तौ उपसर्जनपदानि प्रधानार्थपदानि व्यर्थानि द्व्यर्थानि वा सन्त्येकार्थानि भवन्ति । तृतीयान्तात् परं पूर्वावरं सर्वादि न भवतीत्यत्र पक्षे परदिग्योगलक्षणा पञ्चमीति । यदा व्यपेक्षार्थो योगशब्दस्तदा तृतीया अन्ते यस्येति उद्भूतावयवत्वाद्बहुव्रीहेस्तृतीयाया समुदायेऽन्तर्भावात् कार्ये व्यापारात् "गम्ययप कर्माधारे" इति कर्मणि पञ्चमी विधानात् अर्थद्वारेण तृतीयान्त पदमाश्रित्य विशेषणविशेष्यभावे सति लौकिके प्रयोगार्हवाक्ये—पूर्वावरं वर्तमान सर्वादि न भवति । अथवा बहुव्रीहिरेव, तृतीयाया अन्तो–विनाशो यत्र तृतीया अन्ते यस्येति वा, पूर्ववत्सप्तम्यामर्थद्वयलाभ । यदि वा "प्रत्यय प्रकृत्यादे" ७।४।११५। इत्यन्तत्वे लब्धे अन्तग्रहण द्वन्द्वार्थम्—तृतीया च अन्तश्चेति तृतीयान्त तदाश्रित्येति योगे सतीत्येवमपि पूर्वोक्तार्थद्वयपरिग्रह सिध्यतीति । "प्रत्यय प्रकृत्यादे"रित्यन्तलाभात्तदभाववाक्यमेवैक सगृहीत स्यान्न तु समास । 'तृतीयासमास' इत्यपि कृते समास एक संगृहीतो भवति न वाक्यम् । ननु लाघवार्थं तृतीयासमासे इति सूत्रकरणेऽन्यस्यापि सर्वादे सर्वादिकार्यप्रतिषेधप्रसङ्ग इति वाच्यम्, "ऊनार्थपूर्वाद्यै" ३।१।६७। इति साक्षात्प्रतिपादितस्य प्रतिपदोक्तस्य सर्वादिषु पूर्वावरशब्दसम्बन्धिन एव तृतीयासमासस्य ग्रहणात् इति । अथैव सति वाक्यस्य परिग्रहाभाव इति चेन्न एकस्तृतीयासमास प्राथमकल्पिको यस्मिन्नेकपद्य एकविभक्तिकत्व चोच्यत इति । अन्यस्तु तृतीयासमासार्थानि पदानि तृतीयासमास इति तादर्थ्यात् कटवीरणवत् ताच्छब्द्य लभते तस्य ग्रहणे वाक्यस्यापि ग्रहण भवतीति । सत्य भवेदेव केवलमलौकिकमप्रयोगसमवायिवाक्य संगृहीत स्यात्तस्यैव तदर्थत्वात् । लौकिकस्य तु विपर्ययात् मुख्यार्थसंभवे गौणपरिग्रहाभावाद्वाक्यस्यापरिग्रह इति । तदेतत्सर्वमभिप्रेत्याह तदर्थम्—**पूर्व अवर इत्येतौ** इत्यादि । व्यपेक्षायामुदाहरति—**मासेन पूर्वाय** इति । अत्र तृतीयान्तात् मासेन इत्यस्मात् परत्र विद्यमानस्य पूर्वस्य सर्वादित्व-

मासपूर्वाय; संवत्सरेणावराय, संवत्सरावराय; मासेनाऽवराः, मासावराः । तृतीयान्तादिति किम्? ग्रामात् पूर्वस्मै, पूर्वस्मै मासेन; अवरस्मै पक्षेण । पूर्वावरमिति किम्? मासपरस्मै । योगे इति किम्? यास्यति चैत्रो मासेन पूर्वस्मै दीयतां कम्बलः ॥ १३ ॥

## तीयं ङित्कार्ये वा ॥ १ । ४ । १४ ॥

तीयप्रत्ययान्तं शब्दरूपं ङितां–ङेङसिङसूङीनां कार्ये कर्तव्ये वा सर्वादि भवति । द्वितीयस्मै, द्वितीयाय; द्वितीयस्यै, द्वितीयायै; द्वितीयस्मात्, द्वितीयात्; द्वितीयस्याः, द्वितीयाया आगतः; द्वितीयस्याः, द्वितीयायाः स्वम्; द्वितीयस्मिन्, द्वितीये; द्वितीयस्याम्, द्वितीयायाम्; एवं तृतीयस्मै, तृतीयाय इत्यादि । ङित्कार्ये इति किम्? तत्रैव सर्वादित्वं यथा स्यात्, नान्यत्र, तेनाक् न भवति । तथा च–कप्रत्यये सति स्वार्थिकप्रत्ययान्ताग्रहणात् स्मैप्रभृतयो न भवन्ति–द्वितीयकाय, तृतीयकाय; द्वितीयिकायै, तृतीयिकायै इत्यादि । अर्थवतः प्रतिपदोक्तस्य च ग्रहणादिह न भवति–पटुजातीयाय, मुखतो भवो मुखतीयः, गहादिपाठादीयः, मुखतीयाय; एवं पार्श्वतीयाय ॥ १४ ॥

## अवर्णस्यामः साम् ॥ १ । ४ । १५ ॥

अवर्णान्तस्य सर्वादेः संबन्धिनः षष्ठीबहुवचनस्यामः स्थाने साम् इत्ययमादेशो भवति । सर्वेषाम्, विश्वेषाम्

---

निषेधे न स्मायादेश । एकार्थीभावे चोदाहरति—**मासपूर्वायेति** । "ऊनार्थपूर्वाद्यै" इति समास । एवमन्यदपि । **तृतीयान्तादिति किम्?** तृतीयान्तमाश्रित्येति किमर्थम् । **ग्रामात् पूर्वस्मै**–अत्र तृतीयाया अभावान्न भवति प्रतिषेध । **पूर्वस्मै मासेन**–अस्ति ह्यत्र योगमात्र न तु तृतीयान्तमाश्रित्य, तथा हि–अत्रायमर्थ –'दीयता कम्बल पूर्वस्मै मासेन गतश्चैत्र' इति । ननु योगग्रहणेनैव व्यावर्तितमिद, नैव, तृतीयान्तमाश्रित्येति लभ्यत्वाद्विशिष्टयोगस्य । **मासपरस्मै**–अत्र पूर्व अवर इत्येतयोरभावान्न सर्वादित्वप्रतिषेध । **यास्यति चैत्रो मासेन पूर्वस्मै दीयतां कम्बल** इति । अत्र व्यपेक्षाया एकार्थीभावस्य च योगस्याभावान्न भवति प्रतिषेध, यतो हि 'यास्यति चैत्रो मासेन' इत्येक वाक्यम्, 'पूर्वस्मै दीयतां कम्बल' इत्यन्यत्, तत्र मासेनेत्यस्य पूर्वस्मै इत्यत्रान्वयाभावाद्योगाभाव इत्याशय । ननु यास्यति चैत्रो मासेन पूर्वस्मै इत्यत्र योगग्रहण विनापि "समर्थ पदविधि" इति न्यायेन भविष्यति निषेध किं योगग्रहणेन? उच्यते–योगग्रहणादन्यदपि सिद्धम्, अपरे सामान्येन तृतीयान्तेन योगे प्रतिषेध कृतो न तृतीयान्तात्, तेषां मते पूर्वाय मासेनेत्यपि भवति तन्मतसंग्रहार्थं तु पूर्वादियोगेऽपि पञ्चमी व्याख्येया, तेन तृतीयान्तात् पदात् पूर्वौ पूर्व अवर इत्येतावभ्यर्थौ बोध्य ॥ १३ ॥

**तीयं ङित्कार्ये वा** । सर्वादिरित्यत्रानुवर्तते, तीय ङित्कार्ये वा सर्वादिरित्यन्वय । **तीयमिति** अविनाभावात् प्रत्ययेन प्रकृतेराक्षेपात्तात्स्थ्यात्तत्समुदायस्य तस्य च तीयमिति विशेषणाद्विशेषणे च तदन्तविधेरुपस्थानादित्याह—**तीयप्रत्ययान्तं शब्दरूपमिति** । ङित्कार्ये इत्यस्य समासमुखेनाऽऽहाऽर्थ—**ङितां–ङेङसिङसूङीना**मित्यादि । **कार्ये कर्त्तव्ये** इत्यर्थस्तु सर्वादेस्तत्फलत्वेन फलवत्त्वादित्याशय, अन्यथा तदन्यङित्कार्ये कृते सर्वादित्वविधाने फलाभाव । तथा च ङित्कार्ये इति ङित्स्थानिके स्मैभावादौ ङिदाश्रये च "सर्वादेर्डस्पूर्वा" १।४।१८। इति डसागमेऽयं विकल्प इति, डसागमोऽपि हि आपो भवन् ङित एव भवति न तु ङिति परे, तेन सर्वादेरन्त्यात् स्वरात् पूर्वोऽग् न भवति, न ह्यक् ङित्कार्यम् । तत्रागमावे कप्रत्यये स्वार्थिकप्रत्ययान्ताग्रहणात् डतरडतमग्रहणेन पूर्वं ज्ञापितत्वात् स्मायादीनामभावस्तदाह—**ङित्कार्ये किम्** इत्यादिना, **न भवन्ति** इत्यन्तेन । **तत्रैव**–ङित्कार्ये स्मैभावादौ कर्त्तव्य एवेत्यर्थ । **नान्यत्र**–तस्मात् अन्यस्मिन्कार्ये कर्त्तव्ये तीयप्रत्ययान्त न सर्वादि । तत्फलमाह—**तेनाक् न भवति**–अको ङित्कार्यत्वाभावादित्यर्थ । ननु तीयप्रत्ययान्तात् स्वार्थे कप्रत्यये तस्य स्वार्थिकत्वात् प्रकृतितोऽविशिष्टतया कथन्न स्मायादय इत्याह—**तथा च कप्प्रत्यये सति स्वार्थिकप्रत्ययान्ताग्रहणात्** इत्यादि । डतरडतमग्रहणेन ज्ञापितत्वादिति भाव । **द्वितीयकाय**—अत्राक्प्रत्यये कर्त्तव्येऽनेन सर्वादित्व न भवति, ङित्कार्य एव तेन विभाषा सर्वादित्वविधानात्, के तु सति प्रकृतितोऽविशिष्टतया ङित्कार्ये कर्त्तव्ये प्राप्तमपि सर्वादित्व डतरडतमग्रहणज्ञापितान्यस्वार्थिकप्रत्ययान्ताग्रहणेन निषिध्यते । **द्वितीयिकायै**–"स्वज्ञाजभस्त्रा०" २।४।१०८। इति आप इ, यत्र तु इत्व न दृश्यते तत्र "ङ्यादीदूत के" २।४।१०४। इति ह्रस्वत्वम् । **अर्थवत. प्रतिपदोक्तस्य च ग्रहणात्** इति । 'अर्थवद्ग्रहणे नाऽनर्थकस्येति' 'लक्षणप्रतिपदोक्तयो प्रतिपदोक्तस्यैव' ग्रहणमिति च न्यायेनार्थवत प्रतिपदोक्तस्य च "द्वेस्तीय" ७।१।१६५। इति, "त्रेस्तृ च" ७।१।१६६। इति च विहितस्य तीयप्रत्ययस्य ग्रहणादित्यर्थ । **इह न भवति**—अनेन पाक्षिक सर्वादित्वमिति शेष । कुतेस्यत आह—**पटुजातीयाय** इति । पटु प्रकारोऽस्येति विग्रहे "प्रकारे जातीयर्" ७।२।७५। इति जातीयरि तस्माच्चतुर्थ्येकवचने रूपम् । **गहादिपाठादीय.**—"गहादिभ्य" ६।३।६३। इत्यनेन । पटुजातीयायेत्यादौ जातीयस्य ईयेत्यस्य चार्थवत्त्वाज्जातीय इत्येतदेकदेशस्य मुखतीय इत्यत्र चावयवसंबन्धात् नास्य तीयस्यानर्थकत्वात् ग्रहणाभाव, लाक्षणिकत्वाद् वा, तथा हि–जातीयसमुदायेन वा तस्य लाक्षणिकत्व बोध्यमित्यर्थ ॥ १४ ॥

**अवर्णस्यामः साम्** । अत्र सर्वादेरित्यनुवर्तते, तत्रावर्णस्येति विशेषणत्वात्तदन्तविधिलाभ, अवर्णान्तस्य सर्वादेराम सामित्यन्वयस्तदर्थमाह—**अवर्णान्तस्य** इत्यादिना । आम सन्ति बहवस्तथा हि—"आपो ङिता०" १।४।१७। इति यामेकदेश, तत्र यामेकदेशस्यामोऽनर्थकत्वादग्रहणम् । "परस्परान्योन्येतरेतरस्याम्०" ३।२।१। इत्याम सामादेशो तत्रैव सामेवोच्येत, न ह्यामादेश कृत्वा साम्वचने किंचित्प्रयोजनमस्ति, प्रक्रियागौरव च परिहृत भवति । परोक्षादेशस्तु आम् धातोर्विधीयमान सर्वादेर्न सम्भवत्येव, "कर्तृ क्विप्०" ३।४।२५। इति क्विप्प्रत्ययान्ततायां सम्भवेऽपि स्यादिरित्यधिकारादपास्यते । "ङिया ङितां०" १।४।२८। इति दामेकदेशस्तु अवर्णान्तस्य सर्वादेर्न सम्भवत्येव इति पारिशेष्यात् षष्ठीबहुवचनस्यैव ग्रहणमित्याह—**षष्ठीबहुवचनस्याम** इति । **सर्वेषाम्, विश्वेषाम्** इति । सर्वविश्वशब्दाभ्यामनेन सामादेशे "पदद्रुसोसि" इत्येत्वे "नाम्यन्तस्था०" इत्यनेन षत्वम् । अथात्रावर्णसंनिपातेन जात सामादेश कथ तद्विघातहेतोरेत्वस्य निमित्त स्यादि-

'संनिपातलक्षण०' न्यायस्यानित्यत्वादेत्त्वम् । सर्वासाम्, विश्वासाम्, परमसर्वेषाम्; परमसर्वासाम् । सर्वादेरित्येव ? द्वयानाम्, द्वितयानाम् । कथं ? 'व्यथां द्वयेषामपि मेदिनीभृताम्' इति, अपपाठ एषः । तत्सवन्धिविज्ञानादिह न भवति— प्रियसर्वाणाम् । अवर्णस्येति किम् ? भवताम्, भवतीनाम् ॥ १५ ॥

## नवभ्यः पूर्वेभ्य इस्मात्स्मिन् वा ॥ १ । ४ । १६ ॥

पूर्वादिभ्यो नवभ्यो यथास्थानं ये इ स्मात् स्मिन् आदेशा उक्तास्ते वा भवन्ति । पूर्वे, पूर्वाः; पूर्वस्मात्, पूर्वात्; पूर्वस्मिन्, पूर्वे; परे, पराः; परस्मात्, परात्; परस्मिन्, परे । नवभ्य इति किम् ? त्ये, त्यस्मात्; त्यस्मिन् । पूर्वेभ्य इति किम् ? सर्वे, सर्वस्मात्; सर्वस्मिन् । पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व; अन्तर इति पूर्वादयो नव ॥ १६ ॥

## आपो ङितां यैयास्यास्याम् ॥ १ । ४ । १७ ॥

आबन्तसवन्धिनां स्यादेर्ङितां—ङेङसिङसङीनां स्थाने यथासंख्यं यै यास् यास् याम् इत्येते आदेशा भवन्ति । खट्वायै, खट्वायाः, खट्वायाः, खट्वायाम्; वहुराजायै, वहुराजायाः, वहुराजायाः, वहुराजायाम्, कारीषगन्ध्यायै, कारीषगन्ध्यायाः, कारीषगन्ध्यायाः, कारीषगन्ध्यायाम् । आप इति पकारः किम् ? कीलालपे । तत्संवन्धिविज्ञानादिह न भवति—वहुखट्वाय पुरुषाय, इह तु भवति—वहुखट्वायै विष्टराय इत्यादि ॥ १७ ॥

## सर्वादेर्डस्पूर्वाः ॥ १ । ४ । १८ ॥

सर्वादेरावन्तस्य सवन्धिनां ङितां यैयास्यास्यामस्ते डस्पूर्वा भवन्ति । सर्वस्यै, सर्वस्याः, सर्वस्याः, सर्वस्याम्;

---

त्यत आह—**संनिपातलक्षणन्यायस्यानित्यत्वादेत्त्वम्** इति । **सर्वासाम्, विश्वासाम्** इति । सर्वविश्वशब्दाभ्या "आत्" इत्यापि सामादेश । **द्वयानाम्** इति । द्विशब्दात् "द्वित्रिभ्यामयट्"इत्ययटि, सर्वादित्वाभावादाम सामभावे, "ह्रस्वापश्च" १।४।३२। इति नामादेश । **द्वितयानाम्** इति । द्विशब्दात् "अवयवात्तयट्" ७।१।१५१। इति तयटि आमि सर्वादित्वाभावात् नामादेश । **कथम् ?** इत्याशङ्कते, यथ-यडादिप्रत्ययान्तस्य सर्वादित्व नास्ति, तत्कथ द्वयेषामित्यत्र तत्कार्यमित्याशङ्कार्थ , परिहरति-**अपपाठ एषः** । शिशुपालवधे–१२ सर्गे, १३ श्लोकस्तथा हि—"समूर्च्छदुच्छृङ्खलशङ्खनि स्वन स्वन प्रयाते पटहस्य शार्ङ्गिणि । सत्वानि निन्ये नितरां महान्त्यपि **व्यथां द्वयेषामपि मेदिनीभृताम्"** ॥१३॥ कृष्णस्य पटहश्रवणाद् राज्ञां वलान्यभिभवशङ्कायां व्यथितान्यासन्, तथा गिरिस्थिता सिंहादयो जन्तवश्च किमिदमिति ससाध्वसा आसन्नित्यर्थं । **प्रियसर्वाणाम्**—अत्राम सर्वादिसवन्धित्वाभावात् न सामादेश । **भवताम्**—भवच्छब्दस्यावर्णान्तत्वाभावात् सर्वादित्वेऽपि नाऽऽम साम् । एव **भवतीनाम्** ॥ १५ ॥

**नवभ्यः पूर्वेभ्य इस्मात्स्मिन् वा** । पूर्वेभ्यो नवभ्य इस्मात्स्मिन् वा इत्यन्वय । नवभ्य पूर्वेभ्य इति बहुवचनात् पूर्वादयो विज्ञायन्त इत्याह—**पूर्वादिभ्य** इति । पूर्वशब्दमादिं कृत्वा नवग्रहणादन्तरशब्दपर्यन्तेभ्य इत्यर्थं । पूर्वादयश्च इस्मात्स्मिन् इति कार्यानुवादाद्ग्रहणस्यैव च प्रस्तुतत्वाद् गणसन्निविष्टा एव गृह्यन्ते न सञ्ज्ञोपसर्जनीभूता इत्याह—**यथास्थान**मित्यादि । पूर्वशब्दात् जस्ङसिङीनामिस्मात्स्मिनो विभाषया भवन्तीति **पूर्वे, पूर्वा** इत्याद्युदाहृतम् । एवमन्यत्रापि । **नवभ्य इति किम्** इति । पूर्वेभ्य इत्यायेव सूत्र्यता, तावतैव पूर्वे पूर्वा इत्यादिसिद्धेरिति प्रश्न । **त्ये, त्यस्मात्, त्यस्मिन्**—त्यद्शब्दात् जस्ङसिङिषु अत्वादौ कृते नवभ्य इति वचनाद् विकल्पाभावे नित्यमिकारादिषु कृतेषु सिध्यन्ति । **पूर्वेभ्य इति किम् ?** यदि पूर्वेभ्य इति नोच्येत तदा पूर्वादय एव नवेति न स्यादिति सर्वादावपि विकल्प स्यात्, तन्निर्दिशति–**सर्वे** इत्यादि । नव पूर्वादीन् परिगणयति—**पूर्व, पर** इत्यादिना ॥ १६ ॥

**आपो ङिता यैयास्यास्याम्** । पूर्वसूत्रेषु सर्वादेरव्यभिचारेऽपि उत्तरसूत्रे सर्वादिग्रहणात् इह सामान्यमवगम्यत इत्याह—**आवन्तसंवन्धिना**मिति । यैप्रभृत्यादेशानां चतुष्ट्वात् ङिच्छब्दपरिगृहीतानां चतुर्थीपञ्चमीषष्ठीसप्तम्येकवचनानामादेशिनामपि तावत्संख्यत्वात् यथासंख्येन वृत्तिरित्याह—**ङितां–ङेङसिङस्ङीना स्थाने यथासंख्य**मिति । **खट्वायै, खट्वाया , खट्वायाः, खट्वायाम्** इति । खट्वाशब्दात् ङेङसिङसङीनां स्थानेऽनेन यायाद्यादेशा । **वहुराजायै** इत्यादि । एव महवो राजानो यस्यामित्यादिविग्रहे "ताभ्यां वाप् डित्" २।४।१५। इति डिदापि "डित्यन्त्यस्वरादे "इत्यन्त्यस्वरादिलोपे पूर्ववत् ङितां यायायादेशा । **कारीषगन्ध्यायै** इत्यादि । करीषस्येव गन्धो यस्य स करीषगन्ध तस्यापत्य वृद्ध स्त्रीतिविग्रहे "अत इञ्" ६।१।३१। इति इञि, तस्य "अनार्षे वृद्धे०" २।४।७८। इति ष्यादेशे, "आत्" इत्यापि पूर्ववद्यैप्रभृत्यादेशा । **आप इति पकारः किम् ?** इति । सूत्रे आप इत्यत्र पकार किमर्थ इति प्रश्न । **कीलालपे** इति । 'कील'वधे, धातो "ऋकृमृवृतनि०" उ० ४७५। इत्यालप्रत्यये कीलाल–मद्य–जलमसृक् च तत्पूर्वात् पिवते "मन्वन्०" ५।१।१४७। इति विचि, चतुर्थ्येकवचने पकारकरणाद्यायादेशाभावे "लुगातोऽनाप " २।१।१०७। इत्याकारलोपे रूपमेतत् । **वहुखट्वाय पुरुषाय** इति । वहव खट्वा यस्येति विगृह्य "गोश्चान्ते०" २।४।९६। इति ह्रस्वत्वे तस्य स्थानिवद्भावेऽपि चतुर्थ्येकवचनस्य तत्सवन्धित्वाभावाद्यायादेशाभाव । **वहुखट्वायै विष्टराय** इति । ईषदसमाप्ता खट्वेत्यर्थे "नाम्न प्राग्बहुर्वा" ७।३।१२। इति प्राग्बहौ ङेस्तत्सम्बन्धित्वात् यायादेश । विष्टराय इति विपूर्वात् स्तृणातेरचि गुणे "वे स्त्र " २।३।२३। इति षत्वे, "तवर्गस्य०"इति टत्वे, विष्टरस्ततश्चतुर्थ्येकवचने भवति ॥ १७ ॥

**सर्वादेर्डस्पूर्वा** । आपो ङितां यैयास्यास्याम् इति समग्र सूत्रमत्रानुवर्तते । सर्वादेरापो ङितां यैयास्यास्यामो डस्पूर्वा इत्यन्वयस्तदर्थमाह—**सर्वादे**रित्यादि । **आबन्तस्ये**त्यापोऽर्थंस्तु "प्रत्यय प्रकृत्यादे "इति विशेषणत्वात् अन्तपदलाभात् । **डस्पूर्वा इति** । डस् पूर्वो येभ्यस्ते इत्यर्थं , डकारो डित्कार्यार्थं । **सर्वस्यै, सर्वस्या , सर्वस्याः, सर्वस्याम्** इति । सर्वशब्दादापि ङेङसिङस्ङीनां स्थाने पूर्वेण

परमसर्वस्यै, परमसर्वस्याः, परमसर्वस्याः, परमसर्वस्याम्; अस्यै, अस्याः, अस्याः; अस्याम्–अत्र परत्वात् पूर्वमदादेशे पश्चाड्डस् । तीयस्य विकल्पेन ङित्कार्ये सर्वादित्वात्–द्वितीयस्यै, द्वितीयायै । सर्वादेरिति किम्? सर्वा नाम काचित् सर्वायै । तत्संबन्धिविज्ञानादिह न भवति–प्रियसर्वायै, अतिसर्वायै । दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा दिक्–दक्षिणपूर्वायै, दक्षिणपूर्वायाः, दक्षिणपूर्वायाः, दक्षिणपूर्वायाम्; एषु बहुव्रीह्यादेरन्यपदार्थादिप्रधानत्वात् सर्वादित्वाभावः । यद्येवं कथं दक्षिणपूर्वस्यै, दक्षिणपूर्वस्याः, दक्षिणपूर्वस्याः, दक्षिणपूर्वस्याम् इति? दक्षिणा चासौ पूर्वा चेति कर्मधारये भविष्यति । अथ च बहुव्रीह्यादेः सर्वादित्वाभावे कथं त्वकत्पितृकः, मकत्पितृकः, द्वकिपुत्रः, ककिसब्रह्मचारी? इत्यादावक्प्रत्ययः, उच्यते–अन्तरङ्गत्वात् पूर्वमेवाक् भविष्यति, अन्ये तु बहुव्रीहावन्तरङ्गस्याप्यकः प्रतिषेधमिच्छन्ति, तन्मते कप्रत्यय एव त्वत्कपितृको मत्कपितृकः ॥ १८ ॥

## टौस्येत् ॥ १ । ४ । १९ ॥

आबन्तस्य संबन्धिनोष्टौसोः परयोरेकारोऽन्तादेशो भवति । खट्वया, खट्वयोः; बहुराजया, बहुराजयोः, कारीषगन्ध्यया, कारीषगन्ध्ययोः । आप इत्येव? कीलालपा ब्राह्मणेन । तत्संबन्धिविज्ञानादिह न भवति–बहुखट्वेन पुरुषेण, इह तु भवति–ईषदपरिसमाप्तया खट्वया, बहुखट्वया विप्रेण ॥ १९ ॥

---

यैप्रभृत्यादेशेऽनेन ङस्पूर्वत्वे, अन्त्यस्वरादिलोपे चेमानि रूपाणि सिद्ध्यन्ति । एव **परमसर्वस्यै** इत्यादि । **अस्यै, अस्याः, अस्याः, अस्याम्** इति । इदम्शब्दाच्चतुर्थ्येकवचनादौ "आद्वेर" इत्यत्वे, "लुगस्यादेत्यपदे" इत्यकारलोपे, "आत्" इत्यापि, "आपो ङिताम्" इति यायाद्यादेशे, "अनक्" इत्यदादेशेऽनेन ङस्पूर्वत्वे "ङित्यन्त्यस्वरादे" इत्यकारलोपे भवन्ति । अथात्र यायाद्यादेशे कृते सर्वादित्वेन तत्प्रष्ठभावित्वात् ङसि कृते व्यञ्जनादित्वाभावात् कथमदादेश इत्याह–**अत्र परत्वात् पूर्वमदादेशे पश्चाड्डस्** इति । द्वितीयस्यै, द्वितीयायै इत्यादिरूपद्वयनिष्पत्तौ हेतुमाह–**तीयस्य विकल्पेन ङित्कार्ये सर्वादित्वात्** इति । "तीयस्य ङित्कार्ये वा" इत्यनेनेति शेष । **प्रियसर्वायै** इति । प्रिया सर्वा यस्या इति विग्रह, सर्वशब्दस्य प्राग्निपाते प्राप्ते "प्रिय" ३।१।१५७। इति प्रियस्य प्राग्निपात । **अतिसर्वायै** इति । सर्वामतिक्रान्ता या तस्यै इत्यर्थं, अत्र ङ्यत्सम्बन्धित्वाभावात् नानेन ङस्पूर्वो यायादेश, किन्तु "सर्वादयोऽस्यादौ" ३।२।६१। इति यथासम्भव पूर्वस्य पुवद्भावे चतुर्थ्येकवचनादे पूर्वेण यैप्रभृत्यादेश । दक्षिणपूर्वायै इत्यादेर्विग्रहमाह–**दक्षिणस्याश्च पूर्वस्याश्चेत्यादिना** । **दक्षिणपूर्वायै** इत्यादि । पूर्वोक्तविग्रहे "दिशो रूढ्यान्तराले" ३।१।२५। इति समासेऽन्यत् पुवद्भावादिकार्यं प्राग्वद्बोध्यम् । एतेषु क्वचिदन्यपदार्थप्रधानत्वात् क्वचित्पूर्वपदार्थप्रधानत्वात् उपसर्जनत्वेन सर्वादेस्तत्सम्बन्धित्वाभावाद्यैप्रभृतीनां तत्पूर्वो ङस् न भवतीत्याह–**एषु बहुव्रीह्यादेरन्यपदार्थादिप्रधानत्वात् सर्वादित्वाभाव** इति । **एषु**–प्रियसर्वायै, अतिसर्वायै, दक्षिणपूर्वायै इत्यादिषु । **बहुव्रीह्यादेः**–अत्रादिपदेन अतिसर्वायै इत्यत्र "प्रात्यव०" ३।१।४७। इति विहिततत्पुरुषस्य ग्रहणम् । **सर्वादित्वाभाव** इत्यत्र हेतुमाह–**अन्यपदार्थादिप्रधानत्वात्** इति । आदिशब्देन अतिसर्वायै इत्यत्र पूर्वपदार्थप्रधानत्वस्य ग्रहणम् । **यद्येवम्** इति । यद्युपसर्जनत्वेन सर्वादेस्तत्सम्बन्धित्वाभावस्तदा दक्षिणपूर्वस्यै इत्यादावप्यन्यपदार्थप्रधानत्वेन सर्वादिसम्बन्धित्वाभावात् कथ ङस्पूर्वादेशा इति प्रश्नार्थ । समाधत्ते–**दक्षिणा चासौ** इत्यादि । पुन पृच्छति–**अथ च बहुव्रीह्यादे**रिति । परेण बहुव्रीह्यादेरिति प्रागमिदधे तदेव अनूदितम्, अत आदे फल न निरीक्ष्यम् । त्वक पितास्य, अहक पितास्य, द्वकौ पुत्रावस्य, कके सब्रह्मचारिणोऽस्येत्यादि विग्रह्य त्यदादेर्बहुव्रीहावुपसर्जनत्वेऽप्रधानत्वात् कथ "त्यादिसर्वादे ०" इत्यक् । समाधत्ते–**अन्तरङ्गत्वादित्यादि** । अयमर्थं–अन्तरङ्गत्वात् सर्वाद्यभिधाननिमित्तेनाका तावद्भाव्य, पश्चात् पदान्तरसंनिधाने वर्तिपदार्थविशेषणान्यपदार्थविवक्षायां बहुव्रीहिणेत्यनुपसर्जनत्वात् प्राप्नोत्यसिद्धदोष । **अन्येतु** इति । उत्पलादय, सूत्रकृत पाणिनेरपि "न बहुव्रीहौ" पा० १।१।२९। इति सूत्राक्षरैरयमेवार्थ प्रकाशते, परन्तु तस्मिन्नेव सूत्रे गोनर्दीय आह–'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्ग मुक्तसंशयौ' इति भाष्यकृदुक्त्या त्वकत्पितृकस्यैवेष्टत्वमवधार्यते । पाणिनेरपि च तदेव सम्मतम् 'यथोत्तरं मुनीनां प्रामाण्यात्' इति दिक् । आचार्यपाणिनि उत्पलादयश्च "न बहुव्रीहौ" इति सूत्रमारभ्य तद्वैयर्थ्यप्रसङ्गात् बहुव्रीहिविषयभूते वाक्येऽपि सर्वादिकार्यस्याक प्रतिषेधमिच्छन्त। कप्रत्ययमेवेच्छन्ति, तन्मते–त्वत्कपितृको मत्कपितृक इति स्यात् ॥ १८ ॥

**टौस्येत्** । टौसि एत् इति पदच्छेद । टौसि–टाश्च ओश्च टौस्तस्मिन्निति, समाहारे च कार्यायोगात् समाहारद्वारेण समाहारिणौ निमित्तत्वेन नामविशेषणस्य आप इत्यनुवर्तमानस्य आदेशिनो विशेष्यत्वेन च लक्ष्येते इत्याह–**आबन्तस्य संबन्धिनोष्टौसोरि**ति । "षष्ठ्यान्तस्य" ७।४।१०६। इति न्यायादाबन्तसमुदायान्त्यस्यैव भवतीत्युक्त**मेकारोऽन्तादेश** इति । **खट्वया**–अत्र दीर्घापवाद एत्त्वम्, ततोऽयादेश । **खट्वयोः**–अत्र चौत्त्वापवादस्ततोऽयादेश । **बहुराजया, बहुराजयो**रिति । बहवो राजानो यस्यामिति विगृह्य पूर्ववत् डिदापि तस्य टौसोरेत्त्वेऽयादेशे च भवत । **कारीषगन्ध्यया, कारीषगन्ध्ययोः** इति । कारीषगन्ध्याशब्दात् टौसो पूर्ववदेत्त्वादौ सिध्यत । आप इत्यनुवर्तमानस्य फलमाह–**आप इत्येव? कीलालपा ब्राह्मणेन** इति । कीलाल पिबतीति विग्रहे विच् कीलालपास्तस्माट्टायां "लुगातोऽनाप" इत्याकारलोपे संयोगे च भवति । **बहुखट्वेन पुरुषेण** इति । बहवः खट्वा यस्येति विग्रह्य "गोश्चान्ते०" इति ह्रस्वत्वे तस्य स्थानिवद्भावेऽपि टायास्तत्सम्बन्धित्वाभावादेत्त्वादेशाभाव । **बहुखट्वया विप्रेण** इति । ईषदपरिसमाप्ता खट्वेत्यर्थे "नाम्न प्राग्बहुर्वा" इति प्राग्बहौ टायास्तत्सम्बन्धित्वादेत्वेऽयादेश । एदिति तकारोऽसंदेहार्थोऽन्यथाऽन्तरेण तकारमेरित्युच्यमाने किमेकार आदेशो भवति आहोस्विदिकारस्य टौसो परयो पूर्वे आदेशा इति सन्देह स्यात् ॥ १९ ॥

## औता ॥ १ । ४ । २० ॥

आबन्तस्य संबन्धिना औता प्रथमाद्वितीयाद्विवचनेनौकारेण सहाबन्तस्यैवैकारोऽन्तादेशो भवति । माले तिष्ठतः, माले पश्य, एवं बहुराजे नगर्यौ; कारीषगन्ध्ये कन्ये । आप इत्येव ? कीलालपौ पुरुषौ । तत्संबन्धिविज्ञानादिह न भवति–बहुखट्वौ पुरुषौ, इह तु भवति–ईषदपरिसमाप्ते खट्वे, बहुखट्वे मञ्चकौ ॥ २० ॥

## इदुतोऽस्त्रेरीदूत् ॥ १ । ४ । २१ ॥

स्त्रिशब्दवर्जितस्येदन्तस्योदन्तस्य च औता सह यथासंख्यमीत् ऊत् इत्येतावन्तादेशौ भवतः । मुनी तिष्ठतः, मुनी पश्य; साधू तिष्ठतः, साधू पश्य । इदुत इति किम् ? वृक्षौ, नद्यौ, वध्वौ । औता इत्येव ? मुनिः, साधुः । सख्यौ, पत्यौ इत्यत्र तु विधानसामर्थ्यात् न भवति । अस्त्रेरिति किम् ? अतिस्त्रियौ पुरुषौ । कथं शस्त्रीमतिक्रान्तौ अतिशस्त्री पुरुषौ ? 'अर्थवद्ग्रहणे नानर्थकस्य' इति प्रतिषेधाभावात् । इदमेव चास्त्रिग्रहणं ज्ञापकम् 'परेणापीयादेशेनेदुत्कार्यं न बाध्यते' इति तेन–अतिस्त्रयः, सहस्त्रयस्तिष्ठन्ति, अतिस्त्रये, अतिस्त्रेः, अतिस्त्रीणाम्, अतिस्त्रौ निधेहीत्यादि सिद्धम् ॥२१॥

## जस्येदोत् ॥ १ । ४ । २२ ॥

इदन्तस्योदन्तस्य च जसि परे यथासंख्यमेत् ओत् इत्येतावन्तादेशौ भवतः । मुनयः, साधवः, बुद्धयः, धेनवः; अतिस्त्रयः । जसीति किम् ? मुनिः, साधुः ॥ २२ ॥

---

औता । आप इत्यनुवर्तते एदिति च । आप इत्यस्य नामविशेषणतया आबन्तस्येत्यर्थः । औता–सूत्रे विशेषस्यानिर्देशात् सामान्येन प्रथमाद्वितीयाद्विवचनेनौकारेणेत्याह वृत्तौ । आबन्तस्येत्येकापि षष्ठी द्विधार्थवशाद् भिद्यते सबन्धेन स्थानितया चेत्युक्तं वृत्तौ—**आबन्तस्य संबन्धिना औता सह आबन्तस्यैव स्थाने एकारोऽन्तादेश** इति । नन्वेकेन सबन्धेन चरितार्थत्वात् स्थानसबन्धो न घटते, एकारस्यादेशत्वात्तस्य च स्थानमन्तरेणासभवात् प्रत्यासत्तेस्तस्यैव स्थानित्वं परिकल्प्यते इत्यदोषः । एवं पूर्वसूत्रेऽपि द्रष्टव्यम् । **माले तिष्ठतः, माले पश्य** इति । माला औ इत्यत्र औकारेण सहाबन्तस्यानेनैत्वम् । तिष्ठत, पश्य इत्यनुप्रयोगौ प्रथमाद्वितीयाद्विवचनयोः क्रमेणाभिव्यक्त्यर्थौ । **एवं बहुराजे** इत्यादि बोध्यम् । **कीलालपौ पुरुषौ** इति । आबन्तत्वाभावादनेनौकारेण सह नैत्वम् । **बहुखट्वौ पुरुषौ** इति । आबन्तसबन्धित्वाभावादौकारस्य न भवत्याबन्तस्य स्थानिवद्भावेनैत्वम् । **बहुखट्वे मञ्चकौ** इति । अत्रौकारस्य आबन्तसबन्धित्वात्तेन सहाबन्तस्यैत्वं भवति ॥ २० ॥

**इदुतोऽस्त्रेरीदूत्** । औता इत्यनुवर्त्तते । अस्त्रेरिदुत औता ईदूत् इत्यन्वयः । अस्त्रेरित्यस्यार्थमाह—**स्त्रिशब्दवर्जितस्य इति** । स्त्रिशब्दस्यावयवो यस्यासाविकारो न भवति ततस्तस्य भवतीत्यर्थः । इदुत इति समाहारद्वन्द्वात् षष्ठी, तस्य च नामविशेषणतया इदन्तस्योदन्तस्य चेत्यर्थस्तदाह—**इदन्तस्येत्यादि** । अस्त्रेरितीदन्तस्येत्यस्य विशेषणं, नोदन्तस्येत्यस्य, असभवात् । आदेशादेशिनोः समसंख्याकत्वेनाह—**यथासङ्ख्यमिति** । "षष्ठ्या अन्त्यस्य" इति न्यायादिदन्तोदन्तसमुदायान्त्यस्यैव भवतः इत्युक्तम्—**ईत् ऊत् इत्येतावन्तौ आदेशौ** इति । **मुनी इति** । मुनिशब्दात् प्रथमाद्वितीयाद्विवचनौकारेऽनेनेदन्तस्य मुनिशब्दस्यान्त्येकारस्य स्थाने परेणौता सह ईदन्तादेशः । **साधू इति** । साधुशब्दान्त्योकारस्य पूर्ववदौता सह ऊदन्तादेशः । **इदुत इति किम्** ? इति । अस्त्रेरीदूत् इत्येव सूत्र्यतां तावतैव मुनी साधू इत्यादिसिद्धेरिति प्रश्नः । **वृक्षौ, नद्यौ, वध्वौ** इति । अकारान्तदीर्घेकारान्तदीर्घोकारान्तानामेषामन्त्यस्य ईदूतौ अन्तादेशौ मा भूतामितीदुत इति । **मुनिः, साधुः**–अत्र सिप्रत्ययेन सहेदन्तोदन्तयोरन्त्यस्य मा भूतामीत् ऊत् इत्येतावन्तादेशौ इति औता इति । **सख्यौ, पत्यौ** इति । अत्र सखिपतिशब्दाभ्यां सप्तम्येकवचनस्य "केवलसखिपतेरौ" १।४।२६। इत्यौकारे इकारात् परं औकारो अस्ति इति कथं तेन सह ईकारादेशो न भवतीत्याह—**अत्र तु विधानसामर्थ्यादित्यादि** । अयमर्थः–यद्यत्रौकारे कृतेऽपि सखिपतिशब्दाभ्यामनेन ईकारः स्यात् तदा प्रक्रियालाघवार्थं तत्रैव ईकारं विदध्यात्, अविहितश्चेति ज्ञायते न भवति विधानसामर्थ्यादीकारः । **अस्त्रेरिति किम्** ? सूत्रेऽस्त्रेरित्यस्य किं प्रयोजनमित्यर्थः । **अतिस्त्रियौ इति** । स्त्रियमतिक्रान्तावित्यर्थे, "गोश्चान्ते०" इति ह्रस्वत्वे स्त्रिवर्जनादीकाराभावे "स्त्रियाः" २।१।५४। इतीयादेशे रूपम् । आशङ्कते—**कथमिति** । **शस्त्रीमतिक्रान्तौ अतिशस्त्री पुरुषौ** इति । अत्र औतस्य सत्त्वेनानेन कथमीकार इति प्रश्नकर्तुराशयः । समाधत्ते—**'अर्थवद्ग्रहणे नानर्थकस्य' इति प्रतिषेधाभावात्** इति । शस्त्रीशब्दस्यार्थवत्त्वात्तदेकदेशस्य स्त्रिशब्दस्यानर्थकत्वादस्त्रेरिति प्रतिषेधाभाव इत्यर्थः । नन्वस्त्रेरिति प्रतिषेधोऽनर्थकः, परत्वादतिस्त्रियावित्यत्रेयादेशेनैव बाध्यमत आह—**इदमेव चेत्यादि** । ज्ञापकविषये वैयर्थ्यं प्रागुपपादितमिदानीं वाक्यान्तरकल्पनामाह—**परेणापीयादेशेनेदुत्कार्यं न बाध्यते** इति । परेण अपि इयादेशेन–सूत्रपाठे परस्थितेनापि "स्त्रियाः" इत्यनेन । इदुत्कार्यं–"इदुतोऽस्त्रेरीदूत्", "जस्येदोत्", "ङित्यदिति", "टः पुंसि ना", "ङिर्डौ" इत्यादिविहितम् । ननु ज्ञाप्यमस्तु ज्ञापकं मास्तु इति चेदुच्यते–यदि सूत्रेऽस्त्रेरिति न स्यात्तर्हि अतिस्त्रियावित्यत्रानेन ईकारः स्यात्, सति च तस्मिन् स्त्रिशब्दवर्जनादीत्वं न भवति इत्यस्त्रेरित्यस्य स्वांशे चारितार्थ्यम् । ज्ञापनफलमाह—**तेन अतिस्त्रयः, सहस्त्रयः, अतिस्त्रये, अतिस्त्रेः, अतिस्त्रीणाम्, अतिस्त्रौ** इत्यादौ "जस्येदोत्" इत्यादि कार्यं भवत्येव न स्त्रियादेशः ॥ २१ ॥

**जस्येदोत्** । इदुत इत्यनुवर्तते । नामविशेषणतया च तदन्तविधिः । इदन्तस्योदन्तस्य च जसि एदोत् इत्यन्वयस्तदर्थमाह—**इदन्तस्येत्यादि** । यथासङ्ख्यमभिसंबन्धात् "आसन्न" इति वा इकारस्यैकारः उकारस्यौकारः इति विवेकः । इमौ एदोतौ "इवर्णादेरस्वे स्वरे०" इत्यस्यापवादतया बाधकौ, तेनैतयोः कृतयोरयवादेशौ भवतः । **मुनयः**–मुनिशब्दाज्जसि एत्वेऽनेनायादेशे च रुत्वविसर्गौ । एवं **साधव** इत्यादि । **मुनिः, साधुः** इति । इदन्तोदन्तयोः शब्दयोः सौ नैदोतौ, जसीत्युक्तेः ॥ २२ ॥

## ङित्यदिति ॥ १ । ४ । २३ ॥

अदिति ङिति स्यादौ परे इदन्तस्योदन्तस्य च यथासंख्यमेदोतावन्तादेशौ भवतः । मुनये, साधवे, अतिस्त्रये, मुनेः, साधोः, अतिस्त्रेः आगतं स्वं वा, बुद्धये, धेनवे; बुद्धेः, धेनोः आगतं स्वं वा । ङितीति किम्? मुनिः, साधुः । अदितीति किम्? बुद्ध्यै, धेन्वै; बुद्ध्याः, धेन्वाः आगतं स्वं वा; बुद्ध्याम्, धेन्वाम् । स्यादावित्येव? शुची, पट्वी ॥ २३ ॥

## टः पुंसि ना ॥ १ । ४ । २४ ॥

इदुदन्तात् परस्य पुंसि पुंविषयस्य टस्तृतीयैकवचनस्य स्थाने ना इत्ययमादेशो भवति । मुनिना, साधुना, अतिस्त्रिणा; अमुना—अत्र "प्रागिनात्" ॥ २ । १ । ४८ ॥ इति वचनात् पूर्वमुत्वं पश्चात् नाभावः । पुंसि इति किम्? बुद्ध्या, धेन्वा । कथममुना कुलेन? "अनामूस्वरे नोऽन्तः" ॥ १ । ४ । ६४ ॥ इति भविष्यति ॥ २४ ॥

## ङिर्डौ ॥ १ । ४ । २५ ॥

इदुदन्तात् परो ङिः सप्तम्येकवचनं डौर्भवति, अभेदनिर्देशश्चतुर्थ्येकवचनशङ्कानिरासार्थः; डकारोऽन्त्यस्वरादिलोपार्थः । मुनौ, साधौ, बुद्धौ, धेनौ, अतिस्त्रौ; त्रिशतौ । अदिदित्येव? बुद्ध्याम्, धेन्वाम् ॥ २५ ॥

---

**ङित्यदिति** । अत्र इदुत इति एदोदिति चानुवर्तते । इदुतोऽदिति ङिति एदोदित्यन्वयः । न दित् अदित् तस्मिन्नदिति । दितो ङितस्तु वक्ष्यन्ते "स्त्रिया ङितां वा दैदासदासदाम्" इत्यनेन । सूत्रार्थमाह—**अदिति ङिति** इत्यादिना । **मुनये, साधवे, अतिस्त्रये** इत्यादि । मुनिसाधुअतित्रिशब्देभ्योऽदिति ङिति स्यादौ ङेङसिङस्सु परेषु यथासम्भवमेदोतोरन्तादेशयोरयवादेशयोश्च "एदोद्भ्यां ङसिङसो रः" १।४।३५। इति रादेशे विसर्गे च सिध्यन्ति । **आगतं स्वं वा**—अनुप्रयोगाविमौ पञ्चम्याः षष्ठ्याश्चैकवचनयोः क्रमेणाभिव्यक्त्यर्थौ इति पुंलिङ्गोदाहरणानीमानि । **बुद्धये, धेनवे** इत्यादि स्त्रीलिङ्गोदाहरणम् । नपुंसके त्वसंभवित्वात् न दर्शितम्, तत्र हि "अनाम्स्वरे०" १।४।६४। इति नान्तेन भाव्यम् । **बुद्ध्यै** इत्यादि । अत्रादितीति प्रतिषेधाद्दैदासादिषु एदोतौ न भवतः । नन्विकारोकारमात्रापेक्षत्वेनान्तरङ्गत्वात् पूर्वमेवैदोतौ स्याताम् न दायाद्यादेशाः, तेषां स्त्रीत्वविशिष्टेकारोकारापेक्षत्वेन बहिरङ्गत्वात्, कृतयोरप्येदोतोरिकारोकाराभावात् वर्णविधित्वाच्च स्थानिवत्त्वाभावात् दैदासाद्यादेशाभावात् प्रतिषेधो न युक्तः । न च तदन्तादादेशविधानात् अवर्णविधित्वात् स्थानिवत्त्वम्, अप्रधानेऽपि वर्णविधिप्रतिषेधात् । एवं तर्हि अनवकाशत्वात् पूर्वं दैप्रभृतय आदेशाः प्रवर्तन्ते पश्चाददितीति प्रतिषेधः, तथापि इदुत्त्वनिपातेन जायमानत्वात् दैदासाद्यादेशेनैव एदोद्बाधो भविष्यति इत्यदितीति प्रतिषेधो व्यर्थः । यथैव यत्वमपि न प्राप्नोति, तस्माददितीति प्रतिषेधो वर्णविधावयं न्यायो नोपतिष्ठते इति ज्ञापनार्थः, तेन दैदासादिषु कृतेषु एदोतौ न भवतः, यत्वं तु भवति । स्यादावित्यधिकारफलमाह—**स्यादावित्येव? शुची, पट्वी** इति । शुचिपटुशब्दाभ्याम् "इतोऽक्त्यर्थात्" २।४।३२।, "स्वरादुतो गुणादखरोः" २।४।३५। इति च ङीप्रत्यये स्याद्यधिकारात् ङित्वेऽप्येदोदभावे दीर्घत्वे यत्वे च सिध्यतः ॥ २३ ॥

**टः पुंसि ना** । इदुत इत्यनुवर्तते । इदुतः पुंसि टः ना इत्यन्वयः । अत्र टः इति तृतीयैकवचनस्य स्थानित्वेनोपादानादिदुत इति षष्ठ्यन्तमपि 'अर्थवशाद्विभक्तिपरिणामः' इति न्यायेन पञ्चम्यन्तमित्याह—**इदुदन्तादिति** । **मुनिना** इति । मुनीति इदन्तात् परस्य टो नाऽऽदेशो भवति । एवं **साधुनेत्यादि** । **अमुना** इति । अदस्शब्दाट्टायामत्वेऽकारस्य लुकि "मोऽवर्णस्य" २।१।४५। इति मत्वे उत्वे चानेन नाऽऽदेशः । अथात्रात्वादौ कृते "मादुवर्णोऽनु" २।१।४७। इति सूत्रेऽन्विति वचनात् पूर्वमिनादेशेन भाव्यमित्यत आह—अत्र **प्रागिनात्** इत्यादि । **बुद्ध्या धेन्वा** इति । पुंसीति वचनादत्र न भवति । **कथमिति** । अदस्शब्दात्तृतीयैकवचनेऽत्वादौ पुंसीति वचनात् नपुंसके नादेशाभावे कथममुना कुलेनेति शङ्कार्थः । समाधत्ते—**"अनामूस्वरे०"** इत्यादि ॥ २४ ॥

**ङिर्डौ** । इदुत इत्यनुवर्तते अदिदिति च । इदुतो ङिर्डौ इत्यन्वयस्तदर्थमाह—**इदुदन्तादित्यादि** । अथ कस्मात् "ङिर्डौ" इत्ययमभेदनिर्देशो यावता स्थानिनः एकवर्णत्वादन्त्याभावात् स्थानषष्ठ्या भेदनिर्देशेऽपि न किंचिद्विनश्यति, नैव, भेदनिर्देशे हि ङेरिति रूपस्य साम्याच्चतुर्थ्येकवचनस्यापि प्रतिपत्तिः स्यादित्याह—**अभेदनिर्देश** इत्यादि । डकारस्याप्रयोगिणः प्रयोजनमाह—**डकारोऽन्त्यस्वरादिलोपार्थ** इति । "डित्यन्त्यस्वरादेः" इत्यनेनेति भावः । **मुनौ** इति । मुनिशब्दात् ङेः तस्य स्थाने डौ च मुनिशब्दान्त्येकारलोपे संयोगे च भवति । एवं **साधावित्यादि** । अदित्यनुवर्तनफलमाह—**अदिदित्येव? बुद्ध्याम्, धेन्वाम्** इति । यद्यत्राददितीति नानुवर्तेत तदा दामादेशस्य स्थानिवत्त्वेन तदनतिरिक्तत्वात्तत्रापि स्यादित्यर्थः । ननु दाम्करणसामर्थ्यादेव डौर्न स्यात् किं व्यावृत्तावदितीति दर्शनेन? न, "ङित्यदिति" इत्येत्त्वनिषेधकत्वेन तस्य चरितार्थत्वात् डौ स्यात् इति व्यावृत्तिः सफला, यथा "ह्रस्वः स्यादः" ४।३।४१। इत्यत्र सिच्लोपविधायकत्वेन ह्रस्वकरणस्य चरितार्थत्वे गुणबाधकः कित्करणम् । किं च यथासंख्यार्थं "स्त्रिया ङितां०" इत्यत्र दाम्ग्रहणं कार्यम्, अन्यथा इदं सूत्रमन्यथा उत्तरं चान्यथा कार्यं स्यात्, तथा च गरीयसी रचना स्यादिति । यद्वा अभेदनिर्देशस्याविकृतार्थत्वात् विकृतस्य ङेर्न भवति ॥ २५ ॥

---

१ पुंसि वर्तमानादिदुदन्तात् परस्य xxxxxटस्तृ० पु० ।

## केवलसखिपतेरौ ॥ १ । ४ । २६ ॥

केवलसखिपतिभ्यामिदन्ताभ्यां परो ङिरौर्भवति । सख्यौ, पत्यौ; पताविति कश्चित् । इत इत्येव ? सखायमिच्छति क्यनि दीर्घत्वे, सखीयतीति क्विपि, यलोपे सखीः, सख्यि; एवं पत्यि । केवलग्रहणं किम् ? प्रियसखौ, नरपतौ । पूजितः सखा सुसखा, तस्मिन् सुसखौ; एवमतिसखौ । ईषदूनः सखा बहुसखा, बहुसखौ, एवं बहुपतौ; एषु पूर्वेण डौरेव । अन्ये तु बहुप्रत्ययपूर्वादपि पतिशब्दादौकारमेवेच्छन्ति, तन्मते–बहुपत्यौ ॥ २६ ॥

## न ना ङिदेत् ॥ १ । ४ । २७ ॥

केवलसखिपतेः परस्य टावचनस्य नाऽऽदेशो ङिति परे एकारश्च य उक्तः स न भवति । सख्या, पत्या; सख्ये, पत्ये, सख्युः, पत्युः आगतं स्वं वा; सख्यौ, पत्यौ । ङिदिति विशेषणं किम् ? जस्येद् भवत्येव–पतयः । केवलादित्येव ? प्रियसखिना, सुसखिना, बहुसखिना, साधुपतिना, बहुपतिना; प्रियसखये, नरपतये, प्रियसखेः, नरपतेः आगतं स्वं वा । बहुप्रत्ययपूर्वादपि पतिशब्दात् प्रतिषेधं केचिदिच्छन्ति–बहुपत्या, बहुपत्ये, बहुपत्युः आगतं स्वं वा । अन्ये तु सख्यन्तादपि प्रतिषेधं पूर्वेण ङेरौत्वं चेच्छन्ति–बहवः सखायो यस्य तेन बहुसख्या, एवं बहुसख्ये, बहुसख्युरागतं स्वं वा, बहुसख्यौ निधेहि ॥ २७ ॥

## स्त्रिया ङितां वा दैदास्दास्दाम् ॥ १ । ४ । २८ ॥

स्त्रियाः स्त्रीलिङ्गादिदुदन्तात् शब्दात् परेषां तत्संबन्धिनामन्यसंबन्धिनां वा स्यादेर्ङितां–ङेङसिङस्ङीनां स्थाने यथा-

---

**केवलसखिपतेरौ** । केवलसखिपतेरिति समाहारद्वन्द्वात् ङसि । अत्र ङिरित्यनुवर्तते । इदुत इत्यनुवृत्तावप्येतयोरुकारान्तत्वायोगादिदेव विशेषणमित्याह–**इदन्ताभ्यामिति** । **सख्यौ, पत्यौ** इति । सखिपतिशब्दाभ्यां परस्यानेन ङेरौकारे यत्वे च रूपे, पूर्वस्य "ङिडौँ" इत्यस्यापवादोऽनेन ङेरौकार । ननु पतिशब्दात् केवलादपि ङेर्डौरपि भवति, प्रयुज्यते व्यक्तावेव पठ्यते पताविति तत्कथमेतदित्याह–**पताविति कश्चित्** इति । कश्चिदित्येकवचननिर्देशोऽवज्ञार्थ इति, कश्चिदित्यनेन दुर्गसिंहश्रुतपालादिग्रहणम् । नन्वनयोरिकारान्तत्वेन व्यभिचाराभावादिदन्ताभ्यामिति विशेषणं न सार्थकं, यत्रापि क्यनादौ दीर्घोऽस्ति तत्रापि स्वरूपान्यथात्वात् न भविष्यति, नैव, तत्रैकदेशविकृतस्य तद्वद्भावात् स्यादित्याह–**इत इत्येव** इत्यादि । **सखायमिच्छति** इति विग्रहे । **क्यनि** इति । "अमाव्ययात् क्यन् च" ३।४।२३। इत्यनेनेति शेष । **दीर्घत्वे** इति । "दीर्घश्चियङ्यक्क्येषु च" ४।३।१०८। इत्यनेनेति भाव । **सखीयति** इति विग्रहे । **क्विपि** इति । "क्विप्" इत्यनेनेति शेष । **यलोपे** इति । "य्वोः प्वय्व्यञ्जने लुक्" ४।४।१२१। इत्यनेनेति भाव । **सखीरिति** । दीर्घेकारान्तसखीशब्दात् सौ अनुबन्धलोपे रुत्वविसर्गौ च, तस्मात् सप्तम्येकवचने चाह–**सख्यि** इति । तत एव ङौ "योऽनेकस्वरस्य" इति यत्वे रूपमेतत् । नन्वत्र "स्थानीवाऽवर्णविधौ" इति न्यायात् क्विपः स्थानित्वे सति "य्वोः प्वय्व्यञ्जने०" इति यलोपः कस्मान्न भवति ? 'असिद्धं बहिरङ्गमन्तरङ्गे' इति न्यायादन्तरङ्गे क्विबाश्रिते कार्ये यत्वमसिद्धं द्रष्टव्यम् । **एवं**–पूर्ववत् । पतिमिच्छतीति विग्रहे क्यनि दीर्घत्वे पतीयतीति क्विपि यलोपे पतीस्तस्मात् सप्तम्येकवचने रूपमाह–**पत्यि** इति । तत एव ङौ यत्वे च रूपम् । **केवलग्रहणं किम्** इति । सखिपतिशब्दयोः केवलेतिविशेषणं किमर्थमिति प्रश्नकर्तुराशय । **प्रियसखौ** इत्यादि । एतेष्वनयोः केवलग्रहणादन्यसहितयोरनेनौकाराभावात् पूर्वेण डौभावे "डित्यन्त्यस्वरादेः" इत्यन्त्यस्वरादिलोप । **पूजितः सखा सुसखा** इति । "सु पूजायाम्" ३।१।४४। इति समास, "राजन् सखेः" ७।३।१०६। इति अट् तु न भवति, "पूजास्वतेः प्राक्टात्" ७।३।७२। इति निषेधात्, "ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डाः" १।४।८४। इति सेः स्थाने डादेशो सिध्यति । नन्वेषु औकाराभावे किं स्यादत आह–**एषु पूर्वेण डौरेव** इति । **अन्ये त्विति** । आचार्यपाणिनिप्रभृतय, ते हि घिसञ्ज्ञाप्रस्तावे "पतिः समास एव" पा० १।४।८। इति नियम्य बहुप्रत्ययपूर्वस्य पतिशब्दस्य समासाभावे घिसंज्ञाया अभावात्ततो विधीयमानो डौ इत्यादेशो न भवतीति बहुपत्यावित्येव स्यात् इत्याह–**तन्मते** इति ॥ २६ ॥

**न ना ङिदेत्** । प्रतिषेधस्य प्राप्तिपूर्वकत्वात् सर्वत्र प्रतिषेधे तद्विधानवैयर्थ्यप्रसङ्गादन्यस्य निष्प्रमाणिकत्वादनन्तरोक्तस्य केवलसखिपतेरित्यस्यैव ग्रहणमित्याह–**केवलसखिपतेरिति** । ना इत्यस्य परिचयमाह–**टावचनस्य नाऽऽदेश** इति । "टः पुंसि ना" इति विहित । सखिपतेर्नाङिदेता सह न यथासंख्यम्, "ङित्यदिति०" १।४।२६। इति सूत्रे ङिग्रहणात्, ङिदेदित्यस्यार्थमाह–**ङिति परे एकारश्च** इत्यादि । सखिपतिशब्दाभ्यां टायां ङिति चाऽनेन नादेशस्य ङिदेकारस्य च "सख्युरितोऽशावैत्" १।४।८३। इति निर्देशाद् वा । **सख्या, पत्या** इत्यादि । सखिपतिशब्दाभ्यां टायां ङिति चाऽनेन नादेशस्य ङिदेकारस्य च प्रतिषेधे यत्वादौ भवति । **आगतं स्वं वेति** । पञ्चमीषष्ठ्येकवचनयो रूपस्य समानत्वादभिव्यक्त्यर्थमनुप्रयोग । **सख्यौ** इति । अत्राऽऽदेशे कृते प्रतिषेधे यत्वादौ भवति । "ङित्यदिति" इति प्राप्नोति न तु पूर्वम्, यतस्तद्बाधक "ङिडौँ" ततोऽपि "केवलसखि०" इति औत्वम्, ततस्तदादेशोऽपि न्यायात् स्यादित्वे सति "ङित्यदिति" इति प्राप्नोति न तु पूर्वम्, यतस्तद्बाधक "ङिडौँ" ततोऽपि "केवलसखि०" इति औत्वम्, ततस्तदादेशेति न्यायात् स्यादित्वे सति एत्वं प्राप्तं निषिद्धम् । ङिदित्येतो विशेषणाभावे सर्वप्रत्ययेऽप्येकारस्य प्रतिषेधः स्याद्विशेषाभावादित्याशयेन प्रश्नपूर्वकं समाधत्ते–**ङिदिति विशेषणं किम् ?** इत्यादि, **जस्येद्भवत्येव पतय** इत्यन्तेन । **प्रियसखिना** इत्यादि । सखिपतिशब्दयोः केवलेति विशेषणादेषु नाऽऽदेशो ङिदेदादेशश्च भवत । मतान्तरमुपन्यस्यति–**बहुप्रत्ययपूर्वादपि** इत्यादि । **केचित्** इति । आचार्यपाणिनिप्रभृतय । तन्मते उदाहरति–**बहुपत्या** इत्यादि । अत्रत्य तत्त्वं सि० कौ० तत्त्वबोधिन्यां "पतिः समास एव" इति सूत्रे स्पष्टमिति तत एव विभावनीयम् । मतान्तरमाह–**अन्ये तु** इत्यादि । इदं त्वपाणिनीयमपि मतं कस्यचन प्राच संभाव्यते । **प्रतिषेधं**–"न ना ङिदेत्" इत्येतम् । **पूर्वेण ङेरौत्वमिति** । "केवलसखिपतेरौ" इत्यनेनेति भाव, तन्मते विग्रहोदाहरति–**बहवः सखायो यस्येत्यादि** ॥ २७ ॥

**स्त्रिया ङितां वा दैदास्दास्दाम्** । "पत्युर्नः" २।४।४८। इति निर्देशात् सखिपती नानुवर्तेते । स्त्रिया इति विशेषणस्य विशेष्यसापेक्षत्वात् सखिपतिभ्यां परेषां ङितां "स्त्रियाङितीय उर्" इत्येवमादिभिर्विशेषविधिभिराप्राप्तत्वात् दित्करणस्य तु प्रयोजनवत्वात् सामान्यमवगम्यत सामान्यमिदुदन्तमधिकृत निमित्तं गम्यत इत्याह–**इदुदन्ताच्छब्दादिति** । इह षष्ठीमन्तरेण तत्संबन्धिविज्ञानाभावात्

सङ्ख्यं दै दास् दास् दाम् इत्येते आदेशा वा भवन्ति, दकारो "ङित्यदिति" ॥ १ । ४ । २३ ॥ इति विशेषणार्थः । बुद्ध्यै, बुद्धये, बुद्ध्याः, बुद्धेः आगतं स्वं वा, बुद्ध्याम्, बुद्धौ, धेन्वै, धेनवे, धेन्वाः, धेनोः, धेन्वाम्, धेनौ, एवं मुष्ट्यै, मुष्टये, इष्वै, इषवे, शुच्यै, शुचये; पट्वै, पटवे, पत्यै, पत्ये, जीवपत्यै, जीवपतये स्त्रियै; कन्या पतिर्यस्य यस्या वा कन्या-पत्यै, कन्यापतये, एवं प्रियबुद्ध्यै, प्रियबुद्धये; प्रियधेन्वै, प्रियधेनवे, प्रियाशन्यै, प्रियाशनये, अतिशकट्यै, अतिशकटये स्त्रियै पुरुषाय वा, एषु समासार्थस्य पुरुषत्वेऽपि पत्यादिशब्दानां स्त्रीत्वमस्ति । अन्ये तु पुरुषस्य समासार्थत्वे सति नेच्छन्ति, तन्मते–प्रियबुद्धये, प्रियधेनवे पुरुषायेत्येव भवति । अन्यस्तु पुरुषस्यैव समासार्थत्वे सति इच्छति न स्त्रियाः, तन्मते–अतिशकट्यै, प्रियधेन्वै पुरुषाय इत्यत्रैव भवति, न त्वतिशकटये, प्रियधेनवे स्त्रियै इत्यत्र । स्त्रिया इति किम्? मुनये, साधवे । इदुत इत्येव? गवे, नावे ॥ २८ ॥

## स्त्रीदूतः ॥ १ । ४ । २९ ॥

नित्यस्त्रीलिङ्गादीकारान्तादूकारान्ताच्च शब्दात् परेषां तत्संबन्धिनामन्यसंबन्धिनां वा स्यादेर्ङितां स्थाने यथासङ्ख्यं दै दास् दास् दाम् इत्येते आदेशा भवन्ति । नद्यै, नद्याः, नद्याः, नद्याम्, लक्ष्म्यै, लक्ष्म्याः, लक्ष्म्याः, लक्ष्म्याम्, कुरोरपत्यं स्त्री "दुनादि०" ॥ ६ । १ । ११८ ॥ इत्यादिना ञ्यः, तस्य "कुरोर्वा" ॥ ६ । १ । १२२ ॥ इति लुपि, "उतोऽप्राणिनश्चा०" ॥ २ । ४ । ७३ ॥ इत्यादिना ऊङि–कुरूः कुर्वै, कुर्वाः, कुर्वाः, कुर्वाम्; वध्वै, वध्वाः, वध्वाः; वध्वाम् । एवं ब्रह्मबन्ध्वै, ब्रह्मबन्ध्वाः, ब्रह्मबन्ध्वाम्, वर्षाभ्वै, वर्षाभ्वाः, अतिलक्ष्म्यै, अतितन्त्र्यै, अतिवध्वै स्त्रियै पुरुषाय

इत्युक्तं—तत्संबन्धिनामन्यसंबन्धिना वेति । दकारस्याप्रयोगिण प्रयोजनमाह—दकारो इत्यादिना । बुद्ध्यै, बुद्धये इत्यादि । बुद्धि-शब्दाच्चतुर्थीपञ्चमीषष्ठीसप्तम्येकवचनानां दायाद्यादेशे यत्वे पक्षे "ङित्यदिति" इत्येदादेशोऽयादेशश्च । आगतं स्वं वा इत्यनुप्रयोग पञ्चमीषष्ठ्येक-वचनयोरभिव्यक्त्यर्थं । धेन्वै इत्यादि । धेनुशब्दात् ङिता दायाद्यादेशे वत्वे पक्षे "ङित्यदिति" इत्योत्वेऽवादेशश्च । मुष्ट्यै, मुष्टये इति । 'सपि-ण्डिताङ्गुलि पाणिर्मुष्टि 'इति श्रीहैम, पुस्त्रीलिङ्गोऽयम्, स्त्रिया वृत्तेर्मुष्टिशब्दात् ङेप्रत्ययस्यानेन दायादेश, पक्षे "ङित्यदिति" इत्येदन्तादेश । इष्वै, इषवे इति । इषुस्त्रिलिङ्गो यदा स्त्रियां वर्तमानस्तदास्योदाहरणम्, अन्यत् सर्वं पूर्ववद्बोध्यम् । शुच्यै, शुचये इति । 'पावके शुचि मास-मात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु' इत्यमरात्त्रिलिङ्गत्व मेध्यसितार्थकशुचिशब्दस्य । पट्वै पटवे इति । 'कष्टे तु कृच्छ्रगहने दक्षामन्दागदेषु तु । पटु द्वौ वाच्यलिङ्गौ च' इत्यमराद्वाच्यलिङ्गत्वेन पटुशब्दस्य स्त्रियां वर्तमानत्वम् । पत्यै, पत्ये इति । 'पतिर्धवे ना त्रिष्वीशे' इति विश्व, ईशार्थ-कपतिशब्दस्य त्रिलिङ्गत्वेन स्त्रीत्व बोध्यम्, अत्र दायादेशाभावपक्षे पत्ये इति तु "न ना ङिदेत्" इति निषेधाद्बोध्यम्, तेन "ङित्यदिति" इति न प्रवर्त्तते । जीवपत्यै इति । जीवस्य पतिरिति विग्रह । अनेन दायादेशाभावे "ङित्यदिति" इत्येकारान्तादेशे रूपमाह—जीवपतये इति । "न ना ङिदेत्" इति निषेधस्तु न प्रवर्तते, केवलसखिपतेरित्यनुवृत्ते । कन्यापत्यै इत्यस्य विग्रहमाह—कन्यापतिर्यस्येत्यादि । कन्याया पति-रिति विग्रहो जीवस्य पतिरितिवन्न कार्य । तत्र तत्करणे तु पतिशब्दस्येदन्तस्य स्त्रीत्वाभावाद्दायादेशाभाव स्यात्, न वाच्यमेवन्तर्हि जीवपत्यै इत्यत्र पूर्ववत् पतिशब्दस्य स्त्रीत्वाभावात् कथ दायादेश इति, यतो हि तत्र तस्मिन्विग्रहे स्त्रिया पतित्व समवदुक्तिक, पुरुषजीवस्य पतित्व स्त्रिया सुसंभवात्, किन्तु कन्याया पतित्व स्त्रियां नितरा न संभवतीति पुरुष एव सभवेन तदन्तर्वर्त्तिपतिशब्दस्य बहुव्रीहिं विना स्त्रीत्वावृत्तेरिति संक्षेप । एवं प्रियबुद्ध्यै इति । प्रिया बुद्धिर्यस्य यस्या वेति विग्रह, पूर्ववदन्यत्सर्वं बोध्यम्, पक्षे यथा प्राप्तम् । एव प्रियधेन्वै इत्यादि बोध्यम् । प्रियाशन्यै इति । 'दम्भोलिरशनिर्द्वयो 'इत्यमरात् पुंसि स्त्रिया च वर्तमानत्वमशनिशब्दस्य । अतिशकट्यै इति । शकटवाची शक-टिशब्द स्त्रियां वर्तते, तामतिक्रान्तोऽतिक्रान्ता वेति विग्रहेऽतिशकटिस्तस्यै इत्यर्थ । एषु समासार्थस्येत्यादि । अयमर्थ –इदुदन्तानां समा-सावयवानां पत्यादिशब्दानां दैदासादिकार्यनिमित्तानां स्त्रीत्वमस्तीति स्त्रीदुदन्तादादेशा इति । केचित्तु पूर्वं पश्चादपि स्त्रीवचन एवेच्छन्ति इत्याह—अन्ये त्वित्यादि । अन्ये–श्रीशेषभट्टारका । "यूस्त्र्याख्यौ नदी" पा० १।४।३। इति सूत्रे "ह्रस्वेयुवस्थानप्रवृत्तौ च स्त्रीवचने" इति वार्त्तिके भाष्यकैयटयो स्पष्टमेतदित्यन्यत्र विस्तर । अत्र अन्ये इति बहुवचनाच्छास्त्रकर्तुरपि कलिकालसर्वविद सम्मतम् । कथ तत्सिध्यतीति चेत्, उच्यते—"स्त्रीदूत" इति वक्ष्यमाणसूत्रात् स्त्रीविच्छेदात् । ततोऽयमर्थ –इदुदन्तात् स्त्रियां वर्तमानादादेशा भवन्ति स्त्री चेदभिधेया भवति । स्त्रिया इत्यर्थान्तरसंक्रान्ते पूर्वं स्त्रीत्व, स्त्री चेदनेन संक्रान्ते पश्चादिति भाव । अन्ये त्वस्त्रीवचन एवेच्छन्ति, तन्मतस्य भाष्यकृदादिविरुद्धतयाऽप्रास-त्वादेकवचनेन निर्दिशति—अन्यस्त्विति । क्षीरस्वामी । स्त्रिया इति किम्? इति । स्त्रियामिति विशेषणमिदुत इत्यस्य कथमिति प्रश्नार्थ । मुनय इति । पुंसि स्त्रियाश्चास्य वर्तमानत्वेऽपि पुंस्त्वस्येह विवक्षितत्वादिद फलम् । गवे इत्यादि । इदुदन्तत्वाभावेनेद न प्रवर्त्तते ॥ २८ ॥

स्त्रीदूतः । अत्र पूर्वसात्रेत्यपहाय स्त्रिया इति च, ङितां दैदास्दास्दामित्यनुवर्तते । स्त्रीदूतो ङितां दै दास् दास् दामित्यन्वय । ईश्च ऊश्च ईदूत् स्त्रियामीदूत् स्त्रीदूत् ततो ङसि । यथेव कृतस्त्रियां धातुस्त्रियां वा न सिध्यति–तन्त्र्यै, लक्ष्म्यै, श्रियै, भ्रुवे इति, न हि तयोरी-कारोकारौ स्त्रियां विहितौ यथा–ङ्यूङाविति । तथा हि–'तत्रिण्' कुटुम्बधारणे, धातो "तृस्तृतन्त्रितन्द्यविभ्य ई" उ० ७११। इतीप्रत्यये–तन्त्री, 'लक्षीण्'दर्शनाङ्कनयोरित्यस्मात् "लक्षेर्मोऽन्तश्च" उ०७१५। इति ईप्रत्यये, मागमे च लक्ष्मी, 'श्रिग्' सेवायाम्, धातो "दिद्युद्दृद्व०" ५।२।८३। इति निपातनात् क्विपि दीर्घत्वे श्री, 'भ्रमूच्' अनवस्थाने, धातो "भ्रमिगमि०" उ० ८४३। इति डित्यूकारे भ्रू । अथैतत्पक्षोक्तदोषपरिजिही-र्षया स्त्रियावीदूतौ यस्य तत्स्त्रीदूदिति बहुव्रीहि, अत्रापि स एव दोष समुदायस्यैव स्त्र्यर्थत्वाभावयवस्येति, उच्यते–उभयथाप्यदोष । तत्र पूर्वस्मिन् पक्षे ईकारान्तात् ऊकारान्तात् स्त्रिया वर्तमानादित्युच्यमाने तन्त्र्यादिशब्देभ्योऽपि कृद्वाचीकारान्तोकारान्तेभ्य स्त्रियां वर्तमानत्वात् प्राप्नोतीति । द्विती-येऽपि पक्षे समुदायधर्मस्यावयवेऽप्यारोपात् कृत्स्त्रिया अपि सिध्यतीत्युदाहरति—लक्ष्म्यै इत्यादि । कुरुशब्दस्य निष्पत्तिप्रकारमाह—कुरोरपत्यं स्त्रीत्यादि । कुर्वै इत्यादि । कुरुशब्दादूदन्तान्नित्यस्त्रीलिङ्गात् ङितां दैदासादिषु कृतेषु वत्वमिति भाव । एव वध्वै इत्यादि । एवं ब्रह्मबन्ध्वै इति । ब्रह्म बन्धुरस्या इति विग्रह, "उतोऽप्राणिनश्चा०" २।४।७३। इत्यूङ्, ततोऽनेन दायाद्यादेशा इति । वर्षाभ्वै इत्यादि । वर्षन्ति मेघा-

१ नित्य ख० ता०, पु० । २ ङे ख० ता०, पु० ।

वा । कुमारीमिच्छतीति क्यनन्तात् कुमारीवाचरतीति क्विबन्तात् वा कर्तरि क्विप्, कुमारी तस्मै कुमार्यै ब्राह्मणाय ब्राह्मण्यै वा, खरकुटीव खरकुटी तस्मै खरकुट्यै ब्राह्मणाय ब्राह्मण्यै वा; स्त्रिया इत्यनुवर्तमाने पुनः स्त्रीग्रहणं नित्यस्त्रीविषयार्थं तेनेह न भवति-ग्रामण्ये, खलप्वे स्त्रियै । ईदूत इति किम्? मात्रे, दुहित्रे, बुद्धये; धेनवे । आमलक्याः फलाय आमलकाय, अतिकुरवे, अतिकुमारये इत्यत्रेदूत इति वर्णविधित्वेन स्थानिवद्भावाभावादीकारोकारान्तता नास्तीति न भवति । ङितामित्येव? नद्यः, वध्वः ॥ २९ ॥

## वेयुवोऽस्त्रियाः ॥ १ । ४ । ३० ॥

इयुवोः संबन्धिनौ यौ स्त्रीदूतौ तदन्तात् शब्दात् परेषां तत्संबन्धिनामन्यसंबन्धिनां वा स्यादेर्ङितां स्थाने यथासंख्यं दै दास् दास् दाम् इत्येते आदेशा वा भवन्ति, अस्त्रियाः— स्त्रीशब्दं वर्जयित्वा । श्रियै, श्रिये, श्रियाः, श्रियः, श्रियाः, श्रियः, श्रियाम्, श्रियि, भ्रुवै, भ्रुवे; भ्रुवाः, भ्रुवः, भ्रुवाः, भ्रुवः, भ्रुवाम्, भ्रुवि । श्रियमतिक्रान्ताय-अतिश्रियै, अतिश्रिये, ब्राह्मणाय ब्राह्मण्यै वा, एवमतिभ्रुवै, अतिभ्रुवे, पृथुः श्रीर्यस्य तस्मै पृथुश्रियै, पृथुश्रिये पुरुषाय स्त्रियै वा, एवं पृथुभ्रुवै, पृथुभ्रुवे । केचित्तु समासार्थस्य स्त्रीत्व एवेच्छन्ति न पुंस्त्वे, तन्मते-अतिश्रियै, अतिश्रिये स्त्रियै इत्यत्र भवति, इह न भवति-अतिश्रिये, अतिभ्रुवे पुरुषाय; पूर्वेण नित्यमपि न भवति । कश्चित्तु पूर्वमतविपर्ययमेवेच्छति-अतिश्रियै, अतिश्रिये

---

भासिति भिदादित्वादङि आपि च वर्षाः तासु भवन्तीति भवतेः क्विपि वर्षाभूः, स च भेकजातौ द्विलिङ्गः, 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः । दर्दुरो भेकः । 'शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः' इत्यमरकोषे वर्षाभूशब्दस्य भेकजातौ स्त्रीलिङ्गमात्रावगमान्नित्यस्त्रीविषयत्वम्, ततो ङितां दायायादेशो "दन्पुनर्वर्षाकारैर्भुवः" २।१।५९। इति वत्वम् । अथ धातुत्वमापन्ने कुमारीशब्दे अतिलक्ष्म्यै इत्यादिशब्देभ्यो वैलक्षण्यं दर्शयितुमाह—**कुमारीमिच्छतीत्यादिना** । **क्यनन्तात्** इति । कुमारीमिच्छतीत्यर्थे "अमाव्ययात् क्यन् च" ३।४।२३। इति क्यन्, कनावितौ, "क्रियार्थो धातुः" इति धातुत्वम् क्यनन्तस्य, "ऐकार्थ्ये" इत्यमो लुप्, "क्विप्" इति कर्तरि क्विप्, कपवा इतः, इकार उच्चारणार्थः, "अतः" ४।३।८२। इत्यकारलोपः, "य्वोः प्वय्व्यञ्जने०" इति यलोपे-कुमारीति रूपम् । **क्विबन्तादिति** । कुमारीवाचरतीति अर्थे "कर्तुः क्विप्०" इति क्विप्, कपवा इतः, "क्रियार्थो०" इति धातुत्वात् कर्तरि क्विप्, तस्य च पूर्ववत्कृतस्तल्लोपः –कुमारीति रूपम् । तदाह—**कुमारी तस्मै कुमार्यै** इति । "योऽनेकस्वरस्य" २।१।५६। इति दायादेशे कृते यत्वम् । अभेदोपचारे समुदाहरति—**खरकुटीव खरकुटी तस्मै खरकुट्यै** इति । **खरकुटी**–नापितशाला । **स्त्रिया इत्यनुवर्त्तमाने** इति । अयमाशयस्तथा हि–पूर्वस्मात् स्त्रिया इत्यनुवृत्त्या स्त्रीविषयार्थत्वे लब्धे पुनस्तदर्थं स्त्रीग्रहणं स्त्रीविषयावेव यौ स्त्रीदूतौ ततो दायायादेशा इत्यर्थम्, तेन ग्रामण्ये सेनान्ये खलप्वे स्त्रिये इत्यत्र न भवति, तदाह— **तेनेह न भवतीत्यादिना** । ग्रामण्यादिशब्दो हि क्रियाशब्दत्वात् त्रिलिङ्गत्वान्नित्यस्त्रीविषयो न भवतीति स्त्रियामपि वर्तमानादादेशाभावः । पूर्वसूत्रे इष्वशनिप्रभृतीनामनेकलिङ्गानां पद्धादीनां च गुणवचनत्वात् सर्वलिङ्गानां स्त्रीविषयत्वाभावात् स्त्रियां वृत्तौ कार्यं प्रवर्तत इति, न हि तत्र द्वितीयं स्त्रीग्रहणमस्ति । ननु आधीप्रधीशब्दौ क्रियाशब्दत्वात् सर्वलिङ्गत्वात् ग्रामण्यादिशब्दवत् न नित्यस्त्रीविषयाविति चिन्त्यमेतत्, चिन्ताबीजं तु आध्यायतीति विग्रहे क्विपि सति ग्रामण्यादिशब्दवन्नित्यस्त्रीविषयाभावः, परन्तु आ–ईषत्प्रकृष्टा वा धीर्यस्या इति विग्रहे सुतरां तयोर्नित्यस्त्रीविषयत्वमिति विषमो दृष्टान्तोपन्यासः । प्रथमग्रहणं च कर्तव्यम्, तथा हि–यः शब्दः प्रथमं स्त्रीत्वविशिष्टार्थमाह, पश्चात्तु प्रकारान्तरेणार्थान्तरं लिङ्गान्तरयुक्तं, तस्य तदानीमस्त्र्यर्थत्वात्ततो न प्राप्नोति । इदं वचनं विधेयं, प्रयोजनं च 'क्विब्लुगभेदोपचारसमासाः', क्विब्लुक् यथा–कुमार्यै ब्राह्मणाय, अभेदोपचारो यथा–खरकुट्यै ब्राह्मणाय, यद्यप्यत्र स्वाभाविकं स्त्रीत्वमस्ति तथापि स्वाश्रयस्य पुंस्त्वस्यानिवर्तनाय स्त्रियामेव वर्तते किन्तु पुंस्यपीति, समासो यथा–अतितन्त्र्यै ब्राह्मणायेत्यादि । न विधेयमवयवस्त्रीविषयत्वेन सिद्धत्वात्, तत्र स्वान्तरङ्गत्वात् पूर्वमेव प्रवृत्तं स्त्रीत्वमवयवस्य पश्चादुपजायमानेन लिङ्गान्तरसंबन्धेन न निवर्त्तते । **यथैवमामलकाय अतिकुरवे, अतिकुमारये**ऽत्रापि प्राप्नोति, अवयवस्य पूर्वं स्त्रीवृत्तित्वात्, तथा हि–आमलकीशब्दात् षष्ठ्यन्तात् आमलक्याः फलं विकारोऽवयवो वेति "दोरप्राणिनः" ६।२।४९। इति मयट्, तस्य "फले" ६।२।५८। इति लुप्, ततो "ङ्यादेर्गौणस्य०" २।४।९५। इति ङीलुक् ततश्चतुर्थी । आमलक्याः फलायेति तु प्रक्रिया दर्शितेति, अत्रामलकीलक्षणस्त्र्यर्थोऽस्ति । तथा कुरुमतिक्रान्ताय कुमारीमतिक्रान्तायेति आदिसमासे "गोश्चान्ते०" इति ह्रस्वत्वं ततश्चतुर्थी, अत्रापि पूर्ववत् स्त्र्यर्थोऽस्ति । अथोच्यते सत्यपि स्त्र्यर्थत्वे ईकारोकारान्तत्वाभाव इति चेत्, तत्र लुक्ह्रस्वस्थानिवद्भावे सतीदूदन्तता भविष्यतीत्याह—**अत्रेदूत इति वर्णविधित्वेन** इत्यादि । **वर्णविधित्वेन** इति । हेतुरयं स्थानिवद्भावाभावादित्यत्र, यतो हि "स्थानीवाऽवर्णविधौ" इत्यत्र अवर्णविधावित्युक्ते, अत्रेकारोकारौ वर्णौ तदाश्रिता दायादय इति स्पष्टमस्य वर्णविधित्वम् । **स्थानिवद्भावाभावात्** इति । "स्थानीवा०" इति सूत्रेण स्थानिवद्भावस्याभावस्तस्मादेतोरित्यर्थः । **ईकारोकारान्तता नास्तीति** इति । आमलकायेत्यादीनामिति शेषः ॥ २९ ॥

**वेयुवोऽस्त्रियाः** । अत्र पूर्वस्मात् स्त्रीदूत इति ङितां दैदास्दास्दाम् इति चानुवर्त्तते । इयुवः स्त्रीदूतः ङितां दैदास्दास्दाम् वा इत्यन्वयः । इय् च उव् च इयुव् ततो ङस् । तत्र स्त्रीदूत इति प्रकृतस्य इयुवरूपतानुपपत्तेरियुव इति षष्ठी स्त्रीदूत इति पञ्चम्या भेदेनाभिसंबध्यते इत्याह—**इयुवोः संबन्धिनौ यौ स्त्रीदूतौ तदन्तादिति** । पूर्वेण नित्यं दैप्रभृत्यादेशः प्राप्तोऽनेन विकल्प्यत इति प्राप्तविकल्पोऽवगन्तव्य इति । अस्त्रिया इत्यत्र स्त्रीतिशब्दप्रधानो निर्देश इत्याह—**अस्त्रियाः-स्त्रीशब्दं वर्जयित्वा** इति । **श्रियै**–अत्र श्रीशब्दात् ङितामनेन पक्षे दायायादेशे "संयोगात्" २।१।५२। इतीयादेशः । एवं **भ्रुवै** इत्यादि । भ्रूशब्दात् ङितां पक्षेऽनेन दायायादेशे "भ्रूश्नोः" २।१।५३। इत्युवादेशः । **अतिश्रियै** इत्यादि । समासावयवानामीदूदन्तानां श्र्यादिशब्दानां दायायादेशकार्यनिमित्तानां नित्यस्त्रीविषयत्वादुदाहरणम् । केचित्स्वर्थान्तरसंक्रान्ते पूर्वं पश्चादपि स्त्रीत्वं एवेच्छन्तीत्याह—**केचित्तु** इति । पाणिनितन्त्रानुसारिणः । ननु "वेयुवोऽस्त्रियाः" इति मास्तु परन्तु पूर्वशास्त्रस्य "स्त्रीदूतः" इत्यस्य प्रवृत्तौ किं बाधकमत आह—**पूर्वेण नित्यमपीति** । तेषां मते पूर्वशास्त्रस्यापि समासार्थस्य स्त्रीत्व एव प्रवृत्तेर्न पुंस्त्वे इत्याद्यन्यत्र विस्तरः । इदं केचित्तु इति मतं स्वसमतं बहुवचननिर्देशात् । केचन तु स्त्रीवचन एवेच्छन्ति, तन्मतस्य भाष्यकृदादिविरुद्धतयाऽपास्तत्वादेकवचनेन निर्दिशति—**कश्चित्तु** इति । क्षीरस्वामी । **पूर्वमतविपर्ययमेव** इति । पुंस्त्वे एवेत्यर्थः ।

पुरुषाय, इह न भवति—अतिश्रिये स्त्रियै । इयुव इति किम्? आध्यै, प्रध्यै, वर्षाभ्वै, पुनर्भ्वै पूर्वेण नित्यमेव । अस्त्रिया इति किम्? स्त्रियै, स्त्रियाः, स्त्रियाः, स्त्रियाम्; परमस्त्रियै, परमस्त्रियाः, परमस्त्रियाः, परमस्त्रियाम्; अत्रापि पूर्वेण नित्यमेव । स्त्रीदूत इत्येव? यवक्रिये, कटप्रुवे स्त्रियै । अस्त्रिया इति निर्देशात् परादपि इयुवूयत्वादिकार्यात् प्रागेव स्त्रीदूदाश्रितं कार्यं भवति, तेन—स्त्रियै, स्त्रीणाम्, भ्रूणाम्, आध्यै इत्यादि सिद्धम् ॥ ३० ॥

## आमो नाम् वा ॥ १ । ४ । ३१ ॥

इयुवोः संबन्धिनौ यौ स्त्रीदूतौ तदन्तात् शब्दात् परस्य तत्संबन्धिनोऽन्यसंबन्धिनो वा आमः षष्ठीबहुवचनस्य स्थाने नामित्ययमादेशो वा भवति, अस्त्रियाः—स्त्रीशब्दं वर्जयित्वा । श्रीणाम्, श्रियाम्; भ्रूणाम्, भ्रुवाम्; अतिश्रीणाम्, अतिश्रियाम्; पृथुश्रीणाम्, पृथुश्रियाम्, अतिभ्रूणाम्, अतिभ्रुवाम्; पृथुभ्रूणाम्, पृथुभ्रुवाम् स्त्रीणां पुरुषाणां वा । शोभना धीरेषां सुधीनाम्, सुधियाम् । इयुव इत्येव? प्रधीनाम्, वर्षाभूणाम् । स्त्रीदूत इत्येव? यवक्रियाम्, कटप्रूवाम्, सुष्ठु ध्यायन्तीति सुधियाम् । अस्त्रिया इत्येव? स्त्रीणाम्, परमस्त्रीणाम्, उत्तरेण नित्यमेव, नपुंसकेऽपि ह्रस्वत्वेन भाव्यमित्युत्तरेण नित्यमेव—अतिश्रीणाम्, अतिभ्रूणां कुलानामिति ॥ ३१ ॥

## ह्रस्वापश्च ॥ १ । ४ । ३२ ॥

ह्रस्वान्तादाबन्तात् स्त्रीदूदन्ताच्च शब्दात् परस्याऽऽमः स्थाने नाम् इत्ययमादेशो भवति । ह्रस्व—श्रमणानाम्, संयतानाम्, वनानाम्, धनानाम्, मुनीनाम्, साधूनाम्, बुद्धीनाम्, धेनूनाम्, पितॄणाम्; मातॄणाम् । आप्—खट्वानाम्, बहुराजानाम्, स्त्रीदूतः—नदीनाम्, वधूनाम्, स्त्रीणाम्, लक्ष्मीणाम् । स्त्रीशब्दवर्जितयोरियुवादेशसंबन्धिनोः स्त्रीदूतोः पूर्वेण विकल्प एव—श्रीणाम्, श्रियाम्; भ्रूणाम्, भ्रुवाम् । ह्रस्वापश्चेति किम्? सोमपाम्, सेनान्याम् ॥ ३२ ॥

---

**इयुव इति किम्?** इति । वा अस्त्रिया इत्येव सूत्र्यताम् तेनैव सर्वेष्टसिद्धेरिति प्रश्न । **आध्यै, प्रध्यै** इत्यादि । एतेषु "धातोरिवर्णोवर्णस्य०" इति इयुवपवादो "क्विब्वृत्तेरसुधियस्तौ" २।१।५८। इति "दन्पुनर्वर्षाकारैर्भुव" २।१।५९। इति च यकारवकारौ भवत इति नेयुवसंबन्धिनावीदूताविति पूर्वेण नित्यमेव कार्यमिति । न च वाच्यमाधीप्रधीशब्दयो क्रियाशब्दत्वेन सर्वलिङ्गत्वात् नित्यस्त्रीविषयत्वाभावात् पूर्वेणापि कथ दायाद्यादेशा इति? आध्यायति, प्रध्यायति, आदधाति, प्रदधाति इत्येवशीलाया बुद्धेर्वाचकत्वात्तयोर्वर्षाभूवत् नित्यस्त्रीलिङ्गत्वाद् वा पूर्ववद्बहुव्रीहि । ननु चाध्यै प्रध्यै इति यद्यपि यकारेण इयादेशो बाध्यते तथापि धियौ धिय इत्यादावियभावादियसंबन्धी ईकार इति शक्य व्यपदेष्टुम्? उच्यते—भेदाश्रयणाददोष । यदाऽस्य स्थाने इयादिर्भवति तदासावियादेरीदादि, न चान्यस्मिन् भवत्यसावियादेरीदादिस्तयोरभेदप्रसङ्गात् इति विकल्पो न भवति । **अस्त्रिया इति किम्?** सूत्रेऽस्त्रिया इत्यस्य किं प्रयोजनमित्यर्थ । तत्फलमाह—**स्त्रियै, स्त्रियाः, परमस्त्रियै** इत्यादि । सूत्रे स्त्रीशब्दवर्जनात्ततो ङितां दायाद्यादेशा **पूर्वेण नित्यमेव** भवन्ति । **यवक्रिये, कटप्रुवे** इति । यवान् क्रीणातीति विग्रहे क्विपि, कटेन प्रवत इति च विग्रहे "दिद्युद्दद०" ५।२।८३। इति क्विपि निपातनात् यवक्री कटप्रूस्ततश्चतुर्थ्येकवचने "संयोगात्" २।१।५२। इतीयुवादेशे स्त्रीदूत इति वचनाद् दैदाद्यभावे सिध्यत । ननु स्त्रियै इत्यादौ असत्यप्यनेन विकल्पे कथ पूर्वेण नित्यमादेशो यत परत्वादियुवादिभावादीदूदन्तत्वाभावादप्रवृत्तिरेवेत्याह—**अस्त्रिया** इत्यादि । अय भाव—यदि पूर्वं परत्वादियुवादयस्तर्हि अस्त्रिया इति शास्त्रकृन्निर्देश कथ? तदेव बोधयति—यत्परादपि इयुवूयत्वादिकार्यात् स्त्रीदूदाश्रित कार्यं पूर्वं भवति । ज्ञापनफलमाह—**तेन स्त्रियै, स्त्रीणाम्, भ्रूणाम्, आध्यै इत्यादि सिद्धमिति ।** अन्यथा एषु परत्वादियुवादिषु कृतेषु ईदूदन्तत्वाभावात् न भवेयुर्दैनामादेशा ॥ ३० ॥

**आमो नाम् वा ।** "वेयुवोऽस्त्रिया" इति वावर्जमनुवर्तते स्त्रीदूत इति च । इयुव स्त्रीदूत आमो नाम् वा अस्त्रिया इत्यन्वयस्तदाह—**इयुवोः संबन्धिनौ** इत्यादि । अत्र ङिस्थानिकस्य सानुबन्धत्वादपरस्य चासंभवात् स्याद्यधिकाराच्च षष्ठीबहुवचनस्यैवामो ग्रहणमित्याह—**षष्ठीबहुवचनस्येति । श्रीणाम्, श्रियाम्** इत्यादि । श्रीशब्दादामोऽनेन नामादेशे पक्षे च "संयोगात्" इतीयादेश । **भ्रूणाम्, भ्रुवाम्** इति । पूर्ववदामो नामादेशे पक्षे "भ्रूश्नो" इत्युवादेश । एवमन्यदपि । **शोभना धीरेषां सुधीनाम्, सुधियामिति ।** एतद्विग्रहपक्षे सुधीशब्दस्य श्रीवद्रूपाणि, तत एव नित्यस्त्रीलिङ्गत्वादिति भाव । इयुव इत्यनुवृत्तिफलमाह—**इयुव इत्येव? प्रधीनाम्, वर्षाभूणाम्** इति । अनयोरीदूतौ नेयुवसंबन्धिनाविति "ह्रस्वापश्च" इति नित्यमेवामो नामादेश । स्त्रीदूत इत्यधिकारफलमाह—**स्त्रीदूत इत्येव? यवक्रियाम्, कटप्रुवाम्, सुष्ठु ध्यायन्तीति सुधियस्तेषाम् सुधीयाम्** इति । एषु यथाक्रम "संयोगात्" इति, "धातोरिवर्णोवर्णस्य०" इति च इयुवौ, अनेनामो वैकल्पिको नाम् न भवति, ईकारान्तोकारान्तत्वेऽपि क्रियाशब्दत्वेन सर्वलिङ्गत्वात् नित्यस्त्रीविषयत्वाभावादत एव चोत्तरसूत्रेणापि नित्यमामो न नाम् । **स्त्रीणाम्, परमस्त्रीणाम्** इति । अत्र स्त्रीशब्दवर्जनाद् वैकल्पिक आमो न नाम् । एवन्तर्ह्यत्र केनामो नामित्यत आह—**उत्तरेण नित्यमेव** इति । "ह्रस्वापश्च" इत्यनेनेति भाव । ननु श्रियमतिक्रान्तानि कुलानि तेषामतिश्रीणामित्यादौ "क्लीबे" २।४।९७ इति ह्रस्वत्वे सति कथमामो नामित्यत आह—**नपुंसकेऽपि ह्रस्वत्वेन भाव्यमित्यादि** ॥ ३१ ॥

**ह्रस्वापश्च ।** आमो नाम् इति अनुवर्तते । चकारात् स्त्रीदूत इति गम्यते । ह्रस्वाप स्त्रीदूतश्चामो नामित्यन्वयस्तदाह—**ह्रस्वान्तादि**त्यादि । क्रमेणोदाहरति—**श्रमणानामित्यादि** । श्रमणादिशब्देभ्य आमोऽनेन नामादेशे "दीर्घो नाम्य०" १।४।४७। इति दीर्घे सति भवति । एवमन्यदपि । अथ श्रीणाम्, श्रियामित्यत्राप्यनेन परत्वात् नित्य नामादेश कुतो न भवतीत्याह—**स्त्रीशब्दवर्जितयोरि**त्यादि । विशेषविहितत्वेनापवादत्वादिति शेष । **सोमपाम्, सेनान्याम्** इति । सोम पिबतीति विग्रहे विचि, सेनां नयतीति क्विपि, तत षष्ठ्यामामि "ह्रस्वापश्च" इति वचनात् नामादेशाभावे "लुगातोऽनाप" इति "क्विब्वृत्तेर०" इति च कृते सिध्यत ॥ ३२ ॥

---

१ °स x x x° म० म०, भाण्डा०, ख० ता० ।

## संख्यानां र्ष्णाम् ॥ १ । ४ । ३३ ॥

रेफषकारनकारान्तानां संख्यावाचिनां शब्दानां संबन्धिन आमः स्थाने नाम् इत्ययमादेशो भवति । चतुर्णाम्, षण्णाम्, पञ्चानाम्, सप्तानाम्, परमचतुर्णाम्, परमषण्णाम्; परमपञ्चानाम् । तत्सबन्धविज्ञानादिह न भवति–प्रियचतुराम्, प्रियषषाम्, प्रियपञ्चाम् । संख्यानामिति किम्? गिराम्, विप्रुषाम्; यतिनाम् । र्ष्णामिति किम्? त्रिंशताम्, पञ्चाशताम् । बहुवचन व्याप्त्यर्थम्, तेन भूतपूर्वनान्ताया अपि–अष्टनाम्, परमाष्टनाम् ॥ ३३ ॥

## त्रेस्त्रयः ॥ १ । ४ । ३४ ॥

आमः संबन्धिनस्त्रिशब्दस्य त्रयादेशो भवति । त्रयाणाम्, परमत्रयाणाम् । आम्संबन्धिविज्ञानादिह न भवति–अतित्रीणाम्, प्रियत्रीणाम् । अतत्सबन्धिनोऽपि भवतीत्येके–अतित्रयाणाम्, प्रियत्रयाणाम् । स्त्रियां तु परत्वात् तिसृभावो भवति–तिसृणाम् ॥ ३४ ॥

## एदोद्भ्यां ङसिङसो रः ॥ १ । ४ । ३५ ॥

एदोद्भ्यां परयोर्ङसिङसोः स्थाने रेफो भवति, अकार उच्चारणार्थः । मुनेः, मुनेः, साधोः, साधोः, गोः, गोः; द्योः, द्योः; परमश्चासाविश्च परमेः, परमेः, नयतीति विच्–नेः, नेः, एव लोः, लोः । वचनभेदो यथासंख्यनिवृत्त्यर्थः ॥ ३५ ॥

---

संख्याना र्ष्णाम् । आमो नामित्यनुवर्त्तते । र्ष्णाम् सख्यानामामो नामित्यन्वय । र् च ष् च न् च तेषा र्ष्णाम् । "तवर्गस्य०" इति णत्वम् । "रषृवर्णा०" इति तु न, एकपदत्वाभावात् । "वोत्तरपदान्त०" २।३।७५। इत्यपि न, यत षकारो न पूर्वपदस्य किन्तु मध्यपदस्य, तर्हि रेफ पूर्वपदस्थोऽस्ति तदपेक्षया णत्व भवतु, न, "पदेऽन्तरे०" २।३।९३। इति निषेधात् । र्ष्णामिति शब्दनिर्देश , संख्यानामिति त्वर्थनिर्देश , संख्या चेहैकत्वादिरर्थ । तत्र शब्दार्थयो सामानाधिकरण्याभावादुपचारात् संख्यार्था शब्दा सख्याशब्देनाभिधीयन्ते । अथवा सख्यायते आभिरिति "उपसर्गादात " ५।३।११०। इति, "करणाऽऽधारे" ५।३।१२९। इति परमप्यनट बाधित्वा बहुवचनादङि आपि च संख्याशब्देनैकादय शब्दा एवोच्यन्त इत्याह—**संख्यावाचिना शब्दानामिति** । **चतुर्णाम्** इति । चतुर्शब्दादनेनामो नामादेशे "रषृवर्णा०" इति णत्वम् । "र्हादर्हस्वरस्या०" इति च द्वित्वपक्षे चतुर्ण्णामित्यपि । **षण्णाम्** इति । षष् नामिति स्थिते "धुटस्तृतीय" इति डकारे, तस्य "प्रत्यये च" इति णकारे, "तवर्गस्य०" इति टवर्गयोगात् नकारस्य णकार । एव पञ्चन्सप्तन्शब्दयोरामो नामादेशे "दीर्घो नाम्य०" इति दीर्घत्वे नलोपे—**पञ्चानां, सप्तानामिति** । तदन्तानुदाहरति—**परमचतुर्णामित्यादि** । **प्रियचतुरामित्यादि** । प्रियाश्चत्वारो येषामित्यादि विग्रह र्ष्णामिति षष्ठ्यास्तत्सबन्धिनि विज्ञानादन्यपदार्थसबन्धित्वादामो नामादेशाभाव । **प्रियपञ्चाम्** इत्यत्र तु आमि "अनोऽस्य" इत्यकारलोपे, "तवर्गस्य" इति नकारस्य ञकार । **गिरामित्यादि** । एतेषां रेफषकारनकारान्तत्वेऽपि संख्यावाचित्वाभावादामो न नाम् । **त्रिंशतामित्यादि** । सख्यावाचिनामेषां रेफषकारनकारान्तत्वाभावात् नामो नाम् । ननु च त्रिंशदादयः शब्दा संख्येयेष्वपि वर्तमाना "विंशत्याद्या शतात् द्वन्द्वे" इति वचनात् एकत्व एव वर्तन्ते इत्यनेकवचनान्ता एव भवितुमर्हन्ति कथ बहुवचनम्? सत्यम्, एकशेषात्, त्रिंशच्च त्रिंशच्च त्रिंशच्च त्रिंशत । अथाष्टन्शब्दादामि परत्वात् "वाष्टन०" इत्याकारे नान्तत्वाभावात् कथ नाम्भावोऽत आह—**बहुवचनम्**–र्ष्णामिति । **तेन**–र्ष्णामिति बहुवचनस्य व्याप्त्यर्थत्वेनेति भाव । **भूतपूर्वनान्ताया अपि** इति । अष्टन्शब्दस्येदानीं नकारान्तत्वाभावेऽपि पूर्वं नान्तत्वमाश्रित्यास्य प्रवृत्तिरित्यर्थ ॥ ३३ ॥

त्रेस्त्रयः । अत्राम इत्यनुवर्त्तते, तदत्र त्रेरिति स्थानिनो विशेषणम् । आम त्रे त्रय इत्यन्वयस्तदाह—**आमः संबन्धिन इति** । सबन्धस्योभयनिष्ठत्वेनाम संबन्धिन इत्यपि युक्तम् । आम संबन्धित्व च त्रेरर्थद्वारकम् । यस्मादाम संबन्धी त्रेरर्थस्तत स आम इत्युच्यते । आम सबन्धीति कार्यकारणभावे षष्ठी । त्रिशब्द कारणमाम् च कार्यम्, यतस्त्रिशब्दबहुत्वे आम् । अनेकवर्णत्वात् सर्वादेशोऽनेन त्रिशब्दस्यामि त्रय आम् इत्यवस्थायां "ह्रस्वापश्च" इति नामि णत्वे च, तदाह—**त्रयाणामिति** । **परमत्रयाणामिति** तु विशेषणसमासे सति भवति । **अतित्रीणाम्** इति । प्रादिसमास , अत्राम संबन्धिन त्रिशब्दस्याभावात् न त्रयादेश । **प्रियत्रीणाम्** इति । प्रियास्त्रयो यस्येति प्रियत्रिशब्दो बहुव्रीहि , तस्यान्यपदार्थप्रधानत्वादेकद्विबहुवचनानि सन्ति, अतो मुनिवत्तस्य रूपाणि । **अतत्संबन्धिनोऽपि भवतीत्येके** इति । पाणिनीयैकदेशिन , तथा चोक्तं–'वस्तुतस्तु प्रियत्रयाणाम्' इति सि० कौ० "त्रेस्त्रय" पा० ७।१।५३। सूत्रे भट्टोजिदीक्षितेन, अयत्ल मत तेन केचिदित्युक्त्या ध्वनितम्, केचित् इति प्रसादकारादय इति तट्टीकाकृतो वदन्ति । केचिदित्यस्यायमाशय —त्रे संबन्धिन्यामीति विज्ञानाद् गौणत्वेऽपि त्रयादेशो न भवतीति । मतमिदमाचार्यहेमचन्द्रसंमतम् । 'वस्तुतस्तु०' इत्यस्यायमर्थः–अर्थप्राधान्यबोधकस्य बहुवचनस्याभावाद् गौणत्वेऽपि त्रयादेशो न्याय्यः । एके इति बहुवचननिर्देशेन शास्त्रकर्तुरपीद संमतम् । एकेषां मतेनोदाहरति—**अतित्रयाणाम्** इत्यादि । अथ स्त्रियां तु परत्वात्तिसृभाव इति । "त्रिचतुतिसृणामिति स्त्रीलिङ्गेऽपि त्रयादेशसामग्र्या विद्यमानत्वात् त्रयादेश कस्मात् न भवतीत्याह—**स्त्रियां तु परत्वात्तिसृभाव** इति । "त्रिचतुरस्त्रि०" २।१।१। इत्यनेनेति शेष ॥ ३४ ॥

**एदोद्भ्यां ङसिङसो रः** । व्याख्यानात् "ङसेश्चाद्" २।१।१९। इति ज्ञापकाद् वा चतुर्थ्या वाक्यार्थस्याघटनात्तृतीयायाभावनिश्चये पञ्चम्येदोद्भ्यामित्याह—**एदोद्भ्यां परयोरिति** । अत्र तकार. स्वरूपग्रहणार्थं , तेन लाक्षणिकयोरप्येदोतो परिग्रह । अथ र इत्यत्राकार किमर्थ इत्यत आह—**अकार उच्चारणार्थ** इति । **मुनेरिति** । मुनिशब्दात् "ङित्यदिति" इत्येदन्तादेशात्तदवयवभूतादेकारात् परयोर्ङसिङसो. "प्रत्ययस्य" इति सर्वादेशो रेफोऽनेन भवति । एवमन्यदपि । **परमेरिति** । "आतो नेन्द्रवरुणस्य" ७।४।२९। इति ज्ञापकात् पूर्वं पूर्वोत्तरपदयो कार्यम् तत संधिकार्यम्, अत परमैरिति प्राप्नोति, नैवम्; ज्ञापकज्ञापिता विधयो ह्यनित्या इति । ननु वचनाभेदार्थमुभयत्र समाहारेतरेतरयोगौ कस्मात् न कृतो, न ह्यसति प्रयोजने वचनभेदो युक्त इत्याह—**वचनभेद** इत्यादि । अन्यथा निमित्तनिमित्तिनो. समानत्वात् एकारात् ङसेरोकाराच्च ङसो रेफ इति यथासंख्यं स्यादित्यर्थ ॥ ३५ ॥

## खितिखीतीय उर् ॥ १ । ४ । ३६ ॥

खितिखीतीसंबन्धिन इवर्णस्थानाद्यकारात् परयोर्ङसिङसोः स्थाने उर् आदेशो भवति । खि–सख्युः, सख्युः; ति–पत्युः, पत्युः, खी, ती–सह खेन वर्तते सखः, सखं सखायं वेच्छति इति क्यनि, क्विपि, सखीः; पततीति पतः, पतं पतिं वेच्छतीति क्यनि, क्विपि, पतीः; सख्युः, पत्युः । तथा सुखमिच्छति, सातमिच्छति क्यनि, सुख्युः, सात्युः; लूनं, पूनं चेच्छतः–लून्युः, पून्युः; "क्तादेशोऽपि" ॥ २ । १ । ६१ ॥ इति नत्वस्यासत्त्वात् तीरूपत्वम् । य इति किम्? यत्र यत्वादेशस्तत्र यथा स्यात्, इह मा भूत्–अतिसखेः, अधिपतेः । खितिखीतीति किम्? मुख्यमपत्यं चाचष्टे णिच्, विच्–मुख्यः, अपत्यः आगतं स्वं वा । अदितिं[1] इत्येव? सख्याः, पत्याः ॥ ३६ ॥

## ऋतो डुर् ॥ १ । ४ । ३७ ॥

ऋकारांत्[2] परयोर्ङसिङसोः स्थाने डुर् इत्ययमादेशो भवति । पितुः, पितुः, मातुः, मातुः । ङसिङस इत्येव? पितॄन् । ऋत इति किम्? ग्रः ॥ ३७ ॥

---

**खितिखीतीय उर्** । ङसिङस इत्यनुवर्त्तते । खितिखीतीयो ङसिङ्स उर् इत्यन्वय । खितिखीत्या यो यकार इति द्वन्द्वगर्भतत्पुरुषाद् पञ्चम्या रूप—**खितिखीतीय** इति । एतेभ्य परस्य यकारस्य ङसिङसो परतोऽसम्भवाद् "इवर्णादे०"इति विहितस्यैव यकारस्य ग्रहणमित्याह— **खितिखीतीसम्बन्धिन इवर्णस्थानादिति** । न च सखाय यातीत्यप्रयोगिणि प्रत्यये कृते "लुगातोऽनाप" २।१।१०७। इत्याकारलोपे सम्भवतीति वाच्यम्, प्रयुक्तानामन्वाख्यानात्तेषा च प्रयोगासमवात्तदभाव । खीतीभ्यां तु कल्पनानिर्मितस्यासभव एव। यद्येव लाघवार्थं 'ख्यत्य उर्' इत्येव किम्न कृत? एव च सति खिखीशब्दयोस्तितीशब्दयोर्लघुस्पष्टप्रतिपत्तिर्भवतीति, नैवम्, एव सति सुतरा सन्देह स्यात्, तथाहि—मुख्यस्य गार्हपत्यपौरोहित्यसख्यापत्यादीनां च यौ ख्यत्यशब्दौ तयोर्ग्रहण कस्माच्च विज्ञायते? "सख्युरितोऽशावैत्" १।४।८३।, "पत्युर्न" २।४।४८। इति ज्ञापकात् न भविष्यतीति चेत्–सौत्रावेतौ निर्देशौ इति मन्दधीर्मन्यते, गरीयांसश्च ज्ञापकोपन्यासा । **सख्युः, पत्युः** इति । सखिपतिशब्दाभ्या ङसिङसोस्तत्र खितिशब्दयोरिकारस्य यत्वे तस्माच्च खितिशब्दसंबन्धिन इवर्णस्थानात् परयोर्ङसिङसोरुत्वे च विसर्ग । खीशब्दस्तीशब्दश्च द्विविध – कौश्चित् खितिशब्दयोरीकारे कृते, कौश्चित् खतशब्दयो । तत्र पूर्वयोरेकदेशविकृतमनन्यवदिति खितिग्रहणेनैव ग्रहणात् तत्र खीतीग्रहण नार्थवत्, किं तर्हि? उत्तरयोरत आह—**सह खेन वर्तते** इत्यादि । खने "क्वचिद्" ५।१।१७१। इति डे ख, सह खेन वर्तते इति विग्रहे "सहस्य सोऽन्यार्थे" ३।२।१४३। इति समासे, तमिच्छतीत्यर्थे "अमाव्ययात्०" ३।४।२३। इति क्यनि, "क्यनि" ४।३।११२। इति ईत्वेऽन्यत्र "दीर्घश्चि०" इति दीर्घे, क्विपि, "अत" इत्यकारलोपे, "य्वो प्वय्व्यञ्जने०" इति यलोपे—**सखी**, एव **पती**, "योऽनेकस्वरस्य" २।१।५६। इति यत्वेऽनेन उत्वेन—**सख्युः, पत्युः** इति षष्ठ्यां पञ्चम्यां च साधारण रूपम् । **तथेत्यादि** । सखिपतिशब्दयोरेव केचिदिच्छन्ति, तन्मते–सख्यु, पत्युरित्येतावन्मात्रमेवास्य सूत्रस्य लक्ष्य, न चूर्णिकारोपवर्णितमपि लून्युरित्यादि लक्ष्यान्तरम् । तथान्येनाप्युक्त क्रीतप्रीतश्रीतपूतादीनां क्यन्नादिषु तीशब्द श्रूयमाण एव संभवति, तस्मात्तु कृतयादेशादुत्त्वं कस्मादुदाहृत क्रीत्युरागच्छति क्रीत्यु स्वमिति । केचिदाहु –तत्र नेष्यते त्यादुत्तरस्योत्वमिति, क्रीत्य आगच्छति, क्रीत्य स्वमिति हि तत्र भवितव्यम् । अन्ये त्वाहु –पूर्वागमेषु तीशब्दस्य लूनीशब्दावयवस्य कृतयत्वादेशस्योदाहरण दर्शितं, न च सामान्येन सूत्रनिर्देशे विशेषाभ्युपगमो युक्त इति सर्वमुदाहरणम् । एतद्द्वैमत्य चेतसि परिभाव्य **तथेत्यनेनाभ्युपगम** दर्शयति । **सुख्युः, सात्युरित्यादि** । 'सुखदु खण्' तत्क्रियायाम्, धातोर्णिच्यणि च सुखम्, सनोते क्ते "आ खनिसनिजन" ४।२।६०। इत्यात्वे सातम्, लुनाते, पुनातेश्च क्ते "ऋल्वादे०" ४।२।६८। इति, "पूदिव्यञ्चे०" ४।२।७२। इति च क्तस्य नत्वे लून, पून, शेषं क्यन्नादि पूर्ववत् । नन्वत्र नत्वे सति तीरूपत्वाभावात् कथमनेनोत्वमित्यत आह—**"क्तादेशोऽपि" इति नत्वस्येत्यादि** । **य इति किम्?** यकारं विहायैव सूच्यतामिति प्रश्नकर्तुराशय । समाधत्ते—**यत्र यत्वादेशस्तत्रेत्यादि** । तथा च क्व मा भूदित्याह—**अतिसखेः, अधिपतेरिति** । अतिशयित सखा इति अधिक पतिरिति च प्रादिसमास, "पूजास्वते०" ७।३।७२। इति समासान्ताभावे, ङसिङसो "ङित्यदिति" इत्येत्वे, "एदोद्भ्याम्०" इति रत्वे विसर्ग । **मुख्यः, अपत्यः आगतं स्वं वेति** । 'मह' पूजायामतो "महेरुच्चास्य वा" उ० ८९। इति खप्रत्ययेऽन्तलोपेऽस्य उत्वे तत्र भव इत्यर्थे "दिगादिदेहांशाद्य" ६।३।१२४। इति ये, "अवर्णेवर्णस्य" इत्यन्तलोपे मुख्य, न पतन्तीति येन जातेन पूर्वजास्तदपत्य "नञो ह्वलिपते" उ० ३५८। इति य, ततो णिचि, विचि, ङसिङसो –मुख्य, अपत्य । अस्ति ह्यत्र यकार, खितिखीतीसबन्धी तु न भवति, तदभावादुत्वाभाव । आगतमिति पञ्चम्यभिव्यक्त्यर्थं, स्वमिति षष्ठ्यभिव्यक्त्यर्थमेवमन्यत्रापि । **सख्याः, पत्याः** इति । "नारीसखीपङ्गूश्वश्रू" २।४।७६। इति ङ्यन्तात् सखीशब्दात् पतिशब्दाच्च "स्त्रीदूत" इति, "स्त्रिया ङिता वा०" इति दासाद्यादेशे यद्यपि खीतिसंबन्धी यशब्दोऽस्ति तथाप्यदित्यनुवृत्तेरुत्वाभाव, ङसिङसो रूपाभावाद् वेति ॥ ३६ ॥

**ऋतो डुर्** । ङसिङस इत्यनुवर्तते । ऋत ङसिङसो डुर् इत्यन्वयस्तदाह—**ऋकारादित्यादि** । डुर् इत्यत्र डकारो "डित्यन्त्यस्वरादे" इति विशेषणार्थं । **पितुरिति** । पितृशब्दावयवर्कारात् परयोर्ङसिङसोर्डुरादेशे "डित्यन्त्य०" इत्यन्त्यस्वरादिलोपे विसर्गे च सिध्यति । एवमन्यदपि । **पितॄन्** इति । अत्र ङसिङसोरभावेन न डुर्, किन्तु "शसोऽता०" इति दीर्घो नत्व च । **ग्रः**–अत्र ह्रस्वर्कारामावेन न डुर्, गृणातेरनुकरणात् पञ्चम्यां रेफे ग्र इति रूपम् । ऋकारलृकारयोरेकत्वप्रतिज्ञानात् लृकारादपि डुरादेशो भवति, तस्य च ऋफिडादिपाठात् लृत्वम्–कुल्ल लृकार, यदाह तत्त्वदीपिकायामुपाध्याय –आप्लृ इत्येतस्मात् षष्ठ्यामापुल् इत्येव भवति ॥ ३७ ॥

---

[1] अदिति म० भ० । [2] °रान्तात् पु० ।

## तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो घुट्यार् ॥ १ । ४ । ३८ ॥

तृच्तृन्प्रत्ययान्तस्य स्वस्रादिशब्दानां च संबन्धिन ऋकारस्य स्थाने तत्सम्बन्धिन्यन्यसम्बन्धिनि वा घुटि परे आर् इत्ययमादेशो भवति । कर्तारम्, कर्तारौ, कर्तारौ, कर्तारः कटस्य; वदितारम्, वदितारौ, वदितारौ, वदितारः जनापवादान्; स्वसारम्, स्वसारौ, स्वसारौ, स्वसारः; नप्तारम्, नप्तारौ, नप्तारौ, नप्तारः; नेष्टारम्, नेष्टारौ, नेष्टारौ, नेष्टारः, त्वष्टारम्, त्वष्टारौ, त्वष्टारौ, त्वष्टारः; क्षत्तारम्, क्षत्तारौ, क्षत्तारौ क्षत्तारः, होतारम्, होतारौ, होतारौ, होतारः; पोतारम्, पोतारौ, पोतारौ, पोतारः; प्रशास्तारम्, प्रशास्तारौ, प्रशास्तारौ, प्रशास्तारः, अतिकर्तारम्, अतिकर्तारौ, अतिकर्तारौ, अतिकर्तारः । घुटीति किम्? कर्तृ कुलं पश्य । सौ तु परत्वात् डागुणौ–कर्ता, हे कर्तः । तृशब्दस्यार्थवतो ग्रहणेन प्रत्ययग्रहणात् नप्त्रादीनामव्युत्पन्नानां संज्ञाशब्दानां तृशब्दस्य ग्रहणं न भवतीति तेषां पृथगुपादानम्, इदमेव च ज्ञापकम् 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणं भवति', इति व्युत्पत्तिपक्षे तु तृग्रहणेनैव सिद्धे नप्त्रादिग्रहणं नियमार्थम्, तेनान्येषामौणादिकानां न भवति–पितरौ, भ्रातरौ, मातरौ; जामातरौ । केचित्तु प्रस्तोतृउन्नेतृउद्गातृप्रतिहर्तृप्रतिस्थातृशब्दानामौणादिकानामप्यारं मन्यन्ते–प्रस्तोतारम्, प्रस्तोतारौ, प्रस्तोतारौ, प्रस्तोतारः इत्यादि ॥ ३८ ॥

## अर्डौ च ॥ १ । ४ । ३९ ॥

ऋकारस्य स्थाने डौ घुटि च परे अर् इत्ययमादेशो भवति । पितरि, पितरम्, पितरौ २, पितरः, मातरि, मातरम्,

---

तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो घुट्यार् । ऋत इत्यधिक्रियते । त्र्यादीना समाहारद्वन्द्वात् षष्ठ्या सौत्रो निर्देश । अथवा सूत्रे साक्षादृकारो निर्दिश्यते, ततश्च तृस्वसृनप्तृनेष्टृक्षत्तृहोतृपोतृप्रशास्तृणा य ऋकारस्तस्य समानदीर्घत्वे षष्ठ्या रत्वे रूपम् । ऋकारोपादानस्य चेद फल तृ इति प्रत्ययस्य ग्रहणमन्यथा यते–"यतिन०" उ० ८५६। इति ऋप्रत्यये तृरूपस्य समवाप्तस्यापि ग्रहणप्रसङ्ग, अत आह—तृन्तृच्प्रत्ययान्तस्येति । अत एव तृन्तृचित्यनुबन्धनिर्देश प्रत्ययाप्रत्ययसमुदायव्युदासार्थ, न तु तृन्तृचोर्ग्रहणार्थ, तृ इति प्रत्ययमात्रस्यात्र ग्रहणादिति । अत एव वक्ष्यति—तृशब्दस्यार्थवत इत्यादि । 'डुकृग्' करणे, धातो करोतीति विग्रहे "णकतृचौ" ५।१।४८। इति तृचि गुणे अमौजस्सु अनेनाऽऽरादेशे—कर्तारमित्यादि । औकारप्रत्यासत्ततामिव्यक्त्यर्थं प्रथम द्वितीयोदाहरणे, तत प्रथमोदाहरणे । तृच्प्रत्ययाभिव्यक्त्यर्थ—कटस्येति "कर्मणि कृत" २।२।८३। इति षष्ठी । वदितारमित्यादि । 'वद'व्यक्तायां वाचि, वदतीत्येवशील इत्यर्थे "तृन् शीलधर्मसाधुषु" ५।२।२७। इति तृनि, "स्ताद्यशितोऽत्रोणादे०" ४।४।३२। इतीटि पूर्ववत् । जनापवादानिति । तृनभिव्यक्त्यर्थ, "तृन्नुदन्ता०" २।२।९०। इति षष्ठीप्रतिषेधाद्द्वितीया । सुपूर्वादसूच् क्षेपणेऽत "सोरसे" उणा० ८५३। इति ऋप्रत्यये स्वसृ(भगिनी)भतोऽमौजस्सु अनेनाऽऽरादेशे—स्वसारमित्यादि । एवमुत्तरत्रापि । नप्तारम् इति । 'णम'प्रह्वत्वेऽतो "नमे प च" उणा० ८६२। इति पादेशे तृप्रत्यय । नेष्टारम् इति । 'णींग्' प्रापणेऽतो "निय षादि" उणा० ८६४। इति षकारादिस्तृप्रत्यय ऋत्विज्यभिधेये । त्वष्टारमिति । क्षत्तारमिति । 'त्विषीं' दीप्तौ, अत 'क्षद'खदने, सौत्राच "त्वष्टृक्षत्तृदुहित्रादय" उणा० ८६५। इति तृप्रत्यये इकारस्याऽकारे एकत्र दकारस्य "अघोषेप्रथमोऽशिट" इति प्रथमत्वे भवत । होतारम्, पोतारम् इति । जुहोतेश्च पवतेः पुनातेर्वा "हुपुग्०" उणा० ८६३। इति तृप्रत्यये गुणे सिध्यत । प्रशास्तारम् इति । प्रपूर्वात् 'शासूक्' अनुशिष्टौ, अत "शासिशसि०" उणा० ८५७। इति तृप्रत्यय । अन्ये तु त्वष्टृक्षत्तृहोतृपोतॄन् ताच्छील्यादिषु निपातयन्ति, अत्र इडभावस्त्वत्त्वादेश निपातनात् । अतत्सम्बन्धिन्युदाहरति—अतिकर्तारमित्यादि । कर्तारमतिक्रान्त इति "प्रात्यव०" इत्यादिना तत्पुरुष, अतिक्रान्त कर्ता येनेति बहुव्रीहिर्न विधेय, "ऋन्नित्यदित" ७।३।१७१। इति कच्प्रसङ्गात् तेन च व्यवधानाद् अनेन प्राप्त्यभावात् । नन्वत्र सूत्रे शौ निमित्ते किं न दर्शितम्? "स्वराच्छौ" १।४।६५। इति नागमेन व्यवधानात् न प्राप्नोतीति चेन्न, नागम प्रकृतेरेवांश इति, सत्यम्, अवयवेनावयवस्य ऋल्लक्षणस्य व्यवधानं भवतीति न दर्शितम् । कर्तृ कुलं इति । अत्र नपुंसकसेर्घुट्त्वाभावात् नार् । कर्तृशब्दात् सौ उभयं प्राप्नोति, अनेनारादेश "ऋदुशनस्०" १।४।८४। इति डादेशश्च, सावकाश च तदुभय–कर्तारौ पितेति, अत्रोभयप्राप्तौ परत्वात् डादेशो न भवति आर्, बाधितत्वात्, एवमेव सम्बुद्धौ सौ कर्तृशब्दस्य ह्रस्वान्तस्य सिना सह "ह्रस्वस्य गुण" इति गुण, तदाह—सौ तु परत्वात् डागुणौ कर्ता, हे कर्तः इति । अथ नप्त्रादय किं पृथगुपादीयन्ते? तत्र तृ इत्येव सिद्धमित्याह—तृशब्दस्येत्यादि । अयमर्थ – तृशब्दस्य ऋकारान्तत्वाव्यभिचारात् पुनर्ऋकार इति यद्विशेषण तदृकारान्त एव य इति स्वरूपप्रतिपत्त्यर्थ, यस्त्वधिकारापन्न स स्थानिप्रत्यासत्त्यर्थोऽन्यथाऽनेकवर्णसत्वात् सर्वस्य स्यात् । व्याकरणे च शब्दस्य रूपवदर्थोऽप्याश्रीयतेऽन्यथा च नप्त्रादिग्रहणमनर्थकं स्यात्, तेनार्थवतो ग्रहणे संभवति अनर्थकस्य ग्रहण न भवति, स चार्थवान् प्रत्यय एवेति । यत्र त्वर्थो न सम्भवति तत्र वचनप्रामाण्यादनर्थकस्यापि ग्रहणं भवति । अत एव नप्त्रादीनामव्युत्पन्नाना प्रत्ययितावयवार्थाना संज्ञाशब्दानां सम्बन्धिनस्तृशब्दस्य तृग्रहणेनानर्थकत्वाद् ग्रहण न भवतीति तेषा पृथगुपादान क्रियते । ननु नप्त्रादयोऽपि व्युत्पाद्यन्ते इति तत्कथमुच्यतेऽव्युत्पन्नानामिति? अत्रोच्यते–उणादिषु दर्शनद्वय, केचिन्मन्यन्ते 'उणादयोऽव्युत्पन्नानि नामानि इति, अपरे व्युत्पन्नानीति' । लक्ष्यसिद्ध्यर्थ चेह क्वचित्किञ्चिद्दर्शनमाश्रीयते । तत्र यदा व्युत्पत्तिपक्ष आश्रीयते तदा नियमार्थं नप्त्रादिग्रहणमौणादिकाना संज्ञाशब्दानां नप्त्रादीनामेव न पित्रादीनामित्याह—व्युत्पत्तिपक्षे त्वित्यादि । केचित्त्विति–भोजप्रभृतय । प्रपूर्वात् स्तौतेरुत्पूर्वान्नयतेर्गायतेश्च प्रतिपूर्वात् हरतेस्तिष्ठतेश्च "हुपूग्णीस्तुप्रतिहृप्रतिप्रस्थाभ्य ऋत्विजि" उणा० ८६३ । इति तृप्रत्ययेऽनेनाऽऽरादेश मन्यन्ते, ताच्छीलिकतृन्नन्तत्वादेषामारादेशसिद्धि ॥ ३८ ॥

अर्डौ च । ऋत इत्यनुवर्तते । तदाह—ऋकारस्य स्थाने इति । अत्र निमित्तात् पर श्रूयमाणश्चकारो निमित्तान्तरसव्यपेक्ष प्रत्यासत्तेरनन्तरसूत्रोपात्तमेव निमित्तमुपस्थापयतीत्याह—डौ घुटि चेति । पितरि इति । पितृ ङि इति स्थितेऽनेन ऋकारस्य ङौ परे अरादेश । एव पितरमित्यादि । पित्रा इत्यादि । अत्र टायामरनेन न भवति, किन्तु यत्वमिति भावः । नपुंसके ऋकारान्तस्य ङौ नित्यत्वात् इयादेशे च

---

१ मXसा° पु०, ख० ता० ।

मातरौ २, मातरः । ङौ चेति किम् ? पित्रा, मात्रा । कर्तृणि कुले, कर्तृणि कुलानीत्यत्र तु परत्वात् पूर्वं न एव, तस्मिंस्तु सति व्यवधानात् न भवति । ऋत इत्येव ? श्रि ॥ ३९ ॥

## मातुर्मातः पुत्रेऽर्हे सिनाऽऽमन्त्र्ये ॥ १ । ४ । ४० ॥

मातृशब्दस्याऽऽमन्त्र्ये पुत्रे वर्तमानस्य सामर्थ्याद् बहुव्रीहौ समासे सिना सह मात इत्यकारान्त आदेशो भवति, अर्हे–मातृद्वारेण पुत्रप्रशंसायां गम्यमानायाम् । कचोऽपवादः । गार्गी माता यस्य तस्याऽऽमन्त्रणं हे गार्गीमात !, एवं हे वात्सीमात !; अत्र पुत्रः सम्भावितोत्कर्षया श्लाघ्यया मात्रा तत्पुत्रव्यपदेशयोग्यतया प्रशस्यते । मातुरिति किम् ? हे गार्ग्यपितृक ! । पुत्र इति किम् ? हे मातः !, हे गार्गीमातृके वत्से ! । अर्ह इति किम् ? अरे गार्गीमातृक ! । आमन्त्र्य इति किम् ? गार्गीमातृकः । सिनेति किम् ? हे गार्गीमातृकौ ॥ ४० ॥

## ह्रस्वस्य गुणः ॥ १ । ४ । ४१ ॥

आमन्त्र्येऽर्थे वर्तमानस्य ह्रस्वान्तस्य सिना सह श्रुतत्वाद् ह्रस्वस्यैव गुणो भवति, "आसन्नः" । हे पितः !, हे मातः !, हे कर्तः !, हे स्वसः !, हे मुने !, हे साधो !, हे बुद्धे !; हे धेनो ! । सिनेत्येव ? हे कर्तृ कुल !, हे वारि !, हे त्रपु !; अत्र परत्वात् पूर्वं सेर्लुपि सेरभावात् न भवति; "नामिनो लुग् वा" ॥ १ । ४ । ६१ ॥ इति लुकि तु स्थानिवद्भावाद्

---

पितरि वारिणेत्यादावुभयोः सावकाशत्वेन परत्वात् नागमे ऋकारान्तत्वाभावात् न भवतीत्याह—**कर्तृणि** इत्यादि । **पूर्वं न एवेति** । कर्तृणि कुले इत्यत्र "अनाम्स्वरे०" इत्यनेन, कर्तृणि कुलानीत्यत्र च "स्वराच्छौ" इत्यनेनेति शेषः । ननु नागमे सति कथमर् न ? व्यवधायकत्वाभावादागमस्येत्याह—**तस्मिंस्तु व्यवधानादि**त्यादि । यस्य योऽवयवस्तेन तस्य व्यवधानं न, किन्तु अवयवेनावयवस्य ऋलक्षणस्य व्यवधानं भवतीति भावः । **श्रि** इति । अत्र दीर्घर्कारस्य सत्त्वेन तत्स्थानेऽर् न भवति ॥ ३९ ॥

**मातुर्मातः पुत्रेऽर्हे सिनाऽऽमन्त्र्ये** । आमन्त्र्य इत्यनेन पुत्र इति विशेष्यते, तेन च मातुरितीत्याह—**मातृशब्दस्ये**त्यादि । ननु कथं मातृशब्दस्य पुत्रार्थे वृत्तिर्न ह्यसौ पुत्रार्थे वर्तमानः क्वचिद्दृष्टः, सत्यम्, केवलो न वर्तते बहुव्रीहौ तु तात्पर्याद् वर्तत इत्याह—**सामर्थ्या**दित्यादि । अयमर्थः–न ह्यन्यत्र वर्तमानः शब्दः साक्षादन्यमर्थं प्रतिपादयति, बहुव्रीहिसमासे त्वन्यपदार्थोपसर्जनतयाऽर्थान्तरं प्रतिपादयत्येव । **अर्हे**–प्रशंसायामित्यर्थः, प्रशंसा च प्रधानत्वात् पुत्रस्यैव न मातुः, अर्हसम्भवेऽपि तदर्थत्वादित्याह–**मातृद्वारेणे**त्यादि । बहुव्रीहौ हि मातृशब्दस्य ऋकारान्तत्वाद्कृल्लक्षणः कच् प्राप्तः, विशेषविहितत्वात्तदपवादोऽयमित्याह—**कचोऽपवाद** इति । "ऋन्नित्यदितः" ७।३।१७१। इत्येतद्विहितस्येति शेषः । गर्गस्यापत्यं वृद्धं स्त्री "गर्गादेर्यञ्" ६।१।४२। इति यञि, "वृद्धिः स्वरेष्वादे०" ७।४।१। इति वृद्धौ, "अवर्णेवर्णस्य" इत्यकारलोपे, "यञो डायन् च वा" २।४।६७। इति ङ्या, "अस्य ङ्यां लुक्" २।४।८६। इति अकारलोपे, "व्यञ्जनात्तद्धितस्य" २।४।८८। इति यलोपे—गार्गी, एवं वात्सी । गार्गी माता यस्येति वात्सी माता यस्येति च विग्रहे "परतः स्त्री पुंवत्०" ३।२।४९। इति प्राप्तस्य पुंवद्भावस्य "स्वाङ्गाद् ङीर्जातिश्चा०" ३।२।५६। इति प्रतिषेधादनेन सिना सह मातादेशे—**हे गार्गीमात !, एवं हे वात्सीमात !** इति । अत्र यो गार्ग्या मात्रा व्यपदेशेन प्रशंसामर्हति स ग्राह्यः, तदेव स्पष्टयति—**अत्रे**त्यादि । अत्र मात्रा **पुत्रः** प्रशस्यते, कथम्भूतया **सम्भावितोत्कर्षया** पुनश्च **श्लाघ्यया** केन करणेन हेतुना वा **तत्पुत्रव्यपदेशयोग्यतये**ति खण्डान्वयः । अत्र–गार्गीमात इति बहुव्रीहौ । **सम्भावितोत्कर्षया**–सम्भावित उत्कर्षो यस्याः सकाशात्तयेत्यर्थः । **श्लाघ्यया**–श्लाघामर्हया । **प्रशस्यते**–लोके विश्रुतो भवति । कस्माद्धेतोरत आह—**तत्पुत्रव्यपदेशयोग्यतया**–तत्पुत्र इति व्यपदेशः–कथनं, तस्य योग्यस्तस्य भावस्तत्ता तया इत्यर्थः । **हे गार्ग्यपितृक** इति । गार्ग्यः पिता यस्येति "ऋन्नित्य०" इति कचि भवति, अत्र मातुरामन्त्र्ये पुत्रेऽवर्तमानत्वादस्याप्रवृत्तिः । **हे मातः !, हे गार्गीमातृके वत्से !** इति । अत्रैकत्र मात्रर्थे वर्तमानत्वात् अपरत्र च पुत्र्यर्थे वर्तमानत्वात् मातृशब्दस्य न माताऽऽदेशः, पुत्रेऽवर्तमानत्वात् इति भावः । **अरे गार्गीमातृक !** इति । अज्ञातपितृकत्वेनानेकपितृकत्वेन चात्र निन्द्यया मात्रा तद्व्यपदेशयोग्यतया विगुणः पुत्रो निन्द्यते इति अर्ह इति वचनात् न भवतीति । **आमन्त्र्य इति किम् ?** आमन्त्र्येति पुत्र इत्यस्य विशेषणं किमर्थमिति प्रश्नः । **गार्गीमातृक** इति । अत्र पुत्रेऽर्थे वर्तमानत्वेऽपि मातृशब्दस्यामन्त्र्यपुत्रार्थवृत्तित्वाभावात् न मातादेशः । **हे गार्गीमातृकौ**–अत्र सेरभावात् नेदं प्रवर्तते ॥ ४० ॥

**ह्रस्वस्य गुणः** । अत्र पूर्वस्मात् सिनाऽऽमन्त्र्य इत्यनुवर्तते । आमन्त्र्ये ह्रस्वस्य सिना गुण इत्यन्वयः । अधिकृतस्य नाम्नो विशेषणात् विशेषणेन च तदन्तविधिसम्भवादाह—**ह्रस्वान्तस्येति** । ह्रस्वस्येत्यस्य ह्रस्वान्तस्येत्यर्थकत्वे कस्य गुणो ह्रस्वान्तस्य त्वसम्भवादिति चेद्, सत्यम्, श्रुतो ह्रस्वो ह्रस्वान्तत्वमनुमितमिति 'श्रुतानुमितयोश्च श्रौतो विधिर्बलीयान्' इति न्यायेन श्रुतत्वाद् ह्रस्वस्यैव गुणो भविष्यतीत्याह—**श्रुतत्वादिति** । **"आसन्नः"** ७।४।१२०। इति ज्ञापकाद्वर्कारस्य तत्प्रत्यासन्नोऽर्, इकारस्य एकारः, उकारस्य ओकारः, अकारस्य "अदेतः स्यमोर्लुक्" १।४।४४। इति वचनात् सेरभावात् गुणो न भवति । अथ प्रमाणाऽऽसत्त्या इकारोकारयोरप्यरादेशः कस्मात् न भवति ? मात्रिकस्य हि द्विमात्रादप्यर्द्धमात्रिक आसन्नो भवति, न चैवं सति गुणग्रहणमनर्थकं स्थानाऽऽसत्त्या सोऽपि स्यात्, उच्यते–यथादर्शनं व्यवस्थाऽऽश्रीयते, तत्र "गुणोऽरेदोत्" ३।३।२। इति गुणसंज्ञाया "नामिनो गुणोऽक्ङिति" ४।३।१। इत्यादिभिः ऋवर्णस्यैवारादेशो दृष्टो नेवर्णोवर्णयोः । दृष्टकल्पनां विहाय को नामादृष्टं कल्पयति, न चैवं किञ्चिद्बाध्यत इत्युदाहरति—**हे पित**रित्यादि । पितृशब्दादामन्त्र्यसौ तेन सह ह्रस्वर्कारस्य गुणेऽरि पितरिति । एवमन्यत्रापि । अथ हे कर्तृ कुलेत्यादौ ह्रस्वत्वादामन्त्र्यसिना सह गुणः कस्मात् न भवति इत्याह—**अत्र परत्वादि**त्यादि । "अनतो लुप्" १।४।५९। इति सेर्लुपि "लुप्यय्वृल्लेनत्" ७।४।११२। इति प्रत्ययलोपलक्षणस्य प्रतिषेधादित्यर्थः । लुक्पक्षे तु लुकः स्थानिवद्भावाद् भवत्येवेत्याह—**नामिन** इत्यादि । नामिन इति लुक्पक्षे गुणे हे कर्तः इति, "अनतो लुप्" इति लुपि हे कर्तृ इति च भवतः । एवमेव हे वारे, हे वारि, हे त्रपो, हे त्रपु इत्यादि बोध्यम् ।

## तृंस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो घुट्यार् ॥ १ । ४ । ३८ ॥

तृच्तृन्प्रत्ययान्तस्य स्वस्रादिशब्दानां च संबन्धिन ऋकारस्य स्थाने तत्सबन्धिन्यन्यसंबन्धिनि वा घुटि परे आर् इत्ययमादेशो भवति । कर्तारम्, कर्तारौ, कर्तारौ, कर्तारः कटस्य, वदितारम्, वदितारौ, वदितारौ, वदितारः जनापवादान्; स्वसारम्, स्वसारौ, स्वसारौ, स्वसारः; नप्तारम्, नप्तारौ, नप्तारौ, नप्तारः; नेष्टारम्, नेष्टारौ, नेष्टारौ, नेष्टारः; त्वष्टारम्, त्वष्टारौ, त्वष्टारौ, त्वष्टारः; क्षत्तारम्, क्षत्तारौ, क्षत्तारौ क्षत्तारः, होतारम्, होतारौ, होतारौ, होतारः; पोतारम्, पोतारौ, पोतारौ, पोतारः, प्रशास्तारम्, प्रशास्तारौ, प्रशास्तारौ, प्रशास्तारः, अतिकर्तारम्, अतिकर्तारौ, अतिकर्तारौ, अतिकर्तारः । घुटीति किम्? कर्तृ कुलं पश्य । सौ तु परत्वात् डागुणौ—कर्ता, हे कर्तः । तृशब्दस्यार्थवतो ग्रहणेन प्रत्ययग्रहणात् नप्त्रादीनामव्युत्पन्नानां सञ्ज्ञाशब्दानां तृशब्दस्य ग्रहण न भवतीति तेषां पृथगुपादानम्, इदमेव च ज्ञापकम् 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहण भवति', इति व्युत्पत्तिपक्षे तु तृग्रहणेनैव सिद्धे नप्त्रादिग्रहण नियमार्थम्, तेनान्येषामौणादिकानां न भवति—पितरौ, भ्रातरौ, मातरौ, जामातरौ । केचित्तु प्रस्तोतृउन्नेतृउद्गातृप्रतिहर्तृप्रतिस्थातृशब्दानामौणादिकानामप्यार मन्यन्ते—प्रस्तोतारम्, प्रस्तोतारौ, प्रस्तोतारौ, प्रस्तोतारः इत्यादि ॥ ३८ ॥

## अड्डौ च ॥ १ । ४ । ३९ ॥

ऋकारस्य स्थाने ङौ घुटि च परे अर् इत्ययमादेशो भवति । पितरि, पितरम्, पितरौ २, पितरः, मातरि, मातरम्,

---

**तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो घुट्यार्** । ऋत इत्यधिक्रियते । स्वस्रादीना समाहारद्वन्द्वात् षष्ठ्यां सौत्रो निर्देश । अथवा सूत्रे साक्षादृकारो निर्दिश्यते, ततश्च तृस्वसृनप्तृनेष्टृक्षत्तृहोतृपोतृप्रशास्तॄणां य ऋकारस्तस्य समानदीर्घत्वे षष्ठ्या रत्वे रूपम् । ऋकारोपादानस्य चेद फल तृ इति प्रत्ययस्य ग्रहणमन्यथा यते—"यतिन०" उ० ८५६। इति ऋप्रत्यये तृरूपस्य समवात्तस्यापि ग्रहणप्रसङ्ग , अत आह—**तृन्तृच्प्रत्ययान्तस्येति** । अत एव तृन्तृचित्यनुबन्धनिर्देश प्रत्ययाप्रत्ययसमुदायव्युदासार्थ , न तु तृन्तृचोर्ग्रहणार्थ , तृ इति प्रत्ययमात्रस्यात्र ग्रहणादिति । अत एव वक्ष्यति—**तृशब्दस्यार्थवत** इत्यादि । 'डुकृग्' करणे, धातो करोतीति विग्रहे "णकतृचौ" ५।१।४८। इति तृचि गुणे अम्‌औजस्सु अनेनाऽऽरादेशे—**कर्तारमित्यादि** । औकारप्रत्यासत्ताभिव्यक्त्यर्थं प्रथम द्वितीयोदाहरणे, तत प्रथमोदाहरणे । तृच्प्रत्ययाभिव्यक्त्यर्थ—**कटस्येति** "कर्मणि कृत" २।२।८३। इति षष्ठी । **वदितारमित्यादि** । 'वद' व्यक्तायां वाचि, वदतीत्येवंशील इत्यर्थे "तृन् शीलधर्मसाधुषु" ५।२।२७। इति तृनि, "स्ताद्यशितोऽत्रोणादे०" ४।४।३२। इतीटि पूर्ववत् । **जनापवादानिति** । तृन्नभिव्यक्त्यर्थ, "तृन्नुदन्ता०" २।२।९०। इति षष्ठीप्रतिषेधाद्द्वितीया । सुपूर्वादसूच् क्षेपणेऽत "सोरसे" उणा० ८५३। इति ऋप्रत्यये स्वसृ(भगिनी)अतोऽम्‌औजस्सु अनेनाऽऽरादेशे—**स्वसारमित्यादि** । एवमुत्तरत्रापि । **नप्तारम्** इति । 'णम' प्रह्वत्वेऽतो "नमे प च" उणा० ८६२। इति पादेशे तृप्रत्यय । **नेष्टारम्** इति । 'णींग्' प्रापणेऽतो "निय षादि" उणा० ८६४। इति षकारादिस्तृप्रत्यय ऋत्विज्यभिधेये । **त्वष्टारमिति** । **क्षत्तारमिति** । 'त्विषी' दीप्तौ, क्षत 'क्षद' खदने, सौत्राच्च "त्वष्टृक्षत्तृदुहित्रादय" उणा० ८६५। इति तृप्रत्यये इकारस्याऽकारे एकत्र दकारस्य "अघोषेप्रथमोऽशिट" इति प्रथमत्वे भवत । **होतारम्, पोतारम्** इति । जुहोतेश्च पवते पुनातेर्वा "हुपुग्०" उणा० ८६३। इति तृप्रत्यये गुणे सिध्यत । **प्रशास्तारम्** इति । प्रपूर्वात् 'शासूक्' अनुशिष्टौ, अत "शासिशसि०" उणा० ८५७। इति तृप्रत्यय । अन्ये तु त्वष्टृक्षत्तृहोतृपोतॄन् ताच्छील्यादिषु निपातयन्ति, अत्र इडभावस्तस्मादेव निपातनात् । अतत्सबन्धिन्युदाहरति—**अतिकर्तारमित्यादि** । कर्तारमतिक्रान्त इति "प्रात्यव०" इत्यादिना तत्पुरुष , अतिक्रान्त कर्ता येनेति बहुव्रीहिर्न विधेय , "ऋन्नित्यदित" ७।३।१७१। इति कच्प्रसङ्गात् तेन च व्यवधानात् अनेन प्राप्त्यभावात् । नन्वत्र सूत्रे शौ निमित्ते किं न दर्शितम्? "स्वराच्छौ" १।४।६५। इति नागमेन व्यवधानात् न प्राप्नोतीति चेन्, नागम प्रकृतेरेवांश इति, सत्यम्, अवयवेनावयवस्य ऋलक्षणस्य व्यवधान भवतीति न दर्शितम् । **कर्तृ कुलं** इति । अत्र नपुसकस्येघुट्त्वाभावात् नार् । कर्तृशब्दात् सौ उभय प्राप्नोति, अनेनारादेश "ऋदुशनस्०" १।४।८४। इति डादेशश्च, सावकाशं च तदुभय—कर्तारौ पितेति, अत्रोभयप्राप्तौ परत्वात् डादेशे न भवति आर्, बाधितत्वात्, एवमेव संबुद्धौ सौ कर्तृशब्दस्य ह्रस्वान्तस्य सिना सह "ह्रस्वस्य गुण" इति गुण , तदाह—**सौ तु परत्वात् डागुणौ कर्ता, हे कर्त**. इति । अथ नप्त्रादय किं पृथगुपादीयन्ते? तत्र तृ इत्येव सिद्धमित्याह—**तृशब्दस्येत्यादि** । अयमर्थ – तृशब्दस्य ऋकारान्तत्वाव्यभिचारात् पुनर्ऋकार इति यद्विशेषण तदृकारान्त एव य इति स्वरूपप्रतिपत्त्यर्थ, यस्त्वधिकारापन्न स स्थानिप्रत्यासत्त्यर्थोऽन्यथाऽनेकवर्णसत्वात् सर्वस्य स्यात् । व्याकरणे च शब्दस्य रूपवदर्थोऽप्याश्रीयतेऽन्यथा च नप्त्रादिग्रहणमनर्थक स्यात्, तेनार्थवतो ग्रहणे संभवति अनर्थकस्य ग्रहण न भवति, स चार्थवान् प्रत्यय एवेति । यत्र त्वर्थो न संभवति तत्र वचनप्रामाण्यादनर्थकस्यापि ग्रहण भवति । अत एव नप्त्रादीनामव्युत्पन्नाना प्रत्ययितावयवार्थानां सञ्ज्ञाशब्दानां सम्बन्धिनस्तृशब्दस्य तृग्रहणेनानर्थकत्वाद् ग्रहण न भवतीति तेषा पृथगुपादान क्रियते । ननु नप्त्रादयोऽपि व्युत्पाद्यन्ते इति तत्कथमुच्यतेऽव्युत्पन्नानामिति? अत्रोच्यते—उणादिषु दर्शनद्वय, केचिन्मन्यन्ते 'उणादयोऽव्युत्पन्नानि नामानि इति, अपरे व्युत्पन्नानीति' । लक्ष्यसिद्ध्यर्थं चेह क्वचित्किंचिद्दर्शनमाश्रीयते । तत्र यदा व्युत्पत्तिपक्ष आश्रीयते तदा नियमार्थं नप्त्रादिग्रहणमौणादिकाना सञ्ज्ञाशब्दाना नप्त्रादीनामेव न पित्रादीनामित्याह—**व्युत्पत्तिपक्षे त्वित्यादि** । **केचित्त्विति**—भोजप्रभृतय । प्रपूर्वात् स्तौतेरुत्पूर्वान्नयतेर्गायतेश्च प्रतिपूर्वात् हरतेस्तिष्ठतेश्च "हुपूग्णीप्रस्तुप्रतिहृप्रतिप्रस्थाभ्य ऋत्विजि" उणा० ८६३ । इति तृप्रत्ययेऽनेनाऽऽरादेश मन्यन्ते, ताच्छीलिकतृन्नन्तत्वादेषामारादेशसिद्धि ॥ ३८ ॥

**अड्डौं च** । ऋत इत्यनुवर्तते । तदाह—**ऋकारस्य स्थाने** इति । अत्र निमित्तात् पर श्रूयमाणश्चकारो निमित्तान्तरसव्यपेक्ष प्रत्यासत्तेरनन्तरसूत्रोपात्तमेव निमित्तमुपस्थापयतीत्याह—**ङौ घुटि चेति** । **पितरि** इति । पितृ ङ इति स्थितेऽनेन ऋकारस्य ङौ परे अरादेश । एव **पितरमित्यादि** । **पित्रा** इत्यादि । अत्र टायामरनेन न भवति, किन्तु यत्वमिति भाव । नपुसके ऋकारान्तस्य ङौ नित्यत्वात् श्यादेशे च

---

१ प्र×सा° पु०, ख० ता० ।

मातरौ २, मातरः । ङौ चेति किम्? पित्रा, मात्रा । कर्तृणि कुले, कर्तृणि कुलानीत्यत्र तु परत्वात् पूर्वं न एव, तस्मिंस्तु सति व्यवधानात् न भवति । ऋत इत्येव? श्रि ॥ ३९ ॥

## मातुर्मातः पुत्रेऽर्हे सिनाऽऽमन्त्र्ये ॥ १ । ४ । ४० ॥

मातृशब्दस्याऽऽमन्त्र्ये पुत्रे वर्तमानस्य सामर्थ्याद् बहुव्रीहौ समासे सिना सह मात इत्यकारान्त आदेशो भवति, अर्हे—मातृद्वारेण पुत्रप्रशंसायां गम्यमानायाम् । कचोऽपवादः । गार्गी माता यस्य तस्याऽऽमन्त्रणं हे गार्गीमात !, एवं हे वात्सीमात !; अत्र पुत्रः संभावितोत्कर्षया श्लाघ्यया मात्रा तत्पुत्रव्यपदेशयोग्यतया प्रशस्यते । मातुरिति किम्? हे गार्ग्यपितृक ! । पुत्र इति किम्? हे मातः !, हे गार्गीमातृके वत्से ! । अर्हे इति किम्? अरे गार्गीमातृक ! । आमन्त्र्य इति किम्? गार्गीमातृकः । सिनेति किम्? हे गार्गीमातृकौ ॥ ४० ॥

## ह्रस्वस्य गुणः ॥ १ । ४ । ४१ ॥

आमन्त्र्येऽर्थे वर्तमानस्य ह्रस्वान्तस्य सिना सह श्रुतत्वाद् ह्रस्वस्यैव गुणो भवति, "आसन्नः" । हे पितः !, हे मातः !, हे कर्तः !, हे स्वसः !, हे मुने !, हे साधो !, हे बुद्धे !; हे धेनो ! । सिनेत्येव? हे कर्तृ कुल !, हे वारि !, हे त्रपु !; अत्र परत्वात् पूर्वं सेर्लुपि सेरभावात् न भवति; "नामिनो लुग् वा" ॥ १ । ४ । ६१ ॥ इति लुकि तु स्थानिवद्भावाद्

---

पितरि वारिणेत्यादावुभयो सावकाशत्वेन परत्वात् नागमे ऋकारान्तत्वाभावात् न भवतीत्याह—**कर्तृणि** इत्यादि । **पूर्वं न एवेति** । कर्तृणि कुले इत्यत्र "अनाम्स्वरे०" इत्यनेन, कर्तृणि कुलानीत्यत्र च "स्वराच्छौ" इत्यनेनेति शेष । ननु नागमे सति कथमर् न? व्यवधायकत्वाभावादागमस्येत्याह—**तस्मिंस्तु व्यवधानादि**त्यादि । यस्य योऽवयवस्तेन तस्य व्यवधानं न, किन्तु अवयवेनावयवस्य ऋलक्षणस्य व्यवधान भवतीति भाव । **श्रि** इति । अत्र दीर्घर्कारस्य सत्त्वेन तत्स्थानेऽर् न भवति ॥ ३९ ॥

**मातुर्मातः पुत्रेऽर्हे सिनाऽऽमन्त्र्ये** । आमन्त्र्य इत्यनेन पुत्र इति विशेष्यते, तेन च मातुरितीत्याह—**मातृशब्दस्ये**त्यादि । ननु कथ मातृशब्दस्य पुत्रार्थे वृत्तिर्न ह्यसौ पुत्रार्थे वर्तमान क्वचिद्दृष्ट, सत्यम्, केवलो न वर्तते बहुव्रीहौ तु तात्पर्याद् वर्तत इत्याह—**सामर्थ्या**दित्यादि । अयमर्थ –न ह्यन्यत्र वर्तमान शब्द साक्षादन्यमर्थं प्रतिपादयति, बहुव्रीहिसमासे त्वन्यपदार्थोपसर्जनतयाऽर्थान्तरं प्रतिपादयत्येव । **अर्हे**–प्रशसायामित्यर्थ, प्रशसा च प्रधानत्वात् पुत्रस्यैव न मातु, अर्हसभवेऽपि तदर्थत्वादित्याह-**मातृद्वारेणे**त्यादि । बहुव्रीहौ हि मातृशब्दस्य ऋकारान्तत्वाद्दृलक्षण. कच् प्राप्त, विशेषविहितत्वात्तदपवादोऽयमित्याह—**कचोऽपवाद** इति । "ऋन्नित्यदित" ७।३।१७१। इत्येतद्विहितस्येति शेष । गर्गस्यापत्य वृद्धं स्त्री "गर्गादेर्यञ्" ६।१।४२। इति यञि, "वृद्धि स्वरेष्वादे०" ७।४।१। इति वृद्धौ, "अवर्णेवर्णस्य" इत्यकारलोपे, "यञो डायन् च वा" २।४।६७। इति ङ्या, "अस्य ङ्यां लुक्" २।४।८६। इति अकारलोपे, "व्यञ्जनात्तद्धितस्य" २।४।८८। इति यलोपे—गार्गी, एव वात्सी । गार्गी माता यस्येति वात्सी माता यस्येति च विग्रहे "परत स्त्री पुवत्०" ३।२।४९। इति प्राप्तस्य पुवद्भावस्य "स्वाङ्गात् ङीर्जातिश्चा०" ३।२।५६। इति प्रतिषेधादनेन सिना सह मातादेशे—**हे गार्गीमात !, एवं हे वात्सीमात !** इति । अत्र यो गार्ग्या मात्रा व्यपदेशेन प्रशसामर्हति स ग्राह्य, तदेव स्पष्टयति—**अत्रे**त्यादि । **अत्र** मात्रा **पुत्रः** प्रशस्यते, कथभूतया **संभावितोत्कर्षया** पुनश्च **श्लाघ्यया** केन करणेन हेतुना वा **तत्पुत्रव्यपदेशयोग्यतये**ति खण्डान्वय । **अत्र**—गार्गीमात इति बहुव्रीहौ । **संभावितोत्कर्षया**–सभावित उत्कर्षो यस्या सकाशात्तयेत्यर्थ । **श्लाघ्यया**–श्लाघामर्हया । **प्रशस्यते**–लोके विश्रुतो भवति । कस्माद्धेतोरत आह—**तत्पुत्रव्यपदेशयोग्यतया**–तत्पुत्र इति व्यपदेश –कथन, तस्य योग्यस्तस्य भावस्तत्ता तया इत्यर्थ । **हे गार्ग्यपितृक** इति । गार्ग्य पिता यस्येति "ऋत्क्षण०" इति कचि भवति, अत्र मातुरामन्त्र्ये पुत्रेऽवर्तमानत्वादस्याप्रवृत्ति । **हे मातः !, हे गार्गीमातृके वत्से !** इति । अत्रैकत्र मात्रर्थे वर्तमानत्वात् अपरत्र च पुत्र्यर्थे वर्तमानत्वात् मातृशब्दस्य न माताऽऽदेश, पुत्रेऽवर्तमानत्वात् इति भाव । **अरे गार्गीमातृक !** इति । अज्ञातपितृकत्वेनानेकपितृकत्वेन चात्र निन्द्यया मात्रा तद्व्यपदेशयोग्यतया विगुण पुत्रो निन्द्यते इति **अर्हे** इति वचनात् न भवतीति । **आमन्त्र्य इति किम् ?** आमन्त्र्येति पुत्र इत्यस्य विशेषण किमर्थमिति प्रश्न । **गार्गीमातृक** इति । अत्र पुत्रेऽर्थे वर्तमानत्वेऽपि मातृशब्दस्यामन्त्र्यपुत्रार्थवृत्तित्वाभावात् न मातादेश । **हे गार्गीमातृकौ**–अत्र सेरभावात् नेद प्रवर्तते ॥ ४० ॥

**ह्रस्वस्य गुणः** । अत्र पूर्वस्मात् सिनाऽऽमन्त्र्य इत्यनुवर्तते । आमन्त्र्ये ह्रस्वस्य सिना गुण इत्यन्वय । अधिकृतस्य नाम्नो विशेषणात् विशेषणेन च तदन्तविधिसम्भवादाह—**ह्रस्वान्तस्येति** । ह्रस्वस्येत्यस्य ह्रस्वान्तस्येत्यर्थकत्वे कस्य गुणो ह्रस्वान्तस्य त्वसम्भवादिति चेत्, सत्यम्, श्रुतो ह्रस्वो ह्रस्वान्तत्वमनुमितमिति 'श्रुतानुमितयोश्च श्रौतो विधिर्बलीयान्' इति न्यायेन श्रुतत्वाद् ह्रस्वस्यैव गुणो भविष्यतीत्याह—**श्रुतत्वादिति** । **"आसन्नः"** ७।४।१२०। इति ज्ञापकादृकारस्य तत्प्रत्यासन्नोऽर्, इकारस्य एकार, उकारस्य ओकार, अकारस्य "अदेत स्यमोर्लुक्" १।४।४४। इति वचनात् सेरभावात् गुणो न भवति । अथ प्रमाणाऽऽसत्त्या इकारोकारयोरप्यरादेश कस्मात् न भवति? मात्रिकस्य हि द्विमात्रादप्यर्धमात्रिक आसन्नो भवति, न चैव सति गुणग्रहणमनर्थक स्थानाऽऽसत्त्या सोऽपि स्यात्, उच्यते–यथादर्शन व्यवस्थाऽऽश्रीयते, तत्र "गुणोऽरेदोत्" ३।३।२। इति गुणसज्ञाया "नामिनो गुणोऽक्ङिति" ४।३।१। इत्यादिभि ऋवर्णस्यैवारादेशो दृष्टो नेवर्णोवर्णयो । दृष्टकल्पनां विहाय को नामादृष्ट कल्पयति, न चैव किञ्चिद्बाध्यत इत्युदाहरति—**हे पितरि**त्यादि । पितृशब्दादामन्त्र्यसौ तेन सह ह्रस्वर्कारस्य गुणेऽरि पितरिति । एवमन्यत्रापि । अथ हे कर्तृ कुलेत्यादौ ह्रस्वत्वादामन्त्र्यसिना सह गुण कस्मात् न भवति इत्याह—**अत्र परत्वादि**त्यादि । "अनतो लुप्" १।४।५९। इति सेर्लुपि "लुप्यय्वृल्लेनत्" ७।४।११२। इति प्रत्ययलोपलक्षणस्य प्रतिषेधादित्यर्थ । लुक्पक्षे तु लुक. स्थानिवद्भावाद् भवत्येवेत्याह—**नामिन** इत्यादि । नामिन इति लुक्पक्षे गुणे हे कर्त इति, "अनतो लुप्" इति लुपि हे कर्तृ इति च भवत । एवमेव हे वारे, हे वारि, हे त्रपो, हे त्रपु इत्यादि बोध्यम् ।

भवत्येव–हे कर्तः कुल!, हे वारे!; हे त्रपो! । आमन्त्र्य इत्येव ? पिता, मुनिः, साधुः । ह्रस्वस्येति किम् ? हे श्रीः!, हे भ्रूः!, हे नदि!, हे वधु! इत्यत्र तु ह्रस्वविधानसामर्थ्यात् सेरभावात् च न भवति ॥ ४१ ॥

## एदापः ॥ १ । ४ । ४२ ॥

आमन्त्र्येऽर्थे वर्तमानस्याबन्तस्य सिना सह एकारान्तादेशो भवति । हे खट्वे!, हे बहुराजे!, हे बहुखट्वे! विष्टर । आ आप इत्याकारप्रश्लेषादिह न भवति–हे प्रियखट्व! । आप इति किम् ? हे कीलालपाः! । आमन्त्र्य इत्येव ? खट्वा ॥ ४२ ॥

## नित्यदिद्द्विस्वराऽम्बार्थस्य ह्रस्वः ॥ १ । ४ । ४३ ॥

नित्यं दित् दैदासूदासूदामूलक्षण आदेशो येभ्यस्तेषां द्विस्वराम्बार्थानां चाबन्तानामन्त्र्येऽर्थे वर्तमानानां सिना सह ह्रस्वान्तादेशो भवति । नित्यदित्–हे स्त्रि!, हे गोरि[2]!, हे शार्ङ्गरवि!, हे अस्त्रि!, हे लक्ष्मि!, हे तन्त्रि!, हे ब्रह्मबन्धु!, हे करभोरु!, हे श्वश्रु!, हे वधु!, हे कर्कन्धु!, हे अलाबु!, हे वर्षाभु!, हे पुनर्भु! हे अतिलक्ष्मि! । द्विस्वराम्बार्थ–हे अम्ब!, हे अक्क!, हे अत्त!, हे अल्ल!, हे अनम्ब!, हे परमाम्ब!, हे प्रियाम्ब! । नित्यदिदिति किम् ? हे वातप्रमीः!, हे हूहूः!, हे ग्रामणीः!, हे खलपूर्वधूटि! । नित्यग्रहणादिह न भवति–हे श्रीः!, हे ह्रीः!, हे भ्रूः! । कथं हे सुभ्रु!, हे भीरु! स्त्रीपर्यायत्वादूङि कृते भविष्यति । अम्बार्थानां द्विस्वरविशेषणं किम् ? हे अम्बाडे!, हे अम्बाले!, हे अम्बिके! । आप इत्येव ? हे मातः! ॥ ४३ ॥

---

ननु हे नदि इत्यादौ ह्रस्वत्वसत्वात् गुणोऽनेन कथं न भवतीत्याह—**ह्रस्वविधानसामर्थ्यादिति** । 'उभयो स्थाने य' इति न्यायेन यदा सिव्यपदेशस्तदा सिर्ह्रस्वश्चास्ति अतो–**विधानसामर्थ्यात्** इति । यद्यत्र पूर्वोक्तरीत्या "ह्रस्वस्य गुण" एवेष्टस्तर्हि "ह्रस्वस्य गुण" इत्यत्रैव "नित्यदिद्०" इति ग्रहणं कुर्यात्, ह्रस्वविधानादपि गुणस्य भावादिति । यदा तु ह्रस्वव्यपदेशस्तदा सेरभावात् न भवतीत्याह—**सेरभावादिति** ॥४१॥

**एदापः** । सिनाऽऽमन्त्र्ये इत्यनुवर्तते । आमन्त्र्ये आप सिना एत् इत्यन्वयस्तदाह—**आमन्त्र्येऽर्थे वर्तमानस्ये**त्यादि । **हे खट्वे** इति । खट्वाशब्दादामन्त्र्यसिना सहैकारान्तादेशो भवति । **हे बहुराजे** इति । बहवो राजानो यस्यामिति विग्रह, "ताभ्यां वाप् डित्" २।४।१५। इति डिदापि तस्मादाबन्तादामन्त्र्यसिना सहानेन एकारान्तादेश । **हे बहुखट्वे विष्टर** इति । एवमीषदूना खट्वा इति विग्रहे खट्वाशब्दाद् "नाम्नः प्राग्बहुर्वा" इति बहौ अनेन एत्वम् । अथ प्रिया खट्वा यस्येति विग्रहे "गोश्चान्त०" इति ह्रस्वत्वे 'एकदेशविकृतस्यानन्यत्वात्' आप सद्भावात् आमन्त्र्यसिना एत्वं कस्मात् न भवति ? उच्यते–सूत्रे आ आप इत्याकारप्रश्लेषादाकाराभावादेत्त्वाभावोऽत आह—**आ आप इतीति** । **हे कीलालपा** इति । धात्ववयवाकारस्याप्त्वाभावात् नेदं प्रवर्तते । **खट्वा** इति । प्रथमाया सिस्तस्य "दीर्घङ्याब्०" इति लोप ॥ ४२ ॥

**नित्यदिद्द्विस्वराम्बार्थस्य ह्रस्वः** । आप इति सिनाऽऽमन्त्र्ये इति चानुवर्तते । अनुवृत्तमाप इति द्विस्वराम्बार्थस्येत्यनेनान्वेति न नित्यदिदित्यनेन, असम्भवात्, तदाह—**नित्यं दित् दैदास्** इत्यादि । "स्त्रीदूत" इति येषां नित्य दायाद्यादेशा भवन्ति तेषामामन्त्र्यवृत्तीनां सिना सह ह्रस्वान्तादेश इति फलितार्थं । आबन्तानामामन्त्र्येऽर्थे वर्तमानाना च द्वौ स्वरौ येषान्ते अम्बार्थवाचिनस्तेषां सिना सह ह्रस्वान्तादेश इत्याह—**द्विस्वराम्बार्थानामि**त्यादि । **हे स्त्रि** इति । "स्त्री" उ० ४५०। इति त्रट टित्वात् ङ्या तत सिना सह ह्रस्व । **हे गौरि** इति । "गौरादिभ्यो मुख्याद् ङी" २।४।१९। इति ङ्या ह्रस्व । **हे शार्ङ्गरवि** इति । 'शॄ' शृणाति श्रृङ्गरुर्ऋषिस्तस्यापत्य शार्ङ्गरवी, यद्वा शृणोतीति "शिग्रुगेरुनमेर्वादय" इति निपातनाद् रौ अन्तस्य चाङ्गादेशे शार्ङ्गरु, यदा तु अनेनैव शार्ङ्गरुरिति निपात्यते तदाऽणि ङ्यां च शार्ङ्गरवी । अथवा–शार्ङ्गवत् रवो यस्या इति गौरादित्वात् ङ्यां शार्ङ्गरवी, तत आमन्त्र्यवृत्तेस्तस्य सिना सह ह्रस्व । शेषास्तु व्युत्पादिता व्युत्पादयिष्यन्ते च । **हे कर्कन्धु** इति । कर्कन्धूर्बदरीकोलीत्यमर, तत आमन्त्र्यवृत्ते सिना सह ह्रस्व, कण्टक दधातीत्यर्थं । **हे अलाबु** इति । न लम्बतेऽलाबू काकाऽत्र नञ्, नञ्पूर्वाल्लम्बते "नञो लम्बेर्नलुक् च" उणा० ८३८। इत्यूर्णित्, तुम्ब्यलाबू इति हैम, स्त्रीक्लीबलिङ्गोऽयम्, तत सिना सह ह्रस्वत्वम् । **हे अम्ब** इत्यादि । माताऽम्बा इति हैम, अमति वात्सल्य गच्छति अम्बा, 'अम' गतावत "शम्यमेर्णिद्वा" उ० ३१८। इति वे आपि च भवति । 'अक्क' कुटिलायां गतौ, इत्यस्य "निष्कतुरुष्को०" उणा० २६। इत्यादिनिपातनात् कप्रत्यये अक्का । अततेः "पुतपित्त०" उणा० २०४। इति निपातनादत्तेति । 'अली' भूषणादावत "भिल्लाच्छ०" उणा० ४६४। इति ले अल्ला इति, ततोऽनेन सिना सह ह्रस्वत्वम् । तदन्ते समुदाहरति—**हे अनम्ब** इत्यादि । **हे वातप्रमीः** इति । वात प्रमिमीते "वातात् प्रम कित्" इति ईप्रत्यये नित्यदित्त्वाभावात् ह्रस्वो न भवति । **हे हूहूः** इति । जहाते पृषोदरादित्वादूप्रत्यये द्विर्वचनादौ नित्यदित्वाभावाद् ह्रस्वत्वाभाव । एवं **हे ग्रामणीः** इत्यादि । दिति नित्यमिति विशेषणस्य प्रयोजनमाह–**नित्येत्यादि** । **हे श्रीरित्यादौ** "वेयुवोऽस्त्रिया" इति दिता विकल्पितत्वादित्यर्थ । नन्वेव नित्यग्रहणात् कथं **हे सुभ्रु, हे भीरु** इति आशङ्कते—**कथमिति** । समाधत्ते–**स्त्रीपर्यायत्वादि**त्यादि । "शिग्रुगेरुनमेर्वादय" उणा० ८११। इति "केवयुभुरण्वध्वर्यु०" उणा० ७४६। इति वा निपातनात् भ्राम्यतेर्भ्रु, शोभन भ्रु भ्रमण यस्या –"उतोऽप्राणिन०" २।४।७३। इत्यूङ्प्रत्यये समानदीर्घत्वेऽनेन ह्रस्वत्वे च हे **सुभ्रु!** । एवं बिभेते "भियो रुरुकलुकम्" ५।२।७६। इति किति रुप्रत्यये, शेष पूर्ववत् । **अम्बार्थानां द्विस्वरविशेषणं किम्?** इति । तद्विशेषण विहाय अम्बार्थवाचिनां ह्रस्व इत्युक्ते को दोष इत्यभिप्राय प्रश्नकर्त्तु । **हे अम्बाडे** इति । अम्बामडतीति डिहादित्वादच्, अत्राम्बार्थस्याम्बाडाशब्दस्य द्विस्वरत्वाभावेन न ह्रस्व । एवमुत्तरत्र । **हे अम्बाले** इति । अम्बां लातीति "आतो डोऽह्वावाम" ५।१।७६। इति डप्रत्यय । **हे अम्बिके** इति । अम्बे "णकतृचौ" ५।१।४८। इति णकप्रत्यये, "आत्" इत्यापि, "अस्यायत्तत्क्षिपकादीनाम्" २।४।१११। इतीकार । **मातः** इति । अस्य द्विस्वराम्बार्थत्वेऽपि आबन्तत्वाभावात् नेदं प्रवर्तते ॥ ४३ ॥

---

१ ह्रस्वोऽन्तो° पु० । २ गौरि पुं० ।

## अदेतः स्यमोर्लुक् ॥ १ । ४ । ४४ ॥

अकारान्तादेकारान्तात् चाऽऽमन्त्र्येऽर्थे वर्तमानात् परस्य सेस्तदादेशस्याऽऽमश्च लुग् भवति । (सि-)हे श्रमण !, हे संयत !; अम्-हे वन !, हे धन !, हे उपकुम्भ !, हे अतिहे !, परमश्चासाविश्च हे परमे !; हे से ! । अदेत इति किम् ? हे गौः !, हे नौः !; हे परमौः ! । स्यादेशत्वेनैवाऽमोऽपि लुचि सिद्धायां पृथग्वचनमन्यस्याऽऽदेशस्य लुगभावार्थम्, तेन-हे कतरद् ! इत्यादौ लुग् न भवति ॥ ४४ ॥

## दीर्घङ्याब्व्यञ्जनात् सेः ॥ १ । ४ । ४५ ॥

दीर्घाभ्यां ङ्याब्भ्यां व्यञ्जनात् च परस्य सेर्लुग् भवति । ङी-गौरी, कुमारी, बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी चैत्रः, एवं बहुप्रेयसी; खरकुटीव खरकुटी ब्राह्मणः, कुमारीवाचरति क्विप्, लुक्, क्विप्-कुमारी ब्राह्मणः । आप्-खट्वा, बहुराजा । व्यञ्जन-राजा, तक्षा, हे राजन् ! । एभ्य इति किम् ? वृक्षः । ङ्याब्ग्रहणं किम् ? लक्ष्मीः, तन्त्रीः, ग्रामणीः; कीलालपाः । दीर्घग्रहण किम् ? निष्कौशाम्बिः, अतिखट्वः । नपुसकेषु परत्वात् "अनतो लुप्" ॥ १ । ४ । ५९ ॥ इति लुबेव, तेन-यत्कुलं तत्कुलमिति सिद्धम्, "पदस्य" ॥ २ । १ । ८९ ॥ इति सिद्धे व्यञ्जनग्रहण राजेत्यादौ सिलोपार्थम्,

---

अदेतः स्यमोर्लुक् । आमन्त्र्ये इत्यनुवर्त्तते, तच्चादेत इत्यनेन विशेषणतयान्वेति, अदेत इति नामविशेषणतया तदन्तबोधक, तदाह—**अकारान्तादेकारान्ताच्चे**त्यादि । आमन्त्र्येऽमोऽसम्भवात् तत्र च स्यादेश एवाम् सम्भवतीत्याह—**तदादेशस्यामश्चे**ति । **हे श्रमण !** इति । आमन्त्र्यवृत्तेरकारान्तात् श्रमणशब्दात् सेर्लुक् । एव हे **संयत !** इत्यपि । **हे वन !** इति । वनशब्दात् "अत स्यमोऽम्" १।४।५७। इति स्यादेशस्यामोऽनेन लुक् । **हे उपकुम्भ !** इति । कुम्भस्य समीपमिति आमन्त्र्यवृत्तेस्तत स्यादेशस्यामो लुक् । **हे अतिहे !** इति । हिमतिक्रान्त कुल, तदामन्त्र्ये "ह्रस्वस्य गुण " इति गुणे एकारान्तात् सेरनेन लुक् । **हे परमे !** इति । अत्र परमश्चासाविश्चेति "सन्महत्०" ३।१।१०७। इति विशेषणसमास । परम इ इति स्थिते अन्तरङ्गत्वाद्विभक्त्युत्पत्ते पूर्वमेव "अवर्णस्ये०" इत्येत्त्वम्, तत एकारान्तादनेन सेर्लुक् । एव **हे से !** इति । सह इना वर्तते इति "सहस्तेन" ३।१।२४। इति बहुव्रीहौ, "सहस्य०" ३।२।१४३। इति सभाव । नन्वमो लुग्वचन किमर्थम् ? स्यादेशत्वात् सिग्रहणेनैव ग्रहणाल्लुग् भविष्यतीत्याह—**स्यादेशत्वेने**त्यादि । अय भाव —"अदेत स्यमोर्लुक्" इति सूत्रे केवल सेर्लुगित्युक्त्याऽमस्तदादेशत्वात् लुक सिद्धावपि पुनस्तत्राऽम इति **पृथग्वचनम् अन्यस्य आदेशस्य**-अमतिरिक्तस्य स्यादेशस्य लुगभावार्थमिति । एतेन पूर्वं वैयर्थ्यमुपपाद्य वाक्यान्तरकल्पना, स्वांशे चारितार्थ्यं स्पष्टमेव । ज्ञापनफलमाह—**तेन हे कतरदि**त्यादि । अत्र "पञ्चतोऽन्यादे० १।४।५८। इति स्यादेशस्यानेन लुग् न भवति ॥ ४४ ॥

**दीर्घङ्याब्व्यञ्जनात् सेः** । अत्र लुगित्यनुवर्त्तते । दीर्घेति विशेषणं ङ्यापोर्न व्यञ्जनस्यासम्भवात्, तदाह—**दीर्घाभ्यामि**त्यादि । **गौरी** इति । गौरादित्वात् ङ्या तत सेर्लुक् । **कुमारी** इति । "वयस्यनन्त्ये" २।४।२१। इति ङ्यां तत परस्य सेर्लुक् । **एवं बहु प्रेयसी** इति । प्रियशब्दस्य "गुणाङ्गात्०" ७।३।९। इतीयसि, "प्रियस्थिर०" ७।४।३८। इति प्रादेशे, "अधातूदृदित " २।४।२। इति ङ्यां प्रेयसी, शेष पूर्ववत् । **खरकुटी ब्राह्मण** इति । कुटिशब्दात् "इतोक्त्यर्थात्" २।४।३२। इति ङ्या पश्चात्समास खरशब्देन, शेष पूर्ववत् । एव **कुमारी ब्राह्मण** इति । प्रक्रियास्य पूर्वं दर्शिता । **खट्वा** इति । खट्वाशब्दात् सौ तस्य चाप परस्यानेन लुक् । एवमेव बहवो राजानो यस्यामिति—**बहुराजा** । **राजा** इति । राजन्शब्दात् सौ "नि दीर्घ " १।४।८५। इति दीर्घे, व्यञ्जनात् परस्य च सेरनेन लुकि "नाम्नो०" २।१।९१। इति नलोप । एवमेव **तक्षा** इत्यपि । **हे राजन्** इति । तत एवामन्त्र्यसौ शेषघुटत्वाभावाद्दीर्घाभावेऽनेन सेर्लुकि "नाऽऽमन्त्र्ये" २।१।९२। इति प्रतिषेधात् "नाम्नो नो०" इति नलोपो न भवति । **एभ्य इति किम् ?** इति । ङ्याब्व्यञ्जनेभ्य परस्य सेर्लुक् इति कथ ? सामान्यत एव सेरित्युच्यताम् लुगनुवृत्त्या सेर्लुग् भविष्यतीति प्रश्नार्थं । **वृक्षः** इति । सेर्लुगित्युच्यमानेऽत्रापि लुक् स्यादिति दीर्घङ्याब्व्यञ्जनादिति । ननु व्यञ्जनादित्युक्त्या वृक्ष इत्यादावदोषे ङ्याब्ग्रहण किमर्थमित्याशयेन पृच्छति—**ङ्याब्ग्रहणं किमि**ति । सूत्रे ङ्याब्ग्रहणाभावे दीर्घात् व्यञ्जनात् च परस्य सेर्लुगिति सूत्रार्थे लक्ष्म्यादिशब्देभ्य सेर्दीर्घात् परत्वेन लुक् स्यादतो ङ्याब्ग्रहणमिति, तदाह—**लक्ष्मीरि**त्यादि । एषु से पदान्तसस्य रुत्वविसर्गौ । ननु ङ्यापोर्दीर्घयोरेव सत्त्वेन तयोर्दीर्घत्वविशेषण नेतरव्यावर्त्तकमित्याशयेन पृच्छति—**दीर्घग्रहण किमिति** । **निष्कौशाम्बिः, अतिखट्वः** इति । प्रादिसमासे "गोश्चान्ते०" इति ह्रस्व । अनयो 'एकदेशविकृतमनन्यवद्' इति ङ्याप्त्वेऽपि तयोर्ह्रस्वत्वेन दीर्घत्वाभावात्तत परस्य न सेर्लुक् । ननु यत्कुलमित्यादौ अन्यत्रान्यत्रलब्धावकाशयो "दीर्घङ्याब्०" इति "अनतो लुप्" इति चानयोर्युगपत्प्राप्तौ व्यवस्थामाह—**नपुंसकेषु परत्वा**दित्यादि । अथ "पदस्य" इति सयोगान्तलोपेन सेर्लोपस्य सिद्धत्वात् व्यञ्जनग्रहणमतिरिच्यते ? न च राजा तक्षेत्यत्र नलोपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वेन नान्तत्वाभावे "नाम्नो नो०" इति प्राप्त्यभाव इति वाच्यम्, "नाऽऽमन्त्र्ये" इति प्रतिषेधात्तस्य सिद्धत्वज्ञापनाद्, अन्यथा निषेधस्य पूर्वोक्तरीत्या नलोपाप्राप्त्याऽप्राप्तिपूर्वकत्वादसगतत्वापत्ते । नन्वेव ज्ञापिते सति पचन् यजन्नित्यत्रापि नलोपप्रसङ्ग , ज्ञापनात् पूर्वं तु सयोगान्तलोपस्यासिद्धत्वात् नलोपाभावस्तान्तत्वात् इति चेदुच्यते-तुल्यजातीयस्य नियम , कश्च तुल्यजातीयो य सावनन्तर , पचन्नित्यत्र तु नकारस्तकारेण व्यवहित इति दोषाभावात् । ननु चात्र तकारलोप एव न प्राप्नोति सिलोपस्यासिद्धत्वात्, नैष दोष , पूर्वस्य परेऽसिद्धत्वमुच्यते । ततश्च सयोगान्तलोपे सयोगान्तलोपस्य सिद्धत्वाद् भवत्येव तलोप । तस्य त्वसिद्धत्वात् नलोपाभाव । ननु तथापि "नाम सिदय्व्यञ्जने" इति सावपि पदत्वात् राजेति नलोप सिध्यति, कृते तु नलोपे संयोगान्तत्वाभावात् पदस्येति सेर्लोपो न सिध्यति । तथा उखास्रत् पर्णध्वदित्यादौ दत्व वक्तव्य, तथाहि—वसास्रस् स् इति स्थिते सयोगान्तलोपमपवादत्वाद् बाधित्वा संयोगादिलोप प्राप्नोति, पूर्वो ह्यपवादो वचनप्रामाण्यादुत्सर्गे कर्तव्ये नाऽसिद्धो भवति, षाष्ठतक्षितिवत् । कृते च सयोगादिलोपे सयोगाभावात् सयोगान्तलोपाभाव । ततो विभक्तिसकार संस्तेरवयवो न भवतीति दत्वासिद्धिरित्याह—**"पदस्य" इति सिद्धे व्यञ्जनग्रहणं सिलोपार्थ**मिति । सयोगान्तलोपासत्त्वेन पूर्वं सौ "नाम सिद०" इति पदत्वेन नान्तत्वात् नलोपे व्यञ्जनग्रहणेनानेन सिलोपो भवति । "पदस्य" इति तु न प्रवर्तते, सांप्रत से सस्य संयोगान्तत्वाभावात् । व्यञ्जनग्रहणाभावे परे नलोपेऽस-

अन्यथा सावपि पदत्वात् "पदस्य" इति च परेऽसत्त्वात् पूर्वं नलोपे सेर्लुप्, उखास्रदित्यादौ संयोगस्यादौ स्कोर्लुकि दत्वं च न स्यात् ॥ ४५ ॥

## समानादमोऽतः ॥ १ । ४ । ४६ ॥

समानात् परस्यामोऽकारस्य लुग्भवति । वृक्षम्, खट्वाम्, मुनिम्, साधुम्, बुद्धिम्, धेनुम्, नदीम्; वधूम् । पितरमित्यादिषु विशेषविधानात् प्रथममेवार् । समानादिति किम्? रायम्, नावम् । अम इति किम्? नद्यः । स्यादेरिति[1] किम्? अचिनवम् ॥ ४६ ॥

## दीर्घो नाम्यतिसृचतसृषृः ॥ १ । ४ । ४७ ॥

तिसृचतसृषकाररेफान्तवर्जितशब्दसंबन्धिनः पूर्वस्य समानस्यामादेशे नामि परे दीर्घो भवति । श्रमणानाम्, मुनीनाम्, साधूनाम्, बुद्धीनाम्, धेनूनाम्, वारीणाम्, त्रपूणाम्, पितॄणाम्, मातॄणाम्; कर्तॄणाम् । अतिसृचतसृष्र इति किम्? तिसृणाम्, चतसृणाम्, षण्णाम्, चतुर्णाम् । अष्र इति प्रतिषेधेन नकारेण व्यवहितेऽपि नामि दीर्घो ज्ञाप्यते—पञ्चानाम्, सप्तानाम् । नामीति किम्? चर्मणाम् । स्यादावित्येव? दधिनाम, चर्मनाम; अनर्थकत्वाद् वा ॥ ४७ ॥

## नुर्वा ॥ १ । ४ । ४८ ॥

नृशब्दसबन्धिनः समानस्य नामि परे दीर्घो वा भवति । नृणाम्, नृणाम्, अतिनृणाम्, अतिनृणाम् ॥ ४८ ॥

---

स्वात् पूर्वं सयोगान्तलोपाभाव, कृते तु सयोगाभावादप्राप्तिरित्याह—**अन्यथा** इत्यादि । अन्यथा-व्यञ्जनग्रहणाभावे । **सावपि पदत्वादिति** । "नाम सिद०" इत्यनेन से सस्य व्यपदेशिवद्भावेन व्यञ्जनादिप्रत्ययत्वात् पूर्वस्य नाम्न पदत्वमिति भाव । **"पदस्य" इति च परेऽसत्त्वादिति** । "रात्स " इति यावदसत्पर इत्यधिकृत्य तन्मध्यपतिते "पदस्य" इत्यत्रासत्परे इत्यधिकारे "नाम्नो नो०" इति परे पूर्वस्य "पदस्य" इत्यस्यासत्त्वमिति भाव । **पूर्वं**—असत सयोगान्तलोपात् पूर्वमिति भाव । **सेर्लुप्** इति । **न स्यादि**त्यग्रिमेणान्वेति । **दत्वं चेति** । सौ परे लुक पूर्वं दत्व प्राप्नोतीति न वाच्यम्, परे लुकि "संस्ध्वस्०" २।१।६८। इति सूत्रस्यासिद्धत्वात् ॥ ४५ ॥

**समानादमोऽत** । अत्र लुगित्यनुवर्तते । समानादमोऽतो लुगित्यन्वय । समानात् इति दिग्योगलक्षणा पञ्चमी । अम इति अवयवावयविभावे षष्ठी, तच्च अत इत्यस्य विशेषणमित्याह—**समानात् परस्यामोऽकारस्ये**त्यादि । यथाक्रममुदाहरति—**वृक्षमि**त्यादि । वृक्षशब्दाद् द्वितीयैकवचनेऽमि अनेन तदवयवाकारस्य समानात् परस्य लुक् । एवमन्यदपि । अथ ऋकारस्य समानत्वात्तत परस्यामोऽकारस्य लोप कस्मात् न भवतीत्याह—**पितरमित्यादावि**ति । **विशेषविधानात् प्रथममेवार्** इति । अपवादत्वात् "अर्डौ च" १।४।३९। इत्यनेनेति शेष । **रायम्** इति । अत्राम समानात् परत्वात् न लुक् । एवमन्यत्र । **नद्यः** इति । समानात् परत्वेऽप्यत्रामोऽभावादसोऽकारस्य न लुक् । चिनोतेर्ह्यस्तन्या अम्वि "स्वादे श्नु" ३।४।७५। इति श्नुप्रत्यये "उश्नो:" ४।३।२। इति गुणेऽवादेशे, अडागमे, स्याधिकारादमोऽकारलोपाभावे—**अचिनवमि**ति । न च वाच्य परत्वात् नित्यत्वात् च गुणेन भाव्यमिति, प्राप्तौ सत्यां परत्व नित्यत्वं च चिन्त्यते इति ॥ ४६ ॥

**दीर्घो नाम्यतिसृचतसृषृः** । समानादित्यनुवर्तते, तच्च 'अर्थवशाद्विभक्तिपरिणाम' इति न्यायेन समानस्येति विपरिणम्यते, तत्र अतिसृचतसृष्र इति विशेषणतया सबध्यते, तदाह—**तिसृचतसृषकारे**त्यादि । अत्र स्याधिकारादामादेश एव नाम् गृह्यते इत्याह—**आमादेशे नामीति** । **श्रमणानामि**त्यादि । श्रमणशब्दात् षष्ठीबहुवचने आम्प्रत्यये तस्य "ह्रस्वापश्च" इति नामादेशे तत्पूर्वस्य समानाकारस्यानेन दीर्घ । एवमन्यदपि । **तिसृणाम्, चतसृणाम्** इति । त्रिचतुरोरामि परत्वात् "त्रिचतुर०" इति तिसृचतस्रादेशे "ह्रस्वापश्च" इति नामादेश । **षण्णाम्, चतुर्णाम्** इति । "संख्याना र्ष्णाम्" इत्यामो नामादेश । ननु नात्र समानस्य नाम्युच्यमानो दीर्घ प्राप्नोति, षकाररेफाभ्यां तस्य व्यवधानात्, तयोश्चासमानत्वात् सप्तम्या निर्दिष्टे च उपश्लिष्टस्यैव कार्यभावात्, सत्यम्, अयमेव प्रतिषेधो ज्ञापयति यदुत व्यवहितेऽपि नामि दीर्घो भवतीत्याह—अत्र इत्यादि । **नकारेण** इति । अन्यव्यञ्जनेन तु असंभव इति नकारेणेत्युक्ति । पूर्वमप्रेति प्रतिषेधो व्यर्थ सन् पूर्वोक्त वाक्यान्तरं कल्पयति । तथा चेदानीमष्र इति न स्यात्तदा षण्णामित्यादौ प्राप्तो दीर्घस्तन्निवृत्तये अष्र इति प्रतिषेधः स्यांशे चरितार्थस्तत्प्रयोजनजिज्ञासायामाह—**पञ्चानाम्, सप्तानाम्** इति । अत्रानेन नकारव्यवहितेऽपि दीर्घ सिद्ध । **चर्मणाम्** इति । अत्रामि परेऽनेन न नकारव्यवहितेऽपि दीर्घ । **दधिनामे**त्यादौ स्याधिकारात् नामन् इत्येकदेशस्यानर्थकत्वाद् वा दीर्घो न भवतीत्याह—**स्यादावित्येवे**त्यादि । यद्येवमिह तर्हि प्राप्नोति—दण्डस्य नामो दण्डनाम इति, अत्र हि 'नम्'धातोर्घञि नाम इति भवति, तदेकदेशो नाम् इत्यर्थवानिति चेदुच्यते—तत्रापि समुदाय एवार्थवान् अवयवाना तु काल्पनिकमर्थवत्त्व, अन्वयव्यतिरेकाभ्यां कल्पितत्वात्, अय तु नाम इति, आमादेश एव प्रतिपदोक इति न भवति ॥ ४७ ॥

**नुर्वा** । अत्र दीर्घो नामीत्यनुवर्तते, समानादिति चानुवृत्त षष्ठ्यन्ततया विपरिणम्यते, तत्र नुरित्यस्यान्वय, नु समानस्य नामि दीर्घो वा इत्यन्वयस्तदर्थमाह—**नृशब्दसंबन्धिन** इत्यादि । **नृणाम्** इति । नृशब्दादामि "ह्रस्वापश्च" इति नामादेशेऽनेन पाक्षिको दीर्घ, पक्षे—**नृणामि**त्यपि । नन्वत्र वाग्रहणमन्तरेणापि नित्य दीर्घविधि पूर्वेणैव सिद्धत्वात् पृथग्वचनाद् विकल्पोऽवसीयते, अतिसृचतसृष्र इत्यत्र ऋकाराकरणात् प्रतिषेधाशंकाऽपि न विधेया, तिसृचतसृप्रतिषेधादृकारान्तस्य नृशब्दस्यैवेति नियमोऽपि नाशङ्कनीय इति, किम स्यात्? युक्त चैवमय विधिर्नित्य इति द्विर्वचनात् 'द्विर्बद्ध सुबद्ध भवति' अतो वाग्रहणादय विधिर्विकल्पित पूर्वो नित्य इति विज्ञायते ॥ ४८ ॥

---

१ स्यादेरित्येव पु० ।

## शसोऽता सश्च नः पुंसि ॥ १ । ४ । ४९ ॥

शसः संबन्धिनोऽकारेण सह समानस्य प्रधानस्थान्यासन्नो दीर्घो भवति, तत्संनियोगे च पुंलिङ्गविषये शसः सकारस्य नकारो भवति । श्रमणान्, मुनीन्, साधून्, वातप्रमीन्, हूहून्; पितॄन् । पुंलिङ्गाभावे तु दीर्घत्वमेव–शालाः, बुद्धीः, नदीः, धेनूः, वधूः; मातॄः । चञ्चाः, खरकुटीः, यष्टीः पुरुषान् पश्य–इत्यत्र चञ्चादयः शब्दाः पुरुषे वर्तमाना अपि स्त्रीलिङ्गत्वं नोज्झन्तीति नकारो न भवति । यदा तु शब्दस्य पुलिङ्गत्व तदा वस्तुनः स्त्रीत्वे नपुंसकत्वे वा नकारो भवत्येव–दारान्, भ्रुकुंसान् स्त्रीः पश्य, षण्ढान् पण्डकान् पश्य । दीर्घसंनियोगविज्ञानादिह नो न भवति–एतान् गाः पश्य । समानस्येत्येव ? रायः, नावः पश्य । वनानि पश्य–इत्यत्र परत्वात् शिरेव ॥ ४९ ॥

## संख्यासायवेरह्नस्याहन् ङौ वा ॥ १ । ४ । ५० ॥

संख्यावाचिभ्यः सायशब्दाद् विशब्दात् च परस्याह्नशब्दस्य ङौ परेऽहन् इत्ययमादेशो वा भवति । द्वयोरह्नोर्भव इति विगृह्य "भवे" ॥ ६ । ३ । १२३ ॥ इत्यण्विषये, "सर्वांश०" ॥ ७ । ३ । ११८ ॥ इत्यादिनाऽट् अह्नादेशश्च, ततो "द्विगोरनपत्ये०" ॥ ६ । १ । २४ ॥ इत्यादिनाऽणो लुपि द्व्यह्नस्तस्मिन् द्व्यह्नि, द्व्यहनि, द्व्यह्ने; एवं त्र्यह्नि, त्र्यहनि, त्र्यह्ने; यावदह्नि, यावदहनि, यावदह्ने, तावदह्नि, तावदहनि, तावदह्ने; सायमह्नः सायाह्नस्तस्मिन् सायाह्नि, सायाहनि, सायाह्ने; अत एव सूत्रनिर्देशात् सायंशब्दस्य मकारलोपः, सायेत्यकारान्तो वा; विगतमहो व्यह्नस्तस्मिन् व्यह्नि, व्यहनि; व्यह्ने । संख्यासायवेरिति किम् ? मध्याह्नि । अह्नस्येति किम् ? द्वयोरह्नोः समाहारो द्व्यहस्तस्मिन् द्व्यहे । ङाविति किम् ? द्व्यह्नः ॥ ५० ॥

## निय आम् ॥ १ । ४ । ५१ ॥

नियः परस्य ङेः स्थाने आम् इत्ययमादेशो भवति । नियाम्, ग्रामण्याम् ॥ ५१ ॥

---

**शसोऽता सश्च नः पुंसि ।** समानस्येति दीर्घ इति चानुवर्त्तते, शसोऽता समानस्य दीर्घ च पुंसि न इत्यन्वयस्तदाह—**शसः संबन्धिन** इत्यादि । अत्र यद्यपि समानस्य शसोऽकारस्य च स्थानित्वम् तथापि 'प्रधानानुयायिनो व्यवहारा भवन्ति' इति प्रधानस्थान्यासन्न एव दीर्घो भवति । प्रधानत्व च षष्ठीनिर्दिष्टस्य समानस्यैवेत्याह—**समानस्य प्रधानस्थान्यासन्नो दीर्घ** इति । **चकाराद्** भिन्नार्थं वाक्यद्वयमित्याह—**तत्संनियोगे चे**त्यादि । **श्रमणान्** इति । श्रमणशब्दाच्छस सबन्धिनोऽकारेण सह तत्पूर्वस्य समानस्याकारस्य दीर्घे तत्सनियोगशिष्टस्यैव सकारस्य पुस्त्वे नकार । एवमन्यदपि । ननु पुस्त्वविषयाभावे शस किं भवतीत्याह—**पुंलिङ्गाभावे दीर्घत्वमेव** इति । दीर्घसनियोगशिष्टत्व नकारस्य, न नकारसनियोगशिष्टत्व दीर्घस्य इति, यत्र दीर्घो न भवति तत्र नकारोऽपि न भवति, नत्वाभावे दीर्घस्तु भवत्येवेति भाव । तदुदाहरति—**शाला इत्यादि** । पुस्त्व त्वत्र वैयाकरणप्रसिद्ध लिङ्ग यत्रायमिति प्रत्ययोऽनुवर्त्तते नेदमियमिति वा, न तु लौकिक प्रजननाद्यभिव्यक्त प्राणिधर्म । तत्र हि भ्रकुसान् पश्य इति स्त्रियोऽपि हि यदा पुरुषवेषधारिण्यो भ्रकुसा उच्यन्ते तदा स्त्रीवृत्तिरय न पुंवृत्ति । तथा षण्ढान् पश्य, पण्डकान् पश्येति नपुसकेऽपि न सिध्यति । तथा चञ्चेव चञ्चा पुरुषान् पश्येत्यत्रापि पुरुषवृत्तित्वात् प्राप्नोति । नन्वस्तु वैयाकरणप्रसिद्धस्य पुस्त्वस्य ग्रहण, तथापि **चञ्चाः, खरकुटीः, यष्टीः पुरुषान् पश्ये**त्यादौ प्राप्नोति, अत्र हि चञ्चादय शब्दा सादृश्यात् पुरुषेषु वर्तमानास्तत्पुस्त्वमुपाददते तेन पुलिङ्गविषये शसित्याह—**अत्रे**त्यादि । अयमर्थ –अभेदोपचारेण हि शब्दोऽर्थान्तरे वर्तमान शब्दशक्तिस्वाभाव्यात् स्वलिङ्गमपरित्यजन्नेव वर्तत इति । **यदा त्विति** । लौकिकस्य पुस्त्वस्याग्रहणादयमिति प्रत्ययस्य तत्रानुवृत्तिरिति शेष । **एतान् गाः पश्येति** । दीर्घसनियोगेन नकारस्य विधीयमानत्वात् 'सनियोगशिष्टानामेकापायेऽन्यतरस्याप्यपाय ' इति न्यायाद् दीर्घत्वाभावे नकारस्याप्यभाव इत्यर्थ । शाला पश्य हन्वीत्यादौ उभयोर्दीर्घत्वश्यादेशयो सावकाशत्वाद्, वनानीत्यादावुभयप्राप्तौ **परत्वात् शिरेवे**त्याह—**वनानी**त्यादि ॥४९॥

**संख्यासायवेरह्नस्याहन् ङौ वा ।** संख्या च सायश्च विश्च इति समाहारद्वन्द्वात् पञ्चमी—**संख्यासायवेरि**ति । अह्नस्येति । द्व्यह्न इत्यादाववस्थितस्याह्न इत्येकदेशानुकरणात् षष्ठी । संख्यासायवे अह्नस्य ङौ अहन् वा इत्यन्वयस्तदाह—**संख्यावाचिभ्य** इत्यादि । **द्वयोरह्नोर्भव** इति । समासप्रत्ययविधौ तदन्तविधेरनिष्टत्वात् "वर्षाकालेभ्य " ६।३।८०। इतीकणोऽसम्भवात् भाविन्यणि, "सख्या समाहारे०" ३।१।९९। इति द्विगुसमासे, "सर्वांशसंख्याऽव्ययात्" ७।३।११८। इत्यटि अह्नादेशे, "भवे" इत्यणि, "द्विगो०" इति तल्लुपि च भावनेन अहन्नित्यादेशे "ईङौ वा" २।१।१०९। इति विकल्पेनाकारलोपे—**द्व्यह्नि, द्व्यहनि, द्व्यह्ने** इति, **एवं त्र्यह्नि, त्र्यहनी**त्यादि । त्रिषु यावत्सु तावत्सु वाऽहस्सु भव इति शेष पूर्ववत्, यावत्तावच्छब्दयो "डत्यतु सख्यावद्" इति सख्यावदतिदेशात् सख्याकार्यभाक्त्वम्, सख्यापूर्वस्य तद्धित एवोदाहरणम्, समाहारेऽह्नादेशस्याभावादिति । सायपूर्वमुदाहरति—**सायमह्न** इति । "सायाह्नादय " ३।१।५३। इति समासे "सर्वांश०" इति अटि अह्नादेशे शेष पूर्ववत् । ननु सायमित्यस्य मान्तत्वात्तल्लोप केनेत्यत आह—**अत एवे**त्यादि । तस्यामान्तत्व स्वीकृत्याह—**साये**त्यादि । विपूर्वमुदाहरति—**विगतमि**ति । प्रादिसमास , शेष पूर्ववत् । **मध्याह्नि** इति । सख्यादिपरत्वाभावादह्नशब्दस्य नाहन् इत्यादेश । **द्व्यहे** इति । "द्विगोरन्नह्नो०" ७।३।९९। इति सूत्रे अहन्ग्रहणात् ज्ञापकात् "सर्वांश०" इति परमप्यट बाधित्वा तेन अट्, ततोऽह्नाभाव ॥ ५० ॥

**निय आम् ।** प्रयुक्तानामन्वाख्यानादामिति प्रयोगदर्शनात् निय इति पञ्चमी । पूर्वस्मादनुवृत्तस्य ङौ इत्यस्य षष्ठ्या विपरिणामे स्थानित्वमित्याह—**नियः परस्य ङेः स्थाने** इति । नयते क्विपि ङौ तस्यानेनामादेशे "धातोरिवर्णोवर्णस्य०" इतीयादेशे—**नियाम्** इति । **ग्रामण्यामि**ति । ग्रामपूर्वात् नयते क्विपि ङौ तस्यामि "क्विब्वृत्तेरसुधियस्तौ" इति यत्वम्, अत्र तु "आमो नाम् वा" इति "ह्रस्वापश्च" इति च नामादेशो न भवति, तत्र नित्य स्त्रीदूत इत्यधिकृतत्वात् । ननु ग्रामण्यामित्यत्र नी साक्षान्नास्ति किं तु णी इत्यामो न प्राप्ति , सत्यम्, "णषमस०" इति

---

१ °कुशा° ख० त्राड० । २ °अह्नस शब्द° म० म० ।

## वाऽष्टन आः स्यादौ ॥ १ । ४ । ५२ ॥

अष्टन्शब्दस्य तत्संबन्धिन्यन्यसंबन्धिनि वा स्यादौ परे आकारोऽन्तादेशो वा भवति । अष्टाभिः, अष्टभिः; अष्टाभ्यः, अष्टभ्यः; अष्टासु, अष्टसु; प्रियाष्टाः, प्रियाष्टा; प्रियाष्टौ, प्रियाष्टानौ; प्रियाष्टाः, प्रियाष्टानः; प्रियाष्टाम्, प्रियाष्टानम्; प्रियाष्टौ, प्रियाष्टानौ; प्रियाष्टः, प्रियाष्ट्नः; प्रियाष्टाभिः, प्रियाष्टभिः; हे प्रियाष्टाः, हे प्रियाष्टन् । अन्यसंबन्धिनोर्जस्शसोर्नेच्छन्त्येके, तन्मते-प्रियाष्टानस्तिष्ठन्ति, प्रियाष्ट्नः पश्य इत्येव भवति । स्यादाविति किम् ? अष्टकः संघः, अष्टता, अष्टत्वम्; अष्टपुष्पी । केचित्तु सकारमकारादावेव स्यादाविच्छन्ति ॥ ५२ ॥

## अष्ट और्जस्शसोः ॥ १ । ४ । ५३ ॥

अष्ट इति कृतात्वस्याऽष्टन्शब्दस्य निर्देशः, अष्टाशब्दसंबन्धिनोर्जस्शसोः स्थाने औकारादेशो भवति । अष्टौ तिष्ठन्ति, अष्टौ पश्य; परमाष्टौ, अनष्टौ । कृतात्वस्य निर्देशादिह न भवति-अष्ट तिष्ठन्ति, अष्ट पश्य, परमाष्ट, अनष्ट । तत्संबन्धिविज्ञानादिह न भवति-प्रियाष्टास्तिष्ठन्ति, प्रियाष्टः पश्य । अतत्संबन्धिनोरपीच्छन्त्येके-प्रियाष्टौ तिष्ठन्ति, प्रियाष्टौ पश्य । केचित्तु अष्टावाचक्षत इति णिचि, क्विपि, अष्टौ तिष्ठन्ति, अष्टौ पश्येतीच्छन्ति, तदप्यष्ट इति तन्त्रेण संगृहीतम् ॥ ५३ ॥

## डतिष्णः संख्याया लुप् ॥ १ । ४ । ५४ ॥

डतिषकारनकारान्तायाः संख्यायाः संबन्धिनोर्जस्शसोर्लुप् भवति । कति तिष्ठन्ति, कति पश्य; यति तिष्ठन्ति, यति पश्य; तति तिष्ठन्ति, तति पश्य; षट् तिष्ठन्ति, षट् पश्य; पञ्च तिष्ठन्ति, पञ्च पश्य, एवं सप्त, नव, दश,

---

पूर्वस्मिन् स्यादिविधौ णत्वस्यासिद्धत्वाददोष । नन्वेकदेशविकृतेति क्लीबेऽपि प्राप्तिरस्ति इति चेत्, न, निय ई नी इतीकारप्रश्लेषात् निनि ग्रामणिनि कुले इत्येव भवति । भोजेन तु भूतपूर्वन्यायेन नपुसकेऽपि नियामित्युक्तम् ॥ ५१ ॥

**वाऽष्टन आः स्यादौ** । अष्टन स्यादौ आ वा इत्यन्वयस्तदाह—**अष्टन्शब्दस्ये**त्यादि । स्यादाविति परत्वमात्रेण कार्यस्य विशेषणमित्याह—**तत्संबन्धिनी**त्यादि । "षष्ठ्याऽन्त्यस्य" इति न्यायेनाह—**अन्तादेश** इति । **अष्टाभिरि**ति । अष्टन्शब्दाद् भिसि तस्याकारान्तादेशे "समानानाम्०" इति दीर्घे । पक्षे "नामसिद०" इति पदत्वात् "नाम्नो नोऽनह्न" इति नलोपेऽ**ष्टभिरि**ति । एवमन्यदपि । प्रिया अष्टौ यस्येति बहुव्रीहौ प्रियाष्टन्शब्दो विशेष्यनिघ्न एकद्विबहुवचनान्तस्तस्योदाहरणान्याह—**प्रियाष्टाः, प्रियाष्टा** इत्यादि । प्रियाष्टन्शब्दस्य सावनेनात्वम् रुत्वविसर्गौ, तदभावे "निदीर्घ" इति दीर्घे, "दीर्घङ्याब्०" इति सिलुकि, "नाम्नो नो०" इति नलोप । आत्वपक्षे—**प्रियाष्टौ**, तदभावे—**प्रियाष्टानौ** इत्यादि बोध्यम् । **प्रियाष्ट्न** इति । अत्राल्लोपस्य स्थानिवत्त्वात् षढिर[?]स्याल्लोपस्यासिद्धत्वाद्द्वा "तवर्गस्य०" इति णत्वम् न । अस्य शब्दस्यात्वपक्षे कीलालपाशब्दवद्रूपाणि, तदभावे च राजवद्रूपाणि । मतान्तरमाहाऽन्यसबन्धिनोर्जस्शसोर्विषये—**अन्यसंबन्धिनोरि**त्यादि । **एके**-विश्रान्तविद्याधरा पाणिनिसूत्रानुसारिण उत्पलादयश्च । पाणिनीया "अष्टन आ विभक्तौ" पा० ७।२।८४। इति सूत्रे हलीत्यपकृषन्ति, तेषां मते प्रियाष्टान प्रियाष्ट्न इत्येव भवति, अष्टौ २ इति तु ज्ञापकादिति तदीय मत तत्रैव सूत्रे भट्टोजिदीक्षितेनाभिहित सि० कौमुद्या "प्रियाष्ट्नो राजवत्सर्वं हाहावच्चापरं हलि" इति । **अष्टकः संघ** इति । अष्टौ मानमस्येति विग्रहे "सख्याया सघसूत्रपाठे" ६।४।१७१। इति के, "नाम्नो नोऽनह्न" इति नलोपः, अत्र 'अन्तरङ्गानपि विधीन् बाधित्वा लुप् प्रवर्तते' इति स्यादेरभावादात्व न भवति । एव अष्टानां भाव —**अष्टता, अष्टत्वम्**; **अष्टपुष्पी** इति । अष्टानां पुष्पाणां समाहार इति विग्रह, "द्विगो ०" २।४।२२। इति ङी । सकारमकारादौ स्यादावात्वमिच्छता मतमाह—**केचित्त्वि**ति । विश्रान्तविद्याधरा पाणिनिदेवनन्द्यादयश्च । पाणिनितन्त्रे "अष्टन०" पा० ७।२।८४। इत्यत्र हलीत्यपकर्षमुक्त्वा हलादावेव विभक्तावात्वमिति प्रियाष्टौ इत्यादि न भवति तन्मते । स्वमते तूपदर्शितम् । वस्तुतस्तु-"ष्णान्ता षट्" पा० १।१।२४। सूत्रे 'यथालक्षणमप्रयुक्ते' इति भाष्यकृदुक्त्या नैव वा लक्षणमप्रयुक्ते प्रवर्तते, 'प्रयुक्तानामेवान्वाख्यानात्' इति कैयटोक्त्या चैषामनभिधानमेवोचितम् । विशेषजिज्ञासुभि "अष्टन०" इति पा० सूत्रे मनोरमाशब्देन्दुशेखरौ द्रष्टव्यौ ॥ ५२ ॥

**अष्ट और्जस्शसोः** । अष्ट जस्शसो औ इत्यन्वय । अष्टास्विल्येकदेशस्याष्टन्शब्दस्य षष्ठ्यन्तमनुकरणमित्याह—**अष्ट इति कृतात्वे**त्यादि । तच्च विशेषण जस्शसोरित्याह—**अष्टाशब्दसंबन्धिनोरि**त्यादि । **अष्टौ तिष्ठन्ति, अष्टौ पश्य** इति । अष्टन्शब्दाज्जसि शसि च "वाऽष्टन०" इति आकारेऽनेन जस्शसोरौकारे एकत्र "ऐदौत्सन्ध्यक्षरै" इति अन्यत्र "लुगातोऽनाप" इति चौत्वलुचौ भवत । अष्ट इत्यधिकृतनाम्नो विशेषणाद् विशेषणे च तदन्तविधेर्भावात्तदन्तमुदाहरति—**परमाष्टौ, अनष्टौ** इति । "सन्महत०" ३।१।१०७। इति, "नञ्" ३।१।५१। इति च विशेषणतत्पुरुषसमासौ । कृतात्वनिर्देशस्य फलमाह—**अष्ट** इति । अष्टन्शब्दाज्जस्शसोरात्वाभावादौत्वाभावे "डतिष्ण सख्याया लुप्" १।४।५४। इति लुप् । **प्रियाष्टाः, प्रियाष्ट** इति । अत्र प्रियाष्टौ येषामिति बहुव्रीहौ नाष्टन्शब्दसबन्धिनौ जस्शसावित्यात्वे सत्यपि औत्वाभाव । एतद्विषये मतान्तरमाह—**अतत्संबन्धिनोरपीच्छन्त्येके** इति । एके-काशिकाकारा वामनादय । उक्तञ्च "अष्टन आ" पा० ७।२।८४। इति सूत्रे प्रियाष्टान, प्रियाष्टौ इति काशिकायाम् । सूत्रे 'अष्ट' इति मतान्तरसग्रहार्थन्तदाह—**केचित्त्वि**त्यादिना । **केचिदि**ति—शाकटायनदेवनन्दिचन्द्राद्य । "अष्ट औश्" शा० १।२।१५३। इति सूत्रे अमोघावृत्तौ स्पष्टमिदम् । **तदप्यष्ट इति तन्त्रेण सगृहीतम्** इति । निर्देशस्य तुल्यत्वादिति भाव । एकस्य शब्दस्यानेकार्थपरत्वे तन्त्रव्यवहार । एतेन "वाष्टन०" इति सूत्रे ङेरनुवृत्तये स्यादिग्रहणाभावेऽपि अष्ट इति ज्ञापकात् ङेरनुवृत्तिर्न भविष्यतीति वदन्त परास्ता ॥ ५३ ॥

**डतिष्ण. संख्याया लुप्** । जस्शसोरित्यनुवर्तते । डतिष्ण सख्याया जस्शसोर्लुप् इत्यन्वय । डतिष्ण इति सख्याया प्रकरणात् षष्ठ्यन्ताया विशेषण, तत्र च तदन्तविधिरित्याह—**डतिषकारनकारान्ताया** इत्यादि । कतीत्यादि । किम् यद् तद् इत्येतेभ्यो "यत्-तत्किम" ७।१।१५०। इति डतिप्रत्यये, जस्शसोरनेन लुपि कति, यति, तति इति भवन्ति । तिष्ठन्ति पश्येत्यनुप्रयोगो जस्शसोरभिव्यक्त्यर्थं ।

---

१ अष्टन पु० । २ तन्मते° इति पाठो नास्तीति म० म० ।

परमषट्, परमपञ्च । डतिष्ण इति किम्? त्रयः, चत्वारः; तावन्तः । शतानि, सहस्राणीत्यत्र संनिपातलक्षणत्वात् नान्तस्य न भवति । संख्याया इति किम्? विप्रुषः, राजानः । तत्संबन्धिविज्ञानादिह न भवति–प्रियकतयस्तिष्ठन्ति, प्रियकतीन् पश्य, प्रियषषः, प्रियषषः; प्रियपञ्चानः, प्रियपञ्ञ्ञः । केचित्तु डत्यन्तात् कतिशब्दादेवेच्छन्ति ॥ ५४ ॥

## नपुंसकस्य शिः ॥ १ । ४ । ५५ ॥

नपुंसकस्य संबन्धिनोर्जस्शसोः स्थाने शिर्भवति । कुण्डानि तिष्ठन्ति, कुण्डानि पश्य; एवं दधीनि, मधूनि, कर्तॄणि, पयांसि; यशांसि । स्याद्यधिकारादिह न भवति–कुण्डशो ददाति । नपुसकस्येति किम्? वृक्षाः, वृक्षान् । तत्संबन्धिविज्ञानादिह न भवति–प्रियकुण्डाः, प्रियकुण्डान्, इह तु भवति–परमकुण्डानि । शकारः "शौ वा" ॥ ४ । २ । ९५ ॥ इत्यादौ विशेषणार्थः ॥ ५५ ॥

## औरी ॥ १ । ४ । ५६ ॥

नपुंसकस्य संबन्धी औकार ईकारो भवति । कुण्डे तिष्ठतः, कुण्डे पश्य, एवं दधिनी, मधुनी, कर्तृणी; पयसी । तत्संबन्धिविज्ञानादिह न भवति–प्रियकुण्डौ पुरुषौ, इह तु भवति–परमकुण्डे ॥ ५६ ॥

## अतः स्यमोऽम् ॥ १ । ४ । ५७ ॥

अकारान्तस्य नपुसकलिङ्गस्य संबन्धिनोः स्यमोरमित्ययमादेशो भवति । कुण्ड तिष्ठति, कुण्ड पश्य, कीलालपम्,

---

षष् इति षन्ता, पञ्चन् इति नान्ता सख्या ततो जस्शसोर्लुपि "धुटस्तृतीय" इति यथासभव तृतीयत्वे प्रथमत्वे च "नाम्नो नो०" इति नलोपे च—**षट् पञ्च** इति । एव **परमषट्** इति । परमाश्च ते षट् चेति विग्रहे "सन्महत्परमो०" इति सख्याप्रधानत्वात् समासस्य तत्सबन्धिनावेव जस्शसाविति लुप् । **त्रय** इत्यादि । डतिष्ण इति वचनादिह न भवति । तन्मानमेषामिति "यत्तदेतदो डावादि" ७।१।१४९। इति अतौ—**तावन्त** इति । अथ शतादिभ्य शौ नागमे नान्तत्वेऽपि सख्याया लुप् कस्मान्न भवतीत्याह—**शतानीत्यादि** । **संनिपातलक्षणत्वादिति** । सनिपतति कार्यमस्मिन् सनिपातो निमित्त शिलक्षण स लक्षण चिह्न यस्य नस्य तस्य भावस्तत्त्व तस्मात् **नान्तस्य न भवतीत्यन्वय** । **प्रियकतय** इत्यादि । प्रिया कति येषामिति समासस्यान्यपदार्थप्रधानत्वात् जस्शसोर्डत्याद्यन्तसख्यासबन्धाभावात् लुप् न भवति । **प्रियपञ्ञ्नः** इति । "अनोऽस्य" इत्यकारलोपे रूपम् । **केचित्त्विति** । वामनादय । तन्मते इद न सिध्यति—"यति ते नागशीर्षाणि तति ते नागवेदना । न सन्ति नागशीर्षाणि न सन्ति नागवेदना" इति भगवन्तो लघुन्यासकारा ॥ ५४ ॥

**नपुंसकस्य शिः** । अत्र जस्शसोरित्यनुवर्तते । नपुसकस्य जस्शसो शिरित्यन्वय । स्त्री च पुमाश्च स्त्रीपुसौ "स्त्रिया पुंसो०" ७।३।९६। इति समासान्ते सति न स्त्रीपुसौ नपुसक नखादित्वान्नञोऽदादेशाभावे स्त्रीपुसशब्दस्य पृषोदरादित्वात् पुसक आदेश । शिरिति कार्यपदं, तच्च कार्यिसापेक्ष, तत्रान्यस्यासभवादधिकृतयोर्जस्शसोरेव कार्यित्वमित्याह—**जस्शसोरित्यादि** । **कुण्डानि** इति । कुण्डशब्दात् शसोऽनेन शावादेशे "स्वराच्छौ" इति नागमे, "निदीर्घ" इति दीर्घ । एवमन्यत्रापि । अथेह कस्मान्न भवति कुण्ड कुण्ड ददाति कुण्डश इति? "संख्यैकार्थात्०" ७।२।१५१। इति शस् अत्राप्यस्तीति आह—**स्याद्यधिकारात्** इत्यादि । अय परिहारो यदार्थप्रकरणादिवशाद्वृत्तावेकसख्यार्थाभिधायक एव । शस्विधौ हि वृत्तिस्था एकार्थताश्रीयते न तु वाक्यस्य । अर्थप्रकरणादिरहितश्च कुण्डादिशब्दो वृत्तौ एकार्थो न भवतीति शसा न भवितव्यमेव । कस्मात् पुन कुण्डादिशब्दो वैकार्थो न भवतीति? उच्यते–जातिशब्दात् । जातिशब्दा हि नैकस्यामेव जात्याधारभूताया व्यक्तौ वर्तन्ते, किन्त्वनेकस्यामपि । एव च यत् "सख्यैकवचनाच्च वीप्सायाम्" पा० ५।४।४३। इति सूत्रे शस्विधायके जयादित्यप्रभृतिभि प्रत्युदाहरणमुपन्यस्त काशिकायां सख्यैकवचनादिति किम्? घट घट ददातीति तदप्युपपद्यते, यदर्थप्रकरणादिरहितो जातिशब्दो वृत्तावेकार्थो न भवतीति । स्पष्टश्चैतद्वामनजयादित्ययोर्वैमत्य तत्रैव सूत्रे तत्त्वबोधिन्या इति सुधियो विभावयन्तु । शकारस्याप्रयोगिण प्रयोजनमाह—**शकार** इत्यादि । इह नपुसकशब्देन नपुसकाभिधायकस्य शब्दस्य वा ग्रहण स्यादर्थस्य वेति द्वौ पक्षौ । तत्राद्ये पक्षे नपुसकाभिधायकेन स्याद्याक्षिप्त नाम विशिष्यते, नपुसकाभिधायकशब्दान्तात् नाम्न इति, नाम्ना च नपुसकाभिधायकमिति । तत्र पूर्वस्मिन्पक्षे बहूनि त्रपूणि येषा ब्राह्मणानां तान् बहुत्रपून्, तथाऽतिक्रान्त त्रपु यैस्तान् अतित्रपूनित्यत्रातिप्रसङ्ग । द्वितीयपक्षे तु नास्त्यतिप्रसङ्ग । अर्थग्रहणेऽपि न दोष । अर्थेन हि नामैव विशेषयितव्यम्, अर्थस्याप्रस्तुतत्वादसशब्दितत्वाच्च । एव त्रिषु पक्षेषु सभवत्सु दत्तपक्षनिराकरणेन द्वावितरपक्षावाश्रित्योक्त—**नपुंसकस्य सबन्धिनोरित्यादि** । स्पष्टश्चैतत् "स्वमोर्नपुसकात्" पा० ७।१।२३। सूत्रे भाष्ये ॥ ५५ ॥

**औरी** । नपुसकस्येत्यनुवर्तते, नपुसकस्य औ ई इत्यन्वयस्तदाह—**नपुंसकस्य संबन्धीत्यादि** । औ ई इति कार्यकार्यिणोरभेदनिर्देश सर्वादेशार्थ, अन्यथा षष्ठ्या अन्त्यस्येति न्यायात् विश्लिष्टावर्णत्वादौकारपरभागस्योवर्णस्य स्यात्, यत अ ओ इति प्रकृतौ "ऐदौत्सन्ध्यक्षरे" इत्यनेन औकारो निष्पादित । नपुसकस्येत्यत्रापि पूर्ववद्व्याख्येयम् । **कुण्डे** इति । कुण्डशब्दाद् द्विवचनौकारस्य ईकार । एवमन्यत्रापि । **परमकुण्डे** इति । परमे च ते कुण्डे चेति "सन्महत्०" इति विशेषणसमासस्योत्तरपदार्थप्रधानत्वात् तत्सबन्धित्वाद्भवत्येव ॥ ५६ ॥

**अत. स्यमोऽम्** । नपुसकस्येति वर्तते, अत इति नपुसकस्येत्यस्य विशेषणमतस्तदन्तप्रतिपत्तिर्भवतीत्याह—**अकारान्तस्येति** । तकार श्रुतिसुखार्थ । नन्वत्राद्ग्रहण किमर्थम्? न च वाच्यमद्ग्रहणाभावे दधीत्यत्राप्यमादेश स्यात्, यत "अनतो लुप्" इति सूत्र बाधक विद्यते इति । ननु अनत इत्यत्र पर्युदास प्रसज्यो वा नञ् गृह्यते इति सदेह, न च वाच्य पर्युदासे हि 'नामिनो लुप्' इति सूत्र कुर्यात् तस्मात् प्रसज्य एवेति, कुत –काष्ठा परं प्रकर्षमध्यापक इत्यत्र क्रियाविशेषणत्वेन आकारादप्यमो लुग् दृश्यतेऽतोऽनत इति कर्तव्यमेव । अत संदेहस्तदवस्थ एवेत्यतोऽत् ग्रहणेन ज्ञाप्यते प्रसज्य एव गृह्यते, तथा च–पय इत्यादौ लुप् सिद्धा न त्वमादेश । **कीलालपम्** इति । "क्लीबे" १।४।९७।

---

१ °न्तत्मस° पु० । २ °पञ्च पु०, ख० ताड० ।

अतिखट्वं कुलम्; हे कुण्ड !–अत्रामादेशे सति "अदेतः स्यमोर्लुक्" ॥ १ । ४ । ४४ ॥ इत्यमो लुक् । नपुंसकस्ये-त्येव ? वृक्षः । अत इति किम् ? दधि तिष्ठति, दधि पश्य । तत्संबन्धिविज्ञानादिह न भवति–प्रियकुण्डः पुरुषः । अमो-ऽकारोच्चारण जरसादेशार्थम्, तेनातिजरस कुलं तिष्ठतीति सिद्धम् ॥ ५७ ॥

## पञ्चतोऽन्यादेरनेकतरस्य दः ॥ १ । ४ । ५८ ॥

नपुसकानामन्यादीनां सर्वाद्यन्तर्वर्तिनां पञ्चपरिमाणानां संबन्धिनोः स्यमोः स्थाने द इत्ययमादेशो भवति, एकतर-शब्दं वर्जयित्वा, अकार उच्चारणार्थः । अन्यत्तिष्ठति, अन्यत् पश्य; एवमन्यतरत्, इतरत्, कतरत् तिष्ठति, कतरत् पश्य; एवं यतरत्, ततरत् । कतमत्तिष्ठति, कतमत् पश्य, एवं यतमत्, ततमत्, एकतमत्; हे अन्यत् !, हे अन्य-तरत् !, हे इतरत् !, हे कतरत् !, हे कतमत् !, हे एकतमत् ! । अनेकतरस्येति किम् ? एकतरं तिष्ठति, एकतर पश्य । पञ्चत इति किम् ? नेम तिष्ठति, नेम पश्य । नपुंसकस्येत्येव ? अन्यः पुरुषः, अन्या स्त्री । अन्यादिसंबन्धिनोः स्यमोर्ग्रहणा-दिह न भवति–प्रियान्यम्, अत्यन्यं कुलम्, इह तु भवति–परमान्यत् तिष्ठति, परमान्यत् पश्य; अनन्यत् ॥ ५८ ॥

## अनतो लुप् ॥ १ । ४ । ५९ ॥

अनकारान्तस्य नपुंसकस्य संबन्धिनोः स्यमोर्लुब् भवति । दधि तिष्ठति पश्य वा, एवं मधु, कर्तृ, पयः; उद-श्वित् । अनत इति किम् ? कुण्डं तिष्ठति पश्य वा । लुकमकृत्वा लुप्करणं स्यमोः स्थानिवद्भावेन यत्कार्यं तस्य प्रतिषे-धार्थम् । यत्, तत्–अत्र त्यदाद्यत्व न भवति ॥ ५९ ॥

---

इति ह्रस्वत्वे सति अकारान्तकीलालपशब्दसंबन्धिनो स्यमोरमादेशे "समानाद०" इति अमोऽकारस्य लुक् । एवमन्यदपि । **अतिखट्वं कुलमिति ।** खट्वामतिक्रान्तमित्यर्थं, "गोश्चान्ते०" इति ह्रस्वत्वे सत्यकारान्तत्वमिति भाव । ननु हे कुण्ड इत्यत्रानेन जातोऽम् क गत इत्यत आह— **अत्रामादेशे सतीत्यादि** । अथाकारकरण किमर्थम् ? न चामा सर्वादेशार्थमिति वाच्यम्, "प्रत्ययस्य" इति सर्वादेशस्य सिद्धत्वात् । किञ्च अन्ता-देशेऽपि "समानादमोऽत " इत्यकारलोपे विशेषाभावादित्यत आह—**अम** इत्यादि । जरामतिक्रान्तमिति समासे ह्रस्वे च सति तत सेरमादेशेऽति-जरसं कुल तिष्ठतीति प्रथमयोदाहृतम् । द्वितीया तु नोदाहृता, तत्र परत्वात् नित्यत्वाच्च पूर्वं जरसादेशेन भाव्यम् । मकारविधानेऽपि दोषाभाव, समानन्यायेन तु लाघवार्थममोऽप्यम् करणम् । ननु च 'सनिपातलक्षणविधिरनिमित्तम्' इति न्यायादकाराश्रितत्वादमादेशस्य कथ तद्विघातक-जरसादेश ? उच्यते–अत एव अमूसप्रदायात् अनित्योऽयमिति विज्ञायते, अन्यथा मकारेणैव कृतत्वादमूसप्रदायोऽनर्थक इति, अपरे तु जरसादेश मन्यन्त इति । स्यम इति अम्ग्रहणमुत्तरार्थम्, तेन 'अन्यत्' पश्य इत्यत्राम "पञ्चतो०" १।४।५८। इति दत्व सिद्धम् ॥ ५७ ॥

**पञ्चतोऽन्यादेरनेकतरस्य दः** । अत्र नपुसकस्य इति स्यम इति चानुवर्तते । **पञ्चत** इति । पञ्चपरिमाणमस्येति विग्रह । "पञ्चद्-शद्वर्गे वा" ६।४।१७५। इति डत्प्रत्यय, तदन्तात् षष्ठी पञ्चत इति । नपुसकस्येति पञ्चत इति च विशेषणमन्यादेस्तच्चाधिकृतयो स्यमोरि-त्याह—**नपुंसकानामित्यादि** । अयमर्थोऽधिकृतस्य नपुसकस्येत्यस्य वचनविपरिणामात् । अन्यादि पृथग्गणपठितो नास्त्यत कश्चिन्मुह्ये-दित्युक्त—**सर्वाद्यन्तर्वर्तिनामिति** । डतरान्तस्यान्यादित्वात् प्रत्ययद्वारेण प्राप्तमेकतरशब्दस्य दत्व तत्रानिष्टतया वर्जनमाह—**एकतरशब्द-मिति** । सूत्रे द इत्यत्राकारस्य लक्ष्येऽश्रूयमाणतयोच्चारणार्थकत्वमभिप्रेत्याह—**अकार** इत्यादि । सर्वादावयमन्यादि पठ्यते–अन्य अन्यतर इतर डतर डतम इति । तत्रान्यादयस्त्रिस्र प्रकृतय, डतरडतमौ प्रत्ययौ, प्रत्ययग्रहणे तु "प्रत्यय प्रकृत्यादे" इति यस्मात् तौ विहितौ तदादेस्तदन्तस्य कतरकतमादेर्ग्रहणमित्युदाहरति—**अन्यत्तिष्ठतीत्यादि** । अन्यादिशब्देभ्य स्यमोरनेन दत्वे "विरामे वा" इति पाक्षिक तत्वम् । **एकतर तिष्ठति** इति । अनेकतरस्यान्यादेरित्युक्त्या दत्वाभावे "अत स्यमोऽम्" इत्यमादेश । **नेमं तिष्ठति** इति । पञ्चपरिमाणेषु अन्यादिष्वस्या-भावात् न दत्वम् । **अन्य. पुरुष** इत्यादि । नपुसकानामन्यादीनामित्युक्त्याऽत्र न भवति । अनेकतरस्येति समानाधिकरणविशेषणादन्यादेरिति षष्ठी, तया च सबन्धिविज्ञानम्, अतोऽन्यादिसबन्धिनो स्यमोर्दो भवतीत्याह—**अन्यादीत्यादि** । **प्रियान्यं** इति । प्रियमन्यद्यस्य तत्कुलमिति भाव । **अत्यन्यमिति** । अन्यदतिक्रान्त कुलमित्यर्थ । **परमान्य**दित्यादौ "सन्महत्०" इति विशेषणसमासस्योत्तरपदार्थप्रधानत्वात् तत्सबन्धि-त्वात् स्यमोर्दत्व भवति ॥ ५८ ॥

**अनतो लुप्** । नपुंसकस्येति वर्तते स्यम इति च । अनत इति नपुसकस्येत्यनेनान्वेति विशेषणतया च तदन्तविधिरित्याह–**अनकारान्त-स्येत्यादि** । **दधि** इति । अनकारान्तस्य नपुसकस्य दधिशब्दस्य सबन्धिनो स्यमोरनेन लुप् । एवमन्यत्रापि । ननु अनत इति किमर्थम् ? न च वाच्यम् कुण्डमित्यत्रापि स्यात्, "अत स्यमोऽम्" इति बाधकात्, अत्रोच्यते–अनत इत्यस्याभावे "पञ्चतोऽन्यादे०" इत्यतोऽन्यादेरित्यागच्छेत् । न च वाच्यम् अन्यादयमीष्टो हि एकमेव योग कुर्यात्, पूर्वमेकतरवर्जितस्यान्यादेर्ग्रहणम्, इह तु एकतरस्यापीति पृथग्योगस्य साफल्यात् । हे कर्तृ इत्यादौ परत्वात् प्रथम सेर्लोपे प्रत्ययलोपलक्षणन्यायेन "ह्रस्वस्य०" इति गुण कस्मात् न भवतीत्याह—**लुकमकृत्वेत्यादि** । तेन हे कर्तृ इत्यत्रानेन सेर्लुपि तस्य स्थानिवत्त्वाभावात् "ह्रस्वस्य०" इति न प्रवर्तते । "नामिनो लुग्वा" इति लुक्पक्षे तु स्थानिवद्भावात् तेन गुणे हे कर्त इत्यपि भवति । अथ यत्कुल तत्कुलमिति परत्वादत्वसत्वप्रसङ्गः, तद्व्यावृत्तये 'त्यदादिभ्यश्च' इति लुब्वक्तव्या । न च नित्या लुप् अत्वसत्वे तु लुपि कृते "लुप्यय्वृल्लेनत्" इति स्थानिवत्त्वाभावात् प्रत्ययलक्षणप्रतिषेधाद् विभक्त्यभावात् न प्राप्नुत इत्यनित्ये इति वाच्यम्, पूर्वं लुप्यसत्यामत्वे सति अपवादत्वात् लुप बाधित्वा "अत स्यमोऽम्" इत्यम् सद्भावात् "अनतो०" इत्यनुवादकम् । अनुवादकत्वाभावे तु नित्यत्वावकाश एव नास्ति । 'यस्य तु लक्षणान्तरेण निमित्त विहन्यते न तदनित्यम्' इत्येतत्तु पाक्षिकम् । यदा द्वयोर्लक्षणयो सप्रधारण क्रियते तदा यल्लक्षणप्रवृत्तावपि यस्य द्वितीयस्य लक्षणस्य प्रवृत्तिव्या-घातो नास्ति तत्प्रति न तस्य दौर्बल्य, लक्षणान्तरेण चैतत्प्रवृत्तिनिवारणात् । यथा वालिसुग्रीवयोर्युद्धे रामेण वालिनो वधेऽपि न सुग्रीवापेक्ष दौर्बल्य-मभिदधति शूरमानिन । एतदन्यदर्शनसश्रयेणोच्यते—यस्य तु लक्षणान्तरेणेति । यदा त्वेष न्याय आश्रीयते–'लक्षणान्तरप्रवृत्तिनिमित्तमुपसहर-ल्लक्षण बलवद्भवति' इतरत्तु तदुपसहृतनिमित्तलक्षणान्तरोपपादितप्रवृत्तिविघात दुर्बलमेव । तथा च वासुदेवसहायत्वात् पाण्ड्या बलिनो दुर्बलान्धा-र्तराष्ट्रान् विजिग्यिरे तदा नास्त्येव–यस्य तु लक्षणान्तरेणेति । उच्यते–'अन्तरङ्गानपि विधीन् बहिरङ्गा लुब्बाधत इति' अत्रापिग्रहणात् नित्यानां च परेषां च लुपा बाधनमिति त्यदाद्यत्व लुपा बाध्यते इत्याह–**अत्र त्यदाद्यत्वमित्यादि** । तथा चोच्यते 'सर्वविधिभ्यो लोपविधिर्बलवान्' इति ॥५९॥

## जरसो वा ॥ १ । ४ । ६० ॥

जरसन्तस्य नपुंसकस्य संबन्धिनोः स्मोर्लुब् वा भवति । अतिजरः, अतिजरसं कुलं तिष्ठति पश्य वा । अन्ये तु द्वितीयैकवचनस्यैवामो योऽमादेशस्तस्यैव लुब्विकल्पमिच्छन्ति न स्यादेशस्य, तन्मते–अतिजरसं कुलं तिष्ठतीत्येव भवति । केचिज्जरसः स्मोर्लोपं नेच्छन्ति, तन्मते–अतिजरसं तिष्ठति पश्य वेत्येव भवति ॥ ६० ॥

## नामिनो लुग् वा ॥ १ । ४ । ६१ ॥

नाम्यन्तस्य नपुंसकस्य संबन्धिनोः स्मोर्लुग् वा भवति । हे वारे !, हे त्रपो !, हे कर्तः कुल !, प्रियतिसृ कुलं तिष्ठति पश्य वा; [1]पक्षे–लुबेव हे वारि !, हे त्रपु !, हे कर्तृ !; हे प्रियत्रि कुलं तिष्ठति पश्य वा । अमो लु[2]कं नेच्छन्त्येके, तन्मते–प्रियत्रि कुल पश्य इत्येव भवति । नामिन इति किम् ? यद्, तद्, प्रियचतुष्कुलम् । [3]चतुःशब्दस्यापि लुक्विकल्पमिच्छन्त्यन्ये–प्रियचतसृ कुलम्, प्रियचतुष्कुलम् । लुपैव सिद्धे लुग्वचनं स्थानिवद्भावार्थम् ॥ ६१ ॥

---

**जरसो वा** । नपुसकस्येति स्मोरिति लुबिति चानुवर्तते, जरसो नपुसकस्य स्मोर्लुब् वा इत्यन्वय । "जराया जरस् वा" इति जरास्थाननिष्पन्नस्य जरसो नपुसकत्वेऽवृत्तेस्तदन्तस्यैव वृत्त्या आह—**जरसन्तस्येति** । पूर्वेण प्राप्ते विभाषा । नपुसकस्येत्यस्य विशेषणतया तदन्तप्रतिपत्ति । **अतिजर इत्यादि** । जरामतिक्रान्त कुलमित्यर्थे प्रादिसमास । "क्लीबे" इति ह्रस्वत्वम् । अतिजर स् अमिति च स्थिते प्रथमैकवचने से "अत स्मोऽम्" इत्यमि संनिपातपरिभाषाया अनित्यत्वमाश्रित्य जरस्, द्वितीयैकवचनेऽमस्तु "अत स्मो०" इति अमोऽमादेश परत्वाद् बाध्यते जरसादेशेन "जराया जरस् वा" इत्यस्य तदन्ते प्रवृत्तिस्तु नाम्न इत्यधिकृतत्वेन । 'निर्दिश्यमानस्यादेशा०' इति 'एकदेशविकृत०' इति न्यायेन च अतिजर इत्यन्तवर्त्तिजरइत्यस्य जरस् । उभयोरपि स्मोरनेन विभाषा लुपि—**अतिजरः** इति । लुबभावपक्षे–**अतिजरसमिति** । अनयो प्रथमाद्वितीयैकवचनाभिव्यक्त्यर्थं नपुसकत्वाभिव्यक्त्यर्थं च कुल तिष्ठति पश्येत्यनुप्रयोगा । जरसभावे–अतिजरमित्यपि, तेन प्रथमैकवचने द्वितीयैकवचने च त्रीणि त्रीणि रूपाणि विकल्पद्वयात् । केचन सनिपातपरिभाषाया नित्यत्वमाश्रित्य स्यादेशस्यामो लुप नेच्छन्ति, तेषां मत समुपन्यस्यति—**अन्येतु** इति । उत्पलादय । एतेषां मते प्रथमैकवचने समुदाहरति—**अतिजरसं कुलं तिष्ठतीत्येव** इति । एवकाराद् अतिजर इत्यस्य व्यवच्छेद । 'सनिपात०' इति न्यायनित्यत्वमभ्युपगम्य स्मोर्लोपमनिच्छतां मतमाह—**केचिदित्यादि** । **केचित्**–गोनर्दीयमताननुयायिन· पाणिनीया । **अतिजरसं कुलं तिष्ठति पश्य वेत्येव** इति । एवकारात् प्रथमाद्वितीयैकवचने अतिजर इति तेषां मते न भवति, किन्तूभयत्र अतिजरसम्, अतिजरम् प्र०ए०, अतिजरसम्, अतिजरम् द्वि०ए०इति । गोनर्दीयानां मते अतिजरम् प्र० ए०, अतिजरसम्, अतिजरम् द्वि० ए० इति । एते तु 'सनिपात०' इति न्याय स्वीकृत्य स्मोर्लोप नेच्छन्ति । स्मोर्लोपानङ्गीकारे उभयो साम्यम् । आचार्यपाणिनिना नारब्धो नपुसकस्य जरसन्तस्य स्मोर्लोपविषये पाक्षिको लुब्विधि । "स्मोर्नपुसकात्" पा० ७।१।२३। इति हि तत् सूत्र अतिजरमिति प्रथमैकवचने "अतोऽम्" पा० ७।१।२४। इति अनेन बाधितं भवत्यतोऽम्, तस्मिन् सति सनिपातपरिभाषया न जरस्; द्वितीयैकवचने अतिजरसम्, अतिजरमिति । अत्र "स्मो०" इति सूत्रेणामो न लुक् सनिपातपरिभाषया । जरस् तु अमि अम्भावात् लुगपवादात् परत्वात् भवति इति स्वान्यमतविचार ॥ ६० ॥

**नामिनो लुग् वा** । नपुसकस्येति स्मोरिति च वर्तते । नामिनो नपुसकस्य स्मोर्लुग् वा इत्यन्वय । नामिन इत्यधिकृतस्य नपुसकस्य विशेषण, तथाच तदन्तविधिरित्याह—**नाम्यन्तस्येत्यादि** । **हे वारे** इत्यादि । वारिशब्दसबन्धिन आमन्त्र्यसेरनेन लुचि तस्य स्थानिवद्भावार्थं कृतत्वेन स्थानिवत्त्वे सति तेन सह "ह्रस्वस्य गुण" इति गुणे रूपम् । एवमन्यत्रापि । **प्रियतिसृ कुलमिति** । प्रियास्तिस्रोऽस्य कुलस्येति विग्रह, अत्र प्रियत्रिशब्दात् स्मो "नामिनो लुग् वा" इति लुकि सति स्थानिवद्भावाद् "त्रिचतुर०" २।१।१। इत्यनेन स्त्रीलिङ्गे वर्तमानस्य त्रिशब्दस्य अन्यसबन्धिनि स्यादौ परे तिसृ इत्यादेश । प्रियतिसृ कुलमित्यत्र "ऋन्नित्यदित" ७।३।१७१। इति समासान्त कच् न भवति, विभक्त्याश्रयत्वेन बहिरङ्गलक्षणस्य तिस्रादेशस्यासिद्धत्वात् । नन्वनेन लुचोऽभावपक्षे किंभवतीत्याह—**पक्षे लुबेवेत्यादि** । "अनतो०" इत्यनेनेति भाव, तेन **हे वारि** इत्याद्युदाहृतम् । **प्रियत्रि कुलं तिष्ठति, पश्य वेति** । प्रियास्तिस्र इत्यादि विग्रह, अत्र स्मोर्लुपा लुप्तत्वेन स्थानिवद्भावाभावात् न तिस्राऽऽदेश । नाम्यन्तस्य नपुसकस्य संबन्धिन सेरेव विभाषा लुचमिच्छतां मतमाह—**अमो लुकं नेच्छन्त्येके** इति । एके–देवनन्द्यादय । उदाहरति—**प्रियत्रि कुलं पश्येत्येवेति** । तेषा मते प्रथमैकवचने प्रियतिसृ प्रियत्रि इति, द्वितीयैकवचने प्रियत्रीत्येव भवति । एवकारात् प्रियतिसृ इत्यस्य व्यवच्छेद । **प्रियचतुष्कुलमिति** । अत्र रस्य षत्वम् "निर्दुर्बहि०" २।३।९। इत्यनेन, प्रियाश्चतस्रोऽस्य कुलस्येति विग्रह, अत्र रेफस्य नामित्वाभावात्तदन्तस्य नपुसकस्य सबन्धिन सेरमश्च पूर्वेण "अनतो०" इत्यनेन लुप्, तयोश्च स्थानिवत्वाभावात् न चतस्राऽऽदेश । अनाम्यन्तस्यापि चतु शब्दस्य लुग्विकल्पमिच्छता मतमाह—**चतुःशब्दस्यापीत्यादि** । **इच्छन्त्यन्ये** इति । उत्पलादयश्च पाणिनीया । पाणिनितन्त्रे "न लुमताङ्गस्य" पा० १।१।६३। इति निषेधस्यानित्यत्वात् पक्षे—**प्रियचतसृ कुलमिति** भवति । अथानुवर्त्तनेन लुप् सिद्धा, किमर्थं लुग्ग्रहणमित्याह—**लुपैवेत्यादि** । तेन लुक्पक्षे "लुप्यय्वृल्लेनत्" ७।४।११२। इति स्थानिवद्भावप्रतिषेधाभावे स्थानिवद्भावे "ह्रस्वस्य गुण" इत्यादि भवति, तथैवोदाहृतम् ॥ ६१ ॥

---

१ पक्षे " इत्यादिना, पश्य वा॰ इत्यन्तेनेति पाठो नास्तीति म० म० । २ लुच पु० । ३ चतुर् पु०, ख० ता० ।

## वाऽन्यतः पुमांष्टादौ स्वरे ॥ १ । ४ । ६२ ॥

यो नाम्यन्तः शब्दोऽन्यतो विशेष्यवशात् नपुंसकः स टादौ स्वरे परे पुंवद् वा भवति, यथा पुंसि नाऽऽगमह्रस्वौ न भवतस्तथाऽत्रापि न भवत इत्यर्थः । ग्रामण्या, ग्रामणिना कुलेन, ग्रामण्ये, ग्रामणिने कुलाय, ग्रामण्यः, ग्रामणिनः कुलात्; ग्रामण्यः ग्रामणिनः कुलस्य; ग्रामण्योः, ग्रामणिनोः कुलयोः, ग्रामण्यां, ग्रामणीनां कुलानाम्, ग्रामण्यां, ग्रामणिनि कुले; एवं कर्त्रा, कर्तृणा; कर्त्रे, कर्तृणे; कर्तुः, कर्तृणः, कर्त्रोः, कर्तृणोः; कर्तॄणाम्, कर्तृणाम्, कर्तरि, कर्तृणि, शुचये, शुचिने; शुचेः, शुचिनः, शुच्योः, शुचिनोः, शुचौ, शुचिनि, मृदवे, मृदुने; मृदोः, मृदुनः, मृद्वोः, मृदुनोः, मृदौ, मृदुनि, चित्रगवे, चित्रगुणे; अतिराया, अतिरिणा; अतिनावा, अतिनुना, अहयवे, अहयुने, कुमारीवाचरतीति क्विप्, कुमारीं वेच्छतीति क्यन्, क्विप्–कुमार्यै, कुमारिणे कुलाय । अन्यत इति किम्? त्रपुणे, जतुने, पीलुने फलाय । टादाविति किम्? ग्रामणिनी शुचिनी कुले । स्वर इति किम्? ग्रामणिभ्यां कुलाभ्याम्, ग्रामणिभिः कुलैः । नामिन इत्येव? कीलालपेन कुलेन । नपुंसक इत्येव? कल्याण्यै ब्राह्मण्यै ॥ ६२ ॥

## दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान् ॥ १ । ४ । ६३ ॥

दधि अस्थि सक्थि अक्षि इत्येतेषां नपुंसकानां नाम्यन्तानामन्तस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा टादौ स्वरे परे अन् इत्ययमादेशो भवति । दध्ना, दध्नि, दधनि, अस्थ्ना, अस्थ्ने, अस्थ्नि, अस्थनि; सक्थ्ना, सक्थ्ने, सक्थ्नि, सक्थनि; अक्ष्णा, अक्ष्णे, अक्ष्णि, अक्षणि; परमदध्ना, परमास्थ्ना, परमसक्थ्ना, परमाक्ष्णा, अतिदध्ना, अत्यस्थ्ना, अतिसक्थ्ना, अत्यक्ष्णा । प्रियदध्ना–समासान्तविधेरनित्यत्वात् कच् न भवति, प्रियास्थ्ना शुना, दृढसक्थ्ना शकटेन, स्थूलाक्ष्णा

---

वान्यत पुमांष्टादौ स्वरे । नामिन इति वर्तते, तद्यथा नपुंसकस्य विशेषण तथा अन्यत इत्यपि, तच्च पञ्चम्यन्तमप्यर्थवशात् प्रथमान्ततया विपरिणम्यते इत्याह—यो नाम्यन्त इत्यादि । अन्यत इति व्याचष्टे–विशेष्यवशादिति । अन्यत इति सामान्याभिधानेऽपि तदन्यद्विशेष्यमेव विज्ञायते, विशेष्यादन्यत्र लिङ्गाभावात् । अयमभिप्राय –इह हि द्विविधलिङ्गव्यवस्था । केषाञ्चित् स्वत एव लिङ्गम्, यथा दधिमध्वादिजातिशब्दानाम् । केषाञ्चिदन्यतो विशेष्यात्, यथा गुणक्रियाद्रव्यसंबन्धनिमित्तानां पट्वादिशब्दानाम्, ते हि विशेष्यलिङ्गमुपाददते न तेषां स्वतो व्यवस्थित किञ्चिल्लिङ्गमस्तीति । तथा हि—पटु पुमान्, पट्वी स्त्री, पटु कुलमिति विशेष्यत एव लिङ्ग दृश्यते न स्वत इति । अतोऽन्यत इति क्रियागुणद्रव्यसंबन्धप्रवृत्तिनिमित्ता शब्दा अभिधीयन्ते इति । अन्यतो नपुंसक इत्युच्यमानेऽपि नपुंसकोपादायिना शब्देन तदैव पुंस्त्वोपादानाभाव । अथ विशेषणलक्षणपदोपक्षीणत्वात् कार्ये सन्निधानाभावात् स्त्रियामपि पुंभाव स्यादिति चेन्न 'परार्थे प्रयुज्यमान शब्दो वतिमन्तरेणापिवत्यर्थं गमयत्येव' यथा–अब्रह्मदत्ते ब्रह्मदत्त इति । अत्र हि निर्ज्ञातेऽथ झटिति ब्रह्मदत्ते पदार्थैकदेशभूतारूढसंबन्धान् क्रियागुणस्यानुपलभ्य एष ब्रह्मदत्त इत्युच्यते । समुदायपदार्थवादिनो ह्यवयवेऽपि शब्दप्रवृत्ति । एवंभूतस्तु अनिर्देश इति नोपपद्यते, न हि नपुंसकस्य स्वतो लिङ्गधर्मा केचित्प्रसिद्धा सन्तीति । अस्ति तु लोके भाविनो धर्मान् भूतवदुपादाय व्यपदेश एष ब्रह्मदत्त इति लभतामय प्रतिपद्यतामय ब्रह्मदत्तधर्मानिति भूतवदुपादाय सोऽयमित्यभिसम्बन्धेन तत्स्यप्रतिलम्भ । एवमिहापि भाविनो नागमाभावादीन् पुल्लिङ्गाश्रयान् धर्मानुपादाय वतिमन्तरेणापि नपुंसके तच्छब्दस्य प्रवृत्तिरित्याह—पुंवद्वा भवतीति । पुंस्त्वातिदेशेन साध्यमर्थं दर्शयति—यथा पुंसि इत्यादि । नागमह्रस्वौ इति । "अनाम् स्वरे नोऽन्त" इति नागम, "क्लीबे" इत्यादि ह्रस्वत्व च न भवतीत्ययमर्थं पुंवद्भवतीत्यनेन साध्यते । पुमनुवादेन चात्र न किञ्चित्कार्यं शास्त्रविहितमस्तीति पुंस्यदृष्टस्य नपुंसककार्यस्यैव नागमह्रस्वलक्षणस्य पुंभावेनाभाव प्रयोजनत्वेनोच्यते, न च स्त्रियां तत्संभवतीति । ग्रामण्यादि । ग्रामणीशब्दाद् टादौ स्वरे पक्षेऽनेन पुंवद्भावात् ह्रस्वनागमाभावे यथासंभव "निय आम्" इति ङेरामादेशे "क्विब्वृत्तेरसुधियस्तौ" इति यत्वम्, तद्विमुक्तपक्षे ह्रस्वत्व नागमश्चेति । एवं कर्त्रा कर्तृणेत्यादि । कर्तॄणाम्, कर्तृणामिति । द्वयोरपि "ह्रस्वापश्च" इति नाम्, न त्वपुंस्त्वपक्षे अनाम् इति नोऽन्त, तन्नामो वर्जितत्वात् । द्वितीयप्रयोगो रूपनिर्णयार्थो दर्शित, न तु तस्य किञ्चिदत्रान्यत्फलम् । चित्रगवे इति । चित्रा गावो यस्येति विग्रह, अत्र क्लीबे ह्रस्वत्वम्, तत्पुंस्त्वे सति निवर्तते, ततश्च "गोश्चान्ते०" ह्रस्व, तत "ङित्यदिति" इत्योत्वम् । टाया क्लीबे पुंवत्त्वे च चित्रगुणा इति रूपाविशेषात् चतुर्थ्या उदाहरणप्रदर्शनम् । पुंवत्त्वाभावपक्षे रूपमाह—चित्रगुणे इति । एव चित्रगो चित्रगुण इत्यादि रूपाणि पुंवत्त्वे तदभावे क्लीबे च बोध्यानि । अतिराया इति । रायमतिक्रान्तेन कुलेनेत्यर्थं । पुंवत्त्वे सति टादौ स्वरादौ विभक्तौ नागमह्रस्वत्वाभाव । पुंवत्त्वाभावे रूपमाह—अतिरिणा इति । अत्र नागमह्रस्वौ । एव अतिराये अतिरिणे इत्यादि बोध्यम् । अतिनावा, अतिनुना इति । नावमतिक्रान्तेन कुलेनेत्यर्थं । पूर्वं रूप पुंवत्त्वे, परंतु तदभावे इति विशेष । एव अतिनावे अतिनुने इत्यादिबोध्यम् । अतिरि अतिनौ इत्यनयो "क्लीबे" इति ह्रस्वत्वे इकार उकारश्च बोध्य इति । नामिन इत्यनुवृत्तिरत्र क्रमप्राप्ता, वस्तुतस्त्वत्र ए ऐ ओ औ इत्येषां ह्रस्वत्वेन इदुद्रूपत्वादविशेष । त्रपुणे, जतुने इति । त्रपुजत्वादिकुमार्यै इति । अत्र यद्यपि कुमारीशब्द पुंवत् तथापि नित्यस्त्रीविषयत्वादीकारस्य "स्त्रीदूत" इति दै । ग्रामणिनी इति । अत्र स्वरत्वेऽपि टादिशब्दानां जातिशब्दत्वात् न विशेष्यनिबन्धन नपुंसकत्वमित्यन्यत इति वचनात् पुंभावो न भवति । कीलालपेन इति । नाम्यन्तत्वाभावादत्र न पुंवत्त्वम् । त्वाभावात् न पुंवत्त्वम् । ग्रामणिभ्याम् इत्यादि । अत्र टादित्वेऽपि स्वरत्वाभाव । कल्याण्यै ब्राह्मण्यै इति । अत्र नपुंसकोपादायिशब्दाभावात् न पुंवत्त्वम् ॥ ६२ ॥

दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान् । नपुंसकस्येति टादौ स्वरे इति नामिन इति च वर्तते । दध्यस्थिसक्थ्यक्ष्ण इत्यन्तस्य कार्यिणो विशेषणम्, अतष्टादौ स्वरे इत्यस्य परत्वमात्र विज्ञायते न तत्संबन्धित्वमेवेत्याह—तत्संबन्धिनीत्यादि । दध्ना इति । दधिशब्दस्यान्तस्य टादौ स्वरेऽनेनानादेशे "अनोऽस्य" इत्यकारलोपे रूपम् । दध्नि, दधनि इति । "ईङौ वा" इति विकल्पेनाकारलुक् । एवमन्यदपि । अत्र नपुंसकार्थविशिष्टैर्दध्यादिभि स्याद्याक्षिप्त नाम विशेष्यते, तेन दध्याद्यन्तस्यापि नाम्नोऽन्तस्यान् भवतीत्युदाहरति—परमदध्ना इत्यादि । प्रियदध्ना इत्यत्र "अक्ष्णोऽप्राण्यङ्गे" ७।३।८५। इत्यपि अनित्यत्वात् न । ननु "दध्युर०" ७।३।१७२। इति कच् कथ न भवतीत्याह–समासान्तविधेरित्यादि । नैष दोष, नात्र नपुंसकस्येत्यनेन प्रकृतं नाम विशेष्यतेऽपि तु सत्यपि तदन्तविधौ दध्याद्यन्तस्यानपुंसकस्य ग्रहण नोपपद्यते नपुंसकस्येत्यनुवृत्तेः,

इक्षुणा–अस्वाङ्गत्वात् “सक्थ्यक्ष्णः स्वाङ्गे” ॥ ७ । ३ । १२६ ॥ इति समासान्तो न भवति । अतिदध्या स्त्रिया, प्रियास्थ्न्यै शुन्यै–अत्रानादेशे सति नान्तत्वात् ङीः । टादाविलेव ? दधिनी, दधीनि । स्वर इत्येव ? दधिभ्याम्, दधिभिः । नपुंसकस्येत्येव ? दधातीत्येवं शीलो दधिः, दधिनामा वा, दधिना, दधये । दध्ना, अतिदध्ना कुलेनेत्यादौ विशेषविधानात् परमपि नागममनादेशो बाधते ॥ ६३ ॥

## अनाम्स्वरे नोऽन्तः ॥ १ । ४ । ६४ ॥

नाम्यन्तस्य नपुंसकस्य संबन्धिन्यामवर्जिते स्यादौ स्वरे परे नोऽन्तो भवति । वारिणी २, वारिणा, वारिणे, वारिणः २, वारिणोः २, वारिणि, त्रपुणी २, त्रपुणा, त्रपुणे, त्रपुणः २, त्रपुणोः २, त्रपुणि; कर्तृणी २ कुले, कर्तृणा, कर्तृणे, कर्तृणः २, कर्तृणोः २, कर्तृणि, प्रियगुरुणे, प्रियतिसृणः २–अत्र परत्वात् तिस्रादेशे सति नोऽन्तः । अनामिति किम् ? वारीणाम्, त्रपूणाम्, कर्तृणाम् एषु नागमाभावे नामि सति “दीर्घो नाम्यतिसृ०” ॥ १ । ४ । ४७ ॥

---

श्रुतत्वाद्दध्यादय एव । तदन्तानां त्वेषां दध्यादीनां लिङ्गान्तरेऽपि वर्तमानानां नपुंसकत्वमस्त्येव, तेन नपुंसके ये वर्त्तन्ते दध्यादयस्तदन्तस्य नाम्नोऽनपुंसकेऽपि वर्तमानस्य ग्रहणमुपपन्नं भवतीत्युदाहरति—**प्रियास्थ्ना शुना** इत्यादि । यदि तर्हि तदन्तस्य ग्रहणं केवलानां न सिध्यति, अयमप्यदोषः, व्यपदेशिवद्भावात् केवलानामपि भविष्यति । ‘व्यपदेशिवद्भावोऽनाम्ना’ इति च न्यायः प्रत्ययविधिविषय एवेति नोपतिष्ठते । ननु दृढसक्थ्ना शकटेन, स्थूलाक्ष्णा इक्षुणा इत्यत्र “सक्थ्यक्ष्णः” इति समासान्तः टप्रत्ययः कथं न भवतीत्याह—**अस्वाङ्गत्वात्** इत्यादि । **अतिदध्या स्त्रिया** इति । यदात्र “इतोऽक्त्यर्थात्” इत्यनेन ङीस्तदा तद्व्यवधानादनेनादेशाभावे अतिदध्या इत्येव भवति। यदा तु दध्यतिक्रान्ता यया इति बहुव्रीहिस्तदा “दध्युर:०” इत्यनेन कचा भाव्यम्, तस्माद् दध्यतिक्रान्तया इति न्याय्ये तत्पुरुषसमास एव कृते तृतीयैकवचनेऽनेनादेशे ‘संनिपातलक्षणन्यायस्यानित्यत्वात्’ “स्त्रियां नृतो०” इति ङीप्रत्यये, “अनोऽस्य” इत्यकारलोपे, “इवर्णादे०” इति यत्वे भवति । **प्रियास्थ्न्यै शून्यै** इति । प्रियाणि अस्थीनि यस्यास्तस्यै इत्यर्थः, अत्र पूर्ववद्व्यवस्था । नन्वत्रानेनानादेशे सति ‘संनिपात०’ इति न्यायसत्त्वे कथं “स्त्रियां नृतो०” इति ङीरित्याह—**अत्रानादेशे सतीत्यादि** । पूर्वोक्तन्यायानित्यत्वसमाश्रयणेन ङीरत्र बोध्यः । दध्यादीनां स्वभावेनैव नपुंसकत्वाद् व्यभिचाराभावात् तद्विशेषणमनर्थकम्, उच्यते–यदा ते यदृच्छाशब्दा वा सन्तो लिङ्गान्तरे वर्त्तन्ते, तदाऽस्ति व्यभिचार इति तद्व्यवच्छेदार्थं तद्विशेषणमित्याह—**नपुंसकस्येत्येवेत्यादि** । अतिदध्ना ब्राह्मणेन वारिणीत्यादौ अन्नागमयोः सावकाशत्वात् दध्ना इत्यादावुभयप्राप्तौ “स्पर्द्धे” परमिति परत्वादसंबाधितत्वात् नागम एव प्राप्नोति, उच्यते–परशब्दस्येष्टवाचित्वात् स्पर्द्धे यदिष्टं तद्भवतीति व्याख्यानात् पूर्वविप्रतिषेधेन नागमं बाधित्वा अनादेश एव भवति । यदाऽस्य योगस्योत्तरत्रानुवृत्ते ‘अनाम्स्वरे नोऽन्तः’ ‘दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान् टादाविति’ तत्र वाक्यभेदेन ‘अनाम्स्वरे’ इति सामान्येन नोऽन्तो भवति, दध्यादीनां तु टादौ स्वरे अन् भवतीति विशेषविधानात् तं बाधित्वाऽनेन भवतीत्याह—**विशेषविधानादित्यादि** । परत्वं तु यथावस्थितसूत्रापेक्षया नागमस्योक्तमिति ॥ ६३ ॥

**अनाम्स्वरे नोऽन्तः** । नामिन इति नपुंसकस्येति चानुवर्तते । नपुंसकस्येति स्यादावित्यधिकृतस्य विशेषणं, तेन नपुंसकस्य संबन्धिन्येव स्यादावित्याह—**नपुंसकस्येत्यादि** । **वारिणी** इति । वारिशब्दादौप्रत्यये अनवकाशत्वात् “इवर्णादे०” इति यत्वं परत्वात् “इदुतोऽस्त्रेरीदूत्” इतीत्वं “औरी” इति च बाधित्वाऽनेन नागमे “औरी” इति ईत्वे “रषृवर्णा०” इति णत्वे रूपम् । एवं **त्रपुणी** इत्यादावपि द्रष्टव्यम् । प्रियास्तिस्रो यस्य कुलस्येति प्रियत्रिशब्दात् षष्ठ्येकवचनेऽपि नित्यत्वात् नागमे कथं तिस्रादेश इति ? नैव, स्थानान्तरप्रवृत्त्या न नागमो नित्य इति द्वयोरन्यत्र सावकाशत्वात् परत्वात् पूर्वं तिस्रादेशे कृते पश्चात् नागम इत्याह—**प्रियतिसृण** इत्यादि । अथ किमर्थमाम्वर्जनम् ? नामि नागमे च रूपस्य समानत्वात्, नैवम्, नागमे सति दीर्घत्वाभावाद् वारीणामित्यादयो न सिध्येयुरित्याह—**अनामिति किम्** इत्यादिना । अथ किमर्थं स्वरग्रहणम् ? न च वाच्यं त्रपुभ्यां त्रपुभिरित्यादौ व्यञ्जनेऽपि नोऽन्तः स्यादिति तद्व्यावृत्त्यर्थमिति, कृतेऽपि नागमे “नाम्नो नोऽनह्नः” इति नलोपभावात्, इह तर्हि अतिराभ्याम् अतिराभिः इति नागमे सति समुदायभक्तत्वादवयवस्य रैशब्दस्य तेन व्यवधानात् स्यादिविधौ च नलोपस्यासिद्धत्वात् “आ रायो व्यञ्जने” २।१।५। इत्यात्वं न भवति । अथ स्याद्याक्षिप्तायाः प्रकृते रैशब्देन विशेषणात् रैशब्दान्तयोः प्रकृतेरात्वं विधीयत इति नास्ति नागमेन प्रकृतेर्व्यवधानं, तथापि नकारस्यात्वं प्राप्नोति तस्मिन् पूर्वस्य यत्वे सति अतियोभ्यामित्यनिष्टं रूपमापद्यते । नैष दोषः । परत्वात् पूर्वमात्वमेव भविष्यति, द्वयोरन्यत्र सावकाशत्वादिति । इह तर्हि प्रियतिसृभ्यां प्रियतिसृभिरिति नित्यत्वात् पूर्वं नागमे सति तिसृभावो न प्राप्नोति, नैव, अत्राप्युभयोरनित्यत्वात् परत्वात् पूर्वं तिसृभावः । तथाहि–शब्दान्तरप्राप्त्या नागमोऽनित्यस्तिसृभावस्तु नागमेन व्यवधानात् न प्राप्नोतीत्यनित्यः । स हि यद्यपि त्रिशब्दान्तनाम्नो विधीयते, तद्भक्तत्वाच्च नागमोऽव्यवधायकस्तथापि ‘निर्दिश्यमानस्यादेशा भवन्ति’ इति त्रेरेव तिसृभावेन भाव्यम्, स च व्यवहित इति तिसृभावस्याप्राप्तिः । तिसृभावे च कृते ‘पुनः प्रसङ्गविज्ञानात्’ अपि न भवति, ‘सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव’ इति न्यायात् । एवं तर्हि नामादेशे कृते नागमो मा भूदित्येवमर्थं, तेन त्रपूणां जतूनामिति “दीर्घो नाम्य०” इति दीर्घः सिध्यति । असति तु स्वरग्रहणे कृताकृतप्रसङ्गित्वेन नागमे सति ह्रस्वाभावात् नामादेशाभावे दीर्घो न स्यादिति । अथ तत्र विहितविशेषणात् कृतेऽपि नागमे नाम् भविष्यति । यद्वा ‘अनाम्’ इत्याम्प्रतिषेधात् पूर्वं नामादेशे तस्य च स्थानिवद्भावाभावात् नागमाभावे न काचित् क्षतिरिति । एवं तर्हि स्वरादौ यथा स्यादिह मा भूत्–त्रपु, जतु प्रत्ययलोपलक्षणेन स्यादिसद्भावात् । अथ “लुप्यय्वृल्लेनत्” इति प्रतिषेधात् स्यादेरभावात् न भविष्यति, सत्यम्, अत एव स्वरग्रहणात् क्वचित्प्रत्ययलक्षणं भवतीति विज्ञायते । तेन हे त्रपो !, प्रियतिसृ कुलं, प्रियचतसृ कुलमिति सिद्धम् । अत एव च “नामिनो लुग्वा” इति तदनुवादः कृतः । द्विविधं हि विभक्तेरस्तित्वं, मुख्यमौपचारिकं च । तत्र मुख्यं श्रूयमाणायाः इतरत्तु लुप्तायास्तत्कार्यस्य हि अस्तित्वाद्विभक्तिरप्युपचारेणास्तीति, उच्यते–तद्यथा अस्त्यतीतं कर्म इति । अत्र हि अतीतेन कर्मणा यदाहितं फलदानसामर्थ्यं तस्यास्तित्वात् कर्मोऽप्य-

## वाऽन्यतः पुमांष्टादौ स्वरे ॥ १ । ४ । ६२ ॥

यो नाम्यन्तः शब्दोऽन्यतो विशेष्यवशात् नपुंसकः स टादौ स्वरे परे पुंवद् वा भवति, यथा पुंसि नाऽऽगमह्रस्वौ न भवतस्तथाऽत्रापि न भवत इत्यर्थः । ग्रामण्या, ग्रामणिना कुलेन; ग्रामण्ये, ग्रामणिने कुलाय, ग्रामण्यः, ग्रामणिनः कुलात्; ग्रामण्यः, ग्रामणिनः कुलस्य; ग्रामण्योः, ग्रामणिनोः कुलयोः, ग्रामण्यां, ग्रामणीनां कुलानाम्, ग्रामण्यां, ग्रामणिनि कुले; एवं कर्त्रा, कर्तृणा; कर्त्रे, कर्तृणे, कर्तुः, कर्तृणः, कर्त्रोः, कर्तृणोः; कर्तॄणाम्, कर्तॄणाम्; कर्तरि, कर्तृणि, शुचये, शुचिने; शुचेः, शुचिनः, शुच्योः, शुचिनोः, शुचौ, शुचिनि, मृदवे, मृदुने; मृदोः, मृदुनः; मृद्वोः, मृदुनोः; मृदौ, मृदुनि, चित्रगवे, चित्रगुणे, अतिराया, अतिरिणा, अतिनावा, अतिनुना; अह्वयवे, अह्वयुने, कुमारीवाचरतीति क्विप्, कुमारीं वेच्छतीति क्यन्, क्विप्—कुमार्यै, कुमारिणे कुलाय । अन्यत् इति किम्? त्रपुणे, जतुने, पीलुने फलाय । टादाविति किम्? ग्रामणिनी शुचिनी कुले । स्वर इति किम्? ग्रामणिभ्यां कुलाभ्याम्, ग्रामणिभिः कुलैः । नामिन इत्येव? कीलालपेन कुलेन । नपुंसक इत्येव? कल्याण्यै ब्राह्मण्यै ॥ ६२ ॥

## दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान् ॥ १ । ४ । ६३ ॥

दधि अस्थि सक्थि अक्षि इत्येतेषां नपुंसकानां नाम्यन्तानामन्तस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा टादौ स्वरे परे अन् इत्ययमादेशो भवति । दध्ना, दध्नि, दधनि, अस्थ्ना, अस्थ्ने, अस्थ्नि, अस्थनि; सक्थ्ना, सक्थ्ने, सक्थ्नि, सक्थनि; अक्ष्णा, अक्ष्णे, अक्ष्णि, अक्षणि; परमदध्ना, परमास्थ्ना, परमसक्थ्ना, परमाक्ष्णा, अतिदध्ना, अत्यस्थ्ना, अतिसक्थ्ना, अत्यक्ष्णा । प्रियदध्ना—समासान्तविधेरनित्यत्वात् कच् न भवति, प्रियास्थ्ना शुना, दृढसक्थ्ना शकटेन, स्थूलाक्ष्णा

---

वान्यत पुमांष्टादौ स्वरे । नामिन इति वर्तते, तथया नपुंसकस्य विशेषणं तथा अन्यत इत्यपि, तच्च पञ्चम्यन्तमप्यर्थवशात् प्रथमान्ततया विपरिणम्यते इत्याह—यो नाम्यन्त इत्यादि । अन्यत इति व्याचष्टे—विशेष्यवशादिति । अन्यत इति सामान्याभिधानेऽपि तदन्यद्विशेष्यमेव विज्ञायते, विशेष्यादन्यत्र लिङ्गाभावात् । अयमभिप्रायः—इह हि द्विविधलिङ्गव्यवस्था । केषांचित् स्वत एव लिङ्गम्, यथा दधिमघ्वादिजातिशब्दानाम् । केषांचिदन्यतो विशेष्यात्, यथा गुणक्रियाद्रव्यसम्बन्धनिमित्तानां पट्वादिशब्दानाम्, ते हि विशेष्यलिङ्गमुपाददते न तेषां स्वतो व्यवस्थितं किंचिल्लिङ्गमस्तीति । तथा हि—पटुः पुमान्, पट्वी स्त्री, पटु कुलमिति विशेष्यत एव लिङ्गं दृश्यते न स्वत इति । अतोऽन्यत इति क्रियागुणद्रव्यसम्बन्धप्रवृत्तिनिमित्ताः शब्दा अभिधीयन्ते इति । अन्यतो नपुंसक इत्युच्यमानेऽपि नपुंसकोपादायिना शब्देन तदेव पुंस्त्वोपादानाभाव । अथ विशेषणलक्षणपदोपक्षीणत्वात् कार्ये सन्निधानाभावात् स्त्रियामपि पुंभावः स्यादिति चेन्न 'परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेणापि वत्यर्थं गमयत्येव' यथा—अब्रह्मदत्ते ब्रह्मदत्त इति । अत्र हि निर्ज्ञातेऽथ झटिति ब्रह्मदत्ते पदार्थैकदेशभूतारूढसंबन्धान् क्रियागुणस्यानुपलभ्य एष ब्रह्मदत्त इत्युच्यते । समुदायपदार्थवादिनो ह्यवयवेऽपि शब्दप्रवृत्तिः । एवंभूतस्तु अतिदेश इति नोपपद्यते, न हि नपुंसकस्य स्वतो लिङ्गधर्माः केचित्प्रसिद्धाः सन्तीति । अस्ति तु लोके भाविनो धर्मान् भूतवदुपादाय व्यपदेश एष ब्रह्मदत्त इति लभतामयं प्रतिपद्यतामयं ब्रह्मदत्तधर्मानिति भूतवदुपादाय सोऽयमित्यभिसम्बन्धेन तत्स्यप्रतिलम्भः । एवमिहापि भाविनो नागमाभावादीन् पुंलिङ्गाश्रयान् धर्मानुपादाय वतिमन्तरेणापि नपुंसके तच्छब्दस्य प्रवृत्तिरित्याह—पुंवद्वा भवतीति । पुंस्त्वातिदेशेन साध्यमर्थं दर्शयति—यथा पुंसि इत्यादि । नागमह्रस्वौ इति । "अनाम्स्वरे नोऽन्तः" इति नागमः, "क्लीबे" इत्यादि ह्रस्वत्वं च न भवतीत्ययमर्थः पुंवद्भवतीत्यनेन साध्यते । पुमनुवादेन चात्र न किंचित्कार्यं शास्त्रविहितमस्तीति पुंस्त्वदृष्टस्य नपुंसककार्यस्यैव नागमह्रस्वलक्षणस्य पुंभावेनाभावः प्रयोजनत्वेनोच्यते, न च स्त्रियां तत्संभवतीति । ग्रामण्यादि । ग्रामणीशब्दाद् टादौ स्वरे पक्षेऽनेन पुंवद्भावात् ह्रस्वनागमाभावे यथासंभवं "निय आम्" इति ङेरामादेशे "क्विब्वृत्तेरसुधियस्तौ" इति यत्वम्, तद्विमुक्तपक्षे ह्रस्वत्वं नागमश्चेति । एवं कर्त्रा कर्तृणेत्यादि । कर्तॄणाम्, कर्तॄणामिति । द्वयोरपि "ह्रस्वापश्च" इति नाम्, न त्वपुंस्त्वपक्षे अनाम् इति नोन्तः, तन्नाम्नो वर्जितत्वात् । द्वितीयप्रयोगो रूपनिर्णयार्थो दर्शितः, न तु तस्य किंचिदन्यत्फलम् । चित्रगवे इति । चित्रा गावो यस्येति विग्रहः, अत्र क्लीबे ह्रस्वत्वम्, तत्पुंस्त्वे सति निवर्तते, ततश्च "गोश्चान्ते०" ह्रस्वः, ततः "ङित्यदिति" इत्योत्वम् । टायां क्लीबे पुंवत्त्वे च चित्रगुणा इति रूपाविशेषात् चतुर्थ्या उदाहरणप्रदर्शनम् । पुंवत्त्वाभावपक्षे रूपमाह—चित्रगुणे इति । एवं चित्रगोः चित्रगुणः इत्यादि रूपाणि पुंवत्त्वे तदभावे क्लीबे च बोध्यानि । अतिराया इति । रायमतिक्रान्तेन कुलेनेत्यर्थः । पुंवत्त्वे सति टादौ स्वरादौ विभक्तौ नागमह्रस्वत्वाभावः । पुंवत्त्वाभावे रूपमाह—अतिरिणा इति । अत्र नागमह्रस्वौ । एवं अतिराये अतिरिणे इत्यादि बोध्यम् । अतिनावा, अतिनुना इति । नावमतिक्रान्तेन कुलेनेत्यर्थः । पूर्वं रूपं पुंवत्त्वे, परं तु तदभावे इति विशेषः । एवं अतिनावे अतिनुने इत्यादिबोध्यम् । अतिरि अतिनु इत्यनयोः "क्लीबे" इति ह्रस्वत्वे इकार उकारश्च बोध्य इति । नामिन इत्यनुवृत्तिरत्र क्रमप्राप्ता, वस्तुतस्त्वत्र ए ऐ ओ औ इत्येषां ह्रस्वत्वेन इदुद्रूपत्वादविशेषः । कुमार्यै इति । अत्र यद्यपि कुमारीशब्दः पुंवत् तथापि नित्यस्त्रीविषयत्वादीकारस्य "स्त्रीदूतः" इति दैः । त्रपुणे, जतुने इति । त्रपुजत्वादिशब्दानां जातिशब्दत्वात् न विशेष्यनिबन्धनं नपुंसकत्वमित्यन्यत इति वचनात् पुंभावो न भवति । ग्रामणिनी इति । अत्र स्वरत्वेऽपि टादित्वाभावात् न पुंवत्त्वम् । ग्रामणिभ्याम् इत्यादि । अत्र टादित्वेऽपि स्वरत्वाभावः । कीलालपेन इति । नाम्यन्तत्वाभावादत्र न पुंवत्त्वम् । कल्याण्यै ब्राह्मण्यै इति । अत्र नपुंसकोपादायिशब्दाभावात् न पुंवत्त्वम् ॥ ६२ ॥

दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान् । नपुंसकस्येति टादौ स्वरे इति नामिन इति च वर्तते । दध्यस्थिसक्थ्यक्ष्ण इत्यन्तस्य कार्यिणो विशेषणम्, अतष्टादौ स्वरे इत्यस्य परत्वमात्रं विज्ञायते न तत्संबन्धित्वमेवेत्याह—तत्संबन्धिनीत्यादि । दध्ना इति । दधिशब्दस्यान्तस्य टादौ स्वरेऽनेनानादेशे "अनोऽस्य" इत्यकारलोपे रूपम् । दध्नि, दधनि इति । "ईङौ वा" इति विकल्पेनाकारलुक् । एवमन्यदपि । अत्र नपुंसकार्थविशिष्टैर्दध्यादिभिः स्याद्याक्षिप्तं नाम विशेष्यते, तेन दध्याद्यन्तस्यापि नाम्नोऽन्तस्यान् भवतीत्युदाहरति—परमदध्ना इत्यादि । प्रियदध्ना इत्यत्र "दध्युरः०" ७।३।१७२। इति कच् कथं न भवतीत्याह—समासान्तविधेरित्यादि । "अक्ष्णोऽप्राण्यङ्गे" ७।३।८५। इत्यपि अनित्यत्वात् न । ननु सत्यपि तदन्तविधौ दध्याद्यन्तस्यानपुंसकस्य ग्रहणं नोपपद्यते नपुंसकस्येत्यनुवृत्ते, नैष दोषः, नात्र नपुंसकस्येत्यनेन प्रकृतं नाम विशेष्यतेऽपि तु

इक्षुणा—अस्वाङ्गत्वात् "सक्थ्यक्ष्णः स्वाङ्गे" ॥ ७ । ३ । १२६ ॥ इति समासान्तो न भवति । अतिदध्या स्त्रिया, प्रियास्थ्न्यै शुन्यै—अत्रानादेशे सति नान्तत्वात् ङीः । टादावित्येव ? दधिनी, दधीनि । स्वर इत्येव ? दधिभ्याम्, दधिभिः । नपुंसकस्येत्येव ? दधातीत्येवं शीलो दधिः, दधिनामा वा, दधिना, दधये । दध्ना, अतिदध्ना कुलेनेत्यादौ विशेषविधानात् परमपि नागममनादेशो बाधते ॥ ६३ ॥

## अनाम्स्वरे नोऽन्तः ॥ १ । ४ । ६४ ॥

नाम्यन्तस्य नपुंसकस्य संबन्धिन्यामूवर्जिते स्यादौ स्वरे परे नोऽन्तो भवति । वारिणी २, वारिणा, वारिणे, वारिणः २, वारिणोः २, वारिणि; त्रपुणी २, त्रपुणा, त्रपुणे, त्रपुणः २, त्रपुणोः २, त्रपुणि, कर्तृणी २ कुले, कर्तृणा, कर्तृणे, कर्तृणः २, कर्तृणोः २, कर्तृणि, प्रियगुरुणे, प्रियतिसृणः २—अत्र परत्वात् तिस्रादेशे सति नोऽन्तः । अनामिति किम् ? वारीणाम्, त्रपूणाम्, कर्तॄणाम् एषु नागमाभावे नामि सति "दीर्घो नाम्यतिसृ०" ॥ १ । ४ । ४७ ॥

---

श्रुतत्वाद्दध्यादय एव । तदन्ताना त्वेषा दध्यादीना लिङ्गान्तरेऽपि वर्तमानाना नपुसकत्वमस्त्येव, तेन नपुसके ये वर्तन्ते दध्यादयस्तदन्तस्य नाम्नोऽनपुसकेऽपि वर्तमानस्य ग्रहणमुपपन्न भवतीत्युदाहरति—**प्रियास्थ्ना शुना** इत्यादि । यदि तर्हि तदन्तस्य ग्रहणं केवलाना न सिध्यति, अयमप्यदोष , व्यपदेशिवद्भावात् केवलानामपि भविष्यति । 'व्यपदेशिवद्भावोऽनाम्ना' इति च न्याय प्रत्ययविधिविषय एवेति नोपतिष्ठते । ननु दृढसक्थ्ना शकटेन, स्थूलाक्ष्णा इक्षुणा इत्यत्र "सक्थ्यक्ष्ण" इति समासान्त टप्रत्यय कथ न भवतीत्याह—**अस्वाङ्गत्वात्** इत्यादि । **अतिदध्या स्त्रिया** इति । यदात्र "इतोऽक्त्यर्थात्" इत्यनेन ङीस्तदा तद्व्यवधानादनेनादेशाभावे अतिदध्या इत्येव भवति। यदा तु दध्यतिक्रान्त यया इति बहुव्रीहिस्तदा "दध्युर ०" इत्यनेन कचा भाव्यम्, तस्माद् दध्यतिक्रान्तया इति न्याय्ये तत्पुरुषसमास एव कृते तृतीयैकवचनेऽनेनादेशे 'सनिपातलक्षणन्यायस्यानित्यत्वात्' "स्त्रियां नृतो०" इति ङीप्रत्यये, "अनोऽस्य" इत्यकारलोपे, "इवर्णादे०" इति यत्वे भवति । **प्रियास्थ्न्यै शून्यै** इति । प्रियाणि अस्थीनि यस्यास्तस्यै इत्यर्थ , अत्र पूर्ववद्व्यवस्था । नन्वत्रानेनानादेशे सति 'संनिपात०' इति न्यायसत्त्वे कथ "स्त्रियां नृतो०" इति ङीरित्याह—**अत्रानादेशे सतीत्यादि** । पूर्वोक्तन्यायानित्यत्वसमाश्रयणेन ङीरत्र बोध्य । दध्यादीनां स्वभावेनैव नपुसकत्वाद् व्यभिचाराभावात् तद्विशेषणमनर्थकम् , उच्यते—यदा ते यदृच्छाशब्दा वा सन्तो लिङ्गान्तरे वर्तन्ते, तदाऽस्ति व्यभिचार इति तद्व्यवच्छेदार्थं तद्विशेषणमित्याह—**नपुंसकस्येत्येवेत्यादि** । अतिदध्ना ब्राह्मणेन वारिणीत्यादौ अन्नागमयो सावकाशत्वात् दध्ना इत्यादावुभयप्राप्तौ "स्पर्द्धे" परमिति परत्वादसबाधितत्वात् नागम एव प्राप्नोति, उच्यते—परशब्दस्येष्टवाचित्वात् स्पर्द्धे यदिष्ट तद्भवतीति व्याख्यानात् पूर्वविप्रतिषेधेन नागम बाधित्वा अनादेश एव भवति । यदाऽस्य योगस्योत्तरत्रानुवृत्ते 'अनाम्स्वरे नोऽन्त ' 'दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान् टादाविति' तत्र वाक्यभेदेन 'अनाम्स्वरे' इति सामान्येन नोन्तोभवति, दध्यादीना तु टादौ स्वरे अन् भवतीति विशेषविधानात् त बाधित्वाऽनेन भवतीत्याह—**विशेषविधानादित्यादि** । परत्व तु यथावस्थितसूत्रापेक्षया नागमस्योक्तमिति ॥ ६३ ॥

**अनाम्स्वरे नोऽन्तः** । नामिन इति नपुसकस्येति चानुवर्तते । नपुसकस्येति स्यादावित्यधिकृतस्य विशेषण, तेन नपुसकस्य सबन्धिन्येव स्यादावित्याह—**नपुंसकस्येत्यादि** । **वारिणी** इति । वारिशब्दादौप्रत्यये अनवकाशत्वात् "इवर्णादे०" इति यत्व परत्वात् "इदुतोऽस्त्रेरीदूत्" इतीत्व "औरी" इति च बाधित्वाऽनेन नागमे "औरी" इति ईत्वे "रषृवर्णा०" इति णत्वे रूपम् । एवं **त्रपुणी** इत्यादावपि द्रष्टव्यम् । प्रियास्तिस्रो यस्य कुलस्येति प्रियत्रिशब्दात् षष्ठ्येकवचनेऽपि नित्यत्वात् नागमे कथ तिस्रादेश इति ? नैव, स्थानान्तरप्रवृत्त्या न नागमो नित्य इति द्वयोरन्यत्र सावकाशत्वात् परत्वात् पूर्वं तिस्रादेशे कृते पश्चात् नागम इत्याह—**प्रियतिसृण** इत्यादि । अथ किमर्थमामूवर्जनम् ? नामि नागमे च रूपस्य समानत्वात् , नैवम् , नागमे सति दीर्घत्वाभावाद् वारीणामित्यादयो न सिध्येयुरित्याह—**अनामिति किम्** इत्यादिना । अथ किमर्थं स्वरग्रहणम् ? न च वाच्य त्रपुभ्यां त्रपुभिरित्यादौ व्यञ्जनेऽपि नोऽन्त स्यादिति तद्व्यावृत्त्यर्थमिति, कृतेऽपि नागमे "नाम्नो नोऽनह्न" इति नलोपभावात्, इह तर्हि अतिराभ्याम् अतिराभि इति नागमे सति समुदायभक्तत्वादवयवस्य रैशब्दस्य तेन व्यवधानात् स्यादिविधौ च नलोपस्यासिद्धत्वात् "आ रायो व्यञ्जने" २।१।५। इत्यात्व न भवति । अथ स्याद्याक्षिप्ताया प्रकृते रैशब्देन विशेषणात् रैशब्दान्तयो प्रकृतेरात्व विधीयत इति नास्ति नागमेन प्रकृतेर्व्यवधान, तथापि नकारस्यात्व प्राप्नोति तस्मिन् पूर्वस्य यत्वे सति अतिर्याभ्यामित्यनिष्ट रूपमापद्यते । नैष दोष । परत्वात् पूर्वमात्वमेव भविष्यति, द्वयोरन्यत्र सावकाशत्वादिति । इह तर्हि प्रियतिसृभ्या प्रियतिसृभिरिति नित्यत्वात् पूर्वं नागमे सति तिसृभावो न प्राप्नोति, नैव, अत्राप्युभयोरनित्यत्वात् परत्वात् पूर्वं तिसृभाव । तथाहि—शब्दान्तरप्राप्त्या नागमोऽनित्यस्तिसृभावस्तु नागमेन व्यवधानात् न प्राप्नोतीत्यनित्य । स हि यद्यपि त्रिशब्दान्तनाम्नो विधीयते, तद्भक्तत्वाच्च नागमोऽव्यवधायकस्तथापि 'निर्दिश्यमानस्यादेशा भवन्ति' इति त्रेरेव तिसृभावेन भाव्यम्, स च व्यवहित इति तिसृभावस्याप्राप्ति । तिसृभावे च कृते 'पुन प्रसङ्गविज्ञानात्' अपि न भवति, 'सकृद्गतौ विप्रतिषेधे यद्बाधित तद्बाधितमेव' इति न्यायात् । एव तर्हि नामादेशे कृते नागमो मा भूदित्येवमर्थं, तेन त्रपूणा जतूनामिति "दीर्घो नाम्य०" इति दीर्घ सिध्यति । असति तु स्वरग्रहणे कृताकृतप्रसक्तित्वेन नागमे सति ह्रस्वाभावात् नामादेशाभावे दीर्घो न स्यादिति । अथ तत्र विहितविशेषणात् कृतेऽपि नागमे नाम् भविष्यति । यद्वा 'अनाम्' इत्याम्प्रतिषेधात् पूर्वं नामादेशे तस्य च स्थानिवद्भावाभावात् नागमाभावे न काचित् क्षतिरिति । एव तर्हि स्वरादौ यथा स्यादिह मा भूत्—त्रपु, जतु प्रत्ययलोपलक्षणेन स्यादिसद्भावात् । अथ "लुप्यय्वृल्लेनत्" इति प्रतिषेधात् स्यादेरभावात् न भविष्यति, सत्यम् , अत एव स्वरग्रहणात् क्वचित्प्रत्ययलक्षणं भवतीति विज्ञायते । तेन हे त्रपो !, प्रियतिसृ कुल, प्रियचतसृ कुलमिति सिद्धम् । अत एव च "नामिनो लुग्वा" इति तदनुवाद कृत । द्विविध हि विभक्तेरस्तित्व, मुख्यमौपचारिक च । तत्र मुख्य श्रूयमाणाया इतरत्तु लुप्तायास्तत्कार्यस्य हि अस्तित्वाद्विभक्तिरप्युपचारेणास्तीति, उच्यते—तद्यथा अस्त्यतीत कर्म इति । अत्र हि अतीतेन कर्मणा यदाहित फलदानसामर्थ्यं तस्यास्तित्वात् कर्मोऽप्य-

इत्यादिना दीर्घः सिद्धः। स्वरे इति किम्? हे वारे!, हे त्रपो!। स्यादावित्येव? तौम्बुरवं चूर्णम्। नामिन इत्येव? काण्डे, कुण्डे। नपुंसकस्येत्येव? मुनी, साधू। तत्संबन्धिविज्ञानादिह न भवति–प्रियवारये पुंसे, प्रियमधोः पुंसः॥ ६४॥

## स्वराच्छौ ॥ १। ४। ६५॥

जस्शसादेशे शौ परे स्वरान्तात् नपुंसकात् परो नोऽन्तो भवति। कुण्डानि, वनानि, प्रियवृक्षाणि, कुलानि, वारीणि, त्रपूणि; कर्तॄणि। स्वरादिति किम्? चत्वारि, अहानि, विमलदिवि; सुगणि। अत इत्येव सिद्धे स्वरग्रहणमुत्तरार्थम्॥ ६५॥

## धुटां प्राक् ॥ १। ४। ६६॥

स्वरात् परा या धुड्जातिस्तदन्तस्य नपुंसकस्य धुड्भ्य एव प्राक् शौ परे नोऽन्तो भवति। पयांसि तिष्ठन्ति,

---

स्तीत्युक्तम्। तत्र स्यमो "नामिनो लुग्वा" इति लुप्तत्वात् मुख्य तावदस्तित्वं नास्ति, लुक्पक्षे प्रत्ययलोपलक्षणादुपचरितमस्तीत्याह—**स्वरे** इत्यादि। पूर्वसूत्रे च स्वरग्रहणं टादिसबद्धमेवेति नेहानुवर्तनीयमिति। कथ "मर्यादाभिविधौ च य" इति समाहारत्वे नपुंसकत्वात् स्वरे नागमो न भवतीति? उच्यते–समाहारोऽत्र समुदाय सावयवधर्मेणाभि विध्यवयववाचाऽभिविधिर्मर्यादावयवत्वात् मर्यादेति व्यपदेक्ष्यते, ततो विशेषणसमासेन सिद्धम्। **तौम्बुरवं चूर्णम्** इति। तुम्बुरुणो वृक्षस्य विकारोऽवयवश्चूर्णं "प्राण्यौपधिवृक्षेभ्यो०" ६।१।३१। इत्यणि "वृद्धि स्वरे०" इति वृद्धौ स्याद्यभावात् नागमाभावे "अस्वयम्भुवोऽव्" ७।४।७०। इत्यवादेशे तौम्बुरवम् इति सिध्यति। **नामिन इत्येव? काण्डे, कुण्डे** इति। अत्राकारान्तत्वेन नाम्यन्तत्वाभावान्न नागम। कुलयोरित्यत्र कुले ओस् इत्यवस्थाया नाम्यन्तत्वेऽपि न नागम, क्लीबे नाम्यन्तस्य सत्त्वे स्यादौ विज्ञानात्। द्वयोरित्यत्र नागमात् पूर्वं परत्वादन्तरङ्गत्वाच्च "आद्वेर०" इत्यत्वे, पश्चात् एत्वे कृते 'सकृद्गति०' इति न्यायात् न नागम। **मुनी, साधू** इति। अत्र नपुंसकत्वाभावात् नोऽन्तो न। **प्रियवारये** इत्यादि। अत्र स्यादेर्नपुंसकसंबन्धित्वाभावात् नेद प्रवर्तते॥ ६४॥

**स्वराच्छौ**। अत्र नोन्त इति नपुंसकस्य इति चानुवर्तते। इह स्याद्यधिकारादन्यस्य शेरसम्भवाज्जस्शसादेश एव शिर्गृह्यते इत्याह—**जस्शसादेशे** इत्यादि। कुण्डशब्दात् जस्शसो "नपुंसकस्य शि" इति श्यादेशे, अनेन नागमे, "निदीर्घ" इति दीर्घत्वे—**कुण्डानि**। एवमन्यदपि। चतुर्‌अहन्‌शब्दाभ्याम् पूर्ववत् श्यादेशे स्वरादिति वचनात् नागमाभावे "वा शेषे" इति वादेशे "निदीर्घ०" इति दीर्घत्वे च—**चत्वारि, अहानि** इति। एवं विमला द्यौर्येष्वहस्सु इति बहुव्रीहौ पूर्ववत् श्यादेशादौ—**विमलदिवि** इत्यादि। ननु इवर्णादे "अनाम्स्वरे नोऽन्त" इति शौ नागम सिद्ध एव, आकारान्तस्य तु अन्त्यस्य नपुंसके ह्रस्वविधानात् स्थितिरेव नास्ति इति अत इत्येव युज्यते किं स्वरग्रहणेन? अत आह—**अत इत्येवे**त्यादि। **उत्तरार्थमि**ति। उत्तरसूत्रे स्वरग्रहण प्रयोजनवदित्यर्थ॥ ६५॥

**धुटां प्राक्**। अत्र स्वरात् शौ इति नपुंसकस्येति नोऽन्त इति चानुवर्तते। इह धुटां इत्यधिकृतस्य नपुंसकस्येत्यस्य विशेषणम्, तत्र तु तदन्तविज्ञानमित्याह—**तदन्तस्य नपुंसकस्ये**ति। **प्राक्** इति दिक्शब्दत्वात्तद्योगे पञ्चमीविज्ञानादन्यस्यासंभवाद्धुट एव विज्ञायते इत्याह—**धुड्भ्य एव प्रागि**ति। पयस्‌शब्दात् जसो "नपुंसकस्य शि" इति श्यादेशे सकारात् पूर्वमनेन नागमे "न्स्महतो" १।४।८६। इति दीर्घत्वे "शिड्हेऽनुस्वारः" इत्यनुस्वारे—**पयांसि** इति। एवं यशांसीत्याद्यपि द्रष्टव्यम्। ननु श्रेयांसि भूयांसि इति धुड्लक्षणे नागमे कृते 'पुन प्रसङ्गविज्ञानात्०' ऋदुदिल्लक्षण प्राप्नोतीति, तस्य प्रतिषेधो वक्तव्य, न च ऋदुदिल्लक्षणमयं बाधिष्यत इति वाच्यम्, व्यक्तौ पदार्थे 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्याय प्रवर्तते, आकृतौ तु नाश्रीयते इत्युभयोर्नागमयो प्रसङ्गे परस्परप्रतिबन्धादप्रतिपत्तौ प्राप्तायां "स्पर्द्धे" परमितीष्ट भवतीति वचनेन पूर्वो नागमो विधीयमान उत्तरकालप्राप्त निमित्तवन्तं परं नागम न शक्नोति बाधितुम्, तथा चोच्यते–'पुन प्रसङ्गविज्ञानात् सिध्यती'ति। अनागमस्य पूर्वो विधीयते सनागमस्य तु पर इति स्यादेतत्–अन्यस्याप्युच्यमान कार्यमन्यस्य बाधक भवति, उच्यते—असति खल्वपि संभवे बाधन भवति, अस्ति च संभवो यदुभय स्यात्–क्रमेण च नागमयोर्विधानादन्त्यात् स्वरात् परत्वमपि संभवति, यथा पचतीति धात्वपेक्ष तिव्शबो। भवतु को दोष? द्वयोर्नकारयो श्रवण प्रसज्येत, नैव, व्यञ्जनपरस्यैकस्य वाऽनेकस्य वा श्रवण प्रति विशेषाभावात्। ननु चैकस्यैको नकार परस्य द्वावित्येकत्वप्रतिज्ञाभेद। श्रुतिभेदेऽसति किं प्रतिज्ञाभेद करिष्यति? कथ पुन श्रुतिभेदाभावो यावताऽनेकव्यञ्जनोच्चारणेनाधिककालो व्याप्यते एकव्यञ्जनोच्चारणेन स्वल्पकाल इति, उच्यते–स्वरकालव्यतिरेकेण व्यञ्जनानि कालान्तरं नाक्षिपन्तीति दर्शनाश्रयेणैतदुच्यते। यत्तु शास्त्रे व्यञ्जनानां काल परिगण्यते तद्गुरुलाघवनिरूपणाय। अनेकोच्चारणे हि प्रयत्नस्य गौरव भवति। लौकिके तु प्रयोगे गुरुलाघवानादरात् श्रुत्यभेद उच्यते। अन्ये तु व्यञ्जनानां कालभेदमिच्छन्त्येव। तथा च श्रेयांसीत्यादौ परस्य नकारस्यानुस्वारे पूर्वस्य नकारस्य श्रवण प्राप्नोति। अनुस्वारस्य स्वरत्वाभ्युपगम औदन्ता इत्यत्र औकारस्यान्ता इति समासपरिग्रहात् ते चानुस्वारविसर्गादय श्रुत्या एवेति स्पष्ट एव नकारानुस्वारयोस्तत्र श्रुतिभेद। ननु 'वर्णग्रहणे जातिग्रहणमि'ति द्वयोर्नकारयोरेकोऽनुस्वार आदेशो विधास्यते, नैतदस्ति, जातेः कार्यासम्भवात् तदाधाराया व्यक्तौ कार्यसम्भवात्, स्थानिभेदादनुस्वारादेशद्वयप्रसङ्गात्। किं च म्रामिति बहुवचनस्यान्यार्थत्वात् गुणत्वादेकत्वसङ्ख्याया विवक्षितत्वादेकस्यैव नकारस्यानुस्वार स्यात् न तु द्वयो। एवं तर्हि व्यक्तिपदार्थाश्रयपूर्वविप्रतिषेधात् धुडन्तलक्षणो नागम उदिल्लक्षण बाधते, युवामित्यत्र "अमौ म" २।१।१६। इति मादेश "औरी" इतीत्ववदिति, पुन प्रसङ्गविज्ञान च जातिपक्षानभ्युपगमादत्र न भवति। यदप्युक्त–असति संभवे बाधनमिति, तदपि न, सत्यपि सम्भवे बाधनोपपत्ते, यथा–दधि ब्राह्मणेभ्यो दीयताम् तक्र कौण्डिन्यायेति सत्यपि दधिदानस्य संभवे तक्र निवर्तक भवति, एवमत्रापि। यद्यपि दृष्टान्ते सामान्यविशेषभावो बाधहेतुर्दार्ष्टान्तिके तु स्पर्धे परमेवेति नियमस्तथापि विनापि विरोधेन दृष्ट बाधकत्वमिति प्रदर्शनाय दृष्टान्तोपन्यास। यदप्युक्त–श्रुतिकृतोऽपि भेदोऽस्ति, तत्र पूर्वनकारस्य श्रवण, सोऽप्यदोष–अयोगवाहानामपि विशेषेणोपदेशात् शिट्त्वात् पूर्वस्याप्यनुस्वारो भवति। ततो द्वयोरनुस्वारयो श्रुतिं प्रति विशेषाभाव। कुर्वन्तीत्यत्रापि म्रामिति बहुवचनस्य व्याप्त्यर्थत्वात् पूर्वनकारस्य वर्गान्त्ये कृतेऽपरस्यापि वर्गान्त्य। नैव-वा उदिल्लक्षण प्राप्नोति, स्वरात् पर इति धुटां प्रागिति च तत्रानुवृत्ते। न च द्वयोर्नकारयोरेकस्वरापेक्ष परत्वं संभवति। पचति इत्यत्र तु शिति परत शब्विधानाद् विकरणव्यवधानमाश्रितमेव। अथवा–इष्टसिद्ध्यर्थं हि पूर्वविप्रतिषेधाश्रयणम्। इह च तदा-

पयांसि पश्य, उदश्विन्ति, सर्पीषि, धनूंषि; अतिजरांसि कुलानि । धुटामिति बहुवचनं जातिपरिग्रहार्थम्, तेन काष्ठतङ्क्षि, गोरङ्क्षि कुलानीति सिद्धम् । स्वरादित्येव ? गोमन्ति कुलानि । शावित्येव ? उदश्विता ॥ ६६ ॥

## लों वा ॥ १ । ४ । ६७ ॥

रेफलकाराभ्यां परा या धुड्जातिस्तदन्तस्य नपुंसकस्य धुटः प्राग् नोऽन्तो वा भवति, शौ परे । बहूर्ञ्जि, बहूर्जि; सुर्ञ्जि, सुर्जि; सुवल्ङ्गि, सुवल्गि । लें इति किम् ? काष्ठतङ्क्षि, पूर्वेण नित्यमेव । धुटामित्येव ? सुफुल्लि वनानि । शावित्येव ? बहूर्जा कुलेन ॥ ६७ ॥

## घुटि ॥ १ । ४ । ६८ ॥

अधिकारोऽयम्, निमित्तविशेषोपादानमन्तरेणाऽऽपादपरिसमाप्तेर्यत्कार्यं वक्ष्यते, तद् घुटि वेदितव्यम् ॥ ६८ ॥

---

श्रयणादनिष्टापत्तेः परविप्रतिषेधाद्दुदिल्लक्षण एव भवति । **अतिजरांसि** इति । जरामतिक्रान्तानि कुलानीति "क्लीबे" इति ह्रस्वत्वे, "नपुंसकस्य शि" इति जस् शसो वा श्यादेशे जरसा कुण्डानीत्यत्र तयोः सावकाशत्वादुभयप्राप्तौ नागमं बाधित्वा परत्वात् जरस् भवति, अत्र हि अतिजर इ इति स्थिते यदि पूर्वं नागमः स्यात् स च प्रकृतिभक्त इति प्रकृतिमेव न व्यवदध्यात्, अवयवस्य तु जराशब्दस्य व्यवधायक इति 'निर्दिश्यमानस्यादेशा भवन्तीति' स्याद्याक्षिप्तनामाधिकारे सत्यपि तदन्तग्रहणे जरान्तायाः प्रकृतेर्योऽवयवो जराशब्दस्तस्य विभक्तौ जरसादेशो विधीयमानो न प्राप्नोति । अथापि स्यात्तथापि सकारात् परस्य नकारस्य श्रवणं स्यात्, तस्मात् परत्वात् पूर्वं जरसादेश एष्टव्यः, तस्मिन्कृते धुडन्तलक्षणो नाऽऽगमः । अथेह लुक् कस्मात् न भवति ? अतिजरसं पश्येति, अतिजर अम् इति स्थिते 'एकदेशविकृतस्यानन्यत्वात्' जरशब्दस्य जरसि कृते "अनतो लुप्" इति लुप्प्राप्नोति । ननु अतिजरशब्दस्यादन्तत्वात् "अतः स्यमोऽम्" इत्यम्भावेन लुब्बाधिता कथं प्राप्नोति ? अनत इत्यनुवादकमित्युक्तत्वात्, नैतदस्ति, नात्राम्भावः प्रवृत्तः परत्वात् नित्यत्वाच्च जरसादेशेन बाधितत्वाज्जरसादेशे च कृतेऽनकारान्तत्वादम्भावाप्रसङ्गात् लुप्प्राप्तिश्चोद्यते । ननु किमर्थममः एव लुप् चोद्यते ? न हि सेर्जरस्भावः प्राप्नोति, स्वरः इत्युक्तेरिति । या पूर्वं लुक्प्राप्तिः सापवादेन बाध्यते, कृते तु जरस्भावे संनिपातपरिभाषया, तथाहि—स्वरादिसन्निपातेन जरस्भावो निष्पन्नो नोत्सहते स्वराद्यानन्तर्यं विहन्तुम् । यद्येवमतिजरसमतिजरसैरिति अप्राप्तिः, अतिजरमतिजरैरिति भाव्यम्, तथाहि—सेर्भिसश्चाकारान्तसंनिपातेन स्वरादिरादेशोऽकारान्तविघातिनं जरसादेशं प्रत्यनिमित्तं स्यात् सन्निपातपरिभाषावशात् । अतिजरसं पश्येत्यत्र तु नाकारान्तसंनिपातकृतं स्वरादित्वमिति भवत्येव जरसादेशः, स च स्वरादिसन्निपातनिमित्तत्वादमोलुपं प्रति अनिमित्तमिति लुब्भाव उच्यते । युक्तमेवैतत्, यद्भाष्यम्—'इष्टमेवैतत् गोनर्दीयस्येति' तदा तु "जरसो वा" इति सूत्रं नारब्धव्यमेवेति । धुड्जातिराश्रीयते न व्यक्तिरिति किं सम्प्रदायमात्रमुत किंचिन्निबन्धनमस्तीत्याह—**धुटामित्यादि** । काष्ठपूर्वात्तक्ष्णोतेः क्विपि जस् शसो वा श्यादेशेऽनेन नागमे "म्नां०" इति वर्गान्त्ये—**काष्ठतङ्क्षि इत्यादि** । **गोमन्ति** इति । "ऋदुदित" इति परत्वात् नागमेऽनेन नोन्तो न भवति ॥ ६६ ॥

**लों वा** । धुटां प्राक् इति नपुंसकस्येति नोऽन्त इति चानुवर्तते । सामान्यनिर्देशेऽपि पञ्चम्येव विज्ञायत इत्याह—**रेफलकाराभ्यामिति** । **बहूर्ञ्जि, बहूर्जि** इति । बहव ऊर्जो येष्विति जस् शसो वा "नपुंसकस्य०" इति श्यादेशेऽनेन रेफात् नाऽऽगमे "म्नां०" इति वर्गान्त्ये । सुष्ठु वल्गन्तीति क्विपि पूर्ववत्—**सुवल्ङ्गि, सुवल्गि** इति । बहूर्जिरेवेच्छन्त्यन्ये । **काष्ठतङ्क्षि** इति । लों इति वचनात् पाक्षिकनागमाभावे केन नोऽन्त इत्याह—**पूर्वेणेत्यादि** । **सुफुल्लि** इति । अन्तस्थालकारस्य धुट्त्वाभावादनेन न पाक्षिको नाऽऽगमः ॥ ६७ ॥

**घुटि** । नपुंसकस्य घुटि परतो नोऽन्तो भवति इति विधिरेव कस्मात् न भवति ? उच्यते—नपुंसकस्य शिमन्तरेणान्यस्य घुट्त्वाभावात्, तत्र च "स्वराच्छौ" इत्यादिभिर्नागमस्य विहितत्वात् पारिशेष्यादधिकारोऽयमित्याह—**अधिकारोऽयमित्यादि** । **आपादपरिसमाप्तेरिति** । पादपरिसमाप्तिं यावदित्यर्थः, अत्र हेतुमाह—**निमित्तविशेषोपादानमन्तरेणेति** । अधिकारग्रहणं कर्तव्यम्, अधिकारशब्दश्च कर्तृसाधनो भावसाधनो वा, विनियोगो हि लोकेऽधिकार उच्यते स एवेह गृह्यते, अधिकारः क्रियते प्रतियोगं तस्यानिर्देशार्थः—योगे योगे तस्य ग्रहणं मा कार्षमिति एतदर्थम् । किमयमर्थोऽधिकारशब्देन परिगृहीत ? परिगृहीत इति ब्रूमः, कुतः ? लोकतः, लोके ह्यधिकृतोऽसौ ग्रामेऽधिकृतोऽसौ नगरे इत्युच्यते यो यत्र व्यापारं गच्छति । शब्देन चाप्यधिकृतेन कोऽन्यो व्यापारः शक्योऽवगन्तुमन्यदतो योगे योगे उपस्थानात्, न हि परिस्पन्दरूपः शब्दस्य व्यापारोऽस्ति । न कर्तव्यम्, वचनरहितात् लोकव्यवहारादेव एतत्साध्यस्यार्थस्य सिद्धत्वात् । लोके हि निर्दिश्यमानमधिकृतं गम्यते, तद्यथा—देवदत्ताय गौर्दीयतां यज्ञदत्ताय विष्णुमित्रायेति गौरिति गम्यते, अत्र हि सम्प्रदानविभक्त्या सन्निहिता गोकर्मिका ददाति क्रियापेक्ष्यते, अश्रुतकल्पनायाः श्रुताऽपेक्षणस्य लाघवात् । एवमिहापि "अचः" घुटि इति "ऋदुदित" इत्यादावाकाङ्क्षादिवशात् प्रकृतस्यैव सम्बन्धो भविष्यति नाऽप्रकृतस्य, उच्यते—अन्यनिर्देशो निवर्तकस्तस्मादधिकारः । लोके ह्यन्यस्य निर्देशो निवर्तको भवति, तद्यथा—देवदत्ताय गौर्दीयताम्, यज्ञदत्ताय कम्बलो विष्णुमित्राय चेति कम्बलो गोर्निवर्तको भवति । एवमिहापि "अनडुहः सौ" इति सिर्घुटो निवर्तकः स्यादिति अधिकारवचनम् । ननु तत्रापि अधिकारे परिमाणं न ज्ञायते कियन्तमवधिमधिकारोऽनुवर्तत इति, तस्मादनुबन्धोऽपि कश्चिदासजनीयः । यावतियोऽनुबन्धस्तावतो योगानिति वक्तव्यम्, यावतियो वर्णोऽनुबध्यते तावतो योगानधिकारोऽनुवर्तत इति । अथेदानीं यत्राल्पीयांसो वर्णा भूयांसश्च योगास्तत्र किं कर्तव्यम् ? 'भूयसि प्राग्वचनं कर्तव्यम्' प्रागमुत इति । एतदपि न वक्तव्यम्, सन्देहमात्रमेतद्भवति, सर्वसन्देहेषु चेदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति' प्रागमुत इति व्याख्यास्यामः । यद्येव नार्थोऽनेन, केनेदानीमधिकारो भविष्यति ? लौकिकोऽधिकार इति । ननु चोक्तम्, अन्यनिर्देशो निवर्तक इति । सन्देहमात्रमेतद्भवति, सन्देहे च व्याख्यास्यामः—दृष्टानुवृत्तिकत्वात् घुडनुवर्तते न सिरिति । किं चाचार्याचाराच्च शैलीयमाचार्यस्य यत्र पृथगधिकारस्तत्र त करोति । तत्र विशेषेऽधिकारः सबध्यते, पादान्तं चानुवर्तते, यथाऽयमेव घुटीत्यधिकार इति । यत्र तूर्ध्वमप्यनुवर्तते तत्रावधिं निर्दिशति, यथा "प्रागजितादण्" ६।१।१३। यस्तु सर्वत्रानुवर्तते तत्र पृथङ्निर्दिशति, "एदोतः पदान्तेऽस्य लुक्" इति पदान्ताधिकार इति, तत्र निवृत्तौ यतते "स्वरेभ्यः" इति, अत्र बहुवचनस्य व्याप्त्यर्थत्वादुत्तरत्रानुवृत्तिः । "सौ नवेतौ" इति सत्यपि "शषसे शषसं वा" इति वा ग्रहणम्, "वायात्" ६।१।११। इति सत्यपि "नित्यं ञ्णिनोऽण्" ७।३।५८। इति नित्यग्रहणम् इति ॥ ६८ ॥

## अचः ॥ १ । ४ । ६९ ॥

अञ्चतेर्धातोर्धुडन्तस्य तत्संबन्धिन्यन्यसंबन्धिनि वा घुटि परे धुटः प्राग्नोऽन्तो भवति । प्राङ्, अतिप्राङ्, प्राञ्चौ, प्राञ्चः, प्राञ्चम्; प्राञ्चि कुलानि । घुटीत्येव ? प्राचः पश्य ॥ ६९ ॥

## ऋदुदितः ॥ १ । ४ । ७० ॥

ऋदित उदितश्च धुडन्तस्य तत्संबन्धिन्यन्यसंबन्धिनि वा घुटि परे धुटः प्राक् स्वरात् परो नोऽन्तो भवति । (ऋदितः–) कुर्वन्, अधीयन्, महान्; सुदन् बालः । उदितः–चक्रिवान्, विद्वान्, गोमान्; श्रेयान् । घुटीत्येव ? गोमता । पृथग्योगो भ्वादिव्युदासार्थः–सम्राट् ॥ ७० ॥

## युञ्जोऽसमासे ॥ १ । ४ । ७१ ॥

'युजृंपी योगे, इत्यस्यासमासे धुडन्तस्य धुटः प्राक् घुटि परे नोऽन्तो भवति । युङ्, युञ्जौ, युञ्जः, युञ्जम्, युञ्जि कुलानि, ईषदपरिसमाप्तो युङ्–बहुयुङ्, बहुयुञ्जौ, बहुयुञ्जः । असमास इति किम् ? अश्वयुक्, अश्वयुजौ, अश्वयुजः । ऋदिन्निर्देशः किम् ? 'युजिच्' समाधावित्यस्य मा भूत्–युजमापन्ना मुनयः, समाधिं प्राप्ता इत्यर्थः । घुटीत्येव ? युजः पश्य, युञ्जी कुले ॥ ७१ ॥

## अनडुहः सौ ॥ १ । ४ । ७२ ॥

अनडुह्शब्दस्य धुडन्तस्य तत्संबन्धिन्यन्यसंबन्धिनि वा सौ परे धुटः प्राक् नोऽन्तो भवति । अनड्वान्, प्रियानड्वान्, हे अनड्वन्!, हे प्रियानड्वन्! । साविति किम् ? अनड्वाहौ ॥ ७२ ॥

---

**अचः** । अत्र स्वरात् इति धुटां प्राक् इति नोऽन्त इति चानुवर्तते । घुटीत्यधिक्रियते । अचो धुटो घुटि धुटः प्राग्नोऽन्त इत्यन्वयः । स्वरादिति धुटां प्रागिति चानुवर्तनात् सनकारस्याचते प्राप्तेरभावात् लुप्तनकारस्य निर्देश इत्याह–**अञ्चतेरि**ति । अच इति नोऽन्त इत्यस्य विशेषणात् धुट परत्वमात्रमेव विज्ञायते इत्याह–**तत्संबन्धिन्यन्यसंबन्धिनि चे**ति । प्राचतीति विग्रहे तस्मात् क्विपि, "अञ्चोऽनर्चायाम्" ४।२।४६। इति नलोपे, "दीर्घङ्याब्०" इति सिलोपेऽनेन नागमे, "पदस्य" इति चकारलोपे, "युजञ्चक्रुञ्चो नो ङः" २।१।७१। इति ङकारे–**प्राङ् इति** । अन्यसंबन्धिनि घुटि उदाहरति–**अतिप्राङ् इति** । **प्राञ्चि कुलानी**ति । शेर्घुट्त्वादेतदुदाहरणप्रदर्शनम् । **प्राचः पश्ये**ति । शसो धुट्त्वाभावादनेन नोऽन्तो न भवति ॥ ६९ ॥

**ऋदुदितः** । स्वरात् इति धुटां प्राक् इति नोऽन्त इति घुटीति च वर्तते । इत इति द्वन्द्वान्ते श्रूयमाणत्वात् प्रत्येकं संबध्यते, तदाह–**ऋदित उदितश्चे**ति । ऋत् इत् येषान्त इति, उत् इत् येषान्त इति चार्थः । ऋदित उदाहरति–**कुर्वन्**नित्यादिना । **सुदन् बाल** इति । शोभना दन्ता अस्येति "वयसि दन्तस्य दतृ" ७।३।१५१। इति दत्रादेशस्य ऋदित्वादनेन नागमे संयोगान्तलोपे सति रूपम् । **चक्रिवान्** इति । करोतेः क्वसोरुदित्त्वात् द्विर्वचनादौ कृते सावनेन नाऽऽगम । एवमन्यदपि । **गोमता इति** । अत्रोदित्त्वेऽपि धुट्परत्वाभावात् नोऽन्तो न भवति । अथ उदितो धातो "उदित स्वरा०" इत्युपदेशावस्थायामेव नाऽऽगमविधानात् कृते च नाऽऽगमे "धुटां प्राक्" इत्यनुवर्तनादनेन नाऽऽगमाभाव, ऋदितस्तु कस्मात् न भवतीत्याह–**पृथग्योग** इत्यादि । अयमभिप्राय–"उदित स्वरान्नोऽन्त" इत्यत्र धात्वधिकारात् भ्वादेरुदित "उदित स्वरान्नोऽन्त" इत्यनेनैव सिद्धत्वात्, अत्र उदित पृथगारम्भादुदितोऽभ्वादेरेव तत्साहचर्यादृदितोऽपि अभ्वादेरेवेति नियमात् सम्राट् इत्यादौ न भवति ॥ ७० ॥

**युञ्जोऽसमासे** । धुटां प्राक् इति नोऽन्त इति घुटीति च वर्तते, युञ्जो धुटां घुटि धुट प्राक् नोऽन्त इत्यन्वय । युञ्ज इत्यस्यार्थमाह–**'युजृंपी'योगे, इत्यस्ये**ति । युञ्ज इत्यनेन स्याद्याक्षिप्तस्य नाम्नो विशेषणात्तत्र च तदन्तविधेर्भावात् समासेऽपि प्राप्तेरित्यसमास इति प्रतिषेधोऽर्थवानिति, अयमेव च समासप्रतिषेधो ज्ञापयत्यत्र प्रकरणे तदन्तविधिरस्तीति । **युङ्** इति । युनक्तेः क्विपि, सौ, तल्लोपेऽनेन नाऽऽगमे, संयोगान्तलोपे तस्य "युजञ्च०" इति ङकारे रूपम् । **अश्वयुगि**ति । अश्वं युनक्तीति क्विपि "क्वसुक्त०" ३।१।४९। इति समास, अत्रासमास इति वचनात् न भवति । युञ्ज इति ऋकारोऽनुबन्ध किमर्थं ? युजोऽसमासे इत्युच्यमाने सिद्धत्वेनेत्याह–**ऋदिदि**त्यादि । **युजमापन्ना मुनय** इति । युजे "क्रुत्संपदादिभ्य क्विप्" ५।३।११४। इति क्विप् । **युजः पश्ये**ति । अत्र शस धुट्त्वाभावात् तस्मिन् परे नोऽन्तो न भवति । **युजी कुले** इति । क्लीबे जस्शसादेशस्य शेरेव धुट्त्वादत्र प्रथमाद्वितीयाद्विवचनौकारे नोऽन्तो न भवति ॥ ७१ ॥

**अनडुहः सौ** । अत्र धुटां प्राक् इति नोऽन्त इति चानुवर्तते । साविति निमित्तविशेषस्योपादानात् घुटीति नाधिक्रियते । अनडुह धुट सौ धुट एव नोऽन्त इत्यन्वयस्तदाह–**अनडुह्शब्दस्ये**त्यादि । **अनड्वान्** इति । "अनसो वहे ०" उ० १००६। इति क्विपि सकारस्य डकारे, "यजादिवचेः०" इति य्वृति, सौ, सलुकि, "वा शेषे" इति वाऽऽदेशेऽनेन नागमे, "पदस्य" इति संयोगान्तलोप । **प्रियानड्वान्** इति । प्रिया अनड्वाहो यस्येत्येकत्वे "पुमनडुन्नौ०" ७।३।१७३। इति कच्प्रसङ्गात् बहुत्वेन विग्रहे पूर्ववत् स्यादौ रूपमेतत् । **हे अनड्वन्!** इति । आमन्त्र्ये सौ "उतोऽनडुच्चतुरो वः" १।४।८१। इति वत्वे शेष पूर्ववत् । **अनड्वाहौ** इति । अत्र सौ परेऽभावात् न नोऽन्त । नन्वनडुही इत्यत्र 'नामग्रहणे लिङ्गविशिष्टस्यापीति'न्यायेनात्र स्त्रीत्वविशिष्टस्यापि तस्य ग्रहणात् नाऽऽगम कथं न भवति ? इति चेत्, धुट इत्यनुवर्तनात् धुडन्तत्वाभावेन नाऽऽगमाभावात् । अनड्वान् इत्यत्र "सस्रुध्वंसुक्वस्सनडुहो दः" २।१।६८। इति दकारस्तु प्राप्तो विधानसामर्थ्यात् न भवति ॥ ७२ ॥

## पुंसोः पुमन्स् ॥ १ । ४ । ७३ ॥

पुंसु इत्येतस्योदितस्तत्संबन्धिन्यन्यसंबन्धिनि वा घुटि परे पुमन्स् इत्ययमादेशो भवति । पुमान्, पुमांसौ, पुमांसः, पुमांसम्; ईषदूनः पुमान् बहुपुमान्, प्रियपुमान्, प्रियपुमांसि कुलानि, हे पुमन्[1] । घुटीत्येव ? पुंसः पश्य, बहुपुंसी कुले । पुंसोरुदित्त्वात् प्रियपुंसितरा, प्रियपुंस्तरा, प्रियपुंसीतरेत्यादौ ङीह्रस्वपुंवद्विकल्पश्च भवति ॥ ७३ ॥

## ओत औः ॥ १ । ४ । ७४ ॥

ओकारस्य ओत एव विहिते घुटि परे औकार आदेशो भवति । गौः, गावौ, गावः; द्यौः, द्यावौ, द्यावः; लुनातीति विच्-लौः, शोभनो गौः सुगौः; एवमतिगौः, प्रियद्यावौ, अतिद्यावौ; हे गौः ! हे द्यौः ! किंगौः, अगौः । ओत इति किम् ? चित्रा गौर्यस्य चित्रगुः, चित्रगू, विहितविशेषणादिह न भवति-हे चित्रगवः । घुटीत्येव ? गवा, द्यवा ॥७४॥

## आ अम्शसोऽता ॥ १ । ४ । ७५ ॥

ओकारस्यामशसोरकारेण सह आकारो भवति । गाम्, सुगाम्, गाः, सुगाः पश्य; द्याम्, अतिद्याम्, द्याः, सुद्याः पश्य । स्यादावित्येव ? अचिनवम् ॥ ७५ ॥

## पथिन्मथिन्ऋभुक्षः सौ ॥ १ । ४ । ७६ ॥

पथिन् मथिन् ऋभुक्षिन् इत्येतेषां नकारान्तानामन्तस्य सौ परे आकारो भवति । पन्थाः, हे पन्थाः !, मन्थाः, हे मन्थाः ! । ऋभुक्षाः, हे ऋभुक्षाः !, अमन्थाः, सुमन्थाः, बहुऋभुक्षाः । साविति किम् ? पन्थानौ । कथं हे सुपथिन् !,

---

**पुंसोः पुमन्स्** । अत्र घुटीत्यधिक्रियते । पुसो घुटि पुमन्स् इत्यन्वयस्तदाह—**पुंसु इत्येतस्येत्यादि** । **पुमान्** इति । "पातेर्डुम्सुन्" उणा० १००२। इति डुम्सौ अन्त्यस्वरादिलोपे सावनेन पुमन्सादेशे "न्स्महतो" इति दीर्घत्वे "पदस्य" इति संयोगान्तलोप । **बहुपुमान्** इति । "नाम्न प्राग्बहुर्वा०" इति बहु । एकत्वे "पुमनडुन्नौ० इति कच्प्रसङ्गात् प्रिया. पुमांसो यस्येति बहुत्वेन विग्रहे-**प्रियपुमानित्यादि** । **हे पुमन् !** इति । अत्रानेन पुमन्सादेशे संयोगान्तलोपादौ आमन्त्र्ये शेषघुट्त्वाभावात् "नि दीर्घ" इति दीर्घो न भवति । **पुंसः पश्येत्यादि** । शसो नपुंसकप्रथमाद्वितीयाद्विवचनस्य च घुट्त्वाभावादादेशो न भवति । प्रकृतेरुदित्वात् प्रिया पुमांसो यस्या इति "अधातूदृदित" २।४।२। इति ङी, सैव च प्रकृष्टा इति "द्वयोर्विभज्ये च तरप्" ७।३।६। इति तरप्यापि च "ऋदुदित्तरतम०" ३।२।६३। इति ह्रस्वपुंवद्भावविकल्पो भवतीत्याह—**पुंसोरुदित्त्वादित्यादि** । **ङीह्रस्वपुंवद्विकल्पश्चेति** । ङीर्नित्य ह्रस्वत्वपुंवत्वयोश्च विकल्प इति भाव ॥ ७३ ॥

**ओत औः** । घुटीति वर्तते । ओतो घुटि औरित्यन्वयस्तदाह—**ओकारस्येत्यादि** । **गौः इति** । गोशब्दौकारस्यौकारान्तात् तस्माद्विहिते घुटि सौ अनेन औकार, रुत्वविसर्गाविति भाव । **गावौ, गावः** इति । गो औ इति, गो अस् इत्यवस्थायामनेनौकारे आवादेशो यथासंभवं रुत्वविसर्गौ । एवमन्यदपि । **सुगौः, अतिगौः** इति । "सु पूजायाम्" ३।१।४४। इति "अतिरतिक्रमे च ३।१।४५। इति च समास । "गोस्तत्पुरुषात्" ७।३।१०५। इति प्राप्त समासान्तो न, "पूजा स्वते ०" ७।३।७२। इति निषेधात् । **किंगौः, अगौः** इति । कुत्सितो गौरिति "किं क्षेपे" ३।१।११०। इति समास, तेन सूत्रेण समासान्तस्तु "न किम क्षेपे" ७।३।७०। इति निषेधात् न भवति । एव न गौरगौरित्यत्र "नञ्तत्पुरुषात्" ७।३।७१। इति निषेधात् न भवति । **चित्रगुरिति** । अत्र परत्वात् पूर्वं ह्रस्वत्वे कृते पश्चाद् घुटि ओकाराभावाद् ओत इति वचनादौकारो न भवति, वर्णविधित्वाच्च स्थानिवद्भावो नास्ति । **विहितविशेषणादिति** । ओकाराद् विहिते घुटीत्येवमोत इत्येतद्विहितविशेषणसमाश्रयणादित्यर्थ । **हे चित्रगव !** इति । अत्र "जस्येदोत्" इत्योत्त्वे विहितविशेषणादोकारविधानसामर्थ्यात् चौत्वाभावादवादेश । हे चित्रगो ! इत्यत्र ओकारस्य विद्यमानत्वेऽपि सेरभावात् लाक्षणिकत्वात् वा न भवति ॥ ७४ ॥

**आ अम्शसोऽता** । ओत इत्यनुवर्तते, ओत अम्शस अता आकार इत्यन्वय । अम्शस इति षष्ठ्यन्तमता इत्यस्य विशेषणमित्याह—**अम्शसोरकारेणेति** । **गाम्** इति । गोशब्दस्यौकारस्यामोऽकारेण सहानेनाऽऽकारः । एवमन्यत्रापि । स्याधिकारात् स्यादिसम्बन्धिन एवामो ग्रहणात् त्याद्यमो ग्रहण न भवतीत्याह—**स्यादावित्येवेत्यादि** । **अचिनवम्** इति । अत्र आदौ "समानादमोत" इत्यमोऽकारस्यापि लुम भवति, तत्रापि स्याधिकारात् । नन्वत्र अता इत्यभावे "समानानाम्०" इति दीर्घेणैव गा इत्यादिसिद्धावपि तद्विना पुल्लिङ्गे स्त्रीलिङ्गे च "शसोऽता०" इति "लुगातो०" इति च प्रवर्तेयाताम्, ततश्च गान्, ग इत्याद्यनिष्ट स्यात् । तत्सत्त्वे तु "शसोऽता०" इति दीर्घसंनियोग एव नकारस्य विधीयमानत्वाददोष ॥ ७५ ॥

**पथिन्मथिन्ऋभुक्षः सौ** । अत्र आ इत्यनुवर्तते, पथिन्मथिन्ऋभुक्ष सौ आ इत्यन्वय । समाहारद्वन्द्वात् षष्ठीति समाहारेण समाहार्युपलक्षणमित्याह—**पथिन्मथिन्** इत्यादि । पथिन् इत्यादीनां नकारान्तानां सूत्रे समुपादानात् "षष्ठ्या अन्त्यस्य" इति न्यायाच्चाह—**नकारान्तानामन्तस्येति** । पन्थाः इत्यादि । 'पथे' गतौ, 'मन्थश्' विलोडने इत्याभ्यां "पथिमन्थिभ्याम्" उणा० ९२६। इति किनीन्प्रत्यये-पथिन्, मथिन्, "अर्तेर्भुक्षिनक्" उणा० ९२८। इति 'ऋक्' गतौ, धातोर्भुक्षिनकि-ऋभुक्षिन् । एभ्य सौ "थो न्थ्" इति न्थाऽऽदेशे, "ए" इतीकारस्याकारेऽनेन नकारस्याकारे, "समानानाम्०" इति दीर्घादेशे च सिध्यति । **बहुऋभुक्षा** इति । "ऋऌति ह्रस्वो वा" इति०ह्रस्व, स्त्रीत्वाभावात् "इन कच्" ७।३।१७०। इति कच् न भवति । **पन्थानौ** इति । अत्र सेरभावात् नाऽऽत्वम् । **कथमिति** । हे सुपथिन् ! इत्यादौ "नामन्त्र्ये" इति नलोपस्य प्रतिषेधात् क्लीबे च "क्लीबे वा" इत्यनेन पाक्षिकत्वात् नकारान्तत्वादनेनाऽऽकार कस्मान्न भवतीति शङ्कार्थ । समाधत्ते—**अत्रेत्यादि** । अयमर्थः-कृताकृतप्रसङ्गित्वेन "अनतो लुप्" इति आकारात् पूर्वं सेर्लुप्सत्वात् "लुप्यय्वृल्लेनत्" ७।४।११२। इति स्थानिवद्भावस्य प्रतिषेधात् सेर-

---

१ ×××××नास्तीति ख० ताड०, पु० ।

हे सुपथि कुल !, हे सुमथिन् !, हे सुमथि कुल !–अत्र नित्यत्वात् न पुंसकलक्षणायाः सेर्लुपि सेरभावात् न भवति । नकारान्तनिर्देशादिह न भवति–पन्थानमिच्छति क्यनि, नलोपे, क्विपि च–पथीः, एवं मथीः, ऋभुक्षीः ॥ ७६ ॥

## एः ॥ १ । ४ । ७७ ॥

पथ्यादीनां नकारान्तानामिकारस्य घुटि परे आकारो भवति । पन्थाः, पन्थानौ, पन्थानः, पन्थानम्, पन्थानौ; मन्थाः, मन्थानौ, मन्थानः, मन्थानम्, मन्थानौ; ऋभुक्षाः, ऋभुक्षाणौ, ऋभुक्षाणः, ऋभुक्षाणम्, ऋभुक्षाणौ; सुपन्थानि वनानि–"पूजास्वतेः प्राक् टात्" ॥ ७ । ३ । ७२ ॥ इति समासान्तप्रतिषेधः, बहुमन्थानि कुलानि, अनृभुक्षाणि बलानि, सुपन्थानौ, परममन्थानौ । नकारान्तनिर्देशादेरभावात् चेह न भवति–पन्थानमिच्छति क्यन्, क्विप्–पथ्यौ, पथ्यः, पथ्यम् । घुटीत्येव ? सुपथी वने, पथिभ्याम्, सुमथी कुले, मथिभ्याम् ॥ ७७ ॥

## थो न्थ् ॥ १ । ४ । ७८ ॥

पथिन् मथिन् इत्येतयोर्नकारान्तयोस्थकारस्य स्थाने घुटि परे न्थ् इत्ययमादेशो भवति । तथैवोदाहृतम् । घुटीत्येव ? सुपथी, बहुपथी कुले, पथः पश्य ॥ ७८ ॥

## इन् ङीस्वरे लुक् ॥ १ । ४ । ७९ ॥

पथ्यादीनां नकारान्तानां ङीप्रत्यये अघुट्स्वरादौ च स्यादौ परे इन् अवयवो लुक् भवति । सुपथी स्त्री कुले वा,

---

भावात् सौ विधीयमान आकारो न भवति । नकारान्तनिर्देशादिति । पन्थानमिच्छति "अमाव्यया०" इति क्यनि नलोपे दीर्घत्वे पथीयते क्विपि, "अत " ४।३।८२। इत्यल्लोपे, "य्वो प्वय्०" इति यलोपे–पथी , नकारान्तनिर्देशादनकारान्तत्वात् नेह भवतीत्यर्थः । सुखाकरस्तु अकारलोपस्य स्थानिवद्भावाद् व्यवधानादनर्थकत्वाच्च न भवतीति मन्यते । येन ह्यर्थेनार्थवान् पथिशब्दो लोके न तेन पथी । व्याकरणे 'रूपं रूपवदर्थोऽप्यङ्गीक्रियते' इति स्व रूपमित्यत्र रूपावधारणसमये परिग्रहीष्यते । न च तस्य क्यजर्थं सम्भवो, पथिन् इत्येतस्यातदर्थत्वात् । अत एवोच्यते–अर्थान्तरसंक्रमितोऽनर्थकानभिधत्ते । तदा तु नकारान्तनिर्देशात् पथिन्शब्दस्यार्थवतो ग्रहणादनकारान्तस्य पथीत्येतस्य तदर्थाभावेऽनर्थकत्वात् न भवतीति व्याख्यायते । पन्था इत्यादौ सानुनासिकस्याप्यादेशो भवन् "लि लौ" इत्यत्र द्विवचनेनैव ज्ञापितत्वात् शुद्धस्योच्चारणात् वा निरनुनासिक एव भवति । पथीरित्यत्र "दीर्घङ्या०" इति परे कार्ये "नाम्नो नो०" इत्यसत्त्व न वाच्यम्, "रात् स " इति यावदसत्पर इत्यधिकृतत्वेन तस्मात् परत्र वर्तमाने "नाम्नो नो०" इत्यत्र तदनधिकाराददोषः । नन्वनेन आत्वरूपे स्यादिविधौ विधातव्ये नलोपस्यासिद्धत्वात् नान्तत्वमस्ति, न च वाच्यम् "अत " इत्यलुक "स्वरस्य परे०" इति स्थानिवद्भावेन नान्तत्वानुपपत्तिरिति, यत –प्रत्यासत्तेर्यन्निमित्तो लुक् विधिरपि यदि तन्निमित्तो भवतीति व्याख्यानात् । अत्र तु अस्य लुक् क्विपि, आत्व तु सौ प्रत्यये प्राप्नोतीति कृत्वात्र नान्तत्वमस्त्येवेति प्राप्नोत्यात्वम्, सत्यम्, नान्तेति व्यावृत्तिबलादेव न भवति, अन्यथा यत्र कुत्रापि नलोपस्तत्र सर्वत्राप्यमीषा पथ्यादीनामनेनात्वलक्षणे स्यादिविधौ कर्तव्ये "षत्वमसत् परे०" इति न्यायेन नलोपस्यासिद्धत्वे नान्तत्वसद्भावादनेनाऽऽत्व भवेदेवेति अत्र सूत्रे नान्तनिर्देशोऽनर्थकः स्यात् । तस्माद्यत्र साक्षान्नान्तत्वममीषां भवति तत्रेद प्रवर्ततेऽन्यत्र तु व्यावृत्तिरिति सर्व समीचीनम् । एव तर्हि "दीर्घङ्याब्०" इति सूत्रेण सेर्लुक् कस्मात् न भवति ? यतोऽयमपि स्यादिविधि, स्यादिविधौ च नलोपोऽसन् भवतीति, सत्यम्, "दीर्घङ्याब्०" इत्यत्र सावधारण व्याख्येयम्–व्यञ्जनान्तादेव यदि सिर्भवतीति, विहितविशेषणाद् वा,–यत्र एभ्य पर सिर्विहितो भवति तत्र लुग् भवति, अत्र त्वीकारान्ताद् विहितो न व्यञ्जनान्तात् इति । एव तर्हि या सा इत्येवमादिषु च सेर्लुक् न प्राप्नोति, सत्यम्, यत्रैवेषां मध्यादेकस्माद् विहितो भवति, कार्यान्तरेषु च कृतेष्वेतषामेव मध्येऽन्यतमस्मात् परो भवति तत्रापि भवति, तेनानयो प्रयोगयोर्व्यञ्जनान्तात् परो विहित कार्यान्तरेषु च सत्सु विद्यते आवन्तादिति सेर्लुक् भवत्येव । य स इत्यनयोस्तु व्यञ्जनान्तात् विहितोऽस्ति परं "आद्वेर." इत्यादिकार्येषु कृतेषु सत्सु पश्चादमीषां मध्यादेकस्मादपि परो नास्तीति न सेर्लुक ॥ ७६ ॥

एः । अत्र पथिन्मथिन्ऋभुक्ष इति आ इति चानुवर्तते, घुटीत्यधिक्रियते, पथिन्मथिन्ऋभुक्ष ए घुटि आ इत्यन्वयस्तदाह—**पथ्यादीनामिति** । पथ्यादीनामेकारस्यासंभवात् एरिति इकारात् षष्ठीत्याह—**इकारस्येति** । **पन्थानौ** इत्यादि । पथिन् औ इति स्थितेऽनेनात्वे न्थादेशे "नि दीर्घ " इति दीर्घे च रूपम् । एव पन्थान इत्यादि । **सुपन्थानि** वनानि इति । सु–शोभन पन्था येष्विति विग्रहे जसि रूपम्, अत्र "ऋक्पू ०" इति समासान्तो न भवतीत्याह—**"पूजास्वते."** इत्यादि । **बहुमन्थानि**—बहवो मन्थानो येषु तानीति विग्रह । **अनृभुक्षाणि बलानीति** । अविद्यमान ऋभुक्षा स्वामी येषु तानीत्यर्थ । पथ्यौ इत्यादिषु इकारस्यात्वमनेन कथ न भवतीत्याह—**नकारान्तनिर्देशादेरभावादिति** । **सुपथी वने** इति । सु–शोभन पन्था अनयोरिति विग्रह । घुटीति वचनात् नपुसकप्रथमाद्वितीयाद्विवचने न भवत्यनेनेकारस्याऽऽकार । **पथिभ्याम्** इति । नलोपे रूपम् ॥ ७७ ॥

**थोन्थ्** । घुटि इत्यधिक्रियते । थकारस्याभावादृभुक्षिन्शब्दे पथिन्मथिन्शब्दयोश्च भावादाह–**पथिन् मथिन् इत्येतयोरित्यादि** । अनेकवर्णत्वात् सर्वस्य प्राप्तौ थ इति स्थानिविशेषार्थमृभुक्षिनिवृत्त्यर्थं च । उदाहरण तु पूर्वमुक्तमेवेत्याह—**तथैवोदाहृतमिति** ॥ ७८ ॥

**इन्ङीस्वरे लुक्** । अत्र पथिन्मथिन्ऋभुक्ष इत्यनुवर्तते, पथिन्मथिन्ऋभुक्ष इन् लुक् ङीस्वरे इत्यन्वयस्तदाह—**पथ्यादीनामित्यादि** । ङीसाहचर्यात् अघुटीति स्वरे इत्यस्य विशेषण ज्ञेयम्, तर्हि स्यादिमन्तरेणापि प्राप्नोतीति न वाच्यम्, स्याधिकाराश्रयणात् ङीग्रहणस्य वैयर्थ्यप्रसङ्गाच्च । निमित्तविशेषानुपादाने घुटीत्यधिकारस्य निर्णीतत्वात् स्वर इति निमित्तविशेषोपादानात् घुटि च पथ्यादीनामिनो विशेषविधिविषयत्वादघुट्स्वर एवेत्यवसीयते इत्याह—**अघुट्स्वरादाविति** । ङीप्रत्यये समुदाहरति—**सुपथी स्त्री कुले वा** इति । सु–शोभन पन्था यस्या ययोर्वेति विग्रह । "ऋक्पू पथ्यपोऽत्" ७।३।७६। इति समासान्तस्य "पूजास्वते ०" इति प्रतिषेधात्, उणादीनामव्युत्पन्नपक्षस्याश्रयणादिन्नन्तत्वाभावात् "इन

---

१ °मे॰ इकारस्य° खं॰ ता॰०, पु॰ ।

पथः, पथा, पथे, पथः २, पथोः २, पथाम्, पथि, एवं सुमथी स्त्री कुले वा, मथः, मथा; अनृभुक्षी सेना कुले वा, ऋभुक्षः, ऋभुक्षा । अभेदनिर्देशः सर्वाऽऽदेशार्थः ॥ ७९ ॥

**वोशनसो नश्चामन्त्र्ये सौ ॥ १ । ४ । ८० ॥**

आमन्त्र्येऽर्थे वर्तमानस्योशनस्शब्दस्य सौ परे नकारो लुक् चान्तादेशौ वा भवतः । हे उशनन्[1], हे उशन[1]; पक्षे–हे उशनः[1], आमन्त्र्य इति किम्? उशना । साविति किम्? हे उशनसौ ! ॥ ८० ॥

**उतोऽनडुच्चतुरो वः ॥ १ । ४ । ८१ ॥**

अनडुह् चतुर् इत्येतयोरामन्त्र्येऽर्थे वर्तमानयोरुकारस्य सौ परे व इति सस्वरवकाराऽऽदेशो भवति । हे अनड्वन्!, हे प्रियानड्वन्!, हे अतिचत्वः!, हे प्रियचत्वः! । आमन्त्र्य इत्येव? अनड्वान्, प्रियचत्वाः । सावित्येव? हे अनड्वाहौ!, हे प्रियचत्वारः! ॥ ८१ ॥

**वाः शेषे ॥ १ । ४ । ८२ ॥**

आमन्त्र्यार्थविहितात् सेरन्यो घुट् इह शेषः, तस्मिन् परेऽनडुह्चतुरित्येतयोरुकारस्य वा इत्याकारान्तो वकार आदेशो भवति । अनड्वान्, अनड्वाहौ, अनड्वाहः, अनड्वाहम्, अनड्वाहौ, प्रियानड्वांहि कुलानि, प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः, प्रियचत्वारम्, प्रियचत्वारौ; चत्वारि, चत्वारः । शेष इति किम्? हे प्रियानड्वन्!, हे प्रियचत्वः! । घुटीत्येव? अनडुहः पश्य, चतुरः पश्य । प्रियानडुही कुले, प्रियचतुरी कुले, इह शेषे घुटि वाऽऽदेशविधानात् पूर्वत्रामन्त्र्ये सावित्ति सम्बध्यते ॥८२॥

**सख्युरितोऽशावैत् ॥ १ । ३ । ८३ ॥**

सखिशब्दस्येकारान्तस्य तत्संबन्धिन्यन्यसंबन्धिनि वा शिवर्जिते शेषे घुटि परे ऐकारान्तादेशो भवति । सखायौ,

---

कच्" ७।३।१७०। इत्यस्याप्यप्रवृत्तेर्नोन्तत्वात् "स्त्रियां नृतो०" इति ङ्या कुलविशेषणत्वे नपुंसकत्वात् "औरी" १।४।५६। इति ईकारे वाऽनेन इनो लुक् । एवं **सुमथी**त्यादावपि । **मथ** इत्यादि । मथिन्शब्दस्याघुट्स्वरादौ स्यादौ इनोऽनेन लुक् । **अनृभुक्षी सेनाकुले** वा इति । अविद्यमान ऋभुक्षा यस्या ययोर्वेति विग्रह । **अभेदनिर्देश** इति । भेदनिर्देशे हि "षष्ठ्या अन्त्यस्य" इति नलोप स्यादित्यर्थः ॥ ७९ ॥

**वोशनसो नश्चामन्त्र्ये** । आमन्त्र्ये उशनस सौ नकार च लुक् वा इत्यन्वयस्तदाह—**आमन्त्र्येऽर्थे वर्तमानस्ये**त्यादि । नकारादेशात् श्रुतश्चकारोऽन्यस्यासंभवात् पूर्वसूत्रोपात्त लुग्लक्षणमादेशान्तरं समुच्चिनोति इत्याह—**नकार** इत्यादि । 'वशक्' कान्तावित्यस्मात् "वष्टे कनस्" उणा० ९८५ । इति कनसि "वशेरघि" ४।१।८३। इति य्वृति–उशनस्, तत्र आमन्त्र्यसावनेनान्तस्य नकारलोपयो कृतयो "दीर्घङ्याब्०" इति "अदेत स्यमो०" इति च सेर्लोपे, तद्विमुक्तपक्षे च सिलोपरुत्वादौ रूपत्रयम् । तद्दर्शयति—**हे उशनन्!** इत्यादि । **उशना इति** । अत्र सेरामन्त्र्याभावात् न नकारलोपो । **हे उशनसौ!** इति । अत्र सेरभावात् न नकारलोपो ॥ ८० ॥

**उतोऽनडुच्चतुरो वः** । आमन्त्र्ये सौ इत्यनुवर्तते । आमन्त्र्ये अनडुच्चतुर उत सौ व इत्यन्वयस्तदाह—**अनडुह्चतुरित्येतयो**रित्यादि । यद्यपि निमित्तविशेषानुपादाने घुटीत्यधिक्रियते, तथाप्युत्तरत्र शेषग्रहणादामन्त्र्यसिरेवानुवर्तते । सूत्रे सस्वरस्य निर्देशादुत्तरत्र वाऽऽदेशस्य सस्वरस्य विधानात् तत्प्रस्तावात् सस्वर एव भवतीत्याह–**व इति सस्वरे**त्यादि । **हे प्रियानड्वन्!** इति । प्रिया अनड्वाहो यस्येत्येकत्वे कच्प्रसङ्गाद् बहुत्वेन विग्रह । चतु शब्दस्यार्थप्राधान्येन एकामन्त्रणासंभवे चतु शब्द उपसर्जनसमास एवोदाह्रियते । बहुव्रीहौ चतु शब्द प्रियशब्दादेवोत्तर संभवति, "प्रिय" ३।१।१५७। इति पूर्वनिपातारम्भात् । अन्यत्र तु "विशेषण सर्वादिसंख्य०" ३।१।१५०। इति चतु शब्दस्यैव पूर्वनिपात संभवतीत्युदाहरति—**हे प्रियचत्वः!** इति। सत्यपि 'नामग्रहणे लिङ्गविशिष्टस्य' इति हे अनडुहीत्यत्र गौरादिनिपातनाद् वत्वाभाव । एवमुत्तरत्रापि ॥ ८१ ॥

**वाः शेषे** । उतोऽनडुच्चतुर इत्यनुवर्तते । शेषे अनडुच्चतुर उतो वा इत्यन्वय । उपयुक्तादन्य शेष उच्यते । उपयुक्तश्च पूर्वसूत्रे आमन्त्र्य सिरेव अत आह—**आमन्त्र्यार्थविहिता**दित्यादि । **अनड्वान्** इति । अनडुह् स इति स्थिते वादेश , नागम , सिलुक्, संयोगान्तलोपश्च । **अनड्वाहौ** इति । शेषघुट्त्वाद् वाऽऽदेश , नागमस्तु न, तस्य सावेव विधानात् । एवमन्यदपि । **प्रियानड्वांहि** इति । प्रिया अनड्वाहो येषां कुलानामिति विग्रहे घुटि शौ रूपम् । **प्रियचत्वाः** इति । प्रियाश्चत्वारो यस्येति विग्रहेऽनेन वादेशे सिलुकि रुत्वविसर्गयोश्च रूपम् । **हे प्रियानड्वन्!** इति । आमन्त्र्यसे शेषघुट्त्वाभावात् पूर्वेण वत्वे नागमे सिलोप । **अनडुह इति** । शसादौ स्वरे अविकृत एव अनडुह्शब्द इति भाव । एवं चतुर इत्यपि । पूर्वसूत्रे आमन्त्र्यसाविति सवन्धे हेतुमाह—**इह शेषे घुटी**त्यादि। अत्र सूत्रे शेषस्य घुट आघ्रातत्वात् एतत्सूत्रमुक्तप्राक्तनसूत्रविषय इति भाव ॥ ८२ ॥

**सख्युरितोऽशावैत्** । अत्र शेषे घुटीत्यधिक्रियते । सख्यु , इत अशौ शेषे घुटि ऐत् इत्यन्वय । इत इति सख्युरित्यस्य स्थानित्वेन विशेषणमित्याह—**सखिशब्दस्ये**त्यादि । सखिशब्दात् प्रथमाया द्विवचनादौ घुटि अनेन ऐकारे आयादेशे च–**सखायावि**त्यादि । प्रथमे-

---

१ XX नास्तीति ख० ता०, पु० । २ XXXXX नास्तीति म० म० ।

सखायः, सखायम्, सखायौ, हे सखायौ !, हे सखायः !, सुसखायौ, प्रियसखायः। अशाविति किम् ? अतिसखीनि कुलानि, प्रियसखीनि कुलानि तिष्ठन्ति, पश्य वा । इत इति किम् ? इमे सख्यौ । सखीयतीति क्यनि, क्विपि–सख्यौ, सख्यः। घुटीत्येव ? सखीन्, सख्या । शेष इत्येव ? हे सखे ! । इदमेवेद्ग्रहणं ज्ञापयति–'नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' 'एकदेशविकृतमनन्यवद्' इति च ॥ ८३ ॥

## ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डा ॥ १ । ४ । ८४ ॥

ऋकारान्तात् उशनस् पुरुदंशस् अनेहस् इत्येतेभ्यः सख्युरितश्च परस्य शेषस्य सेः स्थाने डा इत्ययमादेशो भवति। पिता, अतिपिता, कर्ता, उशना, पुरुदंशा, अनेहा, सखा, अत्युशना, प्रियपुरुदंशा, अत्यनेहा, किंसखा, सुसखा, प्रियसखा । सख्युरित इत्येव ? इयं सखी, सखीयतेः क्विप्–सखीः । सेरिति किम् ? उशनसौ सखायौ । शेषस्येत्येव ? हे कर्तः !, हे उशनन् !, हे उशन !, हे उशनः !, हे पुरुदंशः !, हे अनेहः !; हे सखे ! ॥ ८४ ॥

## नि दीर्घः ॥ १ । ४ । ८५ ॥

शेषे घुटि परे यो नकारस्तस्मिन् परे पूर्वस्य स्वरस्य दीर्घो भवति । राजा, राजानौ, राजानः, राजानम्, राजानौ; सीमा, सीमानौ, सीमानः, सीमानम्, सीमानौ; सामानि, दामानि, लोमानि, वनानि, धनानि, दधीनि, मधूनि, कर्तॄणि; हर्तॄणि । नीति किम् ? दृषद्, दृषदौ, दृषदः। 'स्वरस्य ह्रस्वदीर्घप्लुताः' इति सुग्नयतेः क्विप्–सुक्, सुग्, सुग्नौ, सुग्नः– इत्यत्र घकारस्य दीर्घो न भवति । घुटीत्येव ? चर्मणा, वारिणी, मधुनी । शेष इत्येव ? हे राजन् !, हे सीमन् ! ॥ ८५ ॥

## न्स्महतोः ॥ १ । ४ । ८६ ॥

न्सन्तस्य महच्छब्दस्य च संबन्धिनः स्वरस्य शेषे घुटि परे दीर्घो भवति । श्रेयान्, श्रेयांसौ, श्रेयांसः, श्रेयांसम्, श्रेयांसौ, परमश्रेयान्, अतिश्रेयान्, प्रियश्रेयान्; श्रेयांसि, यशांसि, सर्पींषि, धनूंषि, प्रियपुमांसि कुलानि; महान्,

---

कवचने "ऋदुशनस्पुरुदंशो०" इति विशेषेण डादेशविधानात् नोदाहृतम् । **अशाविति किम्** ? सूत्रेऽशावित्यस्य किम्प्रयोजनमित्यर्थः । अथ शौ सति 'आदेशादागम' इति–न्यायात् ऐत्वात् प्रथममेव नागमेन भाव्यम्, ततस्तेन व्यवधानादैकारो न भविष्यतीति । न च द्वयोरप्यन्यत्र साव-काशत्वादैकार स्यादिति वाच्यम्, कृतेऽप्यैकारे "क्लीबे" २।४।९७। इति ह्रस्वत्वे ततो नागमे दीर्घत्वे न कश्चिद्दोष, नैवम्, 'असिद्ध बहिरङ्गम्' इति घुटन्निमित्तस्यैकारस्य बहिरङ्गत्वात् ह्रस्वत्वे कर्तव्येऽसिद्धत्वात् । ननु भवत्वेव तथापि कृताकृतप्रसङ्गित्वेन नित्यत्वात् पूर्वं नागम इति घुट व्यवधायको भविष्यति, नैवम्, कृतेऽपि नागमे प्रकृतिभक्तत्वेनाव्यवधायकत्वात् ऐकारोऽपि नित्य इति द्वयोर्नित्ययो परत्वादैकार एव स्यादिति शिप्रतिषेध । **अतिसखीनि** इति । पूजित सखा येषु कुलेष्विति विग्रह, अशाविति वचनात् न भवत्यैत्वम् । **सख्याविति** । "नारीसखी-पंगूश्व०" इति निपातनात् सखी, ततो द्विवचनम्, सत्यपि 'नामग्रहणे लिङ्गविशिष्टस्येति' एकदेशविकृतमनन्यवदत्वेऽपि इति च इत इति वचनात् न भवति । अनयोश्च न्याययोरस्तित्वे ज्ञापकमुपदर्शयति–**इदमेवे**त्यादि ॥ ८३ ॥

**ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डा** । ऋदुशनस्पुरुदंशोऽनेहस इति समाहारद्वन्द्वात् पञ्चमी । अनेहसोऽनन्तरं श्रूयमाणेन चका-रेण पूर्वसूत्रोपात्त सख्युरित इति संनिहितत्वात् समुच्चीयते । सेरित्यत्रानुवृत्त शेषे इति षष्ठ्यन्ततया विपरिणम्याभिसंबध्यते । ऋकारान्तस्य "अड्डौ च" इति अरि प्राप्ते, उशनस्पुरुदंशोऽनेहसां "दीर्घङ्याब्०" इति सिलोपे, "अभ्वादे०" इति दीर्घत्वे, "सो रु" इति रुत्वे, विसर्गे च प्राप्ते, सखि-शब्दस्य तु ऐत्वे प्राप्ते डाऽऽरम्भ । डकारो "डित्यन्त्यस्वरादे" इति विशेषणार्थ । सूत्रार्थमाह—**ऋकारान्ता**दित्यादिना । **पिता** इति । पितृ-शब्दात् सेरनेन डादेशोऽन्त्यस्वरादिलोप । एवमन्यत्रापि । उशनसाद्यन्तमुदाहरति—**अत्युशना** इत्यादि । **किंसखा इति** । कुत्सित सखा इति विग्रहः । **सुसखा** इति । पूजित सखेति प्रादिसमास । **सखी** इति । इस्वेकारात् परत्वाभावादनेन सेर्डा न भवति । एवं **सखी**-रित्यत्रापि । **उशनसा**वित्यादि । अत्र सेरभावादनेन डादेशो न । सेरित्यत्र शेषस्येति विशेषणात् हे कर्त इत्यादौ डाऽऽदेशाभाव इत्याह—**शेषस्येत्येव** इत्यादि ॥ ८४ ॥

**नि दीर्घः** । शेषे घुटीत्यधिक्रियते । नीति सप्तम्या पूर्वस्य इत्युपतिष्ठते "सप्तम्या पूर्वस्य" इति न्यायात् । दीर्घ इति श्रुत्या 'स्वरस्य ह्रस्व-दीर्घप्लुता' इति न्यायेन स्वरस्येत्युपस्थिति । शेषे घुटि निपूर्वस्य स्वरस्य दीर्घ इत्यन्वयस्तदाह—**शेषे घुटि** इत्यादिना । घुटि इति नीत्यस्याधार इत्याह—**घुटि परे यो नकारस्तस्मि**न्निति । **राजा** इति । राजन् स् इति स्थिते स्यादिविधौ कर्तव्ये नलोपस्यासत्त्वात् प्रथम ङ्गभावे दीर्घे सति सिलोपादि । एवमन्यत्रापि । **दामानि** इत्यादि । जस्शसादेशस्य शेर्घुट्त्वात् तत्परे नकारे पूर्वस्य स्वरस्य दीर्घ । **स्वरस्ये**ति । अयमभिप्राय – "एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुता" इति स्वरा इत्यनेन संहितायां षष्ठ्यर्थे प्रथमाव्याख्यानात् 'ह्रस्वदीर्घप्लुता स्वराणा स्थाने भवन्तीति' परिभाषा-विज्ञानात् 'अवर्णकवर्गहविसर्गा कण्ठ्या' इति सुघ्न् इत्यत्र सत्यपि घकारकण्ठ्यत्वे दीर्घो न भवतीति । **सुग्नयतेः क्विप्** इति । सुघ हन्तीति "अचित्ते टक्" ५।१।८३। इति टकि, "गमहनजन०" ४।२।४४। इत्यकारलोपे, "हनो ह्नो घ्न" २।१।११२। इति घ्नादेशे–सुघ्नस्तमाचष्टे "णिज् बहुलम्०" इति णिजन्तात् क्विप्, तत सौ, तल्लुकि, नलोपे, पदस्येति घलोपे च प्रथमत्वम् तदाह—**सुक्, सुग्** इति ॥ ८५ ॥

**न्स्महतोः** । शेषे घुटि इत्यधिक्रियते । दीर्घ इत्यनुवर्तते, तथा च स्वरस्येत्युपतिष्ठते । न्समहतो स्वरस्य शेषे घुटि दीर्घ इत्यन्वय । न्स् इत्यत्र स्वरस्यासम्भवात् घुटा प्रत्ययेन स्यादित्वादाक्षिप्त नाम विशिष्यते, विशेषणात् तदन्तविधि । महच्छब्दस्य च स्वरोऽस्त्येव, न तत्र विशेषणात् तदन्तविधिरित्याह—**न्सन्तस्ये**त्यादि । महच्छब्दस्त्वौणादिको व्युत्पन्नोऽव्युत्पन्नो वा "ह्रहिबृहिमहि०" इति कर्तृप्रत्ययान्तो ग्राह्य । धात्वन्तस्य तु

---

१ ××× नास्तीति म० म० ।

महान्तौ, महान्तः, महान्तम्, महान्तौ; परममहान्, अतिमहान्, प्रियमहान्, महान्ति। महत्साहचर्यात् शुद्धधातोः क्विबन्तस्य न भवति—सुहिंसौ, सुहिंसः; सुकंसौ, सुकंसः । नामधातोस्तु भवत्येव—श्रेयस्यति, महत्यतीति क्विपि—श्रेयान्, महान् । घुटीत्येव ? श्रेयसः, महतः पश्य; श्रेयसी, महती कुले । शेष इत्येव ? हे श्रेयन्!, हे महन्! ॥ ८६ ॥

## इन्हन्पूषार्यम्णः शिस्योः ॥ १ । ४ । ८७ ॥

इनन्तस्य हनादीनां च संबन्धिनः स्वरस्य शौ शेषे सौ च परे दीर्घो भवति । दण्डीनि, स्रग्वीणि, वाग्मीनि कुलानि; दण्डी, स्रग्वी, वाग्मी, भ्रूणहानि, बहुवृत्रहाणि; भ्रूणहा, वृत्रहा; बहुपूषाणि, पूषा, स्वर्यमाणि, अर्यमा; "नि दीर्घः" ॥ १ । ४ । ८५ ॥ इति सिद्धे नियमार्थं वचनम्, एषां शिस्योरेव यथा स्यात् नान्यत्र—दण्डिनौ, दण्डिनः, दण्डिनम्; वृत्रहणौ, वृत्रहणः, वृत्रहणम्; पूषणौ, पूषणः, पूषणम्; अर्यमणौ, अर्यमणः, अर्यमणम् । शेष इत्येव ? हे दण्डिन्!, हे वृत्रहन्!, हे पूषन्!, हे अर्यमन्! । 'अर्थवद्ग्रहणे नानर्थकस्य' इति प्लीहानौ, प्लीहानः प्लीहानमित्यत्र

---

महतोऽनेन दीर्घो 'लक्षणप्रतिपदोक्तयो'इति न्यायात् न भवति। यत शतृप्रत्ययान्त महदिति रूप लाक्षणिक, कर्तृप्रत्ययान्त तु प्रतिपदोक्तम्। एतच्च वत्सऋषभावूचतु० । **श्रेयान्** इत्यादि । श्रेयस्शब्दात् शेषे घुटि "ऋदुदित" इति नागमे श्रेयन्स् इति न्सन्तस्य सबन्धिन स्वरस्यानेन शेषे घुटि दीर्घ । एवमन्यत्रापि । नपुसके जस्शसादेशे शावुदाहरति—**श्रेयांसि, यशांसि** इति । दीर्घे सति "शिड्हेऽनुस्वार" इत्यनुस्वार । **सर्पींषि** इति । अत्र "न्स्महतो" इत्यनेन दीर्घलक्षणे स्यादिविधौ विधातव्ये "णषमसत् परे०" इत्यनेन षत्वस्यासत्त्वे सति न्सन्तत्वादनेन दीर्घ, अन्यथा न्षन्तत्वाद् दीर्घो न स्यात् । महच्छब्दस्योदाहरणान्याह–**महान्** इत्यादि । महच्छब्दाच्छेषे घुटि नागमे सति स्वाङ्गस्याव्यवधायकत्वात् अनेन दीर्घे सिलोपे पदस्येति तकारलोप । 'हिसु' हिंसायाम्, उदित्वान्नागम, सुपूर्वात् क्विप्, "शिड्हे०" इत्यनुस्वार सुहिंसशब्दात् सोर्लुक्, सकारस्य संयोगान्तलोप । तस्यासत्त्वान्नलोपो न । निमित्तापायादनुस्वारनिवृत्ति । सुहिन् इति रूप सौ भवति, सुष्ठु हिनस्तीत्यर्थ । एव **सुहिंसौ** इत्यादि । एवं सुष्ठु कंस्ते इति सुकन् **सुकंसौ, सुकंसः** इत्यादि भवति । अत्र न्सन्तत्वाद्दीर्घ. कथ न भवतीत्याह—**महत्साहचर्यादिति** । महदिति शुद्धो धातु क्विबन्तो न सभवति, तत्साहचर्यादन्यस्यापि शुद्धधातो क्विबन्तस्य न भवति। नामधातुस्तु महदपि क्विबन्त सभवति, अतोऽन्यस्यापि धातो क्विबन्तस्य भवति । महच्छब्दस्त्वाचनामत्व न व्यभिचरति, तत्सनियोगशिष्टस्य न्सन्तस्यापि नामत्वाव्यभिचारिण एव ग्रहणम् । **महती कुले** इति । **श्रेयसः पश्य, श्रेयसी कुले** इति न दर्श्यते, न्सन्तत्वाभावेन व्याङ्गविकलत्वात् ॥ ८६ ॥

**इन्हन्पूषार्यम्णः शिस्योः** । दीर्घ इत्यनुवर्तते, तत्पदश्रुत्या स्वरस्येत्युपतिष्ठते । शेषे इत्यधिकृत सावित्यनेनान्वेति न शौ इत्यनेन, व्यभिचाराभावात् । इन्हन्पूषार्यम्ण स्वरस्य शौ शेषे सौ च दीर्घ इत्यन्वय । इन प्रत्ययत्वेन केवलस्यासम्भवेन तदन्तस्य ग्रहणमित्याह—**इन्नन्तस्येति** ।**दण्डीनि** इति। दण्डोऽस्त्येषामिति "अतोऽनेकस्वरात्" ७।२।६। इतीनि,जस्शसोश्च शौ, अनेन दीर्घत्वे रूपम् । **स्रग्वीणि इति** । सृज्यते पुष्पैरिति विग्रहे "क्रुत्संपदादिभ्य क्विप्" ५।३।११४। इति क्विपि "ऋत्विजूदिश्०" २।१।६९। इति सूत्रपाठाद् ऋतो रत्वे स्रज्, साऽस्ति येषामिति "अस्तपोमायामेधास्रजो विन्" ७।२।४७। इति विनि पूर्ववत् जसादौ रूपम् । **वाग्मीनि** इति । प्रशस्ता वागेषामस्तीति "ग्मिन्" ७।२।२५। इति ग्मिनि, शेष पूर्ववत्। सूत्रे हन् इति हन्ते क्विबन्तस्येद ग्रहणम्। न च हन्ते केवलस्य क्विप् दृश्यते इति तदन्तमुदाहरति—**भ्रूणहानि** इत्यादि । भ्रूणपूर्वाद्धन्ते "ब्रह्मभ्रूणवृत्रात्०" ५।१।१६१। इति क्विप् पूर्ववज्जसादि । **बहुवृत्रहाणि** इति । बहवो वृत्रहणो येषु कुलेषु इति बहुव्रीहि । पूषार्यम्णो स्वप्रधानायां वृत्तौ शेरसंभवात् तौ समासे उपसर्जनभूतावुदाहरति—**बहुपूषाणीत्यादि** । ननु इनादीना नान्तत्वात् शिस्योर्घुट्त्वात् "नि दीर्घ" इत्यनेव दीर्घ सिध्यति किमनेनेति, उच्यते–'सिद्धे सत्यारम्भो नियमाय'इति नियमार्थत्वादित्याह–**"नि दीर्घः" इति सिद्धे** इत्यादिना । नियमश्चेह द्विधा संभवति–इन्हन्पूषार्यम्णां शिस्योरेव, इन्हन्पूषार्यम्णामेव शिस्योरिति । तत्र पाश्चात्ये नियमे शिस्योरिनादिभ्योऽन्येषां दीर्घनिवृत्तिरिनादीनां पुन सर्वत्र दीर्घप्रवृत्तिरिति । "नि वा" अभ्वादेरत्वस सौ इति च इत्यादिभ्योऽन्यस्य शिस्योर्दीर्घारम्भोऽनर्थक स्यात्, तस्मात् पूर्वकथित एव नियम इत्याह—**एषामित्यादि** । यद्येषां शिस्योरेव दीर्घ इति नियमसामर्थ्यादेव दीर्घो न भविष्यति तर्हि किमर्थम् "अहन्पञ्चमस्य०" ४।१।१०७। इत्यत्र हन्वर्जनम् ? न च घुट्प्रकरणत्वात् घुट्येव दीर्घस्य नियमेन निवृत्त्या नान्यत्रेति वृत्रहणीति सप्तम्येकवचने "ईङौ वा" इत्यल्लोपाभावपक्षे "अहन्पञ्चमस्य क्विङ्किति" इति दीर्घप्रसङ्ग इति वाच्यम्, योगविभागात्—"इन्हन्पूषार्यम्ण ०" इत्येको योग , शिस्योरिति द्वितीय । तत्र पूर्वेण योगेन घुटीत्यनुवर्तनात् इनादीनां "नि दीर्घ" इति "अहन्पञ्चमस्य०" इति च दीर्घत्व प्राप्तं, घुट्येव दीर्घो भवतीति नियमात् वृत्रहणीत्यादौ सप्तम्या दीर्घो निवर्तते, द्वितीयेन तु, वृत्रहणावित्यादौ घुट्लक्षण । एकयोगेऽप्यदोष —अनाश्रितघुट्विशेषे प्रत्ययत्वमात्राश्रयेण शिस्योर्नियमकरणात् । यद्येव वृत्रहेवाचरतीति वृत्रहायते दण्डीभूत इति "दीर्घश्च्विय्ङ्यक्येषु च"इति दीर्घत्व न प्राप्नोति, नैवम्, प्रकरणादुपान्त्यस्यैव दीर्घस्य व्यावृत्तिर्न स्वरान्तलक्षणस्य । किं च एकस्मिन्नपि योगे घुट्निवृत्तावपि दोष , यतो द्विविधो घुट्–शिस्मौजसश्च । तत्र शिर्नपुसकस्य, अन्ये तु स्त्रीपुंसयोरिति । तत्र तुल्यजातीयापेक्षे नियमे समाश्रीयमाणे व्यवच्छेद्याभावादनर्थक एव नियम स्यादिति नियमविधानसामर्थ्यात् सर्वस्य दीर्घस्य नियमेन व्यावृत्तिरित्यर्थ । यदाह–श्रीकैयट यदि तुल्यजातीयापेक्षो नियम आश्रीयते तदा शेर्नपुसकलिङ्गसबन्धित्व घुट्त्व चास्तीति तदाश्रये नियमे विज्ञायमानेऽयमर्थ स्यात्–इनादीनां नपुसकानां शावेव घुटि दीर्घो भवति न घुडन्तरे इति । न च तेषां नपुसकानामन्यो घुडस्तीति नियमविधानसामर्थ्यात् प्रकरणापन्न घुट्त्व सामर्थ्यप्रापितसन्निधान च नपुसकत्वमुभयमप्यविशेषादनपेक्ष्य प्रत्ययमात्रे स्त्रीपुनपुसकसबन्धिनि दीर्घत्वव्यावृत्ति क्रियत इति सर्वमिष्ट सिद्धम् इति, "अहन्पञ्चमस्य०" इत्यत्राहन्ग्रहण न्यायानुवादकम् इति । अन्यत्रोदाहरति—**दण्डिनावित्यादि** । अत्र नियमात् नानेन दीर्घ । **वृत्रहणौ** इति । सज्ञायां "पूर्वपदस्था०" २।३।६४। इत्यनेन, असज्ञायां तु "कवर्गैकस्वरवति" २।३।७६। इति णत्वम् । **अर्थवदिति** । 'प्लिहि'गतावत "श्वन्मातरिश्वन्०" उणा० ९०२। इति अनि निपातनाद्दीर्घत्वे–प्लीहन् इति । अत्र हनोऽर्थवतो ग्रहणात् तेनैव तदन्तविधित्वे तस्यैव च प्रत्ययाक्षरे नियमेन दीर्घत्वव्यावृत्ति । प्लीहन्नित्येकदेशस्यानर्थकस्य ग्रहणाभावे नियमाभावात् दीर्घत्वव्यावृत्त्यभाव इत्यर्थ । ननु भवत्वत्र प्रकरणे तदन्तविधिस्तथापि इन्निति प्रत्ययग्रहण भवतीति दण्डिनीत्यत्रैव दीर्घत्वेन

---

१ XXXXX नास्तीति म० म० । २ XXX नास्तीति म० म० । ३ शौ सौ शेषे च प० ख० ता० । शौ सौ च शेषे प० पु० ।

नियमो न भवति । वाग्ग्मिनौ, वाग्ग्मिन इत्यादौ तु 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति न्यायाद् भवति ॥ ८७ ॥

## अपः ॥ १ । ४ । ८८ ॥

अपः स्वरस्य शेषे घुटि परे दीर्घो भवति । आपः, शोभना आपो यत्र स स्वाप्, स्वापम्, स्वापौ, स्वापः । बह्वपा इत्यत्र तु समासान्तेन व्यवधानात् न भवति । घुटीत्येव ? अपः पश्य । शेष इत्येव ? हे स्वप् ! ॥ ८८ ॥

## नि वा ॥ १ । ४ । ८९ ॥

अपः स्वरस्य नागमे सति घुटि परे वा दीर्घो भवति । स्वाम्पि, स्वम्पि; अत्याम्पि, अत्यम्पि । समासान्तविधेरनित्यत्वात् बह्वाम्पि, बह्वम्पि ॥ ८९ ॥

## अभ्वादेरत्वसः सौ ॥ १ । ४ । ९० ॥

अत्वन्तस्यासन्तस्य च भ्वादिवर्जितस्य संबन्धिनः स्वरस्य शेषे सौ परे दीर्घो भवति । अतु—भवान्, कृतवान्, गोमान्, यवमान्, एतावान्; अस्—अप्सराः, अङ्गिराः, चन्द्रमाः, स्थूलशिराः, सुमनाः । अभ्वादेरिति किम् ? पिण्डं ग्रसते पिण्डग्रः, चर्म वस्ते चर्मवः । 'अर्थवद्ग्रहणे नानर्थकस्य' इत्येव सिद्धे अभ्वादेरिति वचनम्, 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति न्यायज्ञापनार्थम्; तेनात्रापि भवति—खरणाः, खुरणाः । अधातोरित्यकृत्वाऽभ्वादेरिति करणं भ्वादीनामेव वर्जनार्थम्, तेनेह भवति—गोमन्तमिच्छति क्यन्, क्विप्—गोमान्, एवं स्थूलशिराः । शेष इत्येव ? हे भवन् !, हे सुमनः ! । अतु इति उदित्करणादृदितो न भवति—पचन्, जरन् ॥ ९० ॥

---

भवितव्यं, न तु बहवो दण्डिनो येषामिति बहुदण्डीन्यत्र, नैतदस्ति, यत्र हि प्रत्ययस्यैव ग्रहणम्, अन्यथा वाग्मी इत्यत्रापि दीर्घत्वाभावः स्यात् । ननु मा भूत्तत्रापि दीर्घत्वं का नो हानिरित्याह—**अनिनस्मन्नित्यादि** ॥ ८७ ॥

**अपः ।** शेषे घुटीति दीर्घ इति चानुवर्तते । अपः शेषे घुटि दीर्घ इत्यन्वयस्तदाह—**अपः स्वरस्येत्यादि** । **आपः** इति । अप्शब्दाज्जसि दीर्घः, अप्शब्दस्य बह्वर्थवाचित्वात् द्विवचनैकवचनयोर्न संभव इति बहुवचन एवोदाहरणमुपन्यस्तम् । एवं शोभना आपो यस्य यत्र वा तदन्तविधेरिष्टत्वात् सावनेन दीर्घत्वे—**स्वाप्** इति । एवमन्यदपि । बह्व्य आपो येष्विति "ऋक्पू:पथ्यपो०" ७।३।७६। इति समासान्तेऽति तेन घुटो व्यवधानात् न भवतीत्याह—**बह्वपा** इत्यादि ॥ ८८ ॥

**नि वा ।** अत्र अपः घुटि दीर्घ इति चानुवर्तते । अपो नि घुटि वा दीर्घ इत्यन्वयस्तदाह—**अपः स्वरस्येत्यादि** । **स्वाम्पि, स्वम्पि** इति । शोभना आपो येष्विति "पूजास्वतेः प्राक् टात्" इति समासान्तनिषेधात् जसः शसो वा श्यादेशे "धुटां प्राक्" इति नागमेऽनेन पक्षे दीर्घत्वम् । एवमत्याम्पि । **समासान्तविधेरिति** । "ऋक्पू:पथ्यपोऽत्" इत्यस्येत्यर्थः । ननु नीति विषयसप्तम्येव घटते कथमुक्तं **नागमे सतीति** ? यतो "धुटां प्राक्" इति नागमो विधीयते, स च नपुंसके, नपुंसकं चार्थः, अर्थे च शब्दानुशासनेऽस्मिन्कार्यासंभवात् नपुंसकाभिधायी शब्दो नागमविधावाश्रयणीयः । स च शब्दः प्रयोगादुन्नेतव्य इति नागमो बहिरङ्गः । अयं तु दीर्घः साक्षादप्शब्दमुच्चार्य विधीयमानोऽल्पाश्रयत्वादन्तरङ्ग इति पूर्वं प्रवर्तते पश्चात्तु नागम इति, नैवम्, निग्रहणादेव पूर्वं नागम एव भवति । अन्यथा नागमे विधेये पूर्वं दीर्घे त्वसंकृद्गतत्वात् पश्चान्नागमो न स्यादिति निग्रहणमनर्थकं स्यात् ॥ ८९ ॥

**अभ्वादेरत्वसः सौ ।** अत्र दीर्घ इति शेषे इति चानुवर्तते । अभ्वादेः अत्वसः शेषे सौ दीर्घ इत्यन्वयः । अत्वसोरवयवत्वात् समुदायविशेषणत्वात् "विशेषणमन्तः" इति तदन्तस्य ग्रहणमित्याह—**अत्वन्तस्येत्यादि** । **भवान्** इत्यादि । एतेषां सौ दीर्घत्वे नागमे "पदस्य" इत्यन्तलोपः । आप्नोतेः 'आपोऽपासाप्सराब्जाश्च" उणा० ९६४। इत्यसि अप्सरादेशे च—**अप्सरस्** । 'अगु' गतावस्य "विहायस्सुमनस्पुरुदंशस्पुरुरवोऽङ्गिरस" उणा० ९७६ । इत्यसि इरोऽन्ते च—**अङ्गिरस्** । "चन्दो रमस्" उणा० ९८६। इति रमसि—**चन्द्रमस्** । शृणातेः "मिथिरञ्ज्युषि०" उणा० ९७१। इति कित्यसि—शिरस्, ततः स्थूलशब्देन बहुव्रीहिः —**स्थूलशिरा** इति । एतेषामसन्तत्वात् सौ दीर्घः । **अभ्वादेरिति किम्** ? इति । अभ्वादेरिति विशेषणस्य किं प्रयोजनमित्यर्थः । **पिण्डग्रः** इति । अत्रासन्तत्वेऽपि 'ग्रसुङ्' धातोर्भ्वादित्वात् न दीर्घः । एवं **चर्मेव** इत्यादि । नन्वसोऽर्थवतो ग्रहणात् पिण्डग्र इत्यादौ धात्वेकदेशस्यानर्थकत्वाद् दीर्घो न भविष्यति किं भ्वादिवर्जनेनेत्याह—**'अर्थवद्ग्रहणे०'** इत्यादि । **अभ्वादेरिति वचनम्** इति । किमर्थमिति शेषः । समाधत्ते—**अनिनस्मन्नित्यादि** । 'राज्ञ' इत्यत्र अन् अर्थवान्, दाम्न इत्यत्र तु अनर्थकः । 'शार्ङ्गी'त्यत्र इन् अर्थवान्, 'यशस्वी'त्यत्र तु अनर्थकः । सुपया इत्यत्राऽस् अर्थवान्, "सुस्रोता" इत्यत्र तु अनर्थकः । **तेन**—पूर्वोक्तन्यायज्ञापनेन । **खरणा** इत्यादि । खरपूर्वस्य खुरपूर्वस्य च नासिकाशब्दस्य "खरखुराद्वासिकाया नस्" ७।३।१६०। इति नसादेशेऽनर्थकस्यापि तदन्तविधित्वेन दीर्घः सिद्ध इति । नन्वनिनस्मन्नित्यत्र अतोरनिर्दिष्टत्वादनर्थकेन तदन्तविधेरप्रयोगात् 'अर्थवद्ग्रहणे नानर्थकस्येति' न्यायात् कियानित्यत्रैव दीर्घः प्राप्नोति न गोमानित्यादौ इति, नैष दोषः, प्राप्नोति—अतुरनर्थकोऽपि तदन्तविधिं प्रयोजयति, मत्वादीनामुकारानुबन्धसामर्थ्यात्, अन्यथा तेषामपि शतृवत् ऋकारानुबन्धमेव कुर्यादिति । ननु तथापि 'तदनुबन्धकग्रहणेऽतदनुबन्धकस्य ग्रहणं न' इति ( स एवानुबन्धो यस्यासौ तदनुबन्धकः, स चान्यश्चानुबन्धो यस्य सोऽतदनुबन्धक इति) न्यायात् 'यत्तदेतदो डावादेर्ग्रहणाप्रसङ्गः', क्तवतोरपि ककारानुबन्धसद्भावात् ग्रहणाभावः, नैष दोषः, आनन्तर्यलक्षणेऽनुबन्धानुबन्धवतोः संबन्धे डावत्क्तवत्शब्दस्य डकारककारानुबन्धौ न त्वतुशब्दस्य । अथवा—डकारककारानुबन्धौ प्रत्ययस्य न तु तदेकदेशस्य । ततश्च प्रत्ययैकदेशाग्रहणादव्यापार एव पूर्वोक्तन्यायस्येति । एवं तर्हि **गोमन्तमिच्छतीति** क्यनि, क्विपि, तदन्तस्य च धातुत्वाहाने कथं दीर्घ इत्याह—**अधातोरित्यादि** । अन्यथाऽभ्वादेरित्यपनीय अधातोरित्येव कुर्यात्, न च कृतमतो भ्वादिपठितानामेव वर्जनमित्यर्थः । अतु इत्यत्र उकारानुबन्धस्य प्रयोजनमाह—**अतु इत्यादि** । **पचन्निति** । पचतीति पचेः "शत्रा-

---

१ XXX नास्तीति म० म० । २ X नास्तीति म० म० ।

## क्रुशस्तुनस्तृच् पुंसि ॥ १ । ४ । ९१ ॥

क्रुशः परो यस्तुन् तस्य शेषे घुटि परे तृजादेशो भवति, पुंसि—पुंलिङ्गविषये । क्रोष्टा, क्रोष्टारौ, क्रोष्टारः, क्रोष्टारम्, क्रोष्टारौ; अतिक्रोष्टा, प्रियक्रोष्टा, बहुव्रीहौ 'असिद्धं बहिरङ्गमन्तरङ्गे' इति ऋदिल्लक्षणः कच् न भवति । पुंसीत्येव ? क्रुशक्रोष्टूनि वनानि । घुटीत्येव ? क्रोष्टून् । शेष इत्येव ? हे क्रोष्टो ! । 'क्रोष्टोः क्रोष्टृ' इत्यकृत्वा तृज्वचनं तृस्वस्रादिसूत्रेणाऽऽरर्थम् ॥ ९१ ॥

## टादौ स्वरे वा ॥ १ । ४ । ९२ ॥

टादौ स्वरादौ परे क्रुशः परस्य तुनस्तृजादेशो वा भवति, पुंसि । क्रोष्ट्रा, क्रोष्टुना; क्रोष्ट्रे, क्रोष्टवे, क्रोष्टुः, क्रोष्टोः; क्रोष्ट्रोः, क्रोष्टोः; क्रोष्टरि, क्रोष्टौ; क्रोष्टूनामित्यत्र तु नित्यत्वात् पूर्वं नामादेशे स्वराभावात् न भवति । टादाविति किम् ? क्रोष्टून् । क्रोष्टृनित्यपीति कश्चित् । स्वर इति किम् ? क्रोष्टुभ्याम्, क्रोष्टुभिः । पुंसीत्येव ? क्रुशक्रोष्टुने वनाय । यद्यपि तृप्रत्ययान्तो मृगवाची स्यात्, तथापि प्रयोगनियमो दुर्विज्ञान इत्यादेशवचनम् ॥ ९२ ॥

## स्त्रियाम् ॥ १ । ४ । ९३ ॥

घुटीति न संबध्यते, क्रुशस्तुनस्तृच् पुंसि स्त्रियां चेत्येकयोगाकरणात्; स्त्रियां वर्तमानस्य क्रुशः परस्य तुनस्तृजादेशो भवति, निर्निमित्त एव । क्रोष्ट्री—अत्र प्रागेव तृजादेशे ऋदन्तत्वात् ङीः, क्रोष्ट्र्यौ, क्रोष्ट्र्यः, क्रोष्ट्रीम्, क्रोष्ट्र्या,

---

नशावे०" ५।२।२०। इति शतरि, "कर्तर्यनद्भ्य" इति शवि, "लुगस्यादेत्यपदे" इत्यकारलोपे, सिलोपे, प्रथमैकवचने उदित्करणादत्र ऋदित्वात् दीर्घाभावे नागमे "पदस्य" इत्यन्तलोप । एव जरन्निति । "जॄषोऽतृ" ५।१।१७३। इत्यतृ ॥ ९० ॥

**क्रुशस्तुनस्तृच् पुंसि** । शेषे घुटीत्यनुवर्तते । क्रुश तुन शेषे घुटि तृच् पुंसीत्यन्वय । क्रुश इति तुन इत्यस्य तृच कार्येण पञ्चम्यन्तं विशेषणमित्याह—**क्रुश** इत्यादि । 'क्रुश' आह्वानरोदनयोरत "क्रुसिकम्यमिगमि०" उणा० ७७३। इति तुनि, गुणे, "यजसृज०" इति षत्वे, "तवर्गस्य षवर्ग०" इति टत्वे, स्यादौ घुटि अनेन तुनस्तृजादेशे "ऋदुशनस्०" इति सेर्डादेशेऽन्यत्र "तृस्वसृ०" इत्यारादेशे—**क्रोष्टा** इत्यादि । क्रोष्टारमतिक्रान्त इति तत्पुरुषे—**अतिक्रोष्टा** इति । **प्रियक्रोष्टा** इति । अथात्र बहुव्रीहौ तृजादेशे सति ऋदन्तत्वात् "ऋन्नित्यदित" ७।३।१७१। इति ऋदिल्लक्षण समासान्त कच् कस्मात् न भवतीत्याह-**बहुव्रीहा**वित्यादि । अयमर्थ —तृज्भावो हि समासाद् बाह्यं घुटमपेक्ष्य भवन् बहिरङ्गस्तदनपेक्ष्य पुन समासान्त कच् समासादेव भवन् अन्तरङ्ग इति 'असिद्ध बहिरङ्गमन्तरङ्गे' इति परिभाषया बहिरङ्गस्य तृज्भावस्यासिद्धत्वात् ऋकारान्तत्वाभावात् कच् न भवतीति । **क्रुशक्रोष्टूनी**ति । क्रुशा क्रोष्टारो येष्विति बहुव्रीहौ जस शसो वा श्यादेशे पुंस्त्वाभावात् तृजादेशाभाव , सूत्रे पुंसीति वचनमन्तरेण च द्वयोरन्यत्र सावकाशत्वात् परत्वात् तृज्भाव स्यादिति । **क्रोष्टून्** इति । घुटि इत्यधिकारबलात् तृजादेशाभाव , शसो घुट्त्वाभावात् । **हे क्रोष्टो !** इति । आमन्त्र्यसे शेषत्वाभावात् न तृच् । अथ लाघवार्थं **'क्रोष्टोः क्रोष्टृ पुंसि'** इति किमिति न कृत ? एवमपि कृते न काचिल्लक्ष्यक्षतिरिति चेत्, न, तृशब्दस्य विधीयमान आरादेश क्रोष्टृशब्दस्य न स्यादित्याह-**क्रोष्टोरि**त्यादि ॥ ९१ ॥

**टादौ स्वरे वा** । क्रुशस्तुनस्तृच् पुंसीत्यनुवर्तते । टादौ स्वरे क्रुश तुन तृच् वा पुंसीत्यन्वय । स्वर इति सप्तमी, तत्र च "सप्तम्या आदि" इत्यादिपदोपलब्धिरित्याह—**टादौ स्वरादा**विति । क्रोष्टुशब्दात् टादौ स्वरादौ पक्षेऽनेन तृज्भावे यथायोगं "इवर्णादे०" इत्यादिना रत्वादौ "ट पुंसि ना" इत्यादिना नादौ च—**क्रोष्ट्रा** इत्यादि । **क्रोष्टूनामि**ति । अत्र क्रोष्टुशब्दात् षष्ठीबहुवचने कृताकृतप्रसङ्गित्वेन नित्यत्वात् पूर्वं नामादेशे कृते स्वरादित्वाभावात् तृजादेशो न भवतीत्याह—**अत्रे**त्यादि । **क्रोष्टृन्** इति । अत्र शस्यपि तुनस्तृजादेश कश्चिन्मन्यते, तन्मतसंग्रहार्थं टादौ इत्युच्यते, अन्यथा स्वर इति निमित्तविशेषोपादानात् घुटीत्यधिकाराभावात् टादिसप्रत्ययो भवत्येव, तेन टाया आदिष्टादिरिति शसोऽपि संग्रह सिद्ध इति । ननु क्रुशेस्तृच्प्रत्ययेनैव सिद्धे किमर्थोऽय तुनस्तृजादेश ? न च तृप्रत्ययान्त क्रियाशब्दो न मृगवचन , तुन्प्रत्ययान्त पुनर्मृगे रूढस्तत्र तृप्रत्ययान्तेनापि मृगाभिधान यथा स्यादित्येवमर्थं आदेश इति वाच्यम् । तुन्प्रत्ययान्तवत् तृप्रत्ययान्तस्यापि रूढ्या मृगार्थबोधकत्वात् । नन्वेव सत्यविशेषोपदेशादुभयोरविशेषेण प्रयोग स्यात्तन्निवृत्त्यर्थं आदेश इत्यपि न वाच्यम्, अविशेषोपदेशेऽपि हि विशेषेणैव प्रयोगदर्शनात्, यथा घरतिरविशेषेणोपदिश्यते-'घृ' सेचने इति । अथ च विशेषेणैव प्रयुज्यते-घृत, घृणा, घर्म इति । यत प्रयुक्तानामिदमन्वाख्यान न त्वस्मादपूर्वशब्दप्रतिपत्तिरिति विशेषविषयत्व भविष्यति, अनेनैव न्यायेन "अस्तिब्रुवोर्भूवचावशिति" ४।४।१। इत्यादीन्यपि प्रत्याख्येयानीत्याह—**यद्यपी**त्यादि । अयमर्थ —आदेशविषयादन्यत्र क्रोष्टृशब्द प्रयुज्यमान क्रोष्टृभ्यामित्यादौ क्रियामेवोपाददानो दृश्यते । अन्वाख्यान तु यतो दृष्टस्यैव, तत्रासत्यादेशवचने क्रोष्टृ इत्यस्य मृगवाचित्व दुर्विज्ञेयम्, मृगे प्रयुज्यमानमप्यपप्रयोग मन्यते । अथ कथञ्चित्तृप्रत्ययान्तो मृगवाचित्वेन प्रतिपन्नस्तथापि प्रयोगनियमो दुर्विज्ञानस्तृप्रत्ययान्त एव मृगवाची पुंसि घुटि स्त्रियां च टादौ स्वरे चोभय, अन्यत्र क्रोष्टुशब्द एव मृगवाची । अमृगवाची पुन क्रोष्टृशब्द सर्वत्रेत्यय विचित्रप्रयोगनियममनुग्रस्य प्रतिपत्तु दुष्कर , शास्त्रानुसारेण विशेषेणैव प्रतिपद्यते । एव "अस्तिब्रुवोर्भूवचावशिति" इत्यादयोऽपि अशिदादिविषयेऽस्त्यादीनां प्रयोगो मा भूदिति प्रयोगनियमार्था एव विज्ञायन्ते । अबुधबोधनार्थं तु किंचिद्वचनेन प्रतिपाद्यते । न्यायव्युत्पादनार्थं तु सूत्रकृत किञ्चित्प्रत्याचक्षते । न ह्यत्रैक पन्था समाश्रीयत इति ॥ ९२ ॥

**स्त्रियाम्** । निमित्तविशेषानुपादानेऽपि 'क्रुशस्तुनस्तृच् पुंसि स्त्रियां च' इत्येकयोगाकरणात् घुटीति न सबध्यत इत्याह—**घुटी**त्यादि । अत्र पूर्वसूत्रात् क्रुशस्तुनस्तृच् इत्यनुवर्तते । स्त्रियां क्रुशस्तुनस्तृच् इत्यन्वयस्तदाह—**स्त्रियां वर्त्तमानस्ये**त्यादि । ननु घुटीत्यस्यानुवृत्तावपि स्याद्यधिकारस्यानुवृत्तिरस्तु, "टादौ स्वरे वा" इत्यत्राप्यादिशब्दस्य व्यवस्थावाचित्वाट्टादि स्यादिरेव गृह्यत इति चेन्मैवम्, स्याद्यनुवृत्तौ क्रोष्ट्री भक्तिरस्येति 'क्रोष्ट्रीभक्ति' इति न सिद्ध्यति, आदेशाभावात् 'अन्तरङ्गानपि विधीन् बहिरङ्गा लुप् बाधते' इति लुपि सत्यां "लुप्यय्वृल्लेनत्" इति स्थानिवत्त्वप्रतिषेधात् प्रत्ययलक्षणाभावात् "त्रिचतुरस्त्रियां तिसृचतसृ०" इति पुन स्यादौ विधानाच्च नानुवर्तते स्याद्यधिकार इत्याह—**अत्रे**त्यादि ।

---

१ ऋलक्षण पु० ।  २ पुंसि इति किम् ख० सा०, पु० ।  ३ °त्यनुक्त्वा ख० सा०, पु० ।

क्रोष्ट्रीभ्याम्, हे क्रोष्ट्रि !; पञ्चभिः क्रोष्ट्रीभिः क्रीतैरिति विगृह्य "मूल्यैः क्रीते" ॥ ६ । ४ । १५० ॥ इतीकण्, तस्य "अनाम्न्यद्विः प्लुप्" ॥ ६ । ४ । १४१ ॥ इति लुपि, "ङ्यादेर्गौणस्या०" ॥ २ । ४ । ९५ ॥ इत्यादिना ङीनिवृत्तौ पञ्चक्रोष्ट्रभी रथैः;—अत्र निर्निमित्तत्वादादेशस्य ङीनिवृत्तावपि निवृत्तिर्न भवति, अत एव च "क्यङ्मानि पित्तद्धिते" ॥३।२।५० ॥ इति पुंवद्भावो न भवति, पुंवद्भावेनापि हि आदेश एव निवर्तनीयः; स च निमित्तत्वाश्रयणेन ङीनिवृत्तावपि निवर्तते एव ॥ ९३ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां श्रीसिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनतत्त्वप्रकाशिकावृत्तौ प्रथमस्याध्यायस्य चतुर्थः पादः समाप्तः ॥ ४ ॥

सोत्कण्ठमङ्गलगतैः कचकर्षणैश्च वक्त्राब्जचुम्बननखक्षतकर्मभिश्च ।
श्रीमूलराजहतभूपतिभिर्विलेसुः संख्येऽपि खेऽपि च शिवाश्च सुरस्त्रियश्च ॥ ४ ॥

## समाप्तोऽयं प्रथमोऽध्यायः ॥ १ ॥

---

ननु स्त्रियामीकारस्यावश्यंभावित्वादीकार एवायमादेशो भविष्यति, कथमुक्त निर्निमित्त इति ? न वाच्यम्, ईकारानिर्देशात् । नन्नु प्रश्लिष्टनिर्देशात् निर्दिष्ट एव, स्त्री ई स्त्रीति-स्त्रिया ई स्त्रीत्वस्य द्योतक ईकार इत्यर्थ । अर्थगत च स्त्रीत्वमीकारे आरोप्य "स्त्रीद्युत" इति दाम् । तन्नेतरेतराश्रय भवति-आदेशनिमित्त ईकारस्तदाश्रयत्वादादेश इति इतरेतराश्रयाणि च न प्रकल्पन्ते । एव तर्हि अस्मादेव ज्ञापकाद्भवत्यत्रेकारो यदयमीकारे आदेश शास्ति । तत्रापि पञ्चभि क्रोष्ट्रीभि क्रीत इति पञ्चक्रोष्ट्रीशब्दादिकण "अनाम्न्यद्वि ०" इति लुपि "ङ्यादेर्गौणस्या०" इति ङीनिवृत्तौ प्रत्ययलोपलक्षणप्रतिषेधादीकारनिमित्तस्तृजादेशो न प्राप्नोति । अन्तरङ्गाणां च विधीना लुपा बाधनात् पूर्वमेव तृजादेशो न लभ्यते, पुंवद्भावाद् वा । तस्मान्निर्निमित्त एवायमादेश । नन्वेवं सत्यपि इकणि "जातिश्च णि०" ३।२।५१। इति पुंवद्भाव प्राप्नोति, तस्मिंश्च सति स्त्रीत्वाभावात्तृजादेशो न स्यात्, नैवम्, "प्रत्यय प्रकृत्यादे" इति हि यस्मादिकण् विधीयते तदादेरेव पुंस्त्वनिमित्त कार्य, न तून्नाधिकस्य । अत्र हि समासादिकण् विहितः स कथमूनस्य क्रोष्ट्रीत्यस्य पुंवद्भाव प्रवर्त्तयितु पारयति । अन्तरङ्गाणा च विधीनां लुपा बाधनाद् वा पुंवद्भावानवकाशः । नन्नु तथापि इकण लुप पित्वस्य पुंवद्भावफलत्वात् "क्यङ्मानि०" ३।२।५०। इति पुंवद्भावेन स्त्रीत्वनिवृत्त्या तन्निमित्तस्य तृजादेशस्यापि निवृत्ति प्राप्नोति, सत्यमेतद्, निर्निमित्तादेशविधानादेव पुंवद्भावो बाध्यते । अन्यथाऽसन्निमित्तादेशविधाने तन्निवृत्तौ आदेशस्य निवृत्ति स्यात्तत्सन्निमित्तादेशेऽपि समानमेव किं निर्निमित्तादेशविधानेनेत्याह—**अत एव** इत्यादि ॥ ९३ ॥

**सोत्कण्ठेति** । उत्कण्ठया सहित यथा स्यात्तथा **मङ्गलम्**—उत्सवं गतानि प्राप्तानि तै, **कचकर्षणैः**—केशोन्मर्दनै —केशग्रहैरिति यावत् च **वक्त्रं**—मुखमेवाब्जं—कमल, तस्मिन् **चुम्बनम्**—अन्योन्यवक्त्रसंयोगस्तस्मिन्, कुचादिषु या ये **नखक्षतास्त** एव कर्माणि तै करणभूतैश्च **संख्ये**—युद्धे, **शिवा**—जम्बूकाश्च, **खे**—वियति, **सुरस्त्रियः**—स्वर्गवध्वश्च, श्रिया युक्तेन **मूलराजेन हता**—रणे विध्वस्ता ये **भूपतयो** वैरिराजानस्तैः साकं **विलेसुः**—विलास चक्रुः—रेमिरे इत्यर्थ ॥ ४ ॥ **समाप्तोऽयं प्रथमोऽध्यायः** ॥ १ ॥

इति श्रीमत्तपागच्छगगनाह्मणिगीतार्थसार्वभौमाऽऽगमोद्धारकशैलानाद्नृपतिपरिपूजितपादारविन्दआगमोदयसमिति-वर्द्धमानजैनागममंदिराद्यनेकशासनहितवर्धकसंस्थानिर्माणोपदेशकभट्टारककुलमूर्द्धन्यश्री **१००८ आनंदसागरसूरीश्वराणां** साम्राज्ये तच्चरणनिलीनमानसेनानवासनवपदपीयूषपानोद्यतभव्यभावभावोद्बोधसूर्योदयश्रीसिद्धचक्र-नवपदाराधकसमाजादिविविधसंस्थासंस्थापकेन श्रीवर्द्धमानतपोनिष्णातेन श्रीसिद्धचक्राराधन-तीर्थोद्धारकेण वैयाकरणकेसरिणा **पन्यासप्रवरश्रीचन्द्रसागरगणीन्द्रेण** विरचितायां श्रीसिद्धहेमचन्द्रसूत्रवृत्तिन्यासरत्नाकरावतारिकायामाऽऽनन्दबोधिन्या प्रथमस्याध्यायस्य स्वरांतप्रकरण नाम चतुर्थ पाद ॥४॥ तत्परिसमाप्तौ समाप्तोऽय प्रथमोऽध्याय. ॥ १ ॥

---

१ °समाप्त. ग्रं० ५७१ । पु०, प्रथमोऽध्याय समाप्त । खं० ता० । २ संख्ये च° पु०, खं० ता० ।

## ॥ अर्हं ॥

# द्वितीयाऽध्याये प्रथमपादः ॥

## त्रिचतुरस्तिसृचतसृ स्यादौ ॥ २ । १ । १ ॥

स्त्रियामित्यनुवर्तते । त्रि चतुर् इत्येतयोः स्त्रीलिङ्गे वर्तमानयोस्तत्संबन्धिन्यन्यसंबन्धिनि वा स्यादौ विभक्तौ तिसृ चतसृ इत्येतावादेशौ यथासंख्यं भवतः । तिस्रस्तिष्ठन्ति, तिस्रः पश्य; चतस्रस्तिष्ठन्ति, चतस्रः पश्य; तिसृभिः, चतसृभिः; तिसृभ्यः, चतसृभ्यः; तिसृणाम्, चतसृणाम्; तिसृषु, चतसृषु; प्रियास्तिस्रोऽस्येति प्रियतिसा पुरुषः, प्रियतिस्रौ, प्रियतिस्रः; एवं प्रियचतसा, प्रियचतस्रौ, प्रियचतस्रः; प्रियास्तिस्रोऽस्य कुलस्य प्रियतिसृ कुलम्, प्रियतिसृणी, प्रियतिसृणि, एवं प्रियचतसृणी, प्रियचतसृणि; एषु विभक्त्याश्रयत्वेन बहिरङ्गलक्षणस्य तिसृचतस्रादेशस्यासिद्धत्वात् समासान्तः कच्[3] न भवति, परत्वात् च तिस्रादेशे कृते पश्चात् नाऽऽगमः । स्यादाविति किम्? प्रियत्रिकः, प्रियचतुष्कः; तिसृणां प्रियस्त्रिप्रियः, चतुष्प्रियः; प्रियत्रि कुलम्, प्रियचतुष्कुलम्[4] । कथं तर्हि प्रियतिसृ कुलम्? "नामिनो लुग् वा" ॥ १ । ४ । ६१ ॥ इति लुकि सति स्थानिवद्भावाद् भविष्यति, यथा—हे त्रपो! । स्त्रियामित्येव? त्रयः, चत्वारः; त्रीणि, चत्वारि, प्रियास्त्रयः त्रीणि वा यस्याः सा प्रियत्रिः, प्रियत्री, प्रियत्रयः; एवं प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः; अत्र त्रिचतुरावस्त्रियां समास एव तु स्त्रियामित्यादेशौ न भवतः । कथं तिसृका नाम ग्रामः? संज्ञाशब्दोऽयम् ॥ १ ॥

## ऋतो रः स्वरेऽनि ॥ २ । १ । २ ॥

तिसृचतसृसंबन्धिन ऋकारस्य स्थाने तत्संबन्धिन्यन्यसंबन्धिनि वा स्वरादौ स्यादौ परतो रादेशो भवति, अनि-

---

**त्रिचतुरस्तिसृचतसृ स्यादौ** । **स्त्रियामि**ति । पूर्वसूत्रादिति शेष । तच्चानुवर्तमान श्रुतत्वात् त्रिचतुर इत्यस्यैव विशेषण, यत्त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणमेषामेव विशेषणम् । स्त्रियां द्वयोरेकस्मिन्निति येऽर्था निर्दिष्टास्ते श्रूयमाणानामेव शब्दानां विशेषणानि न तु समुदायस्येत्याह—**त्रि चतुर् इत्येतयो**रित्यादि । 'गुण कृतात्मसस्कार' इति न्यायात् प्राप्तविशेषणसंबन्धैस्त्रिचतुर्युष्मदस्मद्भिश्च स्यायाक्षिप्त नाम विशेष्यते । तत्र 'नामाधिकारे तस्य च तदुत्तरपदस्य ग्रहण भवतीति' केवलयोस्तदन्तस्य चाऽऽदेशप्रवृत्ति । ते च 'निर्दिश्यमानस्यादेशा भवन्तीति' त्रिशब्दादीनामेव भवतीति । **तिस्रः, चतस्र** इति । त्रिचतुर्भ्यां जश्शसोरनेन तिसृचतस्रादेशे "अर्चौ च" इति "शसोऽता०" इति च बाधित्वा "ऋतो र ०" इति रत्वम् । तिष्ठन्ति पश्येत्यनुप्रयोगौ प्रथमाद्वितीयाबहुवचनाभिव्यक्त्यर्थौ । **तिसृणाम्** इत्यादि । अत्रानेन तिस्राद्यादेशे "ह्रस्वापश्च" इति नाम्, दीर्घस्तु न भवति 'अतिसृचतसृप्र' इत्युक्ते । एवमन्यदपि । यद्यपि समास पुंसि नपुसके वा वर्तते त्रिचतुरौ च स्त्रिया वर्त्तेते, तथापि भवत्येव तिसृचतसृभाव इत्युदाहरति—**प्रियास्तिस्रोऽस्ये**त्यादि । **प्रियतिसा** इति । अत्रानेन तिस्रादेशे सति "ऋदुशनस्पुरुदशो०" इति डाऽऽदेश । एव प्रियचतसा इत्यत्रापि । **प्रियतिस्रौ** इत्यादि । अत्र "ऋतो र स्वरे०" इति रत्वम् । नपुसके वर्तमानस्य समासस्योदाहरणान्याह—**प्रियास्तिस्रोऽस्य कुलस्ये**त्यादि । अत्र 'अन्तरङ्गानपि विधीन् बहिरङ्गा लुब्बाधते' इत्यादेशात् प्रथममेव समासाऽवयवस्य स्यादेः "ऐकार्थ्ये" इति लुपि प्रियत्रि, प्रियचतुर् इति स्थिताभ्यां परत्वमात्रविज्ञानादन्यपदार्थसंबन्धिन्यपि स्यादौ "त्रिचतुर०" इति तिस्राद्यादेशे च बहुव्रीहेरुच्यमान समासान्त "ऋन्नित्यदित " इति कच् कस्मात् न भवतीत्याह—**एष्वि**त्यादि । समासाद् भवन् समासान्तस्तावत् न विभक्तिमपेक्षत इत्यन्तरङ्ग, विभक्तिमपेक्षमाण पुनस्तिस्राद्यादेशो बहिरङ्ग, तत्रान्तरङ्गे कचि कर्तव्ये बहिरङ्गस्तिसृचतस्रादेशोऽसिद्ध इति ऋल्लक्षण कच् ऋदन्तत्वाभावात् न भवतीत्यर्थ । ननु प्रियतिसृणीत्यादौ स्यादौ स्वरे कृताकृतप्रसङ्गित्वेन नित्यत्वात् "अनाम् स्वरे नोऽन्त." इति पूर्वं नागमे कृते पश्चात्तेन व्यवधानात् कथ तिस्रादेश इति चेत्[2] न, तिस्रादेशे कृते शब्दान्तरप्राप्त्या नागमस्यानित्यत्वात् सन्निपातपरिभाषया नागमस्याप्रवृत्तेश्च, द्वयोरन्यत्र सावकाशत्वात् परत्वात् पूर्वं तिस्रादेश एवेत्याह—**परत्वादि**त्यादि । किञ्च "ऋतो र स्वरेऽनि" इत्यत्र अनीतिवचनमनर्थकं स्यात्, स्वरादौ पूर्वं नकारे तिस्राद्यादेशाभावात् रत्वप्रसङ्ग एव नास्तीत्यनीतिवचनात् नागमादे पूर्वं तिस्राद्यादेश इति विज्ञायत इति । **प्रियत्रिक** इत्यादि । प्रियास्तिस्रो यस्येत्यादिविग्रहे 'अन्तरङ्गानपि विधीन् बहिरङ्गा लुप् बाधत' इति, "ऐकार्थ्ये" इति समासावयवविभक्तेर्लुपि, "शेषाद्वा" ७।३।१७५। इति कचि, तेन स्यादेर्व्यवधानात् तिस्राद्यादेशाभाव । एव **त्रिप्रिय** इत्यादावपि । **प्रियत्रि कुलमि**त्यादि । अत्र "अनतो लुप्" इति स्यादेरभावाच्च तिस्राद्यादेश । **कथमि**ति । **प्रियतिसृ कुलम्** इत्यादौ प्रियत्रिशब्दात् "अनतो लुप्" इति अन्तरङ्गमपि तिस्रादेशं पूर्वोक्तन्यायेन बाधित्वा लुपि कृतायां "लुप्यय्वृल्लेनत्" इति स्थानिवद्भावप्रतिषेधात् स्यादेरभावात् कथ तिस्रादेश इति प्रश्नार्थ । समाधत्ते—**"नामिनो लुग् वा"** इत्यादि । लुक्पक्षे "लुप्यय्वृल्लेनत्" इत्यनुपस्थानादित्यर्थ । स्पष्टञ्चेद "अनतो लुप्" इति सूत्रे तत्त्वप्रकाशिकायामानन्दबोधिन्या च । **हे त्रपो!** इति । अत्र "नामिनो०" इति लुकि सति तस्य स्थानिवद्भावात् "ह्रस्वस्य गुण " इति सिना सह गुण सिद्ध इति । **त्रयः** इत्यादि । अत्र त्रिचतुरो स्त्रियामवर्त्तमानत्वात् न तिस्राद्यादेश । यदा हि समास स्त्रियां वर्तते त्रिचतुरौ तु पुनपुसकयोस्तदादेशाभावः, स्त्रियामिति विशेषणस्य त्रिचतुरोरेव निर्णीतत्वादित्याह—**अत्रे**त्यादि । **कथमि**ति । त्रिशब्दात् संज्ञायां के आपि बहुवचने च स्यादेर्व्यवधानात् कथ तिसृभाव इति प्रष्टुरभिप्राय । समाधत्ते—**संज्ञाशब्दोऽयमि**ति । स्त्रीलिङ्गबहुवचनविषय चेद नामोच्यते नात्र त्रिशब्दार्थोऽस्तीति । पृषोदरादिदर्शनाद्वाऽत्र त्रिशब्दस्य तिसृभाव ॥ १ ॥

**ऋतो र. स्वरेऽनि** । र इति विधेयम् । स्वर इति निमित्त, अनीति च तस्य विशेषणम् । ऋत इति षष्ठ्यन्तेन स्थानी ऋकारः प्रतिनिर्दिश्यते, स च त्रिचतुर इत्यनेन विशेष्यते, तत्र त्रिचतुरोर्ऋकाराभावात्तदादेशप्रतिपत्तिरित्याह—**तिसृचतसृसंबन्धिन** इत्यादि । **स्वरादौ स्यादौ** इति ।

---

१ ०मानया० पु० । २ × × × × × × इति पाठो नास्तीति पु० । ३ कच् पु० । ४ °पुः कुल° पु० ।

नकारविषयादन्यत्र; समानदीर्घत्वाड्डुरामपवादः । तिस्रः चतस्रस्तिष्ठन्ति, पश्य वा; प्रियतिस्रौ, प्रियचतस्रौ; प्रियतिस्रम्, प्रियचतस्रम्; प्रियतिस्रः, प्रियचतस्रः आगतं स्वं वा; प्रियतिस्रि, प्रियचतस्रि निधेहि । स्वर इति किम्? तिसृभिः, चतसृभिः । अनीति किम्? प्रियतिसृणी, प्रियचतसृणी; प्रियतिसृणि; प्रियचतसृणि; तिसृणाम्, चतसृणाम् । ऋत इति तिसृचतस्रोः प्रतिपत्त्यर्थम्, इतरथा हि तदपवादस्त्रिचतुरोरेवायमादेशो विज्ञायेत । अन्ये तूपसर्जनयोस्तिसृचतसृशब्दयोर्ङौ घुटि चानि स्वरादौ रत्वविकल्पमिच्छन्ति, तन्मते–प्रियतिस्रि, प्रियतिसरि; प्रियचतस्रि, प्रियचतसरि; प्रियतिस्रौ, प्रियतिसरौ, प्रियचतस्रौ, प्रियचतसरौ; प्रियतिस्रः, प्रियतिसरः; प्रियचतस्रः, प्रियचतसरः; प्रियतिस्रम्, प्रियतिसरम्; प्रियचतस्रम्, प्रियचतसरम्; प्रधानस्य तु नित्यमेव रत्वम्–तिस्रः, परमतिस्रः; चतस्रः, परमचतस्रः । अपरे त्वनि स्वरे सर्वत्र विकल्पं जस्शसोस्तु नित्यं मन्यन्ते, तन्मते–प्रियतिस्रौ, प्रियतिसरौ; प्रियचतस्रौ, प्रियचतसरौ; प्रियतिस्रः, प्रियतिसुः; प्रियचतस्रः, प्रियचतसुः आगत स्वं वा इत्यादि । जस्शसोस्तु–तिस्रः, चतस्रः; परमतिस्रः, परमचतस्रः; प्रियतिस्रः, प्रियचतस्रः तिष्ठन्ति पश्य वेति नित्यमेव रत्वम् ॥ २ ॥

## जराया जरस् वा ॥ २ । १ । ३ ॥

जराशब्दस्य स्वसंबन्धिन्यन्यसंबन्धिनि वा स्वरादौ स्यादौ परतो जरस् इत्ययमादेशो वा भवति । जरसौ, जरसः; जरसम्, जरसौ, जरसः; जरसा, जरसे, जरसः, जरसः जरसोः, जरसाम्, जरसि, जरसोः; पक्षे–जरे, जराः; जराम्, जरे, जराः; जरया, जरायै, जरायाः २, जरयोः २, जराणाम्, जरायाम्, एकदेशविकृतस्यानन्यत्वात् अतिजरसौ, अतिजरौ, अतिजरसः, अतिजराः; अतिजरसम्, अतिजरम्, अतिजरसः, अतिजरान्; अतिजरसा, अतिजरेण; अतिजरसैः, अतिजरैः; अतिजरसे, अतिजराय; अतिजरसः, अतिजरात्; अतिजरसः, अतिजरस्य, अतिजरसोः, अतिजरयोः २, अतिजरसाम्, अतिजराणाम्, अतिजरसि, अतिजरे । नपुंसके स्यमोरम्भावे–अतिजरसम्, अतिजरम्; "जरसो वा" ॥ १ । ४।६०॥ इति लुपि–अतिजरः, अतिजरसी, अतिजरे तिष्ठतः पश्य वा; शौ परत्वात् जरसादेशस्ततो नाऽऽगमः–अतिजरांसि,

---

पूर्वसूत्रादनुवृत्तेन स्यादौ इत्यनेन स्वर इति संबन्धे "सप्तम्या आदिः" इति आदिसप्रत्यय इति भाव । ननु स्वरादौ तिस्राद्यादेशे परत्वात् नागमाप्तानेन रत्वप्रवृत्तेः क्व अनीत्युपयुज्यत इति चेदुच्यते, अनीति विषयसप्तमी, तेन नकारविषये रत्वस्य व्यावृत्तिरित्याह–**नकारविषयादि**त्यादि । ननु स्वरादौ स्यादौ त्रिसाद्यादेशे "इवर्णादे०" इति रत्व सिद्धमित्यत आह–**समानदीर्घत्वे**त्यादि । "इवर्णादे०" इति रत्व बाधित्वा परत्वात् "शसोऽता०" इति दीर्घत्वस्य, "अर्ङौ च" इति अर, "ऋतो डुर्" इति डुरश्च रत्वमपवाद इत्यर्थ । **तिस्र** इत्यादि । त्रिचतुर्भ्यां जस्शसो रूपम् । तत्र जसि "अर्ङौ च" इत्यरो रत्वमपवाद । शसि तु "शसोऽता०" इति समानदीर्घत्वस्य रत्वमपवाद । **प्रियतिस्रावि**त्यादि । अरं बाधित्वा रत्वम् । **प्रियतिस्रमि**त्यादि । अमि "समानादमोऽत" इत्यकारलुक अरं च बाधित्वा रत्वम् । '**समानदीर्घत्वाड्डुरामपवाद.**' इति अकारलुकोऽप्युपलक्षणम् । ङसिङसो –**प्रियतिस्र.,प्रियचतस्र** इति । "ऋतो डुर्" इति डुरं बाधित्वा रत्वम् । **आगतं स्व** वेत्यनुप्रयोगो षष्ठीपञ्चम्येकवचनाभिव्यक्त्यर्थौ । ङौ–**प्रियतिस्रि** इत्यादि । अरं बाधित्वा रत्वम् । **तिसृभिरि**त्यादि । भिस स्वरादित्यादित्वाभावादत्व न । **प्रियतिसृणी** इत्यादि । अत्र स्वरादित्यादे सत्त्वेऽपि नकारविषयत्वाद्रत्वाभाव । **तिसृणाम्** इति । अत्रामो नामादेशे नकारविषयत्वं बोध्यम् । ननु ऋत इति किमर्थम्? यावता पूर्वसूत्रात्तिसृचतसृ इत्येतयोरनुवृत्तौ तयोश्च षष्ठ्यन्ततया विपरिणामेन कार्यप्रतिपत्तौ "षष्ठ्या अन्त्यस्य" इति तदन्तस्य विधिर्भवन् ऋकारस्यैव भविष्यतीत्याह–**ऋत** इत्यादि । अयमर्थ –तिसृचतसृ इति प्राग्विधेयतया प्रतिपन्न न कार्ययोगितया, कार्ययोगे तु त्रिचतुर इत्यस्यैव कार्ययोगितया प्रतिपन्नस्य कार्ययोगाय इहानुवृत्तिर्विज्ञायेत । तत्राय विधिस्तिसृचतस्रो प्राप्तयोस्त्रिचतुरोरारभ्यमाणस्तदपवाद स्यात्र तदन्तस्य, ऋत इत्युच्यमाने तु तिसृचतस्रावन्तरेण त्रिचतुरोर्ऋकाराभावात्तयोरेवायमादेशो विज्ञायत इति तदपवादो रेफो मा भूदिति ऋकारस्य इत्युच्यते । **इतरथा** इति । तिसृचतस्रो प्रतिपत्त्यर्थ ऋत इत्यभावे इत्यर्थ । **तदपवाद** इति । व्यञ्जनादौ स्यादौ पूर्वयोग सावकाश स्वरादौ तु अयमेव स्यादिति भाव । आचार्यशाकटायनादयस्तु तिसाद्यादेशस्य ङौ घुटि चानि स्वरादौ रत्वविकल्पमिच्छन्तीत्याह–**अन्ये त्वि**त्यादि । ललितस्वभावस्तु प्रधानेऽप्रधाने च जस्शसोरेव नित्य रत्व मन्यत्ते, अन्यत्र तु विकल्पमित्याह–**अपरे त्वि**त्यादि । वार्तिककारस्तु जस्शसोरेव रेफमिच्छति नान्यत्र ॥ २ ॥

**जराया जरस् वा** । पूर्वसूत्रात् स्यादौ स्वरे इति चानुवर्तते । स्वरे इति स्वरादावित्यर्थक "सप्तम्या आदि." इति आदिपदोपस्थिते । जराया स्वरादौ स्यादौ जरस् वा इत्यन्वयस्तदर्थमाह–**जराशब्दस्य** इत्यादिना । 'जॄष्' वयोहानौ, अत "षितोऽङ्" ५।३।१०७ इत्यङि, "ऋवर्णदृशोऽङि" ४।३।७ इति गुणे, "आत्" इत्यापि–जरा, तत स्वरादौ स्यादौ अनेकवर्णत्वात् सर्वस्य पक्षे जरसादेशो समुदाहरति–**जरसा**वित्यादि । **पक्षे**–जरसादेशाभावपक्षे इत्यर्थ । उदाहरति–**जरे** इत्यादि । ननु जरामतिक्रान्तावित्यादि विग्रहे "गोश्चान्ते०" इति ह्रस्वत्वे जराशब्दस्याभावात् कथ जरसादेश इत्याह–'**एकदेशविकृतस्य०**' इत्यादि । छिन्नेऽपि पुच्छे श्वा श्वैव, न चाश्वो न च गर्दभ इति न्यायादिति भाव । ननु जरसा दन्ता शीर्यन्ते, जरसे त्वा परिदधुरिति तृतीयाचतुर्थ्येकवचनयोरेव बाहुल्येन प्रयोगदर्शनात् कथ सर्वत्रोदाहृतम्? उच्यते–स्वरादौ सामान्येन विधानाद् विशिष्टस्वरग्रहणे प्रमाणाभावादिति । अत्र च स्याद्याक्षिप्तनामाधिकारे तस्य च तदन्तस्य च ग्रहणात् यथा केवलस्य भवति तथा तदन्तस्यापि । तत्र यदा नपुंसक जराशब्दान्तनामाभिधेय अतिजरांसि ब्राह्मणकुलानीति तदा नपुंसकाश्रये ह्रस्वत्वे कृते 'एकदेशविकृतस्यानन्यत्वेन' जराशब्दान्तनाम भवति, ततो जस्शसो शावनेन जरसादेशश्च प्राप्नोति स्वरान्तलक्षणनागमश्च । तत्र जरसा कृताचीत्यत्र द्वयो सावकाशत्वात् परत्वात् जरसादेश एवेत्याह–**शौ परत्वादित्यादि** । ननु पूर्वमपि नागमे कृते सनागमस्यादेशो पुनर्घुडन्तलक्षणे नागमे रूपस्य सिद्धत्वात् किं परत्वचिन्तया इति चेद्? न, यदि पूर्वं नागम स्यात् स च पूर्वप्रकृतिभक्त प्रकृतिमेव न व्यवदध्यात्, अवयवस्य तु जरशब्दस्य व्यवधायक इति 'निर्दिश्यमानस्याऽऽदेशा भवन्तीति' नामाधिकारे सत्यपि तदुत्तरपदग्रहणे जरान्ताया प्रकृतेर्योऽवयवो जरशब्दस्तस्य विभक्तौ जरसादेशो विधीयमानो न प्राप्नोति । अथापि स्यात्तथापि सकारात् परस्य नागमस्य श्रवणं स्यात् । तस्मात् परत्वात् पूर्वं जरसादेश एवेष्टव्य । तत्र कृते घुट-

अतिजराणि तिष्ठन्ति पश्य वा । स्त्रियां तु विभक्तेरापा व्यवधानात् न भवति । स्वर इत्येव ? जरा, जराभ्याम्; जराभिः । स्यादावित्येव ? जराग्रम्, जारः; जारेयः ॥ ३ ॥

## अपोऽद् भे ॥ २ । १ । ४ ॥

अप् इत्येतस्य स्वसंबन्धिन्यन्यसंबन्धिनि वा भकारादौ स्यादौ परतोऽद् इत्ययमादेशो भवति । अद्भिः, अद्भ्यः, स्वद्भ्याम्; अत्यद्भ्याम् । भ इति किम् ? आपस्तिष्ठन्ति, अपः पश्य, अपाम्; अप्सु । स्यादावित्येव ? अब्भक्षः ॥ ४ ॥

## आ रायो व्यञ्जने ॥ २ । १ । ५ ॥

स्वसंबन्धिन्यन्यसंबन्धिनि वा व्यञ्जनादौ स्यादौ परे रैशब्दस्याऽऽकारोऽन्तादेशो भवति । राः, हे राः !, अतिराः, राभ्याम्, राभिः, राभ्यः; रासु । एकदेशविकृतस्यानन्यत्वात् अतिराभ्यां कुलाभ्याम्, अतिरासु कुलेषु । व्यञ्जन इति किम् ? रायौ, रायः । स्यादावित्येव ? रैसूत्रम्, रैमयम् । स्मीत्येव सिद्धे व्यञ्जनग्रहणमुत्तरार्थम् ॥ ५ ॥

## युष्मदस्मदोः ॥ २ । १ । ६ ॥

युष्मदस्मदित्येतयोः शब्दयोः स्वसंबन्धिनि अन्यसंबन्धिनि वा व्यञ्जनादौ स्यादौ परे आकारोऽन्तादेशो भवति । त्वाम्, माम्; अतित्वाम्, अतिमाम्; युवाम्, आवाम्; अतियुवाम्, अत्यावाम्; युष्मान्, अस्मान्, अतियुष्मान्, अत्यस्मान्, युवाभ्याम, आवाभ्याम्; अतियुवाभ्याम्, अत्यावाभ्याम्; युष्माभिः, अस्माभिः; अतियुष्माभिः, अत्यस्माभिः; युष्मासु, अस्मासु; अतियुष्मासु, अत्यस्मासु । युष्मयतेरस्मयतेश्च क्विप्–युष्म्, अस्म्; अनयोरमौभ्यांसु परत्वात्

---

न्तलक्षणो नागम । अत एव अतिजरा स्त्रिय इत्यादौ "गोश्चान्ते०" इति ह्रस्वत्वे, "आत्" इत्यापि, तेन विभक्तिस्वरस्य व्यवधानात् जरसादेशो न भवतीत्याह—**स्त्रियां त्वित्यादि** । **जरा, जराभ्यामित्यादि** । सिभ्याम्भिसां स्वरादित्वाभावाच्च जरस् । **जराग्रमित्यादि** । जराया अग्रमिति समास , असमासो वा । एषु स्यादिपरकत्वाभावाच्च जरस् । **जारः** इति । जराया अयमिति विग्रहे "तस्येदम्" इत्यण् । **जारेय** इति । जराया अपत्यमिति "द्विस्वरादनद्याः" ६।१।७१। इत्येयण् ॥ ३ ॥

**अपोऽद्भे** । अत्र स्यादावित्यनुवर्त्तते । तच्च भे इति सप्तम्यन्तेन विशेष्यते, तथा च सप्तम्या आदिरिति तदादिविज्ञानम् । अप भादौ स्यादौ अद् इत्यन्वयस्तदर्थमाह—**अप् इत्येतस्य इत्यादि** । अत्र नामाधिकारात्तस्य च तदन्तस्य ग्रहणेऽप्येकवर्णत्वात् "षष्ठ्या अन्त्यस्य" इति पकारस्याय दकार आदेश । अथवा–अदित्ययमादेशस्तत्रापि प्रागप्यकारस्य विद्यमानत्वादनुवादकत्वाद्दकारमात्रस्यात्रादेशत्वम् । अथवा–समुदाय उपादेयस्तदर्थमवयवोपादानम्, तत्र यदर्थं प्रयास स एव साक्षादुपादीयते इति विद्यमानस्याप्यकारस्य पुनरुपादानम् । अप्शब्दस्य केवलस्य बह्वर्थविषयत्वात् बहुवचनेनोदाहरति—**अद्भिः इत्यादि** । शोभना अतिशयिता वा आपो ययोरिति विग्रहे "पूजास्वते प्राक् टात्" इति समासान्तप्रतिषेधे स्वप् , अत्यप् इति स्थिताद्भ्यामि सत्यपि तदन्तग्रहणे 'निर्दिश्यमानस्यादेशा भवन्ति' इति अप एवादेशे—**स्वद्भ्याम्, अत्यद्भ्याम्** इति । **आपस्तिष्ठन्ति इत्यादि** । एषु भादिस्यादित्वाभावात् नादादेश । **अब्भक्ष** इति । "शीलिकामि०" ५।१।७३। इति ण । अत्र स्यादावित्यनुवर्त्तनात् नाद् ॥ ४ ॥

**आ रायो व्यञ्जने** । राय इति रैशब्दस्य षष्ठ्यन्तम् । पूर्वस्मात् स्यादावित्यधिक्रियते । व्यञ्जने इत्यनेन स्यादाविति विशेष्यते, ततस्तदादिबोध । व्यञ्जनादौ स्यादौ राय आ इत्यन्वयस्तदर्थमाह—**स्वसंबन्धिनीत्यादि** । "षष्ठ्या अन्त्यस्य" इति न्यायेन आकारादेशो रैशब्दान्तस्यैव भवतीत्याह—**आकारोऽन्तादेश** इति । **राः** इति । रैशब्दात् सौ अनेनाऽऽत्वे रुत्वविसर्गौ । एव रायमतिक्रान्त इति विग्रहे—**अतिरा** इति । ननु सत्यपि तदन्तग्रहणे रैशब्दान्तस्य नपुंसकत्वे "क्लीबे" इति ह्रस्वत्वे ततो भ्यामादौ रैशब्दस्योच्यमानमात्व रैशब्दाभावात्तदन्तस्यादिश्यते चेत्याह–**एकदेशविकृतस्य इत्यादि** । **रायौ** इत्यादि । व्यञ्जनादिस्यादेरभावात् स्वरादौ स्यादावायादेश । ननु सकारभकारावन्तरेण रैशब्दात् स्यादेरन्यस्य व्यञ्जनस्यासम्भवाल्लाघवार्थं च स्मीत्येवोच्यतां किं व्यञ्जनग्रहणेनेत्याह—**स्मीत्यादि** । यद्युत्तरार्थं व्यञ्जनग्रहणन्तर्हि तत्रैव क्रियता किमत्रोपादानमिति चेदुच्यते, अप्रधानात् रैशब्दादामो नामादेशोऽप्यस्ति तत्रापि यदि प्रयोगस्तदा तस्मिन्नपि भवितव्यमित्येतदर्थमिहोपादानम् ॥५॥

**युष्मदस्मदो**• । अत्राविवक्षितार्थयोरप्रायोगिकयोरेतावनुकरणे इति त्यदादिकार्यमेकशेषो युष्मदस्मदादिकार्यं "टाड्योसि य " इत्यनेन यत्वादि च न प्रवर्त्तते । पूर्वस्मात् सूत्रादत्र आ इति व्यञ्जने इति चानुवर्त्तते । तथाच पूर्ववत् युष्मदस्मदोर्व्यञ्जनादौ स्यादौ आ इत्यन्वयस्तदर्थमाह—**युष्मदस्मदित्येतयोरित्यादि** । युष्मदस्मद्शब्दात् अम परत्वात् "अमौ म " २।१।१६। इति मादेशे, "त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्" २।१।११। इति मान्तावयवस्य त्व इत्यादेशेऽनेनाकारान्तादेशे च "समानानाम्०" इति दीर्घत्वे—**त्वाम्, माम्** इति । एव नामाधिकारे तस्य च तदुत्तरपदस्य ग्रहणात्तदन्तप्रतिपत्तौ तदन्तमुदाहरति—**अतित्वाम्** इति । त्वामतिक्रान्तमित्यर्थ । **एवमतिमामपि** । **युवाम्, आवामिति** । युष्मदस्मदो प्रथमाद्वितीयाद्विवचनौप्रत्यययो "अमौ म " इति मादेशे, "मन्तस्य युवावौ द्वयो " २।१।१०। इति युवावादेशे चानेनान्तस्यात्वे "समानाना०" इति दीर्घ । **अतियुवाम्, अत्यावाम्** इति । युवाम् आवा वा अतिक्रान्ताविवत्यर्थ । **युष्मान्, अस्मान्** इति । युष्मद्अस्मद्शब्दाभ्या परस्य शस "शसो न " २।१।१७ इति न इत्यादेशे सति व्यञ्जनादिस्यादित्वादनेनाऽऽत्वम् । **अतियुष्मान्, अत्यस्मान्** इति । युष्मान् अस्मान् वाऽतिक्रान्तानित्यर्थ । **युवाभ्याम्, आवाभ्याम्** इति । युष्मदस्मदोर्भ्यामि "मन्तस्य०" इति युवावादेशेऽनेनात्वम् । **अतियुवाभ्याम्, अत्यावाभ्याम्** इति । युवाम् आवाम् वाऽतिक्रान्ताभ्यामिति विग्रह । **युष्माभि ,अस्माभिः** इति । अत्र भिसि व्यञ्जनादौ स्यादावनेनात्वम् । **एवमतियुष्माभिरित्यादि** । **युष्मयतेरस्मयतेश्चेति** । युवामावा वा युष्मानस्मान्वाऽऽचष्टे इति विग्रहे युष्मयति, अस्मयति इति च रूपद्वयम् । **क्विप्** इति । "क्विप्" इति सूत्रेणेति भाव । क्विबन्तात् युष्म्अस्म्शब्दात् अमौभ्यांसु परत्वात् अम्औकारयोश्च मादेशे व्यञ्जनादित्वात् नित्यत्वात् अकृत्रिमकारस्यात्वे मान्तत्वाभावात् त्वमाद्यादेशाभावे–त्वाम्, मांम्, युवाम्, आवाम् इत्यादयो न सिध्येयुरिष्यन्ते

त्वमाद्यादेशे कृते पश्चादात्वम्—त्वाम्, माम्, युवाम्, आवाम्; युवाभ्याम्, आवाभ्याम् । व्यञ्जन इत्येव ? युष्मभ्यम्, अस्मभ्यम् ॥ ६ ॥

## टाङ्योसि यः ॥ २ । १ । ७ ॥

युष्मदस्मदित्येतयोः स्वसंबन्धिषु अन्यसंबन्धिषु वा टा ङि ओस् इत्येतेषु स्यादिषु परेषु यकारोऽन्तादेशो भवति (टा–) त्वया, मया; अतित्वया, अतिमया; अतियुवया, अत्यावया; अतियुष्मया, अत्यस्मया; (ङि–) त्वयि, मयि; अतित्वयि, अतिमयि; प्रिययुवयि, प्रियावयि, प्रिययुष्मयि, प्रियास्मयि; (ओस्–) युवयोः, आवयोः; अतियुवयोः, अत्यावयोः; अतित्वयोः, अतिमयोः; अतियुष्मयोः, अत्यस्मयोः । टाङ्योसीति किम् ? त्वत्, मत् । लुगपवादौ योगौ ॥ ७ ॥

## शेषे लुक् ॥ २ । १ । ८ ॥

यस्मिन् प्रत्यये आत्वयकारौ विहितौ ततोऽन्यः शेषस्तस्मिन् स्यादौ परे युष्मदस्मदोरन्तस्य लुग् भवति । युष्मभ्यम्, अस्मभ्यम्; अतियुष्मभ्यम्, अत्यस्मभ्यम्; त्वद्, मद्; अतित्वद्, अतिमद्, युष्मद्, अस्मद्; अतियुष्मद्, अत्यस्मद्; युष्माकम्, अस्माकम्; अतियुष्माकम्, अत्यस्माकम् । अलिङ्गे युष्मदस्मदी इति अन्तलोपे स्त्रियामाप् न भवति । शेष इति किम् ? त्वयि, मयि ॥ ८ ॥

## मोर्वा ॥ २ । १ । ९ ॥

युष्मदस्मदित्येतयोर्मकारान्तयोः स्वसंबन्धिनि अन्यसंबन्धिनि वा शेषे स्यादौ परे मकारस्य लुग् वा भवति । युवां

---

चेत्याह—अनयोरित्यादि । अय भाव –उभयोरन्यत्र सावकाशत्वात् शब्दान्तरप्राप्त्या चानित्यत्वात् पूर्वं त्वमाद्यादेश इति, अन्यथा पूर्वमात्वे मन्तत्वाभावात् त्वमाद्यादेशाभाव स्यात् ॥ ६ ॥

**टाङ्योसि यः** । ओश्च ओश्च ओसौ, टाश्च ङिश्च ओसौ चेति समाहारद्वन्द्वात् सप्तमी । युष्मदस्मदोरिति वर्तते । युष्मदस्मदोः टाङ्योसि य इत्यन्वयस्तदर्थमाह—**युष्मदस्मदित्येतयोरित्यादि** । **त्वया, मया** इति । युष्मद् आ अस्मद् आ, इति स्थिते परत्वात् "त्वमौ प्रत्ययोत्तरपदे०" इति मन्तस्य त्वमादेशे "शेषे लुक्" इत्यस्यापवादोऽनेन यकारोऽन्तादेश । **अतित्वया, अतिमया** इति । त्वां मां वाऽतिक्रान्तेनेति विग्रह । **अतियुवया, अत्यावया** इति । अत्र युष्मदस्मदोर्द्विवचनवृत्तित्वात् त्वमादेशाभाव', युवां आवाम् वाऽतिक्रान्तेनेति विग्रह । **अतियुष्मया, अत्यस्मया** इति । अत्र बहुवचनवृत्तित्वात् त्वमादेशयुवावादेशाभाव , युष्मानस्मान् वाऽतिक्रान्तेनेत्यर्थ । एषु सर्वत्रानेन यत्वम् । ङावुदाहरति–**त्वयि, मयि** इति । युष्मद् इ, अस्मद् इ इतिस्थिते परत्वात् "त्वमौ प्रत्ययोत्तरपदे०" इति त्वमादेशे दस्यानेन यत्वम् । उपसर्जने चोदाहरति—**अतित्वयि** इत्यादि । पूर्ववद्विग्रह । **युवयो., आवयोः** इति । युष्मद् ओस्, अस्मद् ओस् इति स्थिते "मन्तस्य युवावौ द्वयो" इति परत्वा-द्युवावादेशे दस्यानेन यत्वे रूपद्वयम् । नन्वोसि यत्ववचनं किमर्थम् ? विनाप्योस्ग्रहण "शेषे लुक्" इत्यन्तस्य लोपे "एद्बहुस्भोसि" इत्येत्वेऽयादेशे च युवयोरित्यादौ यत्व सिध्यति, सत्यम्, णिच्यन्त्यस्वरादिलोपे अकारस्याभावात् युव्योरित्यादौ यत्व न सिध्यतीति ओसि यत्ववचनम् । एवमति-युवयोरित्यादि बोध्यम् । **त्वत्, मत्** इति । अत्र टाङिओस्परत्वाभावात् यत्व न । **लुगपवादौ योगाविति** । "युष्मदस्मदो " "टाङ्योसि य" इति योगद्वय "शेषे लुक्" इत्यस्यापवादत्वेन बाधकमित्यर्थ ॥ ७ ॥

**शेषे लुक्** । युष्मदस्मदोरिति स्यादाविति चानुवर्तते । शेषे स्यादौ युष्मदस्मदोर्लुक् इत्यन्वय । उपयुक्तादन्य शेष , कश्चोपयुक्त ? यस्मिन्नात्वयकारौ स उपयुक्त इत्याह—**यस्मिन्नित्यारभ्य ततोऽन्य** इत्यन्तेन । एतेन शेषपदार्थविज्ञानम् । शेष इति स्यादावित्यस्य विशेषण-मित्याह—**तस्मिन् स्यादाविति** । "षष्ठ्या अन्त्यस्य" इति न्यायबलेन लभ्यमर्थमाह—**युष्मदस्मदोरन्तस्येति** । **युष्मभ्यम्, अस्मभ्यम्** इति । युष्मद् भ्यस्, अस्मद् भ्यस् इति स्थिते परत्वात् "अभ्यम् भ्यस " २।१।१८। इति अभ्यमादेशे "शेषे लुक्" इति अन्तस्य दकारस्य लोपे "लुगस्यादेत्यपदे" इति अकारलोपे रूपद्वयम् । **अतियुष्मभ्यम्, अत्यस्मभ्यमिति** । युष्मानस्मान् वाऽतिक्रान्तेभ्य इति विग्रह । पूर्ववद्रूप-सिद्धि । **त्वदित्यादि** । युष्मद् अस्, अस्मद् अस् इति स्थिते "ङसेश्चाद्" २।१।१९। इति ङसेरदादेशे "त्वमौ प्रत्ययो०" इति त्वमादेशयो. कृतयो "शेषे लुक्" इत्यन्तलोपे च "लुगस्यादेत्यपदे" इत्यकारलोप । **अतित्वद्, अतिमद्** इति । त्वां मां वाऽतिक्रान्तादतिक्रान्तेभ्यो चेति विग्रह । अनेन दस्य लुक्, शेष पूर्ववत् । **युष्मद्, अस्मद्** इति । युष्मद् भ्यस्, अस्मद् भ्यस् इति स्थिते "ङसेश्चाद्" इति चकारात् तत्सहचरितस्य पञ्चम्या बहुवचनस्य भ्यस स्थानेऽदादेश । शेषे लुक् च । एव युष्मानस्मान् वाऽतिक्रान्तेभ्य इति विग्रहे—**अतियुष्मद्, अत्यस्मद्** इति । **युष्माकम्, अस्माकम्** इति । युष्मद् आम्, अस्मद् आम् इति स्थिते परत्वात् "आम आकम्" २।१।२०। इत्याकमि शेषे लुगिति लुकि दीर्घश्च । एवमेव युष्मानस्मान्वाऽतिक्रान्तानामिति विग्रहे—**अतियुष्माकम्, अत्यस्माकमिति** । आमोऽन्यसम्बन्धित्व-विज्ञानादाकम् । ननु त्व ब्राह्मणीत्यादौ सामानाधिकरण्यात् स्त्रीवृत्तित्वात् संभाव्यमानलिङ्गयोगित्वात् युष्मभ्यमित्यादौ "षष्ठ्या अन्त्यस्य" इति न्यायेन दकारमात्रलोपेऽकारान्तत्वात् स्त्रियामाप् प्राप्नोति । ततश्चानिष्टरूपतापत्तिरतस्तन्निवृत्त्यर्थमन्त्यस्वरादेरिति वक्तव्य, न च वक्तव्यमित्याह—**अलिङ्गे** इत्यादि । अभिधेयस्यालिङ्गत्वात् शब्दशक्तिस्वाभाव्यात् ताभ्यां लिङ्गरहित एवार्थोऽभिधीयत इति भाव । **त्वयि, मयि** इति । शेषग्रह-णाभावेऽत्रापि परत्वात् लुक् प्रवर्तेत ॥ ८ ॥

**मोर्वा** । अत्र युष्मदस्मदोरिति शेषे लुक् स्यादाविति च वर्तते । युष्मदस्मदोर्मो शेषे स्यादौ लुग्वा इत्यन्वय. । नास्ति युष्मदस्मद्भ्यां सामानाधिकरण्य, तेन तत्रामान्तयोरपि युष्मदस्मदोर्मपर्यन्तस्य रूपस्य कार्यं भविष्यति इति हेतो सामानाधिकरण्येनाह—**युष्मदस्मदित्येतयोर्मकारान्तयोरिति** । "विशेषणमन्त " इति न्यायेनात्र तदन्तत्वविज्ञानम् । मकारान्तयोर्युष्मदस्मदो "षष्ठ्या अन्त्यस्य" इति न्यायात् मकारस्यैव कार्यं भविष्यतीत्याह—**मकारस्य लुग्वा** इति । यथा च मान्तत्वं तयोदाहरति—**युवामित्यादि** । युष्म् भ्यस्, अस्म् भ्यस् इति स्थिते

---

१ ×××××××× इति पाठोनास्तीति पु०, माण्डा० ।

युष्मान् वा आवामस्मान् वाऽऽचष्टे णिचि, क्विपि, तल्लुकि च—युष्म्, अस्म् इति मान्तत्वम्; युष्मभ्यम्, युषभ्यम्; अस्मभ्यम्, असभ्यम्; युष्मद्, युषद्; अस्मद्, असद्; युष्माकम्, युषाकम्; अस्माकम्, असाकम् । शेष इत्येव ? युषान्, असान्; युषाभिः, असाभिः; युषासु, असासु; एषु पूर्वेण मकारस्याऽऽत्वम् । टाङ्योसि नित्यत्वात् त्वमादिकार्येभ्यः प्रथममेव पूर्वेण मकारस्य यत्वे—युष्या, अस्या; युष्यि, अस्यि; युष्योः, अस्योः । अथ शब्दान्तरप्राप्त्या यत्वमप्यनित्यमित्याश्रीयते तदा परत्वात् पूर्वं त्वमाद्यादेशे अकारस्य यत्वे-त्व्या, म्या; त्व्यि, म्यि; युव्योः, आव्योः । अथ 'सकृद्गते स्पर्द्धे यद्बाधित तद्बाधितमेव' इत्याश्रीयते तदा यत्वाभावे—त्वेन, मेन; युवयोः, आवयोः; त्वे, मे । अत्रासर्वादिसंबन्धित्वात् ङेः स्मिन्नादेशो न भवति । अथ 'क्विबर्थं प्रकृतिरेवाह' इति सर्वादिसंबन्धित्वम् तदा भवत्येव स्मिन्नादेशः । सिजस्ङेङसप्रत्यये तु परत्वात् त्वमहमादय एवादेशा भवन्ति—त्वम्, अहम्; यूयम्, वयम्, तुभ्यम्, मह्यम्; तव, मम । एके तु मन्तयोर्युष्मदस्मदोरादेशात् नेच्छन्ति ॥ ९ ॥

## मन्तस्य युवावौ द्वयोः ॥ २ । १ । १० ॥

द्वित्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मन्तस्य मकारावसानस्यावयवस्य तत्संबन्धिनि अन्यसंबंधिनि वा स्यादौ परे यथासंख्यं युव आव इत्येतावादेशौ भवतः । युवाम्, आवाम्; युवाभ्याम्, आवाभ्याम्; युवयोः, आवयोः; अतिक्रान्तौ युवाम् आवां वा अतियुवाम्, अत्यावाम्; अतिक्रान्तं युवाम् आवां वा अतियुवाम्, अत्यावां पश्य; अतिक्रान्तौ युवामावां वा अतियुवाम्, अत्यावां पश्य; एवम् अतियुवान्, अत्यावान्; अतियुवया, अत्यावया; अतियुवाभ्याम्, अत्यावाभ्याम्; अतियुवाभिः, अत्यावाभि; अतियुवाभ्याम्, अत्यावाभ्याम्; अतियुवत्, अत्यावत्, अतियुवाभ्याम्, अत्यावाभ्याम् आगतम् ।

---

चतुर्थीबहुवचनस्याभ्यमादेशे पक्षे मकारलोपे च—**युष्मभ्यम्, युषभ्यमित्यादि** । तथा पञ्चम्या भ्यसो "ङसेश्चाद्" इत्यदादेशे पक्षे मकारलोपे च—**युष्मदित्यादि** । शसि भिसि सुपि तु शेष इति वचनात् पूर्वेणात्वमेवेत्याह—**एष्वित्यादि** । **पूर्वेण**—"युष्मदस्मदो" इत्यनेनेति भाव । अथ युष्म् अस्म् इति स्थितस्य टायां ङ्योसि च यत्व प्राप्नोति त्वमाद्यादेशश्च, ततो नित्यत्वात् मकारस्य यत्वे मपर्यन्तत्वाभावात् पश्चात् त्वमाद्यादेशाभाव इत्याह—**टाङ्योसीत्यादि** । तदुदाहरति—**युष्या इत्यादि** । अथ शब्दान्तरप्रप्त्या यत्वस्यानित्यत्वे द्वयोरन्यत्र सावकाशत्वात् परत्वात् त्वमाद्यादेशस्तदापि 'पुन प्रसङ्गविज्ञानाद्' अकारस्य यत्व प्राप्नोतीत्याह—**अथेत्यादि** । तदुदाहरति—**त्व्या इत्यादि** । अथ सामान्याश्रयत्वात् पुन प्रसङ्गविज्ञानाभावात् 'सकृद्गते॰' इत्याश्रयणाद्यत्वाभाव एवेत्याह—**अथ सकृद्गते इत्यादि** । तथा चोदाहरति—**त्वेन इत्यादि** । ननु त्वे मे इत्यत्र अकारान्तत्वात् स्मिन्नादेश कथ न भवतीत्याह—**अत्रासर्वादीत्यादि** । **अथ क्विबर्थमिति** । अय भाव —दध्यादिशब्दस्य स्मोर्लोपेऽपि तदर्थाभिधायकत्ववत् प्रकृतेरेव क्विबर्थाभिधायकत्वम्, अन्वयव्यतिरेकाभ्यामवस्थितस्यैव तदर्थाभिधायकत्वात् सर्वादिसंबन्धित्वाद् भवति स्मिन्नादेश । **परत्वादिति** । द्वयोरन्यत्र सावकाशत्वेनेति शेष । मकारान्तयोर्युष्मदस्मदोरादेशाभावमिच्छता मतमुपन्यस्यति—**एके त्वित्यादि** । एकेषां मते मकारस्य लुग् भवत्येव । स्पष्टंचेद "मपर्यन्तस्य" पा॰ ७।२।९१। भाष्यकैयटयो ॥ ९ ॥

**मन्तस्य युवावौ द्वयोः** । युष्मदस्मदोरिति स्यादाविति चानुवर्त्तते । द्वयोर्युष्मदस्मदोर्मन्तस्य स्यादौ युवावौ इत्यन्वय । द्वयोरित्यनेन द्रव्यप्रधानत्वात् सामान्यवाचिनाऽपि युष्मदस्मदर्थ एव द्वित्वविशिष्टो निर्दिश्यतेऽर्थान्तरे तयोर्वृत्त्यभावात् । स्यादिविशेषणत्वे तु गुणाभिधायित्वात् स्यादेर्गुणप्रधानतया द्वित्व इति निर्दिश्येत, यथा "द्वित्वे वाम्नौ" इत्याह—**द्वित्वविशिष्टे इत्यादि** । **अर्थे इति** । स्वाभिधेय इत्यर्थ । "मोर्वा" इति युष्मदस्मत्तुल्यसङ्ख्यानिर्देशात् सामानाधिकरण्याकाङ्क्षणादिह वैयधिकरण्येनाऽऽह—**युष्मदस्मदोर्मन्तस्येत्यादि** । यदि मन्तयोर्युष्मदस्मदोरिति सामानाधिकरण्य विज्ञायेत तदा णिजन्तात् क्विप्येव विधि स्यात्, न दकारान्तयोरिति । ननु "शेषे लुक्" इत्यादौ स्वय कार्ययोगित्वेन विज्ञातयोर्युष्मदस्मदो कथमिह मन्तस्येत्येतद्विशेषणत्वमिति चेत् ? सत्यम्, भवतु तत्र कार्ययोगित्वेन विशेष्यत्वम्, इहानुवृत्तयोस्तु विशेषणतैव विज्ञायते । शब्दो हि यत्र सन्निधीयते तत्र तदुपकारयोग्यतया परिणतिमासादयति । यदि चात्रापि युष्मदस्मदावेव कार्ययोगिणौ तदाऽन्तग्रहणमनर्थकं, मोरित्येवोच्येत, पूर्वसूत्रोक्त चानुवर्त्तयेदिति । वैयधिकरण्ये तु 'म' इत्युच्यमाने मकारस्यैव कार्ययोगित्व स्यादिति तदन्तस्य कार्ययोगित्वार्थमन्तग्रहणमर्थवदिति । नन्वत्रान्तर्भूतान्तार्थपरिग्रहार्थं परिग्रहण विधेयम्, अन्यथा युष्, अस् इत्येतयोरेव आदेशा स्युर्न युष्मअस्मइत्येतयो, नैष दोष, अन्तशब्दस्यावयववाचित्वादवयवेन विगृह्यमाणत्वात् समुदायस्य समासार्थत्वादन्यपदार्थेऽवश्यमन्तर्भावात् इति । न च नद्यन्त क्षेत्रमित्यत्रान्तशब्दसद्भावेऽपि नद्या क्षेत्रेऽननुप्रवेशात् कथमेवमुच्यते इति वाच्यम्, तत्रावयवार्थाऽसंभवादन्तशब्दस्य समीपवचनत्वात् । यत्र त्ववयवत्व सामीप्य च संभवति तत्राऽवयवत्वमेवाश्रीयते, अन्तशब्दस्यावयववाचित्वेन प्रसिद्धतरत्वात्, ततश्च मपर्यन्तस्यादेशलाभार्थं परिग्रहणेन । एव तदवधिद्योतनार्थं परिग्रहण कर्तव्यम्, यदि युष्मदस्मदी मान्ते अथाप्यमान्ते सर्वस्याप्यादेशाः स्युरिति, अन्यथा मन्तस्येत्युच्यमाने यत्रैव मान्तयुष्मदस्मदी तत्रैवादेशा स्यु, तथाच सति सामानाधिकरण्येन विशेषणविशेष्यभाव स्यात् । अथापि तस्य प्रयोक्तुरायत्तत्वाद्वैयधिकरण्यमाश्रीयते—'युष्मदस्मदोरवयवस्य मन्तस्य' इति, तथापि—यत्र मान्ते युष्मदस्मदी तत्र भेदाभावादादेशा न स्यु । न च व्यपदेशिवद्भावोऽस्ति, 'अनाम्ना' इति प्रतिषेधात् । परिग्रहणे तु तदुपादानसामर्थ्याद्युष्मदस्मदवयवेऽपि युष्मदस्मच्छब्दो वर्त्तते इति सर्वत्रैवादेशसिद्धि । वैयधिकरण्येन वा संबन्धे परिग्रहणोपादानसामर्थ्याद् 'अनाम्ना' इति प्रतिषेधाप्रवृत्त्या मान्तयोरपि तयोरादेशसिद्धि । न कर्तव्यम्, "विशेषणमन्त" इति अन्तान्तत्वे लब्धे पुनरन्तग्रहणात्तदर्थलाभादिति । **युवाम्, आवामिति** । अत्र प्रक्रियोक्ता । एव **युवाभ्यामित्याद्यपि** पूर्ववत् । उपसर्जनयोर्युष्मदस्मदोरन्यपदार्थवाचित्वे उदाहरति—**अतिक्रान्तौ युवामित्यादि** । एवमत्यावामित्यत्रापि द्रष्टव्यम् । **अतियुवाम्, अत्यावाम्** पश्येति । पश्येत्यनुप्रयोगो द्वितीयैकवचनसप्रत्ययाय । द्वितीयाद्विवचने च रूप दर्शयति—**अतिक्रान्तौ युवामित्यादि** । बहुवचने च—**अतियुवान् इत्यादि** ।

---

१–२–३ × × इति प्रतिस्थले पाठो नास्तीति पु॰ । ४ ॰भ्यां देहि अतियुवभ्यम् अत्यावभ्यम् पु॰ ।

अतियुवत्, अत्यावत्, अतियुवयोः, अत्यावयोः स्वम्; अतियुवाकम्, अत्यावाकम्; अतियुवयि, अत्यावयि; अतियुवयोः, अत्यावयोः, अतियुवासु, अत्यावासु। सि जस् ङे ङस् इत्येतेषु पुनः परत्वात् त्वमहमादयः। मन्तस्येति किम्? मकारावधेः यथा स्यात् न तु सर्वस्य, तेन युवकाभ्यामावकाभ्यामित्यत्राकृश्रुतिः, युवयोरावयोरित्यत्र तु दकारस्य यत्वं सिद्धम्; अन्यथा युव्योराव्योरित्यनिष्टं स्यात्। द्वयोरिति किम्? युष्मान्, अस्मान्, युष्माभिः, अस्माभिः; युष्मभ्यम्, अस्मभ्यम्; युष्मत्, अस्मत्; युष्माकम्, अस्माकम्; युष्मासु, अस्मासु। द्वयोरपि युष्मदस्मद्विशेषणं किम्? युष्मानस्मानतिक्रान्तौ अतियुष्माम्, अत्यस्माम्; अतियुष्माभ्याम्, अत्यस्माभ्याम्; अतियुष्मयोः, अत्यस्मयोः; अत्र समास एव द्वित्वविशिष्टेऽर्थे वर्तते, न युष्मदस्मदी; इति युवावादेशौ न भवतः। स्यादावित्येव? युवयोः पुत्रः युष्मत्पुत्रः, आवयोः पुत्रः अस्मत्पुत्रः, युवयोरिदम् युष्मदीयम्, आवयोरिदम् अस्मदीयम् ॥ १० ॥

## त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् ॥ २ । १ । ११ ॥

एकत्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मकारान्तस्यावयवस्य स्वसंबन्धिन्यन्यसंबन्धिनि वा स्यादौ परे प्रत्ययोत्तरपदयोश्च परयोर्यथासंख्यं त्व म इत्येतावादेशौ भवतः। त्वाम्, माम्; त्वया, मया; त्वद्, मद्; त्वयि, मयि, अतिक्रान्तौ त्वामतित्वाम्, अतिमाम् तिष्ठतः; अतिक्रान्त त्वां मां वा अतित्वाम्, अतिमां पश्य; अतित्वान्, अतिमान्; अतित्वया, अतिमया; अतित्वाभ्याम्, अतिमाभ्याम्; अतित्वाभिः, अतिमाभिः; अतित्वाभ्याम्, अतिमाभ्यां देहि; अतित्वभ्यम्, अतिमभ्यम्; अतित्वत्, अतिमत्; अतित्वाभ्याम्, अतिमाभ्याम् आगतम्; अतित्वद्, अतिमद्; अतित्वयोः, अतिमयोः स्वम्; अतित्वाकम्, अतिमाकम्; अतित्वयि, अतिमयि, अतित्वयोः; अतिमयोः, अतित्वासु, अतिमासु। सिजस्ङेङस्सु पुनः परत्वात् त्वमहमादयो भवन्ति। प्रत्ययोत्तरपदयोः खल्वपि–तवायं त्वदीयः, मदीयः, त्वन्मयम्, मन्मयम्; त्वामिच्छति त्वद्यति, मद्यति, त्वमिवाचरति त्वद्यते, मद्यते, त्वया कृतं, मया कृतं–त्वत्कृतम्, मत्कृतम्, त्वत्पुत्रः, मत्पुत्रः; त्वद्धितम्, मद्धितम्; त्वत्प्रधानः, मत्प्रधानः। त्वामाचष्टे त्वदयति, मदयतीत्यत्र नित्यत्वादन्त्यस्वरादिलोपात् प्रागेव

---

अत्र "शसो न" इति नत्वम्। एवमन्यदपि। स्वमिति। षष्ठीप्रत्ययाय। ननु सिजस्ङेङसोऽतिक्रम्य कथमुदाहृतम्, किन्त्वत्र युवावौ न भवतः? ओमित्याह–**सिजस्ङे** इत्यादि। **परत्वात् त्वमहमादय** इति। यदि परत्वेन त्वमहमादय स्युस्तर्हि 'परादन्तरङ्गं बलीय' इति न्यायात् युवावादय प्राप्नुवन्ति इति चेद्, उच्यते–परत्वात्–विशेषविहितत्वेन प्रकृष्टत्वादित्यर्थः। **मन्तस्येति किम्** इति। युष्मदस्मदो समस्तयोरेव युवावादेशयो कृतयोरपि आत्वे मत्वे च युवाम्, आवाम् इत्यादिसिद्धेरिति प्रश्न। समाधत्ते–**मकारावधेरित्यादि**। **तेन**–मकारावधेरादेशार्थ मन्तस्येति सत्त्वेन। **युवकाभ्यामावकाभ्यामकृश्रुतिरिति**। असति मन्तस्येति वचने "युष्मदस्मदोऽसोमादिस्यादे" ७।३।३०। इति स्यामि अन्त्यस्वरात् पूर्वमकि कृते 'तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्' सर्वस्यादेशेऽक्श्रवण न स्यात्, तथा युवयोरावयोरित्यत्र सर्वादेशाभावे दकारस्य यत्वम्। यदि सर्वादेश स्यात् किमत्रानिष्ट स्यात्, यतस्तत्रापि "एद्बहुस्भोसि" इत्येत्वे सिध्यत्येव युवयोरावयोरिति? सत्य, यद्येत्व लभ्येत, तत्तु न लभ्य, "टाङ्योसि य" इति तदपवादस्य यत्वस्य प्रवृत्तौ युव्योराव्योरित्यनिष्ट स्यात्। **युष्मान्** इत्यादि। अत्र बह्वर्थे युष्मदस्मदी न द्व्यर्थं इति द्वयोरिति वचनाद्युवावौ न भवत। **द्वयोरपीति**। यदि द्वयोरिति युष्मदस्मदी न विशेष्येयातां किन्तु स्यादिर्विशेष्येत तदाऽत्रापि समासस्य द्व्यर्थवृत्तित्वात्तत्संबन्धिनि द्वित्वाभिधायिनि स्यादौ आदेशौ स्यातामिति द्वयोरिति विशेषणम्, तयोश्च बह्वर्थवृत्तित्वाद्युवावौ न भवत इति। **युष्मत्पुत्र** इत्यादि। अत्र प्रत्ययस्य स्यादे "ऐकार्थ्ये" इति लुपि, युष्मदस्मदोर्द्व्यर्थत्वात् स्यादावित्यधिकारमन्तरेणापि युवावौ प्राप्नुत; स्यादावित्यधिक्रियमाणे "लुप्यय्वृल्लेनत्" इति स्थानिवत्त्वप्रतिषेधात् स्याद्यभावाच्च भवत इति ॥ १० ॥

**त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्**। युष्मदस्मदोरिति चकारात् स्यादाविति मन्तस्येति चानुवर्तते। एकस्मिन् युष्मदस्मदोर्मन्तस्य स्यादौ प्रत्ययोत्तरपदे च त्वमौ इत्यन्वय। उत्तरं च तत् पद चेति "दिगधिक०" ३।१।९८। इति कर्मधारयस्ततश्च प्रत्ययेन समाहारद्वन्द्व। सूत्रार्थमाह–**एकत्वविशिष्टेऽर्थे** इत्यादि। पूर्ववद्विवेचनीयम्। **त्वाम्, मामित्यादि**। पूर्वं साधितं पुनर्विस्तरभयात् न साध्यते। उपसर्जनयोर्युष्मदस्मदोरेकार्थवाचित्वे उदाहरति–**अतिक्रान्तौ त्वामतित्वाम्** इत्यादि। **तिष्ठत** इत्यनुप्रयोग प्रथमाद्विवचनाभिव्यक्त्यर्थं। **पश्ये**त्यनुप्रयोगो द्वितीयैकवचनद्विवचनविज्ञानाय। **देहीति** चतुर्थीद्विवचनप्रतीत्यर्थं। **अतित्वभ्यमित्यादि**। अत्र "अभ्यम् भ्यस" इत्यभ्यमि त्व इत्यादेशे शेषे लुक्। एवमन्यदपि। **आगतं, स्वमिति** च षष्ठीपञ्चमीसप्रत्ययाय। **अतित्वाकम्, अतिमाकमिति**। अत्र "आम आकम्" इत्याकम्। **सिजस्ङेङस्सु** उपसर्जनयोर्युष्मदस्मदो रूपव्यवस्थामाह–**सीत्यादि**। स्याद्युदाहृत्य प्रत्यये उत्तरपदे चोदाहरति–**त्वदीयो मदीय** इत्यादि। तवाय ममायमिति विग्रहे "दोरीय" ६।३।३२। इतीयप्रत्यय। **त्वन्मयं, मन्मयमिति**। "दोरप्राणिन" ६।२।४९। इति मयट्। **त्वद्यति, मद्यतीति**। "अमाव्ययात्०" इति क्यन्। **त्वद्यते, मद्यते** इति। "क्यङ्" ३।४।२६। इति क्यङ्। **त्वत्कृतम्, मत्कृतमिति**। त्वया कृतं, मया कृतमिति "कारक कृता" ३।१।६८। इति तृतीयातत्पुरुषः। **त्वत्पुत्रः, मत्पुत्र** इति। तव पुत्रो मम पुत्र इति विग्रहे षष्ठीसमास, बहुव्रीहिर्वा। **त्वद्धितम्, मद्धितम्** इति। तुभ्यं हितम्, मह्य हितम् इति "हितादिभि" ३।१।७१। इति चतुर्थीतत्पुरुष। त्व प्रधानमस्य, अह प्रधानमस्येति बहुव्रीहौ–**त्वत्प्रधानो मत्प्रधान** इति। एषु "ऐकार्थ्ये" इति स्यादेर्लुप्यपि प्रत्ययोत्तरपदग्रहणाद्युष्मदस्मदोर्मकारान्तावयवस्य यथासख्य त्वमादेशौ। ननु त्वदयति, मदयतीत्यत्रोभयोरन्यत्रान्यत्र लब्धावकाशत्वादन्त्यस्वरादिलोप कस्मान्न भवतीत्याह–**अत्र नित्यत्वादित्यादि**। कृताकृतप्रसङ्गित्वादिति शेष। नन्वत्रान्त्यस्वरादिलोपात् प्रागेव नित्यत्वात् त्वमादेशे कृते पश्चा-

---

१ ×××××× इति पाठो नास्तीति पु०। २ ××××× इति पाठो नास्तीति पु०। ३ ××××× इति पाठो नास्तीति म० म०।

त्वमादेशौ । कश्चित्तु पूर्वमन्त्यस्वरादिलोपे त्वमादेशे अकारस्य वृद्धौ, प्वागमे-त्वापयति, मापयति; क्विपि तु-त्वाप्, माप् इत्याह । एकस्मिन्निति किम्? युष्माकम्, अस्माकम् । एकत्वेन युष्मदस्मदोर्विशेषणादिह न भवतीति-अतिक्रान्तं युष्मान्-अतियुष्माम्, अत्यस्माम्; अतियुष्मया, अत्यस्मया, अतियुष्मद्, अत्यस्मद्; अतियुष्मयि, अत्यस्मयि । प्रत्ययोत्तरपदे चेति किम्? त्वय्यधि, मय्यधि अधियुष्मद्, अध्यस्मद्, अन्तरङ्गत्वात् स्यादिद्वारेणैव त्वमादेशे सिद्धे प्रत्ययोत्तरपदग्रहणं 'बहिरङ्गाऽपि लुप् अन्तरङ्गान् विधीन् बाधते' इति न्यायज्ञापनार्थम्, तेन-यद् तद् इत्यादावन्तरङ्गमपि त्यदाद्यत्वादि न भवति । एके तु निमित्तनिरपेक्षमेकत्वविशिष्टेऽर्थे वर्तमानयोस्त्वमादेशाविच्छन्ति, तन्मते-अधित्वत्, अधिमत् । मन्तस्येत्येव? त्वक पिताऽस्य त्वकपितृकः, अत्राक् सहितस्य मा भूत्; प्रत्ययग्रहणेनैव सिद्धे स्यादावित्युत्तरार्थमनुवर्तते ॥ ११ ॥

## त्वमहं सिना प्राक् चाकः ॥ २ । १ । १२ ॥

युष्मदस्मदोः स्वसंबन्धिनाऽन्यसंबन्धिना वा सिना सह यथासंख्यं त्वम् अहम् इत्येतावादेशौ भवतः, तौ चाक्प्रत्ययप्रसङ्गेऽकः प्रागेव भवतः । त्वम्, अहम्; अतिक्रान्तस्त्वाम् अतित्वम्, अत्यहम्, अतिक्रान्तो युवाम् अतित्वम्, अत्यहम्, अतिक्रान्तो युष्मान् अतित्वम्, अत्यहम्; प्रियस्त्वं प्रियौ युवां प्रिया यूयं वा यस्य स प्रियत्वम्, प्रियाहम्; एषु परत्वात्त्वमौ युवावौ च बाधित्वा त्वमहमावेव भवतः । सिनेति किम्? युष्माभिः, अस्माभिः । सिलुपि च "लुप्यय्वृल्लेनत्" ॥ ७ । २ । ११२ ॥ इति निषेधात् न भवति । त्वं पुत्रोऽस्य त्वत्पुत्रः, मत्पुत्रः; एवमुत्तरेष्वपि । प्राक् चाक इति किम्? त्वकमहकमित्यत्राकः श्रुतिर्यथा स्यात्, अन्यथा पूर्वमकि सति 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायात् साकोरप्यादेशः स्यात् । केचित्तु त्वां मां चाचष्टे इति णौ त्वमादेशे वृद्धौ क्विपि मन्तयोरेव त्वाहादेशविधानात् सौ त्वाम् माम् इति, धातोरेव वृद्धिरिति मते त्वं मम् इत्येव च भवतीति मन्यन्ते । ते हि प्रकृतिमात्रस्याऽऽदेशान् ङेजस्सीनाममादेश ङसस्त्वकारं चेच्छन्ति ॥ १२ ॥

---

दपि अन्त्यस्वरादिलोप कस्मान्न भवति इति चेत्, सत्यम्, 'लोपात् स्वरादेश' इति न्यायात् "ङ्गस्या०" इत्येव प्रवृत्ते । तत्प्रवृत्तावप्यन्त्यस्वरादिलोपो न, "नैकस्वरस्य" ७।४।४४। इति निषेधात् । "ञ्णिति" इत्यनेन वृद्धिरपि नाशङ्क्या, धातुत्वाभावात् । कश्चित्त्विति । उत्पल । शब्दान्तरप्रवृत्त्योभयोरप्यनित्यत्वादन्यत्र लब्धावकाशत्वात् परत्वादन्त्यस्वरादिलोप इत्यर्थ । युष्माकमित्यादि । यद्यत्रैकस्मिन्निति न स्यात् तदा द्वयोर्बहुषु वर्तमानयोरपि युष्मदस्मदोस्त्वमादेशौ प्राप्नुतस्तदर्थमिहैकस्मिन्निति कथ्यते । युष्मदस्मदोर्विशेषणतापन्नस्यैकस्मिन्नित्यस्य प्रयोजनमाह—एकत्वेनेत्यादि । अतियुष्मामित्यादावेकस्मिन्निति विशेषणात् समासार्थस्यैकत्वेऽपि तयोरेकत्वाभावात् त्वमादेशौ न भवत । अधियुष्मद्, अध्यस्मदिति । त्वयि अधि, मयि अधीति विगृह्य "विभक्तिसमीप०" ३।१।३९। इत्यव्ययीभाव । "अनतो लुप्" इति सेर्लुपि "लुप्यय्वृल्लेनत्" इति स्थानिवत्त्वप्रतिषेधेन 'प्रत्ययोत्तरपदे च' इति वचनात् त्वमौ न भवत । ननु प्रत्ययोत्तरपदग्रहण किमर्थ? स्यादावित्येव सिद्धत्वात् । परत्वान्नित्यत्वाद्वा "ऐकार्थ्ये" इति स्यादेर्लुपि प्रत्ययलक्षणप्रतिषेधात् स्यादेरभाव इति न वाच्यम् । ऐकार्थ्ये लुबुच्यते, ऐकार्थ्ये च प्रकृतिप्रत्ययौ पूर्वोत्तरपदापेक्ष समास चाश्रित्य भवतीति तस्य बहिरङ्गत्वात्तदाश्रया लुबपि बहिरङ्गा । विभक्तिमाश्रित्यादेशयोर्विधानात् अन्तरङ्गत्वम् । तत "असिद्धं बहिरङ्गमन्तरङ्गे" इति न्यायान्नित्यादप्यन्तरङ्गस्य बलीयस्त्वात् त्वमादेशयो कर्तव्ययो लुपोऽसिद्धत्वात्ताभ्यामेव पूर्वं प्रवर्त्तितव्य ततो लुबिति न किंचिदनिष्टमिति । तथा चोक्तम्—'परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथ प्रसङ्गे परबलीयस्त्वम्' इति, उच्यते-एव सिद्धे सति प्रत्ययोत्तरपदग्रहण ज्ञापयति यत् 'अन्तरङ्गानपि विधीन् बाधित्वा बहिरङ्गा लुब्भवति' इत्याह—अन्तरङ्गत्वादित्यादि । ज्ञापनप्रयोजन च यद्-तदित्यादौ अन्तरङ्गमपि त्यदाद्यत्वादिक बाधित्वा लुप्प्रवर्त्तत इति । एके त्विति । चन्द्रादय । प्रत्ययोत्तरपदस्यादिलक्षणनिमित्तनिरपेक्षत्वेऽप्येकत्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मान्तावयवस्य 'अधित्वद्' इत्यादौ त्वमादेशाविति कश्चिन्मन्यते, तदत्यन्तापास्तत्वात् प्रमाणत्वेन नादरणीयमिति । मन्तस्येत्येवेति । सर्वादेशे हि त्वकपितृक इत्यादौ अक्सहितयोरपि स्यादित्यर्थ । ननु स्यादेरपि प्रत्ययत्वात्तत्रापि प्रत्ययग्रहणेनैव भविष्यति इत्यत आह—प्रत्ययग्रहणेनैवेत्यादि । स्यादावित्यनुवर्त्तनमुत्तरसूत्रे प्रयोजनवदित्यर्थ ॥ ११ ॥

**त्वमहं सिना प्राक् चाकः** । युष्मदस्मदोरित्येव वर्त्तते, न मन्तस्येति वा नैकस्मिन्निति वा । युष्मदस्मदो सिना त्वमहं च अक प्राक् इत्यन्वयस्तदर्थमाह—युष्मदस्मदोरित्यादि । त्वम्, अहम् इत्यादि । अत्र "त्वमौ प्रत्ययोत्तरपदे०" इति "मन्तस्य युवावौ०" इति च त्वमाद्यादेशश्च प्राप्नोति, किन्तु त्वमहमादेश । तत्र त्वा युवामित्यादौ त्वमाद्यादेश सावकाश, अतिक्रान्तो युष्मानस्मान् वा अतित्वम् इत्यादौ त्वमहमादेशश्च, तत्रान्यत्र द्वयो सावकाशत्वादत्रोभयप्राप्तौ परत्वात्त्वमहमादेश एवेत्याह—एष्वित्यादि । ननु त्व पुत्रोऽस्य त्वत्पुत्र इत्यादौ 'अन्तरङ्गानपि विधीन् बाधित्वा बहिरङ्गा लुप् प्रवर्तत' इति न्यायात् "ऐकार्थ्ये" इति सेर्लुपि प्रत्ययलोपलक्षणेन स्थानिवत्त्वात् त्वमहमादेश कस्मात् न भवतीत्याह—सिलुपि चेत्यादि । एवमुत्तरेष्वपि । "यूय वय जसा" इत्यादिष्वित्यर्थ । त्वकमित्यादि । अत्र प्राक् चाक इति वचनात् परमप्यक बाधित्वा त्वमहमादेशे पश्चात् "युष्मदस्मदोऽसोमादि०" इत्यक्, अन्यथा 'तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्' साकोरपि युष्मदस्मदोरादेशे अक्श्रवण न स्यादित्याह—अन्यथेत्यादि । केचित्त्विति । पाणिन्यादय । ननु तन्मते त्वम्, अहम्, यूय, वयमित्यादय कथ सिध्यन्तीत्याह—ते हीति । प्रकृतिमात्रस्य-युष्मदस्मद्रूपपदस्य । आदेशान्-"तुभ्यमह्यौ ङयि" पा० ७।२।९५।, "यूयवयौ जसि" पा० ७।२।९३।, "त्वाहौ सौ" पा० ७।२।९४। इति तुभ्यादीन्, ङेजस्सीना "ङेप्रथमयोरम्" पा० ७।१।२८। इत्यमादेश ङसस्तु "युष्मदस्मभ्या ङसोऽश्" पा० ७।१।२७। इत्यकारं चेच्छन्तीत्यर्थ । समते तु त्वमहमित्येव भवति ॥ १२ ॥

---

१ स्वान्° म० म० । २ × × × × इति पाठो नास्तीति पु० । ३ × × × इति पाठो नास्तीति म० म० । ४ °स्मदादित्वादि° पु० । ५ °दक मकपित्वक° पु० । ६ × नास्तीति पु० । ७ °वाचष्टे° पु० । ८ °ति किं म° पु० ।

## यूयं वयं जसा ॥ २ । १ । १३ ॥

युष्मदस्मदोः स्वसंबन्धिनाऽन्यसंबन्धिना वा जसा सह यथासंख्यं यूयं वयमित्येतावादेशौ भवतः, प्राक् चाकः । यूयम्, वयम्; परमयूयम्, परमवयम्; प्रियस्त्वं प्रियौ युवां प्रिया यूयं च येषां ते प्रिययूयम्, प्रियवयम्; अतिक्रान्तास्त्वां युवां युष्मान् वा अतियूयम्, अतिवयम् । जसेति किम्? यूय पुत्रा अस्य युष्मत्पुत्रः, अस्मत्पुत्रः । प्राक् चाक इत्येव? यूयकम्, वयकम् ॥ १३ ॥

## तुभ्यं मह्यं ङया ॥ २ । १ । १४ ॥

युष्मदस्मदोः स्वसबन्धिनाऽन्यसंबन्धिना वा ङेप्रत्ययेन सह यथासख्यं तुभ्यम् मह्यम् इत्येतावादेशौ भवतः, प्राक् चाकः । तुभ्यम्, मह्यम्; परमंतुभ्यम्, परममह्यम्, प्रियस्त्व प्रियौ युवां प्रिया यूयं वा यस्य तस्मै–प्रियतुभ्यम्, प्रियमह्यम्; अतिक्रान्तस्त्वां युवां युष्मान् वा तस्मै–अतितुभ्यम्, अतिमह्यम् । ङयेति किम्? तुभ्यं हितं त्वद्धितम्, मद्धितम् । प्राक् चाक इत्येव? तुभ्यकम्, मह्यकम् ॥ १४ ॥

## तव मम ङसा ॥ २ । १ । १५ ॥

युष्मदस्मदोः स्वसंबन्धिनाऽन्यसंबन्धिना वा ङस्प्रत्ययेन सह यथासंख्यं तव मम इत्येतावादेशौ भवतः, प्राक् चाकः । तव, मम; प्रियस्त्व प्रियौ युवां प्रिया यूयं वा यस्य तस्य–प्रियतव, प्रियमम, अतिक्रान्तस्त्वां युवां युष्मान् वा तस्य–अतितव, अतिमम । ङसेति किम्? तव प्रियस्त्वत्प्रियः, मत्प्रियः । प्राक् चाक इत्येव? तवक, ममक ॥ १५ ॥

## अमौ मः ॥ २ । १ । १६ ॥

युष्मदस्मद्भ्यां परयोस्तत्संबन्धिनोरन्यसंबन्धिनोर्वा अम् औ इत्येतयोर्म इत्ययमादेशो भवति, अकार उच्चारणार्थः । त्वाम्, माम्; अतित्वाम्, अतिमाम्; युवाम्, आवाम्; अतियुवाम्, अत्यावाम् तिष्ठतः पश्य वा ॥ १६ ॥

## शसो नः ॥ २ । १ । १७ ॥

युष्मदस्मद्भ्यां परस्य तत्संबन्धिनोऽन्यसबन्धिनो वा शसः स्थाने न इत्ययमादेशो भवति, अकार उच्चारणार्थः ।

---

**यूयं वय जसा** । युष्मदस्मदोरिति प्राक् चाक इति च वर्तते । युष्मदस्मदोर्जसा यूय वयम् च अक प्रागित्यन्वयस्तदर्थमाह—**युष्मदस्मदोरित्यादि** । **यूयं वयमिति** । युष्मद् अस्, असद् अस् इत्यवस्थायामनेन जसा सह यूय वयमित्यादेशौ । तदन्तमुदाहरति—**परमयूयमित्यादि** । पूर्ववत् । प्रिययूयमित्यस्य विग्रहवाक्यमाह—**प्रियस्त्वमित्यादि** । **प्रिययूयम्, प्रियवयमिति** । प्रियोऽहम्, प्रियावावां, प्रिया वय येषान्ते इति विग्रह । अत्रैकत्वद्वित्वार्थयोर्युष्मदस्मदोर्वर्तमानत्वात् "त्वमौ प्रत्ययोत्तरपदे चै०" इति, "मन्तस्य युवावौ०" इति च त्वमाद्यादेशान् अन्यत्र सावकाशान् बाधित्वा यूय वयमित्यत्र सावकाशौ यूय वयमादेशौ परत्वादुभयप्राप्तौ भवत । **युष्मत्पुत्रः, अस्मत्पुत्र इति** । यूयं पुत्रा अस्येत्यादि विग्रह, "ऐकार्थ्ये" इति जसो लुपि "लुप्यय्वृल्लेनत्" इति स्थानिवत्त्वप्रतिषेधात् जसोऽभावात् जसेति वचनादादेशौ न भवत. । **यूयकं, वयकमिति** । पूर्ववत् ॥ १३ ॥

**तुभ्यं मह्य ङया** । ङयेति ङेशब्दस्य तृतीयैकवचनम् । युष्मदस्मदोरिति प्राक् चाक इति चानुवर्तते । युष्मदस्मदोर्ङया तुभ्यं मह्य अकश्च प्राक् इत्यन्वयस्तदाह—**युष्मदस्मदोरित्यादि** । **तुभ्यं, मह्यम् इति** । युष्मद् ए असद् ए इत्यवस्थायामनेन परत्वात्त्वमौ प्रबाध्य ङ्या सह तुभ्य मह्यमित्यादेशौ । तदन्तमुदाहरति—**परमतुभ्यमित्यादि** । उपसर्जनयोर्युष्मदस्मदोरेकत्वद्वित्वार्थयोर्वर्तमानत्वेऽपि परत्वात्त्वमाद्यादेशान् बाधित्वा तुभ्य मह्यमित्यादेशावित्युदाहरति—**प्रियतुभ्यमित्यादि** । **त्वद्धितमित्यादि** । ङयेतिवचनादत्र न तुभ्यमाद्यादेश । **तुभ्यकम्, मह्यकम्** इति । पूर्ववत् ॥ १४ ॥

**तव मम ङसा** । युष्मदस्मदोरिति प्राक् चाक इति च वर्तते । युष्मदस्मदोर्ङसा तव मम अकश्च प्राक् इत्यन्वय । **तव, मम इति** । युष्मद् अस्, असद् अस् इति स्थिते ङसा सह युष्मदस्मदोस्तव मम इत्येतावादेशौ । उपसर्जनयोर्युष्मदस्मदोरुदाहरणान्याह—**प्रियस्त्वमित्यादि** । ननु कथ तवता,ममता, तवायितम्, ममायितम्? सत्यम्, उच्यते–स्याद्यन्तप्रतिरूपकाण्येतान्यव्ययानीति शब्दान्तरत्वात् सिद्धम् ॥ १५॥

**अमौ मः** । युष्मदस्मदोरित्यनुवृत्त 'अर्थवशाद्विभक्तिपरिणाम' इति न्यायेन पञ्चमीद्विवचनान्ततया विपरिणम्यते । अमौ इति लुप्तषष्ठीद्विवचनम् । युष्मदस्मद्भ्यां अमौ म इत्यन्वयस्तदर्थमाह—**युष्मदस्मद्भ्या परयोरित्यादि** । **अकार उच्चारणार्थ इति** । अकारमन्तरेण व्यञ्जनोच्चारणमशुकरमिति मादेशेऽकार उच्चारणार्थमुपादीयते । म् इत्येकवर्णत्वेऽपि "प्रत्ययस्य" इति न्यायादम सर्वस्यापि भवति । **त्वाम्, मामित्यादौ** मादेशस्य व्यञ्जनादित्वात् "युष्मदस्मदो" इत्याकार सिध्यति । सूत्रे विशेषस्यानिर्देशात् औ इति रूपस्य समानत्वात् प्रथमाद्वितीयाद्विवचनयोरपि ग्रहणम्, अत एव तद्द्योतनार्थं तिष्ठत पश्य वा इत्यनुप्रयोगो वृत्तावुदाहृत इति ॥ १६ ॥

**शसो नः** । युष्मदस्मदोरित्यनुवर्तमान पञ्चम्या विपरिणम्यते । युष्मदस्मद्भ्यां शसो न इत्यन्वयस्तदर्थमाह—**युष्मदस्मद्भ्यां परस्येत्यादि** । **अकार उच्चारणार्थ इति** । "शसोऽता सश्च न पुंसि" इतिवदत्रापि नकारस्याकार उच्चारणप्रयोजन, व्यञ्जनान्तादेशप्रस्तावात् ।

---

१ ×××××× नास्तीति पु० । २ ×××,×× नास्तीति पु० ।

युष्मान्, अस्मान्; प्रिययुष्मान्, प्रियास्मान्; प्रियस्त्वं येषां तान् प्रियत्वान्, प्रियमान्; प्रियौ युवां येषां तान् प्रिययुवान्, प्रियावान् ॥ १७ ॥

## अभ्यम् भ्यसः ॥ २ । १ । १८ ॥

युष्मदस्मद्भ्यां परस्य स्वसंबन्धिनोऽन्यसंबन्धिनो वा भ्यसश्चतुर्थीबहुवचनस्य स्थानेऽभ्यमादेशो भवति । युष्मभ्यम्, अस्मभ्यम् दीयते; प्रिययुष्मभ्यम्, प्रियास्मभ्यम्; त्वामतिक्रान्तेभ्यः—अतित्वभ्यम्, अतिमभ्यम्, युवामतिक्रान्तेभ्यः—अतियुवभ्यम्, अत्यावभ्यम् । अकारादिकरणमात्वबाधनार्थम् ॥ १८ ॥

## ङसेश्चाद् ॥ २ । १ । १९ ॥

युष्मदस्मद्भ्यां परस्य स्वसंबन्धिनोऽन्यसंबन्धिनो वा ङसेश्चकारात् तत्सहचरितस्य भ्यसः स्थानेऽद् इत्ययमादेशो भवति। त्वद्, मद्, त्वां युवां युष्मान् वाऽतिक्रान्तात् अतित्वद्, अतिमद्; अतियुवद्, अत्यावद्; अतियुष्मद्, अत्यस्मद् । भ्यस्—युष्मद्, अस्मद्; त्वां युवां युष्मान् वाऽतिक्रान्तेभ्यः अतित्वद्, अतिमद्, अतियुवद्, अत्यावद्, अतियुष्मद्, अत्यस्मद् । पञ्चमीभ्यसो ग्रहणाच्चतुर्थीभ्यसो न भवति—युष्मभ्यम्, अस्मभ्यम् ॥ १९ ॥

## आम आकम् ॥ २ । १ । २० ॥

युष्मदस्मदित्येताभ्यां परस्य तत्संबन्धिनोऽन्यसंबन्धिनो वाऽऽमः स्थाने आकमित्यादेशो भवति । युष्माकम्, अस्माकम्; प्रिययुष्माकम्, प्रियास्माकम्, त्वा युवां युष्मान् वा अतिक्रान्तानाम्—अतित्वाकम्, अतिमाकम्; अतियुवाकम्, अत्यावाकम्; अतियुष्माकम्, अत्यस्माकम्, आकमित्याकारो ण्यन्तार्थम्—युष्मानाचक्षाणानां णौ, क्विपि, युष्माकम्, अस्माकम् । केचित्तु तत्सबन्धिन एवाऽऽम आकमादेशमिच्छन्ति, तथाऽऽम्प्रत्यये दकारस्य यत्वमपीच्छन्ति, तन्मते—प्रिया यूयं येषां तेषां प्रिययुष्मयाम्, प्रियास्मयाम्, एवमतियुष्मयाम्, अत्यस्मयाम् ॥ २० ॥

---

अत एवैकवर्णत्वेऽपि अस्य समस्तादेशत्वसिद्धि, "प्रत्ययस्य" इति न्यायात् । **युष्मान्** इत्यादि । पूर्वं साधितमेतत् । ननु युष्मानित्यादा द्वय प्राप्नोति, "शेषे" इत्यन्तलोपोऽनेन नकारश्च, तत्र कृताकृतप्रसङ्गित्वेन नकारस्य नित्यत्वाल्लोपस्य च कृते नकारे शेषत्वाभावादप्रसङ्गित्वेनानित्यत्वात् पूर्वं नकार एव भवति। यद्येव किमनेन? "शसोऽता०" इत्यनेनैव सिद्धत्वात्, उच्यते—अलिङ्ग युष्मदस्मदी इति पुंस्त्वाभावात् नकारो न सिध्यतीति वचनात् । अभ्युपगमे वा लिङ्गस्य स्त्रीनपुंसकार्थं युष्मान् ब्राह्मणी , युष्मान् कुलानीत्यादि । अतत्सबन्धिन्युदाहरति—**प्रिययुष्मान्** इत्यादि ॥१७॥

**अभ्यम् भ्यस**० । युष्मदस्मदोरिति वर्तते । पूर्ववद्विभक्तिविपरिणाम । युष्मदस्मद्भ्या भ्यस अभ्यम् इत्यन्वयस्तदर्थमाह—**युष्मदस्मद्भ्यां परस्ये**त्यादि । **युष्मभ्यमि**त्यादि । साधित पूर्वमेतत् । कार्यिणो भ्यस प्रथममुपादाने कर्तव्ये कार्यस्याभ्यम पूर्वमुपादान प्रत्यासत्तिसूचनार्थम्, पाठापेक्षया च चतुर्थ्येव प्रत्यासन्ना तस्या एव चादेश इत्याह—**चतुर्थीबहुवचनस्ये**ति । ननु पारिशेष्यादप्यस्यार्थस्य सिद्धे , तथाहि—"ङसेश्चात्" इत्यत्र चकारेण भ्यसोऽनुवृत्ति , स च ङसिसाहचर्यात् पञ्चमीसबन्ध्येव गृह्यते इति परिशिष्टश्चतुर्थीभ्यसेव सभवतीति । एवन्तर्ह्यादेशाभिव्यक्त्यर्थम्, अन्यथा 'भ्यसो भ्यम्' इति निर्देशे व्यञ्जनादिरप्यादेश इति सदिह्येत । नन्वेवमस्तु प्रक्रियागौरव परिहृत भविष्यति, कृते तस्मिन् "लुगस्यादेत्यपदे" इति लुका भाव्यमित्यत आह—**अकारादिकरणमि**ति । अन्यथा व्यञ्जनादिस्यादित्वात् "युष्मदस्मदो" इत्यात्वप्रसङ्ग । णिचि च युष्मभ्यमस्मभ्यमिति यथा स्यात् ॥ १८ ॥

**ङसेश्चाद्** । युष्मदस्मदोरिति वर्तमान पञ्चम्या विपरिणम्यते । चकारेणात्र भ्यसनुकृष्यते । युष्मदस्मद्भ्या ङसे भ्यसश्च अद् इत्यन्वय । चकारेण भ्यसोऽनुकर्षणेऽपि ङसे भ्यसश्चैकवचनान्तनिर्देशेन द्विवचनान्तनिर्दिष्टाभ्यां युष्मदस्मद्भ्या सह वैषम्याद्यथासख्याभाव इत्याह—**युष्मदस्मद्भ्यामि**त्यादि । **त्वद्, मद्** इति । अत्रोक्ता प्रक्रिया । अतत्सबन्धिन्युदाहरति—**त्वा, युवा**मित्यादि । एव मामावामस्मान्वाऽतिक्रान्ताविति विग्रहोऽतिमदित्यादौ सविज्ञेय । पञ्चम्या भ्यस्यपीमानि रूपाणि, किन्तु विग्रहे विशेष इत्याह—**त्वां युवां युष्मान्वाऽतिक्रान्तेभ्य** इति । एवमतिमदित्यादावपि मामावामस्मान्वाऽतिक्रान्तेभ्य इति विग्रह । ननु भवत्वत्र ङसिसाहचर्यात् पञ्चमीभ्यसो ग्रहणेन चतुर्थीभ्यस आदेशाभाव । अभ्यमादेशस्तु पञ्चमीभ्यस कस्मान्न भवति ? न चादेशेनापोदितत्वादिति वाच्यम्, तत्सूत्रस्य व्यक्तिपक्षाश्रयणेन पञ्चमीभ्यस प्रत्यचरितार्थत्वेन पाक्षिकी प्रवृत्ति स्यात्, अन्यथा अत्रानुवृत्तिरेव न स्यात् । न हि गोधा सर्प्पणादहिर्भवति, एव चतुर्थीभ्यसनुवर्तनात् पञ्चमीभ्यस् भवति । तस्मात् पूर्वसूत्रे पञ्चमीभ्यसपि ग्राह्य इति तस्याप्यभ्यमादेशेन भाव्यम् इति चेत्, मैवम्, जातौ तत्सूत्र प्रवृत्त, जातिश्च सकृल्लक्ष्ये प्रवृत्ता सती पुन प्रवृत्तौ तदपवादेनाददेशेन बाधितत्वादभ्यमादेशोऽस्य न प्रवर्ततेऽत आह—**पञ्चमी**त्यादि । नन्वनुवर्तनादर्थेषु अन्यथात्व मा भूत्, शब्देषु तु दर्शनाद् भवतु तर्हि आवृत्त्या एव व्याख्यायते—पञ्चमीभ्यसस्तत्र सूत्रे ग्रहणाभावाच्चतुर्थीभ्यसस्तु युष्मभ्यम्, अस्मभ्यम्, पञ्चमीभ्यसोऽभ्यमादेशाभाव इति ॥ १९ ॥

**आम आकम्** । युष्मदस्मदोरित्यनुवर्तते । युष्मदस्मद्भ्यां आम आकम् इत्यन्वयस्तदर्थमाह—**युष्मदस्मदित्येताभ्यामि**त्यादि । **युष्माकमित्यादि** । पूर्ववत् । अतत्सबन्धिन्युदाहरति—**प्रिययुष्माकमि**त्यादि । अत्र बहुव्रीहे सुबन्तत्वात्तदप्रदर्शनेनातिशब्देन विग्रह दर्शयति—**त्वा युवा**मित्यादि । एवमन्यत्रापि ज्ञेयम् । नन्वाम कमिति न्यासे "युष्मदस्मदो" इत्यात्वे युष्माकमित्यादिसिद्धौ किमर्थमाकारकरणमित्याह—**आकमित्याकार** इत्यादि । यद्याकारो नोपादीयेत तदा ण्यन्ते आकारो न श्रूयेत इति भाव । **केचित्त्वि**ति । पाणिनिसूत्रानुसारिण. । ते हि "साम आकम्" पा० ७।१।३३। इति पठन्त कृतसामादेशस्याम आकमिच्छन्ति । साम् च "अवर्णस्याम साम्" इति सूत्रेणानुपसर्जनस्यैव, तत्रैव चासौ तत्सबन्धी भवतीति णिचि सति न भवति । उपसर्जनादेश "टाङ्योसि०" इति यत्व चेच्छन्ति इति तत्रामोऽप्यनुप्रवेशादित्यर्थ । तदेतत्सर्वं केचित्तु इति मतमाह—**तत्संबन्धिन एवाम** इत्यारभ्य, **यत्वमपीच्छन्ती**त्यन्तेन । वस्तुतस्तु पाणिनीयसूत्रव्याख्यातृविषये—प्राङ्नव्यमतविभेदात् प्रिययुष्मयाम् प्रियास्मयाम् अतित्वयाम् अतिमयाम् प्रिययुष्माकम् प्रियास्माकम् अतित्वाकम् अतिमाकमित्यादि रूपाणि भवन्ति, स्पष्टश्चैतत्सर्वं सि० कौ० तत्त्वबोधिन्यां युष्मदस्मत्प्रकरणे । तत्र प्राचा मत अपोह्य नव्यै स्वमत व्यवस्थापितम् ॥ २० ॥

## यूयं वयं जसा ॥ २ । १ । १३ ॥

युष्मदस्मदोः स्वसंबन्धिनाऽन्यसंबन्धिना वा जसा सह यथासंख्यं यूयं वयमित्येतावादेशौ भवतः, प्राक् चाकः । यूयम्, वयम्; परमयूयम्, परमवयम्; प्रियस्त्वं प्रियौ युवां प्रिया यूयं च येषां ते प्रिययूयम्, प्रियवयम्, अतिक्रान्तास्त्वां युवां युष्मान् वा अतियूयम्, अतिवयम् । जसेति किम्? यूय पुत्रा अस्य युष्मत्पुत्रः, अस्मत्पुत्रः । प्राक् चाक इत्येव? यूयकम्, वयकम् ॥ १३ ॥

## तुभ्यं मह्यं ङ्या ॥ २ । १ । १४ ॥

युष्मदस्मदोः स्वसंबन्धिनाऽन्यसंबन्धिना वा ङेप्रत्ययेन सह यथासंख्यं तुभ्यम् मह्यम् इत्येतावादेशौ भवतः, प्राक् चाकः । तुभ्यम्, मह्यम्, परमतुभ्यम्, परममह्यम्, प्रियस्त्व प्रियौ युवां प्रिया यूयं वा यस्य तस्मै–प्रियतुभ्यम्, प्रियमह्यम्; अतिक्रान्तस्त्वां युवां युष्मान् वा तस्मै–अतितुभ्यम्, अतिमह्यम् । ङ्येति किम्? तुभ्यं हितं त्वद्धितम्, मद्धितम् । प्राक् चाक इत्येव? तुभ्यकम्, मह्यकम् ॥ १४ ॥

## तव मम ङसा ॥ २ । १ । १५ ॥

युष्मदस्मदोः स्वसबन्धिनाऽन्यसंबन्धिना वा ङस्प्रत्ययेन सह यथासंख्यं तव मम इत्येतावादेशौ भवतः, प्राक् चाकः । तव, मम; प्रियस्त्वं प्रियौ युवां प्रिया यूयं वा यस्य तस्य–प्रियतव, प्रियमम, अतिक्रान्तस्त्वां युवां युष्मान् वा तस्य–अतितव, अतिमम । ङसेति किम्? तव प्रियस्त्वत्प्रियः, मत्प्रियः । प्राक् चाक इत्येव? तवक, ममक ॥ १५ ॥

## अमौ मः ॥ २ । १ । १६ ॥

युष्मदस्मद्भ्यां परयोस्तत्संबन्धिनोरन्यसबन्धिनोर्वा अम् औ इत्येतयोर्म इत्ययमादेशो भवति, अकार उच्चारणार्थः । त्वाम्, माम्; अतित्वाम्, अतिमाम्; युवाम्, आवाम्; अतियुवाम्, अत्यावाम् तिष्ठतः पश्य वा ॥ १६ ॥

## शसो नः ॥ २ । १ । १७ ॥

युष्मदस्मद्भ्यां परस्य तत्संबन्धिनोऽन्यसबन्धिनो वा शसः स्थाने न इत्ययमादेशो भवति, अकार उच्चारणार्थः ।

---

**यूयं वय जसा** । युष्मदस्मदोरिति प्राक् चाक इति च वर्तते । युष्मदस्मदोर्जसा यूय वयम् च अक प्रागित्यन्वयस्तदर्थमाह—**युष्मदस्मदोरित्यादि** । **यूयं वयमिति** । युष्मद् अस्, अस्मद् अस् इत्यवस्थायामनेन जसा सह यूय वयमित्यादेशौ । तदन्तमुदाहरति—**परमयूयमित्यादि** । पूर्ववत् । प्रिययूयमित्यस्य विग्रहवाक्यमाह—**प्रियस्त्वमित्यादि** । **प्रिययूयम्, प्रियवयमिति** । प्रियोऽहम्, प्रियावावां, प्रिया वय येषान्ते इति विग्रह । अत्रैकत्वद्वित्वार्थयोर्युष्मदस्मदोर्वर्तमानत्वात् "त्वमौ प्रत्ययोत्तरपदे चै०" इति, "मन्तस्य युवावौ०" इति च त्वमायादेशान् अन्यत्र सावकाशान् बाधित्वा यूय वयमित्यत्र सावकाशौ यूय वयमादेशौ परत्वादुभयप्राप्तौ भवत । **युष्मत्पुत्र., अस्मत्पुत्र इति** । **यूयं पुत्रा अस्येत्यादि** विग्रह, "ऐकार्थ्ये" इति जसो लुपि "लुप्यय्वृल्लेनत्" इति स्थानिवत्त्वप्रतिषेधात् जसोऽभावात् जसेति वचनादादेशौ न भवत । **यूयकं, वयकमिति** । पूर्ववत् ॥ १३ ॥

ङ्येति ङेशब्दस्य तृतीयैकवचनम् । युष्मदस्मदोरिति प्राक् चाक इति चानुवर्तते । युष्मदस्मदोर्ङ्या तुभ्य मह्य

**तुभ्यं मह्य ङ्या** । अकश्च प्राक् इत्यन्वयस्तदाह—**युष्मदस्मदोरित्यादि** । **तुभ्यं, मह्यम्** इति । युष्मद् ए अस्मद् ए इत्यवस्थायामनेन परत्वात्त्वमौ प्रबाध्य ङ्या सह तुभ्य मह्यमित्यादेशौ । तदन्तमुदाहरति—**परमतुभ्यमित्यादि**। उपसर्जनयोर्युष्मदस्मदोरेकत्वद्वित्वार्थयोर्वर्तमानत्वेऽपि परत्वात्त्वमाद्यादेशान् बाधित्वा तुभ्य मह्यमित्यादेशावित्युदाहरति—**प्रियतुभ्यमित्यादि** । **त्वद्धितमित्यादि** । ङ्येतिवचनादत्र न तुभ्यमाद्यादेश । **तुभ्यकम्, मह्यकम्** इति । पूर्ववत् ॥ १४ ॥

युष्मदस्मदोरिति प्राक् चाक इति च वर्तते । युष्मदस्मदोर्ङसा तव मम अकश्च प्राक् इत्यन्वय । **तव, मम** इति ।

**तव मम ङसा** । युष्मद् अस्, अस्मद् अस् इति स्थिते ङसा सह युष्मदस्मदोस्तव मम इत्येतावादेशौ । उपसर्जनयोर्युष्मदस्मदोरुदाहरणान्याह—**प्रियस्त्वमित्यादि** । ननु कथ तवता, ममता, तवायितम्, ममायितम्? सत्यम्, उच्यते–स्याद्यन्तप्रतिरूपकाण्येतान्यव्ययानीति शब्दान्तरत्वात् सिद्धम् ॥१५॥

अमौ इति लुप्तषष्ठीद्विवचनम् । युष्मदस्मदोरित्यनुवृत्तस्य 'अर्थवशाद्विभक्तिपरिणाम' इति न्यायेन पञ्चमीद्विवचनान्ततया विपरिणम्यते ।

**अमौ मः** । युष्मदस्मद्भ्यां अमौ म इत्यन्वयस्तदर्थमाह—**युष्मदस्मद्भ्या परयोरित्यादि** । **अकार उच्चारणार्थ** इति । अकारमन्तरेण व्यञ्जनोच्चारणमशक्यमिति मादेशेऽकार उच्चारणार्थमुपादीयते । म् इत्येकवर्णत्वेऽपि "प्रत्ययस्य" इति न्यायादम सर्वस्यापि भवति । **त्वाम्, मामित्यादौ** मादेशस्य व्यञ्जनादित्वात् "युष्मदस्मदो" इत्याकार सिध्यति । सूत्रे विशेषस्यानिर्देशात् औ इति रूपस्य समानत्वात् प्रथमाद्वितीयाद्विवचनयोरपि ग्रहणम्, अत एव तद्द्योतनार्थं तिष्ठत पश्य वा इत्यनुप्रयोगो वृत्तावुदाहृत इति ॥ १६ ॥

युष्मदस्मदोरित्यनुवर्तमान पञ्चम्या विपरिणम्यते । युष्मदस्मद्भ्यां शसो न इत्यन्वयस्तदर्थमाह—**युष्मदस्मद्भ्यां परस्येत्यादि** ।

**शसो नः** । **अकार उच्चारणार्थ** इति । "शसोऽता सश्च न पुंसि" इतिवदत्रापि नकारस्याकार उच्चारणप्रयोजन, व्यञ्जनान्तादेशप्रस्तावात् ।

---

१ ×××××× नास्तीति पु० । २ ××××,×× नास्तीति पु० ।

युष्मान्, अस्मान्; प्रिययुष्मान्, प्रियास्मान्, प्रियस्त्वं येषां तान् प्रियत्वान्, प्रियमान्; प्रियौ युवां येषां तान् प्रिययुवान्, प्रियावान् ॥ १७ ॥

## अभ्यम् भ्यसः ॥ २ । १ । १८ ॥

युष्मदस्मद्भ्यां परस्य स्वसंबन्धिनोऽन्यसंबन्धिनो वा भ्यसश्चतुर्थीबहुवचनस्य स्थानेऽभ्यमादेशो भवति । युष्मभ्यम्, अस्मभ्यम् दीयते, प्रिययुष्मभ्यम्, प्रियास्मभ्यम्, त्वामतिक्रान्तेभ्यः—अतित्वभ्यम्, अतिमभ्यम्, युवामतिक्रान्तेभ्यः—अतियुवभ्यम्, अत्यावभ्यम् । अकारादिकरणमात्वबाधनार्थम् ॥ १८ ॥

## ङसेश्चाद् ॥ २ । १ । १९ ॥

युष्मदस्मद्भ्यां परस्य स्वसंबन्धिनोऽन्यसंबन्धिनो वा ङसेश्चकारात् तत्सहचरितस्य भ्यसः स्थानेऽद् इत्ययमादेशो भवति । त्वद्, मद्, त्वां युवां युष्मान् वाऽतिक्रान्तात् अतित्वद्, अतिमद्, अतियुवद्, अत्यावद्; अतियुष्मद्, अत्यस्मद् । भ्यस्–युष्मद्, अस्मद्; त्वां युवां युष्मान् वाऽतिक्रान्तेभ्यः अतित्वद्, अतिमद्, अतियुवद्, अत्यावद्, अतियुष्मद्, अत्यस्मद् । पञ्चमीभ्यसो ग्रहणाच्चतुर्थीभ्यसो न भवति–युष्मभ्यम्, अस्मभ्यम् ॥ १९ ॥

## आम आकम् ॥ २ । १ । २० ॥

युष्मदस्मदित्येताभ्यां परस्य तत्सबन्धिनोऽन्यसबन्धिनो वाऽऽमः स्थाने आकमित्यादेशो भवति । युष्माकम्, अस्माकम्; प्रिययुष्माकम्, प्रियास्माकम्, त्वा युवां युष्मान् वा अतिक्रान्तानाम्—अतित्वाकम्, अतिमाकम्, अतियुवाकम्, अत्यावाकम्; अतियुष्माकम्, अत्यस्माकम्, आकमित्याकारो ण्यन्तार्थम्—युष्मानाचक्षाणानां णौ, क्विपि, युष्माकम्, अस्माकम् । केचित्तु तत्सबन्धिन एवाऽऽम आकमादेशमिच्छन्ति, तथाऽऽम्प्रत्यये दकारस्य यत्वमपीच्छन्ति, तन्मते–प्रिया यूयं येषां तेषां प्रिययुष्मयाम्, प्रियास्मयाम्, एवमतियुष्मयाम्, अत्यस्मयाम् ॥ २० ॥

---

अत एवैकवर्णत्वेऽपि अस्य समस्तादेशत्वसिद्धि, "प्रत्ययस्य" इति न्यायात् । **युष्मान्** इत्यादि । पूर्वं साधितमेतद् । ननु युष्मानित्यात्र द्वय प्राप्नोति, "शेषे" इत्यन्तलोपोऽनेन नकारश्च, तत्र कृताकृतप्रसङ्गित्वेन नकारस्य नित्यत्वाल्लोपस्य च कृते नकारे शेषत्वाभावादप्रसङ्गित्वेनानित्यत्वात् पूर्वं नकार एव भवति । यद्येव किमनेन? "शसोऽता०" इत्यनेनैव सिद्धत्वात्, उच्यते–अलिङ्ग युष्मदस्मदी इति पुंस्त्वाभावात् नकारो न सिध्यतीति वचनात् । अभ्युपगमे वा लिङ्गस्य स्त्रीनपुंसकार्थं युष्मान् ब्राह्मणी, युष्मान् कुलानीत्यादि । अतत्संबन्धिन्युदाहरति—**प्रिययुष्मान्** इत्यादि ॥१७॥

**अभ्यम् भ्यसः** । युष्मदस्मदोरिति वर्तते । पूर्ववद्विभक्तिविपरिणाम । युष्मदस्मद्भ्या भ्यस अभ्यम् इत्यन्वयस्तदर्थमाह—**युष्मदस्मद्भ्या परस्ये**त्यादि । **युष्मभ्यमि**त्यादि । साधित पूर्वमेतद् । कार्यिणो भ्यस प्रथममुपादाने कर्तव्ये कार्यस्याभ्यम पूर्वमुपादान प्रत्यासत्तिसूचनार्थम्, पाठापेक्षया च चतुर्थ्येव प्रत्यासन्ना तस्या एव चादेश इत्याह—**चतुर्थीबहुवचनस्ये**ति । ननु पारिशेष्यादप्यस्यार्थस्य सिद्धे, तथाहि–"ङसेश्चाद्" इत्यत्र चकारेण भ्यसोऽनुवृत्ति, स च ङसिसाहचर्यात् पञ्चमीसबन्ध्येव गृह्यते इति परिशिष्टश्चतुर्थीभ्यसेव सभवतीति । एवन्तर्ह्यादेशाभिव्यक्त्यर्थम्, अन्यथा 'भ्यसो भ्यम्' इति निर्देशे व्यञ्जनादिरप्यादेश इति सदिह्येत । नन्वेवमस्तु प्रक्रियागौरव परिहृत भविष्यति, कृते तस्मिन् "लुगस्यादेत्यपदे" इति लुका भाव्यमित्यत आह—**अकारादिकरण**मिति । अन्यथा व्यञ्जनादिस्यादित्वात् "युष्मदस्मदो" इत्यात्वप्रसङ्ग । णिचि च युष्मभ्यमस्मभ्यमिति यथा स्यात् ॥ १८ ॥

**ङसेश्चाद्** । युष्मदस्मदोरिति वर्तमान पञ्चम्या विपरिणम्यते । चकारेणात्र भ्यसनुकृष्यते । युष्मदस्मद्भ्यां ङसे भ्यसश्च अद् इत्यन्वय । चकारेण भ्यसोऽनुकर्षणेऽपि ङसे भ्यसश्चैकवचनान्तनिर्देशेन द्विवचनान्तनिर्दिष्टाभ्या युष्मदस्मद्भ्यां सह वैषम्याद्यथासख्याभाव इत्याह—**युष्मदस्मद्भ्यामि**त्यादि । **त्वद्, मद्** इति । अत्रोक्ता प्रक्रिया । अतत्सबन्धिन्युदाहरति—**त्वा, युवामि**त्यादि । एव मामावामस्मान्वाऽतिक्रान्तादिति विग्रहोऽतिमदित्यादौ सविज्ञेय । पञ्चम्या भ्यस्यपीमानि रूपाणि, किन्तु विग्रहे विशेष इत्याह—**त्वां युवां युष्मान्वाऽतिक्रान्तेभ्य** इति । एवमतिमदित्यादावपि मामावामस्मान्वाऽतिक्रान्तेभ्य इति विग्रह । ननु भवत्वत्र ङसिसाहचर्यात् पञ्चमीभ्यसो ग्रहणेन चतुर्थीभ्यस आदेशाभाव । अभ्यमादेशस्तु पञ्चमीभ्यस कस्मान्न भवति ? न चादेशेनापोदितत्वादिति वाच्यम्, तत्सूत्रस्य व्यक्तिपक्षाश्रयणेन पञ्चमीभ्यस प्रत्यचरितार्थत्वेन पाक्षिकी प्रवृत्ति स्यात्, अन्यथा अत्रानुवृत्तिरेव न स्यात् । न हि गोधा सर्पणादहिर्भवति, एव चतुर्थीभ्यसनुवर्तनात् पञ्चमीभ्यस् भवति । तस्मात् पूर्वसूत्रे पञ्चमीभ्यसपि प्राप्त इति तस्याप्यभ्यमादेशेन भाव्यम् इति चेत्, मैवम्, जातौ तत्सूत्र प्रवृत्त, जातिश्च सकृल्लक्ष्ये प्रवृत्ता सती पुन प्रवृत्तौ तदपवादेनादादेशेन बाधितत्वादभ्यमादेशोऽस्य न प्रवर्ततेऽत आह—**पञ्चमी**त्यादि । नन्वनुवर्तनादर्थेषु अन्यथात्व मा भूत्, शब्देषु तु दर्शनाद् भवतु तर्हि आवृत्त्या एव व्याख्यायते–पञ्चमीभ्यसस्तत्र सूत्रे ग्रहणाभावाच्चतुर्थीभ्यसस्तु युष्मभ्यम्, अस्मभ्यम्, पञ्चमीभ्यसोऽभ्यमादेशाभाव इति ॥ १९ ॥

**आम आकम्** । युष्मदस्मदोरित्यनुवर्तते । युष्मदस्मद्भ्या आम आकम् इत्यन्वयस्तदर्थमाह—**युष्मदस्मदित्येताभ्यामि**त्यादि । **युष्माकमि**त्यादि । पूर्ववत् । अतत्सबन्धिन्युदाहरति—**प्रिययुष्माकमि**त्यादि । अत्र बहुव्रीहे सुज्ञानत्वात्तदप्रदर्शनेनातिशब्देन विग्रह दर्शयति–**त्वा युवामि**त्यादि । एवमन्यत्रापि ज्ञेयम् । नन्वाम कमिति न्यासे "युष्मदस्मदो" इत्यात्वे युष्माकमित्यादिसिद्धौ किमर्थमाकारकरणमित्याह—**आकमित्याकार** इत्यादि । यद्याकारो नोपादीयेत तदा ण्यन्ते आकारो न श्रूयेत इति भाव । **केचित्त्विति** । पाणिनिसूत्रानुसारिण । ते हि "साम आकम्" पा० ७।१।३३। इति पठन्त कृतसामादेशस्याम आकमिच्छन्ति । साम् च "अवर्णस्याम साम्" इति सूत्रेणानुपसर्जनस्यैव, तत्रैव चासौ तत्सबन्धी भवतीति णिचि सति न भवति । उपसर्जनादेव "टाङ्योसि०" इति यत्व चेच्छन्ति इति तत्रामोऽप्यनुप्रवेशादित्यर्थ । तदेतत्सर्वं केचित्तु इति मतमाह—**तत्संबन्धिन एवाम** इत्यारभ्य, **यत्वमपीच्छन्ती**त्यन्तेन । वस्तुतस्तु पाणिनीयसूत्रव्याख्यातृविषये प्राङ्नव्यमतविभेदात् प्रिययुष्मयाम् प्रियास्मयाम् अतित्वयाम् अतिमयाम् प्रिययुष्माकम् प्रियास्माकम् अतित्वाकम् अतिमाकमित्यादि रूपाणि भवन्ति, स्पष्टञ्चैतत्सर्वं सि० कौ० तत्त्वबोधिन्यां युष्मदस्मत्प्रकरणे । तत्र प्राचा मत अपोह्य नव्यै स्वमत व्यवस्थापितम् ॥ २० ॥

## पदाद्युग्विभक्त्यैकवाक्ये वस्नसौ बहुत्वे ॥ २ । १ । २१ ॥

द्वितीया चतुर्थी षष्ठी च युग्विभक्तिः, तया बहुत्वविषयया सह पदात् परयोर्युष्मदस्मदोर्यथासंख्यं वस्नस् इत्येतावादेशौ वा भवतः, तच्चेत्पदं युष्मदस्मदी चैकवाक्ये भवतः; अन्वादेशे नित्यं विधास्यमानत्वादिह विकल्पो लभ्यते, एवमुत्तरसूत्रत्रयेऽपि । धर्मो वो रक्षतु, धर्मो नो रक्षतु; धर्मो युष्मान् रक्षतु, धर्मोऽस्मान् रक्षतु; तपो वो दीयते, तपो नो दीयते; तपो युष्मभ्यं दीयते, तपोऽस्मभ्यं दीयते; शील वः स्वम्, शील नः स्वम्; शील युष्माक स्वम्, शीलमस्माकं स्वम् । पदादिति किम्? युष्मान् धर्मो रक्षतु, अस्मान् धर्मो रक्षतु । युग्विभक्त्येति किम्? ज्ञाने यूय तिष्ठत, शीले वय स्थास्यामः; ज्ञाने युष्माभिः स्थितम्, शीलेऽस्माभिः स्थितम्, ज्ञान युष्मदागतम्, शीलमस्मदागतम्, ज्ञान युष्मासु तिष्ठति, शीलमस्मास्वायतते; ग्रामे युष्मत्पुत्रः, नगरेऽस्मत्पुत्रः; इति युष्मदुपाध्यायो ब्रूते, इत्यस्मदाचार्योऽनुशास्ति । एकवाक्य इति किम्? एकस्मिन् पदे निमित्तनिमित्तिनोर्भावे मा भूत्—अतियुष्मान् पश्यति, अत्यस्मान् पश्यति; वाक्यान्तरे च मा भूत्—ओदनं पचत युष्माकं भविष्यति, पटं वयत अस्माक भविष्यति । ननु च वाक्यान्तरस्थात् पदात् परयोर्युष्मदस्मदोः सामर्थ्याभावादेव वस्नसादयो न भविष्यन्ति, किमेकवाक्यग्रहणेन? नैव शङ्क्यम्, युक्तयुक्तादपि पदादसमर्थत्वात् न प्राप्नुवन्ति—इति स्म नः पिता कथयति, इति वः श्रेयसी ब्रवीमि, इति मे माताऽवोचत्, शालीनां ते ओदनं दास्यामि, अत्र हि युष्मदस्मदी पित्रादिभिर्युक्ते न पित्रादियुक्तैरितिस्मादिभिरिति वस्नसादयो न स्युः, अतः पारपर्येणापि युक्तादेकवाक्यस्थात् पदात् परयोर्युष्मदस्मदोर्वस्नसादयो भवन्त्वित्येकवाक्यग्रहणमर्थवत् । बहुत्व इति किम्? धर्मो युवां रक्षतु,

**पदाद्युग्विभक्त्यैकवाक्ये वस्नसौ** बहुत्वे । अत्र युष्मदस्मदोरिति वर्तते । बहुत्वे इति युग्विभक्त्या इत्यस्य विशेषणम् । तथा च बहुत्वे वर्तमानया युग्विभक्त्या पदात् परयोर्युष्मदस्मदोर्वस्नसौ वा एकवाक्ये इत्यन्वय । **पदादिति** । पद्यते गम्यते कर्तृकर्मादिविशिष्टोऽर्थोऽनेनेति पद स्याद्यन्त तस्मादित्यर्थ । योजन युक् सममविषम सङ्ख्यास्थान युग्ममिति यत्सङ्ख्यायते तेन परिच्छिन्न वस्त्वपि युगित्युच्यते । अत्र च प्रस्तावाद् युग्मा विभक्तिर्द्वितीयाचतुर्थीषष्ठीरूपा गृह्यतेऽत आह—**द्वितीयेत्यादि** । कार्यकार्यिणोस्तुल्यत्वाद्यथासंख्यमत आह—**युष्मदस्मदोरिति** । द्विविध वाक्यं लौकिक शास्त्रीय च । तत्र लौकिकम् 'अर्थैक्यादेक वाक्य साकाङ्क्षचेद्विभागे स्यात्' इति । अत्रानेकमपि स्याद्यन्त समवतिपश्य मृगो धावति, पचति भवति इत्यादि ह्येतदेकार्थं साकाङ्क्ष च विभागे पश्य, किम्? मृगो धावतीत्येतदिति । तत्र 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय' इति "सविशेषणमाख्यात वाक्यम्" इति परिभाषित स्याद्यन्तभेदे वाक्यभेदार्थं शास्त्रीय वाक्य गृह्यत इत्याह—**एकवाक्य** इति । एकस्मिन्—अभिन्ने आधारभूते वाक्य इत्यर्थ । अभिन्नत्व चानेकाधेयापेक्षया । तत्र युष्मदस्मदो कार्यिणो श्रुतत्वात् पदादित्यस्य तद्विशेषणस्य च यथाभिन्न वाक्यमाधार इत्यमुमेवार्थं स्फुटयन्नाह—**तच्चेत्पदमित्यादि** । ननु च प्रयोगे वस्नसादीनां विकल्पेन प्रयुज्यमानत्वात् सूत्रे च तदर्थस्य वाग्रहणादेर्नवेत्यधिकारस्य चाभावात् कथ विकल्पो लभ्यत इत्याह—**अन्वादेश** इत्यादि । पक्षे कार्यस्यासंभवतायां नित्यग्रहणमर्थवद्भवति, व्यभिचारे विशेषणस्यार्थवत्वात् तदभावे तु तत्र नित्यग्रहणमानर्थक्यमश्नुवीतेत्यर्थ । **एवमुत्तरसूत्रत्रयेऽपीति** । एतत्सूत्रवत् "द्वित्वे वान्नौ," "ङेऽसा ते मे," "अमा त्वा मा" इत्यत्रापि विकल्पलाभ । **धर्मो वो रक्षतु** इत्यादि । अत्र युष्मदस्मच्छब्दात् शसादिषु "शसो न," "शेषे लुक्" इत्यादीनि बाधित्वा नित्यत्वादनवकाशत्वात् च वस्नसावेव भवत । **रक्षतु** इत्यादयोऽनुप्रयोगा द्वितीयादिविभक्त्यभिव्यक्त्यर्था । **युष्मान् धर्मो रक्षतु** इत्यादि । सूत्रे पदादिति वचनादत्र युष्मदस्मदो पदात् परत्वाभावात् न वस्नसौ । **इति युष्मदुपाध्यायो ब्रूते** इति । अत्रेतिशब्द एवमर्थक । युष्माकमुपाध्याय इति विग्रह षष्ठीसमास । अत्र युग्विभक्त्या इति "समानानां तेन०" इत्यादिवत् पञ्चम्यर्थे तृतीयाविधानात् त्रिविभक्तेरपि कार्यित्वात् 'अन्तरङ्गानपि विधीन् बाधित्वा लुप्प्रवर्तते' इति तस्या पूर्वं लोपात्, "लुप्यय्वृल्लेनत्" इति स्थानिवद्भावप्रतिषेधात् कार्यविभक्तेरभावादादेशाभाव इत्यर्थ । परार्थं शब्दप्रयोगाद् वाक्यस्यैवार्थप्रत्यायकत्वात् केवलस्य प्रयोगाभावात् पदादित्युक्तेऽपि वाक्यं लाभ्यत एव, ततस्तत्स्थस्यैव तस्य प्रयोगात् । यत्रापि केवलस्य प्रयोगस्तत्रापि तदाक्षिप्तपदान्तरसव्यपेक्षाद् वाक्यादेवार्थप्रत्यय इति वाक्यस्य लाभात् तद्ग्रहण कथमिति विशेष्यस्याभावात्तत्सबद्धविशेषणस्याप्येकशब्दस्याभाव इति पृच्छति—**एकवाक्य** इत्यादि । समाधत्ते—**एकस्मिन्नित्यादि** । अय भाव —एकवाक्य इत्युभयावधारणार्थम् । तत्रैकस्मिन् वाक्य एवेत्यवधारणेन एक पद व्यवच्छिद्यते, तेन अतियुष्मान् पश्यतीत्यादावन्तर्वर्तिविभक्तिसमाश्रयेण पदात् परत्वेऽपि समासस्यैकपद्ये वस्नसौ न भवत । एकस्मिन् एव वाक्य इत्यनेन च वाक्यान्तरं व्यवच्छिद्यते । तथा **ओदनं पचतेत्य**त्राख्यातभेदाद्वाक्यभेद । **ननु चेति** । पदादित्यवधारणमुपात्तयोरेव विशेषणविशेष्ययो सभवति न सामर्थ्यलब्धयोरिति । **सामर्थ्याभावादेवेति** । परस्परव्यपेक्षालक्षणसंबन्धाभावादित्यर्थ । ननु वाक्ये व्यपेक्षालक्षणस्य सामर्थ्यस्याङ्गीकृतत्वात् तस्यात्र सद्भावात् ,कथमत्र व्यपेक्षालक्षणसामर्थ्यासद्भाव इति चेदुच्यते, तथाहि—युष्मदस्मच्छब्दवाच्यो योऽर्थस्तत्साधनेन पाकेन युष्मत्स्वामिक ओदनो भविष्यत्येवभूता पाकस्य युष्मदस्मदोरपेक्षाऽस्त्येव, नैवम्, विशिष्टापेक्षा व्यपेक्षा, सा च येनैव रूपेणार्थेन वा वाक्ये पदमुपात्त साक्षात् तेनैव, न रूपान्तरेण अर्थान्तरेण वा । अत्र तु प्रकारान्तरेण, तथाहि—ओदन पचतेत्यत्र लिङ्गात् समर्थपरिभाषोपस्थापनात् किं द्वितीयावधारणार्थेन एकवाक्यग्रहणेनेत्यर्थ । युष्मदस्मदर्थकर्तृकेण पचिना कर्मत्वेनापेक्ष्यमाण ओदनो युष्माक भविष्यतीति—युष्मदर्थस्वामिको भवतिना कर्तृकत्वेन अपेक्ष्यत इति विशिष्टापेक्षाभावात् सामर्थ्याभाव । **नैवं शङ्क्यमिति** । अत्रायमभिप्राय —एकवाक्यग्रहणमन्तरेण वाक्यान्तरे सामर्थ्याभावादादेशाभावे यत्रैकवाक्येऽपि सामर्थ्य न स्यात्तत्र वस्नसादयो न स्युर्यथा—**इति स्म नः पिता कथयतीत्यादौ** इति स्मेत्यादि पद यथावस्थितयुष्मदादिना साक्षान्नापेक्ष्यते, किन्तर्हि? पित्रादिकम्, तेन च तत् इत्येकवाक्यग्रहणात् सामर्थ्याभावेऽप्येकवाक्ये पदात् परस्य युष्मदादेरादेशसिद्धिरिति । इतिशब्द एवमर्थ एव कथितवानित्यर्थ । **बहुत्व इति किमिति** । ननु द्विवचनैकवचनयोरादेशान्तरविधानाद्बहुत्व एव वस्नसौ विज्ञायेते, तथाहि—"द्वित्वे वान्नौ" उक्तौ, एकत्वे तु ते मे, त्वा मा उक्ता इति पारिशेष्याद्बहुत्वमवसीयते, न चैतद्विषयेऽप्यनयो प्रवृत्ति स्यादिति वाच्य यतोऽपवादविषयपरिहारेणोत्सर्गे प्रवर्तते 'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गा' इति 'प्रकल्प्य चापवादविषय तत उत्सर्गोऽभिनिविशते' इति चेत्, सत्यम्, अस्य न्यायानुवादकत्वात् । किञ्च यथा घ्यण्विषये "कृवृषिमृजि०" ५।१।४२। इति प्रारभ्यमाणोऽपवादोऽपि क्यप् पक्षे घ्यण प्रवृत्ति न

१ XXX इति नास्तीति पु० ।

धर्मस्त्वां रक्षतु । स्याद्यधिकारे विभक्तिग्रहणं युक्स्यादिवचननिवृत्त्यर्थम्, तेन—ज्ञाने युवां तिष्ठतः, शीले आवां तिष्ठाव इत्यत्रोत्तरेण वाम्नावादेशौ न भवतः ॥ २१ ॥

## द्वित्वे वान्नौ ॥ २ । १ । २२ ॥

पदात् परयोर्युष्मदस्मदोर्द्वित्वविषयया युग्विभक्त्या सह यथासङ्ख्यं वान्नावित्येतावादेशौ वा भवतः, तच्चेत्पदं युष्मदस्मदी चैकवाक्ये भवतः । धर्मो वां रक्षतु, धर्मो नौ रक्षतु, धर्मो युवां रक्षतु, धर्म आवां रक्षतु, शील वां दीयते, शीलं नौ दीयते, शीलं युवाभ्यां दीयते, शीलमावाभ्यां दीयते; ज्ञान वां स्वम्, ज्ञान नौ स्वम्, ज्ञानं युवयोः स्वम्, ज्ञानमावयोः स्वम् । युग्विभक्त्येत्येव ? ग्रामे युष्मत्पुत्रः, नगरेऽस्मत् पुत्रः । पदादित्येव ? युवां धर्मो रक्षतु, आवां धर्मो रक्षतु । एकवाक्य इत्येव ? ओदनं पचत युवयोर्भविष्यति आवयोर्भविष्यति ॥ २२ ॥

## ङेङसा तेमे ॥ २ । १ । २३ ॥

तेमे इति लुप्तद्विवचनान्तं पदम्, पदात् परयोर्युष्मदस्मदोर्ङे ङस् इत्येताभ्यां सह ते मे इत्येतावादेशौ वा भवत एकवाक्ये, ङेङसेत्येकवचन स्थानिभ्यामादेशाभ्यां च यथासङ्ख्यनिवृत्त्यर्थम् । धर्मस्ते दीयते, धर्मस्तुभ्य दीयते; धर्मो मे दीयते, धर्मो मह्य दीयते; शील ते स्वम्, शील तव स्वम्, शील मे स्वम्, शील मम स्वम्; धर्मस्ते स्वम्, धर्मो मे स्वम्, धर्मस्तव स्वम्, धर्मो मम स्वम् । पदादित्येव ? तुभ्य धर्मो दीयते, मह्य धर्मो दीयते, तव शीलं स्वम्, मम शीलं स्वम् । एकवाक्य इत्येव ? ओदन पच तव भविष्यति मम भविष्यति, त्वां युवा युष्मान् वाऽतिक्रान्ताय अतितुभ्यम् । ङेङसेति किम् ? पटस्त्वया क्रियते, धर्मो मया क्रियते । कथ 'न मे श्रुता नापि च दृष्टपूर्वा'—न मे न मयेति ह्यत्रार्थः; असाधुरेवायम्, स्यादिप्रतिरूपकमव्ययं वा ॥ २३ ॥

## अमा त्वामा ॥ २ । १ । २४ ॥

पदात् परयोर्युष्मदस्मदोरमा द्वितीयैकवचनेन सह त्वा मा इत्येतावादेशौ यथासङ्ख्य[1] वा भवत एकवाक्ये । धर्मस्त्वा रक्षतु, धर्मो मा रक्षतु, धर्मस्त्वा रक्षतु, धर्मो मां रक्षतु । पदादित्येव ? त्वामीक्षते, मामीक्षते । एकवाक्य इत्येव ? अतित्वां पश्यतु, अतिमां पश्यतु ॥ २४ ॥

## असदिवाऽऽमन्त्र्यं पूर्वम् ॥ २ । १ । २५ ॥

आमन्त्र्यते यत्तदामन्त्र्यम्, तद्वाचि पदं युष्मदस्मद्भ्यां पूर्वमसदिवाविद्यमानमिव भवति, सति तस्मिन् यत्कार्यं तन्न

---

विहन्ति । एवमत्रापि वामादय पक्षे न वस्नसो प्रवृत्तिमुपहन्यु । अत एव "टेङमा ते मे" इत्यत्र ङेङसोरुपादान कृतम्, अन्यथा द्वित्वबहुत्वयोर्वस्नसादिभिराघ्रातत्वादेकत्वमवसीयते । तत्रापि द्वितीयैकवचनस्य त्वामादेशविधानात् ङेङसावेव परिशिष्येते किं तदुपादानेन ? तदुपादान तु 'अपवादविषये पक्षे क्वचिदुत्सर्गं प्रवर्त्तते' इति । इह स्याद्यधिकारात् स्यादेश्च विभक्तित्वाद्विभक्तिग्रहणमन्तरेणापि विभक्तौ लब्धायां विभक्तिग्रहण युक्स्यादिवचननिवृत्त्यर्थमित्याह—**स्याद्यधिकारे** इत्यादि ॥ २१ ॥

**द्वित्वे वान्नौ ।** अत्र युष्मदस्मदोरिति पदाद्युग्विभक्त्यैकवाक्ये इति चानुवर्त्तते । पदात् युष्मदस्मदोर्द्वित्वे युग्विभक्त्या वान्नौ वा एकवाक्ये इत्यन्वय । द्वित्व इति भावप्रत्ययान्तेन संख्या निर्दिश्यते, सङ्ख्यायां च विभक्तिर्वर्तते न युष्मदस्मदी द्रव्यवृत्तित्वात्तयोरिति द्वित्व इति विभक्तेरेव विशेषणमित्याह—**द्वित्वविषयया** इत्यादि । अत्रोदाहरणानि प्रत्युदाहरणानि च पूर्वानुसारेण सुज्ञानानीति ॥ २२ ॥

**ङेङसा तेमे ।** युष्मदस्मदोरिति पदादिति एकवाक्ये इति च वर्तते । पदात् युष्मदस्मदोर्ङेङसा तेमे वा एकवाक्ये इत्यन्वय । तेमे इति लक्षणस्य लक्ष्यानुसारित्वाद्युष्मदस्मदो कार्यिणोर्द्विवचनान्तत्वाद्व्याख्यानाद्यथासङ्ख्यार्थं तेमे इति लुप्तप्रथमाद्विवचनान्त कार्यपदमित्याह—**तेमे** इत्यादि । ननु ङेङसोर्द्वित्वसंख्याविषयत्वात् किमर्थमेकवचनम् ? उच्यते—कार्यिणो कार्ययोश्च द्विवचनान्तत्वादनयोरपि द्विवचनान्तत्वे यथासङ्ख्य स्यात्तन्निवृत्त्यर्थमेकवचनमित्याह—**ङेङसेत्यादि । कथमिति ।** अस्मदस्तृतीयैकवचनेन कथ मे इत्ययमादेश इत्यर्थ । समाधत्ते—**असाधुरेवेत्यादि ।** योऽय तृतीयैकवचनेन मे इत्ययमादेश सोऽसाधुर्ङेङस्भ्या सहैव विधानादिति । ननु साधुत्व शिष्टप्रयुक्ते, इति चेत्, तदा स्यादिप्रतिरूपकमेवमर्थमित्याह—**स्यादीत्यादि** ॥ २३ ॥

**अमा त्वामा ।** युष्मदस्मदोरिति पदादिति एकवाक्ये इति चानुवर्तते । पदात् युष्मदस्मदो अमा त्वामा वा एकवाक्ये इत्यन्वयस्त-दर्थमाह—**पदात् परयोरित्यादि ।** अम् यद्यप्यनेकप्रकारोऽस्ति, तथाहि—एक "अत स्यमोऽम्", द्वितीयोऽमव्ययीभावस्येति, तृतीय आख्यातविभक्ते 'अम्वम्' इति तथापि युष्मदस्मद्भ्यामन्यस्यासम्भवाद्द्वितीयैकवचनमेव गृह्यत इत्याह—**अमा द्वितीयैकवचनेनेति ।** त्वामा इति लुप्तप्रथमाद्विवचनान्त यथासङ्ख्यार्थं विधेयमित्याह—**यथासंख्यमिति** ॥ २४ ॥

**असदिवामन्त्र्यं पूर्वम् ।** पूर्वं आमन्त्र्य असद् इव इत्यन्वय । आमन्त्र्यमिति कर्मणि य, योऽर्थ स्वेन धर्मेण प्रसिद्धो धर्मान्तरसम्बन्ध प्रत्यभिमुखीक्रियते स आमन्त्र्य, यथा—देवदत्तो देवदत्तत्वेन प्रसिद्धो धर्मान्तरेऽभिमुखीक्रियते—देवदत्त ! भुङ्क्ष्व, अधीष्व इति । तत्रार्थे कार्यासम्भवादुपचारादामन्त्र्याभिधायिपदमामन्त्र्य विज्ञायत इत्याह—**आमन्त्र्यते यत्तदामन्त्र्यम्, तद्वाचि पदमिति ।** प्रथमान्तमित्यर्थ । पूर्वमिति परापेक्ष, तच्च प्रकृतत्वाद्युष्मदस्मदपेक्षमेवेत्याह—**युष्मदस्मद्भ्या पूर्वमिति ।** असदिवेति स्पष्टयति—**अविद्यमानमिवेत्यादि । श्रमणा**

---

[1] °शौ यथासंख्य वा पु० ।

भवति असति यत्तद्भवतीत्यर्थः । श्रमणा युष्मान् रक्षतु धर्मः, श्रमणा अस्मान् रक्षतु धर्मः, श्रमणा युष्मभ्यं दीयते, श्रमणा अस्मभ्यं दीयते; श्रमणा युष्माकं शीलम्, श्रमणा अस्माकं शीलम्; श्रमणौ युवां रक्षतु धर्मः, श्रमणौ आवां रक्षतु धर्मः; श्रमणौ युवाभ्यां दीयते, आवाभ्यां दीयते; श्रमणौ युवयोः स्वमावयोः स्वम्, श्रमण त्वां रक्षतु तपः, मां रक्षतु तपः; श्रमण तुभ्यं दीयते, मह्यं दीयते; श्रमण तव शीलम्, मम शीलम्, एष्वामन्त्र्यस्यासत्त्वाद् वस्नसादयो न भवन्ति । ग्रामाश्चैत्र ते स्वमथो इत्यादौ चैत्रपदस्यामन्त्र्यस्यासत्त्वाद् ग्रामपदापेक्षयाऽन्वादेशे नित्यं तेमयादिविधिः, न तु "सपूर्वात् प्रथमान्ताद्वा" ॥ २ । १ । ३२ ॥ इति विकल्पः । इवकरणं किम्? श्रवणं यथा स्यात् । आमन्त्र्यमिति किम्? धर्मो वो रक्षतु, धर्मो नो रक्षतु । पूर्वमिति किम्? 'मयैतत्सर्वमाख्यात युष्माक मुनिपुङ्गवाः' परस्य ह्यसद्भत्त्वे पादादिलक्षणः प्रतिषेधो न स्यात्, व्यवहितेऽपि पूर्वशब्दो वर्तते, तेन—'चैत्र धर्मो वोऽथो रक्षतु, चैत्र धर्मो नोऽथो रक्षतु' अत्र "सपूर्वात् प्रथमान्ताद्वा" ॥ २ । १ । ३२ ॥ इति विकल्पो न भवति ॥ २५ ॥

## जस्विशेष्यं वाऽऽमन्त्र्ये ॥ २ । १ । २६ ॥

तदतद्विषयं विशेष्यम्, तस्य व्यवच्छेदकं विशेषणम्, युष्मदस्मद्भ्यां पूर्वं जसन्तमामन्त्र्यं पदं विशेष्यमामन्त्र्ये पदे सामर्थ्यात्तद्विशेषणभूते परेऽसदिव वा भवति; पूर्वेण नित्यं प्राप्ते विकल्पः । जिनाः शरण्या युष्मान् शरणं प्रपद्ये, जिनाः शरण्या वः शरणं प्रपद्ये, जिनाः शरण्या अस्मान् रक्षत, जिनाः शरण्या नो रक्षत, सिद्धाः शरण्या युष्मानथो शरणं प्रपद्ये, सिद्धाः शरण्या वोऽथो शरणं प्रपद्ये, सिद्धाः शरण्या अस्मानथो रक्षत, सिद्धाः शरण्या नोऽथो रक्षत । जसिति किम्? साधो सुविहित वोऽथो शरणं प्रपद्ये, साधो सुविहित नोऽथो रक्ष । विशेष्यमिति किम्? शरण्याः साधवो युष्मान् शरणं प्रपद्ये, शरण्याः साधवोऽस्मान् रक्षत । आमन्त्र्य इति किम्? आचार्या युष्मान् शरण्याः शरणं प्रपद्ये, अत्रामन्त्र्यं विशेषणं व्यवहितत्वात् न परमिति न भवति । सामर्थ्यात्तद्विशेषणभूत इति किम्? आचार्या उपाध्याया युष्मान् शरणं प्रपद्ये ॥२६॥

---

**युष्मान् रक्षतु धर्म** इत्यादि। अत्र श्रमणा इत्यामन्त्र्यस्याविद्यमानवत्त्वे युष्मदस्मदो पदात् परत्वाभावात् वस्नसादयो न भवन्तीत्याह—**एष्वि**त्यादि। ननु पूर्वस्यामन्त्र्यस्याविद्यमानवद्भावात् कथं 'ग्रामाश्चैत्र ते स्वमथो' इत्यादौ पदात् परयोर्युष्मदस्मदोरुच्यमानस्तेमयाद्यादेश इत्याह—**ग्रामाश्चैत्र** इत्यादि । तथा आमन्त्र्यस्याविद्यमानत्वात् सपूर्वत्वाभावात् "सपूर्वात्प्र०" इति विकल्पाभाव । **इवकरणं किमि**ति । असदामन्त्र्य पूर्वमित्युक्तेऽप्यसत्वसिद्धे किमर्थमिवकरणमिति प्रश्नार्थ । समाधत्ते—**श्रवणं यथा स्यादि**ति। इवकरणमन्तरेणासदित्युच्यमाने युष्मदस्मद्भ्यां पूर्वमामन्त्र्यस्य प्रयोगाभाव एव स्यादत प्रयोगनिवृत्तिर्मा भूत् तन्निमित्तककार्याभाव एव यथा स्यादित्येवमर्थम् इवग्रहणम् । ननु च परार्थे प्रयुज्यमाना शब्दा *अतिदेशं गमयन्ति, यथा—गौर्वाहीक इति । तत्र च विद्यमानस्यासदिति वचनादतिदेशो गम्यते । अतिदेशधर्मेश्च स्वाश्रया निवृत्तिरिति नार्थ इव*ग्रहणेन, सत्यम्, एवन्तु मन्यते—इवग्रहणमन्तरेण प्रयोगाव्यवस्थार्थमिदं स्यात् ततश्च कुतश्चित् पूर्वमामन्त्र्य न भवति, तथाच सति पूर्वस्यामन्त्र्यस्य परेणामन्त्र्येण सह निरन्तरता न स्यात् । आमन्त्र्यग्रहणप्रयोजन पृच्छति—**आमन्त्र्यमिति किमि**ति । **धर्मो वो रक्षतु** इत्यादि । अत्र युष्मदस्मद्भ्यां पूर्वस्य धर्मपदस्यामन्त्र्यवाचित्वाभावादसत्त्वाभावेन "पदाद्यु०" इति वस्नसादेश । **पूर्वमिति किम्** इति । यदि पूर्वमिति नोच्येत 'तदा मयैतत्सर्वमाख्यात युष्माक मुनिपुङ्गवा' इत्यत्र युष्मच्छब्दात् परं मुनिपुङ्गवा इत्येतत्, पादस्यादि युष्माकमिति, तत्र परस्याविद्यमानवत्त्वे पादाभावात् युष्माकमित्यस्य पादादित्वाभावात् "पादाद्यो" इति प्रतिषेधस्याप्यभावात् पदात् परत्वेन आदेश प्रसज्येत इति भाव । ननु प्रत्यासत्ते अव्यवहितस्यैव पूर्वस्याविद्यमानवद्भाव, तत चैत्र धर्मो वोऽथो रक्षत्वित्यादौ व्यवहितस्यामन्त्र्यस्य चैत्रादेरविद्यमानवद्भावाभावात् "सपूर्वात्प्र०" इति विकल्पप्रसङ्ग इति चेत्, मैवम्, व्यवहितेऽपि पूर्वशब्दस्य दर्शनात्, यथा—मथुराया पूर्वं पाटलिपुत्रमिति, मथुराद्यानेकग्रामनगरान्तरितेऽपि पाटलिपुत्रे पूर्वशब्द इत्याह—**व्यवहितेऽपी**त्यादि । अयमर्थ —यद्यव्यवहितस्यैव पूर्वस्याविद्यमानवद्भावो न व्यवहितस्य तदा पूर्वग्रहणमपनीय 'असदिवामन्त्र्यात्' इत्येवोच्येत, यत पूर्वस्याप्यविद्यमानवद्भावे युष्मदस्मदोर्वस्नसाद्यभाव प्रयोजन तदित्थमपि सिध्यति किं पूर्वग्रहणेन? तथोत्तरसूत्रेऽप्येतदानुगुण्येन 'जस्विशेष्यात्' इत्येव क्रियेत, अत पूर्वग्रहणाद्व्यवहितस्यापि पूर्वस्याविद्यमानवद्भाव इति । **तेने**त्यादि । व्यवहितस्याविद्यमानवद्भावे सिद्ध प्रयोजन दर्शितमिति ॥ २५ ॥

**जस्विशेष्यं वाऽऽमन्त्र्ये** । असदिवामन्त्र्य पूर्वमित्यनुवर्त्तते । युष्मदस्मद्भ्यां पूर्वं जस्विशेष्य आमन्त्र्य आमन्त्र्ये असदिव वा इत्यन्वय । विशिष्यते—भिद्यते—व्यावर्त्यते इति विशेष्यम्, तत् विशेषणेन हि विशिष्यते इति विशेष्य व्याचक्षाणस्तद्**तदतद्विषय**मित्यादिना सविशेषण व्याचष्टे । यथा नीलमुत्पलम् इत्यत्र नील रक्त च तौ विषयोऽस्येति तदतद्विषयमुत्पल तद्विशेष्यम् । **तस्य व्यवच्छेदकं**—भेदान्तराद्व्यावर्तकम् । **विशेषणम्**—विशिष्यतेऽनेनेति कृत्वा नीलमुच्यते । विशेष्यमित्यस्य विशेष्य पूर्वानुवृत्तमामन्त्र्यमित्याह । **आमन्त्र्य पदमि**त्यादि । **विशेष्यं**—विशेष्याभिधायि पदमित्यर्थ । विशेष्यस्य विशेषणाकाङ्क्षिण एकवाक्योपात्तत्वेन सामर्थ्यात् सन्निहितत्वाद्विशेष्यत्वनिमित्तम् 'आमन्त्र्ये' इत्येतदेव विशेषण विज्ञायत इत्याह—**तद्विशेषणभूत** इति । पूर्वेण व्यवहितस्याप्यविद्यमानवद्भावे नित्य प्राप्ते पक्षेऽनेन विद्यमानवद्भाव सन् निवर्तनेन विधीयते इत्याह—**पूर्वेणे**त्यादि । **जिना॰ शरण्या युष्मान् शरणं प्रपद्ये** इति । अत्र जसन्त विशेष्य, जिना हि व्यावर्त्यत्वेन विवक्ष्यन्ते, यतो रागादिजयाज्जिना । रागादिजयश्च क्षयोपशमभेदाद्द्वेधा, तत्रोपशमरूपे जये तत्प्रादुर्भावात् कदाचिदशरण्यत्वमपि । शरण्या इति व्यावर्तकत्वेन विशेषणम् । तद्विशेषणभूते तस्मिन्नामन्त्र्ये पदे परे जिना इत्यस्याविद्यमानवद्भावो विभाषा भवति । **साधो सुविहिते**त्यादि । अत्रामन्त्र्यस्य विशेष्यस्य आमन्त्र्ये तद्विशेषणभूतेऽपि जसिति वचनाज्जसन्तत्वाभावाद्विकल्पाभावे उत्तरेण नित्य प्रतिषेध इति । **शरण्याः साधवो युष्मान् शरणं प्रपद्ये** इति । अत्र शरण्या इति विशेषणम्, साधव इति विशेष्यम्, तत्रामन्त्र्ये परे जसन्तविशेष्यस्य विकल्पेनाविद्यमानवद्भावविधानाद्विशेषणस्य न भवतीत्यर्थ । नाप्युत्तरेण निषेध इति पूर्वेण नित्यमविद्यमानवद्भाव एव । **आचार्या युष्मानि**त्यादि । अत्रामन्त्र्यस्य विशेष्यस्य व्यवहितत्वेन परत्रोपश्लेषाभावात् न भवति । **आचार्या उपाध्याया** इत्यादि । अत्र भिन्नाधिकरणयो पदयोर्न पूर्वं विशेष्य न परं विशेषणमिति सामर्थ्यात्तद्विशेषणभूते आमन्त्र्य इति वचनात् न भवति ॥ २६ ॥

## नान्यत् ॥ २ । १ । २७ ॥

युष्मदस्मद्भ्यां पूर्वं जसन्तादन्यदामन्त्र्यं पदं विशेष्यमामन्त्र्ये पदे तद्विशेषणभूते परेऽसदिव न भवति । साधो सुविहित त्वा शरणं प्रपद्ये, साधू सुविहितौ वां शरण प्रपद्ये, साधो सुविहित मा रक्ष, साधू सुविहितौ नौ रक्षतम्, साधो सुविहित ते ज्ञानं दीयते, मे ज्ञान दीयताम्, साधू सुविहितो वां ज्ञान दीयते, नौ ज्ञान दीयताम्, साधो सुविहित ते शील स्वम्, मे शील स्वम्; साधू सुविहितौ वां शीलं स्वम्, नौ शीलं स्वम्, अत्र परस्य "असदिवाऽऽमन्त्र्य पूर्वम्" ॥ २ । १ । २५ ॥ इत्यसत्त्वेऽपि पूर्वविशेष्यपदाश्रया युष्मदस्मदादेशा भवन्ति । विशेष्यमित्येव ? सुविहित साधो तव शीलं मम शीलम् ॥ २७ ॥

## पादाद्योः ॥ २ । १ । २८ ॥

नियतपरिमाणमात्राक्षरपिण्डः पादः, पदात् परयोर्युष्मदस्मदोर्यदुक्त वस्नसादि तत्पादस्यादिभूतयोर्न भवति । "वीरो विश्वेश्वरो देवो युष्माक कुलदेवता । स एव नाथो भगवानस्माक पापनाशनः" ॥१॥ पादाद्योरिति द्विवचनं युष्मदस्मदोरभिसंबन्धार्थम्, पादादाविति ह्युच्यमाने आमन्त्र्यमभिसंबध्येत । पादाद्योरिति किम् ? "पान्तु वो देशनाकाले जैनेन्द्रा दशनांशवः । भवकूपपतज्जन्तुजातोद्धरणरज्जवः" ॥ १ ॥ ॥ २८ ॥

## चाहहवैवयोगे ॥ २ । १ । २९ ॥

च अह ह वा एव इत्येतैर्योगे सबन्धे पदात् परयोर्युष्मदस्मदोर्यदुक्त वस्नसादि तन्न भवति । ज्ञान युष्मांश्च रक्षतु, अस्मांश्च रक्षतु; ज्ञान युष्मानह रक्षतु, अस्मानह रक्षतु; ज्ञान युष्मान् ह रक्षतु, अस्मान् ह रक्षतु, ज्ञान युष्मान् वा रक्षतु, अस्मान् वा रक्षतु; ज्ञान युष्मानेव रक्षतु, अस्मानेव रक्षतु, ज्ञानं युष्मभ्य च दीयते, अस्मभ्य च दीयते; ज्ञान युष्माक च स्वम्, अस्माक च स्वम्; ज्ञान युवां च रक्षतु, ज्ञानमावां च रक्षतु, ज्ञान युवाभ्यां च दीयते, आवाभ्या च दीयते, ज्ञान युवयोश्च स्वम्, आवयोश्च स्वम्; ज्ञान त्वां च रक्षतु, मां च रक्षतु, ज्ञान तुभ्य च दीयते, मह्य च दीयते, ज्ञानं

---

**नान्यत्** । अत्र "असदिवामन्त्र्य पूर्वम्" इति "जस्विशेष्य वाऽमन्त्र्ये" इति चानुवर्त्तते । तथा च युष्मदस्मद्भ्या पूर्वं जसोऽन्यदामन्त्र्य विशेष्य आमन्त्र्ये असदिव न इत्यन्वय । जस्विशेष्यमित्यस्य प्रधानतयाऽन्यदिति सबन्धात्तस्य च निषेधार्थात् सविशेषणे च विधिनिषेधयोर्विशेषण एव पर्यवसितत्वाज्जसोऽन्यद्गम्यते इत्याह—**जसन्तादन्यदिति** । **साधो सुविहित त्वा शरणं प्रपद्ये** इत्यादि । अत्र परस्यामन्त्र्यस्याविद्यमानवद्भावेऽपि पूर्वस्याविद्यमानवद्भावाभावात् त्वामादय आदेशा भवन्ति । प्रत्युदाहरण पूर्वसूत्रानुसारेण बोद्धव्यम् । ननु विशेष्यस्यासत्त्वप्राप्तौ तद्विशेषणपदे परत सत्त्वमनेन विधीयते, परपदस्य च "असदिवामन्त्र्यम्०" इत्यसत्त्वात् परत्वाभाव, सत्यम्, असत्त्व हि पूर्वस्य परभूतयुष्मदादिकार्यापेक्षया आधीयते न तु विशेषणात् पूर्वकार्यापेक्षया । ननु चामन्त्र्यपद अभिमुखीभव इति क्रियान्तरमाक्षिपद्वाक्यान्तरमेव, ततश्च वाक्यभेदादेवादेशाभाव सिद्ध किमनेन इति चेत् ? मैवम्, अत एवारम्भाद्वाक्यभेदो नाश्रीयते, तेन साधो सुविहितेत्यादौ एकवाक्यत्वादादेशा सिद्धा ॥ २७ ॥

**पादाद्योः** । पादस्याद्यौ पादाद्यौ तयो पादाद्योरिति । पादलक्षणमाह—**नियतेत्यादि** । मात्राश्च अक्षराणि च मात्राक्षराणि नियत निश्चित परिमाण इयत्ता येषान्तानि तथोक्तानि नियतपरिमाणानि च तानि मात्राक्षराणि च तेषा पिण्ड समूह पाद इत्युच्यते । पादाद्योरिति द्विवचनेन "असदिवामन्त्र्यम्०" इत्यादौ युष्मदस्मदो षष्ठ्यन्ततया संबन्धविकलयोरपीह न्यस्य प्रक्रान्तस्य द्विवचनो भावात् षष्ठ्यन्ततयैवानुवृत्तिरिति प्रदर्श्यते । ते च पदादिति विशेषणसम्बद्धे एवानुवर्त्तेते । षष्ठ्यन्तस्य च साक्षान्न नञा सबन्धोऽस्ति किन्तु तदुक्तकार्यस्य तेन संबन्ध इत्याह—**पदात् परयोरित्यादि** । **यदुक्तमिति** । सामान्येन सकलकार्यपरिग्रहार्थं विशेषण दर्शयति—**वस्नसादीति** । "शेषे लुक्" इत्यादि तु न पदात् परयोरुक्तमिति तन्नाश्रीयते । **पादस्यादिभूतयोरिति** । पादस्यादित्व प्राप्तयोरित्यर्थ । **वीर** इत्यादि । स्पष्टोऽर्थ । अत्र देव इति पदात् परस्य युष्माकमित्यस्य भगवानित्यतः परस्य अस्माकमित्यस्य च पादादेर्वस्नसावादेशौ प्राप्तौ न भवत । ननु किमर्थं ? पादाद्योरिति द्विवचननिर्देश, पादादावित्युच्यमाने पादस्य प्रथमावयवत्वे वर्तमानयोर्युष्मदस्मदोरिति विज्ञायमाने सिध्यत्येवेष्टम्, सत्यम्, सिध्यति यद्येवमभिसम्बन्धो लभ्यते स दुर्लभ इत्याह—**पादाद्योरितीत्यादि** । पादाद्योर्युष्मदस्मदोरिति षष्ठ्यन्तयोस्तयोरभिसबन्धो यथा स्यादित्येवमर्थ क्रियते । पादादावित्युच्यमाने तत् दुर्लभमित्याह—**पादादाविति ह्युच्यमाने** इत्यादि । हिर्यस्मादर्थे तेनायमर्थ —यस्मात् पादादावित्युच्यमानेऽस्यामन्त्र्य इत्यनेनापि सम्बन्धो युज्यते, अनुवृत्तौ तस्यैवानन्तरत्वाद्युष्मदादेश्च विप्रकृष्टत्वात् अत पादाद्योरिति द्विवचन युष्मदस्मदोरभिसबन्धार्थम् । पादाद्योरित्यस्य फल पृच्छति—**पादाद्योरिति किमिति** । **पान्तु** इति । देशनाकाले—उपदेशसमये, भव —ससार एव कूप —अन्धु, तस्मिन् पतत्—पतनशील, जन्तुजात—भूतनिचय, तस्य उद्धरणे रज्जव —रज्जुसंनिभा, जैनेन्द्रा —जिनेन्द्रस्येमे, दशनांशव —दन्तमयूखा, व —युष्मान्, पान्तु—रक्षन्तु इत्यन्वयार्थ । अत्र वसादेशो युष्मद पादादित्वाभावादिति भाव ॥ २८ ॥

**चाहहवैवयोगे** । चाहहवैवयोगे पदात् युष्मदस्मदोर्यदुक्त तन्न इत्यन्वय । चश्च अहश्च हश्च वाश्च एवश्च चाहहवैवा, तैर्योगस्तस्मिन्निति विग्रहस्तदाह—**च अहेत्यादि** । **योगे संबन्धे** इति । चादियोत्यसमुच्चयाद्यर्थस्य साक्षाद्युष्मदस्मदर्थसंबन्धे इत्यर्थ । **ज्ञानं युष्मांश्च रक्षतु** इत्यादि । अत्र शसन्तयोश्चादियोगे साकल्येनोदाहृतम् । शसोऽन्यत्राप्येवमुदाहार्यम् । एतेषु द्वितीया चतुर्थी षष्ठीना बहुवचने वस्नसौ न भवतः । **ज्ञानं युवा च रक्षतु** इत्यादि । अत्र द्विवचने वान्नावौ न भवत । **ज्ञानं त्वां च रक्षत्वित्यादि** । एतेष्वेकवचने त्वा मा ते मे

तव च स्वम्, मम च स्वम् । योगग्रहणं किम् ? ज्ञान च शीलं च वो रक्षतु, नो रक्षतु, ज्ञान च शील च वां दीयते, नौ दीयते, ज्ञान च शील च ते स्वम्, मे स्वम्; ज्ञानं च शीलं च त्वा रक्षतु, मा रक्षतु, ज्ञानं च ते स्वम्, ज्ञान च मे स्वम्; नैतेषु चशब्देन युष्मदस्मदोर्योगोऽपि तु ज्ञानशीलयोः । 'चाहहवैवैः' इत्येव सिद्धे योगग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम् ॥२९॥

## दृश्यर्थैश्चिन्तायाम् ॥ २ । १ । ३० ॥

दृशिना समानार्था दृश्यर्थाः, तैर्धातुभिश्चिन्तायां वर्तमानैर्योगे युष्मदस्मदोर्यदुक्तं वस्नसादि तन्न भवति । जनो युष्मान् सदृश्यागतः, जनोऽस्मान् सदृश्यागतः, जनो युवां समीक्ष्यागतः, जनं आवां समीक्ष्यागतः, जनस्त्वामपेक्षते, जनो मामपेक्षते; ज्ञान युष्मभ्य दीयमानमुत्पश्यति, ज्ञानमस्मभ्य दीयमानमुत्पश्यति, ज्ञानं युवाभ्यां दीयमानं निरूपयति, ज्ञानमावाभ्यां दीयमान निरूपयति, ज्ञान तुभ्य दीयमानं निध्यायति, ज्ञान मह्य दीयमान निध्यायति, जनो युष्माक चित्तमुपलक्षयति, जनोऽस्माक चित्तमुपलक्षयति; जनो युवयोः कार्यं संपश्यति, जन आवयोः कार्यं सपश्यति, गुरुस्तव कार्यमालोचयति; गुरुर्मम कार्यमालोचयति, सर्वत्र मनसा चिन्तित दृश्यर्थानामर्थः । दृश्यर्थैरिति किम् ? जनो वो मन्यते, जनो नो मन्यते । चिन्तायामिति किम् ? जनो वः पश्यति, जनो नः पश्यति, जनो वामीक्षते, जनो नावीक्षते, जनस्त्वालोकयति, जनो मालोकयति, सर्वत्र चक्षुषा पश्यतीत्यर्थः ॥ ३० ॥

## नित्यमन्वादेशे ॥ २ । १ । ३१ ॥

कथितानुकथनमन्वादेशः, कस्यचिद्वस्तुनः किञ्चित्क्रियादिक विधातु कथितस्य तेनान्येन वा शब्देन पुनरन्यद्विधातुं कथनमित्यर्थः; तस्मिन् विषये पदात् परयोर्युष्मदस्मदोर्यदुक्तं वस्नसादि तन्नित्य भवति, यूय विनीतास्तद्वो गुरवो मानयन्ति, वय विनीतास्तन्नो गुरवो मानयन्ति, युवां शीलवन्तौ तद्वां गुरवो मानयन्ति, आवां शीलवन्तौ तन्नौ गुरवो मानयन्ति, त्व विद्वानथो ते क्षमाश्रमणैर्ज्ञान दीयते, अह विद्वानथो मे क्षमाश्रमणैर्ज्ञानं दीयते; धनवांस्त्वमथो त्वा लोको मानयति, धनवानहमथो मा लोको मानयति ॥ ३१ ॥

---

इत्यादेशा न भवन्ति । ज्ञान च शील चेत्यादौ युष्मदस्मदोर्योगाभावाद्योगग्रहणादत्र प्रतिषेधो न भवतीत्याह—**नैतेष्वित्यादि** । ननु किमर्थं योगग्रहण [1] 'चाहहवैवे' इति तृतीयानिर्देशस्य सापेक्षत्वात् तृतीयैव युक्तमध्याहरिष्यति, यथा "गौणात् समया०" २।२।३३। इत्यादौ इत्याह—**चाहहवैवैरित्यादि** । योगग्रहण **साक्षाद्योगप्रतिपत्त्यर्थमिति** । यदा चादिभिर्युष्मदस्मदर्थस्यैव समुच्चयविकल्पद्वय द्योत्यते तदा चादिभि साक्षाद्युष्मदस्मदोर्योग । यदा च तत्सबन्धिन शीलादेस्तदा व्यवधानेन चादिभिर्युष्मदस्मदोर्योग । तत्र साक्षाद्योगे प्रतिषेधो यथा स्याद्व्यवधानेन योगे मा भूदित्येवमर्थं योगग्रहणम् । ननु सन्निकृष्टे साक्षाद्योगे प्रतिषेधस्य चरितार्थत्वात् न व्यवहिते विप्रकृष्टयोगे प्रवर्तिष्यते इति किं योगग्रहणेन ? इति चेद्, एतदेव योगग्रहणं ज्ञापयति यद्युक्तयुक्तेऽप्यस्मिन् प्रकरणे कार्यं भवतीति ॥ २९ ॥

**दृश्यर्थैश्चिन्तायाम्** । चिन्तायां वर्तमाने दृश्यर्थे योगे युष्मदस्मदोर्यदुक्त तन्न इत्यन्वय । **दृश्यर्थैरिति** । "इकिस्तिव्०" ५।३।१३८। इति धातो स्वरूपे चार्थेऽभिधेये इकुप्रत्ययो विधीयते । तत्र स्वरूपे विधीयमाने 'दृशेरर्थो येषामिति' व्यधिकरणबहुव्रीहिप्रसङ्गात्, तस्य च प्रायेणानिष्टत्वात् । अर्थे प्रत्ययस्ततो दृशेरर्थो दर्शनमालोचनमर्थो येषामित्यन्यपदार्थत्वेन धातव एव विज्ञायन्ते । युजिक्रियाकर्तृत्वात्तृतीया । युजिक्रियायाश्च सन्निधान तृतीयया योगार्थस्याक्षेपात् । प्रोक्तमस्य च योगग्रहणस्यानुवृत्तौ दृश्यर्थे साक्षाद्युक्तयोरेव युष्मदस्मदो प्रतिषेध स्यात्, अत्र तु युक्तयुक्तेऽपि प्रतिषेध इष्यते तत्र च पूर्वमेव युक्तिरुक्ता । जनो युष्मान्संदृश्यागत इत्यादौ सर्ववाक्ये सदृश्येत्यादौ मनोवृत्तिरूपा चिन्ता दृश्यर्थ इति वस्नसादयो न भवन्तीत्याह—**सर्वत्रेत्यादि** । **जनो वो मन्यत** इति । नाय दृश्यर्थ । दृश्यर्थो नाम यश्चक्षु साधने विज्ञाने वर्ततेऽतो न निषेध इति ॥ ३० ॥

**नित्यमन्वादेशे** । अन्वादेशे पदाद्युष्मदस्मदोर्यदुक्त तन्नित्यम् इत्यन्वय । अनुशब्दः पश्चाद्भावे, पश्चाद्भावश्च पूर्वभावापेक्ष, पूर्वभावश्च प्रत्यासत्तेरुत्तरपदार्थभूतस्यादेशस्यैव । आदेशश्च कथनम्, अनुकथन च प्रत्यासत्ते कथितस्यैव, अन्यथा तदन्यस्य कथनमेव स्यात् नानुकथनमिति समानाधिकरणविषय इत्याह—**कथितानुकथनमन्वादेश** इति । **कस्यचिद्वस्तुन** इत्यादिना । कथितानुकथनमित्येतदेवाभिव्यनक्ति । कस्यचिद्द्रव्यस्य कांचित् क्रियां जातिं गुण द्रव्य वा प्रतिपादयितु कथितस्य कार्यिभूतेन तदितरेण वा शब्देन पौनरुक्त्य मा भूदिति विशेषान्तरं प्रतिपादयितु पुन कथनमन्वादेश इति यावत् । यदुक्त वस्नसादि तन्नित्य भवतीति नित्यतामात्रमनेन विधीयते नापूर्व किंचिदिति । **यूयं विनीतास्तद्वो गुरवो मानयन्ति** इत्यादि, यूय विनीता इत्यय प्रथमादेश उत्तरस्यान्वादेशताख्यापनार्थम् । विनीता इति विनीतत्वम् प्रतिपादयितु यूयमिति प्रतिपादितम् । तदित्यव्यय तस्मादित्यर्थे । तद्वो गुरवो मानयन्तीत्ययमन्वादेश । अत्र यूयमिति यत्प्रथममुक्त तस्यैव च गुरवो मानयन्तीति प्रतिपादयितु द्वितीय कथन, तत्र नित्य वस्नसादेश । एव सर्वत्र । नन्विद किमर्थम् ? सामान्येन वस्नसादीनां विधानादन्वादेशेऽपि सिद्धत्वात्, नित्यार्थमित्यपि न वाच्यम्, तत्र विकल्पाभावान्नित्यत्वस्यापि सिद्धत्वात् । न चानन्वादेशे विकल्पार्थमिति वाच्यम्, 'अन्वादेशे' इत्यारम्भसामर्थ्यादनन्वादेशे विकल्पस्य सिद्धत्वादिति चेत्, मैवम्, 'अन्वादेशे' इत्यारम्भेऽप्यन्वादेशे विकल्पोऽनन्वादेशे चेति निर्धेतुमशक्यत्वादत्र नित्यग्रहण नित्यत्वार्थमिति । न च "सपूर्वात्०" इत्यन्वादेशे विकल्पविधानात् नित्यग्रहणमन्तरेणाप्यन्वादेश एव विकल्प इति वाच्यम्, यतोऽन्यादेशे विकल्पे सति "सपूर्वात्०" इत्यस्य नियमार्थता स्यात्, 'सपूर्वात् प्रथमान्तादेवान्वादेशे विकल्पो न द्वितीयायन्तात्' तथा 'सपूर्वादेव प्रथमान्ताद्विकल्पो न केवलात्' तत्र अवधारणद्वयव्यावर्त्ये च विषये "पदाद्युग्०" इत्यादिभिर्नित्य एव विधि स्यात् इति । तस्मादन्वादेशे एव नित्यो विधिरन्यत्र तु विकल्प इति प्रतिपादनार्थं नित्यग्रहणम् ॥ ३१ ॥

---

१ °ज्ञान च° इत्यादिना, °मे स्वम् इत्यन्तेन पाठो नास्तीति म० म० ।

## सपूर्वात् प्रथमान्ताद् वा ॥ २ । १ । ३२ ॥

विद्यमानपूर्वपदात् प्रथमान्तात् पदात् परयोर्युष्मदस्मदोरन्वादेशे वस्नसादय आदेशा वा भवन्ति । यूयं विनीतास्तद्गुरवो वो मानयन्ति, तद्गुरवो युष्मान् मानयन्ति, वय विनीतास्तद्गुरवो नो मानयन्ति, तद्गुरवोऽस्मान् मानयन्ति; युवां सुशीलौ तज्ज्ञानं वां दीयते, तज्ज्ञानं युवाभ्यां दीयते, आवां सुशीलौ तज्ज्ञान नौ दीयते, तज्ज्ञानमावाभ्यां दीयते; सुशीलस्त्वमथो क्षमाश्रमणास्ते ज्ञानं प्रयच्छन्ति, अथो क्षमाश्रमणास्तुभ्य ज्ञानं प्रयच्छन्ति, सुशीलोऽहमथो क्षमाश्रमणा मे ज्ञानं प्रयच्छन्ति, अथो क्षमाश्रमणा मह्य ज्ञान प्रयच्छन्ति, धनवानसि अथो ग्रामे कम्बलस्ते स्वम्, अथो ग्रामे कम्बलस्तव स्वम्, धनवानहमथो ग्रामे कम्बलो मे स्वम्, अथो ग्रामे कम्बलो मम स्वम्; धनवास्त्व तल्लोकस्त्वा पूजयति, तल्लोकस्त्वां पूजयति, धनवानहं तल्लोको मा पूजयति, तल्लोको मां पूजयति । गम्येऽप्यन्वादेशे भवति—ग्रामे कम्बलो वः स्वमथो ग्रामे कम्बलो युष्माकं स्वमथो इत्यादि । सपूर्वादिति किम्? पटो युष्माक स्वम्, अथो वः कम्बल. स्वम् । प्रथमान्तादिति किम्? पटो नगरे युष्माक स्वम्, अथो कम्बलो ग्रामे वः स्वम् । 'माणवक जटिलक ते स्वमथो' इत्यादौ तु विशेषणपदस्य "असदिवामन्त्र्य पूर्वम्" ॥ २ । १ । २५ ॥ इत्यसद्भावात् नास्ति सपूर्वप्रथमान्तमिति न भवत्येव विकल्पः । पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम् ॥ ३२ ॥

## त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते ॥ २ । १ । ३३ ॥

त्यदादीनां संबन्धिन एतदित्यस्य द्वितीयायां टायामोसि च परेऽन्वादेशे एनद् इत्ययमादेशो भवति, अवृत्त्यन्ते—न चेदयमेतच्छब्दो वृत्तेरन्ते भवति । द्वितीया—उद्दिष्टमेतदध्ययनमथो एनदनुजानीत, एतक साधुमावश्यकमध्यापयाथो एनमेव सूत्राणि, अत्र साकोऽप्यादेशः; सुशीलावेतौ तदेनौ गुरवो मानयन्ति, सुस्थिता एते तदेनान् देवा अपि नमस्यन्ति, टा—एतेन रात्रिरधीता अथो एनेनाहरप्यधीतम् । ओस्—एतयो. शोभन शीलमथो एनयोर्महती कीर्तिः, सर्वाणि शास्त्राणि ज्ञातवन्तावेतौ अथो एनयोस्तिष्ठतोर्नान्यः पूजार्हः । त्यदामिति किम्? एतद संगृहाण अथो एतदमध्यापय, संज्ञायाम-सर्वादित्वादत्यदादिः । अवृत्त्यन्त इति किम्? अथो परमैतं पश्य । अन्तग्रहण किम्? एनच्छ्रितकः, अत्रार्थात् प्रकरणाद् वाऽपेक्ष्ये निर्ज्ञाते सति समासोऽन्वादेशश्च । द्वितीयाटौसीति किम्? एते मेधाविनो विनीता अथो एते शास्त्रस्य पात्रम्, एताभ्यां रात्रिरधीता अथो एताभ्यामहरप्यधीतम्, एतस्मै सूत्र देहि अथो एतस्मै अनुयोगमपि देहि, अभ्युदयनिःश्रेयस-[1]दमेतच्छासनमथो एतस्मै नमो भगवते । अन्वादेश इत्येव? जिनदत्तमध्यापय एत च गुरुदत्तम्, न पश्चात् कथनमात्रम्-

---

**सपूर्वात् प्रथमान्ताद् वा** । सपूर्वात् प्रथमान्तात् पदाद्युस्मदस्मदोरन्वादेशे वस्नसादयो वा इत्यन्वयस्तदर्थमाह—**विद्यमानपूर्वपदादित्यादि** । **सपूर्वादिति** । सहशब्दो विद्यमानवचन, पूर्वशब्दो व्यवस्थार्थ । सह–विद्यमानं पूर्वं यस्मादिति पञ्चम्यर्थे बहुव्रीहौ "सहस्य सो०" ३।२।१४३। इति सभाव । **प्रथमान्तादिति** । प्रथमाया प्रत्ययत्वात् "प्रत्यय प्रकृत्यादे" इत्यादिना अन्तस्य लब्धत्वात् अन्तग्रहण न्यायानुवादकमिति । **यूयं विनीतास्तद्गुरवो वो मानयन्तीत्यादि** । एतेषु पक्षे वस्नसादय । अथो इत्यादेर्द्योतकत्वादन्वादेशस्येत्यत आह—**गम्येऽप्यन्वादेश इत्यादि** । **पटो युष्माकं स्वमित्यादि** । अत्र प्रथमान्तत्वेऽपि सपूर्वत्वाभावात् सपूर्वादिति वचनात् न भवति पाक्षिको वसादेश । **पटो नगरे युष्माकमित्यादि** । अत्र 'ग्रामे' इत्यस्य प्रथमान्तत्वाभावात् नानेन विभाषादेश । **माणवक जटिलक ते स्वमथो इत्यादाविति** । अत्र "असदिवामन्त्र्य पूर्वम्" इति जटिलकपदस्य असद्भावे सपूर्वप्रथमान्तत्वाभावाद्विकल्पाभावात्तत्पूर्वस्य च माणवकपदस्य "नान्यत्" इति निषेधेन सद्भावात् पदात् परत्वे पूर्वेण नित्य तेमयादय । अस्य प्राप्तविभाषात्व दर्शयति—**पूर्वेणेति** । "नित्यमन्वादेशे" इत्यनेनेति भाव ॥ ३२ ॥

**त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते** । अन्वादेशे इति वर्तते । त्यदा एतदः द्वितीयाटौसि अन्वादेशे एनद् अवृत्त्यन्ते इत्यन्वय । त्यच्छब्दस्य तत्प्रकारेष्वपि वर्तनात् एकशेषात् त्यदामिति बहुवचनात्त्यदादीनामिति विज्ञायते, तेन चैतद इति विशिष्यते इत्याह—**त्यदादीनां संबन्धिन एतदित्यस्येति** । **उद्दिष्टमेतदध्ययनमिति** प्रथमादेश । **अथो एनदनुजानीते**त्ययमन्वादेश । अत्रैतद एनदादेश प्राप्नोति "अनतो लुप्" इति लुब्वा, तत्र परस्मादप्येनदो नित्यत्वात् 'अन्तरङ्गानपि विधीन् बाधित्वा' इति च लुपि सजातायां "लुप्यय्वृल्लेनत्" इत्येनद्वर्जनात् स्थानिवद्भावप्रतिषेधाभावादेनदादेश । **एतकमिति** । अनुकम्पायामक्, अनेन साक आदेश । **एतदं संगृहाण अथो एतदमध्यापयेत्यस्य** एतद अत्यदादित्वात् नाऽऽदेश इति । अत्यदादित्व च प्रतिपादयितुमाह—**संज्ञायामिति** । असंज्ञायामिति गणे पाठात् संज्ञाया सर्वादेर्गणाद् बहिर्भाव, त्यदादिश्च सर्वाद्यन्तर्गणोऽत संज्ञायां न त्यदादीत्यर्थ । **परमैतं पश्येति** । अत्रैतच्छब्दस्य वृत्त्यन्तत्वादवृत्त्यन्ते इति वचनाद्द्वितीयैकवचने न भवत्येनदादेश । 'अवृत्त्यन्ते' इत्यत्रान्तग्रहण पृच्छति—**अन्तग्रहणं किमिति** । **एनच्छ्रितक इति** । एनं श्रित इति द्वितीयातत्पुरुष "श्रितादिभि" ३।१।६२। इत्यनेन, कुत्सितादौ कप् । प्रथमादेशसापेक्षत्वादन्वादेशस्य तत्रासामर्थ्यात् ऋद्धस्य राज्ञ पुरुष इत्यादिवत् समासाभाव, सामर्थ्यात् समासश्चेत्पूर्वकथनसापेक्षस्यान्वादेशस्याभाव इति परस्परविरोधादुभयाभावादादेशाभाव इत्याह—**अर्थाद् प्रकरणाद्वेत्यादि** । अर्थो वा तादृशो भवति प्रकरण वा येन ताभ्यामेवापेक्ष्यस्य प्रथमादेशस्य निश्चितत्वाद्वृत्तावेवान्तर्भावान्निरपेक्षत्वात् समासो भवति, यथा देवदत्तस्य गुरुकुलमिति । **जिनदत्तमध्यापय एतं च गुरुदत्तमिति** । नहि पश्चादुच्चारणमात्रमन्वादेश किन्तर्हि? एकस्यैवाभिधेयस्य

---

[1] पद म० भ० ।

तव च स्वम्, मम च स्वम् । योगग्रहणं किम्? ज्ञानं च शीलं च वो रक्षतु, नो रक्षतु, ज्ञानं च शीलं च वां दीयते, नौ दीयते; ज्ञानं च शीलं च ते स्वम्, मे स्वम्; ज्ञानं च शीलं च त्वा रक्षतु, मा रक्षतु, ज्ञानं च ते स्वम्, ज्ञानं च मे स्वम्; नैतेषु चशब्देन युष्मदस्मदोर्योगोऽपि तु ज्ञानशीलयोः । 'चाहहवैवै.' इत्येव सिद्धे योगग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम् ॥२९॥

## दृश्यर्थैश्चिन्तायाम् ॥ २ । १ । ३० ॥

दृशिना समानार्था दृश्यर्थाः, तैर्धातुभिश्चिन्ताया वर्तमानैर्योगे युष्मदस्मदोर्यदुक्तं वस्नसादि तन्न भवति । जनो युष्मान् संदृश्यागतः, जनोऽस्मान् संदृश्यागतः, जनो युवां समीक्ष्यागतः, जनं आवां समीक्ष्यागतः, जनस्त्वामपेक्षते, जनो मामपेक्षते; ज्ञानं युष्मभ्यं दीयमानमुत्पश्यति, ज्ञानमस्मभ्यं दीयमानमुत्पश्यति; ज्ञानं युवाभ्यां दीयमानं निरूपयति, ज्ञानमावाभ्यां दीयमानं निरूपयति, ज्ञानं तुभ्यं दीयमानं निध्यायति, ज्ञानं मह्यं दीयमानं निध्यायति; जनो युष्माकं चित्तमुपलक्षयति, जनोऽस्माकं चित्तमुपलक्षयति; जनो युवयोः कार्यं संपश्यति, जनं आवयोः कार्यं संपश्यति; गुरुस्तव कार्यमालोचयति; गुरुर्मम कार्यमालोचयति; सर्वत्र मनसा चिन्तितं दृश्यर्थानामर्थः । दृश्यर्थैरिति किम्? जनो वो मन्यते, जनो नो मन्यते । चिन्तायामिति किम्? जनो वः पश्यति, जनो नः पश्यति, जनो वामीक्षते, जनो नावीक्षते, जनस्त्वालोकयति, जनो मालोकयति; सर्वत्र चक्षुषा पश्यतीत्यर्थः ॥ ३० ॥

## नित्यमन्वादेशे ॥ २ । १ । ३१ ॥

कथितानुकथनमन्वादेशः, कस्यचिद्वस्तुनः किञ्चित्क्रियादिकं विधातुं कथितस्य तेनान्येन वा शब्देन पुनरन्यद्विधातुं कथनमित्यर्थः; तस्मिन् विषये पदात् परयोर्युष्मदस्मदोर्यदुक्तं वस्नसादि तन्नित्यं भवति, यूयं विनीतास्तद्वो गुरवो मानयन्ति, वयं विनीतास्तन्नो गुरवो मानयन्ति, युवां शीलवन्तौ तद्वां गुरवो मानयन्ति, आवां शीलवन्तौ तन्नौ गुरवो मानयन्ति, त्वं विद्वानथो ते क्षमाश्रमणैर्ज्ञानं दीयते, अहं विद्वानथो मे क्षमाश्रमणैर्ज्ञानं दीयते; धनवांस्त्वमथो त्वा लोको मानयति, धनवानहमथो मा लोको मानयति ॥ ३१ ॥

---

इत्यादेशा न भवन्ति । ज्ञानं च शीलं चेत्यादौ युष्मदस्मदोर्योगाभावाद्योगग्रहणादत्र प्रतिषेधो न भवतीत्याह—नैतेष्वित्यादि । ननु किमर्थं योगग्रहणं? 'चाहहवैवै' इति तृतीयानिर्देशस्य सापेक्षत्वात् तृतीयैव युक्तमध्याहरिष्यति, यथा "गौणात् समया०" २।२।३३। इत्यादौ इत्याह—चाहहवैवैरित्यादि । योगग्रहणं **साक्षाद्योगप्रतिपत्त्यर्थमि**ति । यदा चादिभिर्युष्मदस्मदर्थस्यैव समुच्चयविकल्पद्वयं द्योत्यते तदा चादिभिः साक्षाद्युष्मदस्मदोर्योगः । यदा च तत्संबन्धिनः शीलादेस्तदा व्यवधानेन चादिभिर्युष्मदस्मदोर्योगः । तत्र साक्षाद्योगे प्रतिषेधो यथा स्याद्व्यवधानेन योगे मा भूदित्येवमर्थं योगग्रहणम् । ननु संनिकृष्टे साक्षाद्योगे प्रतिषेधस्य चरितार्थत्वात् न व्यवहिते विप्रकृष्टयोगे प्रवर्त्तिष्यते इति किं योगग्रहणेन? इति चेद्, एतदेव योगग्रहणं ज्ञापयति यद्युक्तयुक्तेऽप्यस्मिन् प्रकरणे कार्यं भवतीति ॥ २९ ॥

**दृश्यर्थैश्चिन्तायाम्** । चिन्ताया वर्तमाने दृश्यर्थे योगे युष्मदस्मदोर्यदुक्तं तन्न इत्यन्वयः । **दृश्यर्थैरि**ति । "इकिश्तिव्०" ५।३।१३८। इति धातोः स्वरूपे चार्येऽभिधेये इक्प्रत्ययो विधीयते । तत्र स्वरूपे विधीयमाने 'दृशेरर्थो येषामिति' व्यधिकरणबहुव्रीहिप्रसङ्गात्, तस्य च प्रायेणानिष्टत्वात् । अर्थे प्रत्ययस्ततो दृशेरर्थो दर्शनमालोचनमर्थो येषामित्यन्यपदार्थत्वेन धातव एव विज्ञायन्ते । युजिक्रियाकर्तृत्वात्तृतीया । युजिक्रियायाश्च संनिधानं तृतीयया योगार्थस्याक्षेपात् । प्रोक्तमस्य च योगग्रहणस्यानुवृत्तौ दृश्यर्थे साक्षाद्युक्तयोरेव युष्मदस्मदोः प्रतिषेधः स्यात्, अत्र तु युक्तयुक्तेऽपि प्रतिषेध इष्यते तत्र च पूर्वमेव युक्तिरुक्ता । जनो युष्मान्संदृश्यागत इत्यादौ सर्ववाक्ये संदृश्येत्यादौ मनोवृत्तिरूपा चिन्ता दृश्यर्थ इति वस्नसादयो न भवन्तीत्याह—सर्वत्रेत्यादि । **जनो वो मन्यत** इति । नायं दृश्यर्थः । दृश्यर्थो नाम यश्चक्षुःसाधने विज्ञाने वर्तते ऽतो न निषेध इति ॥ ३० ॥

**नित्यमन्वादेशे** । अन्वादेशे पदाद्युष्मदस्मदोर्यदुक्तं तन्नित्यम् इत्यन्वयः । अनुशब्दः पश्चाद्भावे, पश्चाद्भावश्च पूर्वभावापेक्षः, पूर्वभावश्च प्रत्यासत्तेरुत्तरपदार्थभूतस्यादेशस्यैव । आदेशश्च कथनम्, अनुकथनं च प्रत्यासत्तेः कथितस्यैव, अन्यथा तदन्यस्य कथनमेव स्यात् नानुकथनमिति समानाधिकरणविषय इत्याह—**कथितानुकथनमन्वादेश** इति । **कस्यचिद्वस्तुन** इत्यादिना । कथितानुकथनमित्येतदेवाभिव्यनक्ति । कस्यचिद्द्रव्यस्य काञ्चित् क्रियां जातिं गुणं द्रव्यं वा प्रतिपादयितुं कथितस्य कार्यिभूतेन तदितरेण वा शब्देन पौनरुक्त्यं मा भूदिति विशेषान्तरं प्रतिपादयितुं पुनः कथनमन्वादेश इति यावत् । यदुक्तं वस्नसादि तन्नित्यं भवतीति नित्यतामात्रमनेन विधीयते नापूर्वं किञ्चिदिति । **यूयं विनीतास्तद्वो गुरवो मानयन्ति** इत्यादि, यूयं विनीता इत्ययं प्रथमादेश उत्तरस्यान्वादेशताख्यापनार्थम् । विनीता इति विनीतत्वम् प्रतिपादयितुं यूयमिति प्रतिपादितम् । तदित्यव्ययं तस्मादित्यर्थे । तद्वो गुरवो मानयन्तीत्ययमन्वादेशः । अत्र यूयमिति यत्प्रथममुक्तं तस्यैव च गुरवो मानयन्तीति प्रतिपादयितुं द्वितीयं कथनं, तत्र नित्यं वस्नसादेशः । एवं सर्वत्र । नन्विदं किमर्थम्? सामान्येन वस्नसादीनां विधानादन्वादेशेऽपि सिद्धत्वात्, नित्यार्थमित्यपि न वाच्यम्, तत्र विकल्पाभावान्नित्यत्वस्यापि सिद्धत्वात् । न चानन्वादेशे विकल्पार्थमिति वाच्यम्, 'अन्वादेशे' इत्यारम्भसामर्थ्यादनन्वादेशे विकल्पस्य सिद्धत्वादिति चेत्, मैवम्; 'अन्वादेशे' इत्यारम्भेऽप्यन्वादेशे विकल्पोऽनन्वादेशे वेति निश्चेतुमशक्यत्वादत्र नित्यग्रहणं नित्यत्वार्थमिति । न च "सपूर्वात्०" इत्यन्वादेशे विकल्पविधानात् नित्यग्रहणमन्तरेणाप्यन्वादेश एव विकल्प इति वाच्यम्, यतोऽन्वादेशे विकल्पे सति "सपूर्वात्०" इत्यस्य नियमार्थता स्यात्, 'सपूर्वात् प्रथमान्तादेवान्वादेशे विकल्पो न द्वितीयाद्यन्तात्' तथा 'सपूर्वादेव प्रथमान्ताद्विकल्पो न केवलात्' तत्र अवधारणद्वयव्यापत्तेः च विषये "पदाद्युग्०" इत्यादिभिर्नित्य एव विधिः स्यात् इति । तस्मादन्वादेशे एव नित्यो विधिरन्यत्र तु विकल्प इति प्रतिपादनार्थं नित्यग्रहणम् ॥ ३१ ॥

---

१ °ज्ञानं च° इत्यादिना, °मे स्वम् इत्यन्तेन पाठो नास्तीति मु० मु० ।

## सपूर्वात् प्रथमान्ताद् वा ॥ २ । १ । ३२ ॥

विद्यमानपूर्वपदात् प्रथमान्तात् पदात् परयोर्युष्मदस्मदोरन्वादेशे वस्नसादय आदेशा वा भवन्ति । यूयं विनीतास्तद्गुरवो वो मानयन्ति, तद्गुरवो युष्मान् मानयन्ति, वयं विनीतास्तद्गुरवो नो मानयन्ति, तद्गुरवोऽस्मान् मानयन्ति; युवां सुशीलौ तज्ज्ञानं वां दीयते, तज्ज्ञानं युवाभ्यां दीयते, आवां सुशीलौ तज्ज्ञानं नौ दीयते, तज्ज्ञानमावाभ्यां दीयते; सुशीलस्त्वमथो क्षमाश्रमणास्ते ज्ञानं प्रयच्छन्ति, अथो क्षमाश्रमणास्तुभ्यं ज्ञानं प्रयच्छन्ति, सुशीलोऽहमथो क्षमाश्रमणा मे ज्ञानं प्रयच्छन्ति, अथो क्षमाश्रमणा मह्यं ज्ञानं प्रयच्छन्ति, धनवानसि अथो ग्रामे कम्बलस्ते स्वम्, अथो ग्रामे कम्बलस्तव स्वम्, धनवानहमथो ग्रामे कम्बलो मे स्वम्, अथो ग्रामे कम्बलो मम स्वम्; धनवांस्त्वं तल्लोकस्त्वा पूजयति, तल्लोकस्त्वां पूजयति, धनवानहं तल्लोको मा पूजयति, तल्लोको मां पूजयति । गम्येऽप्यन्वादेशे भवति—ग्रामे कम्बलो वः स्वमथो ग्रामे कम्बलो युष्माकं स्वमथो इत्यादि । सपूर्वादिति किम्? पटो युष्माकं स्वम्, अथो वः कम्बलः स्वम् । प्रथमान्तादिति किम्? पटो नगरे युष्माकं स्वम्, अथो कम्बलो ग्रामे वः स्वम् । 'माणवक जटिलक ते स्वमथो' इत्यादौ तु विशेषणपदस्य "असदिवामन्त्र्यं पूर्वम्" ॥ २ । १ । २५ ॥ इत्यसद्भावात् नास्ति सपूर्वप्रथमान्तमिति न भवत्येव विकल्पः । पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम् ॥ ३२ ॥

## त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते ॥ २ । १ । ३३ ॥

त्यदादीनां संबन्धिन एतदित्यस्य द्वितीयायां टायामोसि च परेऽन्वादेशे एनद् इत्ययमादेशो भवति, अवृत्त्यन्ते—न चेदयमेतच्छब्दो वृत्तेरन्ते भवति । द्वितीया—उद्दिष्टमेतदध्ययनमथो एनदनुजानीत, एतकं साधुमावश्यकमध्यापयाथो एनमेव सूत्राणि, अत्र साकोऽप्यादेशः; सुशीलावेतौ तदेनौ गुरवो मानयन्ति, सुस्थिता एते तदेनान् देवा अपि नमस्यन्ति, टा—एतेन रात्रिरधीता अथो एनेनाहरप्यधीतम् । ओस्—एतयोः शोभनं शीलमथो एनयोर्महती कीर्तिः, सर्वाणि शास्त्राणि ज्ञातवन्तावेतौ अथो एनयोस्तिष्ठतोर्नान्यः पूजार्हः । त्यदामिति किम्? एतद संगृहाण अथो एतदमध्यापय, संज्ञायाम-सर्वादित्वादत्यदादिः । अवृत्त्यन्त इति किम्? अथो परमैतं पश्य । अन्तग्रहणं किम्? एनच्छ्रितकः, अत्रार्थात् प्रकरणाद् वाऽपेक्ष्ये निर्ज्ञाते सति समासोऽन्वादेशश्च । द्वितीयाटौसीति किम्? एते मेधाविनो विनीता अथो एते शास्त्रस्य पात्रम्, एताभ्यां रात्रिरधीता अथो एताभ्यामहरप्यधीतम्, एतस्मै सूत्रं देहि अथो एतस्मै अनुयोगमपि देहि; अभ्युदयनिःश्रेयस[1]दमेतच्छासनमथो एतस्मै नमो भगवते । अन्वादेश इत्येव? जिनदत्तमध्यापय एतं च गुरुदत्तम्, न पश्चात् कथनमात्रम-

---

**सपूर्वात् प्रथमान्ताद् वा ।** सपूर्वात् प्रथमान्तात् पदाद्युष्मदस्मदोरन्वादेशे वस्नसादयो वा इत्यन्वयस्तदर्थमाह—**विद्यमानपूर्वपदादित्यादि । सपूर्वादिति ।** सहशब्दो विद्यमानवचनः, पूर्वशब्दो व्यवस्थार्थः । सह-विद्यमानं पूर्वं यस्मादिति पञ्चम्यर्थे बहुव्रीहौ "सहस्य सो०" ३।२।१४३। इति समासः । **प्रथमान्तादिति ।** प्रथमाया प्रत्ययत्वात् "प्रत्ययः प्रकृत्यादेः" इत्यादिना अन्तस्य लब्धत्वात् अन्तग्रहणं न्यायानुवादकमिति । **यूयं विनीतास्तद्गुरवो वो मानयन्तीत्यादि ।** एतेषु पक्षे वस्नसादयः । अथो इत्यादेर्द्योतकत्वादन्वादेशस्येत्यत आह—**गम्येऽप्यन्वादेश इत्यादि । पटो युष्माकं स्वमित्यादि ।** अत्र प्रथमान्तत्वेऽपि सपूर्वत्वाभावात् सपूर्वादिति वचनात् न भवति पाक्षिको वसादेशः । **पटो नगरे युष्माकमित्यादि ।** अत्र 'ग्रामे' इत्यस्य प्रथमान्तत्वाभावात् नानेन विभाषादेशः । **माणवक जटिलक ते स्वमथो इत्यादाविति ।** अत्र "असदिवामन्त्र्यं पूर्वम्" इति जटिलकपदस्य असद्भावे सपूर्वप्रथमान्तत्वाभावाद्विकल्पाभावात्तत्पूर्वस्य च माणवकपदस्य "नान्यत्" इति निषेधेन सद्भावात् पदात् परत्वे पूर्वेण नित्यं तेमयादयः । अस्य प्राप्तविभाषात्वं दर्शयति—**पूर्वेणेति ।** "नित्यमन्वादेशे" इत्यनेनेति भावः ॥ ३२ ॥

**त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते ।** अन्वादेशे इति वर्तते । त्यदां एतदः द्वितीयाटौसि अन्वादेशे एनद् अवृत्त्यन्ते इत्यन्वयः । त्यच्छब्दस्य तत्प्रकारेष्वपि वर्तनात् एकशेषात् त्यदामिति बहुवचनात्त्यदादीनामिति विज्ञायते, तेन नैतद इति विशिष्यते इत्याह—**त्यदादीनां संबन्धिन एतदित्यस्येति । उद्दिष्टमेतदध्ययनमिति** प्रथमादेशः । **अथो एनदनुजानीते**त्ययमन्वादेशः । अत्रैतद एनदादेशः प्राप्नोति "अनतो लुप्" इति लुब्वा, तत्र परस्मादप्येनदो नित्यत्वात् 'अन्तरङ्गानपि विधीन् बाधित्वा' इति च लुपि सजातायां "लुप्यय्वृल्लेनत्" इत्येनद्वर्जनात् स्थानिवद्भावप्रतिषेधाभावादेनदादेशः । **एतकमिति ।** अनुकम्पायामक्, अनेन साक आदेशः । **एतद संगृहाण अथो एतदमध्यापये**त्यस्य एतद अत्यदादित्वात् नाऽऽदेश इति । अत्यदादित्वं च प्रतिपादयितुमाह—**संज्ञायामिति ।** असंज्ञायामिति गणे पाठात् संज्ञायां सर्वादेर्गणाद् बहिर्भावः, त्यदादिश्च सर्वाद्यन्तर्गणोऽतः संज्ञाया न त्यदादीत्यर्थः । **परमैतं पश्येति ।** अत्रैतच्छब्दस्य वृत्त्यन्तत्वादवृत्त्यन्ते इति वचनाद्द्वितीयैकवचने न भवत्येनदादेशः । 'अवृत्त्यन्ते' इत्यत्रान्तग्रहणं पृच्छति—**अन्तग्रहणं किमिति । एनच्छ्रितक इति ।** एनं श्रित इति द्वितीयातत्पुरुषः "श्रितादिभिः" ३।१।६२। इत्यनेन, कुत्सितादौ कप् । प्रथमादेशसापेक्षत्वादन्वादेशस्य तत्रासामर्थ्यात् ऋद्धस्य राज्ञः पुरुष इत्यादिवत् समासाभावः, सामर्थ्यात् समासश्चेत्पूर्वकथनसापेक्षस्यान्वादेशस्याभाव इति परस्परविरोधादुभयाभावादादेशाभाव इत्याह—**अर्थात् प्रकरणाद्वेत्यादि ।** अर्थो वा तादृशो भवति प्रकरणं वा येन ताभ्यामेवापेक्ष्यस्य प्रथमादेशस्य निश्चितत्वाद्वृत्तावेवान्तर्भावान्निरपेक्षत्वात् समासो भवति, यथा देवदत्तस्य गुरुकुलमिति । **जिनदत्तमध्यापय एतं च गुरुदत्तमिति ।** नहि पश्चादुच्चारणमात्रमन्वादेशः किन्तर्हि? एकस्यैवाभिधेयस्य

---

[1] पद म० म० ।

न्वादेशः । यत्रापि वस्तुमात्रनिर्देशं कृत्वा विधानं क्रियते तत्रापि न भवति–"ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्यात्०" ॥ ३३ ॥

## इदमः ॥ २ । १ । ३४ ॥

त्यदादीनां संबन्धिन इदमित्यस्य द्वितीयायां टायामोसि च परेऽन्वादेशे एनद् इत्ययमादेशो भवति, अवृत्त्यन्ते । उद्दिष्टमिदमध्ययनमथो एनदनुजानीत, इमकं साधुमावश्यकमध्यापय अथो एनमेव सूत्राणि, अत्र साकोऽप्यादेशः, सुशीलाविमौ तदेनौ गुरवो मानयन्ति, सुस्थिता इमे तदेनान् देवा अपि नमस्यन्ति, अनेन रात्रिरधीता अथो एनेनाहरप्यधीतम्, अनयोः शोभनं शीलमथो एनयोर्महती कीर्तिः, सर्वाणि शास्त्राणि ज्ञातवन्ताविमौ अथो एनयोस्तिष्ठतोर्नान्यः पूजार्हः । द्वितीयाटौसीत्येव ? मत्पुत्रकौ शीलवन्ताविमकौ तिष्ठतः । अवृत्त्यन्त इत्येव ? अथो परमेम पश्य, वृत्त्यादौ तु भवत्येव–एनमेनां वा श्रित एनच्छ्रितकः । अन्वादेश इत्येव ? चैत्रमध्यापय इमं च मैत्रम्, यत्रापि वस्तुमात्रनिर्देशं कृत्वा किञ्चिद्विधीयते तत्रापि न भवति–अयं दण्डो हरानेन फलानि । केचित्त्विदम आदेशमेनम् इति मकारान्तं द्वितीयैकवचने आहुः, तन्मते–इदं कुण्डमानयाथो एनं परिवर्तयेत्येव भवति । योगविभाग उत्तरार्थः ॥ ३४ ॥

## अव्यञ्जने ॥ २ । १ । ३५ ॥

इदम इति षष्ठ्यन्तमपि सर्वादेशार्थं प्रथमान्ततयेह विपरिणम्यते, त्यदादिसंबन्धीदम्शब्दो व्यञ्जनादौ स्यादौ परेऽन्वादेशे गम्यमानेऽद् भवति; अवृत्त्यन्ते । तकार उच्चारणार्थः । इमकाभ्यां शैक्षकाभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतम्, इमकैः शैक्षकै रात्रिरधीता अथो एभिरहरप्यधीतम्, एवमिमकस्मै अथो अस्मै, इमिकस्यै अथो अस्यै, इमकस्मादथो अस्मात्, इमकस्याथो अस्य, इमकेषामथो एषाम्, इमकस्मिन् अथो अस्मिन्, इमिकस्यामथो अस्याम्, इमकेषु अथो एषु; इमिकासु अथो आसु । सौ तु परत्वादयमाद्यादेशः–अथो अयं शीलवान् । केचिदेतदोऽपीच्छन्ति–एताभ्यां छात्राभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतम्, एवमेतैः, एभिः, एतस्मै, अस्मै इत्यादि । अन्वादेश इत्येव ? इमकस्मै देहि । अवृत्त्यन्त इत्येव ? अथो परमेमकाभ्यां रात्रिरधीता । व्यञ्जन इति किम् ? अथो इमके तिष्ठन्ति । उत्तरत्र "अनक्" ॥ २ । १ । ३६ ॥ इति वचनादिह साक एव विधिः ॥ ३५ ॥

---

पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनमन्वादेशस्तेनेह न भवतीत्यर्थः । यथैव "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं
विद्याद्" इति, अयं दण्डो हरानेनेत्यत्र प्राप्नोति, नैवम्, यत्र किञ्चिद्विधाय वाक्यान्तरे पुनरुपदिश्यते सोऽन्वादेशः । अत्र तु वस्तुमात्रानुवादेन वेदन-
क्रिया प्रति आकारस्य कर्मभावो दण्डस्य तु हरणक्रियां प्रति करणत्वं विधीयते इत्येकमेव विधानं न विधानान्तरमस्तीत्याह–यत्रापि इत्यादि ॥३३॥

इदमः । "टौस्यनः" २।१।३७, "दो मः स्यादौ" २।१।३९। इति च प्राप्तेऽयमारम्भः । अत्र अन्वादेशे इति त्यदामेनद् द्वितीयाटौ-
स्यवृत्त्यन्ते इति चानुवर्तते । त्यदामिदमो द्वितीयाटौसि अन्वादेशे एनद् अवृत्त्यन्ते इत्यन्वयस्तदर्थमाह––त्यदादीनामित्यादि । अत्रोदाहरणानि
प्रत्युदाहरणानि च पूर्वानुसारेण बोद्धव्यानि । केचित्त्विति । अस्य च मतस्य सर्वसम्मतेरभावादुपेक्षणीयत्वमित्युक्तम्––तन्मते इति । तस्यैव
मतेनान्यस्येत्यर्थः । केचित्त्विति–पाणिनिप्रभृतय इत्युक्तं लघुन्यासे । वस्तुतस्त्वापातत एव "द्वितीयाटौस्स्वेनः" पा० २।४।३४। सूत्रपर्यालोचनया
पाणिनिमतप्रतीतावपि एनदिति नपुंसकैकवचने वक्तव्यमिति अन्वादेशे नपुंसके एनद्वक्तव्य इति च भाष्यवार्तिकविचारणया तन्मतेन अन्यस्य
मतमिदं सम्भाव्यते । ननु 'त्यदामेनदेतदिदमो द्वितीयाटौस्यवृत्त्यन्ते' इत्येकयोगेनैव सिद्धत्वात् योगविभागः किमर्थं इत्याह––योगविभाग
उत्तरार्थः इति । उत्तरसूत्रेष्विदम एवानुवृत्तिर्यथा स्यात्, न त्वेतद इत्येवमर्थः । एतदिदम इति ह्युच्यमाने पृथगभिधानं नास्तीत्यु-
भयोरप्यनुवृत्तिः स्यात् ॥ ३४ ॥

अव्यञ्जने । ननु पूर्वसूत्रे इदमः षष्ठ्यन्तत्वात् "षष्ठ्या अन्त्यस्य" इति न्यायादन्त्यस्यैव प्राप्नोति कथं सर्वस्यायमादेश इति ? न च
अदित्यकारकरणात् सर्वस्यायमादेशोऽन्यथा "आद्वेरः" इत्यकारे "लुगस्यादेत्यपदे" इति पूर्वस्य लुकि अकारस्याकारकरणमनर्थकं स्यादिति वाच्यम्,
यथा "सम्राट्" इत्यत्रानुस्वारलक्षणकार्यान्तरबाधनार्थं मकारस्य मकारकरणं तथाऽत्रापि आभ्यामित्यादौ दीर्घत्वादिकार्यान्तरबाधनार्थमकारस्या-
कारकरणमिति चेदाह–इदम इत्यादि । अत एव कार्यी निमित्तं कार्यमिति निर्देशक्रमे प्राप्ते निमित्तात् पूर्वं कार्यनिर्देशः । अथवा "अनक्" इत्युत्तर-
सूत्रे प्रथमान्तविशेषणोपादानादिदमः प्रथमान्ततया विपरिणामोऽवसीयते । त्यदाम् इति इदम इति अन्वादेशे इति अवृत्त्यन्ते इति चानुवर्तते ।
स्यादावित्यधिकृतं व्यञ्जने इत्यनेन विशिष्यते, तथा च "सप्तम्या आदिः" इत्यादिसंप्रत्ययः । त्यदामिदम् व्यञ्जनादौ स्यादौ अन्वादेशे अद् अवृत्त्यन्ते
इत्यन्वयस्तदर्थमाह––त्यदादिसंबन्धीदम्शब्द इत्यादि । तकार उच्चारणार्थः इति । तकारमन्तरेणाकारस्य प्रथमायां सौ "सो रु"रित्यादौ
कृते ओ इति वैरूप्यात् स्वरूपेणोच्चारयितुमशक्यत्वात् तकार उच्चारणार्थो भवति । इमकाभ्यां शैक्षकाभ्यां रात्रिरधीता इत्यादि ।
शिक्षाया भवौ इत्यणि, तौ अनुकम्पितौ इति कपि–शैक्षकौ, अथवा–शिक्षामधीयाते "पदक्रमशिक्षा०" ६।२।१२६। इति के, शिक्षकावेवेति
प्रज्ञादित्वादणि वृद्धौ–शैक्षकौ, ताभ्यां यथासंभवं स्त्रियां पुंसि नपुंसके च द्रष्टव्योऽयमादेशः । ननु सेरपि व्यञ्जनादित्वात्तस्मिन् कथं नायमादेश
इत्याह––सौ त्वित्यादि । अयमाद्यादेश इति । "अयमियं०" २।१।३८। इत्यनेनेति शेषः । केचिदिति । चान्द्रभोजक्षीरस्वामिप्रभृतयः ।
एतदोऽपीच्छन्तीति । अदादेशमिति शेषः । नन्विदं किमर्थं ? यावतोत्तरसूत्रेणान्वादेशेऽनन्वादेशेऽप्यदादेशः सिद्ध इत्याह––उत्तरत्रेत्यादि ।
अनगिति वचनादकसहितस्य तेनादेशाभावादित्यर्थः ॥ ३५ ॥

## अनक् ॥ २ । १ । ३६ ॥

अन्वादेश इति निवृत्तम्, पृथग्योगात्[1] । त्यदादिसंबन्धिनि व्यञ्जनादौ स्यादौ परेऽग्वर्जित इदम् अद् भवति । आभ्याम्, एभिः, आभिः, अस्मै, अस्यै; अस्मात्, अस्याः; अस्य, अस्याः; एषाम्, आसाम्, अस्मिन्, अस्याम्; एषु, आसु । अनगिति किम्? इमकाभ्याम्, इमकेभ्यः, इमकस्मै, इमिकस्यै, इमकेषाम्, तत्सबन्धिविज्ञानादिह न भवति–अतीदभ्याम्, अतीदंसु, प्रियेदभ्याम्; प्रियेदंसु; इह तु भवति–परमाभ्याम्, परमैभिः, परमैभ्यः, परमास्मै, परमास्यै, परमास्मात्, परमास्याः; अत्र पूर्वोत्तरयोः पदयोः पूर्व कार्ये कृते पश्चात् सधिकार्यम्, एतच्च "आतो नेन्द्रवरुणस्य" ॥ ७ । ४ । २९ ॥ इत्यत्र ज्ञापयिष्यते । अभेदनिर्देशः सर्वादेशार्थः ॥ ३६ ॥

## टौस्यनः ॥ २ । १ । ३७ ॥

त्यदादिसंबन्धिनि टायामोसि च परेऽग्वर्जितस्येदमः स्थाने अन इत्ययमादेशो भवति । अनेन, अनया; अनयोः स्वम्, अनयोर्निधेहि, परमानेन, परमानयोः । त्यदादिसवन्धिविज्ञानादिह न भवति–अतीदमा, अतीदमोः, प्रियेदमा, प्रियेदमोः । अनक् इत्येव? इमकेन, इमिकया; इमकयोः, इमिकयोः ॥ ३७॥

## अयमियं पुंस्त्रियोः सौ ॥ २ । १ । ३८ ॥

त्यदां संबन्धिनि सौ परे पुंलिङ्गस्त्रीलिङ्गयोरिदमः स्थाने यथासंख्यमयम् इयमित्येतावादेशौ भवतः । अयं पुमान्, इयं स्त्री, परमायम्, अनयम्, परमेयम्, अनियम् । साविति किम्? इमौ, इमे । त्यदादिसंवन्धिविज्ञानादिह न भवति–अतीदम् पुमान् स्त्री वा, एवं प्रियेदम् । पुंस्त्रियोरिति किम्? पुंसि इयम्, स्त्रियामयम् मा भूत् । नपुसके तु नित्यत्वात् प्रथममेव सेर्लुपि इद कुण्डमित्यत्र प्रसङ्ग एव नास्ति । साकोऽप्ययमियमादेशौ भवतः–अयम्, इयम्, अन्ये त्वादेशे कृते पश्चादकमिच्छन्ति–अयकम्, इयकम् ॥ ३८ ॥

---

**अनक्** । **अन्वादेश इति निवृत्तम्, पृथग्योगात्** इति । पृथक् सूत्रारम्भादिति भाव, अन्यथा साकोऽनकोऽप्यन्वादेशे पूर्वसूत्रेणैव सामान्यविधानेन सिद्धत्वात् सूत्रारम्भवैयर्थ्यमिति । त्यदामिति व्यञ्जने इति स्यादाविति अद् इति इदम इति चानुवर्तते । त्यदामिति व्यञ्जनादौ स्यादावित्यनेनाभिसबध्यते, अनक् इति इदम इत्यनेन प्रथमान्ततया विपरिणतेन। त्यदाम् व्यञ्जनादौ स्यादौ अनक् इदम् अदित्यन्वयस्त-दर्थमाह–**त्यदादिसंबन्धिनी**त्यादि। **आभ्यामि**त्यादि। एतेषु भ्यामि भिसि चतुर्थ्येकवचनस्य स्मायादेशे च व्यञ्जनादित्वादनेनादेश । 'नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इत्याबन्तस्यापि प्राप्तिरित्यापि कृते ङितां यायाद्यादेशेऽनेनादादेशे सर्वादित्वात् ङसि अन्त्यस्वरादिलोपे च—अस्यै इत्यादि । **इमकाभ्यामि**त्यादि । अत्र कुत्सितादावर्थे परत्वात् अन्त्यस्वरात् पूर्वमकि इदकम् इति स्थिते "अनक्" इति वचनादत्रादादेशाभावे "आद्वेर" इति मकारस्यात्वे "लुगस्यादेत्यपदे" इति पूर्वस्य लुकि "दो म ०" इति दकारस्य मत्वे यथासभवमात्वमेत्त्व च । नन्विदम् इत्यधिकारा-दिदमूरूपस्य विधिस्तत्राकि कृते इदमूरूपस्याभावादेव न भविष्यति किं प्रतिषेधेन इति चेत्, सत्यम्, 'तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणाद्' इति न्यायेन प्राप्नोतीति प्रतिषेध उच्यते । **तत्संबन्धिविज्ञाना**दिति । अतीदभ्यामित्यादौ "प्रात्यवपरिनिरादयो०" ३।१।४७। इति समासे इदम्-शब्दार्थस्याप्रधानत्वात् स्यादेस्तत्संबन्धित्वाभावात् न भवत्यदादेश । परमाभ्यामित्यादौ तु विशेषणसमासे इदम्शब्दार्थस्यैव विशेष्यतया प्राधान्यात्तत्सबन्धित्वमिति स्यादेवादेश इति । ननु परमाभ्यामित्यादौ परादप्यदादेशात् सति समासे स्याद्युत्पत्तिसापेक्षत्वेन बहिरङ्गादन्तरङ्गे "अवर्णस्ये०" इत्येदादेशे कृते पश्चादिदमूरूपाभावाददादेशाभाव प्राप्नोतीत्याह—**अत्र पूर्वोत्तरयो. पदयोरि**त्यादि । **एतच्चे**ति । आमेन्द्रम् सूक्तमित्यत्र "आतो नेन्द्रवरुणस्य" ७।४।२९। इति अवर्णान्तात् पूर्वपदात् परस्य इन्द्र इत्यस्योत्तरपदस्य "देवतानामात्वादौ" ७।४।२८। इति प्राप्ताया वृद्धे प्रतिषेध आरभ्यते, तत्र यद्यन्तरङ्गत्वात् "अवर्णस्ये०" इत्येकादेश एकार स्यात् तदाऽवर्णवर्णयोरभावाद्वृद्ध्यसम्भवादिन्द्रप्रतिषेधोऽनर्थक स्यादिति भाव । ननु अनगिति इदम पूर्वत्र षष्ठ्यन्तनिर्दिष्टस्य विशेषणत्वात् कथ कार्येणाभेदनिर्देश इत्याह—**अभेदनिर्देश** इति । अनक् इदम् इति अद् इति च कार्यकार्यिणोरेकविभक्तिनिर्देश इति भाव । **सर्वादेशार्थ** इति। अग्वर्जितस्य सर्वस्येदम स्थानेऽदादेशो यथा स्यादित्येवमर्थ ॥३६॥

**टौस्यनः** । अत्र त्यदामिति अनगिति इदम इति चानुवर्तते । त्यदां टौसि अनक इदम अन इत्यन्वयस्तदर्थमाह—**त्यदादिसंवन्धि-नी**त्यादि। **अनेने**त्यादि । एतेषु इदमोऽनादेशे टाया इनादेशे ओस्येत्त्वं च, स्त्रियां तु अनादेशे टायामोसि च "टौस्येत्" १।४।१९। इति एत्त्वम् । शेष पूर्वानुसारेण बोद्धव्यम् ॥ ३७ ॥

**अयमियं पुंस्त्रियोः सौ** । अत्र त्यदामिति इदम इति चानुवर्तते । त्यदा सौ पुंस्त्रियोरिदमोऽयमियमित्यन्वय । अयमियमिति लुप्त-प्रथमाद्विवचनान्त पदम् । पुंस्त्रियोरिति "पुंस्त्रियो स्मौजस्" इतिवदलौकिको निर्देश । अन्वयार्थमाह—**त्यदां सबन्धिनि सावि**त्यादि । **अयमि**त्यादि । एतेषु इदमर्थप्राधान्यात्त्यदादिसबन्धिनि सावनेन यथासख्य पुंसि अयमादेशे स्त्रियामियमादेशे सति "दीर्घङ्याब्व्यञ्जनात्०" इति सिलोप । नन्वत्रादेशे कृतेऽन्त्यमकारस्य "आद्वेर" इत्यत्व कथ न भवतीति चेत्, सत्यम्, अनेकवर्णत्वात् सर्वस्यादेशौ इत्यादेशावयवमकारस्य विधानसामर्थ्यात् "आद्वेर" इत्यत्व न भवति । ननु पुंस्त्रियोरिति किमर्थम्? नपुसके नित्यत्वात् "अनतो लुप्" इति सेर्लुपि "लुप्यय्वृल्लेनत्" इति स्थानिवद्भावप्रतिषेधात् सेरभावादादेशप्राप्तेरसम्भवात् पुंस्त्रीलिङ्गयोरेवैतावादेशौ भविष्यत इत्याह—**पुंस्त्रियोरिति किमि**त्यादि । अयमर्थ — पुंस्त्रियोरित्युपादानमन्तरेणानियमेन द्वयोरपि लिङ्गयोर्द्वावप्यादेशौ प्राप्नुत इति । **नपुंसके त्विति** । तुशब्दो यस्मादर्थे । **अन्ये त्विति** । आचार्य-पाणिनिप्रभृतय । ते हि पुंसि इदम इदययवस्यादेश स्त्रियां च दस्य यत्त्व च विदधति, ततोऽकच्, यदाह–भट्टोजिदीक्षित- सि०कौ०हलन्तपुं० प्रकरणे–ककारयोगे तु अयकमिति । **पश्चादकमिच्छन्ती**ति । "त्यादिसर्वादे ०" ७।३।२९। इति "अयमिय०" इति च द्वयोर्नित्यत्वात् परत्वा-भावादपवादत्वात् अयमियमिति चादेशे कृते पश्चादकि सेरभावात् पुनरादेशाभावेऽकश्रवणमिच्छन्तीत्यर्थ ॥ ३८ ॥

---

१ पृथग्योग उत्तरार्थ. म० म० ।

## दो मः स्यादौ ॥ २ । १ । ३९ ॥

त्यदां संवन्धिनि स्यादौ परत इदमो दकारस्य मकारादेशो भवति । इमौ, परमेमौ, इमे, इमम्, इमौ, इमान्, इमकौ, इमकेन, इमकाभ्याम् । त्यदादिसवन्धिविज्ञानादिह न भवति–अतीदमौ, प्रियेदमौ ॥ ३९ ॥

## किमः कस्तसादौ च ॥ २ । १ । ४० ॥

त्यदादिसंवन्धिनि स्यादौ तसादौ च प्रत्यये परे किम्शब्दस्य स्थाने क इत्यकारान्त आदेशो भवति । कः, कौ, के; कम्, कौ, कान्, केन, काभ्याम्, कैः । स्त्रियाम्—का, के, काः; काम्, के, काः । नपुंसके—किम्, के, कानि; परमकः, परमकौ, अकः, अकौ, साकोऽपि–कः, कौ; तसादौ–कदा, कर्हि । तसादौ चेति किम्? किं तिष्ठति, किं पश्य, किंतराम् । त्यदादिसवन्धिविज्ञानादिह न भवति–अतिकिम्, अतिकिमौ, अतिकिमः, प्रियकिम्, प्रियकिमौ, प्रियकिमः । आदिशब्दस्य व्यवस्थावाचित्वात्तसादयस्थमवसाना ग्राह्याः ॥ ४० ॥

## आ द्वेरः ॥ २ । १ । ४१ ॥

द्विशब्दमभिव्याप्य त्यदादीनामन्तस्य तत्संबन्धिनि स्यादौ तसादौ च प्रत्यये परेऽकार आदेशो भवति । स्यः, त्यौ, त्ये; सः, तौ, ते, यः, यौ, ये, असू, अमी, इमौ, इमे, एषः, एतौ, एते, एकः, एव द्वौ, त्यकौ, परमत्यौ, स्त्रियां–त्या, त्ये, त्याः; द्वे । नपुसके–त्ये, त्यानि, द्वे । तसादौ–ततः, तत्र, तथा, तर्हि, यतः, यत्र, यदा, यथा । त्यदादिसंबन्धिविज्ञानादिह न भवति–अतितद्, अतितदौ, अतितदः, प्रियतद्, प्रियतदौ, प्रियतदः । आ द्वेरिति किम्? भवान् ॥ ४१ ॥

---

**दो मः स्यादौ** । अत्र त्यदामिति इदम इति चानुवर्तते । त्यदां स्यादौ इदमो दो म इत्यन्वयस्तदर्थमाह—**त्यदां सवन्धिनी**त्यादि । स्याद्यधिकारे स्यादावित्युपादानात् स्यादिरेवानुवर्त्तते न किंचित्तद्विशेषणमित्याह—**स्यादा**विति । **इमा**वित्यादि । इदम्–औ इति स्थिते "आद्वेर" इति मस्याकारे "लुगस्यादेत्यपदे" इति पूर्वाकारलुकि दस्यानेन मत्वे चौत्वम् । एवमन्यदपि । ननु मकारस्य मकारकरणवैयर्थ्यात् "आद्वेर" इत्यत्वप्रवृत्तेश्च व्यञ्जनत्वेन स्वरस्यानासन्नत्वादेकवर्णत्वेनान्तस्य भवन्नपि सामर्थ्याद्युपात्तस्य दकारस्यैव भविष्यति किं द इति ग्रहणम्? इति चेत्, उच्यते–कार्यान्तरबाधनार्थं सम्राडित्यादिवत्, अथवा मकारस्याभेदनिर्देशेन "अव्यञ्जने" इतिवत् सर्वस्यापि स्यादिति दग्रहणम् ॥ ३९ ॥

**किमः कस्तसादौ च** । अत्र त्यदामिति स्यादाविति चानुवर्त्तते । त्यदा स्यादौ तसादौ च किम क इत्यन्वयस्तदर्थमाह—**त्यदादिसंवन्धिनी**त्यादि । क इत्यस्य कार्यत्वान्निमित्तात्पश्चान्निर्देशे प्राप्ते पूर्वमनिर्देश 'किम क स्यादौ तसादौ च' इति तत्र भेदज्ञापनार्थं, तेन स्वस्थान एव चकारसंवन्ध इत्याह—**स्यादौ तसादौ चे**ति । तेन प्राधान्याद् द्वयोरुत्तरत्रानुवृत्ति । क्रमेण स्यादौ लिङ्गत्रयेऽप्युदाहरति—**क** इत्यादि । तदन्तस्यापि स्वसम्बन्धिन्युदाहरति—**परमक** इत्यादि । *'तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्'* आह—**साकोऽपी**ति । किम क इतिशेष । अज्ञात क इति विग्रहे "त्यादि सर्वादे ०" इत्यकि–**क** इत्यादि । कस्मिन् काल इति विग्रहे "कियत्तत्सर्वैकान्यात्०" ७।२।९५। इति दाप्रत्यये–**कदा** इति । अत्र तसादौ प्रत्ययेऽनेन किम क । एव "अनद्यतने र्हि" ७।२।१०१। इति र्हौ–**कर्हि** । इदमनयो प्रकृष्ट किमिति "द्वयोर्विभज्ये च तरप्" ७।३।६। इति तरपि, "किंत्याद्येऽव्ययादसत्त्वे तयोरन्तस्याम्" ७।३।८। इत्यामि स्यादेस्तसादेश्चाभावादादेशाभावे–**किंतरामि**ति । ननु "किम क" इति गुरुकरण किमर्थं? 'आद्वेरस्तसादौ च' इति कृत्वा 'इम' इत्येव सूत्र्यताम्, न चैव सति 'किम' 'तीमच्', 'ष्टिम' 'ष्टीमच्' आद्यभावे इत्यस्य क्विबन्तस्य स्यादौ प्रसङ्ग इति वाच्यम्, त्यदादिविशेषणात् त्यदादीनां य इमिति व्याख्यानेनादोषात्, नापि "दो म ०" इति दस्य मत्वे कृते इदम इममिमावित्यत्र प्रसज्यते, *'लक्षणप्रतिपदोक्त०'* परिभाषाश्रयणात् । न चैकवर्णत्वादन्त्यस्य स्यादिति वाच्यम्, 'नानर्थके तदन्तविधि' इत्याश्रयणादिति । यद्वाऽभेदनिर्देशात् सर्वस्यापीमोऽकारादेशे न कश्चिद्दोष इति चेत्, मैवम्, साकोऽपि यथा स्यादित्येवमर्थं गुरुकरणम् । **आदिशब्दस्ये**ति । तसादावित्यत्र कृतोपादानस्यादिशब्दस्येति भाव । **व्यवस्थावाचित्वादि**ति । व्यवस्था–मर्यादा, सा च शास्त्रे पूर्वाचार्यकृतो नियमस्तेन थमवसानपरिग्रहात् किंतरामित्यादौ तदुत्तरेषु न भवति ॥ ४० ॥

**आद्वेरः** । अत्र त्यदामिति स्यादौ तसादौ चेति वर्तते । आद्वेस्त्यदा तसादौ च अ इत्यन्वय । आद्वेरित्यवधौ पञ्चमी, अवधिश्चाभिव्याप्तिरित्याह—**द्विशब्दमभिव्याप्ये**ति । **स्य** इत्यादि । एतेष्वन्त्यस्याकारे द्वयोरकारयो "लुगस्यादेत्यपदे" इति यथासम्भव पूर्वस्य लुकि "त सौ स" इति सौ तकारस्य सत्वम् । त्यदामित्यनुवर्त्तनात्तस्य च स्यादावित्यस्य विशेषणत्वात्तत्संवन्धिविज्ञानात् अतितदित्यादौ अतत्संवन्धिनि स्यादौ न भवतीत्याह—**त्यदादी**त्यादि । **भवानि**ति । उदित्वात् "ऋदुदित" इति नागमे "अभ्वादे ०" इति दीर्घत्वे "पदस्य" इति तकारलोप । ननु आद्वेरिति किमर्थम्? अस्मदन्तानां भवदन्तानां वा मा भूदिति । केषांचिद्युष्मद्भवतु अस्मदिति पाठ , केषांचित् युष्मदस्मद्भवत्विति पाठस्तदपेक्षयैतदुक्तम्, किम्शब्दस्य तु कादेशविधानात् प्रसङ्ग एव नास्ति । केचित्तु द्विशब्दात् पूर्वं किंशब्दमधीयते, तेन "किमद्यादिसर्वाद्यवैपुल्यवह्वोपित्तस्" ७।२।८९। इति किम्शब्दोपादान न विधेयम् । तन्न सत्यपि द्विशब्दात् परत शब्दचतुष्टयस्य पाठे भवच्छब्दस्यैवात्वापत्तिर्दोषो न किं युष्मदस्मदाम्, किम कादेशेन युष्मदस्मदोरात्वयत्वलोपैरत्वस्य बाधितत्वात् । नैषोऽस्ति दोष –यदय त्यदादीनामत्वे सिद्धे "शेषे लुक्" शास्ति तज्ज्ञापयति नेत प्रागकार इति, नैवम्, उपसर्जनार्थत्वात्तस्य ज्ञापने सामर्थ्याभावात् । तथ ह्युपसर्जनाना त्यदाद्यत्वाभावादुपसर्जनयुष्मदस्मदर्योलोप स्यात्–त्वामतिक्रान्ता मामतिक्रान्ता ये तेभ्योऽतित्वभ्य, अतिमभ्यमिति । किं चाऽत्वे सत्याप्रसङ्गात्तदभावार्थं "शेषे लुगिति" अन्त्यस्वरादिलोपो बोद्धव्य । नन्वेष तर्ह्यन्तस्वरादिलोपो वक्तव्य , न चात्वेन सिद्धत्वाद्वचनादेवान्त्यस्वरादिलोपो भविष्यतीति वाच्यम्, उपसर्जनस्यात्वासिद्धेरुपसर्जनार्थत्वात्तस्येति चेत्, न वक्तव्य , शेषग्रहणादेवास्यार्थस्य लब्धत्वात् । तथाहि–लोपमुत्सर्गं विधाय व्यञ्जनादावात्व टाद्योसि च यत्वमपवादो विधास्यत इति शेषग्रहणमनर्थक तत् क्रियमाण लोपस्य विषयार्थं स्यात्, तेन मान्तायोऽन्य स शेष स चान्त्यस्वरादिरेव । तस्य लोपः शेषे इति लोपस्य स्थान विषयसप्तम्या निर्दिष्टम् । एम तर्हि "किम कस्त०" इति ज्ञापकाद्विपर्यन्तानामेव ग्रहण भविष्यति, तथाहि–"किमद्व्यादि-

---

१ च XXX परे म० म० । २ XX म० म० । ३ त्यदा पु० । ४ °किम् म० म० ।

## तः सौ सः ॥ २ । १ । ४२ ॥

आद्वेस्त्यदादीनां संबन्धिनि सौ परे तकारस्य सकारादेशो भवति । स:, स्या, स्यकः, परमस्यः; सः, सा, सकः, परमसः; एषः, एषा, एषकः, परमैषः, हे स!, हे परमस!, हे परमैष! । त इ इति किम्? यः । साविति किम्? त्यद्, तद्, त्यौ, तौ । त्यदादिसंबन्धिविज्ञानादिह न भवति–प्रियत्यद्, प्रियैतत् पुमान् । आ द्वेरित्येव? भवती ॥ ४२ ॥

## अदसो दः सेस्तु डौ ॥ २ । १ । ४३ ॥

त्यदादिसंबन्धिनि सौ परेऽदसो दकारस्य सकारादेशो भवति, सेस्तु डौः । असौ, असकौ; हे असौ, हे असकौ विद्वन्; असौ, असकौ स्त्री, हे असौ!, हे असकौ स्त्रि । सावित्येव? अदः, अमू । त्यदादिसंबन्धिविज्ञानादिह न भवति–अत्यदाः । डित्करणमन्त्यस्वरादिलोपार्थम्, तेन–"औता" ॥ १ । ४ । २० ॥, "एदापः" ॥ १ । ४ । ४२ ॥, "दीर्घङ्याब्व्यञ्जनात् सेः" ॥ १ । ४ । ४५ ॥, "अस्यायत्तत्क्षिपकादीनाम्" ॥ २ । ४ । ११० ॥ इति कार्याणि न भवन्ति, अन्यथा सेस्त्वौरित्येव क्रियेत ॥ ४३ ॥

## असुको वाऽकि ॥ २ । १ । ४४ ॥

त्यदादिसंबन्धिनि सौ परेऽदसोऽकि सत्यसुक इति दस्य सः सकारात् परस्याकारस्योकारः सेश्च डौत्वाभावो

---

सर्वादीति" किम्शब्दस्य भेदेनोपादानाद्द्विशब्दात्पर किम्शब्द सर्वादौ पठ्यत इति निर्णय । यदि च द्विशब्दात् परेषामत्वं स्यात् किम क न विदध्यात्, किन्तु "आद्वेर" इत्यनन्तरं 'किम' इत्येव ब्रूयात् । पूर्वसूत्रादकारस्यानुवृत्त्या पूर्वेणान्त्यस्यात्वे तत्रोक्तानुवाददोषात् 'अन्त्याभावेऽन्त्यसदेशस्यापि ग्रहणात्' अनेन त्विकारस्य न तु ककारस्येति द्वयोरकारयो "लुगस्यादेत्यपदे" इति पूर्वस्य लुकि क इति सिद्धमित्यादेशविधान प्रकृतार्थज्ञापनाय भवति । ननु तथापि कुत एतज्ज्ञापक, किम इत्येवोच्यमानेऽन्त्यस्य मकारस्य पूर्वेणाकारे तस्यैव पुनरनेनापि स्यात्, न चोक्तानुवाददोषादन्त्यस्य न भविष्यतीति वाच्यम्, काभ्यां केभ्य इति विध्यन्तरबाधनार्थत्वादिति कथ द्विपर्यन्तानां भविष्यति न पुनरसदन्ताना भवदन्ताना वा । किंचाऽवश्य कादेश सार्थोऽपि वक्तव्य, तेनाऽज्ञातार्थविवक्षायां क इत्येव भवति, न तु कक इति भवति । न च 'निर्दिश्यमानस्यादेशा भवन्तीति' साक कादेशो न प्राप्नोतीति वाच्यम्, "किम क" इति वचनसामर्थ्याद् भविष्यति, तस्माद्द्विपर्यन्तानां यथा स्यादित्येवमर्थं "आद्वेरिति" वचनं स्थितम् ॥ ४१ ॥

**त. सौ सः ।** आद्वेरिति त्यदामिति चानुवर्त्तते । आद्वेस्त्यदा सौ तः स इत्यन्वयस्तदर्थमाह—**आद्वेस्त्यदादीनामित्यादि । भवती** इति । पुंसि तकारस्य सकारे "पदस्य" इति लोपे विशेषाभावात् स्त्रियामुदाहृतम् ॥ ४२ ॥

**अदसो दः सेस्तु डौः ।** अत्र त्यदामिति साविति स इति च वर्त्तते । त्यदां सौ अदसो द स, सेस्तु डौरित्यन्वयस्तदर्थमाह—**त्यदादीत्यादि ।** द इति षष्ठ्यन्त कार्यिपद, अदस इति तद्विशेषणमित्याह—**अदसो दकारस्येति ।** अदस् स् इति स्थितेऽनेन दस्य सत्वे सेर्डौवादेशे च "डित्यन्त्यस्वरादे" इत्यन्त्यस्वरादिलोपे—**असौ । असकाविति ।** अदस्शब्दात् "त्यादिसर्वादे ०" इत्यकि अदकस् स् इति स्थितेऽनेन दस्य सत्वे सेर्डौवादेशे चान्त्यस्वरादिलोपे रूपम् । नन्वदस इति किमर्थम्? पारिशेष्यात् अदस एव दकारस्य सकारो भविष्यति । अष्टौ हि त्यदादयस्तत्र चतुर्णामन्त्यो दकार, त्रयाणा त्वनन्त्यस्तत्र "सास्य पौर्णमासी" ६।२।९८।, "सोऽस्य मृतिवन्नाशम्" ६।४।१६८। इत्यादिज्ञापकादन्त्यदकारस्य न भविष्यति । किं चान्त्यदकारस्य सकारेऽपि "डित्यन्त्यस्वरादे" इत्यन्त्यस्वरादिलोपे विशेषाभावात् सकारकरणमनर्थकं स्यात् । न चानन्त्यस्य भवच्चिदमोऽपि स्यादिति वाच्यम्, "अयमियं पुंस्त्रियो सौ" इत्यशेषस्य विधानादयमियमोस्तत्र बाधकत्वात् । द्विशब्दस्य च द्विस्वार्थविषयत्वात् सेरभावादप्रसङ्ग इति चेत्, न, ज्ञापकोपन्यासस्य तद्विषयस्यैव दर्शनात्तस्य च स्वविषय एव चरितार्थत्वात् सर्वोद्देशेनाप्रवृत्ते । तस्मात्त्यद्तद्यदेतदामन्त्यदकारस्य सकार स्यात्, अदस एव यथा स्यादन्यस्य मा भूदित्येतदर्थमदस्ग्रहणम् । नन्वेव यद्यदस एव दस्य सत्व

वा निपात्यते । असुकः, असकौ; हे असुक!, हे असकौ!; असुका, असकौ स्त्री। केचित्तु असुकसिति सान्तं सिना सह निपातयन्ति ॥ ४४ ॥

## मोऽवर्णस्य ॥ २ । १ । ४५ ॥

अवर्णान्तस्य त्यदादिसंबन्धिनोऽदसो दकारस्य मकार आदेशो भवति । अमू नरौ, स्त्रियौ, कुले वा, अमी नराः, अमूः स्त्रियः, अमूनि कुलानि, अमु नरम्, अमूं स्त्रियम्, अमूः स्त्रीः, अमून् नरान्, अमूनि कुलानि, अमुकौ नरौ, अमुके स्त्रियौ कुले वा, परमामुम्, अमूदृक्, अमूदृशः; अमूदृक्षः । अत्र "अन्यत्यदादेराः" इत्यात्वे सत्यवर्णान्तत्वम् । अवर्णस्येति किम्? अदः कुलम्, अदस्यति ॥ ४५ ॥

## वाऽद्रौ ॥ २ । १ । ४६ ॥

अदसोऽद्रावन्ते सति दकारस्य मकारो वा भवति, द्वावत्र दकारौ तत्र विकल्पे सति चातूरूप्यं भवति–अदमुयङ्, अमुद्र्यङ्, अमुमुयङ्, अदद्र्यङ्; तदाह–"परतः केचिदिच्छन्ति, केचिदिच्छन्ति पूर्वतः । उभयोः केचिदिच्छन्ति, केचिदिच्छन्ति नोभयोः" ॥ १ ॥ ४६ ॥

## मादुवर्णोऽनु ॥ २ । १ । ४७ ॥

अदसः सबन्धिनो मकारात् परस्य वर्णमात्रस्योवर्ण आदेशो भवति, अनु–पश्चात्कार्यान्तरेभ्यः, आसन्नत्वात् मात्रिकस्य स्थाने मात्रिकः, द्विमात्रस्य द्विमात्रः; त्रिमात्रस्य त्रिमात्रः । अमुम्, अमू, अमू३ इति; "प्रश्ने च प्रतिपदम्" ॥ ७ । ४ । ९८ ॥ इति प्लुतः । अमुमुयङ्, अमुमुईचः, अदमुईचः, अदमुईचा, "अदो मुमी" ॥ १ । २ । ३५ ॥ इति सन्धिप्रतिषेधः । अन्विति किमर्थम्? अमुष्मै, अमुष्मात्, अमुष्य, अमुष्मिन्, अमूषाम्, अमुया, अमुयोः, इत्यादिषु स्मैप्रभृतिकार्येषु कृतेषूवर्णो यथा स्यादित्येवमर्थम् ॥ ४७ ॥

---

असुक इति । "अदेत स्यमोर्लुक्" इति सेर्लोप । हे असकाविति । पुस्युदाहृतम् । असुका, असकौ इति । स्त्रियामामन्त्र्ये तु हे असुके इति द्रष्टव्यम् । केचित्त्विति । सिना सह निपातनस्य च "अभ्वादेरत्वस" इति दीर्घत्वाभाव फलम् ॥ ४४ ॥

**मोऽवर्णस्य** । त्यदामदसो द इति चानुवर्तते । अवर्णस्येत्यदसो विशेषणात्तदन्तविज्ञानम् । अवर्णान्तस्य त्यदामदसो दो म इत्यन्वय-
स्तदर्थमाह—**अवर्णान्तस्येत्यादि** । **अमू नरौ** इति । अदस् औ इति स्थिते "आद्वेर" इत्यत्वे "लुगस्यादेत्यपदे" इत्यकारलोपेऽवर्णान्तत्वाद-
नेन दस्य मत्वे "ऐदौत्सन्ध्यक्षरै" इत्यौत्वे "मादुवर्णोऽनु" इत्यूत्वे सिध्यति । **अमू स्त्रियौ** इति । अदस् औ इत्यवस्थायां त्यदाद्यत्वेऽकारलुकि
आपि दस्य मत्वे "औता" इत्यौकारेण सहैकारान्तादेशे "मादुवर्णोऽनु" इत्यूत्वम् । **अमू कुले** इति । अत्रात्वेऽकारलुकि "औरी" इतीकारेऽनेन
दस्य मत्वे "अवर्णस्ये०" इत्येत्वे "मादुवर्णोऽनु" इत्यूत्वे रूपम् । **अमी नरा** इति । अदस्शब्दाज्जसि त्यदाद्यत्वेऽकारलुकि दस्य मत्वे, "जस इ"
इतीत्वे, "अवर्णस्ये०" इत्येत्वे, "बहुष्वेरी" २।१।४९। इति तस्येत्वम् । एवमन्यदपि । ननु असाविव दृश्यत इत्यदस परतो दृशे "त्यदा-
द्यन्यसमानादुपमानाद्०" ५।१।१५२। इति क्विपि टकि सकि च स्याद्यभावादत्वाभावे कथं 'अमूदृगि'त्यादौ मत्वमित्याह—अत्र "अन्यत्यदा-
देराः" इत्यादि । अदः कुलमिति । नपुंसकात् सेर्लुपि "लुप्यय्वृल्लेनत्" इति स्थानिवद्भावप्रतिषेधात् स्यादेरभावादत्वाभावेऽवर्णाभाव । ननु
अदः कुलमिच्छतीत्यस्मिन् वाक्ये अदस्शब्दान्नपुंसकादमो लुपि "सो रुः" इति रुत्वे "रोर्य" इति यत्वे "स्वरे वा" इति यलोपेऽवर्णान्तत्वा-
न्मत्वप्रसङ्ग इति चेद्, उच्यते–पदान्तरापेक्षत्वेन यलोपस्य बहिरङ्गत्वात्तदनपेक्षत्वेन मत्वविधेरन्तरङ्गत्वाद् 'असिद्धं बहिरङ्गम्' इति लोपस्यासिद्ध-
त्वेऽनवर्णान्तत्वात् मकाराभाव ॥ ४५ ॥

**वाऽद्रौ** । अदसो दो म इति चानुवर्तते । अदसोऽद्रौ दो मो वा इत्यन्वयस्तदर्थमाह—**अदसो** इत्यादि । अदसोऽवयवस्याद्र्यागमस्य
तद्ग्रहणेन ग्रहणात् तस्मिन् सति अदस इकारान्तत्वादवर्णान्तत्वाभावादप्राप्ते उभयत्र विकल्पे चातूरूप्य संपद्यतेऽत आह–**द्वावत्रेत्यादि** । अयमर्थ –
विकल्पोऽत्रानेकधा संभवति, सामान्याश्रयणाच्च समुच्चितसर्वविकल्पपरिग्रह । विशेषे हि विशेषान्तरं परिह्रियेत न सामान्ये, सर्वात्मकत्वात् सामा-
न्यस्येति । अद पूर्वादञ्चते अदोऽञ्चतीति क्विपि, "सर्वादिविष्वग्देवाड्ड्रिः क्वौ" ३।२।१२२। इति ड्र्यागमे, "अञ्चोऽनर्चायाम्" ४।२।४६। इति
नलोपे, सौ, "अच" १।४।६९। इति नागमे, "पदस्य" इत्यन्तलोपे, "युजञ्च०" २।१।७१। इति नस्य ङकारेऽनेन परस्य पूर्वस्योभयोश्च
क्रमेण मकारे रूपाणि—**अदमुयङ्, अमुद्र्यङ्, अमुमुयङ्, अदद्र्यङ्** इति । एतदेव **तदाहे**त्यनेन दर्शयति—'**परतः**' इत्यादि ॥ ४६ ॥

**मादुवर्णोऽनु** । अदस इत्यधिक्रियते । अदसो मात् उवर्णोऽनु इत्यन्वयस्तदर्थमाह—**अदसः संबन्धिन** इत्यादि । अत्र कार्यि-
विशेषस्यानिर्देशाद् वर्णमात्रपरिग्रह इत्याह—**वर्णमात्रस्येति** । अत्र कार्यस्य विधेयतया प्राधान्यादनुशब्दस्य च पश्चादर्थस्य तद्विशेषणत्वात्
सजातीयकार्यान्तरापेक्षयैव पश्चाद्भाव समवसीत्याह—**पश्चात्कार्यान्तरेभ्य** इति । वर्णमात्रस्य कार्यिण परिग्रहादासन्नत्वात् मात्रिकादे स्थाने
मात्रिकादिरादेश, यत्र चार्धमात्रस्थानी तत्रापि द्विमात्रत्रिमात्रयोरतिविप्रकृष्टत्वात् मात्रिकस्य तु अदूरविप्रकृष्टत्वादासन्नत्वात् स एव भवती-
त्याह—**आसन्नत्वात् मात्रिकस्येत्यादि** । समुदाये प्रवृत्ता अपि शब्दा अवयवेऽपि वर्तन्ते इति मात्राशब्दोऽर्धमात्रायामपि द्रष्टव्य, तेन
अमुमुयङ् इत्यत्र अर्धमात्रिकस्य र स्थाने एकमात्रिक उकारादेशो भवति । अद शब्दादमि औकारे च त्यदाद्यत्वे, "लुगस्या०" इत्यकारलोपे
"मोऽवर्णस्य" इति मत्वे, "समानादमोऽत" इत्यकारलोपे, "ऐदौत्सन्ध्यक्षरै" इत्यैकादेशे, "प्रश्ने च प्रतिपदम्" ७।४।९८। इत्येकत्र प्लुतेऽनेन
मात्रिकाद्युवर्णादेशे—**अमुम्, अमू, अमू३** इति । **अमुमुयङ्** इत्यादि । अत्र शसि ङसिङसोष्टाया च "अच प्राग्दीर्घश्च" २।१।१०४।
इत्यकारापगमे इकारस्य दीर्घत्वम् । नन्वत्र "इवर्णादे०" इति यकार कस्मात् न भवतीत्याह—"**अदो मुमी**" इत्यादि । ननु मत्वे कृते पूर्व
पश्चाद्वा उवर्णादेशे अमुमित्यादीनां सिद्धत्वादनुग्रहण किमर्थमिति पृच्छति—**अन्वित्यादि** । अत्र हि अमुष्मैप्रभृतिषु परत्वान्नित्यत्वात् मकारात्
परस्याकारस्य उवर्णादेशेऽकारान्तत्वाभावात् स्मैप्रभृतीनामभाव स्यादिति भाव. । एतेषु "ङित्यदिति" इत्योत्व न भवति, अदितीत्यत्र नञ-

## प्रागिनात् ॥ २ । १ । ४८ ॥

अदसो मात् परस्य वर्णमात्रस्येनादेशात् प्रागुवर्णो भवति, अन्वित्यस्यापवादोऽयम् । अमुना पुंसा कुलेन वा । इनादिति किम्? अमुया स्त्रिया ॥ ४८ ॥

## बहुष्वेरीः ॥ २ । १ । ४९ ॥

बहुष्वर्थेषु वर्तमानस्यादसो मकारात् परस्यैकारस्य स्थाने ईकार आदेशो भवति । अमी, अमीभिः, अमीभ्यः २ । अमीषाम्, अमीषु । बहुष्विति किम्? अमू कन्ये, अमू कुले । एरिति किम्? अमूः कन्याः, अमून् नरान् । मादित्येव? अमुके, अमुकेभ्यः ॥ ४९ ॥

## धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये ॥ २ । १ । ५० ॥

धातुसंबन्धिन इवर्णस्योवर्णस्य स्थाने स्वरादौ प्रत्यये परे यथासंख्यमिय् उव् इत्येतावादेशौ भवतः । नियौ, नियः; लुवौ, लुवः, अधीयाते, अधीयते; लुलुवतुः, लुलुवुः, स्त्रमिच्छति क्यन्, क्विप्—स्त्रीः, स्त्रियौ, स्त्रियः; एवं स्त्रियौ, स्त्रियः, अधीयन् । धातोरिति किम्? लक्ष्म्याः । इवर्णोवर्णस्येति किम्? म्लायति, वाचः । स्वर इति किम्? नीः, लूः । प्रत्यय इति किम्? न्यर्थः, ल्वर्थः । इयुवभ्यां गुणवृद्धी परत्वाद् भवतः—नयनम्, लवनम्, नायकः, लावकः ॥ ५० ॥

---

पर्युदासाश्रयणात् । पर्युदासो हि सदृग्ग्राही, ततो यत्र साक्षात् स्वरोऽग्रे भवति तत्रैव पूर्वस्योकारस्य ओकारत्वन्नादिति साक्षात् स्वरवर्जनात् । अथवा-अदितीत्यस्य विषयसप्तम्या प्रकृतेरपि विशेषणत्वाददोष ॥ ४७ ॥

**प्रागिनात्** । अदसो मादुवर्ण इति चानुवर्तते । अदसो मादिनात् प्रागुवर्ण इत्यन्वयस्तदर्थमाह—**अदसो मात् परस्ये**त्यादि । प्राग्योगे "ऋमृत्यर्थान्यार्थदिक्शब्द०" २।२।७५। इति इनात् पञ्चमीत्याह—**इनादेशात् प्रागि**ति । ननु परत्वात् नित्यत्वादिनादेशात् पूर्वमुवर्ण सिद्ध एव किमनेनेति चेत्, मैवम्, अनुग्रहणादिनादेशात् पश्चात् स्यात्, तदपवादोऽयमुच्यत इत्याह—**अन्वितीत्या**दि । **अमुना पुंसा कुलेन** वेति । अदसशब्दात् टायां त्यदाद्यत्वे मत्वे उत्वे "ट पुंसि ना" १।४।२४। इति नादेशे नपुंसके च "अनामस्वरे नोऽन्त" १।४।६४। इति नागमे सिध्यति । **अमुये**ति । अत्र त्यदाद्यत्वे स्त्रियामपि अकारान्तत्वाभावादिनादेशस्यासंभवात् "टौस्येत्" इत्येत्वे मत्वेऽयादेशे च पश्चादुत्वमिति भाव ॥ ४८ ॥

**बहुष्वेरीः** । अदसो मादिति चानुवर्तते । बहुषु अदसो माद् एरी इत्यन्वयस्तदर्थमाह—**बहुष्वर्थेषु वर्तमानस्ये**त्यादि । नन्विकारस्य षष्ठ्यामेरूपस्य समानत्वात् ततश्चादसोऽद्यागमे कृते तदवयवस्येकारस्य यत्व बाधित्वा इत्व स्यात् इति कथमेकारस्येत्युक्तमिति चेत्, मैवम्, अदसोऽवयवस्येकारस्य संभवात् "वाद्रौ" इत्यनन्तरमेवेद कुर्यात्, इकारपरिग्रहे चाऽनेकप्रयोगसिद्धेर्व्याप्तिन्याये संभवत्येकप्रयोग प्रति योगानारम्भाच्च । किंच "अदो मुनी" १।२।३५। इत्यत्र मीति निर्देशात् न हीकारपरिग्रहेऽदसो मीरूपसंभवोऽस्तीति तस्मात् सूक्तमेकारस्येति । **अमी** इति । अदस्शब्दाज्जसि त्यदाद्यत्वादौ "जस इ" इतीकारे "अवर्णस्ये०" इत्येत्वेऽनेनेत्वम् । **अमीभिरि**त्यादि । एषु भिसि भ्यसि आमि सुपि च त्यदाद्यत्वादौ आम सामादेशे च "एद्बहुस्भोसि" इति सर्वत्र एत्त्वमनेनेत्व च । **अमू कन्ये** इति । अत्र अदस औकारे त्यदाद्यत्वे आबादौ "औता" इत्येत्वे बहुष्विति वचनादत्र द्वित्वे वर्तमानत्वादीत्व न भवति । एवममू कुले इत्यत्रापि । **अमूः कन्या** इति । अदस शसि त्यदाद्यत्वादौ "शसोऽता०" इति दीर्घत्वे "मादुवर्णोऽनु" इत्याकारस्य ऊकारे "सो रु" इति रुत्वे "र पदान्त०" इति विसर्ग । **अमूनि**ति । "शसोऽता०" इति पुंसि सकारस्य नकार, शेष पूर्ववत् । **अमुके, अमुकेभ्य** इति । अत्राकस्तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणेऽपि मादिति वचनादुकारेण व्यवधानादनेन ईत्वाभाव ॥ ४९ ॥

**धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये** । नन्विवर्णोवर्णस्येति धातोरित्यस्य विशेषणत्वात्तदन्तसप्रत्यये धातोरिवर्णोवर्णान्तस्येति समानाधिकरणषष्ठ्यां संभवन्त्यां व्यधिकरणषष्ठ्या प्रतिपत्तिगौरवात् परिग्रहायोगात् कथमेवमुच्यत इति [2] न च समानाधिकरणषष्ठ्यामनेकवर्णत्वात्सर्वादेशप्रसङ्ग इति वाच्यम्, यतो 'निर्दिश्यमानस्यादेशा भवन्तीति' इवर्णोवर्णयोरेवेयुवौ भविष्यत इति चेत्, सत्यम्, एतदर्थस्यैव स्पष्टीकरणायैवमुक्तम् । अत एव सूत्रे इवर्णोवर्णस्येति विशेष्यमिति । स्वर इति प्रत्ययस्य विशेषणात्तत्र च "सप्तम्या आदि" इत्यादिसप्रत्यये स्वरादावित्यर्थकम् । तथा चायमन्वय –धातो इवर्णोवर्णस्य स्वरादौ प्रत्यये इयुव् इति । तदर्थमाह—**धातुसंबन्धिन** इत्यादि । नयतेर्लुनातेश्च क्विपि तल्लुकि च औकारे जसि च 'क्विबन्ता धातुत्व न जहती'ति धातुत्वमेवात्र वेदितव्यमित्यनेनेयुवो कृतयो —**नियौ, नियः, लुवौ, लुव** इति । **अधीयाते, अधीयते** इति । अधिपूर्वात् 'इङ्' अध्ययने, इत्यतो वर्तमानायां आते अन्ते च प्रत्यये "अनतोऽन्तोऽदात्मने" ४।२।११४। इत्यदादेशे स्वरादित्वादियादेश । **लुलुवतुः, लुलुवुरि**ति । लुनाते परोक्षाया अतुसि उसि च "द्विर्धातु ०" इति द्विर्वचने "ह्रस्व" इति द्विरुक्तस्य ह्रस्वत्वे स्वरादित्वादुवादेश । **एवमि**ति । स्त्री इतिवत् स्त्रीशब्दादपि क्यनन्तात् क्विपि धातुत्वादनेनेयादेशो न तु "स्त्रिया" इति । तदुदाहरति—**स्त्रियौ, स्त्रिय** इति । **अधीयन्** इति । अधिपूर्वात् 'इक्' स्मरणे इत्यत शतरि अनेनेयादेश । **लक्ष्म्या** इति । औणादिकत्वाद्धातुत्वाभाव इत्यर्थः, स च पूर्वं साधित एव । 'म्लै' गात्रविनामे इत्यतो वर्तमानाया तिवि शवि आयादेशे—**म्लायति** । वचे वक्तीति विग्रहे "दिद्युद्दृदज्जगज्जुहूवाक्०" ५।२।८३। इति क्विपि निपातनात् वाच्, ततो जसि—**वाच** इति । इवर्णादिग्रहणमन्तरेणेयुवावत्रापि स्यातामिति भाव । **न्यर्थः, ल्वर्थ** इति । नियोऽर्थ इति लुवोऽर्थ इति च षष्ठीसमास । ननु नयतेर्लुनातेश्च "करणाधारे" ५।३।१२९। इत्यनट्टि "णकतृचौ" ५।१।४८। इति कर्तरि णके च इवर्णोवर्णान्तत्वादियुवौ कस्मान्न भवत इत्याह—**इयुवभ्यामि**त्यादि । नियौ, लुवौ इत्यादौ अस्य विधे सावकाशत्वात् करण कारक इत्यादौ तु गुणवृद्ध्यो, नयनमित्यादौ तूभयो प्राप्तौ इयुवौ बाधित्वा गुणवृद्धी स्यातामित्यर्थ ॥ ५० ॥

---

१ °स च स्थाने पु० । २ नुनुवतु नुनुवु ० इति पाठः पु० । ३ स्त्री° पु० ।

## इणः ॥ २ । १ । ५१ ॥

इणो धातोः स्वरादौ प्रत्यये परे इय् इत्ययमादेशो भवति, यत्वापवादः । ईयतुः, ईयुः । कथं यन्ति, यन्तु ? परत्वेन "ह्रिणोरप्विति व्यौ" ॥ ४ । ३ । १५ ॥ इति यत्वस्यैव भावात् । अयनम्, आयक इत्यत्रापि परत्वाद् गुणवृद्धी एव ॥ ५१ ॥

## संयोगात् ॥ २ । १ । ५२ ॥

धातुसंबन्धिन ईवर्णस्योवर्णस्य च धातुसंबन्धिन एव संयोगात् परस्य स्वरादौ प्रत्यये परे इयुवादेशौ य्वोरपवादौ भवतः । यवक्रियौ, यवक्रियः; कटप्रुवौ, कटप्रुवः; शिश्रियतुः, शिश्रियुः । धातुना संयोगस्य विशेषणादिह न भवति–उन्न्यौ, उन्न्यः; सकृल्ल्वौ, सकृल्ल्वः ॥ ५२ ॥

## भ्रूश्नोः ॥ २ । १ । ५३ ॥

भ्रूश्नु इत्येतयोरुवर्णस्य संयोगात् परस्य स्वरादौ प्रत्यये परे उवादेशो भवति । भ्रुवौ, भ्रुवः, क्यन्क्विबन्तस्य "धातोरिवर्णोवर्णस्य०" इत्यादिनैवोवादेशः; आप्नुवन्ति, राध्नुवन्ति, तक्ष्णुवन्ति । संयोगादित्येव ? सुन्वन्ति, चिन्वन्ति । स्वर इत्येव ? भ्रूः, आप्नुतः । प्रत्यय इत्येव ? भ्वग्रम् ॥ ५३ ॥

## स्त्रियाः ॥ २ । १ । ५४ ॥

स्त्रीशब्दसंबन्धिन इवर्णस्य स्वरादौ प्रत्यये परे इयादेशो भवति । स्त्रियौ, स्त्रियः, स्त्रियाम्, परमस्त्रियौ, अतिस्त्रियौ नरौ । शस्त्रीशब्दसंबन्धिनस्त्वनर्थकत्वात् न भवति । स्वर इत्येव ? स्त्रीभिः । प्रत्यय इत्येव ? स्त्र्यर्थः । कथम् अतिस्त्रयः, अति-

---

इणः । धातोरिति स्वर इति प्रत्यय इति इय् इति चानुवर्तते । इणो धातो स्वरे प्रत्यये इय् इत्यन्वय । इणो धातुत्वाव्यभिचारेऽपि धातोरित्युत्तरार्थमनुवर्तनीयत्वेनेण्विशेषयितव्यो विशेषणविशेष्यभाव प्रति कामचारादित्याह—**इणो धातोरि**ति । इण उवर्णस्याभावात् इयित्ययमेव सबध्यत इत्याह—**इयित्ययमादेश** इति । नन्विणो धातुत्वात् स्वरादौ प्रत्यये पूर्वेणैवेयादेशो भविष्यतीति चेत्, उच्यते–इण परोक्षादौ कृतद्विर्वचनस्यानेकस्वरत्वात् "योऽनेकस्वरस्य" २।१।५६। इति यत्व स्यादतस्तदपवादोऽयमुच्यत इत्याह—**यत्वापवाद** इति । **ईयतुः, ईयुरि**ति । 'इण्क्' गतौ, धातो परोक्षाया अतुसि उसि च "द्विर्धातु ०" इति द्विर्वचनेऽनेकस्वरत्वादन्त्यस्येयादेशे पूर्वस्य समानदीर्घत्वमिति भाव । शङ्कते–**कथमि**ति । इण्धातोर्वर्तमानाया अन्तिप्रत्यये पञ्चम्या अन्तुप्रत्यये च स्वरादित्वात् "इण " इतीयादेश कस्मान्न भवति ? इति प्रश्नार्थ । समाधत्ते—**परत्वेने**त्यादि । नन्वस्तु यन्ति यन्त्वित्यत्र परत्वात् "ह्रिणो ०" इति यत्वम्, परन्तु इण्धातोरनटि णके च स्वरादौ प्रत्ययेऽनेनेयादेश कस्मान्न भवतीत्याह—**अत्रापी**त्यादि । अयमर्थ –'पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति परत्वाद्गुणवृद्धी भवत ॥ ५१ ॥

**संयोगात्** । "क्विवृत्ते०" २।१।५८। इति यकारवकारयो प्राप्तयोस्तदपवादार्थोऽयमारंभ । पूर्वस्माद्धातोरिवर्णोवर्णस्येयुव् स्वरे इत्यनुवर्तते । धातोरिवर्णोवर्णस्य धातो सयोगात् स्वरे प्रत्यये इयुव् इत्यन्वय । धातोरित्यनुवर्तमानेन संयोगादिति विशिष्यत इत्याह—**धातुसंबन्धिन एव संयोगादि**ति । ननु धातोरिति विशेषण कार्यितया प्राधान्यादिवर्णोवर्णयोरेव युज्यते न सयोगस्य, तस्य तद्विशेषणत्वेनाप्राधान्यात्, प्रधानासभवे हि विशेषण गौणे युज्यत इति । न च तस्य प्रधानान्वये व्यावर्त्याभाव इति वाच्यम्, धातोरेवावयवो य इवर्ण उवर्णश्च संयोगात् परस्तयोरियुवाविति विशेषणविशेष्यभावादत्र धात्ववयवस्य व्यावर्त्यलाभात् । न च तत्र "इवर्णादे०" इति यकारवकारयो संभवादव्यावर्त्यत्वमिति शङ्क्यम्, यत्र समानदीर्घत्व बाधकमस्ति तत्र व्यभिचारादर्थवदिवर्णोवर्णयोर्धातोरिति विशेषणमिति प्रधानगामिनि संभवति विशेषणे गुणस्य तेन संबन्धो न न्याय्य इति चेत्, उच्यते–य्वोरपवादावियुवौ विधीयेते, तौ च धातोरेवेवर्णोवर्णयोर्भवत इति व्यभिचाराभावाद्धातुप्रकरण एवास्यारंभात्तयोर्धातुविशेषणमनर्थकमिति प्रधानस्य धातुना सबन्धो निष्प्रयोजनस्तदीयस्य संयोगलक्षणस्य गुणस्य तेन संबन्ध क्रियत इति सम्यगुक्त—**धातुसंबन्धिन इवर्णस्ये**त्यादि । पूर्वसूत्रसिद्धार्थानुवादश्च धातोरित्यस्याप्राधान्यप्रदर्शनार्थं न तु व्यवच्छेदार्थमिति भाव । **यवक्रियावि**त्यादि । यवपूर्वात् क्रीणाते क्विपि कटपूर्वात् प्रवतेश्च "दिद्युद्दद्०" ५।२।८३। इति क्विपि दीर्घ, 'श्रिग्' सेवायामित्यत परोक्षाया अतुसि उसि च "द्विर्धातु ०" इति द्विर्वचने "व्यञ्जनस्यानादे०" ४।१।४४। इति रेफस्य लोप । एतेषु धातुसंयोगपूर्व इवर्ण उवर्णश्चेति तयो स्वरादावियुवाविति । धातुना सयोगस्य विशेषणे फलमाह—**धातुने**त्यादि । अन्यथा यवक्रियावित्यादिवद्धातुसंयोगादिवान्यसयोगादपि परयोरिवर्णोवर्णयोरुन्न्यावित्यादावपि य्वौ बाधित्वा इयुवौ स्यातामिति ॥ ५२ ॥

**भ्रूश्नोः** । उवर्णस्य उव् स्वरे प्रत्यये सयोगात् इति चानुवर्तते । भ्रूश्नोरुवर्णस्य संयोगात् परस्य स्वरे प्रत्यये उव् इत्यन्वय, तदर्थमाह—**भ्रूश्नु इत्येतयोरि**त्यादि । भ्रूशब्द औणादिकस्तस्मादौकारे जसि चानेनोवादेशे—**भ्रुवौ, भ्रुव** इति । क्विबन्तस्य तु भ्रूशब्दस्य धातुत्वाद्धाने पूर्वेणैव सिद्ध इत्याह—**क्यन्क्विबन्तस्ये**त्यादि । 'आप्लृट्' व्याप्तावित्यतो वर्तमानाया अन्तिप्रत्यये "स्वादे ०" ३।४।७५। इति श्नुप्रत्यये धातुसंयोगात् परस्य श्नुप्रत्ययस्योवर्णस्योवादेशे—**आप्नुवन्ति** । एव राध्नुवन्ति, तक्ष्णुवन्तीत्यादयपि द्रष्टव्यम् । **भ्वग्रमि**ति । भ्रुवोऽग्रमिति षष्ठीसमास ॥ ५३ ॥

**स्त्रियाः** । इवर्णस्य स्वरे प्रत्यये इय् इति चानुवर्तते, स्त्रिया इवर्णस्य स्वरे प्रत्यये इय् इत्यन्वय, तदर्थमाह—**स्त्रीशब्दसंबन्धिन** इत्यादि । **स्त्रियौ, स्त्रिय** इत्यादि । अत्र स्त्रीति स्त्यायतोऽस्यां शुक्रशोणिते इत्यर्थे स्त्रीति निपातनात् ड्रट्प्रत्ययात् ङ्यां भवति, तत औप्रत्यये जसि सप्तम्येकवचनस्य च "स्त्रीदूत " १।४।२९। इत्यामि नाय धातुरिति पूर्वेणाप्राप्त इत्यनेनेयादेश । स्वरादिप्रत्ययेन प्रकृतेराक्षेपात् स्त्रिया इति तस्य विशेषणत्वात्तदन्तप्रत्ययात्तदन्तस्याप्युदाहरति—**परमस्त्रियौ** इति । परमे च ते स्त्रियौ चेति विशेषणसमास । **अतिस्त्रियौ इति** । स्त्रियमतिक्रान्ताविति प्रादिसमास, "गोश्चान्ते०" २।४।९६। इति ह्रस्वत्व तत स्याद्यौकारे 'एकदेशविकृतस्यानन्यत्वाद्' स्वरमात्रे च स्वरादि-

---

१ इवर्णोवर्णस० पु० । २ ०स्य सु० पु० । ३ भ्वर्थम्० म० म० ।

स्त्रिणा, अतिस्त्रये, अतिस्त्रेः २; अतिस्त्रौ ? "इदुतोऽस्त्रेरीदूत्" ॥ १ । ४ । २१ ॥ इत्यत्र स्त्रिशब्दवर्जनात् परोऽपीयादेशो बाध्यते। स्त्रीणामित्यत्र तु प्रागेव नाम्, एतच्च "वेयुवोऽस्त्रियाः" ॥१।४।३०॥ इत्यत्रोक्तम्; पृथग्योग उत्तरार्थः ॥ ५४ ॥

## वाऽमूशसि ॥ २ । १ । ५५ ॥

स्त्रीशब्दसंबन्धिन इवर्णस्यामि शसि च परे इयादेशो वा भवति । स्त्रियम्, स्त्रीम्; स्त्रियः, स्त्रीः, परमस्त्रियम्, परमस्त्रिम्; परमस्त्रियः, परमस्त्रीः । अतिस्त्रियम्, अतिस्त्रिम् नरम्, अतिस्त्रियः, अतिस्त्रीन् नरान् । क्यनाद्यन्तस्य तु धातुत्वात् "धातोरिवर्णो०" ॥२।१।५०॥ इत्यादिना नित्यमियादेशः—स्त्रीमिच्छति, स्त्रीवाचरति वा स्त्री ब्राह्मणः, तं स्त्रियम्; तान् स्त्रियः ॥५५॥

## योऽनेकस्वरस्य ॥ २ । १ । ५६ ॥

धातोरित्यनुवर्तते । अनेकस्वरस्य धातोः सबन्धिनः प्रत्यासत्तेरिवर्णस्य स्थाने स्वरादौ प्रत्यये परे यकारादेशो भवति । चिच्यतुः, चिच्युः; निन्यतुः, निन्युः । सखायमिच्छति क्यन्, क्विप्—सखीः, सख्युः, एव पत्युः; सख्यि, पत्यि । अनेकस्वरस्येति किम् ? नियौ, नियः; परमनियौ, परमनियः । 'रि', 'पिंत्' गतौ—रियति, पियति । इवर्णस्येत्येव ? लुलुवतुः, लुलुवुः ॥ ५६ ॥

## स्यादौ वः ॥ २ । १ । ५७ ॥

अनेकस्वरस्य धातोः संबन्धिनः प्रत्यासत्तेरुवर्णस्य स्थाने स्वरादौ स्यादौ प्रत्यये परे वकारादेशो भवति । वसुमिच्छति क्यन्, क्विप्—वसूः, वस्वौ; वस्वः । स्यादाविति किम् ? लुलुवुः ॥ ५७ ॥

## क्विब्वृत्तेरसुधियस्तौ ॥ २ । १ । ५८ ॥

क्विबन्तेनैव या वृत्तिः—समासस्तस्या असुधियः—सुधीशब्दवर्जितायाः संबन्धिनो धातोरिवर्णोवर्णस्य स्थाने स्वरादौ स्यादौ प्रत्यये परे तौ—यकारवकारादेशौ भवतः । उन्न्यौ, उन्न्यः; सुल्वौ, सुल्वः, तिरोन्यौ, तिरोन्यः; तिरोल्वौ, तिरोल्वः; ग्रामण्यौ, ग्रामण्यः; खलप्वौ, खलप्वः, एषु स्याद्युत्पत्तेः प्रागेव क्विबन्तेन समासः । एव नयनशीलो नीः, सेनां नेता

---

प्रत्यये विधानादत्रापीयादेश । न च तदन्तग्रहणात् शस्त्रीशब्दस्यापि ङ्यन्त्यत्वात् इयादेशप्रसङ्ग इति वाच्यम्, तदेकदेशस्यानर्थकत्वादित्याह—शस्त्रीत्यादि । ङ्यर्थ इति । स्त्रिया अर्थ इति षष्ठीसमास । नन्वतिस्त्रिशब्दाज्जसि टाया ङेङसिङस्ङिषु चानेनेयादेश कस्मान्न भवतीति शङ्कते—कथमिति । समाधत्ते—"इदुतोऽस्त्रेरीदूत्" इत्यत्रेत्यादि । अय चार्थस्तत्रैव सूत्रे व्याख्यातत्वान्नेह व्याख्यायते । ननु स्त्रीशब्दादामि प्राप्त इयादेश कस्मान्न भवतीत्याह—स्त्रीणामित्यत्रेत्यादि । पृथग्योग इति । "वाऽमूशसि" इत्यत्र स्त्रीशब्दानुवृत्ति प्रयोजनमस्य योगस्येत्यर्थ, अन्यथा "स्त्रीभ्रूश्नो" इति पूर्वेणैकयोगमेव कुर्यादिति भाव ॥ ५४ ॥

**वाऽमूशसि ।** स्त्रिया इति इवर्णस्येति इय् इति चानुवर्तते, स्त्रिया इवर्णस्य अमूशसि इय् वा इत्यन्वयस्तदर्थमाह—**स्त्रीशब्दसंबन्धिन इवर्णस्येत्यादि** । षष्ठीबहुवचनस्य नाम्विषयत्वेन स्वरादित्वाभावात् शस्साहचर्याच्च याम्शसीति तुल्यायामपि संहितायां द्वितीयैकवचनस्यैव ग्रहणम् । स्त्रीशब्दस्य सख्यैकार्थत्वाभावात् तद्धितशसोऽनुत्पत्ते संख्यैकार्थत्वयोगादुत्पत्तौ वा स्वरादित्वाभावात् द्वितीयाबहुवचनस्यैव शसो ग्रहणात्तस्य चाव्यभिचारात्तेन साहचर्यम् । **स्त्रियमित्यादि** । स्त्रीशब्दादमि शसि चानेन पाक्षिकेयादेशे-स्त्रियम्, स्त्रिय इति, पक्षे "समानादमोऽत" इति "शसोऽता०" इति सूत्राभ्यां यथासंभवममोऽकारलुकि दीर्घे च—स्त्रीम्, स्त्रीरिति । एवमतिस्त्रियमित्यादि द्रष्टव्यम् । **क्यनाद्यन्तस्येति** । ननु धातुरूपस्यैव स्त्रीशब्दस्य विकल्पार्थमिद कस्मान्न भवति कथमुक्त **"धातोरिवर्णोवर्ण०" इत्यादिना नित्यमियादेश** इति ? उच्यते—"स्त्रिया" इत्यारम्भादधातोरेव स्त्रीशब्दस्य ग्रहणम्, स एव चानुवर्तते, न चानुवर्तमानस्यान्यथात्व भवति, यदाह श्रीशेषराज —न हि गोधा सर्पन्ती सर्पणादहिर्भवति इति युक्तमुक्त **"धातोरिवर्णो०"**इत्यादिना ॥ ५५ ॥

**योऽनेकस्वरस्य ।** "इवर्णादेरस्वे०" इत्यनेनैव यत्वस्य सिद्धत्वादियुवाधकमिदम् । इय् धातोरिवर्णस्यैव विधीयतेऽत सामर्थ्यात्तस्यानुवर्तनमित्याह—**धातोरित्यनुवर्तत** इति । अन्यस्यासंभवादनेकस्वरस्येति विशेषणीभूतस्यापि धातोरित्यस्य विशेषणमित्याह—**अनेकस्वरस्य धातोरिति** । इवर्णोवर्णयो स्थानिनोरनुवृत्तावपि कार्यस्य तालव्यत्वात् "आसन्न" इति परिभाषासामर्थ्यात् इवर्णस्यैव स्थानित्वमित्याह—**प्रत्यासत्तेरित्यादि** । चिनोतेरतुसि उसि च द्विर्वचने धातोरनेकस्वरत्वात् यत्वम्—**चिच्यतुः, चिच्युरिति** । एव **निन्यतुरित्यादि** । क्विबन्ताना धातुत्वाहानेस्तदन्तमुदाहरति—**सखायमिच्छतीत्यादि** । नयते क्विपि तल्लुकि च औकारे जसि चानेकस्वरत्वाभावात् यत्वाभावे "धातोरिवर्णोवर्णस्य०" इतीयादेशे—**नियौ, निय** इति । एव परमनियावित्यादावपि समासस्यानेकस्वरत्व न धातोरिति । **लुलुवतुः, लुलुवुरिति** । प्रत्यासत्तेरिवर्णस्यैव स्थानित्वादुवर्णस्य यत्व न भवति ॥ ५६ ॥

**स्यादौ वः ।** अनेकस्वरस्येति धातोरिति उवर्णस्येति स्वरे प्रत्यये इति चानुवर्तमान पूर्ववद्यथासंभवमभिसम्बध्यते । अनेकस्वरस्य धातोरुवर्णस्य स्वरादौ स्यादौ प्रत्यये व इत्यन्वयस्तदर्थमाह—**अनेकस्वरस्य धातो॰ संबन्धिन** इत्यादि । वसति रवाविति वसु किरणार्थक, "स्मृतृसरि०" उणा० ७१६। इत्यु, तत पुस्युदाहरति—**वसुमिति** । तस्य क्यनन्तस्य दीर्घत्वे क्विप्लुकि च—**वसूरिति** प्रकृति । वस्वौ, वस्व इत्युदाहरणे ॥ ५७ ॥

**क्विब्वृत्तेरसुधियस्तौ ।** धातोरिवर्णोवर्णस्येति स्वरे स्यादाविति च वर्तते । असुधिय क्विब्वृत्ते धातो इवर्णोवर्णस्य स्वरे स्यादौ तौ इत्यन्वय । क्विपा वृत्ति क्विब्वृत्तिस्तृतीयातत्पुरुष, वृत्तिस्थस्य धातो कार्यविधानात्तस्य च केवलस्य वृत्त्यसंभवाद्वृत्तिग्रहणादेव क्विपि लब्धे क्विप्ग्रहणमवधारणार्थम्, अत एवावधारणस्य शब्दाश्रयत्वादसामर्थ्यमपि नास्तीत्याह—**क्विबन्तेनैवेत्यादि** । अनन्तरस्यैव वकारस्यानुवृत्तिर्मा भूदित्युभयानुवृत्त्यर्थ तावित्युक्तमित्याह—**तौ यकारवकारादेशाविति** । उत्पूर्वान्नयते सुपूर्वाल्लुनाते क्विपि तल्लुकि औजसोरनेन यकारवकारयो.

सेनानीः, सेनान्यौ, सेनान्यः; यद्वा नयतीति नीः पश्चात्साधनेन योगः । परमस्य नेता परमनीः, परमन्यौ, परमन्यः— क्विब्ग्रहणादिह न भवति, परमश्चासौ नीश्च परमनीः, परमनियौ, परमनियः; स्याद्यन्तेनात्र विशेषणसमासो न तु क्विबन्तेन । वृत्तिग्रहणादिह न भवति—ब्राह्मणस्य नियौ । असुधिय इति किम्? सुष्ठु ध्यायति दधाति वा सुधीः—"दिद्युद्०" ॥ ५। २। ८३॥ इत्यादिना क्विप् धीभावश्च सुधियौ, सुधियः । सुपूर्वस्यैव वर्जनादिह भवत्येव—प्रध्यौ, आध्यौ, उद्ध्यौ ॥५८॥

## दृन्पुनर्वर्षाकारैर्भुवः ॥ २ । १ । ५९ ॥

दृन् पुनर् वर्षा कार इत्येतैः सह या क्विब्वृत्तिस्तत्संबन्धिनो भुवो धातोरुवर्णस्य स्वरादौ स्यादौ प्रत्यये परे वकारादेशो भवति । दृन्—हिंसन् भवतीति दृन्भूः—सविषः कीटविशेषः, दृन्भ्वौ; दृन्भ्वः । पुनर्भूः—पुनरूढा स्त्री, पुनर्भ्वौ; पुनर्भ्वः । वर्षाभूरोषधीविशेषो दर्दुरश्च, वर्षाभ्वौ; वर्षाभ्वः । कारे कारेण वा भवति—कारभूः, कारभ्वौ; कारभ्वः । करशब्देनापीच्छन्त्येके—करभ्वौ, करभ्वः । काराशब्देनाप्यन्ये—काराभ्वौ, काराभ्वः । दृनादिभिरिति किम्? स्वयंभुवौ, प्रतिभुवौ, मित्रभुवौ, विभुवौ; आत्मभुवौ । पूर्वेणैव सिद्धे नियमार्थमिदम्—एतैरेव भुवो नान्यैरिति ॥ ५९ ॥

## णषमसत्परे स्यादिविधौ च ॥ २ । १ । ६० ॥

इतः सूत्रादारभ्य यत्पर कार्यं विधास्यते तस्मिन्पूर्वस्मिंश्च स्याद्यधिकारविहिते विधौ कर्तव्ये णत्वं षत्वं चासदसिद्ध द्रष्टव्यम् । एतत्सूत्रनिर्दिष्टयोश्च णत्वषत्वयोः परे षत्वे णत्वमसद्द्रष्टव्यम् । णषशास्त्रं वा परे स्यादिविधौ च शास्त्रे

---

उन्न्यौ, उन्न्यः, सुल्व्यौ, सुल्व्य इत्यादि । एवमन्यदपि । एण्विति । "ङस्युक्तं कृता" ३।१।४९। इत्यनेनेति भाव । सेनानीशब्दस्यैवार्थकथनम्—नयनशील इत्यादि । सेनां नयत इति क्विपि यत्वमनेन—सेनान्यौ । यदापि नयतीति नी पश्चात् कर्मषष्ठ्यन्तेन सेनाशब्देन कारकत्वात् विभक्त्युत्पत्ते पूर्वं क्विबन्तेन समासस्तदापि यत्वे सेनान्याविति भवतीत्याह—यद्वा नयतीति नीः पश्चात् साधनेन योग इति । अर्थभेदाभावात् प्रक्रियाभेदमात्रमुपदर्शितम्, परमार्थतस्तु सोपपदादेव क्विप् । नन्वेवमनेन न्यायेन परमन्याविति भाव्यमिष्यते च परमनियाविति तत्कथमिति चेत्, उच्यते—क्विबन्तेन वृत्तेरभावात् परमशब्दस्य च कारकत्वाभावात्, तथा हि—यदा परमश्चासौ नीश्चेति "सन्महत्०" इति विशेषणसमासस्तदा नीशब्देन क्विबन्तेन कर्तृशक्त्युपसर्जन द्रव्यमाख्यायतेऽतस्तद्विशेषणं परमशब्दो न कारकाभिधायी, यदापि षष्ठीसमासस्तदापि संबन्धविवक्षायां तिरोहिता भवति समासहेतुभूतकारकत्वविवक्षा, यदापि परम शास्त्र नयतीति नयनक्रियाकर्मण शास्त्रादेर्विशेषण परमशब्दस्तदा सत्यपि कर्मत्वे शास्त्राद्यपेक्षत्वात् सामर्थ्याभावात् ऋद्धस्य राज्ञ पुरुष इतिवद् वाऽन्तर्भाव , तस्मात् परमनियावित्येव भवतीत्याह—परमस्य नेता परमनीरित्यादि । परमन्य इत्यनन्तरमितिशब्दोऽध्याहार्य , न भवतीत्यनन्तरं तु दृष्टान्तार्थं यथाशब्द , तेनायमर्थो—यथा परमश्चासौ नीश्च परमनीः परमनियौ, परमनिय इति । परमशब्दस्याकारकत्वात् क्विबन्तेन समासाभावात् क्विप्ग्रहणादिह यत्वं न भवति, एव तत एव परमन्यौ परमन्य इति यत्ववान् प्रयोगो न भवतीति तात्पर्यार्थ । विश्रान्तविद्याधरस्त्वत्रापि मन्यते । ब्राह्मणस्य नियाविति । क्विबन्तेन सह वृत्तेरभावाद्यत्वाभावे "धातोरिवर्णो०" इतीयादेश । सुधीशब्द व्युत्पादयति—सुष्ठु ध्यायतीत्यादि । सुधियौ, सुधिय इति । अत्र 'असुधिय' इति प्रतिषेधादनेन यत्वाभावे "धातोरिवर्णो०" इतीयादेश । प्रध्यावित्यादि । सुपूर्वस्यैव धियो यत्वप्रतिषेधादन्यपूर्वस्य भवत्येव ॥ ५८ ॥

दृन्पुनर्वर्षाकारैर्भुव. । क्विब्वृत्तेरिति धातोरिति उवर्णस्येति स्वरे स्यादाविति व इति च वर्तते । दृन्पुनर्वर्षाकारैरिति तृतीयानिर्देशात् क्विब्वृत्तेरिति प्रकरणादेतै सह क्विब्वृत्तिर्विज्ञायते, तथा चायमन्वय —दृन्पुनर्वर्षाकारै क्विब्वृत्तेर्भुवो धातोरुवर्णस्य स्वरे स्यादौ व इति, तदर्थमाह—दृन्पुनरित्यादि । 'दृहु' वृद्धावत उदित्वान्नागमे, क्विपि, तल्लोपे, सिलोपे च "पदस्य" इति हलोपे—दृन् इति रूपम् । धातूनामनेकार्थत्वात् हिंसापि प्रतीयत इत्याह—दृन्—हिंसन् इति । दृन्भूशब्दस्यार्थमाह—सविष इत्यादि । एव पुन पूर्वाद्भवते क्विपि—पुनर्भूः—पुनरूढा स्त्री । अक्षता च क्षता चैव पुनर्भू संस्कृता पुनरिति वचनात् । वर्षन्तीत्यचि, आपि—वर्षा, तासु भवतीति—वर्षाभूः, तदर्थानुवाद —औषधीविशेषो दर्दुरश्चेति । क्रियत इति कार —वणिग्भि कर्षकै पशुपालैश्च रक्षार्थं देयो राजभाग इति तत्पूर्वाद्भवते क्विपि—कारभूरिति प्रकृति । मतान्तरमुपन्यस्यति—करशब्देनेत्यादि । एके—शाकटायनादय । ते हि करशब्द पठित्वा करकारशब्दयोरेकार्थत्वादेकदेशविकृत तदेवेति कारशब्देनापीच्छन्ति, तथा कार इति च पाठान्तरं मन्यन्ते । देवनन्दी तु कारशब्दमेव पठति । स्वयंभुवावित्यादि । स्वय भवत , प्रतिभवत , मित्रे मित्राद्वा भवत , विभवत , आत्मनो भवत इति क्विप्यौकारे उवादेश । ननु भुव क्विबन्तस्य दृनादिभिर्वृत्तौ पूर्वेण सिद्धत्वात् किमर्थमिदमित्याशङ्क्याह—पूर्वेणेत्यादि । अथवा स्वयभुवावित्यादौ मा भूदनेन पूर्वेण कस्मान्न भवतीत्याशङ्क्याह—पूर्वेणेत्यादि । तत्र चान्यत्र च प्राप्तस्य कार्यस्य ततोऽन्यतो व्यावर्त्य तस्मिन्नेवविधोऽन्यत्र कार्यस्याभावफलो नियम , स चात्र द्वेधा संभवति—दृनादिभिर्भुव एव नान्यस्य धातोरिति, भुवो दृनादिभिरेव नान्यै स्वयमादिभिरिति च । तत्रेष्ट नियम दर्शयति—एतैरेवेत्यादि ॥ ५९ ॥

णषमसत्परे स्यादिविधौ च । णषमिति । णो विधेयत्वेन एष्वस्तीति "अभ्रादिभ्य" ७।२।४६। इति मत्वर्थीयेऽकारे णशब्देन णत्वविधायकानि सूत्राण्युच्यन्ते, एव षशब्देनापि षत्वविधायकानीति, णश्च षश्चेति समाहारद्वन्द्व । अत्र साक्षात्तानि न पठ्यन्ते, अन्यत्र तत्पाठस्य सुखार्थत्वादिति भाव । परे च स्यादिविधौ णषम् असदित्यन्वय । परशब्दस्यावधिसापेक्षत्वादन्यस्यावधेरश्रूयमाणस्याप्रामाणिकत्वादस्यैव तत्रावधित्वमित्याह—इतः सूत्रादित्यादि । परस्यादिविधेरसभवात् संभवे वा परग्रहणेनैव गतार्थत्वात्—पूर्वस्मिन्निति विशेषणमुक्तस्यादिविधावित्यस्य । णषशब्देन तद्विधायकशास्त्राभिधानेऽपि कार्यसंपादनाय शास्त्रस्य प्रवृत्तत्वादप्रधानत्वात् कार्यस्यैव प्राधान्यमिति तस्यैवासत्त्व दर्शयतीत्याह—णत्वं षत्वं चेत्यादि । ननु णषशब्देन णत्वषत्वविधायकशास्त्राभिधानात् तत्र च षत्वशास्त्रस्य पूर्वभावित्वात् पूर्वनिर्देशे प्राप्ते परनिर्देश किमर्थं? इति चेत्, उच्यते—तथा निर्देशस्य षत्वे परे णत्वमसिद्ध भवतीति ज्ञापनार्थत्वादित्याह—एतत्सूत्रनिर्दिष्टयो० इत्यादि । षण इति विपर्ययनिर्देशे तु अभिषुणोतीत्यादि न सिध्यति, परे णत्वे षत्वस्यासत्त्वात् । तथा च "रघृवर्णात्०" इत्यनेन षकारात् विधीयमान णत्व न स्यादिति भाव । एतावता ग्रन्थेन भगवता कार्यासिद्धत्वपक्षो ध्वनित । इदानीं युक्तत्व शास्त्रासिद्धत्वपक्षस्य मन्वान आह—णषशास्त्रे

---

१ च्छन्त्यन्ये- मु० । ३ बा° म० म० ।

प्रवर्तमानेऽसद्वद्रष्टव्यम् । पूष्णः, तक्ष्णः; अत्र णत्वस्यासत्त्वादनोऽकारलोपो भवति । पिपठीः–अत्र षत्वस्यासत्त्वात्सकारस्य रुर्भवति । स्यादिविधौ च–अर्वाणौ, सर्पींषि; अत्र णत्वषत्वयोरसिद्धत्वादुपान्त्यदीर्घत्वं सिद्धम् । असत्पर इत्यधिकारो "रात्सः" ॥ २ । १ । ९० ॥ इति यावत्, स्यादिविधौ चेति तु "नोर्म्यादिभ्यः" ॥ २ । १ । ९९ ॥ इति यावत् ॥६०॥

## क्ताऽऽदेशोऽषि ॥ २ । १ । ६१ ॥

ककारेण उपलक्षितस्य तकारस्य स्थाने य आदेशः स षकारादन्यस्मिन् परे कार्ये स्यादिविधौ च कर्तव्येऽसन्

---

वेति । अयमाशय –शास्त्रस्यैवासिद्धत्व न्याय्यम्, कार्यासिद्धत्वस्वीकारे यथा देवदत्तस्य हन्तरि हतेऽपि न पुनर्देवदत्तस्य प्रादुर्भावो भवति तथा कार्येऽसिद्धत्वारोपेऽपि न पुन प्रकृते प्रत्यागमन भवति, तस्मात् पूष्ण इत्यत्र णत्वासत्त्वेऽपि पुनर्नकारस्य प्रत्यागमनाभावात्ताऽनन्ता प्रकृतिरिति तन्निबन्धनोऽनोऽकारलोपो न भवति । शास्त्रासिद्धत्वाङ्गीकारे तु "अनोऽस्य" इत्येव तावत् प्रवर्तते न णत्वशास्त्रमिति न भवल्लेप दोष । अपि च पौर्वापर्यं शास्त्रयोरेव मुख्य, कार्ययोस्तु गौण पूर्वेण परेण वा शास्त्रेण विधीयमानत्वादिति । मुख्यं तु तयो पौर्वापर्यं नास्ति, लक्ष्ये कार्याणां व्यवस्थानात् । लक्ष्यस्य च क्रमेण सन्निवेशाभावात् तद्गतकार्यस्यापि क्रमेण सन्निवेशाभाव इति सभवति मुख्ये गौणग्रहणमन्याय्यमिति शास्त्रस्यैवासिद्धत्व युज्यत इति । ननु सिद्धस्य णषशास्त्रस्य तत्कार्यस्य च कथमनेन वचनमात्रेणासत्त्वमारोपयितु शक्यम् ? इति चेत्, उच्यते–परार्थे प्रयुज्यमान शब्दो वतिमन्तरेणाप्यतिदेश गमयति, यथाऽब्रह्मदत्ते ब्रह्मदत्तोऽयमिति ब्रह्मदत्तवदय भवति । तद्वदिहापि असत्–असदिव, यथाऽसत् कार्यं न करोत्येव यत् सदपि सत्कार्यं न करोतीत्यर्थ । तदसत्साधर्म्यादसदित्युच्यते, तदेतदसत्त्ववचनमादेशनिमित्तकानां कार्याणा प्रतिषेधार्थं स्थानिनिमित्तकानां च प्राप्त्यर्थमिति भाव । **पूष्णः, तक्ष्ण इति** । अत्र पूषन्तक्षन्शब्दाभ्या शसि षष्ठीपञ्चम्येकवचने वा "रषृवर्णा०" इति "अनोऽस्य" इति चोभयो प्राप्तौ 'स्पर्द्धे परम्' इति न्यायेन परत्वादनोऽकारलोप बाधित्वा णत्व प्राप्त तस्यासद्वचनेन प्रवृत्त्यभावादन्नन्तत्वात् "अनोऽस्य" इत्यकारलोपो भवति । **पिपठीरिति** । पठे पठितुमिच्छतीति "तुमर्हादि०" ३।४।२१। इति सनि, "स्वार्यशितो० ४।४।३२। इतीटि, "सन्यङश्च" ४।१।३। इति द्वित्त्वे, "व्यञ्जनस्यानादे०" ४।१।४४। इत्यनादिलोपे, "सन्यस्य" ४।१।५९। इतीत्वे, "नाम्यन्तस्था०" इति षत्वे, पिपठिषतीति क्विपि "अत " ४।३।८२। इत्यकारलोपे, क्विप्लोपे च सौ "दीर्घङ्याब्०" इति षत्वकार्यस्यासत्त्वाश्रयणात् कार्यासत्त्वे च प्रयोजनान्तराभावात् प्रकृतिप्रत्यापत्ते "सो रु " इति रुत्वे "पदान्ते" २।१।६४। इति दीर्घे च "र पदान्ते०" इति विसर्ग । **स्यादिविधौ चेति** । अर्वन्शब्दादौकारे परत्वेन प्रवर्तमानमपि णत्व बाधित्वा असद्वचनात् स्याद्यधिकारविहितत्वात् "नि दीर्घ " इत्युपान्त्यदीर्घत्वे—**अर्वाणौ** । एव सर्पि शब्दात् "नपुसकस्य०" इति जस शसो वा श्यादेशे "स्वराच्छौ" इति नागमे षत्वस्यासत्त्वात् "न्समहतो " इत्युपान्त्यदीर्घत्वे—**सर्पींषि** । तदेव घटयति—**अत्रेत्यादि** । 'असत्पर इति स्यादिविधौ च' इत्युत्तरत्रानुवर्तत इत्याह—**असत्पर इत्यादि** । **अधिकार इति** । अधि–उपरि क्रियते–अनुवर्त्यत इत्यधिकार । अधिकारस्यावधि निर्दिशति—**रात्स इत्यादि** । नन्वेव तर्हि "पदस्य", "रात्स " इत्यादौ षष्ठीनिर्देशाना परस्या "षष्ठ्या अन्त्यस्य" इति परिभाषायामसिद्धत्वात् सा तेषु व्यवस्थापिका न स्यात्, प्रत्युत तस्या षष्ठ्या समीपयोगत्वकल्पने पदान्ते वर्तमानस्य सयोगस्य समीपे यस्तस्य लोप स्यादित्यर्थापत्तेश्च । एव "हो धुट्पदान्ते" इत्यादौ सप्तमीनिर्देशस्यासिद्धत्वात् "सप्तम्या पूर्वस्य" इति परिभाषानुपस्थितौ पूर्वस्यैवानन्तरे भवितव्यमित्यस्य नियमस्याभावात् सामान्येन पूर्वस्य परस्य वाऽनन्तरे धुटि च कार्यं स्यात्, तथा "अधश्चतुर्थात्०" इत्यादौ "पञ्चम्या निर्दिष्टे परस्ये"त्यनुपस्थित्या परयोर्व्यवहितयोश्च तकारयकारयो कार्यं स्यात्, इति चेद्, उच्यते–गौणस्यापि कार्यस्यासिद्धत्वाश्रयणात् तदुपायभूतस्य षष्ठीनिर्देशादेरसिद्धत्वाभाव ,शास्त्रासिद्धत्वपक्षे शास्त्रस्यासिद्धत्व विभक्तिनिर्देशश्च न शास्त्र तदङ्गत्वेऽपि तस्याप्राधान्यादसिद्धत्वाभाव , विभक्तिनिर्देशसामर्थ्याद्वा, अन्यथा विभक्तिविशेषोपादानमनर्थक स्यात्तस्मात् "षष्ठ्या अन्त्यस्य"इत्यादिपरिभाषासु तत्तन्निर्देशा नासिद्धा इति । अथवा–असिद्धत्वाङ्गीकारेऽपि परिभाषासु दोषाभाव , तथा हि–सञ्ज्ञापरिभाषाशास्त्रविषये पक्षद्वय, तत्र केचन सञ्ज्ञापरिभाषाणां कार्यकालता मन्यन्ते, यद्यपि कार्येभ्यो बहिर्भूतत्वेन निर्दिष्टा सञ्ज्ञापरिभाषास्तथापि गुणभूतानां तासा प्रधानानुरोधित्वेन कार्याभिन्नदेशता स्वीकर्तव्या, न चैव तर्हि देशभेदेन निर्देशस्तासां कथमिति वाच्यम्, तस्य सकलप्रधानोपकारार्थत्वात्, किञ्च प्रधानदेशे तासामुपदेशे यस्यैव प्रधानस्य समीपे उपदिष्टास्तदेव ता उपकुर्युर्न प्रधानान्तरम् । एव च पाठक्रमेण यद्यपि प्रधानेभ्यो भिन्नदेशा सञ्ज्ञापरिभाषास्तथाप्यर्थेन क्रमेण तद्देशा एव ता इति परत्व प्रधानापेक्षया तासां नास्तीति न तासु तान्यसिद्धानीति तेष्वपि पठिता व्यवस्थापिका एवेति । केचित्तु तासा यथोद्देशतामेव ( यत्रैवोपदेशस्तद्देशतामेव) युक्ता मन्यन्ते, तेषामयमभिप्राय –किञ्चिदेव प्रधान कार्यमभिसधाय ता उपदिश्यमाना यत्रैवोपदिष्टास्तद्देशा एव ता इति प्रधान पूर्वं ताश्च परा इति तासु तस्यासिद्धत्वमस्त्येव किन्तु यथा इष्टसिद्धये क्वचिज्जाति पदार्थ आश्रीयते क्वचिद्व्यक्तिरित्येवमेतयो पक्षयोरिष्टसिद्ध्यर्थं क्वचित्कस्यचिदाश्रयणमिति न कश्चिद्दोष । ननु यदि कार्यकाले सञ्ज्ञापरिभाषे इति स्वीक्रियेत तदा निपूर्वस्य स्फुरेरवपूर्वस्य गुरेश्च "ऋवर्णव्यञ्जनात्०"५।१।१७। इति घ्यणि धातोरनयो कुटादिपाठे सत्यपि "कुटादेर्ङिद्वदञ्णित्"४।३।१७। इति अञ्णित्प्रत्ययस्य ङिद्वत्वेऽत्र तु णितो ङित्वाभावात् "स्पर्द्धे" इति परिभाषायाश्च सत्वे "लघोरुपान्त्यस्य" ४।३।४। इत्युपान्त्यगुणाप्रवृत्तौ "भ्वादेर्नामिन०" २।१।६३। इति दीर्घत्वेऽनिष्टरूपापत्ते , इष्टस्य च गुणस्याभावेन विस्फोर्यमवगोर्यमिति रूपानापत्तेश्च । ननु "स्पर्द्धे" इति परिभाषयोपान्त्यगुणो भवत्विति चेत्, तन्न, आनैवेकल्यात्तस्या अत्रानवसरस्तथा हि–पूर्वपरयो शास्त्रयोरेकस्मिन् विषये विरोधे आपतितेऽप्रवृत्तौ क्रमेण च प्राप्तौ "स्पर्द्धे" इति परं व्यवस्थाप्यते, इह तु परस्मिन् लक्षणे कर्तव्ये पूर्वस्यासिद्धत्वादेकत्र पूर्वपरयोस्तुल्यबलयोरप्राप्ते "स्पर्द्धे" इत्यस्या आनैवैकल्याद्व्यवस्थापकत्व नास्तीति पूर्वस्यैव दीर्घत्वलक्षणस्य प्रवृत्तिर्नोत्तरस्येति चेत्, सत्यम्, मा भूत् परिभाषा सामर्थ्याद्युत्तरस्य प्रवृत्तिर्भविष्यतीत्यदोष । एव पूर्वस्याप्यपवादस्य परस्मिन्नुत्सर्गे कर्तव्ये नासिद्धत्वम्, अपवादवचनस्य निर्विषयत्वेन वैयर्थ्यप्रसङ्गात् । वचनप्रामाण्यात् क्रमेण तयो प्रवृत्तिरित्यपि न वाच्यम्, एव सति तत्र वेति निर्दिशेत् ॥ ६० ॥

**क्तादेशोऽषि** । अत्र असत् परे स्यादिविधौ च इत्यनुवर्तते । क्तादेश अषि परे च स्यादिविधौ असन् इत्यन्वय । क्तस्येत्यनुवादात् तस्य च समुदायरूपस्य कार्यानिर्देशात् ककार इविह प्राह्य न त्ववयव इत्याह—**ककारेणेत्यादि** । ककारेण उपलक्षित त क्त तस्यादेश इति षष्ठीसमास , स च क्तक्तवतुक्त्वादीन् प्रयोजयति । पूर्वस्मात् पर इत्यनुवृत्तौ परत्वमेतत्सूत्रापेक्ष ग्राह्य न क्तादेशविधिवाक्यापेक्षम्, किं मानमिति चेदुच्यते–अषीति प्रतिषेध एवात्र मान, तथा हि–"यजसृज०" इति षत्वरूप परं कार्यमभिप्रेत्याऽस्य योगस्य प्रवृत्तिस्तदा योग्यस्तेन 'अषीति प्रतिषेधसबन्ध ' यदि च क्तादेशविध्यपेक्षया परत्वविज्ञाने षत्वकार्यस्य तत परत्वाभावादनुपपन्नस्तेन सबन्ध षत्वे कर्तव्ये क्तादेशस्यासत्त्वाभावात् ।

द्रष्टव्यः । क्षामिमान्–अत्र "क्षैशुषिपचो मकवम्" ॥ ४ । २ । ७८ ॥ इति क्तादेशस्य मकारस्यासत्त्वात् "मावर्णान्तो०" इत्यादिना मतोर्मो वो न भवति, शुष्किका–अत्र ककारस्यासत्त्वात् "स्वज्ञाज०" इत्यादिनेत्वविकल्पो न भवति, "अस्यायत्तत्क्षिपकादीनाम्" ॥ २ । ४ । १११ ॥ इति तु नित्यमेव इत्वम् भवति, पक्वम्–अत्र वत्वस्यासत्त्वाद्गुटि कत्वं भवति; बुद्ध्वा, दग्ध्वा–अत्र क्तादेशस्य धकारस्यासत्त्वात् "गडदबादेश्च०" इत्यादिना आदेश्चतुर्थो न भवति । स्यादिविधौ च–लून्युः, पून्युः; अत्र क्तादेशस्य नत्वस्यासत्त्वात्याश्रित उङ् भवति । अधीति किम्? वृक्णः, वृक्णवान्; अत्र क्तादेशस्य नत्वस्य सत्त्वात् "यजसृज०" ॥ २ । १ । ८७ ॥ इत्यादिना धुंणिमित्तः षो न भवति, कत्वे त्वसत्त्वात्तद्भवत्येव । परे स्यादिवधौ चेत्येव? लग्नः, मग्नः; अत्रास्यादिविधौ पूर्वसूत्रकार्ये "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० ॥ इति प्रथमत्वे नत्वस्यासत्त्वाभावादघोषनिमित्तः प्रथमो न भवत्येव, एवं क्षामेण शुष्केणेत्यादौ पूर्वं णत्वं प्रति मत्वकत्वयोः सत्त्वात्तकारेण व्यवधानं नास्तीति णत्वं भवति ॥ ६१ ॥

## षढोः कः[2] सि ॥ २ । १ । ६२ ॥

षकारढकारयोः स्थाने सकारे परे ककार आदेशो भवति । (ष–)पिषू–पेक्ष्यति, पिपिक्षति; दृश्–अद्राक्षीत्, सृज्–अस्राक्षीत्, यज्–अयाक्षीत् । ढ–लिह्–लेक्ष्यति, लिलिक्षति; वह्–वक्ष्यति, गुहौ–निघोक्ष्यति । सीति किम्? पिनष्टि । असत्परे इत्यधिकारात् निघोक्ष्यतीत्यत्र ढस्थानस्य ककारस्यासत्त्वात् चतुर्थान्तलक्षण आदेश्चतुर्थो भवति ॥ ६२ ॥

---

क्षामिमानिति । 'क्षैं'क्षये, इत्यत "आत्सन्ध्यक्षरस्य" ४।२।१। इति कृताकारात् "गत्यर्थाकर्मक०" ५।१।११। इति कर्तरि विहितस्य क्तस्य "क्षैशुषिपचो मकवम्" इति मकारे क्षामस्यापत्य "अत इञ्" ६।१।३१। इतीञि–क्षामि, सोऽस्यास्तीति मतौ—क्षामिमान्, अथवा–क्षामोऽस्यास्तीति क्षामी "अतोऽनेकस्वरात्" इतीनि क्षामिणोऽत्र सन्तीति भिन्नवृत्तित्वात् असरूपत्वाद्वा तदन्तादपि मत्वर्थीयो न विरुध्यत इति "तदस्याऽस्त्यस्मिन्निति" मतौ–क्षामिमान् । अत्र च क्तादेशस्य मकारस्यासत्त्वात् "मावर्णान्तोपान्त०" इति मतोर्मकारस्य वकारो न भवतीत्याह—अत्रे-त्यादि । शुष्किकेति । शुष्यति स्मेति विग्रहे शुषे "गत्यर्थाकर्मक०" इत्यकर्मकलक्षण कर्तरि क्त, "क्षैशुषि०" इति क्तकारस्य ककारे, तत "आत्" इत्यापि च–शुष्का, अज्ञातादेर्विवक्षाया कपि "ङ्यादीदूत ०" २।४।१०४। इति ह्रस्वत्वे पुन ककारादापि ककारस्यासत्त्वात् "स्वज्ञाज०" २।४।१०८। इति विकल्पस्याभावात् "अस्यायत्तत्क्षिपकादीनाम्" इति नित्यमित्वम् । पक्वमिति । पच्यते स्मेति क्तप्रत्यये "क्षैशुषि०" इति "चज कगम्" इति च क्तकारस्य धातुचकारस्य च वत्वकत्वयो प्राप्तौ परत्वाद्वत्वे तस्यासत्त्वात् "चज ०" इति धुटि कत्व सिद्धम् । बुद्ध्वा, दग्ध्वा–बुधेर्दहेश्च बोधन पूर्वं दहन पूर्वमिति "प्राक्काले" ५।४।४७। इति क्त्वाप्रत्यये "भ्वादेर्दादेर्घ" २।१।८३। इति हस्य घत्वे "अधश्चतुर्थात्०" २।१।७९। इति तकारस्य धकारे तस्यासिद्धत्वात् "गडदबादेश्च०" २।१।७७। इति सूत्रेणादिचतुर्थाभावे "तृतीयस्तृतीयचतुर्थे" १।३।४९। इति तृतीय । स्यादिविधौ चेति । लूनीपुनी शब्दौ "क्तितिसीतीय०" इति सूत्रोक्तदिशा ससाध्य ततो जसि जसो क्तादेशस्य नत्वस्यासत्त्वात्याश्रिते "क्तितिसीतीय उङ्" इत्युङि कृते—लून्युः, पून्युरिति । अधीतिप्रतिषेधप्रयोजन पृच्छति–अधीति किम्? वृक्णः, वृक्णवानिति । वृश्चते कर्मकर्त्रो क्तक्तवतुप्रत्यययो "सस्य शषौ" इति धातुसस्य शत्वे ओदित्वात् क्ततकारस्य नकारे अधीतिवचनात् तस्यासत्त्वाभावात् "यजसृज०" इति धुड्निमित्तस्य षत्वस्याभावे कत्वस्य च भावे संयोगादिलोपे "रषृवर्णात्०" इति णत्वम् । लग्नः, मग्न इति । 'ओलस्जैति'व्रीडायाम्, 'टुमस्जोंत्' शुद्धौ, आभ्यां क्तकारस्य "सूयत्याद्योदित" ४।२।७०। इति तकारस्य नकारे संयोगादिलोपे च "चज कगम्" इति नत्वस्यासत्त्वात् गकार, अत्र परे स्यादिविधौ चेति वचनात् "अघोषे प्रथमोऽशिट" इति पूर्वसूत्रकार्ये नत्वस्यासत्त्वाभाव इति । पूर्वं णत्वमिति । एतत्सूत्रापेक्षया "षषमसत्परे०" इत्यत्र निर्दिष्टस्य णत्वस्य पूर्वत्वं बोध्यमित्याशय ॥ ६१ ॥

षढोः कः सि । स्पष्टोऽन्वय । षश्च ढश्चेति षढौ तयो षढोरिति षष्ठ्या द्विवचन स्थानिनिर्देशार्थमित्याह—षकारढकारयोः स्थाने इति । 'पिष्लृप्' संचूर्णनेऽतो भविष्यन्त्या स्यतौप्रत्यये "एकस्वरादनुस्वारेत" ४।४।५६। इतीट्प्रतिषेधे "लघोरुपान्त्यस्य" ४।३।४। इति गुणेऽनेन षस्य कत्वे "नाम्यन्तस्थाकवर्गात्०" इति सस्य षत्वे—पेक्ष्यति । पिपिक्षति–पिषे सनि, द्विर्वचनादौ च रूपम् । 'दृश्' प्रेक्षणे, धातोरद्यतन्यादौ, "सिजद्यतन्याम्" ३।४।५३। इति सिचि, "स सिजस्तेर्दिस्यो" ४।३।६५। इतीति, परत्वाद्गुणे प्रागेव "अ सृजिदृशोऽकिति" ४।४।१११। इत्यकारागमे, "व्यञ्जनानामनिटि" ४।३।४५। इत्यकारस्य वृद्धौ "यजसृज०" इति शस्य षत्वे तस्यानेन कत्वे "नाम्यन्तस्था०" इति सस्य षत्वे—अद्राक्षीत् । एव 'सृजत्' विसर्गे—अस्राक्षीत् । 'यजीं' देवपूजादौ—अयाक्षीत् । 'लिहींक्' आस्वादने, धातो स्यतौ उपान्त्यगुणे "हो धुट्पदान्ते" इति हस्य ढत्वेऽनेन कत्वे सकारस्य षत्वे—लेक्ष्यति । एव लिहे सनि "उपान्त्ये" ४।३।३४। इति सन किद्वात् गुणाभावे द्विर्वचनादौ—लिलिक्षति । 'वहीं'प्रापणे—वक्ष्यति । निशब्दात् परस्य 'गुहौंग्' संवरणे इत्यस्य स्यतौ गुणे "हो धुट्पदान्ते" इति ढत्वे नित्यस्यापि कादेशस्य परेऽसत्त्वात् "गडदबादे०" इति चतुर्थत्वे ततोऽनेन कत्वे निघोक्ष्यतीत्याह—असत्पर इत्यधिकारादित्यादि । ढस्थानस्येति । ढकार स्थान यस्य तस्येत्यर्थ । ककारस्यासत्त्वादिति । स्थानशब्दस्य निवृत्तिवचनत्वात् ककारो विधेयतया अस्त्यस्मिन्निति "अभ्रादिभ्य" इत्यकारे ककारशब्देन तच्छास्त्रस्याभिधानात् ढनिवर्तकस्य ककारशास्त्रस्यासत्त्वादित्यर्थ । शासेरपि सौ विकल्पेन ककारमिच्छन्ति कथित, तन्मते–शाक्षि, शास्सीति ॥ ६२ ॥

---

१ धुडि० पु० । २ कस्सि पु० ।

## भ्वादेर्नामिनो दीर्घो वोर्व्यञ्जने ॥ २ । १ । ६३ ॥

भ्वादेर्धातोरवयवभूतौ यौ रेफवकारौ तयोः परयोस्तस्यैव भ्वादेर्नामिनो दीर्घो भवति, व्यञ्जने–ताभ्यां चेत्परं व्यञ्जनं भवति । हूर्छा, हूर्छिता, मूर्छा, मूर्छिता, आस्तीर्णम्, प्रस्तीर्णम्, पूर्तम्, अवगूर्णम्, कूर्दते, ऊर्दिदिषते, चिकीर्षति, बुभूर्षति, बुभूर्षति, दीव्यति, सीव्यति, दीव्यात्; सीव्यात् । असद्विधौ स्वरादेशस्य लोपस्य स्थानिवद्भावप्रतिषेधात्–प्रतिदीव्ना, प्रतिदीव्ने । भ्वादेरिति किम्? चतुर्भिः, चतुर्थः, कुर्कुरमिच्छति–कुर्कुरीयति, एवं चतुर्यति; दिव्यति । नामिन इति किम्? स्मर्यते, भव्यम् । वोरिति किम्? बुध्यते । व्यञ्जन इति किम्? विकिरति । वोर्भ्वादिसंबन्धिविशेषणं किम्? दीव्यतेः क्वनिपि, वकारलोपे–दिवन्, दिव्ना; दिव्ने । नामिनो भ्वादिसंबन्धिविशेषणं किम्? दधिव्रज्या, प्रत्यासत्त्या तस्यैवेति विशेषण किम्? ग्रामणिव्रज्या ॥ ६३ ॥

## पदान्ते ॥ २ । १ । ६४ ॥

पदान्ते वर्तमानयोर्भ्वादिसंबन्धिनो रेफवकारयोः परयोस्तस्यैव भ्वादेर्नामिनो दीर्घो भवति । गीः, गीर्भ्याम्, गीर्षु,

---

**भ्वादेर्नामिनो दीर्घो वोर्व्यञ्जने**। भ्वादे वों भ्वादेरेव नामिन दीर्घ व्यञ्जने इत्यन्वय । भ्वादेरिति अवयवसबन्धषष्ठ्यन्तमेकमपि तन्त्रेणावृत्त्यैकशेषेण वा द्विधा भेदात् नामिन इत्यनेन वोरित्यनेन च विशेष्यद्वयेन प्राधान्यात् सबन्धमनुभवतीत्याह—**भ्वादेर्धातोरवयवभूतौ यौ रेफवकारौ, भ्वादेर्नामिन** इति। यदि तु तन्त्रादिना भेदद्वय न स्वीक्रियेत तदा एकस्यैकसंबन्धिनैव आकाङ्क्षाया शान्तत्वात् योग्यताया सत्त्वेऽप्यनाकाङ्क्षतत्सबन्धेऽतिप्रसङ्गात् नेतरेण सबन्ध स्यादिति भाव । भ्वादेरिति विशेषणविशिष्टेन वोरिति सप्तम्यन्तेन व्यञ्जने इति व्यधिकरणतया विशेष्यत इत्याह—**ताभ्यां चेत् परं व्यञ्जनमिति** । व्यञ्जनस्य भ्वादेरित्यनेन सबन्धाभावात् तस्य प्रत्ययस्य च व्यञ्जने साधारण्येनोदाहरति—**हूर्छा** इत्यादि । 'हुर्च्छा' कौटिल्ये, 'मुर्च्छा'मोहसमुच्छ्राययोरत "भिदादय" ५।३।१०८। इत्यङि, आपि, अन्यत्र तृचि, इटि, अनेन दीर्घत्वे "ह्रोदर्हस्वरस्या०" इति द्वित्वे, "अघोषे प्रथमोऽशिट" इति प्रथमश्चकार । आङ्पूर्वात् प्रपूर्वाच्च स्तृणाते क्ते, "ऋता-ह्रितीर्" ४।४।११६। इतीरादेशे, "रदादमूर्च्छमद क्तयोर्दस्य च" ४।२।६९। इति क्तकारस्य नत्वे, अनेन दीर्घत्वे, "रषवर्णात्०" इति णत्वे च—**आस्तीर्णम्, प्रस्तीर्णमिति** । 'पृश्' पालनपूरणयोरित्यत क्ते "ओष्ठ्यादुर्" ४।४।११७। इत्युरादेशे, अनेन दीर्घत्वे च—**पूर्तमिति** । अवपूर्वात् 'गुर्वै' 'उद्यमे' इत्यत क्ते—**अवगूर्णम्** । 'कुर्दि' क्रीडायामित्यतो वर्तमानायास्तेप्रत्यये शवि दीर्घत्वे—**कूर्दते** । 'उर्दि'मानक्रीडयोश्च अत सनि, इटि, "अयि र" ४।१।६। इति रेफस्य द्वित्वाभावात् "सन्यङश्च" इति दीति द्विर्वचनेऽनेन धातोरुकारस्य रेफे दीर्घत्वे—**ऊर्दिदिषते** । करोतेर्वृणोतेश्च "स्वरहनगमो सनि धुटि" ४।१।१०४। सनि दीर्घत्वे, इरादेशे उरादेशे च ततो द्विर्वचनादौ—**चिकीर्षति, बुभूर्षति** । 'दीवूच्' क्रीडादौ, 'षिवूच्' उतौ आभ्या वर्तमानयोस्तिवि, श्ये, अनेन दीर्घत्वे—**दीव्यति, सीव्यति** । एवमाशिष क्यति—**दीव्यात्, सीव्यात्** । ननु प्रतिपूर्वात् दिवे "ऌपूयुश्रपि०" उणा० ९०१। इति क्विपनि तृतीयैकवचने चतुर्थ्येकवचने च "अनोऽस्य" इत्यकारलोपे तस्य "स्वरस्य परे प्राग्विधौ" इति स्थानिवद्भावे व्यञ्जनाभावात् प्रतिदीव्ना, प्रतिदीव्नेति कथ दीर्घत्वमित्याह—**असद्विधावित्यादि** । **चतुर्भिरिति** । चतुर् भिस् इत्यवस्थाया रुत्वविसर्गौ । **चतुर्थ** इति । चतुर्णां पूरण इति विग्रहे "चतुर" ७।१।१६३। इति थट्प्रत्यय । **कुर्कुरीयतीति** । करोते "श्वशुरकुकुन्दुर०" उणा० ४२६। इति निपातनात् कुर्कुरस्तमिच्छतीति विग्रहे क्यनि ईत्वे तिवादौ रूपम् । एव चतुर इच्छति क्यनि—**चतुर्यति** । एव दिवमिच्छति—**दिव्यति** । एतेषु भ्वादिग्रहणात् भ्वादेरेव धातोरवयवयो रेफवकारयोर्धातोरेव नामिनो दीर्घो भवतीति विज्ञानात् नामधातोर्न भवति । **स्मर्यत** इति । 'स्मृ' चिन्तायामतस्ते प्रत्यये, "क्य शिति" ३।४।७०। इति क्ये, "क्ययङाशीर्ये" ४।३।१०। इति गुणे रूपम् । **भव्यमिति** । अस्ते "अस्तिब्रुवोर्भूवचावशिति" ४।४।१। इति भ्वादेशे "य एचात" ५।१।२८। इति ये, "य्यक्ये" इत्यवादेशे भवति । अत्र नामिन इति ग्रहणाद्दीर्घो न भवति । **बुध्यते** इति । 'बुधिंच्' ज्ञानेऽतो वर्तमानायास्तेप्रत्यये "दिवादे श्य" इति श्ये भवति । अत्र वोरभावान्न भवति । **विकिरतीति** । विपूर्वात् 'कृत्'विक्षेपे, इत्यतस्तिवि "तुदादे श" इति शे इरादेशे च रूपम् । वोरित्यत्रावृत्तभ्वादिधात्ववयवत्वविज्ञानस्य किं प्रयोजनम्? इति पृच्छति—**वोर्भ्वादिसंबन्धिविशेषणं किमिति** । **दीव्यते॰ क्वनिपीति** । दिवे "मन्वन्क्वनिब्विच् क्वचित्" ५।१।१४७। इत्यनेन क्वनिप्प्रत्यय इति शेष । **वकारलोप** इति । "य्वो प्वय्व्यञ्जने लुक्" ४।४।१२१। इत्यनेनेति शेष । **दिव्ना, दिव्ने** इति । अत्र प्रत्ययवकारत्वाद्दीर्घत्वाभाव , नन्वत्र पिति कृति "ह्रस्वस्य त ०" ४।४।११३। इति तागम कस्मात् न? इति चेत्, "मन्वन्क्वनिप्०" इति सूत्रे क्वचिद्ग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् क्वचिदय स्वरूपेण न भवति क्वचित् पित् न भवतीति तागमाभाव । नामिन इत्यत्र भ्वादिसंबन्धित्वविज्ञानस्य फल पृच्छति—**नामिनो भ्वादिसंबन्धिविशेषणं किमिति** । **दधिव्रज्येति** । व्रजेर्भावे "आस्यटिव्रज्यज क्यप्" ५।३।९७। इति क्यपि, दधिधारणे धातो "पदि पठि०" उणा० ६०७। इति सूत्रे मण्यादित्वात् इप्रत्यये, दध्नो व्रज्या दधिव्रज्येति भवति, अत्र धातोरिकाराभावाद्दीर्घत्वाभाव । नन्वेव ग्राम नयतीति क्विपि, 'ग्रामाग्रा०" २।३।७१। इति णत्वे, "वेदूतोनव्ययय्वृदीच्ङीयुव पदे" २।४।९८। इति ह्रस्वत्वे, ग्रामणिनो व्रज्या ग्रामणिव्रज्या इत्यत्र धात्विकारसद्भावाद्दीर्घत्वप्रसङ्ग इति चेत्, उच्यते–भ्वादेर्भ्वादेरित्यनुच्चा आवृत्त्यैकत्वेनोपादानस्यैतदेव प्रयोजन यदेकस्यैव धातोर्द्वय भवति, अत्र तु भेदाद्दीर्घत्वाभाव एतदेवाह—**प्रत्यासत्त्येति** । अत्रैकेन प्रयत्नेन द्वयोरुपादान प्रत्यासत्ति , शब्दान्तरं प्रतीत्य शब्दान्तरस्यासत्तेरिति व्युत्पत्ते ॥ ६३ ॥

**पदान्ते** । अत्र भ्वादेर्नामिनो दीर्घो वोरित्यनुवर्तते, पदान्ते भ्वादेर्वो ( तस्यैव भ्वादे ) नामिन दीर्घ इत्यन्वयस्तदर्थमाह—**पदान्ते वर्तमानयोरित्यादि** । शेष प्राग्वद्बोध्यम् । **गीरिति** । गिरते क्विपि "ऋता ह्रितीर्" इतीरादेशे सौ तल्लुकि पदान्तेऽनेन दीर्घत्वे च

गीस्तरा, गीरर्थः, धूः, धूर्मान्, आशीः, आशीर्भिः, सजूः, सजूःषु, पिपठीः; पिपठीर्ष्यः । पदान्त इति किम्? गिरौ, गिरः, लुवौ, लुवः । नामिन इत्येव? अजागः । वोंरित्येव? मधुलिट् । भ्वादेरित्येव? अग्निः, वायुः; चतुर्भिः ॥ ६४ ॥

## न यि तद्धिते ॥ २ । १ । ६५ ॥

यकारादौ तद्धिते परे यौ वौं तयोः परयोर्नामिनो दीर्घो न भवति । धुरं वहति—धुर्यः, गिरि साधुः—गिर्यः, वकारान्तो धातुर्नाम्युपान्त्यस्तद्धिते न संभवति । यीति किम्? गीर्वत्, धूर्वत् । तद्धित इति किम्? गिरमिच्छति—गीर्यति, धूर्यति, गीरिवाचरति—गीर्यते, एवं धूर्यते; क्ये—कीर्यते, गीर्यते, दीव्यति, सीव्यति, कीर्यात्, गीर्यात्, दीव्यात्; सीव्यात् । केचित्तु क्यन्क्यङोरपि प्रतिषेधमिच्छन्ति, तन्मते—गिर्यति, गिर्यते; धुर्यति, धुर्यते इत्येव भवति । इह कस्मात् न भवति? पुर्याम्, गिर्योः, किर्योः; बहिरङ्गलक्षणस्य यत्वस्यासिद्धत्वेन व्यञ्जनस्याभावात् ॥ ६५ ॥

## कुरुच्छुरः ॥ २ । १ । ६६ ॥

कुरुच्छुरोः संबन्धिनो नामिनो रेफे परे दीर्घो न भवति । कुर्यात्, कुर्वः, कुर्मः, छुर्यात्; छुर्यते । कुर्वित्यु-

---

सिध्यति । "नाम सिदय्व्यञ्जने" इति पदत्वे उदाहरति—**गीर्भ्यामि**त्यादि । **गीर्ष्वि**ति । "अरो सुपि र" इति रेफस्य रत्वे षत्वे च भवति । **गीस्तरे**ति । प्रकृष्टा गीरिति विग्रहे "द्वयोर्विभज्ये च तरप्" ७।३।६। इति तरपि दीर्घे च रेफस्य सत्वे रूपम् । अन्तर्वर्तिविभक्त्यपेक्षया पदत्वे बहुव्रीहौ तत्पुरुषे वा—**गीरर्थ** इति । धुर्वे क्विपि "राल्लुक्" ४।१।११०। इति वलोपे सौ पदत्वे दीर्घत्वे च—**धूरि**ति । धूर्विद्यते यस्येति विग्रहे "तदस्याऽस्त्यस्मिन्निति०" मतौ—**धूर्मान्** । आङ् 'शासुङ्' इच्छायामत "क्रुत्संपदादिभ्य क्विप्" ५।३।११४। इति क्विपि इसादेशे सौ तल्लुकि रुत्वे दीर्घत्वे च—**आशीरि**ति । 'जुषैति' प्रीतिसेवनयोरत सह जुषत इति क्विपि "ङस्युक्त कृता०" इति समासे "सजुष" इति निर्देशात् सहस्य सभावे सौ तल्लुकि "सजुष" २।१।७३। इति रुत्वे दीर्घत्वे—**सजूः** । पिपठीरित्यादावुक्ता प्रक्रिया । जागर्तेर्ह्यस्तन्यां दिवि "नामिनो गुणो०" इति गुणे "व्यञ्जनाद्दे सश्च द" ४।३।७८। इति दिवो लुकि "अड् धातोरादिर्ह्यस्तन्यां चामाङा" ४।४।२९। इत्यडागमे—**अजागः** । अत्र नामित्वाभावान्न दीर्घ । **अग्नि**रित्यादि । अग्निशब्दात् सौ रुत्वे भ्वादिसंबन्धिनो रेफस्याभावान्न भवति दीर्घ ॥ ६४ ॥

**न यि तद्धिते** । अत्र नामिनो दीर्घो वोंरित्यनुवर्तते, यि तद्धिते वों नामिन न दीर्घ इत्यन्वय । "सप्तम्या आदि" इत्यादिसंप्रत्ययादाह—**यकारादौ तद्धित** इति । **धुर्यः, गिर्य** इति । वृत्तौ प्रदर्शिते विग्रहे यथाक्रमं "धुरो यैयण्" ७।१।३। इति "तत्र साधौ" ७।१।१५। इति च यप्रत्ययेऽनेन "भ्वादेर्नामिन०" इति प्राप्तदीर्घत्वस्य प्रतिषेध । नन्वत्र वोंरित्यनुवर्तनाद्यकारादितद्धितपरकरेफे नामिनो दीर्घ इत्यस्य धुर्य इत्याद्युदाहरणदानात्तादृशवकारे तददानान्न्यूनतेत्यत आह—**वकारान्तो धातुर्नाम्युपान्त्य** इत्यादि । अय भाव —वान्तदिव् इत्यादि धातो क्विबादावप्रयोगिणि वकारस्य "अनुनासिके च च्छ्व शूट्" ४।१।१०८। इत्यूटि सति वकारान्तत्वाभाव, क्विपि तु गुणे कृते दीर्घरूपस्य भावात् **पुनर्दीर्घकरणवैयर्थ्यम्**, यद्यपि दिव्यमित्यत्र संभवति वान्तो नाम्युपान्त्यश्च धातुस्तथापि तत्र डिव्प्रत्ययान्तस्य औणादिकत्वात् दिवो न धातुत्वमिति वान्तनाम्युपान्त्यधातोरसंभव इति । **गीर्वदिति** । गीरिव इति विग्रहे "स्यादेरिवे" ७।१।५२। इति वति "नामसिद०" इति पदत्वे, यकाराभावात् प्रतिषेधाभावे "पदान्ते" इति दीर्घत्वे रूपम् । "अमाव्ययात्०" इति क्यनि—**गीर्यति, धूर्यतीति** । अत्र यकारादिपरत्वात्तस्य च तद्धिताभावात् प्रतिषेधाभाव । क्यङि—**गीर्यते, धूर्यते** । 'कॄत्' विक्षेपे, 'गॄत्' निगरणे, अनयो "क्य शिति" ३।४।७०। इति क्ये, "ॠतां क्ङितीर्" इतीरादेशे—**कीर्यते, गीर्यते** । 'दिवूच्' क्रीडादौ, 'षिवूच्' उतौ, अनयो श्ये—दीव्यति, सीव्यति । आशी क्याति—**कीर्यादि**त्यादि । मतान्तरमुपन्यस्यति—**केचित्तु** इत्यादिना । 'पॄश्' पालनपूरणयो, 'गॄत्' निगरणे, 'कॄत्' विक्षेपे इत्येभ्यो "नाम्युपान्त्यकॄगॄशॄपॄभ्य कित्" उणा० ६०९। इति किति इप्रत्यये, पुरिशब्दात् "स्त्रिया ङितां वा०" इति ङेर्दामादेशे किरिगिरीभ्यामोसि यत्वे च व्यञ्जनसद्भावात् दीर्घत्व कस्मान्न भवति? उच्यते—प्रकृतिमात्राश्रितत्वेनान्तरङ्गे दीर्घत्वे प्रत्ययाश्रितत्वेन यत्वस्य बहिरङ्गत्वेनासिद्धत्वात् न भवतीत्याह—**इह कस्मादि**त्यादि । अथवा—'उणादयोऽव्युत्पन्नानि नामानि' इति सिद्धान्तादरेऽव्युत्पन्नत्वादुणादीनां भ्वादिसंबन्धित्वाभावाद्दीर्घत्वाभावः । नन्वेतत्पक्षाश्रीकारे 'प्रतिदीव्ना' इत्यत्रापि दीर्घत्व न सिध्यति, तस्याप्यौणादिकत्वादिति । अथ चैतदर्थं 'उणादयो व्युत्पन्नानि नामानी'ति स्वीक्रियते चेत्सदा न वाच्यम् 'उणादयोऽव्युत्पन्नानीति', न ह्येकस्मिन् सूत्रे व्युत्पत्तिपक्षोऽव्युत्पत्तिपक्षश्चोभयमाश्रयितु युक्तम् । यस्यापि मते प्रतिदिवन्शब्द "मन्वन्क्वनिब्विच् क्वचित्" इति क्वनिप्प्रत्ययान्तस्तस्यापि दीर्घत्व न सिध्यति, "य्वो प्वय्व्यञ्जने०" इति वलोपे स्वादिवकारान्तत्वाभावादिति स्थविर. क्रियतेऽत्र प्रयत्नस्तथाहि—व्यक्ति पदार्थ इत्येतद्दर्शनमाश्रीयते, दर्शनेऽस्मिन् प्रतिलक्ष्य लक्षणभेदो भवतीति यावन्ति लक्ष्याणि तावन्ति लक्षणानि भवन्तीति । तत्र भिन्नेषु लक्षणेषु लक्ष्यानुरोधात् क्वचित्प्रतिदीव्नेत्यादौ व्युत्पत्तिपक्ष आश्रीयते क्वचित्पुनर्दोप पुर्यामित्यादौ अव्युत्पत्तिपक्ष इति सर्वं समाहितम् । नन्ववकारलोपस्य बहिरङ्गासिद्धत्वाद्व्यञ्जने परे धातोर्वकारान्तत्वाभावात् नेद प्रवर्तत इति चेत्, न, अनित्यत्वादस्या परिभाषाया अत्राप्रवृत्तेरिति ॥ ६५ ॥

**कुरुच्छुर** । पूर्वस्मान्नामिनो दीर्घ इति न इति चानुवर्तते, कुरुच्छुरोर्वकाराभावात् र इत्येव सप्तम्यन्तमत्रानुवर्तते, तथा चायमन्वय —कुरुच्छुरो नामिन रेफे दीर्घ न इति । तदाह—**कुरुच्छुरोः संबन्धिन** इत्यादि । **कुर्यादि**त्यादि । कृग सप्तम्यां याति वर्तमानाया वसि मसि च "कृगतनादेरु" ३।४।८३। इत्युप्रत्यये, "नामिनो गुणोऽक्ङिति" इति गुणे, "अत शित्युत्" ४।२।८९। इति उकारे, "कृगो यि च" ४।२।८८। इत्युकारलोपेऽनेन दीर्घत्वप्रतिषेधे भवति । **छुर्यात्, छुर्यते** । 'छुरत्' छेदनेऽत आशी क्याति "क्य शिति" इति क्ये भवत । कुर्वित्युकारनिर्देशात् 'कुरत्'शब्दे इत्यस्य न भवति, अन्यथा प्रतिपदोक्तत्वादस्यैव ग्रहण स्यादत आह—**कुर्वि**त्यादि । कृग इति तु

---

१ मु° पु० ।

कारः किम्? 'कुरत्' शब्दे, कुर्यात्, कूर्यते। केचिदस्यापि प्रतिषेधमिच्छन्ति। अथ द्विर्वचने पूर्वस्य कस्माद् दीर्घो न भवति? रीः रिर्वां–रिर्यतुः, रिर्युः; वीः–विव्यतुः, विव्युः; बहिरङ्गलक्षणस्य यत्वस्यासिद्धत्वेन व्यञ्जनस्याभावात्। संविव्याय, विव्याथेत्यादौ तु नामिनोऽसिद्धत्वात् ॥ ६६ ॥

## मो नो म्वोश्च ॥ २ । १ । ६७ ॥

मकारान्तस्य म्वादेरन्तस्य पदान्ते वर्तमानस्य मकारवकारयोश्च परयोर्नकारादेशो भवति, स चासन् परे। प्रशान्, प्रतान्, प्रदान्, परिक्लान्; प्रशान्भ्याम्, प्रतान्भ्याम्, प्रदान्भ्याम्, परिक्लान्भ्याम्; नत्वस्यासत्त्वात् नलोपाभावः। म्वोः खल्वपि–जगन्मि, जंगन्वः; जंगन्मः, जगन्वान्; ननन्मि, नंनन्वः, नंनन्मः। म्वोश्चेति किम्? प्रशामौ, प्रतामौ। म इति किम्? छित्, भित्। म्वादेरित्येव? इदम्, किम् ॥ ६७ ॥

## स्रन्सुध्वन्सुक्वस्सनडुहो दः ॥ २ । १ । ६८ ॥

स्रन्सुध्वन्सोः क्वस्प्रत्ययान्तस्य सकारान्तस्यानडुहूशब्दस्य च योऽन्त्यस्तस्य पदान्ते वर्तमानस्य दकारो भवति। उखास्रत्, उखास्रद्; पर्णध्वत्, पर्णध्वद्; विद्वद्, विद्वत् कुलम्; उपसेदिवद्, उपसेदिवत्कुलम्; स्वनडुद्, स्वनडुत्कुलम्; उखास्रद्भ्याम्, पर्णध्वद्भिः, विद्वत्सु, विद्वत्ता, उपसेदिवत्तमः; अनडुद्भ्याम्। क्वस्सिति द्विसकारपाठः किम्?

---

नोच्यते चिकीर्षतीत्यत्र उप्रत्ययाभावेऽपि प्रतिषेधप्रसङ्गादिति। मतान्तरमाह—**केचिदि**त्यादि। शाकटायना अपीद समुल्लिलिखु "धातोर्मीक्" १।२।९। सूत्रे अमोघावृत्तौ। ननु 'रीँश्' गतिरेषणयो, 'रिँ'गतौ, 'वीँक्' प्रजनकान्त्यसनखादनेषु एभ्योऽतुसि उसि च द्वित्वे "योऽनेकस्वरस्य" इति यत्वे दीर्घत्व कस्मात् न सभवति? उच्यते–प्रत्ययाश्रितत्वेन बहिरङ्गस्य यत्वस्य प्रकृतिमात्राश्रितत्वेनान्तरङ्गे दीर्घत्वेऽसिद्धत्वाद्व्यञ्जनाभावात् दीर्घत्वाभाव इत्याह—**अथ द्विर्वचन** इत्यादि। 'व्येंग्' सवरणे, 'व्यध' ताडने आभ्यां परोक्षाणवि "व्यस्थव्णवि" ४।२।३। इति प्रतिषेधादात्वाभावे "द्विर्धातु ०" इति द्वित्वेऽनादिव्यञ्जनलोपे "ज्याव्येव्यधिव्यचिव्यथेरि" ४।१।७१। इति पूर्वस्येकारे तस्य पूर्वापेक्षत्वाद्बहिरङ्गत्वेनासिद्धत्वात् नामिनोऽभावात् दीर्घत्वाभावे "नामिनोऽकलिहले" इति वृद्धौ आयादेश इत्याह—**संविव्याये**त्यादि ॥ ६६ ॥

**मो नो म्वोश्च**। अत्र म्वादेरिति पदान्त इति चानुवर्तते, म पदान्ते म्वादे न च म्वोरित्यन्वय। अनुवर्तमानस्य म्वादेरित्यस्य म इति विशेषणमत आह—**मकारान्तस्य म्वादेरि**ति। म्वादेर्योऽवयवो मकारस्तस्येति विशेष्यमाणे गम्म्यते, जङ्गम्म्यते इति "अदीर्घाद्वि०" इति द्वित्वादावपि मकारस्य प्रसज्येत। ननु पूर्वत्रावयवषष्ठ्यन्त म्वादेरिति विशेषण कथमत्र मकारस्य विशेष्य भवितुमर्हति? न हि 'गोधा सर्पन्ती सर्पणादहिर्भवती'ति न्यायादिति चेत्, नैवम्, द्रव्येष्वय न्यायो यदनुवर्तनाद्द्रव्य द्रव्यान्तरं न भवति, शब्देषु तु द्वैत भवतीति नित्यदर्शने स एव शब्दोऽनुवर्तत इति, उच्चरितप्रध्वंसी शब्द इति दर्शने तु तत्सदृश शब्दान्तरमुत्तरत्रोपतिष्ठत इति तत्त्वेनाध्यवसानाच्च स एवेत्युच्यत इति म्वादे शब्दान्तरत्वाद्युक्ता तस्य विशेष्यता, अन्यथा न ह्युपाधेरुपाधिर्भवतीति (विशेषणस्य वा विशेषणमितीति) कथ तस्य विशेषणीभूतस्य मकारो विशेषण स्यादिति युक्तमुक्त मकारान्तस्य म्वादेरिति। "षष्ठ्या अन्त्यस्य" इत्यन्तलाभात्तस्य च कार्यित्वेन प्राधान्यात् पदान्त इति विशेषणमत आह—**अन्तस्य पदान्ते वर्तमानस्ये**ति। तस्य धातुविशेषणत्वे तु **प्रशान्, प्रतान्** इत्यादावेव स्यात्, उपपदसहित एव हि धातु पदान्ते सभवति निरुपपदे तु धातुरेव पद स्यात्र पदान्ते, तत्र च व्यपदेशिवद्भाव आश्रयणीय स्यादित्युक्तमन्तस्य पदान्त इति–पदान्ते वर्तमानस्यान्तस्येत्यर्थ। स एव चान्तो मकारवकाराभ्यां विशेष्यत इति म इति कार्यी, न इत्यकारस्योच्चारणार्थत्वात् न इति प्रथमान्त कार्यं, व्यतिक्रमस्तु नाशङ्कनीय –कार्यी निमित्त कार्यमित्येष हि निर्देशक्रम इति। 'शमू' 'दमूच्' उपशमे, 'तमूच्' काङ्क्षायाम्, 'क्लमूच्' ग्लानौ, प्रशाम्यतीत्यादिविग्रहे क्विपि "अहन्पञ्चमस्य०" ४।१।१०७। इति दीर्घत्वे सेर्लुकि अनेन नत्वे नकारस्य चासत्त्वात्। नलोपाभाव इत्याह—**नत्वस्ये**त्यादि। विधानसामर्थ्यात् नलोपाभाव इति त्ववाच्यम्, विधानस्य मवयोश्चारितार्थ्यात्। 'गम्लृ' गतावतो "गत्यर्थात् कुटिले" ३।४।११। इति यङि द्वित्वे अनादिलोपे, "गहोर्जः" ४।१।४०। इति जकारे, "मुरतो०" ४।१।५१। इति म्वागमे, "तौ मुमो०" इति वर्गान्त्ये, "बहुल लुप्" ३।४।१४। इति यङो लुपि, मिवस्मसि अनेन नकारे—**जङ्गन्मी**त्यादि। अस्यैव धातो "तत्र क्वसुकानौ तद्वत्" ५।२।२। इति क्वसौ द्वित्वे सौ उदित्वात् नोऽन्ते "न्सम-हतो" इति दीर्घत्वे "पदस्य" इति सलोपे—**जगन्वान्** इति। 'णम' प्रह्वत्वे, धातोः "व्यञ्जनादेकस्वराद् भृशाभीक्ष्ण्ये यङ् वा" ३।४।९। इति यङि शेष पूर्ववदिति—**नंनन्मी**त्यादि ॥ ६७ ॥

**स्रन्सुध्वन्सुक्वस्सनडुहो दः**। पदान्ते इति वर्तते, पदान्ते स्रन्सुध्वन्सुक्वस्सनडुह द इत्यन्वय। क्वस स् इति षष्ठीतत्पुरुषगर्भात् स्रन्स् च ध्वन्स् च क्वस् च अनडुह् चेत्येषां समाहारद्वन्द्वात् षष्ठ्या निर्देश –स्रन्सुध्वन्सुक्वस्सनडुह इति। सत्यपि सभवे स्रन्सुध्वन्सौ सकारेण न विशेष्येते, व्यभिचाराभावात्, क्वसश्च प्रत्ययत्वात् तदन्तसंप्रत्ययोऽत आह—**क्वस्प्रत्ययान्तस्य च सकारान्तस्ये**ति। "षष्ठ्या अन्त्यस्य" इति विधेयत्वेन अन्त्यस्य कार्यित्वात् तद्विशेषण पदान्त इत्याह—**योऽन्त्यस्तस्य पदान्ते वर्तमानस्ये**ति। 'स्रंसूङ्' अवस्रंसने, 'ध्वसूङ्' गतौ च, "उषे किलुक् च" उणा० ८८। इति किति खे आपि च–उखा, 'पॄश्' पालनपूरणयोरत "इणुर्विशावेणिपॄ०" उणा० १८२। इति णे–पर्णम्। उखया स्रंसते इति पर्णानि ध्वसत इति च विग्रहे क्वौ "नो व्यञ्जनस्या०" ४।२।४५। इति नलोपे सौ तल्लुक्यनेन दत्वे "विरामे वा" इत्येकत्र तकार, तकारे तु विधीयमाने परेऽसदिति वचनात् "धुटस्तृतीय" इति दत्वाभावात् दकारश्रवण न स्यादिति सूत्रे दकारो विहित —**उखास्रदि**त्यादि। **विद्वदि**ति। विदे "वा वेत्ते क्वसु" ५।२।२२। इति क्वसौ, "अनतो०" इति सेर्लुपि अनेन दत्वे भवति। **उपसेदिवदि**ति। उपपूर्वात् 'षद्लृ' विशरणादौ, इत्यत पूर्ववत् क्वसौ "अनादेशादे०" ४।१।२४। इत्येत्वे "घसेकस्वरात ०" ४।४।८३। इतीटि

---

१ स्रसध्वस० पु०।  २ °न्तस्त० पु०।

सान्तस्यैव यथा स्यात्, इह मा भूत्–विद्वान्!, हे विद्वन्!, उपसेदिवान्, हे उपसेदिवन्!; सकारस्य "पदस्य" ॥२।१।८९॥ इति लोपेन निवर्तितत्वात्। एवं तर्हि अनड्वान्, हे अनड्वन्! इत्यत्र नकारस्यापि आप्नोति, तत्र विशेषणाभावात्, नैवम्, नकारविधानसामर्थ्यात् न भविष्यति। एतच्च दत्वं 'येन नाप्राप्ते०' इति न्यायात् रुत्वढत्वयोरेव बाधकम्, संयोगान्तलोपे पुनः प्राप्ते चाऽप्राप्ते चारभ्यत इति तस्य बाधकं न भवति। पदान्त इत्येव? उखास्रसौ, पर्णध्वसौ, विद्वांसौ; अनड्वाहौ ॥ ६८ ॥

## ऋत्विज्दिश्दृश्स्पृश्स्रज्दधृषुष्णिहो गः ॥ २ । १ । ६९ ॥

एषां पदान्ते वर्तमानानां गोऽन्तादेशो भवति। ऋतुमृ, ऋतौ, ऋतवे, ऋतुप्रयोजनो वा यजते–ऋत्विक्, ऋत्विग्, दिश्यते इति–दिक्, दिग्; पश्यति दर्शन वा–दृक्, दृग्, अन्य इव दृश्यते–अन्यादृग्, अन्यादृक्; एवं यादृग्, यादृक्, तादृग्, तादृक्; घृत स्पृशति–घृतस्पृग्, घृतस्पृक्, मन्त्रेण स्पृशति मन्त्रस्पृग्, मन्त्रस्पृक्; सृज्यत इति कुंधूसपदादित्वात् क्विप्, अत एव निर्देशात् ऋतो रत्व च, 'सृ' गताविल्यस्य वा कज्–स्रग्, स्रक्; धृष्णोतीति दधृष्, अत एव निर्देशाद् द्वित्वम्–दधृग्, दधृक्, ऊर्ध्वं स्निह्यति नह्यति वा, अत एव निर्देशात् उदो दकारस्य लोपे सस्य षत्व, नहेर्नकारस्य च ष्णिरादेशः–उष्णिग्, उष्णिक्, ऋत्विग्भ्याम्, दिग्भ्याम्, दृग्भ्याम्, घृतस्पृग्भ्याम्, स्रग्भ्याम्, दधृग्भ्याम्, उष्णिग्भ्याम्। पदान्त इत्येव? ऋत्विजौ, दिशौ, दृशौ, घृतस्पृशौ, स्रजौ, दधृषौ; उष्णिहौ ॥ ६९ ॥

## नशो वा ॥ २ । १ । ७० ॥

नशेः पदान्ते गोऽन्तादेशो वा भवति। जीवस्य नशनम्–जीवनग्, जीवनक्; पक्षे–जीवनड्, जीवनट्, जीवनग्भ्याम्, जीवनड्भ्याम्। पदान्त इत्येव? जीवनशौ ॥ ७० ॥

## युजञ्चक्रुञ्चो नो ङः ॥ २ । १ । ७१ ॥

युज्ञ्चक्रुञ्चां नकारस्य पदान्ते वर्तमानस्य ङकार आदेशो भवति। युनक्तेः क्विपि, धुटि नागमे, संयोगान्तलोपे–

नपुंसके सेर्लुपि दत्वे च रूपम्। **स्वनडुदिति**। एकत्वे कच्प्रसङ्गात् शोभना अनड्वाहो यस्य कुलस्येति विग्रह, शेष पूर्ववत्। "नाम सिदय्व्य ञ्जने" इति पदान्तत्वादुदाहरति—**उखास्रद्भ्यामित्यादि**। **विद्वत्तेति**। विदुषो भावो विद्वत्ता "भावे त्वतल्" ७।१।५५। **उपसेदिवत्तम** इति। बहूना मध्ये प्रकृष्ट उपसेदिवान् इति विग्रहे "प्रकृष्टे तमप्" ७।३।५। इति तमप्। यङ्लुबन्ताभ्यां स्रसिध्वसिभ्यां क्विप् न दृश्यते। क्रसौ ककारो 'वसं'निवासे 'वसिक्' आच्छादने अनयोर्व्युदासार्थ, तेन वसे क्विपि यजादित्वात् य्वृति दीर्घत्वे–ऊ, क्षौम वस्ते क्विपि क्षौमव। ननु वसतिवस्त्यो सकारान्तत्वाव्यभिचारात् व्यभिचारे च विशेषणस्यार्थवस्वात् व्यभिचारिण क्स एव ग्रहण भविष्यति, वस्सिति सकारोपादानात्, इति किमर्थं? क्रस्सेत्यत्र ककारकरणमिति चेद्, उच्यते–तदभावेऽन्यथाऽपि प्रतीतौ यङ्लुबन्तयोरेतयोरेव स्नस्तनीसिवन्तयोर्विशेषविहितत्वेन "से स्त्रां च रुर्वा" ४।३।७९। इति सिव्लोपाभावे वस्सिति रूपाद्ग्रहण स्याव् इतीह मा भूत् इति ककारकरणम्। **विद्वान्, विद्वन्नित्यादि**। विद्वत्शब्दात् सौ, उदित्वात् नागमे, "न्समहत" इत्यनामन्त्र्ये सौ दीर्घत्वे, "पदस्य" इति प्रकृतिसकारलोपे, सकारान्तत्वाभावात् नकारस्य दत्वाभाव। ननु अनड्वहशब्दात् "अनडुह सौ" १।४।७२। इति नागमे "पदस्य" इति हलोपे दत्वप्रसङ्ग इति चेत्, नैवम्, यदि कृतस्यापि नकारस्य दत्व स्यात् तद्विधानमनर्थक स्यादत आह—**एवं तर्हीत्यादि**। व्याख्यातमेतद्वृत्तौ। ननु यदि नकारविधानसामर्थ्याव् प्राप्नुवन् विधिर्न भवति तर्हि अनड्वांस्त्रेत्यादौ "नोऽप्रशानो०" इति सकारोऽपि न प्राप्नोतीति चेत, न, 'य विधि प्रत्युपदेशोऽनर्थक स विधिर्बाध्यते' इति न्यायात् दत्व प्रति नकारोपदेशोऽनर्थको न सत्व प्रति, तस्य तन्निमित्तत्वादिति भाव। त्रयाणां सकारान्तत्वात् अनडुहश्च हकारान्तत्वात् "सो रु", "हो धुट्०" इत्येतद्विषय एव अस्यारम्भाद् अपवादत्वात्तयोर्बाधक, विद्वद्भिरित्यादौ सयोगान्तलोपाप्रवृत्तौ अस्य चरितार्थत्वात् अबाधकत्वात् विद्वानित्यत्र तूभयप्राप्तौ दत्वस्य परेऽसत्त्वात् स एव प्रवर्तत इत्याह—**एतच्च दत्वमित्यादि** ॥ ६८ ॥

**ऋत्विज्दिश्दृश्स्पृश्स्रज्दधृषुष्णिहो ग.**। अत्र पदान्त इत्यनुवर्तते, पदान्ते ऋत्विज्दिश्दृश्स्पृश्स्रज्दधृषुष्णिह ग इत्यन्वयस्तदर्थमाह—**एषामित्यादि**। "षष्ठ्या अन्त्यस्य" इति परिभाषाबललभ्यमर्थमाह—**अन्तादेश** इति। ऋत्विगादिशब्दार्थं व्युत्पत्तिप्रदर्शनपुर सरमाह—**ऋतुमित्यादि**। 'यजीं' देवपूजादौ, 'दिशींत्' अतिसर्जने, 'दृशृ' प्रेक्षणे, 'स्पृशत्' विसर्गे, 'ञिधृषाद्'प्रागल्भ्ये, 'ष्णिहीच्' प्रीतौ, 'णहींच्' बन्धने, इत्येषां क्विपि अन्ययत्तदां "अन्यत्यदादेरा" ३।२।१५२। इत्यात्वे, सिलोपेऽनेन गत्वे, पक्षे "विरामे०" इति प्रथमत्वे—**ऋत्विगादयः**। स्रज व्युत्पादयति—**सृज्यत** इत्यादि। ननु सृज्धातो क्विपि ऋकारस्य रत्व कथमित्याह—**अत एवेत्यादि**। तमेव प्रकारान्तरेण साधयति—**'सृं' गताविल्यस्येत्यादि**। ननु दधृष् इत्यत्र द्विरुक्ति कस्मादित्याह—**अत एव निर्देशादित्यादि**। उष्णिहूशब्दप्रक्रियामाह—**ऊर्ध्वं स्निह्यतीत्यादि**। "नाम सिदय्०" इति पदान्तत्वादुदाहरति—**ऋत्विग्भ्यामित्यादि** ॥ ६९ ॥

**नशो वा**। अत्र पदान्त इति ग इति चानुवर्तते, नश पदान्ते ग वा इत्यन्वयस्तदर्थमाह–**नशेरित्यादि**। 'जीव'प्राणधारणेऽतो जीवतीति विग्रहे "नाम्युपान्त्य०" ५।१।५४। इति के–जीव, नशे क्रुधादित्वात्क्विप्कृयोगे कर्तृषष्ठीसमासे, सिलोपेऽनेन गत्वे, "विरामे०" इति प्रथमत्वे—**जीवनग्, जीवनक्** इति। **पक्षे**–गत्वाभावपक्षे "यजसृज०" इति षत्वे, "धुटस्तृतीय" इति डत्वे, प्रथमत्वे—**जीवनड्, जीवनट्** इति। एव "नाम सिदय्०" इति पदान्तत्वात्–**जीवनग्भ्यामित्यादि** ॥ ७० ॥

**युजञ्चक्रुञ्चो नो ङ.**। अत्र पदान्ते इत्यनुवर्तते, पदान्ते युजञ्चक्रुञ्च न ङ इत्यन्वयस्तदर्थमाह—**युज्ञ्चक्रुञ्चामित्यादि**। **युनक्तेः क्विपीति**। 'युजूंपी' योगे, इति धातो क्विप् इत्यर्थ। **धुटि नागमे** इति। "अच" इत्यनेनेति शेष। **सयोगान्तलोपे** इति।

१ क्रुत्सं° पु०।

युङ्; अञ्चतेरनर्चायां नलोपे, घुटि नागमे, अर्चायां तु नलोपाभावे—प्राङ्, प्राङ्भ्याम्, प्राङ्षु, प्राङ्क्षु; कुञ्चेरत एव निर्देशात् "नो व्यञ्जनस्यानुदितः" ॥ ४ । २ । ४५ ॥ इति नलोपाभावे—कुङ्, कुङ्भ्याम्, कुङ्षु; कुङ्क्षु । पदान्त इत्येव ? युञ्जौ, युञ्जः; प्राञ्चौ, प्राञ्चः; कुञ्चौ, कुञ्चः ॥ ७१ ॥

## सो रुः ॥ २ । १ । ७२ ॥

पदान्ते वर्तमानस्य सकारस्य रुरादेशो भवति । मित्रशीः, आशीः, अग्निरत्र, वायुरत्र, अग्निर्गच्छति, पयः, पयोभ्याम्; पयोवत् । उकारः "अरोः सुपि रः" ॥ १ । ३ । ५७ ॥ इत्यत्र विशेषणार्थः ॥ ७२ ॥

## सजुषः ॥ २ । १ । ७३ ॥

सजुष् इत्येतस्य पदान्ते वर्तमानस्य रुरन्तादेशो भवति । सजूर्देवैः, सजूर्ऋषिभिः, सहपूर्वस्य जुषेः क्विपि, सहस्य सभावे रूपमेतत् । सजूर्भ्याम्, सजूर्वत् । पदान्त इत्येव ? सजुषौ ॥ ७३ ॥

## अह्नः ॥ २ । १ । ७४ ॥

अहन्शब्दस्य पदान्ते रुरित्ययमादेशो भवति, स चासन् परे स्यादिविधौ च । दीर्घाण्यहान्यस्मिन् हे दीर्घाहो निदाघ[2], दीर्घाहा निदाघः; अत्र रुत्वस्यासत्त्वात् नान्तलक्षणो दीर्घो भवति । कश्चित्तु दीर्घत्वं नेच्छति, तन्मते—दीर्घाहो निदाघः । अहोभ्याम्, अहस्सु । अहन् शत्रुमित्यत्राहन्शब्दस्य त्याद्यन्तस्य लाक्षणिकत्वात् न भवति ॥ ७४ ॥

## रो लुप्यरि ॥ २ । १ । ७५ ॥

अहन्शब्दस्य लुपि सत्यामरेफे परे पदान्ते रोऽन्तादेशो भवति, रोरपवादः । अहरधीते, अहरेति, अहर्ददाति, अहर्भुङ्क्ते, दीर्घाहाश्चासौ मासश्च दीर्घाहर्मासः, अहःकाम्यति, अहर्वान् । लुपीति किम् ? हे दीर्घाहोऽत्र । अरीति किम् ?

---

"पदस्य" इत्यनेनेति भाव । अनेन नस्य ङत्वे—युङ् इति । प्रपूर्वात् 'अञ्च्' गतौ धातो कर्तरि क्विपि "अञ्चोऽनर्चायाम्" ४।२।४६। इति नलोपे "अच " इति घुटि नोऽन्ते सिलोपे संयोगान्तलोपे चानेन नस्य ङकार –प्राङ्, अर्चायां तु नलोपाभाव एव विशेषस्तदाह—अञ्चतेरित्यादि । ननु 'क्रुञ्च' गतौ, इत्यस्मात् क्विपि, "नो व्यञ्जनस्यानुदित " ४।२।४५। इति नलोपे सति नकाराभावादनेन कथं नस्य ङ इत्यत आह—कुञ्चेरत एवेत्यादि । प्राङ्क्षु इति । "ङ्णो कटा०" इति वा कोऽन्तस्तत षत्वे कपयो क्ष "शिट्याद्यस्य०" इति वैकल्पिके द्वितीये प्राङ्ख्षु इत्यपि । एवं कुङ्क्ष्वित्यत्रापि बोध्यम् ॥ ७१ ॥

सो रुः । अत्र पदान्ते इत्यनुवर्तते, पदान्ते स रुरित्यन्वयस्तदर्थमाह—पदान्ते वर्तमानस्येत्यादि । 'शासूङ्' अनुशिष्टावित्यतो मित्र शास्तीति क्विपि इसादेशे सिलोपेऽनेन रुत्वे दीर्घत्वे—मित्रशीः । आशीः पूर्ववत् । उकार इति । उकारमन्तरेण तत्र सूत्रे 'अर' इत्युक्ते एव सूत्रविहितस्य रेफस्य वचनवैयर्थ्यं मा भूदिति पय सु इत्यादौ रेफ, गीर्षु इत्यादौ तु अर इति प्रतिषेधाद् विसर्ग इति विपर्ययप्रवीति स्यादित्यर्थ ॥ ७२ ॥

सजुषः । पदान्ते इति रुरिति चानुवर्तते, पदान्ते सजुष रुरित्यन्वयस्तदर्थमाह—सजुष् इत्येतस्येत्यादि । सह जुषत इति क्विपि, अतएव निर्देशात् सभावे परे कार्येऽस्यासत्त्वादपि "धुटस्तृतीय" इति परस्मिन्नुत्सर्गे कर्तव्ये पूर्वस्यापवादभूतस्यास्यासत्त्वाभावादनेन रुत्वे "पदान्ते" इति दीर्घे च—सजूर्देवैरिति । देवैरित्युक्त्या सर्वज्ञवचनोऽयम् । सजूर्ऋषिभिरिति । मुनिवचनोऽयम्, ऋषिभिरित्युक्ते ॥ ७३ ॥

अह्न० । अत्र पदान्त इति रुरिति चानुवर्तते, अह्न पदान्ते रुरित्यन्वयस्तदर्थमाह—अहन्शब्दस्येत्यादि । असत्परे इति स्यादिविधाविति चाधिकृतत्वादाह—स चासन्नित्यादि । हे दीर्घाह इति । हेशब्द आमन्त्र्यद्योतनार्थं, अनामन्त्र्ये तु "नि दीर्घ" इति दीर्घत्वे "अवर्णभोभगोऽघो०" इति रुलोपे—दीर्घाहा निदाघ इति । नन्वत्र सिलोपे परत्वात् नकारस्य रुत्वे नकाराभावात् कथं दीर्घ इति चेद्, न, स्याद्यधिकारविहितत्वात् दीर्घे कर्तव्ये रुत्वस्यासिद्धत्वादित्याह—अत्र रुत्वस्यासत्त्वादित्यादि । मतान्तरमाह—कश्चित्तु इति । दुर्गसिंह । अहोभ्याम्, अहस्सु—अत्र "नामसिद्य०" इति पदत्वान्नकारस्य रुत्वम् । ननु हनेर्लङस्तन्या दिवि सिवि वा "अड्धातो०" इत्यडागमे, "व्यञ्जनाद् सश्च द" ४।३।७८। इति "से स्दां च रुर्वा" ४।३।७९। इति च दिव्सिवोर्लोपे अहन् इत्येतस्य पदत्वात् नस्य रुत्वं कस्मान्न भवति ? प्रतिपदोक्ते हि सति लाक्षणिक 'लक्षणप्रतिपदोक्तपरिभाषया' निराक्रियते, न च प्रतिपदोक्तस्य सम्भवो नाम तथाहि—अह्नश्च "श्वन्मातरिश्वन्०" उणा० ९०२। इत्यनि निपातने कथं प्रतिपदोक्त स्यात् ? तस्माद्धातोरह्न संजातपदसंज्ञकनाम्नश्च रुत्वेन भवितव्यमिति यो वदति त प्रत्याह—अहन् शत्रुमित्यत्रेत्यादि । अयमाशय —'उणादयोऽव्युत्पन्नानि नामानि' इत्यस्मिन् पक्षे नाम्न प्रतिपदोक्तस्य सम्भवात् लाक्षणिकस्य न ग्रहणमिति । व्युत्पत्तिपक्षस्तु नेहाश्रित इति ॥ ७४ ॥

रो लुप्यरि । अह्न इति पदान्त इति चानुवर्तते, अह्न लुपि अरि पदान्ते र इत्यन्वयस्तदर्थमाह—अहन्शब्दस्येत्यादि । अहन्शब्दस्य रेफादन्यस्मिन् परे "अतोऽति रोरु" इत्यादिना उत्वं मा भूदिति "अह्न" इति सूत्रविहितरोरपवादोऽयमुच्यत इत्याह—रोरपवाद इति । अहरधीते इत्यादौ "कालाध्वनोर्व्याप्तौ" २।२।४२। इति द्वितीयैकवचनस्य "अनतो लुप्" इति लुप् । "ऐकार्थ्ये" इति लुपि—दीर्घाहर्मास इत्यादय । हे दीर्घाहोऽत्र इति । अत्र समासान्तर्वर्तिविभक्तेर्लोपेऽपि दीर्घाहन्शब्दादुत्पन्नविभक्तिलिङ्गपेक्ष पदत्वं लुपीति प्रत्यासत्त्या

---

२ रुरित्ययमन्तादेशो पु० ।

सान्तस्यैव यथा स्यात्, इह मा भूत्–विद्वान्!, हे विद्वन्!, उपसेदिवान्, हे उपसेदिवन्!; सकारस्य "पदस्य" ॥२।१।८९॥ इति लोपेन निवर्तितत्वात्। एवं तर्हि अनड्वान्, हे अनड्वन्! इत्यत्र नकारस्यापि प्राप्नोति, तत्र विशेषणाभावात्, नैवम्; नकारविधानसामर्थ्यात् न भविष्यति। एतच्च दत्वं 'येन नाप्राप्ते०' इति न्यायात् रुत्वढत्वयोरेव बाधकम्, संयोगान्तलोपे पुनः प्राप्ते चाऽप्राप्ते चारभ्यत इति तस्य बाधकं न भवति। पदान्त इत्येव? उखास्रसौ, पर्णध्वसौ, विद्वांसौ; अनड्वाहौ ॥ ६८ ॥

## ऋत्विज्दिश्दृश्स्पृश्स्रज्दधृषुष्णिहो गः ॥ २ । १ । ६९ ॥

एषां पदान्ते वर्तमानानां गोऽन्तादेशो भवति। ऋतुर्म्, ऋतौ, ऋतवे, ऋतुप्रयोजनो वा यजते–ऋत्विक्, ऋत्विग्, दिश्यते इति–दिक्, दिग्; पश्यति दर्शनं वा–दृक्, दृग्, अन्य इव दृश्यते–अन्यादृग्, अन्यादृक्, एवं यादृग्, यादृक्; तादृग्, तादृक्; घृतं स्पृशति–घृतस्पृग्, घृतस्पृक्; मन्त्रेण स्पृशति मन्त्रस्पृग्, मन्त्रस्पृक्; सृज्यत इति क्रुधसंपदादित्वात् क्विप्, अत एव निर्देशात् ऋतो रत्वं च, 'सृं' गतावित्यस्य वा कज्–स्रग्, स्रक्; धृष्णोतीति दधृष्, अत एव निर्देशाद् द्वित्वम्–दधृग्, दधृक्, ऊर्ध्वं स्निह्यति नह्यति वा, अत एव निर्देशात् उदो दकारस्य लोपे सस्य षत्वं, नहेर्नकारस्य च ष्णिरादेशः–उष्णिग्, उष्णिक्, ऋत्विग्भ्याम्, दिग्भ्याम्, दृग्भ्याम्, घृतस्पृग्भ्याम्, स्रग्भ्याम्, दधृग्भ्याम्, उष्णिग्भ्याम्। पदान्त इत्येव? ऋत्विजौ, दिशौ, दृशौ, घृतस्पृशौ, स्रजौ, दधृषौ; उष्णिहौ ॥ ६९ ॥

## नशो वा ॥ २ । १ । ७० ॥

नशेः पदान्ते गोऽन्तादेशो वा भवति। जीवस्य नशनम्–जीवनग्, जीवनक्; पक्षे–जीवनड्, जीवनट्, जीवनग्भ्याम्, जीवनड्भ्याम्। पदान्त इत्येव? जीवनशौ ॥ ७० ॥

## युजञ्चक्रुञ्चो नो ङः ॥ २ । १ । ७१ ॥

युजञ्चक्रुञ्चां नकारस्य पदान्ते वर्तमानस्य ङकार आदेशो भवति। युनक्तेः क्विपि, धुटि नागमे, संयोगान्तलोपे–

---

नपुंसके सेर्लुपि दत्वे च रूपम्। **स्वनडुदिति**। एकत्वे कच्प्रसङ्गात् शोभना अनड्वाहो यस्य कुलस्येति विग्रहः, शेषं पूर्ववत्। "नाम सिदय्व्यञ्जने" इति पदान्तत्वादुदाहरति—**उखास्रद्भ्यामित्यादि**। **विद्वत्तेति**। विदुषो भावो विद्वत्ता "भावे त्वतल्" ७।१।५५। **उपसेदिवत्तम** इति। बहूनां मध्ये प्रकृष्ट उपसेदिवान् इति विग्रहे "प्रकृष्टे तमप्" ७।३।५। इति तमप्। यङ्लुबन्ताभ्यां स्रंसिध्वंसिभ्यां क्विप् न दृश्यते। क्वसो ककारो 'वस' निवासे 'वसिक्' आच्छादने अनयोर्व्युदासार्थं, तेन वसेः क्विपि यजादित्वात् य्वृति दीर्घत्वे–ऊः, क्षौमं वस्ते क्विपि क्षौमवः। ननु वसतिवस्त्योः सकारान्तत्वाव्यभिचारात् व्यभिचारे च विशेषणस्यार्थवत्त्वात् व्यभिचारिणः क्वस एव ग्रहणं भविष्यति, वस्सिति सकारोपादानात्, इति किमर्थं? क्वस्येत्यत्र ककारकरणमिति चेद्, उच्यते–तदभावेऽन्यथाऽपि प्रतीतौ यङ्लुबन्तयोरेतयोरेव ह्यस्तनीसिवन्तयोर्विशेषविहितत्वेन "से स्द्धां च रुर्वा" ४।३।७९। इति सिव्लोपाभावे वस्सिति रूपाद्ग्रहणं स्यात् इतीह मा भूत् इति ककारकरणम्। **विद्वान्, विद्वन्नित्यादि**। विद्वत्शब्दात् सौ, उदित्वात् नागमे, "न्स्महतः" इत्यनामन्त्र्ये सौ दीर्घत्वे, "पदस्य" इति प्रकृतिसकारलोपे, सकारान्तत्वाभावात् नकारस्य दत्वाभावः। ननु अनडुहशब्दात् "अनडुहः सौ" १।४।७२। इति नागमे "पदस्य" इति हलोपे दत्वप्रसङ्ग इति चेत्, नैवम्, यदि कृतस्यापि नकारस्य दत्वं स्यात् तद्विधानमनर्थकं स्यादत आह—**एवं तर्हीत्यादि**। व्याख्यातमेतद्वृत्तौ। ननु यदि नकारविधानसामर्थ्यात् प्राप्नुवन् विधिर्न भवति तर्हि अनड्वांस्त्रेत्यादौ "नोऽप्रशानो०" इति सकारोऽपि न प्राप्नोतीति चेत्, न, 'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते' इति न्यायात् दत्वं प्रति नकारोपदेशोऽनर्थको न सत्वं प्रति, तस्य तन्निमित्तत्वादिति भावः। त्रयाणां सकारान्तत्वात् अनडुहश्च हकारान्तत्वात् "सो रुः", "हो धुट्०" इत्येतद्विषय एव अस्यारम्भात् अपवादत्वात्तयोर्बाधकः, विद्वद्भिरित्यादौ संयोगान्तलोपाप्रवृत्तौ अस्य चरितार्थत्वात् अबाधकत्वात् विद्वानित्यत्र तूभयप्राप्तौ दत्वस्य परेऽसत्त्वात् स एव प्रवर्तत इत्याह—**एतच्च दत्वमित्यादि** ॥ ६८ ॥

**ऋत्विज्दिश्दृश्स्पृश्स्रज्दधृषुष्णिहो गः**। अत्र पदान्त इत्यनुवर्तते, पदान्ते ऋत्विज्दिश्दृश्स्पृश्स्रज्दधृषुष्णिहः ग इत्यन्वयस्तदर्थमाह—**एषामित्यादि**। "षष्ठ्या अन्त्यस्य" इति परिभाषाबललभ्यमर्थमाह—**अन्तादेश** इति। ऋत्विगादिशब्दार्थं व्युत्पत्तिप्रदर्शनपुरःसरमाह—**ऋतुमित्यादि**। 'यजीं' देवपूजादौ, 'दिशींत्' अतिसर्जने, 'दृशृं' प्रेक्षणे, 'स्पृशंत्' विसर्गे, 'ञिधृषाट्' प्रागल्भ्ये, 'ष्णिहौच्' प्रीतौ, 'णहींच्' बन्धने, इत्येषां क्विपि अन्ययत्तदां "अन्यत्यदादेरा" ३।२।१५२। इत्यात्वे, सिलोपेऽनेन गत्वे, पक्षे "विरामे०" इति प्रथमत्वे—**ऋत्विगादयः**। स्रजं व्युत्पादयति—**सृज्यत इत्यादि**। ननु सृज्धातोः क्विपि ऋकारस्य रत्वं कथमित्याह—**अत एवेत्यादि**। तमेव प्रकारान्तरेण साधयति—**'सृं' गतावित्यस्येत्यादि**। ननु दधृष् इत्यत्र द्विरुक्तिः कस्मादित्याह—**अत एव निर्देशादित्यादि**। उष्णिह्शब्दप्रक्रियामाह—**ऊर्ध्वं स्निह्यतीत्यादि**। "नाम सिदय्०" इति पदान्तत्वादुदाहरति—**ऋत्विग्भ्यामित्यादि** ॥ ६९ ॥

**नशो वा**। अत्र पदान्त इति ग इति चानुवर्तते, नशः पदान्ते ग वा इत्यन्वयस्तदर्थमाह—**नशेरित्यादि**। 'जीव' प्राणधारणेऽतो जीवतीति विग्रहे "नाम्युपान्त्य०" ५।१।५४। इति के–जीवः, नशेः क्रुधादित्वात्क्विप्क्प्रयोगे कर्तृषष्ठीसमासे, सिलोपेऽनेन गत्वे, "विरामे०" इति प्रथमत्वे—**जीवनग्, जीवनक्** इति। **पक्षे**–गत्वाभावपक्षे "यजसृज०" इति षत्वे, "धुटस्तृतीयः" इति डत्वे, प्रथमत्वे—**जीवनड्, जीवनट्** इति। एवं "नाम सिदय्०" इति पदान्तत्वात्—**जीवनग्भ्यामित्यादि** ॥ ७० ॥

**युजञ्चक्रुञ्चो नो ङः**। अत्र पदान्ते इत्यनुवर्तते, पदान्ते युजञ्चक्रुञ्चः न ङ इत्यन्वयस्तदर्थमाह—**युज्अञ्चक्रुञ्चामित्यादि**। **युनक्तेः क्विपीति**। 'युजृंपी' योगे, इति धातोः क्विप् इत्यर्थः। **धुटि नागमे** इति। "अचः" इत्यनेनेति शेषः। **संयोगान्तलोपे** इति।

---

१ क्रुत्स° पु०।

युङ्; अञ्चतेरनर्चायां नलोपे, घुटि नागमे, अर्चायां तु नलोपाभावे-प्राङ्, प्राङ्भ्याम्, प्राङ्षु, प्राङ्क्षु; क्रुञ्चेरत एव निर्देशात् "नो व्यञ्जनस्यानुदितः" ॥ ४ । २ । ४५ ॥ इति नलोपाभावे-क्रुङ्, क्रुङ्भ्याम्, क्रुङ्षु; क्रुङ्क्षु । पदान्त इत्येव? युञ्जौ, युञ्जः; प्राञ्चौ, प्राञ्चः, क्रुञ्चौ, क्रुञ्चः ॥ ७१ ॥

## सो रुः ॥ २ । १ । ७२ ॥

पदान्ते वर्तमानस्य सकारस्य रुरादेशो भवति । मित्रशीः, आशीः, अग्निरत्र, वायुरत्र, अग्निर्गच्छति, पयः, पयोभ्याम्; पयोवत् । उकारः "अरोः सुपि रः" ॥ १ । ३ । ५७ ॥ इत्यत्र विशेषणार्थः ॥ ७२ ॥

## सजुषः ॥ २ । १ । ७३ ॥

सजुष् इत्येतस्य पदान्ते वर्तमानस्य रुरन्तादेशो भवति । सजूर्देवैः, सजूर्ऋषिभिः; सहपूर्वस्य जुषेः क्विपि, सहस्य सभावे रूपमेतत् । सजूर्भ्याम्, सजूर्वत् । पदान्त इत्येव? सजुषौ ॥ ७३ ॥

## अह्नः ॥ २ । १ । ७४ ॥

अहन्शब्दस्य पदान्ते रुरित्ययमादेशो भवति, स चासन् परे स्यादिविधौ च । दीर्घाण्यहान्यस्मिन् हे दीर्घाहो निदाघ!, दीर्घाहा निदाघः; अत्र रुत्वस्यासत्त्वात् नान्तलक्षणो दीर्घो भवति । कश्चित्तु दीर्घत्वं नेच्छति, तन्मते-दीर्घाहो निदाघः । अहोभ्याम्, अहस्सु । अहन् शत्रुमित्यत्राहन्शब्दस्य त्याद्यन्तस्य लाक्षणिकत्वात् न भवति ॥ ७४ ॥

## रो लुप्यरि ॥ २ । १ । ७५ ॥

अहन्शब्दस्य लुपि सत्यामरेफे परे पदान्ते रोऽन्तादेशो भवति, रोरपवादः । अहरधीते, अहरेति, अहर्ददाति, अहर्भुङ्क्ते, दीर्घाहाश्चासौ मासश्च दीर्घाहर्मासः, अहःकाम्यति, अहर्वान् । लुपीति किम्? हे दीर्घाहोऽत्र । अरीति किम्?

---

"पदस्य" इत्यनेनेति भाव । अनेन नस्य ङत्वे—युङ् इति । प्रपूर्वात् 'अञ्चु' गतौ धातो कर्तरि क्विपि "अञ्चोऽनर्चायाम्" ४।२।४६। इति नलोपे "अच" इति घुटि नोऽन्ते सिलोपे सयोगान्तलोपे चानेन नस्य ङकार -प्राङ्, अर्चायां तु नलोपाभाव एव विशेषस्तदाह—अञ्चतेरित्यादि । ननु 'क्रुञ्च' गतौ, इत्यस्मात् क्विपि, "नो व्यञ्जनस्यानुदित" ४।२।४५। इति नलोपे सति नकाराभावादनेन कथ नस्य ङ इत्यत आह—क्रुञ्चेरत एवेत्यादि । प्राङ्क्षु इति । "ङ्णो कटा०" इति वा कोऽन्तस्तत षत्वे कपयो क्ष "शिट्यायस्य०" इति वैकल्पिके द्वितीये प्राङ्ख्षु इत्यपि । एवं क्रुङ्क्ष्वित्यत्रापि बोध्यम् ॥ ७१ ॥

सो रुः । अत्र पदान्ते इत्यनुवर्तते, पदान्ते स रुरित्यन्वयस्तदर्थमाह—पदान्ते वर्तमानस्येत्यादि । 'शासु' अनुशिष्टावित्यतो मित्र शास्तीति क्विपि इसादेशे सिलोपेऽनेन रुत्वे दीर्घत्वे—मित्रशीः । आशी· पूर्ववत् । उकार इति । उकारमन्तरेण तत्र सूत्रे 'अर' इत्युक्ते एव सूत्रविहितस्य रेफस्य वचनवैयर्थ्यं मा भूदिति पय सु इत्यादौ रेफ, गीर्षु इत्यादौ तु अर इति प्रतिषेधाद् विसर्ग इति विपर्ययप्रतीति स्यादित्यर्थ ॥ ७२ ॥

सजुषः । पदान्ते इति रुरिति चानुवर्तते, पदान्ते सजुष रुरित्यन्वयस्तदर्थमाह—सजुष् इत्येतस्येत्यादि । सह जुषत इति क्विपि, अतएव निर्देशात् सभावे परे कार्येऽस्यासत्त्वादपि "धुटस्तृतीय" इति परस्मिन्नुत्सर्गे कर्तव्ये पूर्वस्यापवादभूतस्यासत्त्वाभावादनेन रुत्वे "पदान्ते" इति दीर्घे च—सजूर्देवैरिति । देवैरित्युक्त्या सर्वज्ञवचनोऽयम् । सजूर्ऋषिभिरिति । मुनिवचनोऽयम्, ऋषिभिरित्युक्ते ॥ ७३ ॥

अह्न· । अत्र पदान्त इति रुरिति चानुवर्तते, अह्न पदान्ते रुरित्यन्वयस्तदर्थमाह—अहन्शब्दस्येत्यादि । असत्परे इति स्यादिविधाविति चाधिकृतत्वादाह—स चासन्नित्यादि । हे दीर्घाह इति । हेशब्द आमन्त्र्यद्योतनार्थं, अनामन्त्र्ये तु "नि दीर्घ" इति दीर्घत्वे "अवर्णभोभगोऽघो०" इति रुलोपे—दीर्घाहा निदाघ इति । नन्वत्र सिलोपे परत्वात् नकारस्य रुत्वे नकाराभावात् कथ दीर्घ इति चेत्, न, स्याद्यधिकारविहितत्वात् दीर्घे कर्तव्ये रुत्वस्यासिद्धत्वादित्याह—अत्र रुत्वस्यासत्त्वादित्यादि । मतान्तरमाह—कश्चित्तु इति । दुर्गसिंह । अहोभ्याम्, अहस्सु-अत्र "नामसिदय्०" इति पदत्वान्नकारस्य रुत्वम् । ननु हनेर्ह्यस्तन्या दिवि सिवि वा "अड्धातो०" इत्यडागमे, "व्यञ्जनादे सश्च द" ४।३।७८। इति "से स्ध्वा च रुर्वा" ४।३।७९। इति च दिव्सिवोर्लोपे अहन् इत्येतस्य पदत्वात् नस्य रुत्व कस्मान्न भवति? प्रतिपदोक्ते हि सति लाक्षणिक 'लक्षणप्रतिपदोक्तपरिभाषया' निराक्रियते, न च प्रतिपदोक्तस्य सभवो नाम तथाहि-अह्नश्च "श्वन्मातरिश्वन्०" उणा० ९०२। इत्यनि निपातने कथ प्रतिपदोक्त स्यात्? तस्माद्धातोरह्न सेजातपदसंज्ञकनाम्नश्च रुत्वेन भवितव्यमिति यो वदति त प्रत्याह—अहन् शत्रुमित्यत्रेत्यादि । अयमाशय —'उणादयोऽव्युत्पन्नानि नामानि' इत्यस्मिन् पक्षे नाम्न प्रतिपदोक्तस्य सभवात् लाक्षणिकस्य न ग्रहणमिति । व्युत्पत्तिपक्षस्तु नेहाश्रित इति ॥ ७४ ॥

रो लुप्यरि । अह्न इति पदान्त इति चानुवर्तते, अह्न लुपि अरि पदान्ते र इत्यन्वयस्तदर्थमाह—अहन्शब्दस्येत्यादि । अहन्शब्दस्य रेफादन्यस्मिन् परे "अतोऽति रोरु" इत्यादिना उत्व मा भूदिति "अह्न" इति सूत्रविहितरोरपवादोऽयमुच्यत इत्याह—रोरपवाद इति । अहरधीते इत्यादौ "कालाध्वनोर्व्याप्तौ" २।२।४२। इति द्वितीयैकवचनस्य "अनतो लुप्" इति लुप् । "ऐकार्थ्ये" इति लुपि—दीर्घाहर्मास इत्यादय । हे दीर्घाहोऽत्र इति । अत्र समासान्तवर्तिविभक्तेर्लोपेऽपि दीर्घाहन्शब्दादुत्पन्नविभक्तिलुगपेक्ष पदत्व लुपीति प्रत्यासत्त्या

---

१ रुरित्ययमन्तादेशो पु० ।

अहोरूपम्, अहोरात्रः; गतमहो रात्रिरागता, कृत्स्नमहो रथन्तरं गायति; सर्वमहो रमयस्व, यातं शनैः सर्वमहो रथेन। अन्ये तु रात्रिरूपरथन्तरेष्वेव रेफादिषु परेषु रेफप्रतिषेधमिच्छन्ति ॥ ७५ ॥

## धुटस्तृतीयः ॥ २ । १ । ७६ ॥

धुटां पदान्ते वर्तमानानां तृतीयो भवति। वाग्, वाग्भिः, अज्, अज्भिः, षड्, षड्भिः; विद्युद्, विद्युद्भिः, ककुब्, ककुब्भिः, विड्, विड्भिः। केचित्तु विसर्गजिह्वामूलीययोरप्यलाक्षणिकयोस्तृतीयत्वं गत्वमिच्छन्तीति, तन्मते—सुपूर्वात् दुःखयतेर्दुःखयतेर्वा क्विपि सयोगान्तलोपे—सुदुग्, सुदुग्भ्याम् इति सिद्धम्। पदान्त इत्येव? वाचौ। कश्चरति, कष्टीकते, कस्तरतीत्यादिष्वादेशविधानसामर्थ्यात् न भवति, षष्ठ इत्यत्र तु 'षष्ठी' इति निर्देशात् न भवति ॥ ७६ ॥

## गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये ॥ २ । १ । ७७ ॥

गडदबादेश्चतुर्थान्तस्यैकस्वरस्य धातुरूपावयवस्यादेश्चतुर्थ आसन्नो भवति, पदान्ते सकारादौ ध्वशब्दादौ च प्रत्यये परे। (पदान्ते—) पर्णघुट्, पर्णघुड्भ्याम्, पर्णघुट्त्वम्; तुण्डिभमाचष्टे णौ क्विपि—तुण्ढिप्, तुण्ढिब्भ्याम्, तुण्ढिप्त्वम्; गोधुक्, गोधुग्भ्याम्, गोधुक्त्वम्, गर्दभमाचष्टे णौ क्विप्—गर्धप्, गर्धब्भ्याम्, गर्धप्त्वम्; धर्मभुत्, धर्मभुद्भ्याम्; धर्मभुत्त्वम्। स्ध्वोः—'गुहौ' निघोक्ष्यते, न्यघूढ्वम्; 'दुह्' धोक्ष्यते, अधुग्ध्वम्; 'बुध्'—भोत्स्यते, बुभुत्सते; अभुद्ध्वम्। गडदबादे-

---

तत्रासीकाराश्च रोऽन्तादेश, न च तस्य स्वापेक्ष पदत्वम्, "धृत्यन्तोऽसषे" इति निषेधात्। **अहोरूपमिति**। अह्नो रूपमिति षष्ठीसमास। **अहोरात्र** इति। अहश्च रात्रिश्चेति द्वन्द्वे "ऋक्सामर्ग्य०" ७।३।९७ इति निपातनाद् भवति। **गतमह** इति। "अनत" इति सेर्लुप्। रथन्तरतीति विग्रहे "मृद्भृजि०" ५।१।११२। इति खे उपपदसमासे "खित्यनव्ययाऽरुषो मोऽन्तो ह्रस्वश्च" ३।२।१११। इति मागमे "तौ मुमो०" इत्यनुस्वारानुनासिकयो अहोरूपमितिवत् समासेऽसमासे वा—**अहो रथन्तरमिति**। **सर्वमह** इत्यादौ अहन्शब्दाद्द्वितीयाप्रथमयोरेकवचनम्। **अन्ये तु**—वार्तिककारा इत्यर्थं। 'रुपरात्रिरथन्तरेषु रुत्व वाच्यम्' इति हि तेषा वचनम्, व्याख्यातारस्तु नेद परिगणनमित्याहुरिति सर्वमहो-रमयस्वेत्यन्यत्राप्युदाहृतम् ॥ ७५ ॥

**धुटस्तृतीयः**। अत्र पदान्ते इत्यनुवर्तते, पदान्ते धुट तृतीय इत्यन्वयस्तदर्थमाह—**धुटामित्यादि**। बहुवचनन्तु व्यक्तिबहुत्वापेक्षया बोध्यम्। **वाग् इति**। ब्रूते वक्तीति वा विग्रहे "दिद्युद्दृज्जगज्जुहू०" ५।२।८३। इति क्विपि, दीर्घत्वे, सिलुकि, "चज कगम्" इति कत्वे तस्यानेन तृतीयत्वे भवति। भिसि—**वाग्भिरिति**। **अज् इति**। सज्ञाशब्दत्वात् कत्वाभावेऽनेन जकारे रूपम्। एव भिसि—**अज्भिरिति**। **षड्विति**। षष्शब्दात् "डतिष्ण०" इति जस्शसोर्लुकि मूर्द्धन्यस्य षकारस्य "आसन्न" इति तृतीये डकारे सिद्ध्यति। एव भिसि—**षड्भिरिति**। **विद्युदिति**। विपूर्वात् द्युते क्विपि सिलोपेऽनेन तृतीयत्वे च भवति। एव भिसि—**विद्युद्भिः**। **ककुबिति**। क वायु स्कुभ्नाति—विस्तारयति ककुप्, "ककुप्त्रिष्टुबनुष्टुभ" उणा०९३२। इति क्विबन्तो निपात्यते, पश्चादनेन तृतीय। एव भिसि—**ककुब्भिः**। **विड्डिति**। विशतीति क्विपि, कित्वात् गुणप्रतिषेधे, सिलोपे, "यजसृज०" इति शस्य षत्वेऽनेन तृतीये डकारे भवति। एवं भिसि—**विड्भि**.। **केचित्त्विति**। आचार्यशाकटायनाः। **अलाक्षणिकयोरिति**। प्रतिपदोक्तयोरित्यर्थ। 'दु खण्' तत्क्रियायाम्—अत्र दु खेति खकारात् पूर्वं कैश्चिद्विसर्गः पठ्यते, कैश्चिज्जिह्वामूलीयस्तत्रोभयत्रापि क्विपि, णिलोपे, प्रकृतिखकारस्य सयोगान्तस्य "पदस्य" इति लोपे, व्यञ्जनत्वात् कण्ठ्यत्वादनेन तृतीयो गकार इत्युदाहरति—**सुपूर्वादित्यादि**। ननु कश्चरतीत्यादौ रेफादेशस्य शकारादेर्धुट्त्वादासन्नत्वात् तृतीयो जकारादि कस्मान्न भवति? यद्यपि सो रुत्वस्य परेऽसत्वात् तृतीयस्याप्राप्तिस्तथापि मातश्चरतीत्यादिषु प्राप्नोतीत्याह—**कश्चरतीत्यादि** ॥ ७६ ॥

**गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये**। स् च ध्व् च स्ध्वौ तयोरिति स्ध्वो, चकारेण पदान्त इति समुच्चीयते स्ध्वोरिति प्रत्यये इत्यस्य विशेषणम्। तत्र च ध्वस्यादिप्रत्ययस्तदेकविभक्तिनिर्दिष्टत्वेन सकारोऽपि स्यादिरेव। तौ च धातोरेव संभवतस्तत्साहचर्यात्तस्यैवेति तदाक्षिप्तो धातुरवयवित्वेनावयवस्य विशेषण, रूपशब्दस्तु वृत्तौ भ्वायभ्वादिधातुमात्रपरिग्रहार्थ। गश्च डश्च दश्च बश्चेत्येत आदिर्यस्य तस्य—**गडदबादेरिति**, चतुर्थोऽन्ते यस्य तस्य—**चतुर्थान्तस्येति**, एक स्वरो यस्य तस्य—**एकस्वरस्येति** च त्रीण्यपि अन्यपदार्थाक्षिप्तस्यावयवस्य समानाधिकरणानि विशेषणानि। स च अवयवत्वेन आदेरित्यस्य स्थानषष्ठ्यन्तस्य कार्यिणो विशेषणम्, तस्य च स्थाने चतुर्थो भवन् "आसन्न" इति न्यायेन गडदबस्थाने घढधभरुप एव भवति। तत्र पदान्त इति विषयित्वेन विशेषणम्, प्रत्यय इति तु परत्वेन। तथा च—गडदबादे चतुर्थान्तस्य एकस्वरस्य धातुरूपावयवस्य आदे चतुर्थ आसन्न, पदान्तविषये स्ध्वो च प्रत्यये इत्यन्वयस्तदाह—**गडदबादेरित्यादि**। तत्र पदान्तविषये उदाहरति—**पर्णघुडित्यादि**। 'गुहौग्' संवरणेऽत पर्णानि गूहतीति क्विपि, सिलोपे, पदान्तत्वात् "हो धुट्पदान्ते" इति ढत्वेऽनेनादेश्चतुर्थत्वे भवति। एवमन्यदपि। ननु धातोरवयवस्येत्युच्यते, अत्र त्ववयवातिरिक्तस्य तुण्डिप् इत्यादिवत् धातोरभावात् कथ प्राप्ति? इति चेदुच्यते—धातुरूपावयवस्येत्यत्र वृत्तौ समस्तनिर्देश उभयपरिग्रहार्थ, तेन यदा धातुरूपोऽवयव इति विग्रहस्तदा धातुरवयव समुदायस्त्ववयवीति सिध्यति—पर्णघुट्। यदा तु धातुरूपस्यावयव इति विग्रहस्तदा तुण्डिभम् इत्यत्र डिभ् इत्यवयवस्तदतिरिक्तस्तु धातुरवयवीति लक्ष्यसिद्ध्यर्थं क्वचित्किञ्चिदाश्रीयते। अथवा—यत्र तदतिरिक्तो धातुर्नास्ति तत्र व्यपदेशिवद्भावात् सिद्धिरिति सर्वं समञ्जसम्। शब्दरूपावयवस्येति वा वृत्तौ पठनीयम्, तत्र च गुह् डिभ् इत्येव रूप शब्दोऽवयवो गडदबादिश्चतुर्थान्त एकस्वर इति न कश्चिद्दोष। कुण्डमुम्मतीत्यादीनां तु क्विबेव नास्तीति किं? तद्व्यावृत्त्यर्थेन धातुग्रहणेनेति। **तुण्डिभमिति**। 'तुडुङ्' तोडनेऽस्य "उदित स्वराश्नोऽन्त" इति नागमे, "क्लिपिपिलिपिशिचिटिमुटिशुण्ठितुण्डि०" उणा०६०८। इति इप्रत्यये साऽस्यास्तीति "वलिवटितुण्डेर्भ" इति भे सिध्यति, ततोऽग्रे प्रक्रियामाह—**तुण्डिभमाचष्टे इत्यादि**। **गोधुगित्यादि**। गां दोग्धीति क्विपि सिलोपे "भ्वादेर्दादेर्घ" २।१।८३। इति घेऽनेनादिचतुर्थत्वे "विरामे वा" इति कत्वे सिध्यति। 'गर्द' शब्देऽत "कृशृगृशलिकलि०" उणा०३२५। इत्यभे गर्दभस्तत आह—**गर्दभमित्यादि**। शेष पूर्ववत्। 'बुधिंच्' ज्ञाने धर्मं बुध्यत इति क्विपि—**धर्मभुदित्यादि**। सकारादौ ध्वशब्दादौ च प्रत्यये उदाहरति—**निघोक्ष्यते** इति। निपूर्वात् गुहेर्भविष्यन्त्या स्यतेप्रत्यये, उपान्त्यगुणे, ढत्वेऽनेन घत्वे कत्वे षत्वे च भवति। **न्यघूढ्वमिति**। अद्यतन्या ध्वमि, "हशिटो नाम्युपान्त्या०" ३।४।५५। इति सकि,

रिति किम्? क्रुत्, क्रोत्स्यति, जभेर्यङ्लुपि–अजञ्झप् । चतुर्थान्तस्येति किम्? सुगण्, दास्यति । एकस्वरस्येति किम्? दाम लेढि क्विप्, दामलिहमिच्छति क्यन्, दामलिह्यति क्विप्–दामलिट् । स्ध्वोश्चेति किम्? धर्मबुधौ, वोढा । वर्णविधित्वेन स्थानिवद्भावो नास्तीति अबुद्ध, अबुद्धाः इत्यत्र सिज्लुकि न भवति । धकारस्य वकारोपश्लिष्टस्य ग्रहणं किम्? 'दधि' धारणे, इत्यस्य यङ्लुपि, ह्रौ धिभावे–दादद्धि । प्रत्यय इति किम्? धाग् वस् द्वित्वम्, "श्नश्चाऽऽतः" ॥ ४ । २ । ९६ ॥ इत्याकारलोपे, "अदीर्घाद्विरामैकव्यञ्जने" ॥ १ । ३ । ३२ ॥ इति धकारस्य द्विर्भावे–दद्ध्वः, दद्ध्वहे ॥ ७७ ॥

## धागस्तथोश्च ॥ २ । १ । ७८ ॥

दधातेश्चतुर्थान्तस्य दकारादेरादेर्दकारस्य तथयोः स्ध्वोश्च प्रत्यययोः परयोश्चतुर्थो भवति । धत्तः, धत्ते, धत्थः, धत्थ, धत्से, धत्स्व, धद्ध्वे, धद्ध्वम्; अत्रासद्विधित्वाद् वचनसामर्थ्याद् वाऽऽतो लोपस्य स्वरादेशत्वेऽपि स्थानिवद्भावो न भवति । गकारः किम्? धयतेर्मा भूत्, दधेर्यङ्लुपि–दात्तः, दात्थः; दधातेरपि यङ्लुबन्तस्य मा भूत्, "तिवा शवाऽनुबन्धेन निर्दिष्टं यद्गणेन च । एकस्वरनिमित्तं च पञ्चैतानि न यङ्लुपि ॥" इति न्यायात्–दात्त, दात्थः । केचित्तु यङ्लुबन्तस्यापीच्छन्ति–धात्तः, धात्थः, धात्थ । तथोश्चेति किम्? दध्वः, दध्मः । चतुर्थान्तस्येत्येव? दधाति, दधासि ॥ ७८ ॥

## अधश्चतुर्थात् तथोर्धः ॥ २ । १ । ७९ ॥

चतुर्थात् परयोस्तकारथकारयोर्धारूपवर्जितात् धातोर्विहितयोः स्थाने धकार आदेशो भवति । दोग्धा, दोग्धुम्; अदुग्ध, अदुग्धाः, लेढा, लेढुम्, अलीढ, अलीढाः, वोढा, वोढुम्, अबुद्ध, अबुद्धाः, लब्धा, लब्धुम्, अलब्ध, अलब्धा । अध इति किम्? दधातेर्यङ्लुबन्तधयतेश्च मा भूत्–धत्तः, धत्थः, दात्तः, दात्थः । केचित्तु यङ्लुबन्तधयतेरपीच्छन्ति–दाद्धः, दाद्ध । विहितविशेषण किम्? ज्ञानभुत्त्वम्–अत्र नामविहिते त्वे मा भूत् ॥ ७९ ॥

---

"दुहदिहलिह०" ४।३।७४। इति तस्य लुकि, "अड्धातोरादि०" ४।४।२९। इत्यटि, "हो धुट्पदान्ते" इति ढत्वे, आदिचतुर्थत्वे, "तवर्गस्य०" इति धस्य ढत्वे, "ढस्तड्ढे" इति दीर्घत्वे ढलोपे च रूपमिदम् । एव धोक्ष्यत इत्याद्यपि । 'क्रुधच्' कोपेऽत "क्रुत्सम्पदादिभ्य" इति क्विपि, सिलुपि—क्रुत् इति । 'जभुङ्' गात्रविनामे, अतो गर्हित जम्भते इति विग्रहे यङि, तल्लुपि, द्वित्वेऽनादिव्यञ्जनलोपे, "जपजभदहदश०" ४।१।५२। इति म्वागमे, "व्यञ्जनादे सश्च द" इति ह्यस्तन्या दिवो लुप्यडागमे च—अजञ्झप् इति । अत्र गडदबादेरभावात् न भवत्यादेश्चतुर्थं । एव सुगण्, दास्यतीत्यत्र चतुर्थान्तत्वाभावान्नादेश्चतुर्थं । 'डुदांग्' दाने, अत "मन्" उणा०९११। इति मनि–दामन्, त लेढीति क्विपि–दामलिद, तमिच्छतीति "अमाव्ययात्०" इति क्यनि, क्विपि, अलोपे यलोपे च सौ—दामलिट् । अत्र दादिश्चतुर्थान्त एकस्वरो नास्तीत्यादेश्चतुर्थो न भवति । यदा तु धातुरूपावयवस्येति विहाय शब्दरूपावयवस्येति पठ्यते तदा दाम लेढीति क्विप्येव दामलिट् इति प्रत्युदाहरणम् । ननु बुधेरद्यतन्यास्तप्रत्यये सिचो लुप्यडागमे सिच स्थानिवद्भावादादेश्चतुर्थं कस्मान्न भवति? इत्याह—वर्णविधित्वेनेत्यादि । दद्ध्व इति । अत्र धकारद्विर्भावे प्रत्ययग्रहणात् वकारोपश्लिष्टधकारस्य प्रत्ययत्वाभावादादेश्चतुर्थान्तस्य एकस्वरस्यावयवस्यादेश्चतुर्थो न भवति ॥ ७७ ॥

**धागस्तथोश्च** । तश्च थ च तथौ तयो तथो, चकारेण स्ध्वोरित्यनुकृष्यते, पूर्वस्मात् चतुर्थान्तस्येति आदेरिति चानुवर्तते । आदेरित्यत्रानुवर्तमाने पूर्वस्थितगडबादीनामन्वयासम्भवात् दादेरेव सम्भवात् दादिमात्रमेव सम्बध्यते । तथा च–धाग चतुर्थान्तस्य दादेरादे तयो स्ध्वोश्च चतुर्थ इत्यन्वयस्तदाह—दधातेरित्यादि । धत्त इत्यादि 'डुधाक्' धारणे, अत तस्, ते, थस्, थ, से, स्व, ध्वे ध्वम्, इत्येतेषु "ह्व शिति" ४।१।१२। इति द्वित्वे, "ह्रस्व" ४।१।३९। इति ह्रस्वत्वे, "द्वितीयतुर्ययो पूर्वौ" ४।१।४२ इति दत्वे, "श्नश्चाऽऽत" ४।२।९६। इति आकारलोपेऽनेनादेश्चतुर्थत्वे, "अघोषे प्रथमोऽशिट" इति प्रथमत्वे, "तृतीयस्तृतीयचतुर्थे" इति दत्वे च सिध्यति । नन्वत्राऽऽकारलोपस्य स्वरादेशत्वेन "स्वरस्य परे प्राग्विधौ" ७।४।११०। इति स्थानिवद्भावात् चतुर्थान्तत्वाभावात् कथमादेशश्चतुर्थं इत्याह—अत्रासद्विधित्वादित्यादि । असद्विधौ "न सन्धिङीयक्विद्वि"० ७।४।१११। इति प्रतिषेधादिति भाव । असद्विधौ स्थानिवद्भावप्रतिषेधस्य केषाञ्चिदसम्मतत्वात् तन्मतेऽपि सिध्येदित्येतदर्थमाह—वचनसामर्थ्याद्वेति । चतुर्थान्तस्येति विशेषणस्याधिकारापन्नस्यापि तत्रैकदेशत्वेन वचनत्वात् तत्सामर्थ्याच्च स्थानिवद्भावाभावात् चतुर्थान्तोऽयमित्यर्थं । 'ट्धें' पाने, 'डुधाकृ' धारणे वाऽतोऽत्यर्थं पुन पुनर्धयति दधाति वा "व्यञ्जनादेरेकस्वराद्०" ३।४।९। इति यङि, तस्य "बहुल लुप्" इति लुपि, "सन्यङश्च" इति द्वित्वे, ह्रस्वत्वे, "द्वितीयतुर्ययो" इति दत्वे, "आ गुणावन्यादे" ४।१।४८। इति आत्वे, ततस्तसि थसि च "श्नश्चाऽऽत" इत्याकारलोपे धाग इति वचनादादिचतुर्थत्वाभावात् प्रथमत्वे—दात्तः, दात्थ इति । अमुमेवार्थं पूर्वाचार्योक्तेन द्रढयति—तिवेत्यादि । केचिदिवति । देवनन्द्याचार्यो इत्यर्थं ॥ ७८ ॥

**अधश्चतुर्थात्तथोर्धः** । पूर्वसूत्रे निमित्तत्वेनोपादानात् इह तथोरित्यस्य पुनरुपादान कार्यित्वार्थं, तथा चायमन्वय –चतुर्थात् तयो अध धातोर्विहितयो स्थाने ध इति । तदाह—चतुर्थादित्यादि । दुहेस्तृचि तुमि घत्वे गुणेऽनेन धत्वे तृतीयत्वे—दोग्धा, दोग्धुमिति । तस्मादेव अद्यतन्यास्तथासोर्घत्वेऽनेन धत्वे तृतीयत्वेऽटि सको लुकि च—अदुग्ध, अदुग्धा इति । लिहेस्तृचि तुमि ढत्वे गुणेऽनेन धत्वे तस्य "तवर्गस्य०" इति ढत्वे तस्य "ढस्तड्ढे" इति ढलोपे च–लेढा, लेढुमिति । तस्मादेव अद्यतन्यास्तथासो ढत्वेऽनेन धत्वे तस्य "तवर्गस्य०" इति ढत्वे "ढस्तड्ढे" इति ढलोपदीर्घयोश्च सको लुकि अटि च—अलीढ, अलीढा इति । एव बुधेर्लभेश्च तृचि तुमि चैकत्रगुणे, अद्यतन्यास्तथा सोश्च सिच "धुड्ह्रस्वाल्लुगनिटस्तथो" ४।३।७०। इति लुक्यटि चानेन धत्वे तृतीय —बोद्धा, बोद्धुम्; अबुद्ध, अबुद्धा इत्यादि । धागो रूपाणि—धत्तः, धत्थः, दात्तः, दात्थ इति । अन्त्य रूपद्वय यङ्लुबन्तधयतेरपि बोध्यम् । यङ्लुबन्तधयतिविषये धत्वमिच्छतां मतमुपन्यस्यति—केचित्त्विति । देवनन्द्याचार्या । यङ्लुबन्तधयतेरस्यैव वा तसि थसि पञ्चमीते चानेन धत्वे—दाद्ध इत्यादय । ज्ञानभुत्त्वमिति । ज्ञान बुध्यत इति क्विपि, ज्ञानबुधो "भावे" इति त्वे "गडदबादे०" इति आदिचतुर्थत्वे धातोर्विहितयोस्तथोरिति विहितविशेषणात् नाम्नो विहितस्य धकारो न भवति ॥ ७९ ॥

---

१ ×××××× माण्डा० ।

## नाम्यन्तात् परोक्षाद्यतन्याशिषो धो ढः ॥ २ । १ । ८० ॥

रेफान्तात् नाम्यन्ताच्च धातोः परासां परोक्षाद्यतन्याशिषां विभक्तीनां यो धकारस्तस्य ढकार आदेशो भवति । (रू-) अतीढ्वम्, तीर्षीढ्वम्; तुष्टुढ्वे, चकृढ्वे, अदिढ्वम्, अधिढ्वम्, अचेढ्वम्, अच्योढ्वम्, अकृढ्वम्, चेषीढ्वम्, कृषीढ्वम् । नाम्यन्तादिति किम्? अपगध्वम्, पक्षीध्वम् । नाम्यन्तादिति धातोर्विशेषणं किम्? ववसिध्वे, आसिध्वम्, आसिषीध्वम् । परोक्षाद्यतन्याशिष इति किम्? स्तुध्वे, स्तुध्वम्, अस्तुध्वम् ॥ ८० ॥

## हान्तस्थाञ्जीड्भ्यां वा ॥ २ । १ । ८१ ॥

हकारादन्तस्थायाश्च पराञ् ञेरिटश्च परासां परोक्षाद्यतन्याशिषां सबन्धिनो धकारस्य ढकारो वा भवति । वचनभेदो यथासंख्यनिवृत्त्यर्थः । (ञेः) अग्राहिढ्वम्, अग्राहिध्वम्; ग्राहिषीढ्वम्, ग्राहिषीध्वम्, अनायिढ्वम्, अनायिध्वम्, नायिषीढ्वम्, नायिषीध्वम्; अकारिढ्वम्, अकारिध्वम्; कारिषीढ्वम्, कारिषीध्वम्, अलाविढ्वम्, अलाविध्वम्; लाविषीढ्वम्, लाविषीध्वम्; परोक्षायां ञिर्न संभवतीति नोदाहृतः । इटः—जगृहिढ्वे, जगृहिध्वे; अग्रहीढ्वम्, अग्रहीध्वम्, ग्रहीषीढ्वम्, ग्रहीषीध्वम्, उपदिदीयिढ्वे, उपदिदीयिध्वे; आयिढ्वम्, आयिध्वम्, अयिषीढ्वम्, अयिषीध्वम्, तत्वरिढ्वे, तत्वरिध्वे, अत्वरिढ्वम्, अत्वरिध्वम्, त्वरिषीढ्वम्, त्वरिषीध्वम्, ववलिढ्वे, ववलिध्वे; अवलिढ्वम्, अवलिध्वम्, सवलिषीढ्वम्, संवलिषीध्वम्, लुलुविढ्वे, लुलुविध्वे, अलविढ्वम्, अलविध्वम्; लविषीढ्वम्, लविषीध्वम् । हान्तस्थादिति किम्? घानिषीध्वम्, आसिषीध्वम् ॥८१॥

---

**नाम्यन्तात् परोक्षाद्यतन्याशिषो धो ढः** । परोक्षाद्यतन्याशिषां धातोर्भावात् धातोरिति लभ्यते, तत्र च नाम्यन्तादिति विशेषणम्, "विशेषणमन्त" इति विशेषणत्वात् नाम्यन्तादित्यत्र धातुविशेषणतापन्ने तदन्तबोधेऽन्तग्रहणं स्पष्टप्रतिपत्तये । नाम्यन्ताद्धातोरिति परोक्षादीनां विशेषणम् । ताश्च तेन विशेषिता धकारस्य कार्यिणो विशेषणम्, तथा च—रेफान्तात् नाम्यन्ताच्च धातोः परोक्षाद्यतन्याशिषां ध ढ इत्यन्वयस्तदाह—**रेफान्तादित्यादि** । ननु धकारस्य कार्यभाक्त्वात् परोक्षादिभिश्च विशिष्यमाणत्वात् प्राधान्यम्, परोक्षादीनां तु विपर्ययाद्गुणत्वम्, गुणप्रधानसंनिधौ च प्रधानस्यैव धकारस्य नाम्यन्तेन धातुना सबन्धो न्याय्य इति चेत्, उच्यते—नाम्यन्तधातुना धकारे विशिष्यमाणे चकृढ्वे अचेढ्वमित्यत्रैव स्यात्, चेषीढ्वमित्यादौ न स्यात्, सीशब्देन नामिनो व्यवधानात् । यद्यपि तत्र 'येन नाव्यवधानं तेन व्यवहितेऽपि स्याद्' इति न्यायेन सीशब्दव्यवधानेऽपि मूर्धन्यं कर्तुं शक्यते, तथापि वचनसामर्थ्यादर्थप्रतिपत्तौ मन्दधियः प्रतिपत्तिगौरवं स्यात् । स च विशेषणे परोक्षादिभिस्तु विशिष्यमाणे सर्वत्र सिध्यति । अत्र हि विशेषणकृतं तावदुपकारमनुभवति पश्चात्प्रधानेन संबन्धः, असमर्थस्योपकारकत्वायोगात्, यथोक्तं—'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते' इति । तथाच कृतविशेषणसंबन्धैरेतैर्धकारस्य विशेषणे चेषीढ्वमित्यादावक्लिष्टयैव कल्पनया ढत्वसिद्धेः प्रधानस्य महानुपकार इति सर्वं समञ्जसम् । **अतीढ्वमिति** । तरतेरद्यतन्या ध्वमि, "सो धि वा" ४।३।७२। सिचो लुकि, "ऋतां क्ङितीर्" ४।४।११६। इतीरादेशे, "भ्वादेर्नामिनो०" इति दीर्घत्वे, "अड् धातो०" इत्यडागमेऽनेन धस्य ढत्वे रूपम् । आशिषि सीध्वमि—**तीर्षीढ्वमिति** । रेफात् परोक्षाधकारो न संभवतीति नोदाहृतः । 'ष्टुंग्क् स्तुतौ', 'डुकृंग् करणे' आभ्यां परोक्षाध्वे "इन्ध्यसंयोगात् परोक्षा किद्वत्" ४।३।२१। इति कित्वाद्गुणाभावे—**तुष्टुढ्वे, चकृढ्वे** इति । शेषं पूर्ववत् । **अदिढ्वम्, अधिढ्वम्** इति । ददाति दधात्योः "इश्च स्थादः" ४।३।४१। इतीकारे ध्वमि सर्वत्र "सो धि वा" इति सिचो लोपे भवतः । **अचेढ्वम्, अच्योढ्वमिति** । चिनोतिच्यवत्योः "नामिनो गुणो०" इति गुणेऽन्यत्सर्वं प्राग्वद्बोध्यम् । **अकृढ्वम्, कृषीढ्वमिति** । "ऋवर्णात्" इति कित्वाद्गुणाभावः । 'पचं' "यजसृज०" इति कत्वे, "तृतीयस्तृतीयचतुर्थे" इति गत्वे—**अपगध्वमिति** । "सो धि वा" इति विकल्पेन सिचो लोपप्रवृत्त्या पक्षे 'अपग्ध्वम्' इत्यत्राद्यतन्या ध्वमि सिचि कत्वे षत्वे ढत्वे "तवर्गस्य०" इति ध्वमो धस्य ढत्वे च सिद्धिः । अस्यैव सीध्वमि—**पक्षीध्वमिति** । 'वसिक्' आच्छादने धातोः परोक्षाध्वे प्रत्यये "स्कसृवृ०" ४।४।८१। इतीटः प्रत्ययग्रहणेन ग्रहणात् धातोर्नाम्यन्ताभावात् ढत्वाभावे—**ववसिध्वे** इति । एवं 'आसिक्' उपवेशने धातोरद्यतन्या ध्वमि सिचि इटि "सो धि वा" इति सिचो लुकि—**आसिध्वमिति** । आशिषि सीध्वमि—**आसिषीध्वमिति** । स्तौतेर्वर्तमानायां ध्वे पञ्चमीह्यस्तन्योर्ध्वमि च" "शिदवित्" ४।३।२०। इति ङित्वात् गुणाभावे—**स्तुध्वे** इत्यादि ॥ ८० ॥

**हान्तस्थाञ्जीड्भ्यां वा** । अत्र परोक्षाद्यतन्याशिषो धो ढ इत्यनुवर्तते । **हान्तस्थादिति** समाहारद्वन्द्वात् पञ्चमी । ञिश्च इट्च इति इतरेतरयोगात् यथासंख्याभावार्थं पञ्चमीद्विवचन—**ञीड्भ्यामिति** । हान्तस्थात् ञीड्भ्यां परोक्षाद्यतन्याशिषो धो ढो वा इत्यन्वयस्तदर्थमाह—**हकारादित्यादि** । **अग्राहिढ्वमित्यादि** । 'ग्रहीश् उपादाने', 'णींग् प्रापणे', 'डुकृंग् करणे', 'लूग्श् छेदने' एभ्यः परोक्षायां ञिटोऽसंभवात् अद्यतन्याशिषोर्ध्वम्सीध्वमोः "स्वरग्रहदृशहन्भ्यः स्यसिजाशीःश्वस्तन्यां ञिट् वा" ३।४।६९। इति ञिटि, "ञ्णिति" ४।३।५०। इति वृद्धौ, "सो धि वा" इति सिचो लुकि, अनेन ढत्वे सिध्यति । **जगृहिढ्वे** इत्यादि । ग्रहेः परोक्षाया ध्वे, "स्कसृवृ०" इति इटि, "ग्रहव्रश्चभ्रस्जप्रच्छः" ४।१।८४। इति य्वृति, द्विर्वचनादावनेन ढत्वे भवति । **उपदिदीयिढ्वे** इत्यादि । 'दीङ्च् क्षये', 'अयि' गतौ', 'ञित्वरिष् संभ्रमे', 'वलि' संवरणे', 'लूग्श्' छेदने इत्येभ्यो ध्वेध्वम्सीध्वम्सु "स्कसृवृ०" इति "स्वायशितोऽश्रोणादेरिट्" "नामिनोऽकलिहले" ४।३।५१। इति च वृद्धौ, "सो धि वा" इति सिचो लुकि, "दीय् दीङः क्ङिति स्वरे" ४।४।३२। इति च यथासंभवमिटि सिज्लुकि च, "अड्धातो०" इत्यडागमे, "स्वरादेस्तासु" ४।४।३१। इति वृद्धौ "स्वरग्रहदृश०" इति ञिटि, ४।३।५३। इति ञीङो ञ्यादेशेऽनेन ढत्वे भवति । **घानिषीध्वम्, आसिषीध्वमिति** । हन्तेरासेश्च सीध्वमि' "स्वरग्रहदृश०" इति ञिटि, "ञिणवि घन्" ४।३।१०१। इति घनादेशे, "ञ्णिति" इति वृद्धौ च सिध्यतः । 'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य' इति न्यायज्ञापनार्थं ञिग्रहणम् । ञिटः स्वतन्त्रत्वात् इटस्तु प्रत्ययावयवत्वेन प्रत्ययत्वात् धातोर्नाम्यन्ताभावात् पूर्वेण न प्राप्नोतीत्यप्राप्ते विभाषेयमिति ॥ ८१ ॥

## हो धुट्पदान्ते ॥ २ । १ । ८२ ॥

हकारस्य धुटि प्रत्यये परे पदान्ते च ढकारादेशो भवति । (धुटि–)लेढा, लेक्ष्यति, वोढा, वक्ष्यति । पदान्ते–मधुलिट्, मधुलिड्भ्याम्, मधुलिड्भिः, मधुलिट्त्वम्, मधुलिड्वत्, मधुलिट्कल्पः । धुट्पदान्त इति किम्? मधुलिहौ असत्पर इत्येव? गुडलिण्मान्–अत्र ढत्वतृतीयत्वयोरसत्त्वात् "मावर्णा०" ॥ २ । १ । ९४ ॥ इत्यादिना मतोर्मो वत्वं न भवति । ऊढमाख्यत् औजढत्–अत्र ढत्वधत्वयोरसत्त्वादन्त्यस्वरादिलोपस्य च द्वित्वे स्थानिवत्त्वादकारेण सह हूतेति द्विर्वचनम् । केचित्त्वन्त्यस्वरादिलोपस्य स्थानित्व(वत्त्व)मनिच्छन्तो हूतीति द्वित्वे ऊढमूढि[3] वाख्यत् औजिढदिति मन्यन्ते ॥८२॥

## भ्वादेर्दादेर्घः ॥ २ । १ । ८३ ॥

भ्वादेर्धातोर्यो दकारादिरवयवस्तदवयवस्य हकारस्य धुटि प्रत्यये परे पदान्ते च घकारादेशो भवति, ढस्यापवादः । (धुटि–) दग्धा, दग्धुम्, धक्ष्यति, दोग्धा, दोग्धुम्, धोक्ष्यति, एषु व्यपदेशिवद्भावाद् धातोरवयवस्य दादित्वम् अधाक्षीत् । पदान्ते–अधोग्, गोधुक्, काष्ठधक्, गोधुग्भ्याम्, काष्ठधग्भ्याम्, गोधुक्षु, काष्ठधक्षु । भ्वादेरिति किम्? दामलिहमिच्छति क्यन्, क्विप्–दामलिट्, एवं दृषद्घुट् । दादेरिति किम्? सोढा, मधुलिट् । ह इत्येव? अदात् । धुट्पदान्त इत्येव? गोदुहौ, गोदुहः ॥ ८३ ॥

## मुहद्रुहस्नुहस्निहो वा ॥ २ । १ । ८४ ॥

एषां संबन्धिनो हकारस्य धुटि प्रत्यये पदान्ते च घकारादेशो वा भवति, द्रुहः प्राप्तेऽन्येषामप्राप्ते विकल्पः । मुह–

---

**हो धुट्पदान्ते** । अत्र ढ इत्यनुवर्तते, हो धुट्पदान्ते ढ इत्यन्वयस्तदर्थमाह—**हकारस्येत्यादि** । धुटि प्रत्यये उदाहरति—**लेढा** इत्यादि । उक्ता प्रक्रिया । **वोढा** इति । 'वहीं प्रापणे', धातोस्तृचि, अनेन ढत्वे, "सहिवहेरोचावर्णस्य" इति ढलोपे ओत्वे च रूपमेतत् । **मधुलिड्वदिति** । मधुलिडिव इति विग्रहे "स्यादेरिवे" इति वति भवति । **मधुलिट्कल्प** इति । ईषदपरिसमाप्तो मधुलिट् इति "अनमवादेरीषद०" ७।३।११। इति कल्पपि भवति । ननु गुडलिड् विद्यतेऽस्येति "तदस्यास्त्यस्मिन्निति मतु" ७।२।१। इति मतौ ढत्वे तृतीयत्वे च "मावर्णान्तोपान्त०" इति वकार कस्मान्न भवतीत्याह—**अत्र ढत्वतृतीयत्वयोरित्यादि** । **ऊढमाख्यदिति** । वहे क्ते "यजादि०" ४।१।७९। इति य्वृति, हस्य ढत्वे, "अघश्चतुर्थात्०" इति धत्वे, "तवर्गस्य०" इति ढत्वे, "ढस्तड्ढे" इति ढलोपे दीर्घत्वे च–ऊढ, तमाख्यदिति विग्रहे णिचि, "त्रन्त्यस्वरादे" ७।४।४३। इत्यकारलोपे, ढौ, ढत्वादीनां परेऽसत्त्वात् णिकृतस्य स्थानित्वात् हूत इति द्वित्वे, अनादिव्यञ्जनलोपे, "गहोर्ज" इति जत्वे, समानस्य लुप्तत्वात् सन्वद्भावाभावे "स्वरादेस्ता०" इति वृद्धौ—**औजढत्**, त्यन्तस्य च औजिढत् इति । **केचित्त्विति** । चन्द्रगोमिदेवनन्दिप्रभृतय । ते हि णेरिष्ठवद्भाव विधाय "इष्ठे" इत्यन्त्यस्वरादिलोपमिच्छन्ति, णौ कृतस्य च स्थानिवद्भावो न त्विष्ठकृतस्येति भाव ॥ ८२ ॥

**भ्वादेर्दादेर्घः** । अत्र धुट्पदान्ते इति ह इति चानुवर्तते । अधोगित्यादिसिद्ध्यर्थं भ्वादेरिति दादेरित्यस्य व्यधिकरण विशेषण, तथ धुट्पदान्त इति च हकारस्येत्यस्य, तथाचायमन्वय –भ्वादे दादे ह धुट्पदान्ते घ इति । तदर्थमाह—**भ्वादेर्धातोर्यो दकारादिरित्यादि** । ढकारस्य लेढेत्यादौ घत्वानवष्टब्धस्य विषयस्य सद्भावात्, घत्वस्य तु तदतिरिक्तस्य विषयस्याभावात् तदपवादो घत्वमित्यत आह—**ढस्यापवाद** इति । यद्वा परेऽसत्त्वात् ढत्वमनेनापोद्यत इत्यर्थ । **दग्धेत्यादि** । 'दह' भस्मीकरणे, 'दुहींक्' क्षरणे, आभ्या पूर्ववत्तृजादौ व्यपदेशिवद्भावाद्दादित्वादनेन घत्वे चतुर्थत्वकत्वषत्वादिषु भवति । **अधाक्षीदिति** । 'दह' भस्मीकरणेऽद्यतो दौ, "स सिजस्तोर्दिस्यो" ४।३।६५। इतीति, अनुस्वारेत्त्वात् "एकस्वरादनुस्वारेत" ४।४।५६। इतीडभावे, "व्यञ्जनानामनिटि" ४।३।४५। इति वृद्धौ, घत्वकत्वषत्वादिषु च भवति । **अधोगिति** । दुहेर्ह्यस्तन्या दिवो लुकि, अडागमे, उपान्त्यगुणे, घत्वे धत्वे कत्वे च रूपम् । **गोधुगित्यादि** । गां दोग्धि, काष्ठं दहतीति क्विपि, सिम्याङ्सुप्सु पूर्ववत् यथासंभव घत्वधत्वकत्वषत्वादिषु सिद्ध्यति । ननु लक्ष्ये घकारस्य स्वरूपेणावस्थानाभावात् "धुटस्तृतीय" इति गकारेण भाव्यमिति स एव उच्यतामिति चेत्, नैवम्, घकाराभावे चतुर्थान्तत्वाभावात् अधोगित्यादौ "गडदबादेश्च०" इत्यादिना आदेश्चतुर्थो न स्यात् तदर्थमुपादानम् । **भ्वादेरिति किमिति** । ननु किमर्थं भ्वादेरित्युपादीयते? "भ्वादेर्नामिनो०" इत्यत एव तदनुवृत्तेस्तत एव तत्साध्यार्थसिद्धे, यथा "गडदबादेश्च०" इत्यत्र, न च "स्रस्ध्वसक्रस्सनडुहो द", "सो रु", "अह्न", "रो लुप्यरि", "धुटस्तृतीय" "हो धुट्पदान्ते" इत्यादावनुवर्तनाद्दोष इति वाच्यम्, सबद्धस्यानुवर्तनात् स्वसंबन्धेनैवाऽऽकाङ्क्षानिवृत्तेस्तेष्वप्रवृत्तेर्दोषाभावादिति "गडदबादेश्च०" इत्यत्र नामिनो र्वोरित्यादीनामनाकाङ्क्षाणा निवृत्तेर्भ्वादेरित्यवयवषष्ठ्यन्तस्य गडदबादिना आकाङ्क्षा पूर्यते, एवमन्यत्रापि तदनुवर्तनादिनेति । एव तर्हि "गडदबादे" इत्यत्र यथाऽनुवर्तनात् धातुमात्रार्थं तद्भवति न तु पठितधात्वर्थं, अन्यथा तुण्ढिप् गर्द्धेवित्याद्यसिद्धे, न च कुण्डमुम्भतीति कुण्डोबित्यादि व्यावृत्त्यर्थं, लोके प्रयुज्यमानाना शब्दानामन्वाख्यायक शास्त्र तत्तद्व्युत्पादक, न चैतत्कियन्ता प्रयुज्यन्त इति । एवमत्रापि धातुमात्रपरिग्रहे क्यन्नन्तदामलिडित्यादिप्रसङ्ग, अस्ति ह्यत्र दादिर्धातुर्हान्तश्चेति तस्मात् विशिष्टसंबन्धिप्रतिपत्त्यर्थं भ्वादेरित्युपादीयतेऽन्यथा संबन्धिमात्रप्रतीतेरत्रापि स्यादिति भाव । नन्वेव यदि विशिष्टसबन्धिप्रतिपत्त्यर्थं भ्वादेरित्युपादीयते तर्हि भ्वादेर्दादेरित्येतत्समानाधिकरण विशेषण भवतु–दकारादेर्धातोरिति, तथाच दामलिडिति भवत्यय दादिर्न तु भ्वादि, समुदायस्य धातुष्वपाठात् । अधोगित्यत्रापि दादिग्रहणेन तद्ग्रहणात् घत्व भविष्यति पाठे ह्यस्य दादित्वादिति चेत्, सत्यम्, अधोगित्यादौ पाठे दादित्वेऽपि प्रयोगे तददर्शनात् मन्दमतिर्घत्वाभावमाशङ्केत, अनेनैवाशयेन धृतावयवस्येति व्यावृत्तिर्नोपात्तेति । सहेस्तृचि **सोढेत्यादौ** दादित्वाभावात् घत्वाभाव ॥ ८३ ॥

**मुहद्रुहस्नुहस्निहो वा** । अत्र धुट्पदान्ते इति ह इति घ इति चानुवर्तते, मुहद्रुहस्नुहस्निह ह धुट्पदान्ते घ वा इत्यन्वयस्तदर्थमाह—**एषामित्यादि** । 'मुहौच्' वैचित्त्ये, 'द्रुहौच्' जिघांसायाम्, 'ष्णुहौच्' उद्गिरणे, 'ष्णिहौच्' प्रीतौ, एषु द्रुहे पूर्वेण प्राप्तेऽनेन घत्वं विधी-

---

१ स्थानित्वाद० पु० ।　२ हूति द्वि० पु० ।　३ °ढि वा० पु० ।　४ °क् पु० ।　५ °धुग्भ्याम् पु० ।　६ °धुक्षु पु० ।　७ ष्णि० पु० ।

मोग्धा, मोढा, उन्मुक्, उन्मुट्, उन्मुग्भ्याम्, उन्मुड्भ्याम्, ष्णुह्–स्नोग्धा, स्नोढा, उत्स्नुक्, उत्स्नुट्, उत्स्नुग्भ्याम्, उत्स्नुड्भ्याम्, द्रुह्–द्रोग्धा, द्रोढा; मित्रध्रुक्, मित्रध्रुट्, मित्रध्रुग्भ्याम्, मित्रध्रुड्भ्याम्, ष्णिह्–स्नेग्धा, स्नेढा, चेलस्निक्, चेलस्निट्, चेलस्निग्भ्याम्, चेलस्निड्भ्याम् । धुट्पदान्त इत्येव ? उन्मुहौ, उन्मुहः । मुहादेरिति गणनिर्देशमकृत्वा धातुपरिगणनं यङ्लुप्यपि विध्यर्थम्–मोमोग्धि, मोमोढि, दोद्रोग्धि; दोद्रोढि ॥ ८४ ॥

## नहाहोर्धतौ ॥ २ । १ । ८५ ॥

नहेर्ब्रूस्थानाहश्च धातोः सवन्धिनो हकारस्य धुटि प्रत्यये पदान्ते च यथासंख्यं धकारतकारावादेशौ भवतः । (नहि–)नद्धा, नत्स्यति, उपानत्, परीणत्, उपानद्भ्याम्, उपानत्कल्पः; आह्–आत्थ, आहेर्नियतविषयत्वात् पदान्तता नास्ति । धुट्पदान्त इत्येव ? उपनह्यति, उपानहौ; उपानहः । आह, आहतुः, आहुः, आहेरादेशान्तरकरणम् "अधश्चतुर्थात्तथोर्धः" ॥ २ । १ । ७९ ॥ इति थकारस्य धत्वनिवृत्त्यर्थम् ॥ ८५ ॥

## चजः कगम् ॥ २ । १ । ८६ ॥

चकारजकारयोर्धुटि प्रत्यये परे पदान्ते च ककारगकारावादेशौ भवतः । (चः–) वक्ता, वक्तुम्, वक्ष्यति, ओदनपक्, त्वक्, वाक्, वाग्भिः, वाक्त्वम्; जः–त्यक्ता, त्यक्तुम्, त्यक्ष्यति, अर्धभाग्, स्वभग्, तृष्णक् । धुट्पदान्त इत्येव ? वच्मि, वाचौ, वाचः । प्रत्यय इत्येव ? इच्छति, मज्जति । कथं तच्चक्षुः ?, तच्चणः ?, तच्चरति ?, उच्यते–अत्र दस्य परत्वात् तृतीयत्वे पश्चाच्चवर्गत्वे प्रथमत्वम्, ततस्तृतीयस्य "चजः कगम्" ॥ २ । १ । ८६ ॥ इति परेऽसत्त्वेन चजयोरभावात् कत्वगत्वे न भवतः, अञ्झलावित्यत्र तु सञ्ज्ञाशब्दत्वात् न भवति ॥ ८६ ॥

---

यतेऽत आह—द्रुह इत्यादि । एषा "स्वाद्यशितो०" ४।४।३२। इति नित्यमिटि प्राप्ते "धूगौदित " ४।४।३८। इतीडभावपक्षे—मोग्धेत्यादीन्युदाहरणानि । मित्रध्रुगिति । मित्राय द्रुह्यतीति क्विपि भवति । चेलस्निगिति । चेलेन स्निह्यतीति क्विपि रूपम् । ननु किमेते मुहादयः स्वरूपेणोपादीयन्ते ? मुहादेरित्येवोच्यता, न चाधिकानां प्रसङ्गः, तदनन्तरं वृत्करणात्, तद्धि पुषादिपरिसमाप्त्यर्थमपि भविष्यतीति चेद्, उच्यते-गणनिर्देशे 'तिवा शवाऽनुबन्धेन निर्दिष्टं यद्गणेन च०' इति वचनात् यङ्लोपे न स्यात् अत आह—मुहादेरितीत्यादि । ननु बोभवीतीत्यादय एव नियता यङ्लुबन्ता लोके प्रयुज्यन्त इत्येषां प्रयोगो न भविष्यति, एवं तर्हि स्पष्टार्थं पाठ ॥ ८४ ॥

नहाऽऽहोर्धतौ । अत्र ह इति धुट्पदान्त इति चानुवर्तते, नहाऽऽहो ह धुट्पदान्ते धतौ इत्यन्वयस्तदर्थमाह—नहेरित्यादि । "ब्रूग पञ्चानां पञ्चाहश्च" ४।२।११८। इति विहित आह गृह्यतेऽन्यस्यासंभवादत आह—ब्रूस्थानाहश्चेति । 'णहींच्' बन्धने, 'ब्रूग्क्' व्यक्तायां वाचि, एतौ हकारस्येत्यत्र व्यधिकरणविशेषणतया अन्वितः । नहाहोर्धताविति कार्यकार्यिणोरुभयोर्द्वित्वनिर्देशो यथासंख्यार्थं । धुट्युदाहरति—नद्धेत्यादि । पदान्ते उदाहरति—उपानदित्यादि । उपनह्यति परिणह्यतीति क्विपि, "गतिकारकस्य नहिवृतिवृषिव्यधिरुचिसहितनौ क्वौ" ३।२।८५। इति दीर्घत्वे, "अदुरुपसर्गान्तरो णहिनुमीनाने" २।३।७७। इति णत्वे सौ च भवति । आत्थेति । ब्रूगो वर्तमानासिवस्थवादेशेऽनेन हकारस्य तकारे रूपम्, नियतविषयत्वादस्य पदान्ते नोदाहृतम् । उपनह्यतीति । उपपूर्वान्नहेस्तिवि "दिवादे श्य" ३।४।७२। इति श्ये भवति । आहेत्यादि । ब्रूगस्तिव्तस्अन्तीनां स्थाने णवतुसुस्तु कृतेषु आहादेशे च सिद्ध्यति । नन्वाहेरपि धकारे "अघोषे प्रथमो०" इति तकारे सति आत्थेति सिध्यतीत्युभयोर्धकार एवोच्यताम् किन्तकारकरणेनेति चेत्, नैवम्, धकारे सति थकारस्य धत्वप्रसङ्ग इत्याह—आहेरित्यादि । न च सिवस्थव्विधानसामर्थ्यादेव धत्वं न भविष्यति, अन्यथा सिवो धत्वमेव विदध्यादिति वाच्यम्, लाघवार्थं तत्स्यादन्यथा "ब्रूग पञ्चानां०" इत्यत्र सिवो थ इति सूत्रान्तरे कृते गौरवं स्यात्तस्मात् सूक्तं—धत्वनिवृत्त्यर्थमिति ॥ ८५ ॥

चजः कगम् । अत्र धुट्पदान्ते इत्यनुवर्तते, चजः धुट्पदान्ते कगमित्यन्वयस्तदर्थमाह—चकारजकारयोरित्यादि । वक्ता इत्यादि । वचेर्ब्रूगो वा तृजादिषु अनेन कत्वे भवति । पदान्ते उदाहरति—ओदनपगिति । ओदनं पचतीति क्विपि सौ तल्लुक्यनेन कत्वम् । त्वक् इति । 'त्वचत्' सवरणेऽत क्विपि, 'तनूयि' विस्तारे, अतो वा "तनेर्ड्वच्" उणा०८७२ । इति ड्वचि भवति । जकारस्योदाहरति—त्यक्ता इत्यादि । 'त्यज' हानौ, अतस्तृजादिष्वनेन गत्वे प्रथमत्वे सिद्ध्यति । अर्द्धभागिति । 'भजीं' सेवायामित्यत "भजो विण्" ५।१।१४६। इति विणि रूपमेतत् । स्वभक्, तृष्णगिति । 'ञिष्वपक्' शये, 'ञितृषच्' पिपासायाम्, आभ्यां "तृषिधृषिस्वपो नजिङ्" ५।२।८०। इति नजिङि भवति । वच्मीति । वचेर्मिवि भवति । इच्छतीति । 'इषत्' इच्छायाम्, तिवि, शे, "गमिषद्यमश्छ" ४।२।१०६। इति छत्वे प्रथमत्वे च रूपम् । मज्जति । 'टुमस्जोंत्' शुद्धावत "सस्य शषौ" इति सकारस्य शत्वे, तस्य "तृतीयस्तृतीयचतुर्थे" इति जकारे भवति । "तेन विसः०" ७।१।१७५। इति तच्छब्दात् चक्षुप्चणयोश्चरतौ च परत्वात् पूर्वं तृतीयत्वे "तवर्गस्य०" इति जत्वे गत्वम्, "अघोषे प्रथमो०" इति चत्वे कत्वं कस्मान्न भवति ? नैवम्, परेऽसदिति परे गत्वे कत्वे च पूर्वस्य दकारस्यासत्त्वे न तत्स्थानयोश्चजयोरप्यभावात् कगयोरभाव इत्याह—कथमित्यादि । अच् च हल् च अञ्झलावित्यत्र चकारस्य सत्त्वेऽपि सञ्ज्ञाव्याघातप्रसङ्गात् कत्वं न भवति, अच् इति पूर्वे स्वरा सञ्ज्ञायन्ते कत्वे समानसंज्ञा स्यादित्याह—अञ्झलावित्यत्रेत्यादि । नन्वत्र सूत्रे किमर्थमादेशद्वयविधानम् ? यावता कविधानं गविधानं वा क्रियताम्, यथालक्षणं कस्य गत्वे गस्य कत्वे च सर्वसाध्यसिद्धेरिति चेद्, सत्यं, गाभावे लभादयः, कभावे पक्कादयो न सिद्ध्येयुरिति कगग्रहणम् ॥ ८६ ॥

---

१ ष्णुह् पु० । २ ष्णिह् पु० ।

## यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राजः शः षः ॥ २ । १ । ८७ ॥

यजादीनां धातूनां चजः शकारस्य च धुटि प्रत्यये परे पदान्ते च षकार आदेशो भवति । यज्–यष्टा, यष्टुम्, देवेट्, उपयट्, उपयड्भ्याम्; सृज्–स्रष्टा, स्रष्टुम्, तीर्थसृट्, तीर्थसृड्भ्याम्; मृज्–मार्ष्टा, मार्ष्टुम्, कंसपरिमृट्, कंसपरिमृड्भ्याम्, राज्–सम्राट्, सम्राड्भ्याम्; भ्राज्–विभ्राट्, विभ्राड्भ्याम्, राजभ्राजोः क्तिरेव धुट्, अन्यस्तु इट्ा व्यवधीयते–राष्टिः, भ्राष्टिः; केचित्तु क्तिं नेच्छन्ति । भ्रस्ज्–भ्रष्टा, भ्रष्टुम्, भर्ष्टा, भर्ष्टुम्, धानाभृट्, धानाभृड्भ्याम्; व्रश्च–व्रष्टा, व्रष्टुम्, मूलवृट्, मूलवृड्भ्याम्, परिव्राज्–परिव्राड्, परिव्राड्भ्याम्; "दिद्युद्दद्द०" इत्यादिना क्विबन्तस्यैव निपातनात् धुट्यसंभवात् नोदाहृतम् । शकारान्त'लिश्'–लेष्टा, लेष्टुम्, लिट्, लिड्भ्याम्, आदेशोऽपि शकारो गृह्यते–प्रष्टा, प्रष्टुम्, शब्दप्राड्, शब्दप्राड्भ्याम्, राजिसहचरितस्य भ्राजेर्ग्रहणात् 'एजृङ्, भ्रेजृङ्', 'भ्राजि', दीप्ताविलस्य गत्वमेव–विभ्राक्, विभ्राग्भ्याम्, अत एव भ्राजेरात्मनेपदिनोऽपि 'राजृग्', 'टुभ्राजृग्'; दीप्तावित्युभयपदिषु पुनः पाठः साहचर्यार्थम् । धुट्पदान्त इत्येव ? देवेजौ, देवेजः, रज्जुसृजौ, कंसपरिमृजौ, सम्राजौ, विभ्राजौ, धानाभृज्जौ, मूलवृश्चौ, परिव्राजौ, शब्दप्राशौ, 'उच्छै'–समुशौ । यजादिधातुसाहचर्यात् शकारस्यापि धातोः सबन्धिन एव ग्रहणादिह न भवति–निशाशब्दस्यान्तलोपे "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ इति जकारे–निज्भ्याम्, सुपि तु जकारस्य प्रथमत्वे "सस्य शषौ" ॥ १ । ३ । ६१ ॥ इति सुपः सकारस्य शत्वे, "प्रथमादधुटि शश्छः" ॥ १ । ३ । ४ ॥ इति छत्वे–निच्छु, जकारस्य तु परे गत्वेऽसत्त्वात् "चजः कगम्" ॥ २ । १ । ८६ ॥ इति गत्वं न भवति । चज इत्येव ? वृक्षवृश्चमाचष्टे णौ, विचि–वृक्षव्, अत्र वकारस्य मा भूत् । कथमसृग् ?, असृग्भ्याम् ?, रज्जुसृग् ?, रज्जुसृग्भ्याम् ?, असृज्रज्जुसृज्शब्दयोरौणादिकयोर्भविष्यति । कश्चित्तु "अनुनासिके च च्छ्वः शूट्" ॥ ४ । १ । १०८ ॥ इति शत्वविधेरनित्यत्वज्ञापनार्थं छकारस्यापि षत्वमिच्छति, तन्मते–पथिप्राच्छौ, पथिप्राच्छः, शब्दप्राच्छौ, शब्दप्राच्छः । 'उच्छैत्' विवासे–समुच्छौ, समुच्छः ॥ ८७ ॥

---

**यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राज. श. ष.** । अत्र चज इति धुट्पदान्त इति चानुवर्तते, यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राज चज शश्च धुट्पदान्ते ष इत्यन्वयस्तदर्थमाह—**यजादीनामित्यादि** । 'यजीं' देवपूजादौ, 'सृजत्' विसर्गे, 'मृजौक्' शुद्धौ, 'राजृग्' 'टुभ्राजि' दीप्तौ, 'भ्रस्जीत्' पाके, 'उव्रश्चौत्' छेदने, परिपूर्वो 'व्रज' 'गतौ,' कृतदीर्घ क्विबन्त इत्येतेषामित्यर्थ । **यष्टेत्यादि** । यजेस्तृजादौ "एकस्वरा०" इति इडभावेऽनेन षत्वे "तवर्गस्य०" इति टत्वे सिध्यति । पदान्ते दर्शयति—**देवेडिति** । देवेभ्यो देवान् वा यजतीति क्विपि रूपमिति भवति । एवम**उपयडित्यादि** । **स्रष्टेत्यादि** । सृजेस्तृजादौ "अ सृजिदृशोऽकिति" ४।४।१११। इति अकारे सिद्ध्यति । **तीर्थसृडिति** । तीर्थं सृजतीति क्विपि रूपमेतत् । **मार्ष्टा, मार्ष्टुमिति** । मृजेस्तृजादौ, "धूगौदित " इतीडभावे, उपान्त्यगुणे, "मृजोऽस्य वृद्धि " ४।३।४२। इति वृद्धौ भवत । **कंसपरिमृडिति** । कस परिमार्ष्टीति क्विपि रूपम् । **सम्राट्** इत्यादि । संराजते विभ्राजत इति क्विपि सिद्ध्यति । **राजभ्राजोरित्यादि** । "तेर्ग्रहादिभ्य " ४।४।३३। इति नियमाद्राजभ्राजोरग्रहादित्वात् क्ताविडभाव इत्यर्थ । **राष्टि', भ्राष्टिरिति** । राजन भ्राजनमित्यर्थ, "श्वादिभ्य " ५।३।९२। इति क्ति । **केचित्त्विति** । अनयो क्त्यन्तयो प्रयोगाभावात् प्रयुक्तानामन्वाख्यानारम्भात् 'यथालक्षणमप्रयुक्ते' इति वचनात् अप्रयुक्ते लक्षणमेव न प्रयोक्तव्यमित्यभिप्राय , यदाह साधारण –क्तिरप्यनयोरनभिधानान्न भवति । **भ्रष्टेत्यादि** । भ्रस्जेस्तृजादौ भवति, "भृज्जो भर्ज्" ४।४।६। इति पक्षे भर्जादेशे—**भर्ष्टा** इत्यादि । **धानाभृडिति** । धाना भृज्जतीति क्विपि रूपम् । **व्रष्टेत्यादि** । व्रश्चेस्तृजादौ "धूगौदित " इति पक्षे इडभाव । **मूलवृडिति** । मूल वृश्चतीति क्विपि भवति । **परिव्राडिति** । परिपूर्वाद्व्रजे "दिद्युद्दद्जग०" ५।२।८३। इति क्विपि दीर्घत्वे च निष्पद्यते । **लेष्टेत्यादि** । 'लिशत्' गतौ, अतस्तृजादौ "एकस्वरा०" इतीडभावे भवत । **लिडिति** । लिशतीति क्विपि रूपम् । केचित् "अनुनासिके च च्छ्वः शूट्" इति च्छिरत्यनुवर्त्य तृजादौ शत्वमनिच्छन्तोऽत्र सूत्रे छग्रहण कृत्वा छकारस्य षत्वमिच्छन्ति, अस्माक तु तृजादावपि शत्वस्येष्टत्वात् तद्द्वारेणैव षत्वसिद्धिरित्याह—**आदेशोऽपीत्यादि** । **प्रष्टा, प्रष्टुमिति** । 'प्रच्छत्' ज्ञीप्सायाम्, "स्वरेभ्य " इति द्वित्वे पूर्वस्य "अघोषे प्रथमो०" इति चत्वेऽनेन षत्वे भवत । **शब्दप्राडिति** । शब्द पृच्छतीति "दिद्युद्द०" इति क्विपि दीर्घत्वे रूपम् । ननु विपूर्वस्य भ्राजे क्विबन्तस्य गत्वे विभ्रागिति प्रयोगदर्शनात् कथ तत्सिद्धिरित्याह—**राजिसहचरितस्येत्यादि** । **समुशाविति** । 'उच्छैत्' विवासे, अत क्विपि शत्वे भवति । ननु श इति सामान्येनोपादानात् "मासनिशासनस्य०" २।१।१००। इति निशाशब्दस्यान्तलोपे शस्य षत्व कस्मान्न प्राप्नोति ? उच्यते–यजादयो धातवस्तत्साहचर्यात् शकारोऽपि धातोरेवेत्याह—**यजादीत्यादि** । **सुपि तु जकारस्य प्रथमत्वे** इति । "अघोषे प्रथमोऽशिट " इति प्रथमत्वे इत्यर्थ । ननु परत्वात् प्रथम बाधित्वा "चज कगम्" इति जस्य गत्व कस्मान्न भवतीत्याह—**जकारस्य तु** इत्यादि । एव जकारस्य परेऽसत्त्वात् कारणाभावेन कार्याभावस्य सुलभत्वात् तत्स्थानिनश्चकारस्याप्यसत्त्वात् षत्वाप्रवृत्तिरिति । **चज इत्येवेति** । चज इत्यधिकारो वकारस्य षत्वादिर्मा भूदित्येतदर्थं । **कथमिति** । नञ्पूर्वस्य क्विबन्तस्य सृजे षत्वेन भाव्य तत्कथ गत्वमित्यर्थ । समाधत्ते—**औणादिकयोरिति** । असृत इति न सृज्यत इति वा "ऋधिपृथि०" उणा० ८७४। इति किदजि, बाहुलकादेकत्र अकारस्य ऋत्वेऽन्यत्र जकाराकारयोर्लोपे–असृगिति सिध्यति । पन्थान पृच्छत इति क्विपि शत्वविधेरनित्यत्वात् छकारान्तादौजसो —**पथिप्राच्छावित्यादि** । तन्मतस्य चापास्त्वात् **कश्चिदित्येकवचनेन निर्देश** । स्वमतेऽन्यमते च धुटि प्रत्यये पदान्ते च पूर्वाण्येवोदाहरणानि, विशेषस्त्वनयोरेकत्र पथिप्राच्छाविर्त्यादि स्वमते च पथिप्राशावित्यादीति । एव समुच्छावित्यादावपि विशेष स्वमते–समुशावित्यादि ॥ ८७ ॥

---

१ °निट् पु० । २ ×भ्राजि दी० पु० । ३ °शे पु० ।

## संयोगस्यादौ स्कोर्लुक् ॥ २ । १ । ८८ ॥

धुटि प्रत्यये पदान्ते च यः संयोगस्तस्यादौ वर्तमानयोः सकारककारयोर्लुग् भवति । ओलस्जैति–लग्नः, लग्नवान्, साधुलग्, साधुलग्भ्याम्; मस्जू–साधुमक्, साधुमग्भ्याम्; ओव्रश्चौत्–वृक्णः, वृक्णवान्, मूलवृट्, मूलवृड्भ्याम्; भ्रस्जू–भृष्टः, भृष्टवान्, यवभृड्, यवभृड्भ्याम्; क्–तक्षौ, तष्टः, तष्टवान्, काष्ठतड्, काष्ठतड्भ्याम्; अक्षौ–अष्टः, अष्टवान्, तृणाट्, तृणाड्भ्याम्, तृणाट्कल्पः; चक्षि–आचष्टे । ननु स्कोर्लुकः परस्मिन्नसत्त्वात् "पदस्य" ॥ २ । १ । ८९ ॥ इति संयोगान्तस्य लोपः स्यात्, नैवम्; स्कोः पदान्ते लुको विधानादसत्त्वाभावः, अन्यथा हि समुदायस्यैव लोपं विदध्यात् । संयोगान्तस्येति किम्? साता, कृतम् । आदाविति किम्? शक्केर्वेङ्केश्च यङ्लुपि–शाशक्ति, वावक्ति । स्कोरिति किम्? नर्नर्ति । 'अदड्' अभियोगे, 'अदृट्' हिंसातिक्रमयोः, अनयोः क्विपि उत्तरसूत्रेण डकारटकारयोर्लुकि दकारस्य च प्रथमत्वे–क्षेत्रप्रात्, गृहप्रात् । अन्ये तु अट्टिं तोपान्त्यं पठन्ति, तन्मते–क्विपि अत्, अद् । अन्यस्त्वद्डतेः संयोगादेर्दकारस्यापि लोपमिच्छति, तन्मते–अद्, अड्भ्याम्, तथा 'अट्ट' अतिक्रमहिंसयोरिति पठन् संयोगादेष्टकारस्यापि लोपमिच्छति–अट्, अड्भ्याम् । धुट्पदान्त इत्येव? साधुमज्जौ, काष्ठतक्षौ । प्रत्यय इत्येव? पृथक्स्थाता । वास्यर्थम्, वाक्यर्थमित्यत्र तु यत्वस्य बहिरङ्गत्वेनासिद्धत्वात् संयोगादित्वे सत्यनेनादेरुत्तरेण चान्तस्य लुग् न भवति । कथं मांसं पिपक्षति क्विप्–मांसपिपक्?, वचो विवक्षते–वचोविवक्?; कत्वस्य परस्मिँल्लोपेऽसिद्धत्वात् न भवति ॥ ८८ ॥

---

संयोगस्यादौ स्कोर्लुक् । अत्र धुट्पदान्ते इत्यनुवर्तते, धुट्पदान्ते संयोगस्य आदौ स्को लुक् इत्यन्वयः । संयुज्यन्ते वर्णा अस्मिन्निति "व्यञ्जनाद् घञ्" ५।३।१३२। इति घञि–संयोगः, स च वैयाकरणसम्प्रदायाद् व्यञ्जननैरन्तर्यमुच्यते इति, धुटीत्यनेन च संयोगो विशिष्यते न स्कोरिति, सकारककारयोः संयोगादिभूतयोः पदान्तत्वस्य धुट्परत्वस्य चाऽसंभवादित्याह—धुटिप्रत्यये पदान्ते च य इत्यादि । सकारककारयोरेकविभक्तिनिर्दिष्टयोरपि प्रत्येकं लुका सम्बन्धः उभयोरेकत्र संयोगादित्वासंभवात् । लग्नः, लग्नवानिति । 'ओलस्जैति' व्रीडे, अतः क्तक्तवत्वोः "डीयश्व्यैदितः क्तयोः" ४।४।६१। इतीट्प्रतिषेधे, आदिसकारलोपे "चजः कगम्" इति गत्वे, "सूयत्याद्योदितः" ४।२।७०। इति क्तकारस्य नत्वे सिद्ध्यतः । साधुलग् इति । साधु लज्जत इति क्विपि रूपम् । साधुमगित्यादि । मस्जे पूर्ववत् क्विपि भवति । वृक्णः, वृक्णवानिति । व्रश्चेः क्तादौ "ग्रहव्रश्च०" ४।१।८४। इति य्वृति, दन्त्योपदेशसामर्थ्यात् "सस्य शषौ" इति कृततालव्यस्यापि लोपे, चस्य कत्वे, औदित्वात्तकारस्य नत्वे, "रषृवर्णा०" इति णत्वे भवतः । मूलवृडिति । मूलं वृश्चतीति क्विपि रूपम् । एवं भ्रस्जेर्भृति सलोपे "यजसृज" इति षत्वे—भृष्टः, भृष्टवान्, यवभृडित्यादि । तष्ट इत्यादि । 'तक्षौ' तनूकरणेऽतः क्तादौ "धूगौदितः" इतीट्प्रतिषेधे संयोगादिककारलोपे "तवर्गस्य०" इति टत्वे काष्ठं तक्ष्णोतीति क्विपि च सिद्ध्यति । 'अक्षौ' व्याप्तौ इत्यतः पूर्ववत्—अष्ट, अष्टवानिति । तृणपूर्वादस्मादेव क्विपि—तृणाट् इति । "अतमवादे०" ७।३।११। इति कल्पपि—तृणाट्कल्प इति । आङ्पूर्वात् 'चक्षिक्' व्यक्तायां वाचीत्यतस्ते प्रत्यये—आचष्टे इति । नन्विति । अयं भावः—पूर्वं संयोगान्तलोपे सकारककारयोः संयोगादित्वाभावात् पश्चात् लुग् न प्राप्नोतीत्याक्षेपार्थः । परिहरति—नैवमिति । यदि हि पदान्ते संयोगाद्योः सकारककारयोर्लोपशास्त्रस्यासत्त्वात् "पदस्य" इति संयोगान्तलोपः स्यात् तदा निर्विषयत्वात् स्कोर्लुग्विधानमनर्थकं स्यात् । ननु स्कोर्लुकि तु लुग्विधेश्चरितार्थत्वात् कार्यासत्त्वपक्षमाश्रित्य "पदस्य" इति अत्र लोपप्रसङ्ग इति चेन्न, एवं सति सकारककारादिसमुदायस्यैव पदान्तसंयोगो लोपं विदध्यादित्याह—अन्यथा हीत्यादि । अत्रेयं वाचो युक्तिः—संयोगेति प्रथमं, पदस्येति द्वितीयं, अन्ते चेति तृतीयं सूत्रं कुर्यात्, तत्राद्यस्यार्थः—धुटि प्रत्यये संयोगादिस्थयोः सकारककारयोर्लुग् भवति, द्वितीयस्यार्थः—पदान्ते वर्तमानस्य सकारककारादिसंयोगस्य सकलस्यापि लुक्, तृतीयस्यार्थः—"पदस्य" इत्यतः पदान्ते इत्यनुवर्त्य पदान्ते संयोगसंबन्धिनोऽन्तस्य लुग् भवतीत्यकरणात् लुकः स्थानित्वं न भवति । 'ष्णैच्' अन्तकर्मणि, अस्मात् "आत्सन्ध्यक्षरस्य" इत्यात्वे तृचि—साता इति । करोतेः क्ते—कृतमिति । शाशक्तीत्यादि । 'शकुङ्' शङ्कायां, वकुङ् शङ्कायामतः "उदितः स्वराग्नोऽन्तः" इति नागमे, "व्यञ्जनादेकस्वरा०" इति यङि, तस्य "बहुलं लुप्" इति लुपि, "सन्यङश्च" इति द्विर्वचनेऽनादिव्यञ्जनलोपे, "आ गुणावन्यादेः" इत्यात्वे, "म्नां धुड्वर्गे०" इति परवर्गान्त्यत्वे, तिवि, आदिग्रहणात् ककारस्य संयोगान्तस्य लोपाभावे सिद्ध्यति । एवं नृत्यतेर्यङ्लुपि—नर्नर्ति इति । क्षेत्रप्रात्, गृहप्रात् इति । क्षेत्रं प्राड्वि, गृहं प्राट्टीति इत्युभयोर्दोपान्त्ययोः क्विपि भवति । अन्ये त्विति । भीमसेनादयः, तन्मतस्वमतयोः क्विप्यविशेषः, किन्तु "न यदनः०" इत्यत्र विशेषः—अतिट्टिपते, अट्टिटिपत इति । स्कोरिव संयोगादिदकारस्य लोपमिच्छतो मतं स्वानभिमतमित्येकवचनेन निर्दिशति—अन्यस्त्विति । तस्यैव मते पूर्ववत् संयोगादेष्टकारस्यापि लोप इत्याह—तथेत्यादि । पृथक्स्थातेति । पृथगित्यव्ययपूर्वात् तिष्ठतेस्तृच्, अस्ति ह्यत्र ककारः सकारश्च संयोगादि, प्रत्ययाभावात् लोपाभावः । वास्यै इदं वाक्यै इदमित्यस्वपदेन विग्रहे "इवर्णादे०" इत्युभयपदाश्रितस्य यत्वस्यासिद्धत्वादेकपदाश्रितोऽन्तरङ्गः संयोगाद्योः स्कोर्लोपः "पदस्य" इति संयोगान्तलोपश्च न भवतीत्याह—वास्यर्थमित्यादि । अनेनादेरिति । "संयोगस्यादौ०" इत्यनेनोभयत्रादेः सस्य कस्य च लुग् भवतीति भावः । उत्तरेण चान्तस्येति । "पदस्य०" इत्यनेनान्तस्य यस्य लुग् भवतीत्यर्थः । लुगभावे हेतुस्तु—यत्वस्य बहिरङ्गत्वेनासिद्धत्वादिति । कथमिति । पचेर्वचेश्च सनि "सन्यङश्च" इति द्वित्वेऽनादिव्यञ्जनलोपे, "सन्यस्य" इतीकारे, "चजः कगम्" इति ककारस्य "संयोगस्यादौ०" इति लोपे प्राप्ते तस्यासत्त्वात् लोपाभाव इत्यर्थः ॥ ८८ ॥

---

१ °लक् पु० । २ °भ्रस्चौ° पु० । ३ °तद् पु० । ४ सातम् म० म० । ५ भदक् पु० । ६ अट्टि पु० । ७ भटद् पु० । ८ कद् पु० । ९ भर्म्या पु० । १० पान्त० म० म० ।

## पदस्य ॥ २ । १ । ८९ ॥

पदान्ते वर्तमानस्य संयोगस्य लुगन्तादेशो भवति, स च परे स्वादिविधौ च पूर्वस्मिन्नसन् द्रष्टव्यः । पुमान्, पुम्भ्याम्, पुंभिः, पुंभ्यः, पुंसु, पुंवत्, पुंरूप्यः, पुंमयः, पुंजातीयः; एवं गोमान्, अनड्वान्, महान्, भूयान्, कुर्वन्, श्रेयान्नित्यादौ संयोगान्तलोपस्य परकार्येऽसत्त्वादुत्तरसूत्रेण नलोपो न भवति, स्वादिविधौ चासत्त्वात् अत्वादिलक्षणो दीर्घो भवति । पदस्येति किम्? स्कन्त्वा, सन्त्वा, भवाञ्छेते इत्यादौ तु श्रादेशविधानसामर्थ्यात् न भवति ॥ ८९ ॥

## रात्सः ॥ २ । १ । ९० ॥

पदान्ते वर्तमानस्य संयोगस्य संबन्धिनो रेफात् परस्य सकारस्यैव लुग् भवति । चिकीः, चिकीर्भ्याम्, चिकीर्षु; अत्र चिकीर्षतीति क्विपि, "अतः" ॥ ४ । ३ । ८२ ॥ इत्यकारलोपे षत्वस्य परेऽसत्त्वात् सकारस्यैव लोपः, एवं जिहीः, जिहीर्भ्याम्, जिहीर्षु; कटचिकीः, पटजिहीः । पूर्वेणैव सिद्धे नियमार्थं वचनम्, तेन रात् परस्य संयोगान्तस्य सस्यैव लोपो नान्यस्य—ऊर्क्, ऊर्ग्भ्याम्, न्यमार्ट्; 'गृधेः', 'स्पर्धेश्च यङ्लुपि, द्वित्वे, "रिरौ च लुपि" ॥ ४ । १ । ५६ ॥ इति पूर्वस्य रागमे, "आगुणावन्यादेः" ॥ ४ । १ । ४८ ॥ इति दीर्घत्वे च, ह्यस्तन्याः सिवि, आदेश्चतुर्थत्वे, "लघोरुपान्त्यस्य" इति गुणे, "सेः स्द्धां च रुर्वा" इति सिवलुकि, धकारस्य च रुत्वे, "रो रे लुग् दीर्घश्चादिदुतः" इति रलोपे, पूर्वस्य दीर्घत्वे अडागमे च सिद्धम्—अजर्घाः, अपास्पाः । रादेव सस्येति तु विपरीतनियमो न भवति—"पुंवत्कर्मधारये" इत्यत्र पुंवदिति निर्देशात् ॥ ९० ॥

---

**पदस्य** । अत्र संयोगस्येति लुगिति चानुवर्तते, संयोगस्येति च समानाधिकरणं विशेषणं पदस्येति स्थानषष्ठ्यन्तस्य, ततश्च "विशेषणमन्तः" इति संयोगान्तस्य पदस्येति लभ्यते "षष्ठ्या अन्त्यस्य" इत्युपस्थानाच्चान्त्यस्येति लभ्यते । तथा च—संयोगान्तस्य पदस्य योऽन्त्योऽवयवस्तस्य लुगित्यन्वयस्तदाह—**पदान्ते वर्तमानस्य संयोगस्येति** । **पुमानिति** । पुम्सशब्दात् सिभ्याम्भिस्भ्यस्सुप्सु सौ "पुंसो पुमन्स्" १।४।७३। इति पुमन्सादेशे, व्यञ्जनान्तत्वात् सेर्लोपे, "न्समहतोः" इति दीर्घत्वे, "धुटस्तृतीयः" इत्येतदपवादस्य "सो रुः" इत्येतस्य परस्मिन्नसत्त्वात् परत्वात् "पदस्य" इति सर्वत्र सकारलोपे भवति । **पुंवदिति** । पुमानिवेति विग्रहे "स्यादेरिवे" ७।१।५२। इति वति रूपम् । **पुंरूप्यः**, **पुंमय** इति । "नृहेतुभ्यो रूप्यमयटौ वा" इति सिद्धतः । **पुंजातीय** इति । "प्रकारे जातीयर्" ७।२।७५। इति जातीयरि रूपम् । **एवमिति** । गावो विद्यन्तेऽस्येति मतौ, सौ, "ऋदुदितः" इति नागमे—**गोमान्** । "अनडुहः सौ" इति नागमे—अनड्वान् । **महानिति** । "ऋदुदितः" इति नागमे, "न्समहतोः" इति दीर्घत्वम् । **भूयानिति** । बहोरीयसौ "भूर्लुक् चेवर्णस्य" ७।४।४१। इति भूभावेवर्णलुकोः सिद्ध्यति । करोतेः शतरि—**कुर्वन्** इति । **श्रेयानिति** । प्रशस्यशब्दस्येयसौ "प्रशस्यस्य श्रः" ७।४।३४। इति श्रादेशे भवति । ननु पुमानित्यादौ "पदस्य" इति संयोगान्तलोपे नकारलोपः कस्मान्न भवतीत्याह—**संयोगान्तलोपस्येत्यादि** । **उत्तरसूत्रेण नलोप** इति । "नाम्नो नोऽनह्नः" इत्यनेनेति भावः । **स्यादिविधौ चेति** । गोमानित्यादौ संयोगान्तलोपस्येति शेषः । **अत्वादिलक्षणो दीर्घ** इति । "अभ्वादेरत्वसः सौ" इति विहित इति भावः । **स्कन्त्वा, स्यन्त्वेति** । 'स्कन्दृ' गतिशोषणयोः, 'स्यन्दौङ्' प्रस्रवणे, आभ्यां "प्राक्काले०" इति क्त्वायां, "एकस्वराद०" इति "धूगौदितः" इति चेडभावे रूपद्वयम् । अत्र पदान्ते संयोगान्तस्य लुग्भवतीत्युच्यमानेऽपि संयोगान्तस्य पदस्यैव लोप इत्यर्थस्य सिद्धत्वात् पदस्येति वचनं पदान्तसंबद्धधुटनिवृत्त्यर्थम् । ननु भवाञ्छेते इत्यत्र नकारस्य श्रादेशे संयोगान्तलोपः कस्मान्न भवतीत्याह—**भवाञ्छेते** इत्यादि । अन्यथा प्रक्रियालाघवार्थं ञकारमेव विदध्यादित्यर्थः ॥ ८९ ॥

**रात्सः** । अत्र संयोगस्येति पदस्येति लुगिति चानुवर्तते, अनुवर्तमानं संयोगस्य पदस्येति रादित्यस्य विशेषणं, तच्च स इत्यस्य षष्ठ्यन्तस्य, तथा च—संयोगान्तस्य पदस्यावयवो यो रेफस्तस्मादुत्तरस्य सकारस्यैव लुगित्यन्वयस्तदाह—**पदान्ते वर्तमानस्येत्यादि** । **चिकीरित्यादि** । 'डुकृञ्' करणे, धातोः कर्तुमिच्छतीति सनि, "स्वरहनगमोः सनि धुटि" ४।१।१०४। इति दीर्घत्वे, "ऋतां क्ङितीर्" इतीरादेशे, "सन्यङश्च" इति द्विर्वचनेऽनादिव्यञ्जनलोपे, "कङश्चञ्" इति चत्वे, क्विपि, अकारलोपेऽनेन सकारलोपे सिद्ध्यति । नन्वत्र रेफात् परत्वात् पदान्तकृतस्य सस्य षत्वेन भवितव्यं, कथं लोप इत्याह—**अत्रेत्यादि** । **षत्वस्येति** । एतत्सूत्रापेक्षया "णषमसत् परे०" इति षत्वस्य पूर्वत्वादिति भावः । **परेऽसत्त्वादिति** । "रात्सः" इति परे कार्ये कर्तव्ये "णषम०" इति सूत्रापेक्षया पूर्वस्य षत्वस्यासिद्धत्वादित्यर्थः । **एवमिति** । हरतेः पूर्ववत् सन्नादौ—**जिहीरित्यादि** । पदान्ते वर्तमानस्य संयोगस्य संबन्धिनो रेफात् परस्य सकारस्य "पदस्य" इत्यनेन लोपसिद्धौ नियमार्थमिदमित्याह—**पूर्वेणैवेत्यादि** । नियमफलं दर्शयति—**ऊर्गित्यादि** । 'ऊर्जण्' बलप्राणनयोश्चुरादित्वात् णिचि, क्विपि, णिलोपे, पदत्वे, रात् सस्यैवेति नियमात् "पदस्य" इति जकारलोपो न भवति । निपूर्वात् 'मृजौक्' शुद्धावतो ह्यस्तन्या दिवि, उपान्त्यगुणे, "मृजोऽस्य०" इति वृद्धौ, "अड्धातो०" इत्यडागमे, "यजसृज०" इति षत्वे, तृतीयत्वे, प्रथमत्वे च—**न्यमार्ट्**, 'गृधूच्' अभिकाङ्क्षायाम्—**अजर्घाः**; 'स्पर्द्धं' संहर्षे—**अपास्पाः** । **रादेव सस्येति त्विति** । "पुंवत्कर्मधारये" इत्यत्र पुंवदिति कृतसंयोगान्तसकारलोपस्य पुम्सशब्दस्य पाठात् विपरीतनियमो न भवति, अत्र हि संयोगान्तसकारलोपो न स्यात्, यथैव बिभर्तेर्जागर्तेश्च ह्यस्तन्या दिवि, "ह्वः शिति" इति सृगो द्वित्वे, "ऋतोऽत्" इत्यत्वे, "पृभृमाहाङामि" ४।१।५८। इतीत्वे, "द्वितीयतुर्ययोः०" इति बत्वे, गुणे च नियमात् लोपो न प्राप्नोति, नैष दोषः, प्रकरणात् पूर्वसूत्रविहितस्यैवायं नियमो न "व्यञ्जनादेः" इत्युत्तरसूत्रविहितस्य । यद्वा "रात्सः" इति द्वितकारनिर्देशात् । नन्वेवं तर्हि कीर्तयतेरप्रत्यये कीरिति प्राप्नोति कीर्त् इति चेष्यते, अत्र भाष्यम्—'यथालक्षणमप्रयुक्ते' लोके प्रयुक्तानामेवेदमन्वाख्यानं इत्यप्रयुक्ते लक्षणानामप्रवृत्तिर्लक्षणमित्यर्थस्तत्रास्य प्रयोगाभावात् न दोष इति ॥ ९० ॥

---

१ परे° पु०। २ °स ×××××× पु०।

## नाम्नो नोऽनह्नः ॥ २ । १ । ९१ ॥

पदान्ते वर्तमानस्य नाम्नो नकारस्य लुग् भवति, अनह्नः-स चेदहन्शब्दसंबन्धी न भवति, स चासन् स्यादिविधौ; पर इति निवृत्तम् । राजा, वृत्रहा, दण्डी, वाग्मी, राजपुरुषः, राजकाम्यति, राजकल्पः । स्यादिविधावसत्त्वात् राजभ्याम्, राजभिः, राजसु इत्यादौ दीर्घत्वैस्त्वैत्वान्यकारान्तत्वाभावात् न भवन्ति । अनह्न इति किम् ? अहरेति, अहरधीते, अहोरूपम् । दीर्घाह्ना निदाघः-अत्र परविधौ रेफरुत्वयोरसत्त्वान्नलोपः स्यात्, सावकाशं च तदुभयं संबोधने-हे अहः !, हे दीर्घाहः ! । पदस्येत्येव ? राजानौ । स्यादिविधावित्येव ? राजायते, चर्मायते,-अत्र क्यविधौ सत्त्वात् "दीर्घश्च्वियङ्यक्येषु च" ॥ ४ । ३ । १०८ ॥ इति क्येऽन्त्याकारदीर्घः सिद्धः । नाम्न इति किम् ? अहन्नहितम्, कुर्वीरन्, सर्वस्मिन्, वृक्षान् । वृत्रहभ्याम्, वृत्रहभिरित्यत्र तु 'असिद्धं बहिरङ्गमन्तरङ्गे' इति नलोपस्यासिद्धत्वात् "ह्रस्वस्य तः पित्कृति" ॥ ४ । ४ । ११३ ॥ इति तोऽन्तो न भवति ॥ ९१ ॥

## नामन्त्र्ये ॥ २ । १ । ९२ ॥

आमन्त्र्येऽर्थे वर्तमानस्य नाम्नः संबन्धिनो नकारस्य लुग् न भवति । हे राजन् !, हे तक्षन् !, हे सीमन् !, हे बहुराजन् !; एतदेव प्रतिषेधवचनं ज्ञापकम्, सिलुकः स्थानिवद्भावेन "अधातुविभक्ति०" ॥ १ । १ । २७ ॥ इति नामसंज्ञाप्रतिषेधो न भवति इति । हे राजवृन्दारक ! इत्यत्र समुदायार्थे आमन्त्र्यो नावयवार्थ इति नलोपप्रतिषेधो न भवति, अवयवार्थस्य त्वामन्त्र्यत्वेऽसामर्थ्यात् समास एव न स्यात् ॥ ९२ ॥

## क्लीबे वा ॥ २ । १ । ९३ ॥

आमन्त्र्यविषयस्य नाम्नः क्लीबे नपुंसकलिङ्गे वर्तमानस्य नस्य लुग् वा भवति । हे चर्म !, हे चर्मन् !, हे दाम !, हे दामन् ! ॥ ९३ ॥

---

**नाम्नो नोऽनह्नः ।** अत्र पदस्येति लुगिति चानुवर्तते । पदस्येति नाम्न इत्यवयवषष्ठ्यन्तस्य न इत्यस्य विशेषणम्, तथा च—नामावयवस्य नकारस्य पदचरमावयवस्य लुगित्यन्वयस्तदाह—**पदान्ते वर्तमानस्येत्यादि । पर इतीत्यादि ।** अधिकाराणामिष्टार्थत्वेन प्रवृत्तिनिवृत्त्यर्थत्वात् पूर्वं "षषम०" इति सूत्रोक्त, 'असत्परे' इत्यधिकारो "रात्स" इति यावदिति स्मारयति । **राजेति ।** राजन्शब्दात् सेर्व्यञ्जनाल्लोपे, दीर्घत्वे, सिलुक स्थानिवद्भावात् "तदन्तम्०" इति पदान्तत्वेन नलोप । "ब्रह्मभ्रूणवृत्रात्०" ५।१।१६१। इति क्विपि—**वृत्रहा,** राज्ञ पुरुष इति विग्रहे-**राजपुरुषः,** राजानमिच्छति—**राजकाम्यति;** ईषदसमाप्तो राजा—**राजकल्प** इत्येषु आम्येऽन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वम् । **स्यादिविधाविति । राजभ्यामित्यादौ** "नाम सिदय्व्यञ्जने" इति पदत्वात् नलोपे स्यादिविधौ तस्यासत्त्वात् अकारान्तत्वाभावात् "अत आ स्यादौ०" इति, "भिस ऐस्" इति, "एद्बहुस्भोसि" इति **दीर्घत्वादीनि** न भवन्तीति भाव । **अहरेतीत्यादि ।** "अनतो०" इत्यमो लुप् । **अहोरूपमिति ।** प्रशस्तमहरिति "त्यादेश्च प्रशस्ते रूपप्" ७।३।१०। इति रूपप् । **दीर्घाह्ना निदाघ** इति । दीर्घाण्यहानि यस्मिन्निति बहुव्रीहि । नन्वत्र "रो लुप्यरि" इति, "अह्नः" इति च विशेषविहितत्वेनापवादत्वात् नलोपमपोह्य रेफरुत्वे भविष्यत किमनह्न इति प्रतिषेधेन ? उच्यते—रेफरुत्वयो परेऽसत्त्वात् नलोप स्यादित्याह—**अत्रेत्यादि ।** न च रेफरुत्वयोरनवकाशत्वमिति वाच्यम्, हे अह !, हे दीर्घाह ! इत्यादौ संबोधने तयो सावकाशत्वादित्याह—**सावकाशं चेत्यादि । राजानाविति ।** अत्रौकारान्त पद न नकारान्तमिति न लुग्भवति । **स्यादिविधावित्येवेति ।** राजेवाचरतीत्यादिवाक्ये क्यङि नलोपेऽस्यादिविधित्वेन नलोपस्यासत्त्वाभावात् स्वरान्तत्वात् "दीर्घश्च्वियङ्०" इति दीर्घत्वे-**राजायते, चर्मायते** सिद्धमित्याह—**अत्र क्यविधावित्यादि । अहन्नहितमिति ।** रिपुमवधीदित्यर्थ, हन्तेर्ह्यस्तन्या दिवो लोपेऽडागमेऽहन् इति भवति, करोते सप्तम्या ईरनि "कृतनादेरु" इत्युप्रत्यये, "नामिनो०" इति गुणे, "अत शित्युत्०" इत्युत्वे यत्वे-**कुर्वीरन्,** "के स्मिन्" इति स्मिनि—**सर्वस्मिन्, वृक्षानिति** "शसोऽता सश्च न पुंसि" इति भवति, अत्र नाम्न इति विशेषणात् धातोर्विभक्तेश्चानाम्नो नकारस्य लोपो न भवति । नन्वत्र परेऽसत् इत्यधिकृतस्य निवृत्तत्वात् "ह्रस्वस्य त ०" इति तोऽन्तो वृत्रहभ्यामित्यादौ कथ न भवति, अत आह—**वृत्रहभ्यामित्यादि ।** धातुमात्राश्रितत्वेन तोऽन्तोऽन्तरङ्गो वाद्यस्याद्यपेक्षत्वात् नलोपो बहिरङ्ग ॥ ९१ ॥

**नामन्त्र्ये ।** अत्र नाम्नो नो लुगिति चानुवर्तते, आमन्त्र्यते इत्यामन्त्र्य तस्मिन्नामन्त्र्ये इति विषयतया नाम्नो विशेषणम्, तथा च—आमन्त्र्ये नाम्नो नो लुक् नेत्यन्वयस्तदर्थमाह—**आमन्त्र्येऽर्थे वर्तमानस्येत्यादि ।** पूर्वेण प्राप्ते प्रतिषेधार्थमिदम् । **हे राजन्नित्यादि ।** अत्र सेर्लोप । ननु हे राजन्नित्यादौ सिलुक स्थानिवद्भावेन "अधातुविभक्ति०" इति नामसंज्ञाप्रतिषेधे पूर्वेण लोप एव न प्राप्नोति कथमनेन प्रतिषिध्यत इत्याह—**एतदेवेत्यादि ।** अन्यथा प्राप्तिपूर्वकत्वात् प्रतिषेधस्य पूर्वेणाप्राप्ताविदमनर्थकं स्यादित्यर्थ । नन्वामन्त्र्ये नलोपप्रतिषेधात् राजन् वृन्दारकेत्यनयोरामन्त्र्यार्थयो "वृन्दारकनागकुञ्जरै" ३।१।१०८। इति समासे राजन् वृन्दारकेति भाव्यम्, नैष दोष, यदि पूर्वपदार्थोत्तरपदार्थसम्बोधनपूर्वकं समुदायार्थसम्बोधन प्रतीयेत तदा स्यादामन्त्र्येऽर्थेऽनयोर्विशेषणसमास, न चैवम्, पूर्वपदार्थावच्छिन्नो योऽसावुत्तरपदार्थ समासेनाभिधीयते तस्यैव सम्बोध्यमानताऽवगम्यते इति नामन्त्र्यार्थप्रथमान्तयो । ततश्च समासे कृते समुदायात् सम्बोधनविभक्तेरुत्पन्नाया "अदेत स्यमोर्लुक्" इति लुकि-**हे राजवृन्दारकेति** प्रयोग उपपन्नो भवति । वाक्ये हि एकार्थीभावाभावादवयवार्थसंबोधन गम्यते, समासे तु तद्विपर्ययात् समुदायार्थसंबोधनमिति वाक्यसमासयोर्भिन्नार्थत्वात् सामर्थ्याभावात् समासाभाव स्यात्, तथा चोक्त-विग्रहवाक्यार्थाभिधाने य समर्थ स समर्थो वेदितव्य इत्याह—**अत्रेत्यादि ।** अत्र सूत्रे आमन्त्र्ये इति सामान्याभिधानेऽपि औजसोर्नकारस्य पदान्तत्वाभावात् द्रव्यस्यैव संबोधनार्हत्वात् तस्याप्याद्यासत्वरूपत्वात् परिशिष्ट विरेव लभ्यते, सख्येयेऽपि वर्तमानाया सख्याया आमन्त्रणादर्शनात् दर्शने तु आमन्त्र्ये इत्येकत्वस्य विवक्षितत्वाददोष ॥ ९२ ॥

**क्लीबे वा ।** अत्र आमन्त्र्ये नाम्नो लुगिति चानुवर्तते, आमन्त्र्ये इति क्लीबे इति च नाम्नो व्यधिकरणे विशेषणे तथावयवषष्ठ्यन्त नकारस्य, तथा च-आमन्त्र्ये क्लीबे नाम्नो नो लुग्वेत्यन्वयस्तदर्थमाह—**आमन्त्र्यविषयस्येत्यादि ।** "नाम्नो नो०" इति प्राप्तस्य, "नामन्त्र्ये" इति प्रतिषिद्धस्य नलोपस्य प्रतिप्रसवार्थो योग । **हे चर्मेति ।** चरेर्मनि भवति ॥ ९३ ॥

राजा; कक्ष्याशब्दस्य कक्षीभावः–कक्षीवान् नाम ऋषिः, लवणस्य रुमणभावः–रुमण्वान्नाम पर्वतः। अन्ये त्वाहुः–रुमन्निति प्रकृत्यन्तरमस्ति तस्यैतन्निपातनम् नकारलोपाभावार्थम् णत्वार्थं च, वत्वं(त्त्वं) तु यथायोगमस्त्येव। नाम्नीत्येव? चर्मवती, अस्थिमान्, चक्रवान्, कक्ष्यावान्, लवणवान् ॥ ९६ ॥

## उदन्वानब्धौ च ॥ २ । १ । ९७ ॥

आपो धीयन्तेऽस्मिन्नित्यब्धिः,–अब्धौ नाम्नि चोदन्वानिति उदकशब्दस्य मतावुदन्भावो निपात्यते। (अब्धौ-) उदन्वान् घटः, उदन्वान्मेघः, यस्मिन्नुदकं धीयते स एवमुच्यते, नाम्नि–उदन्वान् समुद्रः, उदन्वान्नाम ऋषिः, यस्यौदन्वतः पुत्रः; उदन्वान्नाम आश्रमः। अब्धौ चेति किम्? उदकवान् घटः–अत्र घटस्योदकसवन्धमात्रं विवक्षितं न दधातीत्यर्थः॥९७॥

## राजन्वान् सुराज्ञि ॥ २ । १ । ९८ ॥

शोभनो राजा यस्य तस्मिन् अभिधेये राजन्वानिति मतौ नलोपाभावो निपात्यते। राजन्वान् देशः, राजन्वती पृथ्वी, राजन्वत्यः प्रजाः। सुराज्ञीति किम्? राजवान् देशः ॥ ९८ ॥

## नोर्म्यादिभ्यः ॥ २ । १ । ९९ ॥

ऊर्मि इत्येवमादिभ्यो नामभ्यः परस्य मतोर्मकारस्य वकारादेशो न भवति। ऊर्मिमान्, दलिमान्, भूमिमान्, तिमिमान्, क्रिमिमान्, एभ्यो मोपान्त्यत्वात् प्राप्ते, यवमान्, कुञ्चामान्, द्राक्षामान्, ध्राक्षामान्, वासामान्, एभ्योऽवर्णान्तत्वात् प्राप्ते, हरित्मान्, गरुत्मान्, ध्वजित्मान्, ककुद्मान्, एभ्योऽपञ्चमवर्गादिति प्राप्ते; ज्योतिष्मती, महिष्मान्, गोमती, कान्तिमती, शिम्बीमती, हरिमती, वोसमती, इक्षुमती, बन्धुमती, मधुमती, बिन्दुमती, इन्दुमती, द्रुमती, वसुमती, अंशुमती, श्रुमती, हनूमान्, सानुमती; एभ्यो "नाम्नि" ॥ २ । ४ । १२ ॥ इति प्राप्ते प्रतिषेधोऽयम्। ऊर्मि, दलि, भूमि, तिमि, कृमि, यव, कुञ्चा, द्राक्षा; ध्राक्षा, वासा, हरित्, गरुत्, ध्वजित्, ककुद्, ज्योतिस्, महिष, गो, कान्ति,

---

निपात्यविषयमाह–**चर्मन्शब्दस्य नलोपाभावो णत्व चेत्यादि**। मतान्तरमाह–**अन्ये त्विति**। प्राप्त इत्यर्थ। तेषां मते निपात्यमाह–**नकारलोपाभावार्थमित्यादि**। संज्ञाया अभावे रुमवदित्येव भवति ॥ ९६ ॥

**उदन्वानब्धौ च**। चेन नाम्नीत्यनुकृष्यते, अब्धौ नाम्नि च उदन्वान् इत्यन्वय। **आपो धीयन्तेऽस्मिन्निति**। "व्याप्यादाधारे" ५।३।८८। इति किप्रत्यये–अब्धि, लोकाधीनावधारणार्थत्वात् शब्दार्थसवन्धस्य यौगिकत्वेऽपि तडागादावप्रवृत्ते समुद्रस्यैवाय यौगिको व्यपदेश; न हि लोकोऽब्धिशब्दात् जलाधारमावापन्नमपि घटादिकमवस्यति। यदा त्ववयवार्थो न विवक्ष्यते तदा "नाम्नि" इत्यनेनैव सिध्यति, तस्मिन् मतौ उदन्भावो निपात्यते न तु वत्वं तस्यावर्णोपान्त्यत्वादेव सिद्धे। नलोपाभावोऽप्युदन्भावसामर्थ्यादेव, अन्ययोदभाव एव निपात्येत; सूत्रे च "उदन्वानब्धौ च" इत्युच्यते। **उदन्वान् घट इति, उदन्वान् मेघ इति**। अत्रोदन्वानिति निपातन समुद्र एव, घटमेघयोस्तु तज्जलधारत्वादिनिमित्तात् समुद्र कुण्डिकेतिवत् तच्छब्देन व्यपदिश्यते, यदाह–उदधिर्घट इत्युपमानात् अब्धावेव विशिष्टावयवार्थसंबन्धिन उदन्वानिति निपात्यते। अब्धिग्रहण ह्यसंज्ञार्थमत आह–**यस्मिन्नित्यादि**। संज्ञायां त्ववयवार्थव्युत्पत्तय एव प्रत्यस्तमितावयवार्थतया संज्ञया ऋष्याश्रमावप्युच्येते इत्याह–**उदन्वान्नाम ऋषिरित्यादि**। उदन्वतोऽप्रसिद्धत्वात् प्रसिद्धेन औदन्वताख्येन पुत्रेण तस्य सद्भाव प्रतिपाद्यते, तस्य सद्भाव विना तत्सद्भावाभावात्। **उदकवान् घट इति**। समुद्रस्योदकधारणनिमित्तोऽब्धिव्यपदेशो न सर्वस्योदकाधारस्यापि घटादेरिति तत्रोदन्वानिति न भवति, अत एवाह–**अत्र घटस्येत्यादि**। समुद्रे प्रवर्तमानस्य अब्धिशब्दस्य यो दधात्यर्थो निमित्त तस्य घटादावसम्भवात् विवक्षा नास्तीति तत्राब्धिशब्दस्यासम्भवात् अब्धौ साधुत्वे विधीयमान उदन्वानिति तत्र न भवति, अत एव चन्द्रगोमिदेवनन्दिललितस्वभावादिभिरब्धिग्रहणमकृत्वा संज्ञामात्र एव उदन्वानिति निपातनं कृतम्; "उदन्वानुदधौ च" पा० ८।२।१३। इति सूत्रयताचार्यपाणिनिना तूदधिग्रहण कृतम्। तच्चोदकस्योद पेषधिवासवाहने" ३।२।१०४। इत्यत्र स्फुटीभविष्यति ॥ ९७ ॥ अत्र त्वल्पसाधारणादिभिरित्थमेव व्याख्यातम्। एतदनुसारेणाब्धिशब्दो भगवद्भिस्तथैव व्याख्यातोऽन्यथा तु लोकप्रतीतिविरोध एव स्यादिति। विशेषतस्तत्त्व "उदकस्योद पेषधिवासवाहने" ३।२।१०४। इत्यत्र स्फुटीभविष्यति ॥ ९७ ॥

**राजन्वान् सुराज्ञि**। सुराज्ञीति बहुव्रीहि, न तु तत्पुरुषस्तस्याऽप्रयोगादित्याह–**शोभनो राजा यस्येत्यादि**। राजन्वानित्यत्र अवर्णोपान्त्यत्वात् वत्वस्य सिद्धत्वादित्यर्थ। शोभनो राजाऽस्याऽस्मिन् वाऽस्तीति–निपात्यमाह–**मतौ नलोपाभावो निपात्यत इति**। राजन्वानित्यत्र लिङ्गवचनयोरविवक्षितत्वादुदाहरति–**राजन्वतीत्यादि**। **राजन्वान् देश इति**। शोभनत्व च राज्ञो नलोपाभावेन गम्यते। **राजवान् देश इति**। अत्र राजसत्तासंबन्धमात्र विवक्षित, न तु राज्ञ शोभनत्व निन्दितत्व चेति सुशब्दार्थाभावात् नलोपो भवत्येव ॥ ९८ ॥

**नोर्म्यादिभ्यः**। ऊर्म्यादिभ्यो मोपान्त्यत्वात्, यवादिभ्योऽवर्णान्तत्वात्, हरिदादिभ्योऽपञ्चमवर्गान्तत्वात्, ज्योतिरादिभ्यश्च संज्ञाविषयत्वात् वत्वे प्राप्ते प्रतिषेधोऽयमारभ्यते इत्याह–**ऊर्मिमानित्यादि**। 'ऋक्' गतावत "ऋतेरुच्चात" उ० ६८९। इति मिप्रत्यये कृतगुणस्याकारस्य उकारे च–**ऊर्मि**, 'दल' विसरणेऽतो "नीसाद्र०" उ० ६८७। इति मिप्रत्यये–**दलि**, भवते. "भूमि, 'तमूच्' काङ्क्षायामत. "क्रमितमि" उ० ६१४। इति इप्रत्यये अकारस्य चेकारे–**तिमि**, एव क्रोशे. "क्रुभूम्या क्रिव्" उ० ६९०। इति किन्मिप्रत्यये–**भूमि**, "क्रुभूम्या०" इति मिप्रत्यये–**कृमि**, यौते "युवर्ण०" ५।३।२८। इत्यलि–**यव, कुञ्चे** क्विपि अजादित्वादापि–**कुञ्चा**, रसेर्घ्रेजेश्च "लाक्षाद्राक्षा०" उ० ५९७। इति निपातनात्–**द्राक्षा, ध्राक्षा**; वावे "मावावद्य०" उ० ५६४। इति सकारे–**वासा**, हरते "हृसृरुहि०" उ० ८८७। इति इति–**हरित्**, 'गॄ' निगरणे, इत्यतो "ग्रोमादिर्वा" उणा० ८९०। इति उति–**गरुत्**, अध्वानं जयतीति क्विप् पृषोदरादि–**ध्वजित्**, ककतेर्बाहुलकादुद्प्रत्यये–**ककुद्**, दकारो मतौ "प्रत्यये च" इत्यनुनासिकबाधनार्थं, द्युते "द्युतेरादेश्च ज" उ० ९९१। इति इसि आदेर्जकारे च–**ज्योतिस्**, "महाविभ्या टिष्" उणा० ५४७। इति टिषीपे–**महिष**, गमेर्डोप्रत्यये–**गो**, कमे क्तौ "अहन्पञ्चमस०" इति

---

१ भास्मती भानुमती° प्र०।

शिम्बी, चारु, इक्षु, बन्धु, मधु, बिन्दु, इन्दु, द्रु, वसु, अंशु, श्रु, हनु, सानु; भानु इत्यूर्म्यादिः । बहुवचनमाकृतिगणार्थम्, तेन यस्य सति निमित्ते मतोर्वत्वं(त्वं) न दृश्यते स ऊर्म्यादिषु द्रष्टव्यः ॥ ९९ ॥

**मासनिशासनस्य शसादौ लुग् वा ॥ २ । १ । १०० ॥**

एषां शसादौ स्यादौ परे लुगन्तादेशो वा भवति । मासः, मासान्, मासि, मासे; निशः, निशाः, निशि, निशायाम्, निज्भ्याम्, निशाभ्याम्, निच्छु, निशासु; आसनि, आसने । शसादाविति किम्? मासौ, मासाः; मासरूप्यः ॥ १०० ॥

**दन्तपादनासिकाहृदयासृग्यूषोदकदोर्यकृच्छकृतो दत्पन्नस्हृदसन्यूषन्नुदन्दोषन्यकञ्शकन् वा ॥ २ । १ । १०१ ॥**

दन्तादीनां यथासंख्यं शसादौ स्यादौ परे दत् इत्येवमाद्य आदेशा वा भवन्ति । दन्त—दतः, दन्तान् पश्य, दता, दन्तेन, दद्भ्याम् ३, दन्ताभ्याम् ३; दद्भिः, दन्तैः; दत्सु, दन्तेषु, पाद—पदः, पादान्; पदा, पादेन, नासिका—नसः, नासिकाः, नसा, नासिकया, हृदय—हृदि, हृदये; असृज्—अस्ना, असृजा, यूष—यूष्णा, यूषेण, उदक—उद्ना, उदकेन; दोस्—दोष्णा, दोषा; यकृत्—यक्ना, यकृता; शकृत्—शक्ना, शकृता; शक्नि, शकनि, शकृति । शसादावित्येव? दन्तौ, दन्तकल्पः ॥ १०१ ॥

**यस्वरे पादः पदणिक्यघुटि ॥ २ । १ । १०२ ॥**

पादिति पादशब्दस्य लुप्ताऽकारस्य पादयतेर्वा कृतणिलोपस्य निर्देशः, पादन्तस्य नाम्नो णिक्यघुड्वर्जिते यकारादौ

---

दीर्घत्वे—क्रान्ति., 'शबुङ्' शब्दकुत्सायाम्, अतो "डीनीबन्धि०" उ० ३२५। टिदिम्बे, गौरादिङ्याम्—शिम्बी, एग "स्वरेभ्य०" उ० ६०६। इतीप्रत्यये—हरि, चरे "मिवहि०" उ० ७२६। इति वा णिदुप्रत्यये—चारु, इषे "मस्जीष्यशिभ्यः क्सुक्" उ० ८२६। इति क्सुकि—इक्षु, 'बन्धश्' बन्धनेऽस्मात् "भृमृतृ०" उ० ७१६। इत्युप्रत्यये—बन्धु, 'मनिंच्' ज्ञानेऽतो "मनिजनिभ्या०" उ० ७२१। इत्युप्रत्यये नस्य धत्वे च—मधु, 'विदु' अवयवे, 'इदु' परमैश्वर्ये, आभ्यां "भृमृतृ०" इत्युप्रत्यये—बिन्दु, इन्दु, 'द्रु' गतावतो "धुद्रुभ्याम्" उणा० ७४४। इति डिदुप्रत्यये—द्रु, 'वसं' निवासे, अत "भृमृतृ०" इत्युप्रत्यये—वसु, अशे "अशेराशोऽन्तश्च" उ० ७१९। इत्युप्रत्यये नागमे च—अंशु, शृणोते क्विपि 'आगमशासनमनित्यम्' इति तागमाभावे—श्रु, हन्ते "कृहने०" उ० ७९१। इति नुकि बाहुलकात् नलुकि—हनु, सनोतेः "कृवापा०" उ० १। इत्युणि—सानु, 'भांक्' दीप्तावतो "दाभाभ्यां नु" उ० ७८६। इति नुप्रत्यये—भानु, बहुवचनात् अतत्करणात्याकृतिगणोऽय, तामेवाकृतिं दर्शयति—तेनेत्यादिना ॥ ९९ ॥

**मासनिशासनस्य शसादौ लुग्वा ।** 'मांक्' माने, मातो "मावावद्यमि०" उ० ५६४। इति से—**मासः,** निशे "नाम्युपान्त्य०" ५।१।५४। इति के आपि—**निशा,** आस्यतेऽस्मिन्निति "करणाधारे" ५।३।१२९। इत्यनटि—**आसनम्;** एभ्य शसादौ पक्षेऽन्तलोपे—**मास** इत्यादि । **निज्भ्यामिति ।** ततो भ्याम्यन्तलोपे "धुटस्तृतीय" इति शस्य जत्वे परेऽसत्त्वात् जस्य गत्व न भवति । **निच्छु** इति । तस्मात् सुप्यन्तलोपे तृतीयत्वे, "अघोषे प्रथमो०" इति प्रथमत्वे, "सस्य शषौ" इति शत्वे, "प्रथमादधुटि०" इति छत्वे भवति । रूप्यपि—**मासरूप्य इति** ॥ १०० ॥

**दन्तपादनासिकाहृदयासृग्यूषोदकदोर्यकृच्छकृतो दत्पन्नस्हृदसन्यूषन्नुदन्दोषन्यकञ्शकन् वा ।** आदेशिनामादेशानां च तुल्यसङ्ख्यत्वात् यथासङ्ख्यमत्र संबध्यत इत्याह—**दन्तादीनां यथासंख्यमिति ।** ननु ददाद्यादेशवत् पूर्वसूत्रेऽपि मास् इत्यादि समस्तादेश कर्तुमुचितस्तथा च सति प्रकरणभेदोऽपि न स्यात्, अत एव पूर्वै "पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासन्०" पा० ६।१।६३। इति कृतम्, प्रकृतिस्तु तत्रानुमितेति चेत्, सत्यम्, तत्रोपलक्षणभूतेन लुक्शब्देन लाघवार्थं लुगन्त आदेश उच्यते, अत एव वृत्तावुक्तं लुगन्तादेश इति—लुगन्तश्चासावादेशश्चेति तत्र प्रत्येतव्यम्, अन्तलोपे सति यादृशमेषां रूप भवति तादृशा मास्निश्आसन् इत्येव रूपा आदेशात्वेन विधीयन्ते न लुगिति । ननु पूर्वैश्छन्दोविषयत्वमेषामुक्त, न च छान्दसा भवद्भिर्व्युत्पाद्यन्ते इति "मासनिशा०" इत्यादि सूत्रद्वयमनर्थकम्; नैवम्—"अपो भि" पा० ७।४।४८। इत्यत्र सूत्रे वार्तिककारेणोक्त मासश्छन्दस्युपसङ्ख्यान कर्तव्यमिति, माद्भिरिष्टा इन्द्रो वृत्रहा । "पद्दन्नोमास्०" पा० इति सूत्रे मासशब्दस्य मासादेशस्य छन्दस्येव विधानात् मासश्छन्दसीति छन्दोग्रहण न कर्तव्यम्, तत्क्रियते भाषायामपि क्वचित् पदादय प्रयुज्यन्त इति ज्ञापनार्थम्, अत एव प्रविरलप्रयोगविषयत्वात् सर्वासु विभक्तिषु नोदाह्रियन्ते । 'दमूच्' उपशमेऽतो "दम्यमि०" उणा० २०० । इति ते—**दन्त,** 'पदिंच्' गतावत पद्यते इति "पदरुजविशस्पृश०" इति घञि—**पाद्,** 'णसि' कौटिल्येऽतो "नसिवसि०" उणा०४०। इति णिदिके—**नासिका,** हरते "गयहृदया०" उणा०३७० । इत्यये निपातनात् दागमे च—**हृदय । असृज्** शब्दो व्युत्पादित । यौते "योरूच्च वा" उणा० ५४१ । इति षे ऊकारे च—**यूष,** 'उन्दैप्' क्लेदनेऽतो "भुघून्दि०" उणा० २९ । इति किदके—**उदक,** दाम्यते "यमिदमिभ्या डोस्" इति डोसि—**दोस्,** यजे "यजे क च" उणा० ८९२। इति ऋत्प्रत्यये कादेशे च—**यकृत्,** शके "शकेर्ऋत्" उणा० ८९१। इति ऋति—**शकृत्,** एषा शसादौ स्यादौ पक्षे ददाद्यादेशे—**दत** इत्यादि । "अतमबादे०" इति कल्पपि—**दन्तकल्प** इति ॥ १०१ ॥

**यस्वरे पादः पदणिक्यघुटि । पाद्** इति सुपात्, द्विपदिकां ददातीत्यादिप्रयोगस्थपात्शब्दानुकरणात् षष्ठी । ननु द्विधा पाच्छब्दस्य सम्भव, तथाहि—"पात्पादस्याहस्त्यादे" ७।३।१४८। इत्यादिभि कृतपादादेशस्य तथा पादयते क्विबन्तस्य णिलुकि तत्कस्येह ग्रहणम्?, उच्यते—शास्त्रस्यानुवादकत्वेनाकारकत्वात् पादयतेश्च क्विबन्तस्य लोके प्रयोगाभावादादेशस्यैव ग्रहणमत आह—**पादिति पादशब्दस्येत्यादि । पादयतेर्वा** इत्यत्र वाशब्द इवार्थो दृष्टान्तार्थस्तथा चायमर्थ —यथा पादयते क्विबन्तस्य प्रयोगाभावेन लुप्तरूपस्य नष्टरूपस्य स्वीकार एव पादस्य पादित्यादेशेन लुप्ताकारस्य निर्देश । तत्र च पादशब्दस्य समास एवादेशो विधीयते, न सामर्थ्यात् तदन्तस्य कार्यं विज्ञायते इत्याह—**पादन्तस्य नाम्न** इत्यादि । यदि तु पादयते क्विबन्तस्य प्रयोग स्यात्, ततश्च तस्मिन् केवले मुख्ये सति तदन्तस्य न स्यादिति । नन्वेवमनेकवर्ण-

---

१ इत्येवमा××देशा० पु० । २ ×× पु० । ३ ××× पु० । ४ ×× पु० । ५ ××× पु० । ६ ×× पु० ।

स्वरादौ च प्रत्यये परे पदित्ययमादेशो भवति; स च निर्दिश्यमानस्यादेशा भवन्तीति पाच्छब्दस्यैव भवति न तदन्तस्य सर्वस्य । व्याघ्रस्येव पादावस्य व्याघ्रपात्, तस्यापत्यं–वैयाघ्रपद्यः; द्वौ पादावस्य द्विपात्–द्विपदः पश्य, द्विपदा, द्विपदे, त्रिपदी[1] गाथा, व्याघ्रपदी स्त्री कुले वा, द्वौ द्वौ पादौ ददाति–द्विपदिकां ददाति, द्विपदे हितम्–द्विपदीयम् । पादमाचष्टे पद्यमानं प्रयुङ्क्ते वेति पादयतेः क्विपि–पाद्, पदः पश्य, पदा, पदे, पदी कुले; अत्र व्यपदेशिवद्भावेन पादन्तत्वम् । यस्वर इति किम् ? द्विपाद्भ्याम्, द्विपाद्भिः, द्विपात्काम्यति । अणिक्यघुटीति किम् ? पादमाचष्टे–पादयति, क्येति क्यन्क्यङोरविशेषेण ग्रहणम् । व्याघ्रपादमिच्छति स इवाचरतीति च–व्याघ्रपाद्यति, व्याघ्रपाद्यते, द्विपादौ, द्विपादः, द्विपान्दि कुलानि । नाम्न इत्येव ? उपपद्यते इत्येवंशील उपपादुकः । पादयतेः क्विबन्तस्य प्रयोगो नास्तीति कश्चित् ॥ १०२ ॥

## उदच उदीच् ॥ २ । १ । १०३ ॥

उदचिति उत्पूर्वस्याञ्चतेः कृतनलोपस्य निर्देशः, उदचो नाम्नोऽणिक्यघुटि यकारादौ स्वरादौ च प्रत्यये परे उदीच् इत्ययमादेशो भवति । ( य– ) उदीच्यः, ( स्वरे– ) उदीचः पश्य, उदीची स्त्री कुले वा, उदीचा, उदीचे । यस्वरे इत्येव ? उदग्भ्याम्, उदक्काम्यति । अणिक्यघुटीत्येव ? उदञ्चमाचष्टे उदयति, उदञ्चमिच्छति उदच्यति, उदगिवाचरति–उदच्यते, उदञ्चौ, उदञ्चः, उदञ्चि कुलानि । अच इति लुप्तनकारस्याञ्चतेर्निर्देशात्–उदञ्चा, उदञ्चे, क्विप्यर्चायां निषेधात् नलोपाभावः ॥ १०३ ॥

## अञ्च प्राग्दीर्घश्च ॥ २ । १ । १०४ ॥

अचिति अनकारस्याञ्चेर्निर्देशः[2], अचिति नाम णिक्यघुड्वर्जिते यकारादौ स्वरादौ च प्रत्यये परे चकारमात्रं भवति,

---

त्वात् सर्वस्य पादन्तस्य प्राप्नोति केवलस्य च इष्यते, तस्मात् पाद पदादेशमपास्य पादो ह्रस्व इति कर्तव्यमिति य शङ्कते त प्रत्याह—**स च निर्दिश्यमानस्येति** । अयमर्थ –यत्सूत्रे षष्ठ्या निर्दिश्यते तस्यादेशेन संबन्धो न तु यत्तेन प्रत्याय्यते तस्य । इह च पाद इति निर्दिश्यते तेन तु तदन्त व्याघ्रपात् द्विपादित्यादि प्रत्याय्यते इति न तस्यादेश , तथाहि—क्त्वो यबादेशो निर्दिश्यमानस्य त्त्व एव प्रवर्त्तते न तु तेन प्रत्याय्यमानस्य समुदायस्येति । व्याङ्पूर्वात् जिघ्रते "व्याघ्राघ्रे०" ५।१।५७। इति डे–व्याघ्र , तस्येव पादावस्येति "पात्पादस्या०" इति पाद्भावे तस्यापत्य वृद्धमिति गर्गादित्वात् वृद्धेऽपत्ये यञि "य्व पदान्तात् प्रागैदौत्" ७।४।५। इत्यैकारागमेऽनेन पदादेशे—**वैयाघ्रपद्य** इति । **द्विपद** इत्यादि । द्वौ पादावस्येति विग्रहे द्विपूर्वस्य पादशब्दस्य "सुसंख्यात्" ७।३।१५०। इति पाद्भावे-**द्विपात्**, तत स्वरादौ प्रत्ययेऽनेन पदादेशे सिध्यति । "वा पाद." २।४।६। इति ङ्यां—**त्रिपदी गाथेति** । गाथेत्यनुप्रयोग स्त्रीत्वाभिव्यक्त्यर्थ । **स्त्री कुले** वेत्यनुप्रयोगौ स्त्रीत्वनपुंसकत्वाभिव्यक्त्यर्थौ । **द्विपदिकां ददातीति** । "सख्या समाहारे च०" ३।१।९९। इति समास , "संख्यादे पादादिभ्यो दानदण्डे चाकल् लुक् च" ७।२।१५२। इत्यकल्, अन्तस्य च लुक्, तत आप्, "अस्यायत्तत्०" इतीत्वम् ततोऽमि भवति । **द्विपदीयमिति** । द्विपदे हितमिति विग्रह्य "तस्मै हिते" इतीय । क्विबन्तस्य प्रयोगाभाव द्रढयति—**पादमाचष्टे** इत्यादिना । **अत्रेति** । एषु पादयते क्विबन्तप्रयोगेषु, **पादन्तत्वम्**–पाच्छन्दसान्तत्व–विनाशवत्त्वमिति भाव । एते पूर्वोक्ता प्रयोगा लोके न प्रयुज्यन्तेऽत्र हेतुमाह—**व्यपदेशिवद्भावेनेति** । अपदेशो–व्याजच्छद्म, विशिष्टो व्याज एषामस्तीति–व्यपदेशी स एव एषां सत्ता, बुद्ध्यैवैते कल्प्यन्ते न तु लोके प्रयुज्यन्ते इत्यभियुक्तैरेषां व्याजवती सत्ता लक्ष्यते । अभियुक्ता हि स्थविरचन्द्रोत्पलदेवनन्दिसाधारणभाष्यकारप्रभृतय पादयते क्विप् न दृश्यत इति वदन्त एषा व्याजवतीं सत्तां व्यपदिशन्ति । सूत्रेऽपि केचन समासान्तग्रहण कुर्वन्ति । व्याजमेव दर्शयति—**पादमाचष्टे** इत्यादिना । पूर्वोक्तमेवार्थमभियुक्तस्मृत्या द्रढयति—**पादयते**. **क्विबन्तस्य प्रयोगो नास्तीति कश्चिदिति** । अस्य क्विबन्तस्य प्रविरलप्रयोगविषयोऽपि प्रयोगो न कश्चिदस्तीति संबन्ध इति । अन्ये तु अभियुक्तस्मृतिमनभिनन्दयन्त क्विबन्तस्य प्रयोग प्रतिजानते, अत एवानभिरुचितत्वादेष पक्ष पादयतेर्वेत्यादिना पादमाचष्टे इत्यादिना च वाक्यद्वयेन श्लिष्टोक्त्या वृत्तौ दर्शित । तत्र दोषशब्दमध्याहृत्यैव व्याख्या–पादयते क्विबन्तस्य प्रयोगोऽस्तीति न कश्चिद्दोष इति ॥ १०२ ॥

**उदच उदीच्** । अत्र अणिक्यघुटीत्यनुवर्तते यस्वरे इति च । उदच इति उदञ्चावित्यादिप्रयोगप्रकृतेरनुकरणमित्याह—**उदचिती**त्यादि । तस्य च नाम्न इत्यधिकृत धातुव्यवच्छेदार्थं समानाधिकरण विशेषण, तथा चायमन्वय –उदचो नाम्नोऽणिक्यघुटियस्वरे उदीच् इति, तदाह—**उदचो नाम्न** इति । उदञ्चतीति क्विपि, "अञ्चोऽनर्चायाम्" इति नलोपे, "तत्र साधौ" इति, "भवे" इति वा ये, शसि च—**उदीच्य**., **उदीच** इति । स्त्रियां "अञ्च " २।४।३। इति ङ्यां नपुंसके तु "औरी" इतीत्वे—**उदीची स्त्री कुले** वेति । स्त्री कुले इत्यनुप्रयोगौ लिङ्गाभिव्यक्त्यर्थौ, ततो भ्यामि "चज कगम्" इति कत्वे, तृतीयत्वे—**उदग्भ्याम्** इति । उदञ्चमिच्छति इति विग्रहे "द्वितीयाया काम्य " ३।४।२२। इति काम्ये—**उदक्काम्यति** । **उदयतीति** । णिचि अन्त्यस्वरादिलोप । **उदच्यति** इति । "अमाव्ययात् क्यन् च" ३।४।२३। इति क्यन् । "क्यङ्" ३।४।२६। इति क्यङि—**उदच्यते** इति । **उदञ्चावित्यादि** । "अच " इति नागम । एतेषु अणिक्यघुटि इति वचनाद् उदीचादेशो न भवति । ननु उदञ्चेत्यादौ अघुट्स्वरे आदेश कस्मान्न भवतीत्याह—**अच** इतीत्यादि । **क्विप्यर्चायामिति** । "अञ्चोऽनर्चायाम्" इत्यत्र अनर्चायामिति वचनादिति शेष ॥ १०३ ॥

**अञ्च प्राग्दीर्घश्च** । अत्र अणिक्यघुटि इति यस्वरे इति चानुवर्तते । **अचिति** अनकारस्याञ्चे कार्यिणो निर्देश, च् इति कार्यनिर्देश , कार्यकार्यिणोरभेदनिर्देशस्तु समस्तादेशार्थ , तथा च–अचिति नाम अणिक्यघुटि यस्वरे च् प्राक् च दीर्घ इत्यन्वयस्तदाह—**अचिति नामे**त्यादि । **प्रागिति** पूर्वत्वं चादेशापेक्षया, तत्रापि सन्निहितपरित्यागे व्यवहितपरिग्रहे कारणाभावादनन्तर एव ग्रह्यत इत्याह—**प्राक्**

---

१–°चरति × × पु० । २ °स्याञ्चेर्नि० पु० ।

प्राक्-पूर्वोऽनन्तरस्वरश्च दीर्घो भवति । ( य- ) प्राच्यः, प्रतीच्यः, ( स्वरे- ) प्राचः, प्राचा, दधीचः, दधीचा, मधूचः, मधूचा, पितृचः, पितृचा, प्राची; प्रतीची स्त्री कुले वा । अन्वाचयशिष्टत्वाद् दीर्घत्वस्य तदभावेऽपि चादेशो भवति— दृषचा, दृषचे, अत्र "स्वरस्य ह्रस्वदीर्घप्लुताः" इति न्यायाद् दृपदो दीर्घो न भवति । यस्वर इत्येव ? प्रत्यग्भ्याम्, मध्वग्भ्याम् । अणिक्यघुटीत्येव ? दध्यञ्चमाचष्टे दध्ययति, दध्यच्यति, दध्यच्यते, दध्यञ्चौ, दध्यञ्चः, दध्यञ्चि कुलानि । अच् इति लुप्तनकारस्याञ्चतेर्ग्रहणादिह न भवति—साध्वञ्चः पश्य, साध्वञ्चा, साध्वञ्चे ॥ १०४ ॥

## क्सुष्मतौ च ॥ २ । १ । १०५ ॥

णिक्यघुड्वर्जिते यकारादौ स्वरादौ मतौ च प्रत्यये परे क्स् उप् भवति । विदुषि साधुः—विदुष्यः, पेचुषि साधुः— पेचुष्यः; विदुषः, विदुषा, विदुषे, विदुषी स्त्री कुले वा, विदुष इदं वैदुषम्; पेचुषः, पेचुषा, पेचुषे, पेचुषी स्त्री कुले वा, पेचुष इदं पैचुषम्, विदुष्मान्, पेचुष्मान् । मतौ चेति किम् ? विद्वद्भिः, पेचिवद्भिः, विद्वत्काम्यति । अणिक्यघुटीत्येव ? विद्वांसमाचष्टे—विद्वयति, विद्वस्यति, विद्वस्यते, विद्वांसौ, विद्वांसः, विद्वांसि कुलानि ॥ १०५ ॥

## श्वन्युवन्मघोनो ङीस्याद्यघुट्स्वरे व उः ॥ २ । १ । १०६ ॥

श्वन् युवन् मघवन्नित्येतेषां सस्वरो वकारो ङीस्याद्यघुट्स्वरे परे उर्भवति । शुनी स्त्री, प्रियशुनी कुले, शुनः, शुना, शुने, अतियूनी स्त्री, प्रिययूनी कुले, यूनः, यूना, यूने, मघोनी, अतिमघोनी स्त्री, प्रियमघोनी कुले, मघोनः, मघोना मघोने । ङीस्याद्यघुट्स्वर इति किम् ? शौवनम्, यौवनम्, माघवनम् । अघुटिति किम् ? श्वानौ, युवानौ, मघवानौ, अतिश्वानि, अतियुवानि, अतिमघवानि कुलानि । स्वरे इति किम् ? श्वभ्याम् । नकारान्तनिर्देशादिह न भवति—गोष्ठश्वेन, युवतीः पश्य, युवत्या, मघवतः पश्य, मघवता । अर्थवद्ग्रहणादिह न भवति—तत्त्वदृश्वना, मातरिश्वना ॥ १०६ ॥

---

**पूर्वोऽनन्तरस्वरश्चेति** । प्राञ्चतीति क्विपि पूर्ववद्यादौ अनेन चादेशे दीर्घत्वे च—**प्राच्य** इत्यादि । ननु दृपदमञ्चतीति क्विपि यादावनन्तर-पूर्वस्वराभावे दीर्घत्वाभावादेकयोगनिर्दिष्टत्वादादेशस्याप्यभावात् कथं दृषचेत्यादि सिध्यतीत्याह—**अन्वाचयशिष्टत्वादित्यादि** । **दीर्घश्चेति** चकारसमुच्चितत्वेनाऽप्रधानत्वादित्यर्थः । प्रधानवाक्यनिर्दिष्टस्यास्यैव नाऽवश्यविधेयत्वं, यथा—एधानाहर्तुं अरण्यं गच्छ शाकमप्यानेष्यसीति एधाहरणस्येतिवत् । नन्वत्र दकारस्य दन्त्यत्वात् लृकारो दीर्घ आसन्नत्वात् कस्मान्न भवतीत्याह—अत्र **"स्वरस्य०"** इत्यादि । शेषं पूर्वेण तुल्यगमम् ॥ १०४ ॥

**क्सुष्मतौ च** । अत्र अणिक्यघुटि इति यस्वरे इति चानुवर्तते, अणिक्यघुटि यस्वरे मतौ च क्स् उप् इत्यन्वयस्तदाह—**णिक्य-घुड्वर्जिते** इत्यादि । वेत्ति पचेश्च "वा वेत्तेः क्वसुः" ५।२।२२। इति "तत्र क्वसुकानौ तद्वत्" ५।२।२। इति च क्वसावन्यत्र "अनादेशादेरेक-व्यञ्जनमध्येऽतः" ४।१।२४। इत्येत्वे, द्विर्वचनाभावे, पूर्ववद्यादौ—**विदुष्यः, पेचुष्य** इत्यादि । **विदुषीति** । "अधातूदृदितः" २।४।२। इति स्त्रियां ङीप्रत्ययः, नपुंसके तु "औरी" इतीत्वम् । "तस्येदम्" इत्यणि—**पैचुषमिति** । विद्वांसोऽस्य सन्तीति "तदस्यास्त्यस्मिन्निति०" मतौ उषादेशे च—**विदुष्मान्** इति । एवं **पेचुष्मानित्यपि** । ननु च पपुषः, निन्युषः इत्यादौ यस्वरादावुच्यमानस्योषादेशस्य बहिरङ्गत्वेनासिद्धत्वात् तदपेक्षया अन्तरङ्गाणि आकारलोपादीनि न प्राप्नुवन्ति, नैष दोषः, न हि वस्त्वन्तरानपेक्षं अन्तरङ्गं बहिरङ्गं वा स्वाभाविकं किंचिदस्ति, परस्परा-पेक्षया युगपत् प्राप्तौ तयोरेव स्यानात् यथा—स्योन इत्यत्र यत्वगुणयोः । पपुष इत्यादौ तु युगपत्प्राप्तिर्नास्ति, उपादेशकाले आकारलोपादीनां निमित्ताभावादप्रसङ्गात्, आलोपादिप्राप्तिकाले च निर्वृत्त उषादेश इति तेषां निमित्तमेवेति नास्ति परिभाषोपस्थानम् । यदाह भाष्य-अन्तरङ्गबहिर-ङ्गमिति प्रसिद्धस्वभाविनावेतावर्थौ, न चात्रान्तरङ्गबहिरङ्गयोर्युगपदवस्थानमस्तीति । 'न स्वरानन्तर्ये' इति प्रतिषेधाद्वा न चात्रान्तरङ्गत्वादिटा भाव्य-मिति वाच्यम्, नित्यत्वादिटं बाधित्वा उप् भवति । ननु वर्णविधित्वाभावात् स्थानिवत्त्वेन भवतीट् प्रसङ्ग इति चेदस्तु वा पूर्वमिट् वसवयवत्वात् सेट्कस्य वसोरुषादेशो भविष्यति । **उषिति** षकारो "नाम्यन्तस्था०" इति सिद्धस्य प्रक्रियालाघवार्थोऽयमनुवादः, परमार्थतस्तु उसिति सकारान्त एवायमादेश इति । **विद्वत्काम्यतीत्यादि** । पूर्ववत्काम्यादि ॥ १०५ ॥

**श्वन्युवन्मघोनो ङीस्याद्यघुट्स्वरे व उः** । श्वन्युवन्मघोनो वः ङीस्याद्यघुट्स्वरे उरित्यन्वयस्तदाह—**श्वन्** इत्यादि । **सस्वरो वकार** इति । सस्वरत्वं च वकारस्य कार्यिणो मघोन इति निर्देशात्, अन्यथा व्यञ्जनमात्रस्योत्वे सूत्रे मघोन इति निर्देशो नोपपद्येत । श्वयतेर्महेश्च "श्वन्मातरिश्वन्०" उणा० ९०२ । इत्यनि श्वयतेर्लुकि अन्यत्र नलोपेऽवन्ते च—**श्वन्, मघवन्**, यौते "लृपूयुवृषि०" उणा० ९०१ । इति कनि उवादेशे च—**युवन्**, एभ्यः "स्त्रियां नृतो०" इति ङ्यां स्याद्यघुट्स्वरे च परे वस्योत्वे—**शुनीत्यादि** । **प्रियशुनी कुले** इति । प्रियः श्वा ययोः कुलयोरिति बहुव्रीहिः, ततः "औरी" इतीत्वम् । युवानमतिक्रान्तेति समासात् ङी —**अतियूनी स्त्री** इति । **प्रिययूनी कुले** इति । पूर्ववदीत्वम् । मघवानमतिक्रान्तेति विग्रहे—**अतिमघोनी स्त्री** इति । शुन इदमिति विग्रहे "तस्येदम्" इत्यणि "द्वारादेः" ७।४।६। इत्यौकारागमे—**शौवनम्** इति । **यौवनमिति** । यूनो भावः कर्म वा "युवादेरण्" ७।१।६७। इत्यण्, "अणि" ७।४।५२। इत्यन्त्य-स्वरादिलोपप्रतिषेधः । मघोन इदं "तस्येदम्" इत्यणि—**माघवनमिति** । **श्वानावित्यादि** । "नि दीर्घः" इति घुटि दीर्घत्वम् । ननु श्वन्नित्यादौ नकारान्तनिर्देशः किमर्थ इत्यत आह—**नकारान्तनिर्देशादिति** । गोष्ठे श्वा इति विगृह्य "गोष्ठातेः शुनः" ७।३।११०। इत्यटि, "नोऽपदस्य तद्धिते" ७।४।६१। इति नकारलोपे, टाया इनादेशे—**गोष्ठश्वेन** इति । "यूनस्तिः" २।४।७७। इति तिप्रत्यये शसादौ—**युवतीरित्यादि** । अत्र नकारान्तनिर्देशमन्तरेण "विशेषणमन्तः" इति 'नामग्रहणे लिङ्गविशिष्टस्यापि' इति च न्यायाभ्यां तदन्ते स्त्रियां च वर्तमानस्य श्वन्शब्दस्य युवन्शब्दस्य च प्राप्तिः स्यादिति भावः । **मघवत** इत्यादौ तु मतुप्रत्ययसत्त्वात् तमन्तरेण प्राप्तिर्बोध्येति संक्षेपः । ननु निपातनाद्दृश्वादावुत्वं कस्मान्न भवतीत्याह—**अर्थवद्ग्रहणादित्यादि** । अत्रोभयत्रापि श्वन्नित्यनर्थकम् ॥ १०६ ॥

---

१ °नन्तर स्व० पु० । २ दृषचि पु० । ३ °ह्रस्व दी० पु० । ४ °साञ्चेर्ग्र० पु० । ५ य × × × स्वरादौ पु० । ६ × × × म० म० ।

## लुगातोऽनापः ॥ २ । १ । १०७ ॥

आप्वर्जितस्याकारस्य ङीस्याद्यघुट्स्वरे परे लुग् भवति । कीलालपः, कीलालपा, कीलालपे; शुभंयः, शुभंया, शुभंये; क्त्वः, श्वे; हाहे देहि । आत इति किम् ? नदीः । अनाप इति किम् ? खट्वाः, शालाः; मालाः पश्य । ङीस्याद्यघुट्स्वर इत्येव ? कीलालपास्तिष्ठन्ति, कीलालपां पश्य; कीलालपाभ्याम् ॥ १०७ ॥

## अनोऽस्य ॥ २ । १ । १०८ ॥

अनोऽकारस्य ङीस्याद्यघुट्स्वरे परे लुग् भवति । राज्ञी, राज्ञः, राज्ञा, राज्ञे; तक्ष्णः, तक्ष्णा, तक्ष्णे । ङीस्याद्यघुट्स्वर इत्येव ? राजानौ, राजानः, सुराजानि कुलानि; राजभ्याम् ॥ १०८ ॥

## ईङौ वा ॥ २ । १ । १०९ ॥

अनोऽकारस्येकारे ङौ च परे लुग् वा भवति । साम्नी, सामनी; दाम्नी, दामनी, सुराज्ञी, सुराजनी कुले; राज्ञि, राजनि; दध्नि, दधनि ॥ १०९ ॥

## षादिहन्धृतराज्ञोऽणि ॥ २ । १ । ११० ॥

षकारादेरनो हन्धृतराजन्नित्येतयोश्चाकारस्याणि प्रत्यये परे लुग् भवति । औक्ष्णः, ताक्ष्णः; भौणघ्नः, वार्त्रघ्नः; धार्तराज्ञः । षादीनामिति किम् ? सामनः, वैमनः । अणीति किम् ? ताक्षण्यः ॥ ११० ॥

## न वमन्तसंयोगात् ॥ २ । १ । १११ ॥

वकारान्तात् मकारान्ताच्च संयोगात् परस्यानोऽकारस्य लुग् न भवति । पर्वणा, पर्वणे; तत्त्वदृश्वना, तत्त्वदृश्वने;

---

**लुगातोऽनापः** । अत्र ङीस्याद्यघुट्स्वरे इत्यनुवर्तते, अनाप आत ङीस्याद्यघुट्स्वरे लुगित्यन्वयस्तदाह–**आप्वर्जितस्येत्यादि**। असंभवेऽप्युत्तरार्थं ङीत्यनुवर्तते । **कीलालप इत्यादि** । कीलालं पिबतीति क्विप् विच् वा ततः शसादावनेनाकारस्य लोपः । एवं शुभं यातीति—**शुभंय इत्यादि** । **क्त्वः, श्व इति** । क्त्वाश्वाप्रत्यययोरनुकरणमिदम् । अनुकरणे हि शब्दा अपि लक्षणं प्रयोजयन्ति, यथा–"अव्यक्तानुकरणादनेकस्वरात् कृभ्वस्तिनानितौ द्विश्च" ७।२।१४५। इति । यथैव चान्ये अर्थपरा देवदत्तादिभिः शब्दैः व्यवहरन्ति, एवं वैयाकरणा अपि प्रकृतिप्रत्ययादीन् प्रत्याययन्तस्तदनुकरणैरेभिर्व्यवहारमारभन्ते । ननु क्त्वायां टायामित्येवमपि वैयाकरणा व्यवहरन्ति तत्कथमिति चेद्, उच्यते–स्त्रीलिङ्ग आबन्तोऽनुकरणशब्दो य उदाहृतः सोऽनाबन्त उभयथा दर्शनात् उभयं व्यवस्थाप्यते इति । **हाहे इति** । अत्रानुकरणस्याकारलोपः । **देहीति** । "दो द" ४।१।३१। इत्येत्वम् । **नदीरिति** । अत्र शसि आकारस्याभावाल्लोपो न भवति । **खट्वा इत्यादि** । एतेषु "आत्" इत्याप्, ततः शस्, अनाप इति वचनात् लुगभावः । **कीलालपा इत्यादि** । जस्अम्भ्याम्सु रूपाणि ॥ १०७ ॥

**अनोऽस्य** । अत्र ङीस्याद्यघुट्स्वरे इति लुगिति चानुवर्तते, अनः अस्य ङीस्याद्यघुट्स्वरे लुगित्यन्वयः । अन इत्यवयवसम्बन्धषष्ठ्यन्तम् अस्येत्यस्य कार्यिणो विशेषणमित्याह—**अनोऽकारस्येति** । राज्ञी–"स्त्रियां नृतो॰" इति ङी, ततोऽनोऽकारलोपः । एवं अघुट्स्वरेऽपि । 'तक्षौ' तनूकरणेऽतः "उक्षितक्ष्यक्षी॰" उणा॰ ९०० । इत्यनि शसादौ अनोऽकारलोपे—**तक्ष्ण इत्यादि** । शोभनो राजा येषां कुलानामिति "नपुंसकस्य शि" इति जस्शसो वा शौ "नि दीर्घ" इति दीर्घत्वे—**सुराजानि** ॥ १०८ ॥

**ईङौ वा** । अत्र अन इति अस्येति लुगिति चानुवर्तते, अनोऽस्य ईङौ लुग्वेत्यन्वयस्तदाह—**अनोऽकारस्येत्यादि** । **साम्नीत्यादौ** "औरी" इतीत्वम्, तत्र पूर्वेण नित्ये प्राप्ते पक्षे तदभावार्थोऽयं विकल्पः । तस्य भावाभावोभयार्थकत्वात् तत्र भावसिद्धौ अभावफलो विकल्पविधिरभावसिद्धौ भावफलः उभयसिद्धावुभयफलः । अत्र भावस्य पूर्वेण सिद्धत्वादभावफल इति ॥ १०९ ॥

**षादिहन्धृतराज्ञोऽणि** । **हन् इति** । भ्रूणहन् इत्यादिप्रयोगस्थस्य हनोऽनुकरणम् । **धृतराजन्निति** प्रायोगिकस्य धृतराजन्शब्दस्यानुकरणम् । अत्र अनोऽस्येति लुगिति चानुवर्तते, षादिहन्धृतराज्ञोऽनोऽस्य अणि लुगित्यन्वयस्तदाह—**षकारादेरित्यादि** । उक्ष्णोऽपत्यमिति "ङसोऽपत्ये" ६।१।२८। इत्यणि वृद्धौ अनपत्ये इत्यधिकृत्य "उक्ष्णो लुक्" ७।४।५६। इति लुग्विधानादपत्ये नलोपाभावादेवान् सद्भावेऽपि अण स्याद्यघुट्स्वरत्वाभावात् पूर्वेणाप्राप्तावनेनाकारलोपे नस्य णत्वे—**औक्ष्ण इति** । एवं तक्ष्णोऽपत्यमिति "शिवादेरण्" इत्यणि—**ताक्ष्ण इति** । कारुलक्षणस्तु इञ् कुर्वादिभ्यो ञ्येन बाधनात् पक्षे न भवति । भ्रूणं हतवान् इति क्विपि भ्रूणहा, भ्रूणघ्नोऽपत्यमित्यणि, अनोऽकारलोपे, "हनो ह्रो घ्न" इति घ्नादेशे—**भ्रौणघ्न इति** । एवं वृत्रं हतवानिति क्विपि—**वार्त्रघ्न इति** । धृता राजानो येन तस्यापत्यमिति विगृह्य पूर्ववदणादौ अनोऽकारलोपे "तवर्गस्य॰" इति नकारस्य ञकारे—**धार्तराज्ञ इति** । **सामन, वैमन इति** । "देवता" इत्यण् । तक्ष्णोऽपत्यमिति "कुर्वादेर्ञ्यः" इति ञ्ये—**ताक्षण्य इति** ॥ ११० ॥

**न वमन्तसंयोगात्** । अत्र अनोऽस्येति लुगिति चानुवर्तते, वमन्तसंयोगात् अनोऽस्य लुग् नेत्यन्वयस्तदाह—**वकारान्तादित्यादि** । वकारमकारयोः संयोगविशेषणत्वेन "विशेषणमन्तः" इति न्यायेनात्र तदन्तत्वे लब्धेऽन्तग्रहणं स्पष्टार्थम्, अन्यथा वमसंयोगादिति समस्तनिर्देशे तयोरेव संयोगादित्याशङ्का स्यात्, वम संयोगादिति व्यस्तनिर्देशेऽपि वकारमकाराभ्यां परो यः संयोगस्तस्मादित्यपि प्रतीयेतेति । 'पृथ्' पालनपूरणयोरतः "स्यामदि॰" उणा॰ ९०४ । इति वनि, गुणे, टादौ "अनोऽस्य" इत्यकारलोपे प्राप्ते वकारान्तसंयोगपरत्वादनेन निषेधे—**पर्वणे**-

---

१ अ॰ पु॰ । २ ॰परे वा लुग् भ॰ पु॰ ।

कर्मणा, कर्मणे; भस्मना, भस्मने; अश्मना, अश्मने; पर्वणी, कर्मणी; पर्वणि, कर्मणि । संयोगादिति किम् ? प्रतिदीम्ना, साम्ना । वमन्तेति किम् ? तक्ष्णा, मूर्ध्ना ॥ १११ ॥

## हनो ह्नो घ्नः ॥ २ । १ । ११२ ॥

हन्तेर्ह्न इत्येवंरूपस्य घ्न इत्ययमादेशो भवति । भ्रूणघ्नी स्त्री, भ्रूणघ्ना, भ्रूणघ्ने, भ्रूणघ्नी कुले, भ्रूणघ्नि, घ्नन्, घ्नन्ति; अघ्नन् । हन इति किम् ? प्लीह्नः, अह्नः, अह्नी, अह्नि । ह्न इति किम् ? वृत्रहणौ, वृत्रहयति ॥ ११२ ॥

## लुगस्यादेत्यपदे ॥ २ । १ । ११३ ॥

अपदेऽपदादावकारे एकारे च परेऽकारस्य लुग् भवति । सः, तौ, ते, युष्मभ्यम्, अस्मभ्यम्, पचन्ति, पठन्ति, विवक्षन्, पचे; यजे । अस्येति किम् ? अदन्ति, आसे । अदेतीति किम् ? श्रमणे, संयते । अपद इति किम् ? दण्डाग्रम्, तवैषा ॥ ११३ ॥

## डित्यन्त्यस्वरादेः ॥ २ । १ । ११४ ॥

स्वराणां संनिविष्टानां योऽन्त्यः स्वरस्तदादेः शब्दरूपस्य डिति परे लुग् भवति । मुनौ, साधौ, पितुः, मातुः; पिता, माता; एषु व्यपदेशिवद्भावादन्त्यस्वरादित्वम् । महत्याः करः–महाकरः, महाघासः, उपसरजः, मन्दुरजः, त्रिंशता क्रीतम्–त्रिंशकम् । आसन्नाश्चत्वारो येषामासन्नचताः, अदूरचताः । डितीति किम् ? दृषदौ, दृषदः ॥ ११४ ॥

---

त्यादि । एव तत्त्वदृश्वनेत्यादि । 'भसे' सौत्रात्, 'अशौटि' व्याप्तावित्यतश्च "मन्" उ० ९११ । इति मनि टायां—भस्मनेत्यादि । पर्वणीत्यादि । अत्र "ईङौ वा" इति विकल्पः प्राप्तः प्रतिषिध्यते । प्रतिदीम्ना, साम्नेति । अत्र वकारमकाराभ्यामेव परोऽन् न तु तत्संयोगादिति प्रतिषेधो न भवति । तक्ष्णा, मूर्ध्ना इति । अत्र संयोगमात्रात् परो न तु वमन्तात् इत्यनोऽस्य इति लुग्भवति ॥ १११ ॥

हनो ह्नो घ्नः । हनो ह्न इति समानाधिकरणे षष्ठ्यौ इत्याह—हन्तेरित्यादि । भ्रूणपूर्वात् हन्तेः क्विपि, "नवा शोणादेः" २।४।३१। इति ङ्या, "अनोऽस्य" इति ततोऽकारलोपेऽनेन ह्न इत्यस्य घ्नाऽऽदेशे—भ्रूणघ्नी । एवं नपुंसके औकारस्येत्वे "ईङौ वा" इत्यकारलोपेऽनेन घ्नादेशे—भ्रूणघ्नी कुले इति । नपुंसकत्वाभिव्यक्त्यर्थोऽनुप्रयोगः । घ्नन्निति । "शत्रानशावे०" ५।२।२०। इति शतृप्रत्ययः, "गमहनजन०" ४।२।४४। इत्यकारलोपः । एवं घ्नन्तीत्यादि । 'ष्लिहेरंहे'श्च "श्वन्मातरिश्वन्०" उणा० ९०२ । इति निपातनादनि–प्लीहन्, अहन् इति स्थितस्य ङसादावकारलोपे—प्लीह्नः इत्यादि । अत्र हन इति हन्तेरनुकरणात् 'अर्थवद्ग्रहणे०' इति न्यायाद् वाऽन्यस्य न भवति । वृत्रहणमाचष्टे इति णिचि अन्त्यस्वरादिलोपे—वृत्रहयति ॥ ११२ ॥

लुगस्यादेत्यपदे । अदेति—अश्च एश्चेति समाहारद्वन्द्वात् सप्तमी, अपदे इत्यस्य विशेषणम् । अपदे अदेति अस्य लुगित्यन्वयस्तदाह—अपदेऽपदादावित्यादि । 'सप्तम्या निर्दिष्टे पूर्वस्य' इति न्यायेन अपदादिभूताकारैकाराव्यवहितपूर्वस्य अकारस्य लुगित्यर्थः । स इति । तद् सौ "आद्वेरः" इत्यत्वे, "लुगस्यादेत्यपदे" इति अपवादत्वात् समानदीर्घत्वं बाधित्वाऽकारलोपः, "तः सौ सः" इति तकारस्य सकारः । एवमौकारे जसि चात्वादौ—तावित्यादि । ताविति लोपाभावेऽपि सिध्यति परमेकवचनबहुवचने उदाहरता मध्यवर्तिप्रसङ्गाल्लिखितमुदाहरणम् । "अभ्यम् भ्यसः" इति कृते—युष्मभ्यमित्यादि । पचन्ति, पठन्तीति । पचेः पठेश्च अन्तिप्रत्यये, "कर्तर्यनद्भ्यः ०" इति शव् । वक्तुमिच्छतीति "तुमर्हाद्०" इति सनि, द्विर्वचनेऽनादिव्यञ्जनलोपे, "सन्यस्य" इतीत्वे, चस्य कत्वे षत्वे च विवक्षतीति "शत्रानशावे०" इति शतृप्रत्यये, शवि, सन्शवोरकारलोपे, शिलोपे, "ऋदुदितः" इति नागमे, संयोगान्तलोपे—विवक्षन् इति । एवं पचेर्यजेश्च वर्तमानाया एप्रत्यये, "कर्तर्य०" इति शवि, अकारलोपे—यजे, पचे इति । 'अदक्' भक्षणेऽतोऽन्तौ—अदन्ति इति । 'आसिक्' उपवेशनेऽत एप्रत्यये—आसे इति । श्रमणे, संयते इति । सप्तम्येकवचनं ङी । दण्डस्याग्रं दण्डाग्रमिति षष्ठीसमासो दण्डेति संबोधनपदं वा ॥ ११३ ॥

डित्यन्त्यस्वरादेः । अत्र लुगित्यनुवर्तते, अन्त्यस्वरादेः डिति लुगित्यन्वयः । सति यस्मिन् यस्मात् पूर्वमस्ति परं नास्ति सोऽन्तस्तत्र भवोऽन्त्यः, अन्त्यस्वर आदिर्यस्य शब्दरूपस्येति बहुव्रीहिः, तत्र यदि स्वरस्यान्त्यत्वं स्वरव्यञ्जनसमुदायापेक्ष्य न तदा तदादिरन्त्यः संभवतीत्यादिग्रहणमनर्थकं स्यात्, अतस्तुल्यजातीयापेक्षमेवान्त्यत्वं विज्ञायत इत्याह—स्वराणामिति । तत्रापि न संनिवेशानपेक्ष्यमन्त्यत्वमित्याह—संनिविष्टानामिति । एवं विशिष्टेनान्त्येन स्वरेण विशिष्टः समासार्थः समुदायलोपमाह–योऽन्त्यः स्वरस्तदादेः शब्दरूपस्येति । डिति–डकार इत्–अप्रयोगी यस्य तस्मिन् परे लुग्भवतीति । मुनौ, साधाविति । "ङिर्डौ" इति डौ, अन्त्यस्वरादेर्लुक् । पितुः, मातुरिति । "ऋतो डुर्" इति डुरि ऋकारस्य लोपः । पिता, माता इति । "ऋदुशनस्पुरुदंशो०" इति सेर्डाऽऽदेशः । अत्र सर्वत्र "इवर्णादेरस्वे०" इति प्राप्ते परत्वात् डित्त्वस्यानवकाशत्वाच्च लुगेव । अथान्त्यस्वर एव, न तत्र तदादि कश्चिदस्ति इत्याह—एष्वित्यादि । महाकर इत्यादि । महत्याः कर इत्यादि षष्ठीसमासे "महतः करघासविशिष्टे डाः" ३।२।६८। इत्यधिकारे "स्त्रियाम्" ३।२।६९। इतीकारस्य डादेशेऽन्त्यस्य लुक् । उपसरे जात इति मन्दुरायां जात इति च विग्रहे "सप्तम्याः" ५।१।१६९। इति डे, अन्त्यस्य लोपे, "ङ्यापो बहुलं नाम्नि" २।४।९९। इति यथासंभवं ह्रस्वत्वे—उपसरजः, मन्दुरज इति । त्रिंशकमिति । "त्रिंशद्विंशतेर्डकोऽसंज्ञायामार्हदर्थे" ६।४।१२९। इति डकः । आसन्नचताः, अदूरचता इति । "आसन्नादूराधिकाध्यर्धार्धादिपूरणं द्वितीयाद्यन्यार्थे" इति बहुव्रीहिः, "प्रमाणीसंख्याड्डः" ७।३।१२८ इति डप्रत्ययो जस् ॥ ११४ ॥

२०

## लुगातोऽनापः ॥ २ । १ । १०७ ॥

आप्वर्जितस्याकारस्य ङीस्याद्यघुट्स्वरे परे लुग् भवति। कीलालपः, कीलालपा, कीलालपे, शुभंयः, शुभंया, शुभंये, क्त्वः, 'श्रे, ह्वाहे देहि। आत इति किम्? नदीः। अनाप इति किम्? खट्वाः, शालाः; मालाः पश्य। ङीस्याद्यघुट्स्वर इत्येव? कीलालपास्तिष्ठन्ति, कीलालपां पश्य; कीलालपाभ्याम् ॥ १०७॥

## अनोऽस्य ॥ २ । १ । १०८ ॥

अनोऽकारस्य ङीस्याद्यघुट्स्वरे परे लुग् भवति। राज्ञी, राज्ञः, राज्ञा, राज्ञे; तक्ष्णः, तक्ष्णा, तक्ष्णे। ङीस्याद्यघुट्स्वर इत्येव? राजानौ, राजानः, सुराजानि कुलानि; राजभ्याम् ॥ १०८॥

## ईङौ वा ॥ २ । १ । १०९ ॥

अनोऽकारस्येकारे ङौ च परे लुग् वा भवति। साम्नी, सामनी; दाम्नी, दामनी, सुराज्ञी, सुराजनी कुले; राज्ञि, राजनि; दध्नि, दधनि ॥ १०९॥

## पादिहन्धृतराज्ञोऽणि ॥ २ । १ । ११० ॥

पकारादेरनो हन्धृतराजन्नित्येतयोश्चाकारस्याणि प्रत्यये परे लुग् भवति। औक्ष्णः, ताक्ष्णः; भौणघ्नः, वार्त्रघ्नः; धार्तराज्ञः। पादीनामिति किम्? सामनः, वैमनः। अणीति किम्? ताक्षण्यः ॥ ११०॥

## न वमन्तसंयोगात् ॥ २ । १ । १११ ॥

वकारान्तात् मकारान्ताच्च संयोगात् परस्यानोऽकारस्य लुग् न भवति। पर्वणा, पर्वणे; तत्त्वदृश्वना, तत्त्वदृश्वने;

---

लुगातोऽनापः। अत्र ङीस्याद्यघुट्स्वरे इत्यनुवर्तते, अनाप आतः ङीस्याद्यघुट्स्वरे लुगित्यन्वयस्तदाह—आप्वर्जितस्येत्यादि। अत्रानन्येऽप्युत्तरार्थं ङीत्यनुवर्तते। कीलालप इत्यादि। कीलालं पिबतीति क्विप्, विच् वा, ततः शसादावनेनाकारस्य लोपः। एवं शुभं यातीति—शुभंय इत्यादि। क्त्वः, श्र इति। क्त्वाश्राप्रत्यययोरनुकरणमिदम्। अनुकरणे हि शब्दा अपि लक्षणं प्रयोजयन्ति, यथा—"अव्यक्तानुकरणादनेकस्वरात् कृभ्वस्तिनानितौ द्विश्च" ७।२।१४५। इति। यथैव चान्ये अर्थपरा देवदत्तादिभिः शब्दैर्व्यवहरन्ति, एवं वैयाकरणा अपि प्रकृतिप्रत्ययादीन् प्रत्यायमन्तस्तदनुकरणैरेभिर्व्यवहारमारभन्ते। ननु क्त्वायां टायामित्येवमपि वैयाकरणा व्यवहरन्ति तत्कथमिति चेत्, उच्यते—स्त्रीलिङ्ग आबन्तोऽनुकरणशब्दो य उदाहृतः सोऽनाबन्त उभयथा दर्शनात् उभयं व्यवस्थाप्यते इति। ह्वाहे इति। अत्रानुकरणस्याकारलोपः। देहीति। "हौ दः" ४।१।३१। इत्येत्वम्। नदीरिति। अत्र शसि आकारस्याभावाल्लोपो न भवति। खट्वा इत्यादि। एतेषु "आत्" इत्याप्, ततः शस्, अनाप इति वचनात् लुगभावः। कीलालपा इत्यादि। जस्‌अम्भ्याम्सु रूपाणि ॥ १०७॥

अनोऽस्य। अत्र ङीस्याद्यघुट्स्वरे इति लुगिति चानुवर्तते, अनः अस्य ङीस्याद्यघुट्स्वरे लुगित्यन्वयः। अन इत्यवयवसम्बन्धषष्ठ्यन्तम् अस्येत्यस्य पर्यायिणो विशेषणमित्याह—अनोऽकारस्येति। राज्ञी—"स्त्रियां नृतो०" इति ङीः, ततोऽनोऽकारलोपः। एवं अघुट्स्वरेऽपि। 'तक्षौ' तनूकरणेऽतः "उक्षितक्ष्यक्षी०" उणा० ९००। इत्यनि शसादौ अनोऽकारलोपे—तक्ष्ण इत्यादि। शोभनो राजा येषां कुलानामिति "नपुंसकस्य शिः" इति जस्शसोः शौ "नि दीर्घः" इति दीर्घत्वे—सुराजानि ॥ १०८॥

ईङौ वा। अत्र अन इति अस्येति लुगिति चानुवर्तते, अनोऽस्य ईङ्यो लुग्वेत्यन्वयस्तदाह—अनोऽकारस्येत्यादि। साम्नीत्यादौ "औरी" इतीत्वम्, तत्र पूर्वेण नित्ये प्राप्ते पक्षे तदभावार्थोऽयं विकल्पः। तस्य भावाभावोभयार्थकत्वात् तत्र भावसिद्धौ अभावफलो विकल्पविधिरभावसिद्धौ भावफल उभयसिद्धावुभयफलः। अत्र भावस्य पूर्वेण सिद्धत्वादभावफल इति ॥ १०९॥

पादिहन्धृतराज्ञोऽणि। हन् इति। भ्रूणहन् इत्यादिप्रयोगस्थस्य हनोऽनुकरणम्। धृतराजन्निति प्रायोगिकस्य धृतराज्ञशब्दस्यानुकरणम्। अत्र अनोऽस्येति लुगिति चानुवर्तते, पादिहन्धृतराज्ञोऽनोऽस्य अणि लुगित्यन्वयस्तदाह—पकारादेरित्यादि। उक्ष्णोऽपत्यमिति "ङसोऽपत्ये" ६।१।२८। इत्यणि वृद्धौ अनपत्ये इत्यधिकृत्य "उक्ष्णो लुक्" ७।४।५६। इति लुग्विधानादपत्ये नलोपाभावादेवान सद्भावेऽपि अणः स्याद्यघुट्स्वरत्वाभावात् पूर्वेणाप्राप्तावनेनाकारलोपे नस्य णत्वे—औक्ष्ण इति। एवं तक्ष्णोऽपत्यमिति "शिवादेरण्" इत्यणि—ताक्ष्ण इति। कारुलक्षणस्तु ञ्यः कुर्वादिञ्येन बाधनात् पक्षे न भवति। भ्रूणं हतवान् इति क्विपि भ्रूणहा, भ्रूणघ्नोऽपत्यमित्यणि, अनोऽकारलोपे, "हनो ह्नो घ्नः" इति घ्नादेशे—भ्रौणघ्न इति। एवं वृत्रं हतवानिति क्विपि—वार्त्रघ्न इति। धृता राजानो येन तस्यापत्यमिति विगृह्य पूर्ववदणादौ अनोऽकारलोपे "तवर्गस्य०" इति नकारस्य ञकारे—धार्तराज्ञ इति। सामनः, वैमन इति। "देवता" इत्यण्। तक्ष्णोऽपत्यमिति "कुर्वादेर्ञ्यः" इति ञ्ये—ताक्षण्य इति ॥ ११०॥

न वमन्तसंयोगात्। अत्र अनोऽस्येति लुगिति चानुवर्तते, वमन्तसंयोगात् अनोऽस्य लुग् नेत्यन्वयस्तदाह—वकारान्तादित्यादि। वकारमकारयोः संयोगविशेषणत्वेन "विशेषणमन्तः" इति न्यायेनात्र तदन्तत्वे लब्धेऽन्तग्रहणं स्पष्टार्थम्, अन्यथा वमसंयोगादिति समस्तनिर्देशे तयोरेव संयोगादित्याशङ्का स्यात्, वमः संयोगादिति व्यस्तनिर्देशेऽपि वकारमकाराभ्यां परो यः संयोगस्तस्मादित्यपि प्रतीयेतेति। 'पृष्' पालनपूरणयोरतः "स्नामदि०" उणा० ९०४। इति वनि, गुणे, टादौ "अनोऽस्य" इत्यकारलोपे प्राप्ते वकारान्तसंयोगपरत्वादनेन निषेधे—पर्वणे।

---

१ स० पु०। २ °परे वा लुग् स° पु०।

कर्मणा, कर्मणे; भस्मना, भस्मने; अश्मना, अश्मने; पर्वणी, कर्मणी; पर्वणि, कर्मणि । संयोगादिति किम् ? प्रतिदीव्ना, साम्ना । वमन्तेति किम् ? तक्ष्णा, मूर्ध्ना ॥ १११ ॥

## हनो ह्नो घ्नः ॥ २ । १ । ११२ ॥

हन्तेर्ह्न इत्येवंरूपस्य घ्न इत्ययमादेशो भवति । भ्रूणघ्नी स्त्री, भ्रूणघ्ना, भ्रूणघ्ने, भ्रूणघ्नी कुले, भ्रूणघ्नि, घ्नन्, घ्नन्ति; अघ्नन् । हन इति किम् ? प्लीह्नः, अह्नः, अह्नी, अह्नि । ह्न इति किम् ? वृत्रहणौ, वृत्रहयति ॥ ११२ ॥

## लुगस्यादेत्यपदे ॥ २ । १ । ११३ ॥

अपदेऽपदादावकारे एकारे च परेऽकारस्य लुग् भवति । सः, तौ, ते; युष्मभ्यम्, अस्मभ्यम्; पचन्ति, पठन्ति, विवक्षन्, पचे; यजे । अस्येति किम् ? अदन्ति, आसे । अदेतीति किम् ? श्रमणे, संयते । अपद इति किम् ? दण्डाग्रम्, तवैषा ॥ ११३ ॥

## डित्यन्त्यस्वरादेः ॥ २ । १ । ११४ ॥

स्वराणां संनिविष्टानां योऽन्त्यः स्वरस्तदादेः शब्दरूपस्य डिति परे लुग् भवति । मुनौ, साधौ, पितुः, मातुः; पिता, माता; एषु व्यपदेशिवद्भावादन्त्यस्वरादित्वम् । महत्याः करः—महाकरः, महाघासः, उपसरजः, मन्दुरजः, त्रिंशता क्रीतम्—त्रिंशकम् । आसन्नाश्चत्वारो येषामासन्नचताः, अदूरचताः । डितीति किम् ? दृषदौ, दृषदः ॥ ११४ ॥

---

स्त्रीदि । एव तत्त्वदृश्वनेत्यादि । 'भसे' सौत्रात्, 'अशौटि' व्याप्तावित्यतश्च "मन्" उ० ९११ । इति मनि टायां—**भस्मनेत्यादि** । **पर्वणी**त्यादि । अत्र "ईङौ वा" इति विकल्पः प्राप्तः प्रतिषिध्यते । **प्रतिदीव्ना, साम्नेति** । अत्र वकारमकाराभ्यामेव परोऽन् न तु तत्संयोगादिति प्रतिषेधो न भवति । **तक्ष्णा, मूर्ध्ना** इति । अत्र संयोगमात्रात् परो न तु वमन्तात् इत्यनोऽस्य इति लुग्भवति ॥ १११ ॥

**हनो ह्नो घ्नः** । **हनो ह्न** इति समानाधिकरणे षष्ठ्यौ इत्याह—**हन्तेरि**त्यादि । भ्रूणपूर्वात् हन्ते क्विपि, "नचा शोणादे" २।४।३१। इति ङ्या, "अनोऽस्य" इति ततोऽकारलोपेऽनेन ह्न इत्यस्य घ्नाऽऽदेशे—**भ्रूणघ्नी** । एव नपुसके औकारस्यैत्वे "ईङौ वा" इत्यकारलोपेऽनेन घ्नादेशे—**भ्रूणघ्नी कुले** इति । नपुसकत्वाभिव्यक्त्यर्थोऽनुप्रयोग । **घ्नन्निति** । "शत्रानशावे०" ५।२।२०। इति शतृप्रत्यय, "गमहनजन०" ४।२।४४। इत्यकारलोप । एव **घ्नन्ती**त्यादि । 'ष्लिहेरंहे'श्च "श्वन्मातरिश्वन्०" उणा० ९०२ । इति निपातनादनि—प्लीहन्, अहन् इति स्थितस्य ङसादावकारलोपे—**प्लीह्न** इत्यादि । अत्र **हन** इति हन्तेरनुकरणात् 'अर्थवद्ग्रहणे०' इति न्यायाद् वाऽत्रान्यस्य न भवति । वृत्रहणमाचष्टे इति णिचि अन्त्यस्वरादिलोपे—**वृत्रहयति** ॥ ११२ ॥

**लुगस्यादेत्यपदे** । **अदेति**—अच एचेति समाहारद्वन्द्वात् सप्तमी, **अपद** इत्यस्य विशेषणम् । अपदे अदेति अस्य लुगित्यन्वयस्तदाह—**अपदेऽपदादावि**त्यादि । 'सप्तम्या निर्दिष्टे पूर्वस्य' इति न्यायेन अपदादिभूताकारैकाराव्यवहितपूर्वस्य अकारस्य लुगित्यर्थ । **स** इति । तद् सौ "आद्वेर" इत्यत्वे, "लुगस्यादेत्यपदे" इति अपवादत्वात् समानदीर्घत्वं बाधित्वाऽकारलोप, "त सौ स" इति तकारस्य सकार । एवमौकारे जसि चात्वादौ—**तावित्यादि** । ताविति लोपाभावेऽपि सिध्यति परमेकवचनबहुवचने उदाहरता मध्यवर्तिप्रसङ्गलिखितमुदाहरणम् । "अभ्यम् भ्यस" इति कृते—**युष्मभ्यमित्यादि** । **पचन्ति, पठन्तीति** । पचे पठेश्च अन्तिप्रत्यये, "कर्तर्यनद्भ्य ०" इति शव् । वक्तुमिच्छतीति "तुमर्हात्०" इति सनि, द्विर्वचनेऽनादिव्यञ्जनलोपे, "सन्यस" इतीत्वे, चस्य कत्वे षत्वे च विवक्षतीति "शत्रानशावे०" इति शतृप्रत्यये, शवि, सन्शवोरकारलोपे, सिलोपे, "ऋदुदित" इति नागमे, संयोगान्तलोपे—**विवक्षन्** इति । एवं पचेर्यजेश्च वर्तमानाया एप्रत्यये, "कर्तर्य०" इति शवि, अकारलोपे—**यजे, पचे** इति । 'अदक्' भक्षणेऽतोऽन्तौ—**अदन्ति** इति । 'आसिक्' उपवेशनेऽत एप्रत्यये—**आसे** इति । **श्रमणे, संयते** इति । सप्तम्येकवचन ङी । दण्डस्याग्र **दण्डाग्रमिति** षष्ठीसमासो दण्डेति संबोधनपद वा ॥ ११३ ॥

**डित्यन्त्यस्वरादेः** । अत्र लुगित्यनुवर्तते, अन्त्यस्वरादे डिति लुगित्यन्वय । सति यस्मिन् यस्मात् पूर्वमस्ति परं नास्ति सोऽन्तस्तत्र भवोऽन्त्य, अन्त्यस्वर आदिर्यस्य शब्दरूपस्येति बहुव्रीहि, तत्र यदि स्वरस्यान्त्यत्व स्वरव्यञ्जनसमुदायापेक्ष्य न तदा तदादिरन्य संभवतीत्यादिग्रहणमनर्थकं स्यात्, अतस्तुल्यजातीयापेक्षमेवान्त्यत्व विज्ञायत इत्याह—**स्वराणामिति** । तत्रापि न सन्निवेशानपेक्ष्यमन्त्यत्वमित्याह—**सन्निविष्टानामिति** । एव विशिष्टेनान्त्येन स्वरेण विशिष्ट समासार्थं समुदायलोपमाह—**योऽन्त्यः स्वरस्तदादेः शब्दरूपस्येति** । डिति—डकार इत्—अप्रयोगी यस्य तस्मिन् परे लुग्भवतीति । **मुनौ, साधाविति** । "ङिडौं" इति डौ, अन्त्यस्वरादेर्लुक् । **पितुः, मातुरिति** । "ऋतो डुर्" इति डुरि ऋकारस्य लोप । **पिता, माता इति** । "ऋदुशनस्पुरुदंशो०" इति सेर्डाऽऽदेश । अत्र सर्वत्र "इवर्णादेरस्वे०" इति प्राप्ते परत्वात् डित्त्वस्यानवकाशत्वाच्च लुगेव । अथान्त्यस्वर एव, न तत्र तदादि कश्चिदस्ति इत्याह—**एष्वित्यादि** । **महाकर** इत्यादि । महत्या कर इत्यादि षष्ठीसमासे "महत करघासविशिष्टे डा" ३।२।६८। इत्यधिकारे "स्त्रियाम्" ३।२।६९। इतीकारस्य डादेशेऽन्त्यस्य लुक् । उपसरे जात इति मन्दुरायां जात इति च विग्रहे "सप्तम्या" ५।१।१६९। इति डे, अन्त्यस्य लोपे, "ङ्यापो बहुल नाम्नि" २।४।९९। इति यथासंभव ह्रस्वत्वे—**उपसरजः, मन्दुरज** इति । **त्रिंशकमिति** । "त्रिंशद्विंशतेर्डकोऽसंज्ञायामार्हदर्थे" ६।४।१२९। इति डक । **आसन्नचताः, अदूरचता** इति । "आसन्नादूराधिकाध्यर्धार्धादिपूरणं द्वितीयाद्यन्यार्थे" इति बहुव्रीहि, "प्रमाणीसंख्याड्." ७।३।१२८ इति डस्ततो जस् ॥ ११४ ॥

## अवर्णादश्नोऽन्तो वाऽतुरीङ्योः ॥ २ । १ । ११५ ॥

श्नावर्जितादवर्णात् परस्यातुः स्थानेऽन्त इत्यादेशो वा भवति, ईङ्योः—औकारस्थाने ईप्रत्यये ङीप्रत्यये च परे। तुदन्ती, तुदती कुले, तुदन्ती, तुदती स्त्री; करिष्यन्ती, करिष्यती कुले, करिष्यन्ती, करिष्यती स्त्री; भान्ती, भाती कुले; भान्ती, भाती स्त्री; प्सान्ती, प्साती कुले; प्सान्ती, प्साती स्त्री। अवर्णादिति किम्? अदती, सुन्वती, रुन्धती, तन्वती स्त्री कुले वा; एषु शतृः। अधीयती स्त्री कुले वा, अत्रातृश्, जरती स्त्री कुले वा—अत्रातृः। अश्न इति किं? क्रीणती स्त्री, लुनती स्त्री कुले वा। ईङ्योरिति किम्? तुदता कुलेन। अवर्णादिति विशेषणादश्न इति प्रतिषेधाच्च लोपदीर्घाभ्यां पूर्वमेवानेनान्तः, भूतपूर्वतया वा पश्चात्। ददती स्त्री ददती कुले इत्यत्र तु कृतेऽप्यन्तादेशे "अन्तो नो लुक्" ॥ ४ । २ । ९४ ॥ इति नलोपः ॥ ११५ ॥

## श्यशवः ॥ २ । १ । ११६ ॥

श्यात् शवश्च परस्यातुरीङ्योः परतोऽन्त इत्यादेशो भवति। दीव्यन्ती, सीव्यन्ती स्त्री कुले वा; भवन्ती, चोरयन्ती स्त्री कुले वा; धारयन्ती शास्त्र स्त्री कुले वा। श्यशव इति किम्? जरती स्त्री कुले वा। ईङ्योरित्येव? दीव्यता, भवता ॥ ११६ ॥

## दिव औः सौ ॥ २ । १ । ११७ ॥

दिवोऽन्तस्य सौ परे और्भवति। द्यौः, प्रियद्यौः, हे द्यौः!; हे अतिद्यौः!। 'निरनुबन्धग्रहणे न सानुबन्धस्य' इति धातोर्न भवति—अक्षैर्दीव्यति, क्विप्, ऊट्—अक्षद्यूः। साविति किम्? दिव पश्य। द्यामिति तु द्योशब्दस्य "आ अम्-शसोऽता" इत्याकारे रूपम् ॥ ११७ ॥

---

अवर्णादश्नोऽन्तो वाऽतुरीङ्योः। अत्र अवर्णात् अतुः अन्त वा ईङ्योरित्यन्वयः। श्नावर्जितादवर्णादिति। श्नाशब्देन श्नान्तसमुदाय उच्यते, अवर्णादित्यप्यवर्णान्तः, न ह्यवर्णात् परः शताऽस्ति न च तत्राश्न इति प्रतिषेधो युक्तः, तेनायमर्थः—श्नान्तवर्जितादवर्णान्तात् परस्येति। अथवा—अवर्णादिति समुदायैकदेशोऽवर्ण एवोच्यते, श्नाशब्देन तु श्नाशब्दसम्बन्ध्यवर्ण इति, तत्राऽयमर्थः—श्नावर्जितात् श्नाप्रत्ययावयवो यो न भवति तस्मादवर्णात् परस्येत्यर्थः। तुदन्ती, तुदती कुले इत्यादि। 'तुदींत् व्यथने', इत्यत "शत्रानशावे०" इति शतृप्रत्ययः, तुदादित्वात् शः, औकारस्य "औरी" इतीत्वम्, "स्त्रियां नृतो०" इति यथासंभवं ङीप्रत्ययः, पक्षेऽनेनान्तादेशः, ततो "लुगस्यादेत्यपदे" इत्यस्य लुक्। एवं करोतेः "शत्रानशावे०" इति स्यसहिते शतृप्रत्यये, "ऋवर्ण स्यस्य" ४।४।४९। इतीटि, "नाम्यन्तस्था०" इति षत्वे, पूर्ववदीत्वादौ—करिष्यन्तीत्यादि। एवं 'भांक्' दीप्तौ, 'प्सांक्' भक्षणे—भान्ती इत्यादि। 'अदंक्' भक्षणे, 'षुगृट्' अभिषवे, 'रुधूपी' आवरणे, 'तनूयि' विस्तारे, ऽत शतृप्रत्यये यथासंभवं "स्वादेः श्नुः", "रुधां स्वराच्०" इति "कृग्तनादेरुः" इति च "श्नास्त्योर्लुक्" इति श्नस्याकारलोपे, अवर्णादिति वचनादन्तादेशाभावे—अदतीत्यादि। अधिपूर्वात् 'इंङ्' अध्ययनेऽत "धारीङोऽकृच्छ्रेऽतृश्" ५।२।२५। इत्यतृशि, "धातोरिवर्णोवर्णस्य०" इतीयादेशे, ङ्यां औकारस्येकारे वा—अधीयती इति। जरती इति। जीर्यते "जृषोऽतृ" ५।१।७३। इति अतृ। क्रीणती, लुनतीति। क्रीणातेर्लुनातेश्च शतरि "क्र्यादेः०" इति श्नाप्रत्यये, "श्नश्चातः" ४।२।९६। इति आकारलोपः। तुदता इति। अत्र टायां ईङ्योरिति वचनात् न भवति। ननु तुदन्ती भान्तीत्यादिमूलोदाहरणे ईङ्योरनपेक्षत्वेन वर्णमात्राश्रयत्वेन चान्तरङ्गत्वात् "लुगस्यादेत्यपदे" इति "समानानां०" इति चाकारलोपदीर्घत्वयोः कृतयोरवर्णात् परत्वं शतृप्रत्ययस्य न सम्भवति तत्कथमकारावर्णशतृप्रत्ययङीभावापेक्षत्वेन बहिरङ्गोऽन्त इत्यादेश इत्याह—अवर्णादितीत्यादि। यदि प्रागेवान्तादेशात् लोपदीर्घौ स्यातां तदाऽवर्णात् परस्यातुः स्थानेऽन्त इति वचनमसम्भवदर्थमनर्थकं स्यात्, तथा लोपेन प्रागेवाकारनिवृत्तेः प्राप्त्यभावादश्न इति प्रतिषेधोऽप्यनर्थक इति अतोऽन्तरङ्गावपि लोपदीर्घावस्मिन् विषयेऽन्तादेशात् पश्चाद्भवतोऽन्यथा तदनुपपत्तेरिति। अथवा—अन्तरङ्गत्वात् लोपदीर्घयोः कृतयोरपि वचनसामर्थ्यात् भूतपूर्वतया पश्चादप्यन्तादेश इत्याह—भूतपूर्वतया वेति। 'वार्णात् प्राकृतं बलीयः' इति तु नेहोपतिष्ठते भिन्नकालत्वात्, तथाहि—ईङ्योः सतोरन्तादेशः प्राप्नोति, लोपदीर्घौ तु ततः प्रागेव, यत्र हि वार्णप्राकृतयोर्युगपत्प्राप्तिः कारक इत्यादौ तत्रेदमुपतिष्ठत इति। नन्वेवं तर्हि ददतीत्यादौ आकारलोपेऽपि भूतपूर्वतया शतुरन्तादेशे नकारश्रवणप्रसङ्ग इत्याह—अत्रेत्यादि ॥ ११५ ॥

श्यशवः। अत्र अतुरीङ्योरिति अन्त इति चानुवर्तते, श्यशवः अतुरीङ्योः अन्त इत्यन्वयस्तदाह—श्यात् शवश्चेत्यादि। दीव्यन्ती, सीव्यन्ती स्त्री कुले वेति। 'दिवूच्' क्रीडायाम्, 'षिवूच्' उतौ, आभ्यां शतृप्रत्यये "दिवादेः श्यः" इति श्यस्ततः पूर्ववदीङ्योरन्तादेशः। भवन्तीत्यादि। 'भू' सत्तायाम्, 'चुरण्' स्तेये, 'धृङ्' धारणे, एभ्यः शतृप्रत्यये यथासंभवं णिचि शवि च पूर्ववदीङ्योरन्तादेशः। जरती—"जृषोऽतृ" इत्यतृ। ननु ईङ्योः पूर्वेणैव शतुरन्तादेशः सिद्धः किमर्थमिदं, नैष दोषः, नियमार्थत्वादस्य ॥ ११६ ॥

दिव औः सौ। दिवः सौ औरित्यन्वयः। दिव इति स्थानषष्ठ्यन्तं, ततश्च "षष्ठ्या अन्त्यस्य" इत्युपतिष्ठते इत्याह—दिवोऽन्त्यस्येति। द्यौरिति। अत्र "उः पदान्ते०" इति प्राप्तेऽप्यचरितार्थत्वात् साविति विशेषविधानाद् वा औरेवानेन न तु उकारः। दिवः औकारेण संबन्धात् सौ, परत्वमात्रविज्ञानात् तत्सबन्धिन्यन्यसंबन्धिन्यप्युदाहरति—द्यौः, प्रियद्यौरित्यादि। दिव्यते "दिवेर्डिव्" उ० ९४९। इति डिवि—दिव् औणासे, परत्वमात्रविज्ञानात् ... प्रिया द्यौर्यस्येति "परतः स्त्री पुंवत्०" ३।२।४९। इति पुंवद्भावः, अतिक्रान्तो दिवमिति प्रादिसमासः—अतिद्यौः। ननु अक्षपूर्वात् दीव्यतेः क्विप्यूटि कृते 'एकदेशविकृतस्यानन्यत्वात्' औत्वं कस्मान्न भवति? न धातोरित्यस्तीत्याह—निरनुबन्धग्रहणे नेत्यादि। सूत्रे हि निरनुबन्धोपादानादव्युत्पन्नमननुबन्धकं दिविति नाम गृह्यते, व्युत्पत्तिपक्षेऽप्यवयवानां सानुबन्धकत्वं न नाम्न इति। ननु दिवो वकारस्य अमृशसोः आकारो विभाषया वक्तव्यः, अन्यथा दिवमित्याद्येव स्यान्न तु द्यामित्यादीनीत्याह—द्यामित्यादि। 'द्युङ्' अभिगमे, अतः "द्युगमिभ्यां डोः" उ० ८६७। इति डोस्ततोऽम् ॥ ११७ ॥

## उः पदान्तेऽनूत् ॥ २ । १ । ११८ ॥

पदान्ते वर्तमानस्य दिवोऽन्तस्य उकारादेशो भवति, स चानूत्–तस्य तूकारस्य दीर्घत्वं न भवतीत्यर्थः । द्युभ्याम्, द्युभिः, द्युभ्यः, द्युषु, अतिद्युभ्याम्, परमद्युभ्याम्, द्युगतः, द्युकामः, द्युत्वम्, द्युकल्पः, विमलद्यु दिनम् । पदान्त इति किम् ? दिव्यति, दिव्यम्, दिवौ, दिवम्, दिवि । अनूदिति किम् ? अद्यौर्द्यौर्भवति–द्युभवतीत्यत्र "दीर्घश्च्वियङ्यक्येषु च" ॥ ४ । ३ । १०८ ॥ इत्यनेन च्वौ दीर्घत्व न भवति । ऊकारस्य प्रतिषेधाद् वृद्धिर्भवत्येव–द्युकामस्यापत्यं द्यौकामिः । दिवाश्रयः, दिवौकस इति तु पृषोदरादित्वादकारागमे भविष्यति, वृत्तिविषये वाऽकारान्तो दिवशब्दोऽस्ति ॥ ११८ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां श्रीसिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनतत्त्वप्रकाशिकायां द्वितीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥ २ । १ ॥

**प्रावृड्जातेति हे भूपाः !, मा स्म त्यजत काननम् ।**
**हरिः शेतेऽत्र न त्वेष; मूलराजमहीपतिः ॥ २।१।१ ॥**

---

**उः पदान्तेऽनूत्** । अत्र दिव इत्यनुवर्तते, अनुवृत्तस्य तस्य षष्ठ्यन्ततयान्तपदोपस्थित्या पदान्ते दिवोऽन्तस्य उ, स च अनूदित्यन्वयस्तदाह—**पदान्ते वर्तमानस्य दिवोऽन्तस्येत्यादि** । द्युभ्यामित्यादि । "नाम सिदय्व्यञ्जने" इति पदत्वे तदन्तत्वादस्यानेनोकारे यत्वम्, एवं अतिक्रान्तो दिवमिति विग्रहे—**अतिद्युभ्यामिति**, परमे च ते दिवौ च—**परमद्युभ्यामिति**, दिवं गत इति—**द्युगत** इति, दिव कामयते इति "शीलिकामिभक्ष्याचरीक्षिक्षमो णः" ५।१।७३। इति णे—**द्युकाम** इति, दिवो भाव —**द्युत्वम्** इति, ईषदपरिसमाप्ता द्यौ —**द्युकल्प** इति, विमला द्यौर्यस्मिन्निति विग्रहे—**विमलद्यु दिनमिति**, एतेषु सर्वत्रानेन वस्योत्वम् । **दिव्यति, दिव्यमिति** । दिवमिच्छतीति क्यन्, दिवि भवमिति "द्युप्रागपागुदक्प्रतीचो यः" ६।३।८। इति य, तत्राप्यजने इति वचनादत्रापदत्वादनेन वस्य नोकारादेश । एव **दिवावित्यादि** । ननु द्युभ्यामित्यादौ दीर्घप्रसङ्ग एव नास्ति कथमुच्यते अनूदितीत्याह—**अद्यौर्द्यौरित्यादि** । द्यौकामिरित्यत्र तु ऊकारमात्रप्रतिषेधादिञि वृद्धिर्भवत्येवेत्याह—**ऊकारस्य प्रतिषेधादित्यादि** । ननु दिवाश्रय इत्यादावन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वेऽनेनोत्वे कथ दिवाश्रय इत्यादीत्यत आह—**पृषोदरादित्वादित्यादि** ॥ ११८ ॥

वर्षर्तोर्युद्धकालत्वाभावात् पूर्वं पराजिता ये राजानो विहितारण्यवासास्तेऽस्मिन् काले मूलराजराजेश्वरो युद्धकालीनसामग्र्या असन्नद्धत्वात् शयान इवास्ते इति मनसि संप्रधार्याभिद्रवणमिच्छन्ति तान् अनवबुद्धान् सुबोधायोक्तिरियम्—**प्रावृड्जातेत्यादि** । **प्रावृड्जाता**–वर्षाकालः समनुप्राप्त, **इति**–हेतो, **हे भूपाः !**–हे मूलराजमहीपतिविरोधिराजानः!, **काननं**–अरण्य, **मा स्म त्यजत**–वन त्यक्त्वा तन्नगरं रोद्धु मा स्म गच्छतेत्यर्थं, वनात्यागे हेतुमाह—**हरिः शेते** इत्यादि । अत्र कानने, वृष्टिभयात् **हरिः**–वनराज, **शेते**–आलस्याश्चिरशयम आस्त इत्यर्थ । **तु**–परन्तु, **एष**–जगति लब्धयशा, मूलराजमहीपति, **न शेते**–जने निर्जने च सर्वत्र सदैव च जागर्ति बहुभि कृतवैरत्वात् निरलसत्वादत एव तस्य लब्धयशस्त्वमित्यर्थ । अथवा–ये समूलराजास्तत्सामन्ता नृपतयो हरिभक्ता निदाघकाले तापापनोदाय विहर्तुमधिष्ठितकान्तारस्योपवना भगवच्छयनस्य वर्षर्तौ भावात् तद्दर्शनाभावभिया चिकीर्षितनगरगमनास्तान् प्रति अत्रैव वने हरिशयनकाले हरिदर्शन मूलराजमहीपतावारोप्य हरित्वमपह्नुत्य च मूलराजमहीपतित्व तद्दर्शयति—**प्रावृड्जातेत्यादि** । **प्रावृड्जाता**–वृष्टिकाल सपद्यमान, **इति**–हेतो, **काननं**–वनस्योपवनम्, **मा स्म त्यजत**–तत्त्यक्त्वा नगरं मा स्म गच्छतेत्यर्थं । ननु गमने निषिद्धे तेषां कथ स्वाभिप्रेतार्थसिद्धिरित्याह—**हरिः शेते** इत्यादि । **अत्र हरिः शेते**–अत्रैव भवतां मध्ये ज्ञातोऽप्यज्ञातो भवद्भिर्भगवान् हरिरेव सुप्तो वर्तत इत्यर्थ । नन्वस्माक मध्ये स्थितस्तु मूलराज इति कथं हरित्वेन बोधयसीति चेदाह—**न त्वेष मूलराजमहीपतिः**–भवन्मध्ये भ्रमेण मूलराजमहीपतिं हरित्वेन वित्त न तु मूलराजमहीपतित्वेन तत्सदृशसकलगुणगौरवादिति भाव । पद्यस्याऽस्य प्रतिभासमाना अपि बहवोऽर्था ग्रन्थगौरवभयान्नोल्लिख्यन्त इति ॥ २।१।१ ॥

इति श्रीमत्तपागच्छगगनाहर्मणिगीतार्थसार्वभौमाऽऽगमोद्धारकशैलानापतिपरिपूजितपादारविन्दआगमोदयसमिति–वर्द्धमानजैनागममंदिराद्यनेकशासनहितवर्धकसंस्थानिर्माणोपदेशकभट्टारककुलमूर्द्धन्यश्री **१००८ आनंदसागरसूरीश्वराणां** साम्राज्ये तच्चरणनिलीनमानसेनानवाप्तनवपदपीयूषपानोद्यतभव्यभावभावोद्बोधसूर्योदयश्रीसिद्धचक्र–नवपदाराधकसमाजादिविविधसंस्थासंस्थापकेन श्रीवर्द्धमानतपोनिष्णातेन श्रीसिद्धचक्राराधन–तीर्थोद्धारकेण वैयाकरणकेसरिणा **पन्न्यासप्रवरश्रीचन्द्रसागरगणीन्द्रेण** विरचितायां श्रीसिद्धहेमचन्द्रसूत्रवृत्तिन्यासरत्नाकरावतारिकायाम**ाऽऽनन्दबोधिन्यां** द्वितीयाध्यायस्य नामप्रकरणं नाम प्रथम पाद ॥ २।१ ॥

---

## ॥ अर्हं ॥

# द्वितीयाऽध्याये द्वितीयः पादः ॥

## क्रियाहेतुः कारकम् ॥ २ । २ । १ ॥

क्रियाया हेतुः—कारणं कर्त्रादि कारकसंज्ञं भवति, तच्च द्रव्याणां स्वपराश्रयसमवेतक्रियानिर्वर्तकं सामर्थ्य—शक्तिरित्याचक्षते, शक्तिश्च सहभूर्यावद्द्रव्यभाविनी च क्रियाकाल एवाभिव्यज्यते । करोतीति कारकमिति अन्वर्थसंज्ञासमाश्रय-

---

क्रियाहेतुः कारकम् । क्रियत इति क्रियेति यदा भावकर्मणो "कृग श च वा" ५।३।१००। इति शस्तदा मध्ये "क्य शिति" ३।४।७०। इति क्य, "रि शक्याशीर्ये" ४।३।११०। इति रिरादेशश्च, यदा त्वपादानादौ शस्तदा क्यो नास्तीति रेरिकारस्येयादेशः । क्रियाया कारकमित्युक्ते क्रियायां कर्तुर्मुख्यत्वात्तस्यैव कारकत्व स्यात्, "गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय" इति न्यायात् । हेतुः कारणं कारकमित्युक्ते तु द्रव्यस्य मुख्यत्वात्तद्धेतोरेव कटं करोतीत्यादौ कारकत्व स्यात्, न तु चैत्रो गातीत्यादौ । हेतुपदाभिधेयमाह—कारणमिति । निर्वर्तकमिति यावत् । क्रियास्वरूप च "क्रियार्थो धातु" ३।३।३। इत्यत्र निर्णेष्याम । कारकमिति संज्ञाया भाव्यमानत्वात् भूतविभक्त्यनुपपत्त्या भाव्यमानविभक्त्या प्रथमया निर्देश । कारकशब्द कर्तृमात्रपर्याय, कर्त्रादीत्यत्र कर्तृशब्दस्तु कर्तृविशेषवचन, तेन—कर्त्रादि कारकसंज्ञमिति विशेषणविशेष्यभाव उपपन्न इति अन्यथा वृक्षो वृक्षसंज्ञ इतिवदनुपपन्न स्यात् । उक्तञ्च 'सव्यापारे तु कर्तृत्व सर्वत्रैवास्ति कारके । व्यापारभेदापेक्षाया करणत्वादिसंभव ॥ १ ॥ फलार्थी य स्वतन्त्र सन् फलायारभते क्रियाम् । नियोक्ता परतन्त्राणा स कर्ता नाम कारकम् ॥ २ ॥ प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वर । अप्रयुक्त प्रयुक्तो वा स कर्ता फलसाधक ॥ ३ ॥ अर्थस्याभेदादिति कारकशब्दाभिधेय निर्विक्ति—तच्चेत्यादि । च पुनरर्थे, तत्पुनरित्यर्थ । क्रिया हि द्विविधा कर्तृस्था कर्मस्था चेति । तत्र कर्तृस्था कर्तृसमवायिनी यथा—आसनगमनादिका, कर्मस्था कर्मसमवायिनी यथा—पाकादिका, कर्तृकर्मणी च क्वचित् स्वाश्रयसमवेतक्रियाया निर्वर्तके क्वचित् पराश्रयसमवेतक्रियाया शेषाणि तु कारकाणि पराश्रयसमवेतक्रियानिर्वर्तकान्येव । द्रव्याणा सामर्थ्यं कारकमिति सम्बन्ध । द्रव्यस्य तु कारकत्वे प्रतिबन्धकमन्त्रादिसंनिधानासंनिधानाभ्यां दहनादेर्दाहादिक्रियोत्पत्त्यनुत्पत्ती न स्याताम्, द्रव्यस्वरूपस्य सर्वदा विद्यमानत्वादुत्पत्तिरेव स्यात्, तस्माच्छक्तिरेव कारकमित्यास्थेयम् । शक्तिर्हि द्रव्यस्य धर्मस्तस्य चतुष्टयी गति—कश्चित् सहभूर्यावद्द्रव्यभावी च यथा—स्फटिकशौक्ल्यम् १ कश्चित् सहभूरयावद्द्रव्यभावी यथा—अपक्वघटस्य श्यामिका २ कश्चिदसहभूर्यावद्द्रव्यभावी च यथा—तस्यैव घटस्य पाकजा रूपादय ३ कश्चिदसहभूरयावद्द्रव्यभावी यथा—मेषयो संयोग ४ तत्र शक्तिलक्षणस्य धर्मस्य स्वरूपमाह—शक्तिश्चेत्यादि । न चैव सर्वदा क्रियोत्पत्तिप्रसङ्ग इति वाच्यम्, अभिव्यक्ताया एव तस्या क्रियाकारणात्, यथा—केतक्यादिजलानां वर्षाद्यभिभूतस्य गन्धस्य तरुणतरणिकिरणसम्पर्काभिव्यक्तस्य गन्धोपलम्भक्रियाहेतुत्वम् । न चैतावता तस्यासत्त्व, उत्तरकालमभिव्यज्यमानत्वात् । न च तदैव तस्योत्पत्तिरित्यपि वाच्यम्, रविकरस्पर्शस्य गन्धोपलब्धौ सामर्थ्यानवधारणात्, सामर्थ्ये वा जलान्तरेऽपि तथा गन्धोपलब्धि स्यात्, तस्मात् क्रियाकालाभिव्यक्ता शक्ति कारकमिति स्थितम् । ननु संज्ञा इति प्रकृत्य कारकादय शब्दा पठितव्या, अन्यथा कारकादय संज्ञा इत्येव सम्प्रत्ययो न स्यात्, अत संज्ञाधिकार इति वक्तव्यम् । तथा क्रियमाणाऽपि संज्ञासंज्ञिनोरसन्देहो वक्तव्य, कथमन्यथा कारकशब्द संज्ञा क्रियाहेतु संज्ञीति न पुनर्व्यत्यय इति । अत्रोच्यते—यत्तावत्संज्ञासंप्रत्ययार्थं संज्ञाधिकार कर्तव्य, तन्न, आचार्याचारात् संज्ञाविदे । तद्यथा—लोके मातापितरौ जातस्य पुत्रस्य संवृतेऽवकाशे नाम कुरुतो देवदत्तो यज्ञदत्त इति तयोराचारादन्येऽपि जानन्ति इयमस्य संज्ञेति । एवमिहाऽपि केचिद्व्याचक्षाणा आहुः—कारकशब्द संज्ञा क्रियाहेतु संज्ञीति, अपरे कारकमित्युक्त्या कर्त्रादीन्युदाहरन्ति, तेन मन्यामहे यया प्रत्याय्यन्ते सा संज्ञा ये प्रतीयन्ते ते संज्ञिन इति । यदपि संज्ञासंज्ञिनोरसन्देहो वक्तव्य इत्युक्त, तदपि न, आचार्यव्यवहारादेव तस्य सिद्धत्वात् । कारकशब्दस्य हि प्रत्यायनशक्तिर्व्याख्यानेन प्रकाश्यते, यथा अकारादीनां वर्णत्वमिति । अनाकृति संज्ञा आकृतिमन्त संज्ञिन इति, लोकेऽपि ह्याकृतिमतो मांसपिण्डस्या देवदत्त इति संज्ञा क्रियते । आकृत्या हि साहचर्यात् भेदो वा लक्ष्यते, तेन अयमर्थ —कारकशब्द एकत्वात् संज्ञा क्रियाहेतुशब्देन प्रत्यायितानां बहुत्वात् संज्ञित्वम् लाघवार्थत्वात् संज्ञाकरणस्य । तथा आवर्तिन्य संज्ञा भवन्ति, कारकशब्दश्चावर्तते न क्रियाहेतुशब्दस्तद्यथा—देवदत्तशब्द आवर्तते न मांसपिण्ड इति । अथवा सत कार्यिण कार्येण भाव्यम् इति पूर्वोच्चारित संज्ञी परोच्चारिता संज्ञेति । किंवाऽस्यानेऽय यत्न क्रियते, न हीदं लोकाद्भ्रियते, यदीद लोकाद्भ्रियेत ततो यत्नार्हं स्यात् । यथा—अगोज्ञाय कश्चिद्गां सक्थनि कर्णे वा गृहीत्वोपदिशति—अयं गौरिति, न चास्मायाचष्टे इयमस्य संज्ञेति, भवति चास्य संज्ञासम्प्रत्ययस्तस्मादन्तरेणापि संज्ञाशब्दप्रयोग लोकव्यवहारवदत्र संज्ञासंज्ञिसंबन्ध सिध्यतीति । अथ संज्ञिनिर्देश किमर्थ ? अकारकस्य मा भूदित्यर्थ, अन्यथा ग्रामस्य समीपादागच्छति इत्यकारकस्यापि ग्रामस्यापादानसंज्ञा प्रसज्येत, तथाहि—यो वृक्षशाखाया पतत्यसौ वृक्षादपि पतति, एव यो ग्रामसमीपादागच्छति ग्रामादप्यसावागच्छतीत्यपाये ग्रामस्यावधित्वमस्त्यागमने तु निर्वर्तकत्वाभाव, समीपस्य विशेषणत्वेनोपादानादिति । अपायो हि संश्लेषपूर्वक, संश्लेषश्च विशेषणत्वेनोपात्तत्वादिति । अथ नाऽत्र ग्रामोऽपाययुक्त किंतर्हि ? समीप, तस्य विशेषणत्वेनोपादानादिति । यदा च ग्रामोऽपाययुक्तो भवति तदाऽपादानसंज्ञा, यथा—ग्रामादागच्छतीति । सन्नसन्वा बुद्ध्या कल्प्यते, स च समीपस्यैव विवक्षितो न ग्रामस्य । इह त्वर्थान्तरस्यानिर्देशात् वृक्षस्यैवापाययुक्तत्वमिति, एव तर्हि वृक्षस्य पत्र पततीत्यत्राप्यपादानसंज्ञा प्राप्नोति, ग्रामस्य समीपादित्यत्रापाययुक्तार्थान्तरसद्भावान्नास्ति ग्रामस्यापाययोग । नैतदस्ति—नात्राऽपायो विवक्षित, कस्तर्हि ? सम्बन्ध, पर्णविशेषणत्वेन वृक्षस्य विवक्षितत्वात् । न चैव पततीति प्रयोगानुपपत्ति, वृक्षमजहत्यपि पर्णे शाखास्थे भूमिं स्पृशति, वृक्षस्य पत्र पततीति प्रयोगस्य दर्शनात् । सति ह्यवधौ गतिरपायो भवति, नान्यथा, गतिविशेषत्वादपायस्य । यदा चापायो विवक्षितो भवति, भवति तदाऽपादानसंज्ञा, यथा वृक्षात् पर्णं पततीति । सम्बन्धस्तु तदा न विशेषितो भवति, न ज्ञायते कस्य कूरस्य वा, सम्बन्धिविशेषस्य शब्देनाऽसमर्पणात् । प्रत्यासत्त्या तु वृक्ष एव सम्बन्धित्वेन प्रतीयते इति तस्मादवध्यापितो भवति । ननु तथापि संज्ञिविशेषस्यानिर्देशात् क्रियानिमित्तमात्रस्यापि हेत्वादे प्रसङ्ग इत्याह—करोतीत्यादि । चकारोऽवधारणे, अयमर्थः—कारक इति महती संज्ञाऽन्वर्था विज्ञायते, करोतीति कारकमिति साध्यत्वेन च क्रियैव शब्दात् प्रतीयते । क्रियानिर्वर्तकस्यैव कारकमित्याश्रीयते तदा स्वतन्त्रस्यैव कर्तृसंज्ञावत् कारकसंज्ञापि प्राप्नोति, न तु करणादीनां, परतन्त्रत्वेन अकर्तृकत्वात् । ततश्च करण कारक अधिकरण कारकमिति न स्यात्, नैष दोष, प्रतिकारक पचादीनां क्रियाभेदात् करणाधिकरणयो कर्तृभाव । तथा हि—अधिश्रयणोदकसेचनतण्डुलावपनैधोऽपकर्षणादिक्रिया कुर्वन् देवदत्त पचतीत्युच्यते, तत्र

सत्यम्, तथापि विशिष्ट संज्ञी निर्देष्टव्यो यत् क्रियाया निर्वर्तक साधक तत् कारकसंज्ञं भवतीति।

णात् चानाश्रितव्यापारस्य निमित्तत्वमात्रेण हेत्वादेः कारकसंज्ञा न भवति । कारकप्रदेशाः–"कारके कृता" ॥ ३ । १ । ६८ ॥ इत्येवमादयः ॥ १ ॥

## स्वतन्त्रः कर्ता ॥ २ । २ । २ ॥

क्रियाहेतुभूतो यः क्रियासिद्धावपरायत्ततया प्राधान्येन विवक्ष्यते, स कारकविशेषः कर्तृसंज्ञो भवति । देवदत्तः पचति, जिनदत्तेन कृतम्, स्थाली पचति, चौरस्य रुजति रोगः, प्रेषितः करोति; अस्य च कर्तुरधिश्रयणादयः पचिक्रियायामवान्तरव्यापारा भवन्ति, एतान् कुर्वन् देवदत्तः पचतीत्युच्यते । प्रयोजकोऽपि कर्तैव–पचन्तं देवदत्तं प्रयुङ्क्ते देवदत्तेन पाचयति चैत्रः । अत्र स्वशब्द आत्मवचनः, तन्त्रशब्दः प्रधानार्थः; स्वं तन्त्रमस्य स्वतन्त्र आत्मप्रधानः ।

---

तदा पचिर्वर्तते, एतत् प्रधानस्य कर्तुः कर्तृत्वम् । स्थाली द्रोणं पचति आढकं पचति, इति ग्रहणक्रियां स्थिरत्वादाक्रियासमाप्तेस्तण्डुलानां धारणक्रियां च कुर्वती स्थाली पचतीत्युच्यते, अत्र तदा पचिर्वर्तते, एतदधिकरणस्य कर्तृत्वम् । एधाः प्रक्ष्यन्ति–आ विक्लित्तेर्ज्वलिष्यन्तीति ज्वलनक्रियां कुर्वन्ति काष्ठानि पचन्तीत्युच्यन्ते, तत्र तदा पचिर्वर्तते, एतत् करणस्य कर्तृत्वम् । अनेकार्थत्वाद्धातूनां तादर्थ्याद्वा तद्रूपासङ्गात् करणादिव्यापारे पचेर्वृत्तिर्द्रष्टव्या । एवमन्यत्रापि सर्वेषां स्वव्यापारे स्वातन्त्र्यात् तदनुष्ठानद्वारेण प्रधानक्रियायामुपयोगात् कर्तृसंनिधावपि स्वव्यापारस्यानिवर्तनात् पारतन्त्र्यावस्थायामप्यनिवृत्तं कारकत्वमित्यर्थः । ननु च यथा करणाधिकरणयोः कर्तृत्वं निदर्शितं न तथाऽपादानादीनां निदर्श्यते, न ह्यपादाने ग्रामे ग्राम आगच्छतीति प्रयोगोऽस्ति, उच्यते–सर्वत्रैवात्र स्वातन्त्र्यं पारतन्त्र्यं च विवक्षितं, तयोश्च स्वातन्त्र्यपारतन्त्र्ययोः पर्यायेण वचनम्, वचनाश्रया च संज्ञा भविष्यति । यथा–बलाहकाद् विद्योतते विद्युत्, बलाहके विद्योतते, बलाहको विद्योतत इति । तथा हि–बलाहकादिति निःसरणाङ्गे द्योतने द्युतिर्वर्तते, पृथग्भावश्च विवक्षित इत्यपादानत्वम् । बलाहके इत्यत्र तु स्थित्यङ्गे द्योतने द्युतिर्वर्तते, बलाहके स्थित्वा ज्योतीरूपा विद्युद्विद्योतत इत्यर्थः । बलाहक इति च विद्युतो बलाहकस्य चाऽभेदविवक्षायां प्रयोगः । ग्रामः आगच्छतीत्यर्थान्तरावगमादपादानव्यापारानवसायात् प्रयोगाभावः । एवं ब्राह्मणाय ददातीत्यर्थे ब्राह्मणो ददातीति प्रयोगाभावः । शब्दशक्तिस्वाभाव्याच्चापादानसम्प्रदानव्यापारे धातुर्न वर्तते । वस्तुतस्त्वपादानस्यावधिभावेनाऽवस्थानं व्यापारोऽस्ति, संप्रदानस्याप्यनुमननादिलक्षणः प्रतीयमानोऽपि च व्यापारः कारकव्यपदेशनिबन्धनम्, यथा 'प्रविश पिण्डी'मिति, स्वव्यापारमन्तरेण प्रधानक्रियायामुपयोगाभावात् । ननु सर्वत्रात्र स्वातन्त्र्यं पारतन्त्र्यं चास्ति, तत्र प्रधानत्वात् कर्तृसंज्ञैव प्राप्नोति । अथ परत्वादपादानादयः, तथा हि अपादानादीनामवकाशो यदा स्वातन्त्र्यं नास्ति, कर्तृसंज्ञाया अवकाशो–देवदत्तः पचतीत्युभयप्राप्तौ चापादानादयः, तत्र सर्वत्र स्वातन्त्र्यस्य सद्भावात्कर्तृसंज्ञाविनिर्मुक्तोऽपादानादिसंज्ञानामवकाशः । अत्रोच्यते–उद्भूतस्वातन्त्र्यविवक्षायां कर्तृसंज्ञा, यथा–स्थाली पचतीति । उद्भूतपारतन्त्र्यविवक्षायां तु न्यग्भावात् सदपि स्वातन्त्र्यं स्वकार्यं न प्रयुङ्क्ते, यथा राजसंनिधौ तदनुपयोगि स्वकार्यममात्या नारभन्ते । तस्मात् सर्वत्र स्वातन्त्र्यपारतन्त्र्यसद्भावेऽपि पर्यायेणैव वचनम्, तदाश्रया च संज्ञेत्यदोषः । ननु समवनक्रियां धारणक्रियां च कुर्वती स्थाली स्वतन्त्रेत्युक्त, क्वेदानीं परतन्त्रा[2] न च प्रक्षालने परिवर्तने च पारतन्त्र्यमिति वाच्यम्; न हि प्रक्षालनपरिवर्तने करिष्यतीति स्थाल्युपादीयते किन्तु समवनधारणक्रिये करिष्यतीति प्रक्षालनाद्यभावेऽपि पाकनिष्पादात् तेषां तत्राऽनङ्गत्वात् । एवं तर्हि स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रा, कर्तृस्थे यत्ने परतन्त्रेति । ननु च भोः कर्तृस्थेऽपि यत्ने कथ्यमाने स्थाली समवनधारणक्रिये करोति तत्र स्वतन्त्रा क्वेदानीं परतन्त्रेति । एवं तर्हि प्रधानेन समवाये स्थाली परतन्त्रा व्यवाये स्वतन्त्रा, तद्यथा–अमात्यानां राज्ञा सह समवाये पारतन्त्र्यं व्यवाये स्वातन्त्र्यम् । ननु सामग्रीतः क्रियोत्पादात् सर्वेषां च तत्र सामान्यात् कस्यचित्प्राधान्यं समावयाम इति कथं ज्ञायते कर्ता प्रधानमिति[2] उच्यते–सर्वेषु साधनेषु संनिहितेषु कर्ता प्रवर्तयिता भवति, तदधीनप्रवृत्तिनिवृत्तित्वात् करणादीनां, तस्य च प्रागन्यतः शक्तिलाभात् प्रतिनिध्यदर्शनात् करणाद्यभावेऽपि आस्ते शेते इत्यादौ केवलस्य कर्तुर्दर्शनात् कर्तृरहितानां करणादीनामदर्शनात् प्राधान्यं कर्तुरिति । यद्वा सर्वेषां धारणक्रियायां कर्तृत्वं, अवान्तरव्यापारविवक्षायां तु करणादिरूपत्वम् । यथा मातापित्रोरपत्योत्पादने कर्तृत्वम्, तदविवक्षायां तु अयमस्यामियमस्माद्वा जनयतीत्यधिकरणत्वमपादानत्वं च व्यवतिष्ठते । एवं च स्वातन्त्र्यपारतन्त्र्ययोश्च विरोधाभावात् करणं कारकमित्यादिविशेषणविशेष्यभावोऽपि । कर्तृसंज्ञा तु करणत्वाद्यवस्थायां न भवति । "स्वतन्त्रः कर्ता" इत्यत्र कारकत्वादेव स्वातन्त्र्ये लब्धे पुनः स्वतन्त्रश्रुतिर्नियमार्था, तेन स्वतः स्वातन्त्र्यमेव यस्य तस्य कर्तृसंज्ञा, न तु पारतन्त्र्यसहितस्वातन्त्र्ययुक्तस्य । कारकसंज्ञा तु वस्तुस्थित्या विद्यमानमुद्भूतत्वेनाविवक्षितमपि स्वातन्त्र्यमाश्रित्य करणादीनां विधानसामर्थ्यात् प्रवर्तते । यत्र च शक्तीनां निमित्तनिमित्तिभावेन युगपद्विवक्षा तत्र संज्ञानां विप्रतिषेध उच्यते, यथा–धनुषा विध्यतीति, विनाऽपायविवक्षया धनुषः साधकतमत्वाभावात् संज्ञाद्वयप्रसङ्गे 'स्पर्धे पर'मित्यत्र परग्रहणस्येष्टवाचित्वात् क्वचित् पूर्वमिति करणसंज्ञा । असिश्छिनत्ति इति सत्येव साधकतमत्वे स्वातन्त्र्यस्य विवक्षितत्वात् कर्तृसंज्ञा, तदा तु तैक्ष्ण्यादीनां करणत्वं, तैक्ष्ण्यादीनां तु कर्तृत्वविवक्षायामात्मनः करणत्वम् । तैक्ष्ण्यमेव हि वस्तुस्थित्यैकमपि विवक्षावशात् द्वेधावतिष्ठते इति कर्तृत्वं करणत्वस्याबाधकमिति ॥ १ ॥

**स्वतन्त्रः कर्ता** । कारकसंज्ञासंज्ञित्वं बोधयति–**क्रियाहेतुभूतो यः** इति । स्वतन्त्रपदाभिधेयमाचष्टे–**क्रियासिद्धावपरायत्ततया प्राधान्येन विवक्ष्यते सः** इति । **यः सः** इत्युभयसर्वनामपदोपादानेन यस्यैव क्रियाहेतुत्वं तस्यैव क्रियासिद्धावपरायत्तत्वरूपप्राधान्यविवक्षेति ज्ञायते इति भावः ।[1] कारकमित्यधिकृतायाः सामान्यसंज्ञायाः एतद्विहितविशेषसंज्ञायाश्च कर्तुः सामान्यविशेषयोरभेद इत्याह–**कारकविशेषः कर्तृसंज्ञः** इति । **देवदत्तः पचतीत्यादि** । देवदत्तोऽत्र कर्तृत्वात् कर्तृप्रत्ययेन तिवोच्यत इति प्रथमा, क्तप्रत्ययेन कर्तुरनभिधानात् जिनदत्तात् तृतीया–**जिनदत्तेनेति**, अधिकरणरूपायाः स्थाल्याः स्वातन्त्र्यस्य विवक्षितत्वात् कर्तृत्वम्–**स्थालीति**, **चौरस्येत्यत्र** रोगलक्षणस्य भावस्य कर्तृत्वात् "रुजार्थस्याज्वरिसंतापेः" इति कर्मणो विकल्पितत्वात् चौरात् षष्ठी, प्रयोज्यावस्थायामपि स्वातन्त्र्यस्याहाने कर्तृत्वम्–**प्रेषित इति** । **अस्य च कर्तुरिति** । एतेषु तदा पचिर्वर्तत इति भावः । **प्रयोजकोऽपीति** । स्वतन्त्रत्वादिति शेषः । अस्ति स्वशब्द आत्मीयवचन आत्मवचनश्च, तन्त्रशब्दोऽपि विततन्तुवचनो वितता हि तन्तवस्तन्त्रं आस्तीर्णम् तन्त्रम् प्रोतं तन्त्रमिति गम्यते प्रधानार्थश्च, तत्र स्वमात्मीयन्तदा तन्तुवायेऽपि प्राप्नोति । यद्यपि तन्तुवायो वयति भुङ्क्ते इत्यादौ तन्तुवायस्य कर्तृसंज्ञेष्यते तथापि विशेषविहितत्वादपादानादिसंज्ञाविषयेऽपि स्यात्, मुनिरधीते इत्यादौ च मुन्यादेर्न स्यात् इत्यव्याप्त्यतिव्याप्तिभ्यां द्वितीय एव पक्ष आश्रीयते इत्याह–**अत्र स्वशब्द इत्यादि** । **आत्मप्रधान इति** । स्वतन्त्र इत्यस्य पर्यायो यस्यागुणभावेन धातुना व्यापार उच्यते सर्वोऽसौ स्वतन्त्र इति, अयमर्थः–स्वतन्त्रशब्दो रूढिवचनः समासप्रतिरूपकः प्रधानार्थः । **स्वशब्द आत्मवचन** इत्याद्यवयवार्थकथनं तु घटनामात्रार्थमिति, तेन यदुच्यतेऽप्रधानमपेक्ष्य प्रधानं भवतीति यथाऽधिकरणा-

१ × × पु० । २ स्वतन्त्रमस° पु० ।

किं पुनः कारकान्तरेभ्यः कर्तुः प्राधान्यम् ? यत् करणादीनि प्रयुङ्क्ते न तैः प्रयुज्यते, तानि न्यक्करोति न तैर्न्यक्क्रियते, तानि [1]निर्वर्तयति न तैर्निर्वर्त्यते, तानि प्रतिनिधत्ते न तैः प्रतिनिधीयते, तेभ्यः स प्रथममात्मलाभं लभते न तानि तस्मात्, स तैर्विनाऽपि दृश्यते न तानि तेनेति । कर्तृप्रदेशाः—"ञ्ङितः कर्तरि" ॥ ३ । ३ । २२ ॥ इत्यादयः ॥ २ ॥

## कर्तुर्व्याप्यं कर्म ॥ २ । २ । ३ ॥

कर्त्रा क्रियया यद्विशेषेणाप्तुमिष्यते तद्व्याप्यं तत्कारकं कर्मसंज्ञं भवति, प्रसिद्धस्यानुवादेनाप्रसिद्धस्य विधानं लक्षणार्थः; तेन यत् कर्म यत्कर्त्रा क्रियते तद्व्याप्यसंज्ञं भवतीत्यपि सूत्रार्थः । त्रेधा—निर्वर्त्यम्१, विकार्यम्२; प्राप्य३ च । तत्र यदसज्जायते जन्मना वा प्रकाश्यते तन्निर्वर्त्यम्—कटं करोति, पुत्रं प्रसूते; प्रकृत्युच्छेदेन गुणान्तराधानेन वा यद्विकृतिमापाद्यते तद् विकार्यम्—काष्ठं दहति, काण्डं लुनाति; यत्र तु क्रियाकृतो विशेषो नास्ति तत्प्राप्यम्—आदित्यं पश्यति, ग्रामं गच्छति । अस्य तु त्रिविधस्यापि यथाक्रममवान्तरव्यापाराः—निर्वर्तते, विकुरुते, आभासमुपगच्छतीत्यादयः । त्रिविधमप्येतत्पुनस्त्रिविधम्—इष्टम्१, अनिष्टम्२; अनुभय३ च । यदवाप्तुं क्रियाऽऽरभ्यते तदिष्टम्—कटादि, यद्द्विष्टं प्राप्यते तदनिष्टम्—

---

तीन्यपराण्यप्रधानानि कारकाणि सन्ति—देवदत्तः स्थाल्यां काष्ठैरोदनं पचतीत्यादौ तत्रैव स्यात्, यत्र तु तेषामविवक्षा आस्ते शेते इत्यादौ तत्र न स्यादिति तदपि प्रत्युक्तम् । प्राधान्यं पृच्छति—**किं पुनरिति** । क्रियाया अनेककारकसाध्यत्वात् तां प्रति सर्वेषां प्रधानत्वादित्यर्थः । समाधत्ते—**यत्करणादीनीत्यादि** । एतच्च प्रसङ्गात् कारकसूत्रे निर्णीतमिति नेह प्रतन्यते । यथैव पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति कर्तृसंज्ञा न प्राप्नोति, अस्वतन्त्रत्वात् । यथा कर्तृसंनिधौ करणादीनां स्वातन्त्र्याभावस्तथा प्रयोजकसंनिधौ प्रयोज्यस्यापीति पारतन्त्र्यादकर्तृकत्वात् यज्ञदत्तेनेति कर्तृतृतीया न प्राप्नोति, नैष दोषः, प्रयोजकसंनिधानेऽपि प्रयोज्यस्य करणादिकारकविनियोगादिना स्वातन्त्र्यस्य क्रियासिद्धौ सद्भावात् । यदि तु प्रयोज्यस्य स्वातन्त्र्यं न स्यात्तेवाऽसौ साधनान्तरविनियोगादिना क्रियां कुर्यात्, तथा चाऽकुर्वत्यपि प्रयोज्ये प्रयोजकः कारयतीति व्यपदिश्येत, न चाऽकुर्वत्यपि तस्मिन् कारयतीत्येवमुच्यतीति प्राधान्यात् सिद्धमस्य कर्तृत्वम् । यदुक्तम्—"यः क्रियां कर्मकर्तृस्थां कुरुते मुख्यभावतः । अप्रयुक्तः प्रयुक्तो वा स कर्ता नाम कारकम्" ॥ किं च योऽपि मन्यते—प्रयोज्यस्य स्वातन्त्र्येण स्वव्यापारे प्रत्यप्रवर्तनात् किल कर्तृसंज्ञोपसंख्येयेति, तेनाऽपि चेदमवश्यमभ्युपेयम्—यः करोति स स्वतन्त्रो न त्वकुर्वन्निति । एवं चेत्प्रयोजकसंनिधानेऽपि स्वार्थदर्शनात् प्रयोज्यः करोति नान्यथेति तस्य स्वातन्त्र्यमस्तीत्यकामेनाप्यङ्गीकार्यम् । तथा चोक्तं भाष्यकृता—न हि कश्चित् परोऽनुग्रहीतव्य इति प्रवर्तते, सर्वे इमे स्वभूत्यर्थं यतन्ते इति प्रेषितोऽप्यसौ स्वार्थदर्शनादिच्छायां सत्यां क्रियां करोति तददर्शनान्न करोतीति स्वतन्त्र एवेति । ननु प्रैषात्पूर्वं प्रयोज्यस्य स्वव्यापारे प्रवर्तनात् स्वातन्त्र्यमिति सिध्यति तृतीया, प्रैषकाले तु कथं तत्र स्वव्यापाराप्रवर्तनात् प्रवृत्तौ च प्रैषपर्येषणात् स्वातन्त्र्यं नास्तीत्यस्वतन्त्रस्य च प्रयोजकः "प्रयोक्तृ०" ३।४।२०। इति तद्व्यापारे णिग् न स्यात्, नैष दोषः; तस्य स्वतन्त्रत्वात् दृष्टसामर्थ्यं सम्भावितसामर्थ्यो वा क्रियायां स्वातन्त्र्येण समाश्रितः एव नियोज्यशब्देनोच्यते । नन्वेकस्य स्वातन्त्र्यं पारतन्त्र्यं च विप्रतिषिद्धं, प्रयोजकसंनिधौ पारतन्त्र्येण स्वातन्त्र्यस्य तिरस्कृतत्वात् यौगपद्यानुपपत्तिः, उच्यते—एकापेक्षया विरोधोऽत्र च प्रैषापेक्षया पारतन्त्र्यं करणाद्यपेक्षया च स्वातन्त्र्यमित्यविरोधः । यथैव नदीकूलं पततीत्यादौ स्वातन्त्र्याभावात् कर्तृत्वाभावः, तथा हि—स्वातन्त्र्यं नाम परिदृष्टसामर्थ्यकारकप्रयोक्तृत्वं चेतनव्यापारो नाचेतनस्य कूलादेः सम्भवति, उच्यते—सामान्येन कर्तृव्यापारेण पदं निष्पाद्य तत्पश्चात् पदान्तरयोगः, न ह्यन्तरङ्गे पदसंस्कारे बहिरङ्गः पदान्तरसम्बन्धो बाधत इति ॥ २ ॥

**कर्तुर्व्याप्यं कर्म** । कर्तुरिति "कृत्यस्य वा" २।२।८८। इति कर्तरि षष्ठी, स च सम्बन्धिशब्दत्वादनुपात्तामपि कर्तृसम्बन्धिनीं क्रियामुपस्थापयतीत्याह—**कर्त्रा क्रिययेत्यादि** । कर्ता च क्रियया विना न किंचिदाप्तुं शक्नोति इति सामर्थ्यात् क्रिया करणभावेनाऽवतिष्ठते, ततोऽयमर्थः—पच्यादिकतया क्रियया यद्विशेषेणाप्तुमिष्यते कर्त्रा तत् कारकं कर्मेति । एवणाप्ते च प्रापणे आप्नोतिर्वर्तते इति प्रकृतिप्रत्ययार्थं वितत्य व्याचष्टे—**आप्तुमिष्यते इति** । किमर्थं क्रियया तदाप्तुमिष्यते ? निर्वर्तयितुं गुणान्तराण्यापादयितुं विषयीकर्तुं वा, अत एव निर्वर्त्यं विकार्यं प्राप्यं चेति त्रेधा तदुच्यते । नामपदे परिनिष्ठितस्यार्थस्य सत्यप्यभिधाने वस्तुवृत्तेन द्रव्यस्य निर्वर्त्यत्वं क्रियानुष्ठानद्वारेण न विरुध्यते, क्रिया चैव हि भाव्यते, स्वभावसिद्धं द्रव्यमिति तु यदुच्यते तन्नामपदानामभिधानशक्तिस्वाभाव्यसमाश्रयणेन । व्याप्यशब्दस्य संज्ञात्वेनाऽनुपात्तत्वात् कथं "व्याप्ये क्तेन" २।२।९९। इत्यादौ व्याप्यशब्देन व्यवहारः ? उच्यते—कस्यचिद्व्याप्यं प्रसिद्धं कस्यचित् कर्मेति, तत्र यद्यस्य प्रसिद्धं तस्य तदनुवादेनाप्रसिद्धं लक्षणेन विधीयते इत्याह—**प्रसिद्धस्येत्यादि** । सामान्येनोक्तस्य कर्मणो विभागमाह—**त्रेधेत्यादि** । निर्वृत्तिर्द्वेधा—केचिदसत उत्पत्तिं निर्वृत्तिमाचक्षते, सत एवाऽभिव्यक्तिमन्ये, व्याकरणस्य चार्थावस्थायामव्यापारात् शब्दव्युत्पादन एव प्रवृत्तत्वादुभयमप्याह—**तत्र यदसज्जायते** इत्यादि । सतो भवनायोगादसदेव भवतीत्यर्थः, असतः शशविषाणस्येव सतो गगनस्येव निर्वर्तनायोगात् प्रकाश एव जन्म, अत्रोदाहरणमाह—**कटं करोति, पुत्रं प्रसूत इति** । कटगतनिष्पत्तिमनुतिष्ठन् कटं निर्वर्तयतीत्यर्थः । **विकृतिमापाद्यत इति** । यल्लब्धसत्ताकं तदुत्तरमवस्थान्तरं नीयते तद्विकार्यमित्यर्थः । विकार्यते—विकारं नयत इति व्युत्पत्त्या तद्द्विविधम्, प्रकृत्युच्छेदेन यथा—**काष्ठं दहति,** न ह्यत्र काष्ठमसदेव जन्यते तस्य कारणान्तरेभ्यः प्रागेवोत्पन्नत्वात् उत्पन्नं तु केवलं भस्माख्यामवस्थामापद्यत इति । प्रकृत्युच्छेदमन्तरेणापि गुणान्तराधानेन च यथा—**काण्डं लुनाति,** अत्र काण्डशब्देन तत्कारणभूता वीरणा उच्यन्ते, वीरणशब्दप्रवृत्तिनिमित्तस्य वीरणत्वरूपस्य काण्डलक्षणविकारावस्थायामपि भावात् काण्डलक्षणविकारोत्पादनेन वीरणान्विकरोतीत्यर्थः । **क्रियाकृत इति** । क्रियया जनित इत्यर्थः । **विशेष इति** । निर्वृत्तिविकारलक्षण इत्यर्थः । न हि दर्शिगमिक्रियाभ्यां व्याप्यमानयोरादित्यग्रामयोः प्राप्तेरन्यः कश्चिद्विशेषो लभ्यते इति प्राप्यमेतत् । अवान्तरव्यापारशालिन एव कारकत्वम्, यथा—कर्तुः छिदिक्रियायां दृढमुष्टिनिपीडनादिः, न ह्यनपेक्षितदृढमुष्टिनिपीडनो ऽप्यात्मकरपञ्जरोदरे लुठन्नपि कठोरधारः कुठारः प्रतितिष्ठति अनिष्ठुरस्यापि काष्ठस्य छिदायै । तत्रास्य कर्मणः कीदृशोऽवान्तरव्यापार इत्याह—**अस्य तु त्रिविधस्यापीत्यादि** । न ह्यनिर्वर्तमानं शशविषाणमिव निर्वर्तयितुं शक्यं, तस्मान्निर्वर्त्यस्य निर्वृत्तियोग्यत्वमवान्तरव्यापारः, एवं विकृतिमनुपगच्छतो वज्रस्येव विकार्यत्वायोगात् विकार्यस्य विकृत्यभिमुखत्वमवान्तरव्यापारः, तथा आभासायोग्यस्य परमनिकृष्टपरमाण्वादेरिवाभासत्वविरहात् व्याप्यस्याभासगमनमवान्तरव्यापारः । त्रिविधस्यापि पुनरिष्टादिभेदेन त्रैविध्यमस्तीत्याह—**त्रिविधमप्येतदित्यादि** । इष्टादिस्वरूपमाचष्टे—**यदवाप्तुमित्यादि** । कटादेः पूर्वमभिसंहित-

---

[1] निर्वर्तयति न तैर्निर्व० म० म० ।

अहिं लङ्घयति, विषं भक्षयति, कण्टकान् मृद्नाति, चौरान् पश्यति; यत्र नेच्छा न च द्वेषस्तदनुभयम्—ग्रामं गच्छन् वृक्षमूलान्युपसर्पति, वृक्षच्छायां लङ्घयति । पुनस्तत्कर्म द्विविधम् प्रधानेतरप्रभेदात्, तच्च द्विकर्मकेषु धातुषु दुहिभिक्षिरुधिप्रच्छिचिञ्ब्रूञ्शास्वर्थेषु याचिजयतिप्रभृतिषु च भवति । दुह्यर्थः—गां दोग्धि पयः, गां स्रावयति पयः, गां क्षारयति पयः; भिक्ष्यर्थ(र्थः)—पौरवं गां भिक्षते, पौरवं गां याचते, चैत्रं शतं मृगयते, चैत्रं शतं प्रार्थयते; एवं गामवरुणद्धि व्रजम्, छात्रं पन्थानं पृच्छति, छात्रं वाक्यं चोदयति; वृक्षमवचिनोति फलानि, शिष्यं धर्मं ब्रूते, शिष्यं धर्ममनुशास्ति; क्रुद्धं याचते शमावस्थाम्, अविनीतं याचते विनयम्, याचिरिहानुनयार्थः, तेन भिक्षार्थाद्भेदः; गर्गान् शतं जयति, गर्गान् शतं दण्डयति, ग्रामं शाखां कर्षति, काशान् कटं करोति, अमृतमम्बुनिधिं मथ्नाति, अजां ग्रामं नयति, ग्रामं भारं हरति, उपसरजमश्वं मुष्णाति, ग्रामं भारं वहति, शतानीकं शतं गृह्णाति, तण्डुलानोदनं पचति; अत्र यदर्थं क्रियारभ्यते तत्पयःप्रभृति प्रधानं कर्म, तत्सिद्ध्यै तु यदन्यक्रियया व्याप्यते गवादि तदप्रधानम्; यदा तु पयोऽर्थी प्रवृत्तिरविवक्षिता तदा प्रधानस्यासंनिधानाद् गवादेरेव प्राधान्यम्, यथा—आश्चर्यो गवां दोह इति । तत्र **दुहादीनामप्रधाने कर्मणि कर्मजः**

---

त्वात् इष्टत्वम् । अहिप्रभृतेस्तु प्रतिकूलत्वात् अनिष्टत्वम्, तत्रानिष्टमुदाहरति—**अहिं लङ्घयती**त्यादि । अहे "अभिकुण्ठि०" उ० ६१४ । इति इभप्रत्यये नलोपे च अहिस्ततोऽम्—**अहिं**, 'लघुङ्' गतावत "प्रयोक्तृव्यापारे०" इति णिगि विवादौ—**लङ्घयति** । 'विष्लृकी' व्याप्तावत "तुदादिविषि०" उ० ५ । इति कित्यकारे—**विषम्**, भक्षण् अदनेऽत —**भक्षयति** । 'कटु' गतावतो "इकुन्०" उ० २७ । इत्यक —**कण्टकः**, मृदश् क्षोदेऽत "क्र्यादे" इति श्ना—**मृद्नाति** । **वृक्षमूलादीनि** न तावदिष्टानि पूर्वमनभिसंहितत्वात्, नाप्यनिष्टानि अप्रतिकूलत्वात् किन्तु गमनक्रियायामारभ्यमाणायामन्तरालस्थत्वेन नान्तरीयकतया उपसृप्यमाणादित्वम् । **वृक्षच्छायां लङ्घयती**त्यत्रापि ग्रामं गच्छन्निति संबन्धनीयम् । गुणमुख्यभेदात् पुनरस्य द्वैविध्यमस्तीत्याह—**पुनस्तदि**ति । तद्विविधं येषु धातुषु भवति तान् दर्शयति—**तच्चे**त्यादि । **गामि**ति । गोशब्दादमि "आ अम् शसोऽता" इत्याकार । 'दुहींक्' क्षरणेऽत —**दोग्धी**ति । 'स्रु' गतौ, 'क्षर' संचलने, आभ्यां, "प्रयोक्तृव्यापारे०" इति णिगि—**स्रावयति, क्षारयति** इति । 'भिक्षि' याच्यायां, 'डुयाचृग्' याच्यायां, 'मृगणि' अन्वेषणे, प्रपूर्वं 'अर्थणि' उपयाचने, 'रुधृपी' आवरणे, "रुधां स्वरा०" इति श्न, धत्वतृतीयत्वे, 'प्रच्छत्' ज्ञीप्सायां, "ग्रहव्रश्चभ्रस्जप्रच्छ" इति य्वृत्, 'चुदण्' सचोदने, अवपूर्वं 'चिग्' चयने, 'ब्रूक्' व्यक्तायां वाचि, अनुपूर्वं 'शासूक्' अनुशिष्टौ, एभ्य —**भिक्षते, याचते, मृगयते, प्रार्थयते, अवरुणद्धि, पृच्छति, नोदयति, अवचिनोति, ब्रूते, अनुशास्ती**ति भवन्ति । ननु भिक्षियाच्योरेकार्थत्वात् कथं द्वयोरुपादानमित्याह—**याचिरिहानुनयार्थ** इति । याचिर्हि याच्ञायामनुनये च वर्तते, भिक्षिस्तु याच्ञायामेवेत्यनयोर्भेद । नन्वेवमपि याचिरेवोपादातव्यस्तेनैव याच्ञानुनयोरभिधानात्, अस्त्येतत्, किन्त्वेव यथा याच्ञार्था धातवो गृह्यन्ते एवमनुनयार्था अपि गृह्येरन् । अत्र पुनर्भिक्षिग्रहणात् याच्ञार्थानां सर्वेषां ग्रहणम्, याचिग्रहणात्तु तस्यैवानुनयार्थस्येति । **क्रुद्धं याचते शमावस्थाम्, अविनीतं याचते विनय**मित्येतस्य प्रयोजनम् । 'जि' जये, 'दण्डण्' दण्डनिपातने, 'कृषं' विलेखने, 'डुकृंग्' करणे, 'मन्थश्' विलोडने, 'णींग्' प्रापणे, 'हृग्' हरणे, 'मुषश्' स्तेये, 'वहीं' प्रापणे, 'ग्रहीश्' उपादाने, 'डुपचिष्' पाके, एभ्य —**जयति, दण्डयति, कर्षति, करोति, मथ्नाति, नयति, हरति, मुष्णाति, वहति, गृह्णाति, पचती**ति भवन्ति । एषु प्रधानाप्रधानकर्मणी भेदेन कथयति—**अत्र यदर्थमि**त्यादि । **पयः** प्रभृतेरुपयुज्यमानत्वविशेषेणाप्यत्वात् प्राधान्य, गोप्रभृतेस्तु तदर्थमुपादानादप्राधान्यमित्यर्थ । नयत्यादीनां च प्रापणार्थत्वात् प्रापणायाश्चान्तर्भूतप्राप्तिकत्वात् तत्र प्राप्तिरजाभारव्यापारस्य गुणभूतस्य कर्म, देवदत्तव्यापारस्य प्रधानस्य अजाभारश्च कर्मीभूत प्रधान कर्म, सर्वमिद कर्तुर्व्याप्यत्वात् कर्मेति । यद्येवं गवादे परार्थत्वात् क्रियायोगाभावादव्याप्यत्वात् कर्मसंज्ञा न सिध्यति, **गां दोग्धि पय** इत्यत्राऽपादानसंज्ञा प्राप्नोति, गो पय आदत्ते इत्यर्थावसायात् । एव **क्षारयति स्रावयती**त्यत्रापि द्रष्टव्यम् । एव **पौरवं गां भिक्षत** इत्यादावपि पौरव गां जिघृक्षत इत्याद्यर्थसंप्रत्ययात् । न याचितादेवापायो भवति, याचितोऽसौ यदि ददाति ततोऽपायेन युज्यते । यतो याचितोऽपि याचनाकालेनाध्यवसति, नूनमस्मादिद वस्तु निर्गत्य मां प्राप्नोतीति । **एवं गामवरुणद्धि व्रज**मिति व्रजे गा स्थापयतीति सम्प्रत्ययाद्व्रजस्य स्थानक्रियापेक्षया आधारत्वम् । **छात्रं पन्थानं पृच्छ**तीत्यादावपि पन्थान वाक्य वाऽऽचिख्यापयिषति छात्रमित्यर्थस्तत्रापि छात्रान्मार्गोपदेशं वाक्योपदेश च जिघृक्षत इत्यर्थसम्प्रत्ययादपादानत्वम् । **वृक्षमवचिनोति फलानि**—वृक्षेण फलानि त्याजयतीत्यर्थ, अत्रापि वृक्षात् फलान्यादत्त इत्यर्थावसायादपादानत्वम् । **शिष्यं धर्मं ब्रूते** इत्यादौ तु धर्मेण वचनानुशासनकर्मणा शिष्यस्याभिप्रेयमाणत्वात् संप्रदानसंज्ञा प्राप्नोति । एव **गर्गान् शतं जयती**त्यादावपि गर्गेभ्य शत ग्रामाच्च शाखा गृह्णातीत्यर्थसंप्रत्ययादप्यपादानत्वम् । तस्मादयमान्तरं कर्तव्यम्, नैतदस्ति, अवधित्वाद्यविवक्षाया क्रियानिमित्तभावमात्रेण च व्याप्यत्वस्य विवक्षितत्वात् "कर्तुर्व्याप्य कर्म" इत्यनेन सिद्धत्वात् । आश्चर्यो गवां दोह, गां दोग्धि पय, पौरव याचत इत्यादौ तु क्षीराद्यर्थप्रवृत्तेरविवक्षायां गवादेर्दोहादिना विशेषेणाप्यत्वदर्शनात् क्रियाव्याप्तिरस्तीति गम्यत इत्याह—**यदा त्वि**त्यादि । **गवादेरेव प्राधान्यमि**ति । तत क्रियाव्याप्तिर्गम्यत इति शेष । अवधित्वादिविवक्षायां तु भवत्येव गोर्दोग्धि पय इत्यादि । ननु गां दोग्धि पय इत्यस्यायमर्थो—गौ पयस्त्यजति, देवदत्तो गवा पयस्त्याजयति, तत्र प्रयोक्तृव्यापारेणाऽऽप्यमानत्वात् गो कर्मत्व न तु दोहादिनेति । नैतदस्ति, यथा ण्यन्तेषु क्रियाविष्ट प्रयुज्यत इति प्रतीति, नैवमिह, निष्क्रियस्यापि गवादेर्दोहनादिषु विनियोगात् । इहौदन पचतीति लोके प्रयुज्यमानत्वात् शास्त्रेऽप्युदाह्रियमाणत्वात् तत्रौदन पच्येतेति द्रव्यान्तरमभिनिर्वर्त्येतेत्यर्थ स्यात्, ओदनशब्दस्य तण्डुलविकारविशेषवचनत्वात् पचेश्च विक्लित्युपसर्जनविक्लेदनवचनत्वात् निर्वृत्तस्यौदनस्य विक्लेदनान्तरकरणात् । न चेत्थ लोकप्रतीतिरस्ति, नैष दोष, तादर्थ्यात् ताच्छब्द्य भविष्यति । ओदनार्थास्तण्डुला ओदन इति गौणार्थाश्रयणेनैव सर्वलोकस्य प्रयोगदर्शनादिदमत्र न नोदनीयम्, मुख्यस्यैव त्वोदनस्य पुनर्विक्लित्तिकरणे कस्मादय प्रयोगो न भवतीति । ओदनविकारविशेषप्रतिपादनाय च गौणार्थपरिग्रह । तण्डुलान् पचतीत्युक्तेऽपि विकारान्तरमपि प्रतीयते । अथ कथ भवितव्य तण्डुलानोदन पचति ?, आहोस्वित् तण्डुलानामोदन पचतीति ?, उभयथा प्रयोगदर्शनात् । प्रकृतिविकृत्यो साक्षादुपादानात् तादर्थ्यात्ताच्छब्द्यानुपपत्त्या, विक्लेदनवचने तु पचौ तण्डुलानामोदन पचतीति प्रयोगाऽयोगात् द्रव्यान्तरनिर्वृत्तिप्रत्ययप्रसङ्गाच्च, निर्वर्तनवचने तु पचौ तण्डुलानां कर्मभावाऽघटनात् तण्डुलानोदन पचतीति प्रयोगाभावप्रसङ्गात् इति चेदुच्यते—

---

१ नोदयति पु० । २ भिक्ष्यर्था° पु० ।

प्रत्ययो भवति–गौर्दुह्यते दुग्धा दोग्धा वा पयो मैत्रेण, याच्यते पौरवः कम्बलम्, अवरुध्यते गां व्रजः, पृच्छ्यते धर्ममाचार्यः, भिक्ष्यते गां चैत्रः, अवचीयते वृक्षः फलानि, उच्यते शिष्यो धर्मम्, शिष्यते शिष्यो धर्मम्, जीयते शतं चैत्रः, गर्गाः शतं दण्ड्यन्ताम्; देवासुरैरमृतमम्बुनिधिर्ममन्थे इत्यादि। **नीवह्यिहरतिप्रभृतीनां तु प्रधाने कर्मणि**–नीयते नीता नेतव्या वा ग्राममजा, उह्यते भारो ग्रामम्, ह्रियते कुम्भो ग्रामम्, कृष्यते ग्रामं शाखेति। **गत्यर्थानामकर्मणां च णिगन्तानां प्रधान एव कर्मणि**–गमयति मैत्रं ग्रामम्, गम्यते गमितो गम्यो वा मैत्रो ग्रामम् चैत्रेण; आसयति मासं मैत्रम्, आस्यते मासं मैत्रश्चैत्रेण। अन्यस्त्वप्रधानेऽपीच्छति–गम्यते मैत्र ग्रामश्चैत्रेण, आस्यते मासो मैत्रं चैत्रेण। **बोधाहारार्थशब्दकर्मकाणां तु णिगन्तानामुभयत्र**–बोधयति शिष्यं धर्मम्, बोध्यते शिष्यो धर्मम्, बोध्यते शिष्यं धर्म इति वा; भोजयत्यतिथिमोदनम्, भोज्यतेऽतिथिरोदनम्, भोज्यतेऽतिथिमोदन इति वा; पाठयति शिष्यं ग्रन्थम्, पाठ्यते शिष्यो ग्रन्थम्, पाठ्यते शिष्य ग्रन्थ इति वा, सर्वत्र चोक्ते कर्मणि द्वितीया न भवतीति वक्ष्यते। कर्तुरिति किम्? माषेष्वश्वं बध्नाति, अश्वेन कर्मणा भक्षणक्रियया स्पर्शनक्रियया वा माषाणां व्याप्यानां कर्मणां कर्मसंज्ञा मा भूत्। वीति किम्? पयसा ओदनं भुङ्क्ते–अत्र करणस्य मा भूत्। कर्मव्याप्यप्रदेशाः–"कर्मणोऽण्" ॥ ५ । १ । ७२ ॥, "व्याप्याच्चेवात्" ॥ ५ । ४ । ७१ ॥ इत्यादयः ॥ ३ ॥

---

चमयथाऽपि भवितव्यम्, इद तावत् तण्डुलानोदन पचतीति, द्व्यर्थं पचिस्तण्डुलान् पचन्नोदन निर्वर्तयति। अत्र हि विक्लेदनोपसर्जने निर्वर्तने पचिर्वर्तते, तण्डुलान् विक्लेदयन्नोदनं निर्वर्तयति, तत्रोपसर्जनविक्लेदनक्रियापेक्षं तण्डुलानां कर्मत्व प्रधानभूतनिर्वर्तनापेक्षं त्वोदनस्य। तण्डुलानामोदनं पचतीत्यत्रापि द्व्यर्थं पचि, विकारयोगे च षष्ठी, तण्डुलविकारमोदन निर्वर्तयतीति, अत्र तण्डुलानां संबन्धिनं विकारविशेषमोदनं विक्लित्त्या निर्वर्तयतीत्यर्थ। सा च विक्लित्ति सामर्थ्यात् तण्डुलानामेव विज्ञायत इत्युभयमपि समञ्जसम्। अथ द्विकर्मकेषु दुहादिधातुषु कर्मणि तिवादय उत्पद्यमाना प्राधान्याप्राधान्याभ्यां भिन्नकक्ष्यमनेकं कर्म युगपदभिधातुमसमर्थाः किं प्रधानकर्मण्युत्पद्यन्ते अथ गुणकर्मणीति? तत्र प्रधानाप्रधानसन्निधौ प्रधानाभिधानस्यैव न्याय्यत्वमिति केचित्। तदयुक्त, अप्रधानकर्मण्येव त्यादिकृत्यक्तखलर्था इति गौर्दुह्यते दुग्धा दोग्धा वा पय इत्याह–तत्र **दुहादीनामित्यादि**। अयमर्थ –यत. पयोऽर्थी प्रथम गवि प्रवर्तते ततोऽन्तरङ्गत्वात् दुह्यादिषु गुणकर्मणि तिवादयो भवन्ति। उक्तं च–"गुणकर्मणि त्यादिविधि पूर्वं गुणकर्मणा भवति योग। मुख्यं कर्म प्रेप्सुर्यस्माद्गव्येव यतते प्राक्" ॥१॥ "तस्माच्छुद्धस्य दुहेर्भवति गवा पूर्वमेव संबन्ध। गोदुहिना पयसस्तु प्राक् तस्मात्त्यादयस्त्वस्मिन्" ॥२॥ इति। **गौर्दुह्यते**—दुहे "तत्साप्यानाप्या०" इति कर्मण्यात्मनेपदेन "क्यशिति" इति क्यसहितेन गुणकर्मणोऽभिहितत्वात् प्रथमा। **देवासुरैरित्यादि**। "येनापविद्धसलिल स्फुटनागसद्मा, देवासुरैरमृतमम्बुनिधिर्ममन्थे। *व्यावर्तनैरहिपतेरयमाहिताङ्कः ख व्यालिखन्निव विभाति स मन्दराद्रि* " ॥ ३० ॥ किराता० प्रथमसर्गे। **नीवह्यिहरतिप्रभृतीनामिति। तु** शब्द —पुनरर्थे, **प्रधाने कर्मणि**—कर्मज प्रत्ययो भवतीति संबन्ध, अजादे प्राधान्यात् नेतुश्च तत्रैव पूर्वं क्रियाप्रवर्तनादन्तरङ्गत्वाच्च तत्रैव प्रधाने कर्मज इति। केचिदाहु –न अमी नयत्यादयो द्विकर्मका, अन्यकर्मत्वात्, तथाहि–अजां नयति ग्रामम्–अजां गृहीत्वा ग्रामं यातीति ग्रन्थार्थ। नयतिस्तु प्राप्तिमात्रवाची। गम्यमानक्रियापेक्षयाऽपि कर्मत्वं दृश्यते, यथा–प्रविश पिण्डीमिति, भक्षणक्रियापेक्षयेति। एवञ्चायुक्तं–अजा नीयते ग्राममित्यत्र कर्मण्युत्पद्यमानेनाऽऽत्मनेपदेन अजाकर्मणोऽभिधानं न प्राप्नोति, यतो गृहातेरजा कर्म न नयतेरिति। तस्मादन्यकर्मत्वमजाया नैष्टव्यमिति। **गत्यर्थानामिति। प्रधान एव कर्मणि**—कर्तृकर्मणि, कर्मज प्रत्ययो भवतीति संबन्ध। प्राधान्यं च तस्य "गतिबोधाहारार्थ०" इति कर्मसंज्ञाया विधीयमानत्वेन कृत्रिमत्वात् कर्तु प्रथमप्रवृत्तिविषयत्वाद्वा। प्रधान एवेत्येवकारस्तु 'अन्यस्त्वप्रधानेऽपीच्छति' मतान्तरव्यवच्छेदार्थस्तदेव मतान्तरं दर्शयति—**अन्यस्त्वित्यादि**। अप्राधान्य चात्र ग्रामादे प्रधानार्थया क्रियया व्याप्यत्वात्। **बोधाहारार्थशब्दकर्मकाणामिति। उभयत्र**–प्रधानेऽप्रधाने च कर्मज प्रत्ययो भवतीत्यर्थ। अयमत्राशय —**शिष्यं धर्मं ब्रूते, बोधयति शिष्यं धर्म**मित्यादावनियतो गुणप्रधानभाव, तथाहि–वाक्यस्य धर्मप्रतिपादनपरत्वे धर्मस्य प्राधान्य शिष्यादेर्गुणभाव, शिष्यादिसंस्कारपरायां तु प्रवृत्तौ शिष्यादे प्राधान्यं धर्मस्य गुणभाव। तथा अर्थस्य शब्देन प्रतिपाद्यत्वात् शब्दस्य प्राधान्य प्रमाणयन्तोऽभिधाव्यापारेण(शाब्देन)प्रयोक्तृव्यापारस्य प्राधान्यात् प्रयोज्यस्यैव धर्मेण प्राधान्यम्, गुणभूतप्रयोज्यव्यापारकर्मणस्तु गुणभाव। शब्दस्यार्थपरत्वादर्थस्यैव प्राधान्य समर्थयन्त आर्थेन तु न्यायेन प्रयोज्यव्यापारस्य प्राधान्य तदर्थत्वात् प्रयोजकव्यापारस्य, तत्प्राधान्याच्च तत्कर्मणोऽपि प्राधान्यमिति वदन्ते आचार्या, स्मृतिरियं न स्वमतिपरिकल्पनाऽत्र ज्यायसीत्युभयत्र पर्यायेण सिद्ध कर्मजः प्रत्यय इति। कर्मजप्रत्ययेनैव कर्मणोऽभिहितत्वात् सर्वत्र कर्मणि द्वितीया न भवतीत्याह—**सर्वत्र चेत्यादि**। अयमर्थ –यत्र तिवादिभि कर्मादय उच्यन्ते तत्र गवादिशब्द स्वार्थोऽव्यतिरिक्तेऽर्थमात्र एवेति प्रथमैव ततो युक्ता, न द्वितीयादय, कर्मादौ वृत्त्यभावादिति। वस्त्वन्तरं विशेषेणाऽऽप्तु कर्तैवेच्छति नान्यत्तदधीन करणादिकमिति मन्यमान पृच्छति—**कर्तुरिति किमिति**। कर्मणाऽपि नियमेन यदाप्तुमिष्यते तस्यापि कर्मसंज्ञा स्यादिति मन्यमान प्रत्याचष्टे—**माषेष्वित्यादि**। अत्र बध्नातिक्रिययाऽश्व कर्ता विशेषेण यथा आप्तुमिष्यते तथा भक्षणादिक्रियया प्रतीयमानया अश्वेन माष इत्यसति कर्तृग्रहणे कर्मणाऽश्वेन व्याप्यमानानामपि माषाणामधिकरणसंज्ञां बाधित्वा कर्मसंज्ञा स्यात्, कर्तृग्रहणात्तु न भवतीत्यर्थ। नन्वेवमपि कर्तुर्गुणत्वात् गुणे च संख्याया विवक्षणात् द्वाभ्यां कर्तृभ्यां बहुभिर्वा यद्विशेषेणाप्तुमिष्यते तस्य कर्मसंज्ञा न स्यात्, नैष दोष, कारकान्तरव्याप्यस्य कर्मसंज्ञाप्रसङ्गनिवारणपरत्वात् शास्त्रस्य च लक्ष्यसंस्कारकत्वात् कर्तुर्गुणस्यापि संख्या न विवक्ष्यते। संख्याया अविवक्षणाच्च प्रधानस्यानियमेन विस्फार, यथेह कट, कटौ, कटान् करोतीति कर्मसंज्ञा भवति, तथेहापि भवति कट कुरुत कट कुर्वन्तीति। व्याप्य च कर्मसंज्ञया संभीयमाणत्वात् प्रधानमिति तस्य संख्या न विवक्ष्यते, प्रधानसंख्या न विवक्ष्यते इत्येतस्य चार्थस्य ज्ञापकमेकशेषसूत्रे एकग्रहणम्। **वीति किमिति**। कर्तु साध्यत्वात् क्रिया पूर्वमाप्तुमिष्टा, कर्म तु तत्फलत्वेन, ततश्च क्रियाया आप्तुमिष्टया विशेषेण फलम्। **पयसा ओदनं भुङ्क्ते** इत्यत्र तु पयस संस्कारकत्वादोदनस्य संस्कार्यस्यैव विशेषेणाप्तुमिष्टत्वमिति तस्यैव कर्मत्वं न पयस करणस्य। नन्वेव तर्हि यदा कश्चित् कञ्चिदामन्त्रयते सिद्ध भुज्यतामिति, स आह–प्रभूत भुक्तवानसि, आमन्त्र्यमाण आह–दधि खलु भविष्यति? आमन्त्र्यमाण आह–दध्ना खलु भुञ्जीय, पयसा खलु भुञ्जीय। अत्र चान्वयव्यतिरेकाभ्यां दधिपयसोरेव विशेषेणाऽऽप्यत्वात् कर्मसंज्ञा प्राप्नोति नत्वोद-

---

१ °कर्मकाणां° पु०। २ × × × पु०।

## वाऽकर्मणामणिक्कर्ता णौ ॥ २ । २ । ४ ॥

अविवक्षितकर्माणोऽकर्माण उत्तरत्र नित्यग्रहणात्, तेषामणिगवस्थायां यः कर्ता स णौ णिगि सति कर्मसंज्ञो वा भवति । पचति चैत्रः, पाचयति चैत्रं चैत्रेण वा; लिखति मैत्रः, लेखयति मैत्रं मैत्रेण वा । गत्यर्थादीनां तु परत्वात् नित्य एव विधिः—गच्छति चैत्रः, गमयति चैत्रम् इत्यादि; किं करोतीति व्यापारमात्रविवक्षायां चाऽविवक्षितकर्माणो भवन्ति ॥४॥

## गतिबोधाऽऽहारार्थशब्दकर्मनित्याऽकर्मणामनीखाद्यदिह्वाशब्दाय-क्रन्दाम् ॥ २ । २ । ५ ॥

गतिर्देशान्तरप्राप्तिः, बोधो ज्ञानमात्रम् तद्विशेषश्च, शब्दः कर्म क्रिया व्याप्यं च येषां ते शब्दकर्माणः, नित्याऽकर्माणः सर्वथाऽविद्यमानव्याप्याः; गत्यर्थबोधार्थाऽऽहारार्थानां शब्दकर्मणां नित्याऽकर्मणां च धातूनां नीखाद्यदिह्वयति[1]शब्दायतिक्रन्दवर्जितानामणिगवस्थायां यः कर्ता स णौ सति कर्मसंज्ञो भवति । गत्यर्थः—गच्छति मैत्रो ग्रामम्, गमयति मैत्रं ग्रामम्; याति मैत्रो ग्रामम्, यापयति मैत्रं ग्रामम्, देशान्तरप्राप्तेरन्यत्र न भवति—स्त्रियं गमयति मैत्रेण चैत्रः, भजनार्थो-

---

नस्येति चेत्, उच्यते—तस्याप्योदन एवाप्तुमिष्ट, दधिपयसोस्तु संस्कारकत्वात् करणभाव । गुणेषु ह्युपकारकेषु केवलेषु नादर, किं तर्हि ? तत्संस्कृते ओदनादौ । तद्यथा—भुञ्जीयाहमोदन यदि मृदु विशद स्यादिति । यद्यत्र मार्दवमात्रे आदर स्यात् पङ्कमपि भक्षयेत्, वैशद्यमात्राऽऽदरे तु सिकता अपि । एवमिहापि दध्यादिगुणमोदन भुञ्जीयेत्यदोष ॥ ३ ॥

**वाऽकर्मणामणिक्कर्ता णौ** । कर्म इत्यनुवर्तते, अकर्मणां अणिक्कर्ता णौ कर्म वेत्यन्वय । **अणिक्कर्तेति** । न विद्यते णिग् येषां ते अणिगस्तेषा कर्तेति विग्रह । न स्वकर्माण सकर्माणोऽप्यविवक्षितकर्माण सर्वथाऽविद्यमानकर्माणश्चोच्यन्ते, तत्केषामिह ग्रहणमित्याह—**अविवक्षितकर्माण** इत्यादि । अत्रोपपत्ति —**उत्तरत्र नित्यग्रहणादिति** । अयमर्थो ये हि सर्वथाऽविद्यमानव्याप्यास्तेषामणिक्कर्तु "गतिबोधाऽऽहारार्थ०" इति सूत्रेणापवादतया नित्य कर्मसज्ञाविधानात् इहाऽविवक्षितकर्माण एवाऽकर्माणो गृह्यन्त इति । तानेवोदाहरति—**पचति चैत्र** इत्यादि । नन्वेव तर्हि गत्यर्थादीनामप्यविवक्षितकर्मत्वेन विकल्प प्राप्नोति, नित्यश्च विधिरिष्यत इत्याह—**गत्यर्थादीनामित्यादि** । पाचयति चैत्र चैत्रेण वा गमयति ग्राममित्यादौ द्वयो सावकाशत्वात् गमयति चैत्रमित्यादौ त्वविवक्षितकर्मत्वेन युगपदुभयप्राप्तौ परत्वात् "गतिबोधाऽऽहारार्थ०" इति नित्य एव विधि । नन्वोदन पचतीत्यादिप्रयोगदर्शनात् कथ पचादीनामविवक्षितकर्मत्वमित्याह—**किं करोतीत्यादि** । अयमर्थ —शब्दप्रयोगस्य परार्थत्वात् परेण च किं करोतीति व्यापारमात्रस्य जिज्ञासितत्वात्, अन्यथा उन्मत्तत्वप्रसङ्गात् प्रतिपादयितुस्तावन्मात्रस्यैव विवक्षितत्वात् औदासीन्यमात्रनिवृत्तिपरतया प्रयोगात् शब्देन कर्मणोऽसमर्पणादविवक्षितकर्मत्वम् । यदाह—"धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसग्रहात् । प्रसिद्धेरविवक्षात कर्मणोऽकर्मिका क्रिया" ॥ ४ ॥

**गतिबोधाऽऽहारार्थशब्दकर्मनित्याऽकर्मणामनीखाद्यदिह्वाशब्दायक्रन्दाम्** । अत्र अणिक्कर्ता णौ कर्म इत्यनुवर्तते । अनीखाद्यदिह्वाशब्दायक्रन्दा गतिबोधाऽऽहारार्थशब्दकर्मनित्याऽकर्मणां अणिक्कर्ता णौ कर्म इत्यन्वय । **गतिः**—गमन, **बोधः**—बोधन, **आहारः**—आहरण, तेऽर्था येषामिति बहुव्रीहौ—**गतिबोधाऽऽहारार्था** इति । अत्र गत्याद्यर्थो गत्यादिशब्देनोच्यत इति अर्थशब्दस्य प्रत्येकमभिसबन्ध । शब्द कर्म-क्रिया, व्याप्य च येषामिति बहुव्रीहौ—**शब्दकर्माण** इति । न विद्यते कर्म येषा तेऽकर्माण, नित्य अकर्माण —**नित्याऽकर्माण** इति । विस्पष्टपटुवत् समास, ततो गतिबोधाऽऽहारार्थाश्च शब्दकर्माणश्च नित्याकर्माणश्च इति द्वन्द्वात् षष्ठीबहुवचनम्—**गतिबोधाऽऽहारार्थशब्दकर्मनित्याऽकर्मणामिति** । तस्यैव **अनीखाद्यदीत्यादिविशेषणम्**, तत्रापि द्वन्द्वगर्भनञ्तत्पुरुष । आहारस्य सुप्रसिद्धत्वात् गतिबोधयो स्वरूपमाह—**गतिरित्यादि** । **शब्द. कर्म-क्रिया व्याप्यं चेति** । नन्वेकेन प्रयत्नेन उभयाग्रहणात् वाक्यभेदप्रसङ्गात् कथमुभयपरिग्रह ? उच्यते—ह्वयत्यादीनां त्रयाणा शब्दक्रियत्वेन प्राप्त्यभावात् प्रतिषेधवैयर्थ्यप्रसङ्गात् कर्मशब्दस्य क्रियावचनता । ह्वयत्यादयो हि धातव साध्यमानावस्थ क्रियारूप शब्दमभिदधतीति शब्दक्रियत्वादतिप्रसङ्गे सति प्रतिषेधो विधीयते । शब्दायतेश्च शब्द करोतीति "शब्दादे कृतौ वा" ३।४।३५। इति क्यङि शब्दक्रियालक्षणस्य कर्मणोऽन्तर्भावात् कर्मान्तरायोगाच्चाकर्मकत्वादपि सज्ञाप्रसङ्ग इति । एव च जल्पतिविलपत्याभाषतीना जल्पयति देवदत्तमित्यादौ शब्दनक्रियावृत्तीना क्रियाग्रहणे सिध्यति, देवदत्त जल्पतीत्यादौ शब्दकर्मत्वाभावात् । एवं च कर्मग्रहणाऽऽनर्थक्य, "गतिबोधाऽऽहारशब्दार्थ०" इति कृते सिध्यतीति कर्मग्रहण साधनकर्मपरिग्रहार्थं, तेन शृणोति विजानाति उपलभते इत्येषामपि सिध्यति । शृणोत्यादयो हि उपलब्धिरूपेऽर्थे वर्तमाना शब्दक्रिया न भवन्ति, शब्दसाधनकर्माणस्तु भवन्ति, तद्विषयत्वेनैव प्रयोगात् । एव जल्पत्यादीनामपि श्लोकादिद्रव्यविशेषशब्दकर्मणा साधनकर्मपरिग्रहादेव सिद्धि । न चैषां बुद्ध्यर्थता, बोधशब्देन बोधसामान्याऽऽश्रयणपक्षे वेत्त्यादयो हि ज्ञानमात्रवचना, बुद्ध्यर्थावपि जानाति उपलभते इत्येतौ यद्यप्युपलब्धिमात्रवचनौ तथापि प्रयोजकव्यापारविवक्षायां प्रकरणादिवशात् यदा शब्दविषयामेवोपलब्धिं प्रत्याययतस्तदा साधनकर्मवचनात् सिध्यति न त्वन्यथा इत्युभयार्थोऽत्र कर्मशब्द । न च वाक्यभेद, श्वेतो धावतीतिवत् । स्थविरोत्पलौ तु साधनवचनमेव कर्म व्याचक्षाते, यदाहोत्पल —यद्येव जल्पिविलप्याभाषीणा शब्दव्यतिरिक्तकर्मणां अणिक्कर्ता णौ कर्मसज्ञो न स्यात्, पुत्र जल्पति देवदत्त, जल्पयति पुत्र देवदत्तम् । चौर्यं विलपति देवदत्त, चौर्यं विलापयति देवदत्तम् । आभाषतेऽपराध देवदत्त, आभाषयति देवदत्तमपराधम्, नैष दोष, जल्पनविलपनाभाषणाङ्गे बोधने जल्पिप्रभृतयो वर्तन्त इति । **नित्याऽकर्मणामि**त्यत्र तु साधनवचन एव कर्मशब्द, द्वितीयार्थग्रहणे प्रमाणाभावात् साधनवचनस्यैव पूर्वं बुद्धावुपारोहात् । किं च क्रियार्थप्रतिषेधे धर्मिण एवाभावात्, न हि क्रियार्थाभावे धातो सम्भवोऽस्तीति । **गमयतीत्यादि** । 'गम्लृ' गतौ, अत "प्रयोक्तृव्यापारे०" इति णिग् । 'याक्' प्रापणे, अतो णिगि "अर्त्तिरीव्लीह्री०" ४।२।२१। इति पुरन्ते—**यापयति** इति । **देशान्तरप्राप्तेरिति** । अत एव गतिर्देशान्तरप्राप्तिरिति पूर्वमेतत्प्रसङ्गो निवर्तित, तथाहि—गच्छतीत्युक्ते सयोगार्थ प्रतीयते, प्राप्त्यन्तरे तु प्राप्तिसामान्यादुपचारेण वृत्तिरतो 'गौणमुख्ययोर्मुख्ये सप्रत्यय' इति

---

[1] °शब्दाययतिक्रन्दिव० पु० ।

ऽत्र गमिः । सामान्यबोधार्थः—बुध्यते शिष्यो धर्मम्, बोधयति गुरुः शिष्यं धर्मम्; जानाति शिष्यो धर्मम्, ज्ञापयति गुरुः शिष्य धर्मम्; एवमुपलम्भयति, अवगमयतीत्यादि । विशेषबोधार्थः—पश्यति रूपतर्कः कार्षापणम्, दर्शयति रूपतर्कं कार्षापणं वणिक्; एव घ्रापयति मैत्रमुत्पलम्, स्पर्शयति मैत्रं वस्त्रम्, श्रावयति शिष्यं धर्मम्, स्मारयति शिष्य धर्मम्, ध्यापयति शिष्य शास्त्रम्; अन्ये तु बोधविशेषार्थस्य दृशेरेवेच्छन्ति नाऽन्येषाम्, तन्मते—जिघ्रत्युत्पल चैत्रः, घ्रापयत्युत्पलं चैत्रेण मैत्रः; एव स्पर्शयति चैत्रेण वस्त्रम्, श्रावयति धर्मं शिष्येणेत्यादौ प्रयोज्यकर्तरि तृतीयैव भवति । आहारार्थः—भुङ्क्ते बटुरोदनम्, भोजयति बटुमोदनम्; अश्नाति बटुर्भक्तम्, आशयति बटु भक्तम् । शब्दक्रिय—जल्पति मैत्रो द्रव्यम्, जल्पयति मैत्रं द्रव्यम्; एवमालापयति मित्र मैत्रम्, संभाषयति मैत्रं भार्याम्; शब्दव्याप्य—शृणोति शब्दं मैत्रः, श्रावयति शब्द मैत्रम्; अधीते बटुर्वेदम्, अध्यापयति बटु वेदम्; एवं जल्पयति मित्र वाक्यम्, विज्ञापयति गुरुं वाक्यम्, उपलम्भयति शिष्य विद्याम् । नित्याऽकर्मकः—आस्ते मैत्रः, आसयति मैत्र चैत्रः; शेते मैत्रः, शाययति मैत्र चैत्रः । नित्यग्रहणं पूर्वत्राऽविवक्षितकर्मकपरिग्रहार्थम्, अन्यथा विभागो न ज्ञायेत । कालाऽध्वभावदेशैश्च सर्वेऽपि धातव सकर्मका एवेत्यन्यकर्माऽपेक्षया नित्याऽकर्मका वेदितव्याः । गत्यर्थादीनामिति किम्? पचत्योदनं चैत्रः, पाचयत्योदन चैत्रेण मैत्रः । अणिक्कर्तेत्येव? गमयति चैत्रो मैत्रम्, तमपर प्रयुङ्क्ते—गमयति चैत्रेण मैत्र जिनदत्तः । नयत्यादिवर्जनं किम्? नयतेः प्रापणोपसर्जनप्राप्त्यर्थत्वेन गत्यर्थत्वात्, खाद्यद्योराहारार्थत्वात्, ह्वाशब्दायक्रन्दां च शब्दकर्मकत्वात् कर्मत्वे प्राप्ते प्रतिषेधार्थम्;—नयति भार चैत्रः, नाययति भार चैत्रेण, खादयत्यपूप मैत्रेण, आदयति ओदन मैत्रेण, ह्वाययति चैत्र मैत्रेण, शब्दाययति चैत्र मैत्रेण, क्रन्दयति मित्र मैत्रेण; कर्मसञ्ज्ञाप्रतिषेधात् स्वव्यापाराऽऽश्रय कर्तृत्वमेव । प्रेषणाऽध्येषणादिना प्रयोजकव्यापारेण णिगन्तवाच्येनाऽणिक्कर्तुर्व्याप्यत्वात् कर्मसञ्ज्ञा सिद्धैव, नियमार्थं तु वचनम्, प्रयोजकव्यापारेण व्याप्यमानस्य गत्यर्थादिसंबन्धिन एव प्रयोज्यस्य कर्तुः कर्मसंज्ञा भवति, तेनाऽन्यधातुसंबन्धिनः कर्तृत्वमेव भवति ॥ ५ ॥

---

बोऽप्या न गृह्यते । स्त्रियं गमयति मैत्रेणेति । अत्र भजनलक्षणस्त्रीप्राप्तौ न भवति । बोधयतीत्यादि । 'बुधिंच्' ज्ञाने, अतो णिगि नाम्युपान्त्यगुण, 'ज्ञाश्' अवबोधने, उपपूर्वो 'डुलभिष्' प्राप्तौ, अवपूर्वो 'गम्लृ' गतौ इत्येभ्यो भवति, अत्र बुध्यादय चक्षुरादीन्द्रियसाधनज्ञानविशेषस्याप्रतिपादनात् सामान्यबोध एव वर्तन्त इत्यर्थ । 'दृश्' प्रेक्षणे, धातो—दर्शयतीति । रूप तर्कयतीति "कर्मणोऽण्" इत्यणि—रूपतर्क इति । रजतकार्षापणादिपरीक्षक इत्यर्थ । कर्षेण आप्यत इति "भुजिपत्यादिभ्य ०" इति कर्मण्यनटि प्रज्ञादित्वात् स्वार्थेऽणि—कार्षापण इति । एव 'घ्रां' गन्धोपादाने, 'स्पृशत्' संस्पर्शे, 'श्रुट्' श्रवणे, 'स्मृ' चिन्तायाम्, 'ध्यै' चिन्तायाम्, एभ्य पूर्ववत् णिगादौ—घ्रापयतीत्यादयः । अत्र दृश्यादीनां चक्षुरादिसाधनजनितज्ञानविशेषवृत्तीनां विशेषबोधार्थत्वेत्यर्थ । अन्ये त्विति । आचार्यपाणिनितन्त्रानुसारिण, ते हि गत्यादिसूत्रे दृशिग्रहणमुपादाय बोधार्थत्वेनैव सिद्धे दृशिग्रहणात् दृशेरेव विशेषबोधार्थस्य परिग्रहो नान्येषामित्याचक्षते, तन्मते प्रयोज्ये कर्तृकर्मसंज्ञाया अभावात् तृतीयैव भवति । आहारार्थ इति । आहारो—निगरण, सोऽर्थोऽस्येत्यर्थ । तदुदाहरति—भोजयतीत्यादि । 'भुजप्' अभ्यवहारार्थ, 'अशश्' भोजने, आभ्यां पूर्ववण्णिगादि । कर्मग्रहणस्य क्रियाव्याप्ययोर्वाचकत्वात् शब्दक्रियान् शब्दव्याप्यांश्च क्रमेणोदाहरति—जल्पयति मैत्रमित्यादि । उपलम्भयतीति । "लभ" ४।४।१०३। इति नाऽऽगम । अत्र शृणोत्यादिस्तावच्छब्दविषयामेवोपलब्धिमाचष्ट इति शब्दकर्मक, जानातिरुपलभिश्च यद्यपि सामान्येन सर्वविषयामुपलब्धिमाहतुस्तथापि यदा सोपलब्धि कुतश्चिच्छब्दविषया भवति तदा शब्दकर्मकावितिं प्रयोज्यस्य कर्तु कर्मता । वाक्यं, विद्यामिति च शब्दविषयो दर्श्यते । आसयतीत्यादि । अथ नित्यग्रहणमन्तरेणापि अकर्मकग्रहणेनैव कर्मसत्तामात्रप्रतिषेधेनैवेष्टार्थो लभ्यत इति किमर्थं नित्यग्रहणमित्याह—नित्यग्रहणमित्यादि । असति नित्यग्रहणे उभयत्राऽकर्मग्रहणे विषयभेदकल्पनायां क कि परिगृह्यत इति विषयविभागो न ज्ञायते, सति तु नित्यग्रहणे इह अत्यन्ताऽसत्कर्मपरिग्रह पूर्वत्राऽविवक्षितकर्मपरिग्रह इति विज्ञायत इत्यर्थ । ननु च कालाध्वभावदेशा आधारा अकर्मणामपि कर्म भवन्ति, गोदोहमास्ते, मासमास्ते इत्यादौ, तत्र नित्याऽकर्मगामसंभव एवेत्याह—कालाऽध्वभावदेशैरित्यादि । वचनप्रामाण्यात् कालादिभ्योऽन्येन कर्मणा नित्याऽकर्मका वेदितव्या, येषा कालादिभ्योऽन्यत् कर्म वस्तुतो नैवास्तीति तेऽकर्माण । अथैव किम ज्ञायते कालादिभ्योऽन्येन कर्मणा सकर्मका अपि येषां कालादिकर्म नैवाऽस्ति ते नित्याऽकर्माण, यथा कालादिभि सकर्मका अपि अन्यकर्मापेक्षया अकर्मका इति । नैतदस्ति, तै सर्वेषां सकर्मकत्वात् । न हि ते धातव सन्ति येषां कालादय कर्म न भवति, सकर्मकाणामप्यविवक्षितकर्मकत्वोपपत्ते । पाचयत्योदनं चैत्रेण मैत्र इति । 'डुपचींष्' पाके, अतो णिग्, अकारस्य वृद्धि, गत्यार्थानां पचिरन्तर्गतो न भवतीत्यस्य प्रयोज्ये कर्तरि तृतीयैव न द्वितीया, गत्याद्यर्थवचनेन निवर्तितत्वात् । गमयति चैत्रेण मैत्रं जिनदत्त इति । अत्र गमयतेश्चैत्र प्रयोजक कर्ता, तमपर प्रयुङ्क्ते इति तमित्यनेन चैत्रस्य कर्तुरभिसंबन्ध, अपर इति कश्चिज्जिनदत्तादि । अत्र च अणिक्कर्ता इत्यनुवर्तनात् णिक्कर्तु कर्मसंज्ञा न भवतीति । नयत्यादिवर्जनं किमिति । प्रतिषेधस्य प्राप्तिपूर्वकत्वात् नयत्यादेश्च आपणार्थत्वेनाऽगत्याद्यर्थत्वात् प्राप्त्यभावात् किं प्रतिषेधेनेति प्रश्नार्थ । उत्तरयति—नयतेरित्यादि । आपणा—प्राप्तौ प्रयुक्ति, तत्र गुणीभूता प्राप्तिरपि प्रतीयते, सा च गतिरिति नयतेर्गत्यर्थतेति । ननु नयत्यादीना णावणिक्कर्तु कर्मसंज्ञाप्रतिषेधात् तद्बाधिता कर्तृसञ्ज्ञाऽपि न प्राप्नोतीत्याह—कर्मसंज्ञाप्रतिषेधादित्यादि । अयमर्थ —कर्मसंज्ञा हि कर्तृत्वस्य प्रतिबन्धिका, तन्निवृत्तौ च प्रतिबन्धार्हस्य प्रतिबन्धकमन्त्रादिनिवृत्तौ वह्नेर्दाहकत्वमिव कर्तृत्व व्यवतिष्ठत एवेत्यर्थ । ननु कर्मसंज्ञाधिकारे गत्यादिसूत्र, तत्र च प्रयोजकव्यापारेण प्रेषणाध्येषणादिलक्षणेन प्रयोज्यस्य कर्तुर्व्याप्यमानत्वात् कर्मसंज्ञा सिध्यत्येव, न च तस्य स्वतन्त्रत्वात् कर्तृसञ्ज्ञाऽपि प्राप्नोतीति वाच्य, प्रत्ययार्थप्राधान्यात् तत्प्रयुक्तया कर्मसञ्ज्ञयैव प्रवर्तितव्य, गुणप्रधानसंनिधौ च प्रधानस्य प्रयोजकत्वे सुभवति पृथग्गुण तद्विरुद्ध स्वकार्यं न प्रयुङ्क्ते इति किमर्थमेतदिति? उच्यते—प्रयोज्यस्य कर्मसञ्ज्ञायां सिद्धायां गत्याद्यर्थानामेव णिगन्तानामणिक्कर्तु कर्मसञ्ज्ञा नान्येषामिति नियमार्थमेतदित्याह—प्रेषणाध्येषणादिनेत्यादि । नियमफल दर्शयति—तेनेत्यादि । नन्वेवमपि गत्याद्यर्थानां अणिक्कर्तुर्यथा णौ कर्मसंज्ञा तथा अणिक्कर्तुरप्यन्यस्मिन् णौ सा प्रसज्यते, यथा—गमयति चैत्रो मैत्र त जिनदत्त

---

१ अध्या° म० भ० । २ °कर्म×परि° पु० । ३ ××× पु० ।

## भक्षेर्हिंसायाम् ॥ २ । २ । ६ ॥

भक्षेः स्वार्थिकण्यन्तस्य हिंसार्थस्याणिक्कर्ता णौ कर्मसंज्ञो भवति । भक्षयन्ति सस्यं बलीवर्दाः, तान् प्रयुङ्क्ते–भक्षयति सस्यं बलीवर्दान् मैत्रः । उक्ते च कर्मणि–भक्ष्यन्ते यवं बलीवर्दाः, भक्ष्यते यवो बलीवर्दान् मैत्रेणेति वा । वनस्पतीनां प्रसवप्ररोहवृद्ध्यादिमत्त्वेन चेतनत्वात् तद्विशेषस्य सस्यस्य प्राणवियोगस्तद्भक्षणात् स्वाम्युपघातो वाऽत्र हिंसेति भक्षेर्हिंसार्थता । हिंसायामिति किम्? भक्षयति पिण्डीं शिशुः, तं प्रयुङ्क्ते–भक्षयति पिण्डीं शिशुना; भक्षयति राजद्रव्यं नियुक्तेन, भक्षयति पुत्रान् गार्ग्या; भक्षयतिरत्राऽऽक्रोशे । आहारार्थत्वात् प्राप्ते नियमार्थं वचनम् ॥ ६ ॥

## वहेः प्रवेयः ॥ २ । २ । ७ ॥

प्रवीयते प्राजतिक्रियया व्याप्यते यः स प्रवेयः, वहेरणिक्कर्ता प्रवेयो णौ कर्मसंज्ञो भवति । वहन्ति बलीवर्दा भारम्, तान् प्रयुङ्क्ते–नियोक्ता[1] वाहयति भारं बलीवर्दान्; वाहयिता भारस्य बलीवर्दान्, वाहयिता बलीवर्दानां भारम्; वाह्यन्ते भारं बलीवर्दाः । प्रवेय इति किम्? वाहयति भारं मैत्रेण, नाऽत्र मैत्रो बलीवर्दादिवत् प्रवेयः । प्राप्त्यर्थस्य प्रापणार्थस्य च वहेर्गत्यर्थत्वात् अकर्मकस्य च नित्याऽकर्मकत्वात् पूर्वेण सिद्धे नियमार्थमविवक्षितकर्मकस्य तु पक्षे विध्यर्थं चेदम् ॥ ७ ॥

## हृक्रोर्नवा ॥ २ । २ । ८ ॥

हरतेः करोतेश्चाणिक्कर्ता णौ कर्मसंज्ञो वा भवति, प्राप्ते चाऽप्राप्ते चाऽयं विकल्पः । प्राप्ते–विहरति देशमाचार्यः,

---

प्रयुङ्क्त इति, नैवम्, एतेषामणिक्कर्तैव कर्मसंज्ञो नान्य इत्यपि नियम प्रत्येतव्य इति । न चैकेन लक्षणेन नियमद्वयस्य कर्तुमशक्यत्वादस्मिंश्च सति प्राक्तनस्यासत्त्वात् कथ नियमद्वयलाभ इति वाच्यम्, अणिग्ग्रहणात् । अन्यथा कर्ता णावित्येवोच्येत, एवमपि णौ कर्मसंज्ञाविधानादणिक्कर्तृलाभ स्यात्, णिगवस्थायां हि तस्य कर्मसंज्ञा विधीयते तत्कथ तत्रासौ कर्ता स्यादित्यतिरिच्यमानमणिग्रहण नियमार्थमिति नियमद्वयलाभ । द्वयोरपि च नियमयोर्वृत्तिकृता व्यावृत्तिर्दर्शिता, गमयतेरगत्यर्थत्वादपि प्रयोजककर्तु प्रयोज्यत्वेऽपि कर्मसंज्ञाया अप्रवृत्तिरिति स्पष्टतया द्वितीयो नियमो न दर्शित । सर्वत्र च प्रधानप्रयुक्तसंज्ञाया अभावे गुणक्रियानिमित्ता कर्तृसंज्ञा प्रवर्तत इति तत्र तृतीयेति । ‘शत दापित सूरसेन’, ‘परुप व्याजित’ इति, ‘मुक्ताजाल चिरपरिचित त्याजित’ इत्येवमादि कविप्रवाहो यदि समतस्तदा बहुवचनादनुसन्धेय ॥ ५ ॥

**भक्षेर्हिंसायाम्** । अत्र अणिक्कर्ता णौ कर्म इत्यनुवर्तते । हिंसायां भक्षे अणिक्कर्ता णौ कर्म इत्यन्वय । भक्षिश्चुरादित्वात् स्वार्थिकणिजन्त, ततः कर्ता हि अस्वार्थिकणिगपेक्षयाऽणिक्कर्ता भवतीत्याह—**भक्षे· स्वार्थिकण्यन्तस्येत्यादि** । **भक्षयति सस्यमित्यादि** । अत्र स्वार्थिकस्य णेरन्यस्मिन् णौ "णेरनिटि" इति लुक् । ननु हिंसा हि प्राणव्यपरोपलक्षणा, सा च प्राणिन्येव सचेतने सभवति कथमचेतने सस्ये, न हि तत्रायुरिन्द्रियबलोच्छ्वासलक्षणा रसमलधातूनां परिणतिहेतव प्राणा सन्तीति अत आह—**वनस्पतीना**मित्यादि । न ह्यभावोऽनुपलम्भमात्रादेव सिध्यति, भूतलच्छन्नमूलकीलकजलादीनामभावप्रसङ्गात्, किन्तु योग्यानुपलम्भ । उपलम्भयोग्यता च देशकालस्वरूपा विप्रकृष्टस्यैवाऽर्थस्य । प्राणाश्च चैतन्याविनाभाविन स्वरूपविप्रकृष्टत्वेन सर्वत्रानुमानग्राह्या एव । तथा च सति अन्तर्गर्भमूर्च्छितेष्वपि प्राणवत्त्व सिध्यतीति । तस्मात् प्रसूतिमत्स्त्रीवत् प्रवृद्धिमद्दारकवद्वा प्रसवप्ररोहादिदर्शनात् सस्येऽपि शक्यत एव प्राणानुमान कर्तुमिति । जैनाऽऽगमश्चात्र प्रमाणम्, यथा–"मृत्यूत्पत्तिग्लानिनिद्राप्रयोधैर्वृद्धिह्रासत्रासरोगादिभिश्च । लिङ्गैर्ज्ञेया जीवतैकेन्द्रियाणा जैनात् सूत्रात् ‘प्राणवत्त्विश्वलाना’मिति" ॥१॥ तत सभवति तत्र प्राणवियोगलक्षणा हिंसेति । प्रकारान्तरेण हिंसामाह—**तद्भक्षणादि**त्यादि । यस्य तत् सस्य तस्य स आजीव इति तद्भक्षणात् स तत्स्वामी हिंसितो भवतीति हिंसानुबन्धि भक्षणमपि हिंसेति । **भक्षयति पिण्डीं शिशुनेति** । पिण्ड्या अप्राणित्वात् न भक्षण हिंसात्मक, नापि तदनुबन्धीति न भवति कर्मसंज्ञेति । एव **भक्षयति राजद्रव्य**मित्यत्रापि द्रष्टव्यम् । ननु पुत्रभक्षणस्य हिंसात्मकत्वाद् **भक्षयति पुत्रान् गार्ग्ये**ति कथ कर्मत्वाभाव इत्यत आह—**भक्षयतिरत्राऽऽक्रोश** इति । न ह्यत्र गार्गी स्वय पुत्रान् भक्षयति, न च तामन्यस्तत्र प्रयुङ्क्तेऽपि त्वेवमाक्रोशति भक्षय पुत्रानिति भक्षिर्न हिंसाविषय । ननु भक्षयति पिण्डीं शिशुनेत्यादौ मा भूदनेन कर्मत्व भक्षयतेराहार्थत्वात् पूर्वेण कस्मान्न भवतीत्याह—**आहारार्थत्वादि**त्यादि । भक्षिरयमाहारार्थो न ह्यस्यान्योऽर्थोऽस्ति, अन्यत्र तु सर्वभक्ष कृतान्त इत्यादौ तद्व्यापारारोपा वृत्ति । तन्नास्य पूर्वेण प्राप्नोतीति नेदं विध्यर्थमपि तु ‘सिद्धे सत्यारम्भ’ इति नियमार्थ, विधिनिषेधव्यतिरेकेण शब्दव्यापाराभावात् ॥ ६ ॥

**वहे· प्रवेयः** । अत्र अणिक्कर्ता णौ कर्म इत्यनुवर्तते । वहेरणिक्कर्ता प्रवेयो णौ कर्म इत्यन्वय । प्रपूर्वादजेर्वीभावे कर्मणि यप्रत्यये रूपमित्याह—प्रवीयते—**प्राजतिक्रियया व्याप्यते यः प्रवेय** इति । नियन्तु सारथे प्रयोजयितुर्व्यापारस्य कर्मेत्यर्थ । **वाहयिता भारस्य बलीवर्दानिति** । अत्र बलीवर्दशब्दात् "वैकत्र द्वयो" २।२।८५। इति प्राप्तषष्ठीविकल्पाद् द्वितीया, तद्विमुक्तपक्षे भारस्येत्यत्र "कर्मणि कृत" २।२।८३। इत्यनेन षष्ठीति वाहयिता भारस्य बलीवर्दान् इति । द्वितीयप्रयोगस्तद्विपरीत । "वैकत्र द्वयो" इति षष्ठीप्रवृत्त्युदाहरण तु वाहयिता भारस्य बलीवर्दानामिति ज्ञेयम् । **वाहयति भार मैत्रेणेति** । **नाऽत्र मैत्रो बलीवर्दादिवत् प्रवेय** इति कर्मभावो न भवतीति शेष । सूत्रतात्पर्यमाचष्टे—**प्राप्त्यर्थस्य प्रापणार्थस्य चे**त्यादिना । तत्र वहति प्राप्त्यर्थो यथा–वहन्ति बलीवर्दा –देशान्तरं प्राप्नुवन्तीति, प्रापणार्थो यथा–ग्राम भारं वहति बलीवर्द –ग्राम प्रापयतीति, अत्रापि प्रापणोपसर्जने प्राप्तिरस्त्येव, अकर्मको यथा–वहति नदी–स्यन्दत इत्यर्थ, अत्र प्राप्तेर्गतिरूपत्वाभावात् प्राप्त्यर्थस्याकर्मकस्य च गत्यादिसूत्रेणैव सिद्धत्वात् नियमार्थं वचनमिति वहे प्रवेय एव कर्ता णौ कर्म भवति नान्य इति । **अविवक्षितकर्मकस्य त्वित्यादि** । वहेरिति शेष । नन्वेव विधौ सति नियमो नोपपद्यते, उच्यते–आवृत्त्या उभयार्थपरिग्रह ॥ ७ ॥

**हृक्रोर्नवा** । हा च का च हृकरौ, तयोरिति विग्रह । अणिक्कर्ता णौ कर्मेत्यनुवर्तते । हृक्रोरणिक्कर्ता णौ कर्म नवेत्यन्वय । हृसाहचर्यात् कृधातोरपि भ्वादेरेव ग्रह, तेन ‘कृत्’ विक्षेपे, ‘कृगृट्’ हिंसायामित्यनयोर्व्यवच्छेद । यदा हरतिर्गतौ वर्ततेऽभ्यवहारे वा करोतिश्च वलगनादावकर्मक शब्दकर्मकश्च तदा पूर्वेण प्राप्ते, यदा तु हरति स्तेयादौ वर्तते करोतिश्च सकर्मको भवति तदाऽप्राप्त इति विशेषानुपादानादुभयत्र विकल्पोऽयमित्याह—**प्राप्ते चाऽप्राप्ते चे**त्यादि । तत्र प्राप्ते दर्शयति–**विहारयति देशमाचार्यमाचार्येण** वेत्यादि । अत्र गत्यर्थ आहारार्थ-

---

[1] °तान् नियन्ता प्र° पु० ।

विहारयति देशमाचार्यमाचार्येण वा; एवमाहारयत्योदनं बालकं बालकेन वा । विकुर्वते सैन्धवाः, विकारयति सैन्धवान् सैन्धवैरिति वा; विकुरुते स्वरं क्रोष्टा, विकारयति स्वरं क्रोष्टारम् क्रोष्टुना वा; अत्र गत्यर्थाऽऽहारार्थनित्याऽकर्मकशब्दकर्मकत्वेन यथासंख्यं प्राप्तिः । अप्राप्ते—हरति द्रव्यं मैत्रः, हारयति द्रव्यं मैत्रेण मैत्रं वा, करोति कटं चैत्रः, कारयति कटं चैत्रं चैत्रेण वा, अत्र हरतिश्चौर्यार्थो न प्रापणार्थ इत्यप्राप्तिः, प्रापणार्थत्वे तु प्राप्ते विभाषा । कारयिता कटस्य देवदत्तं देवदत्तेन वा, कारयिता कटं देवदत्तस्य देवदत्तेन वा ॥ ८ ॥

## दृश्यभिवदोरात्मने ॥ २ । २ । ९ ॥

दृशेरभिपूर्वस्य वदतेश्चाऽऽत्मनेपदविषयेऽणिक्कर्ता णौ कर्मसंज्ञो वा भवति । पश्यन्ति भृत्या राजानम्, तान् राजैवानुकूलाचरणेन प्रयुङ्क्ते—दर्शयते राजा भृत्यान् भृत्यैर्वा; अभिवदति गुरुं शिष्यः, अभिवादयते गुरुः शिष्यं शिष्येण वा, अथवा—अभिवदति गुरुं शिष्यः, तं मैत्रः प्रयुङ्क्ते—अभिवादयते गुरुं शिष्यं शिष्येण वा मैत्रः; एवं दर्शयमानो राजा भृत्यान् भृत्यैर्वा, अभिवादयमानो गुरुः शिष्यं शिष्येण वा, अथवा—अभिवादयमानो गुरुं शिष्यं शिष्येण वा मैत्रः । आत्मन इति किम्? पश्यति रूपतर्कः कार्षापणम्, दर्शयति रूपतर्कं कार्षापणम्, अभिवदति गुरुं शिष्यः, अभिवादयति गुरुं शिष्येण । दृशेर्बोधार्थत्वेन नित्यं कर्मत्वे प्राप्ते अभिवदेस्तु नित्यमप्राप्ते विकल्पः । यदा तु अभिवदिर्न प्रणामार्थः, किंतु शब्दक्रियस्तदा अभिवादयति गुरुं शिष्यं मैत्र इति नित्यं प्राप्ते विभाषेति । णिजन्तस्यापि वदेर्णिगीच्छन्त्येके । अभिवादयति गुरुर्देवदत्तम्—तस्मिन्नाशिषं प्रयुङ्क्त इत्यर्थः, अभिवादयते गुरुं देवदत्तो गुरुणेति वा, आत्मन्याशिषं प्रयोजयतीत्यर्थः । णिगन्तस्यापीति कश्चित्—अभिवदति गुरुः स्वयमाशिषम्, तं शिष्यः प्रयुङ्क्ते—अभिवादयति गुरुमाशिषं शिष्यः; तं मैत्रः प्रयुङ्क्ते—अभिवादयते गुरुमाशिषं शिष्यं शिष्येण वा मैत्रः । नामधातोरभिवादयतेरपीच्छन्त्यन्यः ॥ ९ ॥

## नाथः ॥ २ । २ । १० ॥

अणिक्कर्ता णाविति निवृत्तं, पृथग्योगात् । आत्मनेपदविषयस्य नाथतेर्व्याप्यं कर्म वा भवति, आत्मनेपदविषयत्वं चास्याऽऽशिष्येवेति तत्रैवायं विधिः । सर्पिषो नाथते, सर्पिर्नाथते, सर्पिर्मे भूयादित्याशास्त इत्यर्थः । सर्पिषो नाथमानः, सर्पिर्नाथमानः; सर्पिषो नाथिष्यमाणः, सर्पिर्नाथिष्यमाणः; सर्पिषो नाथ्यते, सर्पिर्नाथ्यते । आत्मन इत्येव? पुत्रमुपनाथति पाठाय, उपयाचते इत्यर्थः ॥ १० ॥

---

थेति प्राप्तिः । विकारयति सैन्धवान् सैन्धवैर्वेति । नित्याऽकर्मेति प्राप्तिः । सैन्धवा—अश्वाः, विकुर्वते—वल्गन्तीति ह्यकर्मकः करोत्यर्थः । विकारयति स्वरं क्रोष्टारं क्रोष्टुना वेत्यत्र शब्दकर्मेति प्राप्तिरिति विवेकेन दर्शयति—अत्रेत्यादि । हारयति द्रव्यं मैत्रेण मैत्रं वेत्यादौ तु चौर्यार्थो हरति करोतिश्चोत्पादनार्थ इत्यप्राप्तिः ॥ ८ ॥

**दृश्यभिवदोरात्मने** । अत्र अणिक्कर्ता णौ कर्म नवा इत्यनुवर्तते । दृश्यभिवदो आत्मने अणिक्कर्ता णौ कर्म नवेत्यन्वयः । आत्मन इत्यनुवर्तमानस्य णावित्यस्य विषयतया विशेषणमित्याह—**आत्मनेपदविषये** इति । **दर्शयते राजा भृत्यान् भृत्यैर्वा** इत्यादि । 'दृश्' प्रेक्षणे, अभिपूर्वो 'वद'व्यक्तायां वाचि, आभ्यां "प्रयोक्तृव्यापारे णिग्" इति णिगि, "अणिकर्मणिकर्तृकात्०" ३।३।८८। इत्यात्मनेपदम् । **अथवेति** । अन्यस्यापि प्रयोजकत्वे विभाषया प्रयोज्यस्य कर्मत्वम् । तत्रोभयत्रापि "इङ्गित" ३।३।९५। इत्यनेन फलवत्कर्तर्यात्मनेपदम् । **एवमिति** । "पराणि कानानशौ चाऽऽत्मनेपदम्" ३।३।२०। इति आनशोऽप्यात्मनेपदत्वात् तद्विषये णावणिक्कर्ता पक्षे कर्म भवतीत्यतिदेशार्थः । **दर्शयति रूपतर्कं कार्षापणमित्यादि** । न ह्येतौ विवक्षितफलवत्कर्तृकौ नापि अणिकर्मणिकर्तृकौ इत्यनात्मनेपदविषयत्वात् विकल्पो न भवति । ननु विकल्पो हि प्राप्ते कार्ये पक्षे निवृत्तिफलः, अप्राप्ते च प्रवृत्तिफलस्तत्राऽयं प्राप्ते च स्यादप्राप्ते वेत्यत आह—**दृशेरित्यादि** । **अभिवदेस्त्विति** । प्रणामार्थत्वेनेति शेष इति प्राप्ताप्राप्तविकल्पोऽयमित्यर्थः । **यदा त्विति** । शब्दक्रियत्वे गत्यादिसूत्रेणोभयत्र नित्यकर्मत्वे प्राप्ते प्राप्त एव विभाषेति भावः । **णिजन्तस्यापीति** । **एके**—इति शाकटायनाचार्याः, 'वदिण्' भाषणे, इति युजादित्वात् "युजादेर्नवा" इति णिच्, तत्रैकारो णिजभावपक्षे आत्मनेपदार्थस्ततोऽभिवादयति—आशास्ते इत्यभिवादयतिरयमाशी प्रयोगे वर्तते इत्याह—**तस्मिन्नित्यादि** । **अभिवादयते गुरुं देवदत्त** इति । अत्र अभिवादीति णिजन्तात् णिग्, तत्र गुरुः प्रयोज्यो देवदत्तः प्रयोक्ता तद्दर्शयति—**आत्मनीत्यादि** । **णिगन्तस्यापीति** । तदाभिवदतिराशी प्रयोगे वर्तत इति शेषः पूर्ववत् । **कश्चिदिति** । दुर्गसिंहमतम् । **अन्य** इति । रत्नमतिस्तथा च स आह—सुप्धातुर्नामधातुरित्यर्थः ॥ ९ ॥

**नाथः** । **अणिक्कर्ता णाविति निवृत्तमिति** । अत्र हेतुः—**पृथग्योगादिति** । अयमर्थः—अणिक्कर्ता णौ इत्यनुवृत्तौ हि पूर्वेण समानविषयत्वादेकयोगमेव कुर्यादिति भावः । अत्रात्मने व्याप्यं कर्म नवेति च सम्बध्यते । आत्मने नाथो व्याप्यं कर्म नवेत्यन्वयस्तदाह—**आत्मनेपदविषयस्येत्यादि** । नाथतेश्चोपतापैश्वर्याऽऽशीर्याचनलक्षणार्थचतुष्टये वर्तमानस्याप्याशीरर्थस्यैवात्मनेपदविषयत्वमित्याह—**आत्मने** इत्यादि । अन्यत्र नात्मनेपदं नाप्येष विकल्प इत्यर्थः । 'नाथृङ्' उपतापादौ, तस्यार्थविशेषं दर्शयति—**सर्पिर्मे भूयादित्यादि** । **नाथमान** इति । "शत्रानशा०" इति आनश्, **एष्यति** तु स्यसहितः । **नाथ्यत** इति । "तत्साप्यानाप्या०" इति कर्मण्यात्मनेपदम् । **उपनाथतीति** । अत्रोपयाचनार्थस्य "आशिषि नाथः" इत्यात्मनेपदाभावात् कर्मविकल्पो न भवतीति ॥ १० ॥

---

१ ०गत्याXXXहारार्थनि० पु० । २ मैत्रं मैत्रेण वा पु० ।

## स्मृत्यर्थदयेशः ॥ २ । २ । ११ ॥

स्मरणार्थानां दयतेरीशश्च व्याप्यं कर्म वा भवति । मातुः स्मरति, मातरं स्मरति; मातुः स्मर्यते, माता स्मर्यते; मातुः स्मर्तव्यम्, माता स्मर्तव्या; मातुः स्मृतम्, माता स्मृता; मातुः सुस्मरम्, माता सुस्मरा; मातुः स्मृतः पुत्रः, माता स्मृता पुत्रेण; एवं मातुरध्येति, मातरमध्येति; मातुर्ध्यायति, मातरं ध्यायति; मातुरुत्कण्ठते, मातरमुत्कण्ठते इत्यादि; सर्पिषो दयते, सर्पिर्दयते; लोकानामीष्टे, लोकानीष्टे । ननु कर्माऽविवक्षायां पक्षे माषाणामश्नीयादित्यादिवत् "शेषे" षष्ठी सिद्धैव तत् किमनेन ?, सत्यम्; किंतु "षष्ठ्ययत्नाच्छेषे" ॥ ३ । १ । ७६ ॥ इति अयत्नजे शेषे षष्ठ्याः समासो वक्ष्यते, ततो मातुः स्मृतमित्यादौ समासो मा भूत् इत्यनेन प्रकारेण यत्नाच्छेषो विधीयते; नियमार्थं च–तेनैषां धातूनां कर्मैव शेषत्वेन[2] विवक्ष्यते, न कारकान्तरं; तेन मात्रा स्मृतम्, मनसा स्मृतमित्यादौ कर्तृकरणयोः शेषविवक्षाभावात् षष्ठी न भवति । व्याप्यमित्येव[3] ? कथासु स्मरति, गुणैः स्मरति ॥ ११ ॥

## कृगः प्रतियत्ने ॥ २ । २ । १२ ॥

पुनर्यत्नः–प्रतियत्नः, सतो गुणाऽऽधानायाऽपायपरिहाराय वा समीहा; तस्मिन् वर्तमानस्य करोतेर्व्याप्यं वा कर्म भवति । एधोदकस्योपस्कुरुते, एधोदकमुपस्कुरुते; शस्त्रपत्रस्योपस्कुरुते, शस्त्रपत्रमुपस्कुरुते । प्रतियत्न इति किम् ? कटं करोति । व्याप्यमित्येव ? एधोदकस्योपस्कुरुते, बुद्ध्या करणस्य मा भूत् ॥ १२ ॥

## रुजार्थस्याऽज्वरिसंतापेर्भावे कर्तरि ॥ २ । २ । १३ ॥

रुजा–पीडा, तदर्थस्य धातोर्ज्वरिसंतापिवर्जितस्य व्याप्यं वा कर्मसंज्ञं भवति, भावे कर्तरि–भावश्चेद्रुजार्थस्य कर्ता भवति । चौरस्य रुजति, चौरं रुजति रोगः; अपथ्याशिनां रुज्यते रोगेण, अपथ्याशिनो रुज्यन्ते रोगेण; चौरस्य रुग्णम्, चौरो रुग्ण इत्यादि । चौरस्याऽऽमयति, चौरमामयति रोगः, चौरस्य व्यथयति, चौरं व्यथयति रोगः, चौरस्य

---

**स्मृत्यर्थदयेशः** । अत्र व्याप्य कर्म नवेति वर्तते । स्मृत्यर्थदयेशो व्याप्य कर्म नवेत्यन्वयस्तदाह—**स्मरणार्थानामि**त्यादि । **मातुः स्मरती**त्यादि । पक्षे कर्मत्वाभावविधानान्न द्वितीयेति "शेषे" इत्युत्सर्गेण षष्ठी भवति, कर्मत्वे तु कर्मणि द्वितीया "तत्साप्यानाप्या०" इति भावे कर्मणि चात्मनेपदक्तत्यक्तखलर्था भवन्ति, कर्त्राधारयोश्च क्त । एवं **मातुरध्येती**त्यादावपि द्रष्टव्यम्, 'इक्' स्मरणेऽधिपूर्व 'इङिकावध्युपसर्गं न व्यभिचरत' इति नियमात् । 'ध्यै' चिन्तायाम्, उत्पूर्व 'कठुङ्' शोके, 'दयि' दानादौ, 'ईशिक्' ऐश्वर्ये; इत्येभ्य —**ध्यायती**त्यादि । नन्विदं कर्म भवति कर्मभावजनितसंबन्धसंबन्धि च, तत्र कर्माविवक्षायां "शेषे" इत्यनेनैव षष्ठी, यथा–राज्ञ पुरुष इत्यत्र राजा पुरुषाय वृत्तिं ददाति तं बिभर्ति इति कर्तृभावजनितसम्बन्धसम्बन्धित्वेन राज्ञ इत्यत्र षष्ठीति । द्रव्ययोस्तस्येदंभावे क्रियोपनिधीयते, तया विना द्रव्याणामयःशलाकाकल्पानामुपश्लेषायोगात्, क्रियायां क्रियान्तरं नापेक्ष्यते जतुवत् । न हि काष्ठसंश्लेषहेतोर्जतुन संश्लेषे जत्वन्तरमपेक्ष्यमिति तत्रापि स्थित्यादि क्रियाऽस्तीत्यपरे । तत्र यदा स्मरणादे प्राप्यतया मात्रादि विवक्ष्यते तदा कर्मणि द्वितीयादिर्भवति । यदा तु स्मरणादिशेषविवक्षा स्मरणादीना प्रतिसाधनं भेदात् अन्यथा हि जायेत तदा मातुर्यत्स्मरणं तत्करोतीत्यर्थ । नच कर्मभावनिवर्तनेन षष्ठ्यां प्रवर्तितायामपि तत्कर्मप्रतिपत्तिसंबन्धिभावो हि तत प्रतीयते, अतो विवक्षाभेदात् द्वितीयादे षष्ठ्यादेश्च सिद्धेरयं विकल्पोऽनर्थक इति पृच्छति—**नन्वि**त्यादि । समाधत्ते—**सत्य**मित्यादि । अयमभिप्राय –यदीदं द्विधा व्यवस्थापनं न स्यात् तर्हि स्वतो द्विधाभावेन षष्ठ्या मातु स्मृतमित्यादौ "षष्ठ्ययत्नाच्छेषे" इति समासः प्राप्नोति, सति त्वस्मिन् अनेन यत्नेन प्रापिता भवतीति अयत्नादिति निषेधात् समासो न भवतीत्येतदर्थमारभ्यते । प्रयोजनान्तरमाह—**नियमार्थं चे**ति । नियमफलं दर्शयति–**तेने**त्यादि । स्मृत्यर्थादीना कर्म कर्म वा भवति संबन्धिरूपेण च सामान्येनाभिधीयते, कारकान्तरं तु करणादिकं करणादिरूपेणैवोच्यते न सम्बन्धिरूपेणेति तद्व्यवच्छेद्यमुदाहरति—**मात्रा स्मृतम्, मनसा स्मृत**मिति । मात्रेति कर्ता, मनसेति करणम् । **कथास्वि**त्यादि । अत्र व्याप्यमित्यनुवर्तनादव्याप्यस्य करणादे कर्मविकल्पो न भवतीति ॥ ११ ॥

**कृगः प्रतियत्ने** । अत्र व्याप्य कर्म नवेत्यनुवर्तते । प्रतियत्ने कृगो व्याप्य कर्म नवेत्यन्वय । यतन यत्न प्रतिशब्द पुनरर्थे इत्याह—**पुनर्यत्नः–प्रतियत्न** इति । प्रथमं तावदर्थस्यात्मलाभाय यत्नो भवति, लब्धात्मनो यो यत्नोऽधिकान् गुणानुत्पादयितु परिपूर्णगुणस्य वा तादवस्थ्यं रक्षितु प्रतियत्न समीहेत्याह—**सतो गुणाधानाये**त्यादि । **उपस्कुरुत** इति । "उपाद् भूषासमवायप्रतियत्न०" ४।४।९२। इति सट्, "गन्धनाऽवक्षेपसेवासाहसप्रतियत्न०" ३।३।७६। इत्यात्मनेपदम् । शस्त्रपत्रशब्दौ "नीदाव्शसु०" ५।२।८८। इति करणे त्रटि भवत ॥ १२ ॥

**रुजार्थस्याऽज्वरिसंतापेर्भावे कर्तरि** । अत्र व्याप्य कर्म नवा इति वर्तते । अज्वरिसंतापे रुजार्थस्य व्याप्य कर्म नवा भावे कर्तरि इत्यन्वय । 'रुजोंत्' भङ्गे, इत्यस्मात् भिदादित्वादङि रुजा इत्याह—**रुजा–पीडे**ति । अथवा–'रुजोंव' भङ्गे, इत्यागन्तुनाकारेण निर्दिष्टोऽनुक्रियते, रुक् अर्थो यस्यासौ इति विग्रह । **भावश्चेदि**ति । साध्यरूपस्य भावस्य कर्तृत्वानुपपत्ते सामान्यशब्दोऽपि भावशब्द सिद्धरूपे भावे वर्तते इति तात्पर्यार्थं । **चौरस्य रुजती**त्यादि । 'चुरण्' स्तेये, इत्यस्याणिजन्तस्य भिदायङि चुरा सा शीलमस्य इति विग्रहे "अस्थाच्छत्रादेरञ्" ६।४।६०। इत्यञि, वृद्धौ–चौर, रुजतीति "पदरुज०" ५।३।१६। इति घञि, "क्तेऽनिटश्च०" ४।१।१११। इति जस्य गत्वे–रोग । **अपथ्याशिनामि**ति । अपथ्यमश्नन्तीत्येवं शीला इति विग्रहे "अजाते शीले" ५।१।१५४। इति णिन् । **रुज्यते** इति । "तत्साप्यानाप्या०" इति भावे आत्मनेपदम् । **रुज्यन्ते** इति । कर्मण्यात्मनेपदम् । **रुग्णमि**ति । "क्लीबे क्त" ५।३।१२३। इति भावे क्त । **रुग्ण** इति । कर्मणि क्त, "सूयत्याद्योदित" इति तकारस्य नकार, "रषृवर्णा०" इति णत्वम् । **आमयती**त्यादि । 'अमण्' रोगे, 'व्यथिष्' भयचलनयो, 'पीडण्' गहने,

१ शेषषष्ठी° म० म० । २ रूपेण पु० । ३ आप्य° पु० ।

पीडयति, चौरं पीडयति रोगः । रुजार्थस्येति किम्? एति जीवन्तमानन्दः । ज्वरिसंतापिवर्जनं किम्? आद्यूनं ज्वरयति । अत्याशिनं संतापयति । कर्तरीति किम्? चैत्र रुजत्यत्यशने वातः । भाव इति किम्? मैत्रं रुजति श्लेष्मा, अत्र श्लेष्मा द्रव्यं, न भावः । रोगो व्याधिरामयः शिरोऽर्तिरित्यादयो भावरूपाः कर्तार इति ॥ १३ ॥

## जासनाटक्राथपिपो हिंसायाम् ॥ २ । २ । १४ ॥

एषां हिंसायां वर्तमानानां व्याप्यं वा कर्म भवति । 'ञसपिसजसवर्हण्' हिंसायाम्, 'जसण्' ताडने इति चुरादी गृह्येते, न 'जसूच्' मोक्षणे इति दैवादिकः; तस्याऽहिंसार्थत्वात् । चौरस्योज्जासयति, चौरमुज्जासयति; चौरस्योज्जास्यते, चौर उज्जास्यते चैत्रेण । तथा 'नटण्' अवस्यन्दने इति, अयमपि चुरादिर्न तु 'नट' नृत्ताविति भ्वादिः । चौरस्योन्नाटयति, चौरमुन्नाटयति; एवं क्राथिर्घटादिः–चौरस्योत्क्राथयति, चौरमुत्क्रथयति; चौरस्य पिनष्टि, चौरं पिनष्टि । जासनाटक्राथानामाकारोपान्त्यनिर्देशो यत्राऽऽकारश्रुतिस्तत्र यथा स्यादित्येवमर्थः, तेनेह न भवति–दस्युमुदजीजसत्, चौरमनीनटत्, दस्युमुदचिक्रथत् । अत एव च क्राथेः कर्मसञ्ज्ञाप्रतिषेधपक्षे ह्रस्वत्वाभावः, कर्मत्वे तु ह्रस्वत्वमेव । हिंसायामिति किम्? चौरं बन्धनात् जासयति–मोचयतीत्यर्थः, नटं नाटयति–नर्तयतीत्यर्थः । अभावकर्तृकार्थं वचनम् ॥ १४ ॥

## निप्रेभ्यो घ्नः ॥ २ । २ । १५ ॥

निप्राभ्यां परस्य हिंसायां वर्तमानस्य हन्तेर्व्याप्यं वा कर्म भवति । बहुवचनं समस्तव्यस्तविपर्यस्तसंग्रहार्थम् । चौरस्य निप्रहन्ति, चौरं निप्रहन्ति, चौरस्य चौरं वा निहन्ति, चौरस्य चौरं वा प्रहन्ति, चौरस्य चौरं वा प्रणिहन्ति, चौराणां निप्रहण्यते; चौरा निप्रहण्यन्ते राज्ञा । निप्रेभ्य इति किम्? चौरं हन्ति, चौरमाहन्ति । हिंसायामित्येव? रागादीन् निहन्ति ॥ १५ ॥

## विनिमेयद्यूतपणं पणव्यवह्रोः ॥ २ । २ । १६ ॥

विनिमेयः–क्रयविक्रेयोऽर्थः, द्यूतपणो द्यूतजेयम्, पणतेर्व्यवपूर्वस्य च हरतेर्व्याप्यौ विनिमेयद्यूतपणौ वा कर्मसञ्ज्ञौ एभ्यो भवति । 'एति जीवन्तमानन्द' इति विष्णुपुराणे । जीवते "रुहिनन्दि०" उ० २२० । इत्यन्तप्रत्यये शतृप्रत्यये वा भवति । आद्यूनं ज्वरयतीत्यादि । ज्वरिसंतापिप्रतिषेधादिह न भवति । चैत्रं रुजत्यत्यशने वात इति । अत्र योऽत्यशनरूपो भावो न स कर्ता यस्तु वातरूपः कर्ता स द्रव्यं न भावः । श्लेष्मेति । श्लिष्यतेर्मन् । अथ रुजार्थस्य धातोर्भावरूपाः के कर्तार इत्यत आह–रोग इत्यादि ॥ १३ ॥

**जासनाटक्राथपिपो हिंसायाम्** । अत्र व्याप्यं कर्म नवेति वर्तते । हिंसायां जासनाटक्राथपिषो व्याप्यं कर्म नवेत्यन्वयस्तदाह–**एषां हिंसायामित्यादि** । **न 'जसूच्' मोक्षणे, इति दैवादिक** इति । अत्रोपपत्ति–**तस्याहिंसार्थत्वादिति** । हिंसायामिति वचनाद् हिंसार्थपरिग्रहादित्यर्थः । **न तु 'नट'नृत्तौ, इति भ्वादिरिति** । अत्राप्यहिंसार्थत्वादित्येव हेतुः । **क्राथिर्घटादिरिति** । क्नथक्रथक्लथ हिंसार्था इति घटादौ, 'पिष्लृप्' संचूर्णने । ननु च जसनटक्रथेति धातवः पठ्यन्ते तत्र निर्देशे तथैव निर्देष्टव्यमित्यत आह–**जासनाटक्राथानामित्यादि** । आकारेण न जस्यादिधातुमात्रं निर्दिश्यतेऽपि तु यदेषामाकारवद्रूपं तदुच्यते–जासनाटक्राथेति, तेन यत्र प्रयोगे एषां धातूनामाकारस्तत्रैवाऽयं विधिर्नान्यत्र । **तेनेह न भवति–दस्युमुदजीजसदित्यादि** । जसेर्नटेश्च चुरादित्वाद् णिच् । उत्क्रथति कश्चित् तमन्यः प्रयुङ्क्ते इति "प्रयोक्तृव्यापारे णिग्" इति णिग्, "ङ्णिति" इत्यस्य वृद्धिस्ततो द्विर्वचनादि, अत्र जासेत्यादि नाकारवद्रूपमस्तीति नाय विकल्पः । ननु **चौरस्योत्क्राथयतीति** कथमाकारो घटादित्वाद् घटादिह्रस्वेनैव भवितव्यमिति क्राथेतिरूपाभावे तदनुकरणमपि चात्राऽनुपपन्नमित्यत आह–**अत एव चेत्यादि** । सूत्रे क्राथेति उपादानाद् ह्रस्वत्वाभावो विज्ञायत इति भावः । सत्यपि घटादित्वे अस्ति णिगि क्रथेराकारोऽन्यथाऽस्यानुपपत्तेः, न च णिगं विनाऽस्य कर्मास्ति अकर्मकत्वात्, स च यदि सर्वत्र स्यादस्य घटादित्वमनर्थकमिति कर्माभाव एव न भवतीत्याह–**कर्मत्वे तु ह्रस्वत्वमेवेति** । **चौरं बन्धनाज्जासयतीति** । चौरो बन्धनाद् जस्यतीति तमन्यः प्रयुङ्क्ते इति णिग्, हिंसायामिति वचनान्न भवति । एवं **नटं नाटयतीत्य**त्रापि द्रष्टव्यम् । ननु हिंसाया रुजारूपत्वात् "रुजार्थस्या०" इत्यनेनैव कर्मविकल्पो भविष्यति किमर्थमिदम्? यदि जासनाटक्राथेत्याकारार्थ–यत्राऽऽकारस्तत्रैव यथा स्यादिति तथापि पिषुग्रहणमनर्थकमित्याह–**अभावकर्तृकार्थं वचनमिति** । तत्र हि भावे कर्तरि विधिरिष्यते, अत्र तु चौरस्योज्जासयति देवदत्त इत्यभावेऽपि यथा स्यादित्येवमर्थम् ॥ १४ ॥

**निप्रेभ्यो घ्नः** । अत्र हिंसायामिति व्याप्यं कर्म नवेत्यनुवर्तते । हिंसायां निप्रेभ्यो घ्नो व्याप्यं कर्म नवेत्यन्वयस्तदाह–**निप्राभ्यामित्यादि** । **बहुवचनमित्यादि** । अयं भावः–निना सहितः प्रो निप्रः, अनेन समासेन सधातस्य ग्रहणं यथाश्रुतस्य विपर्यस्तस्याऽप्युभयत्र निनासहितस्य प्रस्यावगते, निश्च प्रश्च निप्रमिति समाहारद्वन्द्वे कृते "क्लीबमन्येनैकं च वा" ३।१।१२८। इति कर्मधारयनिवृत्तौ द्वन्द्वस्य शेषे द्वन्द्वेन च विगृहीतौ व्यस्तौ निप्रौ प्रतिपाद्येते इत्ययमधिकोऽर्थो बहुवचनाल्लभ्यते । सर्वत्र च बहुवचनमधिकार्थससूचनार्थमित्येष न्यायोऽत्र व्याकरणे द्रष्टव्य इति क्रमेणोदाहरति–**चौरस्य निप्रहन्तीत्यादि** । **निप्रहण्यत** इति भावे, **निप्रहण्यन्त** इति कर्मणि "तत्साप्यानाप्या०" इत्युभयत्रात्मनेपदम् । **रागादीन् निहन्तीति** । अत्र हिंसायामित्यनुवर्तनात् रागादीनामचेतनया प्राणव्यपरोपणलक्षणाया हिंसाया अभावान्न भवतीत्यर्थः ॥ १५ ॥

**विनिमेयद्यूतपणं पणव्यवह्रोः** । अत्र व्याप्यं कर्म नवेति वर्तते । पणव्यवह्रोर्व्याप्यं विनिमेयद्यूतपणं कर्म नवेत्यन्वयः । विनिमेयं व्याचष्टे–**क्रयविक्रेयोऽर्थ** इति । क्रेयो य आत्मना ग्राह्यो विक्रेयो यो देय इति । द्यूतस्य पणो द्यूतपणस्तमाह–**द्यूतपणो द्यूतजेयमिति** ।

१ °शन° पु० । २ °मुदनी° पु० । ३ कर्मणि म० म० ।

भवतः । शतस्य पणायति, शतं पणायति; सहस्रस्य सहस्रं वा पणायति,–क्रयविक्रये द्यूतपणत्वे वा तद्विनियुङ्क्ते इत्यर्थः; एवं दशानां व्यवहरति, दश व्यवहरति; पञ्चानां पञ्च वा व्यवहरति । विनिमेयद्यूतपणमिति किम्? साधून् पणायति–स्तौतीत्यर्थः, शलाकां व्यवहरति–विगणयन् गोपायति इत्यर्थः । वचनभेदो यथासंख्यनिवृत्त्यर्थः ॥ १६ ॥

## उपसर्गाद्दिवः ॥ २ । २ । १७ ॥

उपसर्गात् परस्य दिवो व्याप्यौ विनिमेयद्यूतपणौ वा कर्मसंज्ञौ भवतः । शतस्य प्रदीव्यति, शतं प्रदीव्यति, शतस्य प्रदीव्यते, शतं प्रदीव्यते, शतस्य प्रद्यूतम्, शतं प्रद्यूतम्; शतस्य प्रदेवितव्यम्, शतं प्रदेवितव्यम्; शतस्य सुप्रदेवम् शतं सुप्रदेवम् । विनिमेयद्यूतपणमित्येव? शलाकां प्रतिदीव्यति–विगणयन्नपहरतीत्यर्थः । उपसर्गादिति किम्? शतस्य दीव्यति ॥ १७ ॥

## न ॥ २ । २ । १८ ॥

विनिमेयद्यूतपणौ दिवो व्याप्यौ कर्मसंज्ञौ न भवतः, उपसर्गपूर्वस्य विकल्पविधानादनुपसर्गस्यायं निषेधः । शतस्य दीव्यति, सहस्रस्य दीव्यति, निषिद्धे च कर्मणि षष्ठ्येव भवति, शतस्य दीव्यते, शतस्य द्यूतम्, शतस्य देवितव्यम्, शतस्य सुदेवम् इत्यादौ भावे आत्मनेपदक्तकृत्यखलः सिद्धाः, शतस्य द्यूतो मैत्र इत्यत्र च कर्तरि क्तः । विनिमेयद्यूतपणमित्येव? जिनं दीव्यति–स्तौतीत्यर्थः, भूमिं दीव्यति–संधिना विजिगीषते इत्यर्थः, संधिपणोऽत्र न द्यूतपणः; द्यूतं दीव्यति, अक्षान् दीव्यति, अत्र क्रिया तत्साधनं च व्याप्यं न तु पणः ॥ १८ ॥

## करणं च ॥ २ । २ । १९ ॥

दीव्यतेः करणं कर्मसंज्ञं चकारात् करणसंज्ञं च भवति, कर्मकरणसंज्ञे युगपद्भजतीत्यर्थः । अक्षान् दीव्यति, अक्षाणां देवनम्, अक्षा दीव्यन्ते, अक्षा देवितव्याः, अक्षाः सुदेवाः, अक्षदेवः, अक्षा द्यूताश्चैत्रेण,–एषु कर्मत्वे द्वितीयाषष्ठ्यात्मनेपदतव्यखलण्क्तप्रत्ययास्तन्निमित्ताः सिद्धाः । अक्षैर्दीव्यति, अक्षैर्देवनम्, अक्षैर्दीव्यते, अक्षैर्देवितव्यम्, अक्षैः सुदेवं मैत्रेण, अक्षैर्द्यूतं चैत्रेण, अक्षा देवनाः;–एषु करणत्वे तृतीयाऽनटौ, भावे आत्मनेपदादयश्च सिद्धाः । आत्मनेपदादिभि-

---

द्यूते द्यूतेन वा जित्वा यत् स्वीकर्तव्यमिति । तदुभय विनिमेयो द्यूतपणश्च पणव्यवहोर्धात्वोर्व्याप्य कर्म वर्तते तस्य पक्षे कर्मत्वप्रतिषेध । **शतस्यपणायतीत्यादि** । 'पणि' व्यवहारस्तुत्योरतो "गुपौधूपविच्छिपणिपने०" इत्याय, तिव् च । **क्रयविक्रये द्यूतपणत्वे वा तद्विनियुङ्क्ते इत्यर्थ** इति । अनेन शतसहस्रयोर्विनिमेयद्यूतपणत्वे कर्मता च दर्श्यते । **एवमिति** । पूर्ववदित्यर्थ । **साधून् पणायतीति** । अत्र स्तुत्यर्थत्वात् विनिमेयत्वाद्यभावान्न भवतीत्यर्थ । **शलाकां व्यवहरतीति** । अत्राऽनेकार्थत्वात् धातूना विगणनपूर्वके गोपने व्यवहरविर्वर्तत इति न विधि । ननु पणव्यवह्रोरित्यत्र विनिमेयद्यूतपणवत् समाहारद्वन्द्वादेकवचनं किमिति वचनभेदाभावार्थं नोपादीयत इत्याह—**वचनभेद** इत्यादि । असति हि तस्मिंस्तुल्यत्वात् यथासख्यं स्यात् ॥ १६ ॥

**उपसर्गाद्दिवः** । अत्र विनिमेयद्यूतपण व्याप्यं कर्म नवेत्यनुवर्तते । उपसर्गात् दिव व्याप्य विनिमेयद्यूतपण नवा कर्मेत्यन्वयस्तदर्थमाह—**उपसर्गात् परस्येत्यादि** । प्रपूर्वात् दिवेस्तिवि श्ये "भ्वादेर्नामिनो०" इति दीर्घत्वे—**शतस्य प्रदीव्यतीत्यादि** । एषु कर्मसज्ञापक्षे कर्मणि द्वितीयाऽऽत्मनेपदक्ता कृत्यखलर्थाश्च भवन्ति, कर्मत्वाभावपक्षे "शेषे" इति षष्ठी भावे चाऽऽत्मनेपदादय इति । **प्रद्यूतमिति** । अत्र "अनुनासिके च्छ्व शूट्" इत्यूट् ॥ १७ ॥

**न** । अत्र विनिमेयद्यूतपणमिति दिव इति व्याप्य कर्मेति चानुवर्तते । दिवो व्याप्य विनिमेयद्यूतपण न कर्मेत्यन्वयस्तदर्थमाह—**विनिमेयद्यूतपणावित्यादि** । **उपसर्गपूर्वस्येति** । सूत्रे विशेषानुपादानेऽपीति शेष । **शतस्य दीव्यतीत्यादि** । कर्मसज्ञाया प्रतिषेधात् अकर्मकत्वात् सर्वत्र षष्ठी, भावे चाऽऽत्मनेपदादय कर्तरि च क्त इति । **स्तौतीत्यर्थ** इत्यर्थकथनेन विनिमेयत्वद्यूतपणत्वाभाव उच्यते, यदि हि धातुर्व्यवहारे विजिगीषायां च वर्तेत तदा तत्कर्म विनिमेयो द्यूतपणश्च स्याचान्यत्र । द्यूतग्रहणानुवृत्ते सन्धिपणस्य प्रतिषेधो न भवतीत्याह—**भूमिं दीव्यतीत्यादि** । **क्रिया तत्साधनं चेति** । अयमर्थ –यदि द्यूतमिति द्यूतक्रियामात्र गृह्यते ततो द्यूत दीव्यतीत्यत्र प्रतिषेध प्राप्नोति, अथ द्यूतविषय साधनमुपचारात् गृह्यते तदा अक्षान् दीव्यतीत्यत्र प्राप्नोति न पण एवेति तदर्थं द्यूतपण इत्यनुवर्त्यत इति ॥ १८ ॥

**करणं च** । अत्र दिव इत्यनुवर्तते कर्म इति च । दिव करण कर्म करण चेत्यन्वय । दिव इत्यनुवर्तमान करणमित्यस्य विशेषणमित्याह—**दीव्यतेः करणमिति** । चकारस्यान्यत् समुच्चेतव्य नास्तीति तदेव प्रतीयते, असति चकारे तन्निवृत्तेरित्याह—**चकारात् करणसंज्ञं चेति** । ननु च करण कथ कर्म भवति? भिन्नौ हि तौ स्वभावौ प्रकृष्यमाणव्यापारत्वक्रियमाणता चेति, धर्मप्रधानश्चाय निर्देश करणमिति न वचनादसत् सम्भवति । अथ करणत्वयुक्त भवतीति विज्ञायते तदा सर्वद्रव्याणां सर्वकारकशक्तियुक्तत्वात् द्रव्यान्तरवदस्य कर्मत्वात् वचनमिदमनर्थकमिति चेत्, उच्यते–कर्मशब्दवाच्य च युगपत् भवतीत्याह–**कर्मकरणसंज्ञे** इत्यादि । **अक्षान् दीव्यतीत्यादि** । "करणाऽऽधारे" ५।३।१२९। इत्यनटि–**देवनम्**, दीव्यतीति विग्रहे "कर्मणोऽण्" इत्यणि–**अक्षदेवः** । अत्र कर्मसज्ञाया कार्यं दर्शयति—**एष्वित्यादि** । "कर्मणि" इति द्वितीया, "कर्मणि कृत" इति षष्ठी, "तत्साप्यानाप्या०" इत्यात्मनेपदादय । **अक्षैर्दीव्यतीत्यादि** । "हेतुकर्तृकरणे०" इति तृतीया । **देवना** इति । "करणाऽऽधारे" इति करणेऽनट् । करणत्वस्य कार्यं दर्शयति—**एष्वित्यादि** । ननु अक्षा दीव्यन्ते इत्यादौ द्वितीयादय कथ न भवन्ति? इत्याह—**आत्मनेपदादिभिश्चेति** । अनुक्तयो कर्मकरणयोस्तासां विधानादित्यर्थ । **करणं चेत्येवेति** । कर्मेत्यनुवृत्तौ करण कर्म वा भवतीति सूत्रार्थे न युगपत् सज्ञाद्वयसमावेश स्यात्, विकल्पस्य पाक्षिकप्रवृत्तिनिवृत्तिफलकत्वात् इत्यर्थ । समावेशस्य प्रयोजन दर्शयति—

श्रोक्तयोः कर्मकरणयोः द्वितीयाषष्ठीतृतीया यथायोगं न भवन्ति । करणं वेत्येव सिद्धे, चकारः ? सञ्ज्ञाद्वयसमावेशार्थः, तेनाक्षैर्देवयते मैत्रश्चैत्रेणेत्यत्र करणत्वात् तृतीया भवति; कर्मत्वाच्च गत्यादिसूत्रेण नित्याऽकर्मकलक्षणमणिकर्तुः कर्मत्वम्, देवयतेश्च "अणिगि प्राणि०" इत्यादिना अकर्मकलक्षणं परस्मैपदं न भवति। अथाऽक्षान् दीव्यतीत्यत्र सत्यपि सञ्ज्ञाद्वयसमावेशे परत्वात् करणत्वनिमित्तया तृतीययैव भवितव्यम् ? नैवम्, स्पर्धे हि परः कार्यः, समानविषययोश्च स्पर्धः । न च द्वितीयातृतीययोः प्रतिनियतकर्मकरणशक्त्यभिधायिन्योः समानविषयत्वमस्तीति द्वितीयाऽपि भवत्येव, 'प्रतिकार्यं सञ्ज्ञा भिद्यन्ते' इति वा दर्शनेऽनवकाशत्वात् सञ्ज्ञाद्वयस्य विभक्त्योः पर्यायेण प्रवृत्तिरविरुद्धा । दिव इत्येव ? दात्रेण लुनाति । करणमिति किम् ? गृहे दीव्यति ॥ १९ ॥

## अधेः शीङ्स्थाऽऽस आधारः ॥ २ । २ । २० ॥

अधिसंबद्धानां शीङ् स्था आस् इत्येतेषां य आधारस्तत्कारकं कर्मसंज्ञं भवति । ग्राममधिशेते, ग्रामस्याधिशयनम्, ग्रामोऽधिशय्यते, ग्रामोऽधिशयितः, ग्राममधितिष्ठति, ग्राममध्यास्ते । अधेरिति किम् ? शयने शेते, गृहे तिष्ठति, कटे आस्ते । आधार इति किम् ? ग्रामोऽधिशयितो मैत्रेण, पौरुषेणाऽधितिष्ठति; कर्तृकरणे न भवतः । अकर्मका अपि हि धातवः सोपसर्गाः सकर्मका भवन्तीति सिद्धं सकर्मकत्वम् । आधारबाधनार्थं तु वचनम् ॥ २० ॥

## उपान्वध्याङ्वसः ॥ २ । २ । २१ ॥

उपअनुअधिआङ्भिर्विशिष्टस्य वसतेर्य आधारः स कर्मसञ्ज्ञो भवति । ग्राममुपवसति, ग्राम उपोषितः, ग्रामस्योपवसनम्, ग्राम उपोष्यते, पर्वतमनुवसति, पुरमधिवसति, आवसथमावसति । अन्वादिसाहचर्यादुपस्य स्थानार्थकस्यैव ग्रहणं, नाऽशननिवृत्त्यर्थस्य; तेन-ग्रामे उपवसति, भोजननिवृत्तिं करोतीत्यत्र न भवति । 'अदाद्यनदाद्योरनदादेरेव ग्रहणम्' इति वस्तेर्न भवति ॥ २१ ॥

---

तेनेत्यादि । अत्र वाक्ये करणत्वादक्षैरिति तृतीया भवति । कर्मत्वाच्च तेषामक्षाणामणिकर्तुः प्रयोज्यस्य चैत्रस्य कर्मत्वं न भवति, असति तु कर्मत्वे गत्यादिसूत्रेण नित्याकर्मकलक्षणं तस्य कर्मत्वं स्यात्, ततश्च ततो द्वितीया प्रसज्येत न तृतीया, कर्मत्वाभावात्तु कर्त्राश्रया तृतीयैवेति । तथाऽक्षाणां कर्मत्वात् दिवेः सकर्मकत्वे देवयतेः "अणिगि प्राणिकर्तृकानाप्याण्णिगः" ३।३।१०७। इति अनाप्यलक्षणं परस्मैपदं च न भवतीति संबन्धः । नन्वेवमक्षा दीव्यन्त इत्यत्रापि अकर्मकव्यपदेशव्यावृत्त्यर्थत्वात् कर्मसञ्ज्ञा सावकाशा, अक्षा देवना इत्यत्र च अनडर्थत्वात् करणसञ्ज्ञा, अक्षान् दीव्यतीत्यत्र तु कर्मकरणत्वसमावेशादक्षादेर्द्वितीयातृतीयाप्राप्तौ स्पर्द्धत्वात् परत्वात्तृतीयैव प्राप्नोतीत्याक्षिपति—अथेत्यादि । परिहरति—नैवमित्यादि । अयमर्थः—द्वयोरेकविषयसंनिपाते स्पर्द्ध उच्यते, न च तृतीया कर्मकरणशक्ती द्योतयितुं प्रभवतीति विषयभेदात् कुतः स्पर्द्ध इति । यद्वा 'प्रतिकार्यं सञ्ज्ञा भिद्यन्ते' इति पक्षोऽप्याश्रीयते, तेन "कर्मणि" इत्यत्र कार्ये यत्कर्मसञ्ज्ञाया उपस्थानं तदनवकाशमिति द्वितीयापीति पर्यायेण द्वयोः प्रवृत्तिरेकान्तासंभवादिति परिहारान्तरमाह—प्रतिकार्यमित्यादि ॥ १९ ॥

**अधेः शीङ्स्थाऽऽस आधारः** । अत्र कर्मेति वर्तते । अधेः शीङ्स्थासः आधारः कर्मेत्यन्वयः । अधेरिति षष्ठ्यन्तेन शीङ्स्थास इति षष्ठ्यन्तं विशेष्यते, तेन चाऽऽधार इत्याह—**अधेः संबद्धानामित्यादि**। **ग्राममधिशेते** इत्यादि। ग्रसते रुग्मेरिति "ग्रसिहागृभ्यां माजिहौ च" उ० ३३९। इति मे-ग्रामः, अधिपूर्वं 'शीङ्' स्वप्ने, ततस्ते प्रत्यये, "शीङ ए शिति" ४।३।१०४। इत्येकारः, अधिशीङ्कर्मत्वात् ग्रामाद्द्वितीया, कृत्प्रयोगे "कर्मणि कृतः" इति कर्मणि षष्ठी आत्मनेपदादयश्च । **अधितिष्ठतीति** 'ष्ठा' गतिनिवृत्तौ, ततस्तिव्, शव्, "श्रौतिकृवुधिवु०" ४।२।१०८। इति तिष्ठादेशः । 'आसिक्' उपवेशने इत्यध्यास्ते। **ग्रामोऽधिशयितो मैत्रेणेत्यादि** । अत्र यो मैत्रादिः कर्तृकरणरूपः स कर्म न भवति, कर्मभावे हि यथा आधारे सप्तमीं बाधित्वा द्वितीया भवति, तथा तृतीयामपि बाधित्वा द्वितीया स्यात् । अथ किमर्थमिदमारभ्यते ? यावता अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति, यथा—गुरुमधिशेते, गुरुमुपतिष्ठते इति तथात्राऽपि ग्रामोऽधिशयनादिना व्याप्यत इति नाऽऽधारोऽऽधारभाव इत्यत आह—**अकर्मका अपी**त्यादि । अयमभिप्रायः—सिद्धमेव कर्मत्वं परमेषां आधारभावबाधनार्थं वचनं यथा—अन्येषामाधार आधाररूपेणोच्यते, यथा—अयं लोको गुरुमठे शेते तथैषामाधारः कर्मभावेनैवोच्यते नाधाररूपतयेत्येतदर्थं वचनमित्यर्थः ॥ २० ॥

**उपान्वध्याङ्वसः** । अत्राऽऽधारः कर्मेत्यनुवर्तते । उपान्वध्याङ्वस आधारः कर्मेत्यन्वयः । उपादिभिर्द्वन्द्वं कृत्वा ततस्ते पूर्वे यस्मात् स चासौ वसतिश्चेति बहुव्रीहिगर्भो विशेषणसमासो मयूरव्यंसकादित्वात् पूर्वशब्दलोपश्चेत्याह—**उपअन्वित्यादि** । उपपूर्वात् 'वसं' निवासेऽत कर्मणि क्ते, "क्षुधवसस्तेषाम्" ४।४।४३। इतीटि, "यजादिवचेः किति" इति य्वृति, "घस्वसः" इति षत्वे—**उपोषित** इति । भावेऽनटि—**उपवसनमिति** । **ग्राम उपोष्यत इति** । आत्मनेपदेनोक्तत्वात् कर्मणो ग्रामात् प्रथमा । ननु स्थानार्थस्यैव वसेर्ग्रहणमिष्यते, तेन ग्रामे तिष्ठतीत्यत्रार्थे ग्राममुपवसतीति प्रयोगः, अस्थानार्थत्वे तु ग्रामे उपवसतीति तदेतत्कथम् ? उच्यते—नाऽत्रोपपूर्वस्य वसेर्ग्रामोऽधिकरणं किंत्वनुपसर्गस्य, ग्रामेऽसौ वसन् त्रिरात्रमुपवसतीति, विशिष्टाऽऽधारावस्थितत्वेन निश्चिते देवदत्ते भोजननिवृत्तिविशिष्टकालं प्रत्याययितुमिदं प्रयुज्यते ग्रामे उपवसतीति । तत्राऽन्तरङ्गत्वात् प्रतीयमानवसिक्रियापेक्षो ग्रामस्याधिकरणभावः । उपवसनं तु स्वरूपेणैव कालमपेक्षत इति कालेनैवास्याऽन्तरङ्गः सम्बन्धो ग्रामादिना तु बहिरङ्ग इति । अत्र कश्चिदाह—स चेत्, सिद्धं यदा वसतिर्विवक्षितः । यदा तूपवसतिरेव तदा प्राप्नोति, न चोपवसेराधारभावं प्रति ग्रामादिरयोग्य एव यदन्यापेक्ष एवास्याधारभावः कल्प्यते, तस्माद्यतितव्यमेवाऽत्र । अत्रोच्यते—साहचर्यात् स्थानार्थस्यैव परिग्रहः, अन्वादिपूर्वो वसतिः स्थानार्थमाचष्टे, शब्दशक्तिरत्र प्रमाणं, तत्साहचर्यादुपपूर्वस्यापि स्थानार्थस्य परिग्रहो न तु भोजननिवृत्तिवचनस्येत्यत आह—**अन्वादिसाहचर्यादिति** । स्थानार्थद्योतकत्वादुपशब्दोऽपि स्थानार्थ इत्युक्तम्—**स्थानार्थकस्यैवेति** । **अदाद्यनदाद्योरिति** । पूर्वाऽऽचार्यस्मृतिरियमित्यर्थः ॥ २१ ॥

---

१ पर ×× म० म० । २ अधे ° पु० । ३ °मुपो° म० म० । ४ °तीत्यर्थे अत्र पु० ।

## वाऽभिनिविशः ॥ २ । २ । २२ ॥

अभिनिनोपसर्गसमुदायेन विशिष्टस्य विशेराधारः कर्मसंज्ञो वा भवति । ग्राममभिनिविशते, पर्वतमभिनिविशते, ग्रामोऽभिनिविश्यते; ग्रामोऽभिनिविष्टः । व्यवस्थितविभाषेयं, तेन क्वचित् कर्मसंज्ञैव क्वचिदाधारसंज्ञैव भवति—कल्याणेऽभिनिविशते, या या संज्ञा यस्मिन् यस्मिन् संज्ञिन्यभिनिविशते, एतेषां शब्दानामेतेष्वर्थेष्वभिनिविष्टानाम्, अर्थेऽभिनिविष्टः ॥ २२ ॥

## कालाऽध्वभावदेशं वाऽकर्म चाऽकर्मणाम् ॥ २ । २ । २३ ॥

कालो मुहूर्तादिः, अध्वा गन्तव्य क्षेत्रं क्रोशादि, भावः—क्रिया गोदोहादिः, देशो जनपदग्रामनदीपर्वतादिः । अकर्मकाणां धातूनां प्रयोगे कालादिराधारः कर्मसंज्ञो वा भवति, अकर्म च—यत्रापि पक्षे कर्मसंज्ञा तत्राऽकर्मसञ्ज्ञापि वा भवतीत्यर्थः । कालः—मासमास्ते, मास आस्यते; सवत्सरं स्वपिति, संवत्सरः सुप्यते, दिवस शेते, दिवसः शय्यते, अध्वा-क्रोशं स्वपिति, क्रोशः सुप्यते; योजनमास्ते, योजनमास्यते; भावः—गोदोहमास्ते, गोदोह आस्यते, ओदनपाकं शेते, ओदनपाकः शय्यते, देशः—कुरून् आस्ते, कुरव आस्यन्ते; ग्रामं वसति, ग्राम उष्यते । अविवक्षितकर्माणः सकर्मका अप्यकर्मकाः—मास पचति, मासः पच्यते; क्रोशमधीते, क्रोशोऽधीयते, ओदनपाकं पठति, ओदनपाकः पठ्यते; कुरून् पठति, कुरवः पठ्यन्ते, पक्षे—रात्रौ सुप्यते, रात्रौ नृत्त च द्रक्ष्यसि, क्रोशे सुप्यते, गोदोहे आस्ते, ओदनपाके स्वपिति, पञ्चालेषु वसति, ग्रामे वसति, ग्रामे वासः, ग्रामे वासी, तथा रात्रावधीतम्, दिवसे भुक्तम् । कालाऽध्वभावदेशमिति किम् ? प्रासादे आस्ते, शय्यायां शेते । अकर्म चेति किम् ? मासमास्यते, क्रोश सुप्यते, गोदोहमासितः, इदं गोदोहमासितम्, गोदोहमास्यते, कुरून् सुप्यते, एषु "तत्साप्याऽनाप्या०"इति, "गत्यर्थाऽकर्मकपिबभुजेः","अद्यर्थाच्चाऽऽधारे" इति भावे कर्तर्याधारे च यथायथमात्मनेपदक्तौ सिद्धौ । अकर्मणामिति किम् ? रात्रावुद्देशोऽधीतः, अहन्यध्ययनमधीतम् । कथ पचत्योदनं मासम्, भक्षयति धानाः क्रोशम्, पिबति पयो गोदोहम्, भजति सुखं कुरून् ?; द्विकर्मकत्वात् "कर्तुर्व्याप्य कर्म"इत्येव भविष्यति । अन्ये तु सकर्मकाणामकर्मकाणां च प्रयोगे कालाऽध्वभावानामत्यन्तसयोगे सति नित्यं कर्मत्वमिच्छन्ति—मासमास्ते, दिवसं पचत्योदनम्, क्रोश स्वपिति, क्रोश पठति वेदम्, गोदोहमास्ते, गोदोह पचत्योदनम् । अनेन कर्मसञ्ज्ञायां

---

**वाऽभिनिविशः** । अत्राऽऽधार कर्मेत्यनुवर्तते । अभिनिविश आधार कर्म वेत्यन्वय । अभि पूर्वो यस्मादसावभिपूर्व, अभिपूर्वश्चासौ निश्च अभिनि, तस्य पूर्वशब्देन बहुव्रीहिं कृत्वा पुनर्विशा कर्मधारयात् षष्ठी, उभयत्र मयूरव्यसकादित्वात् पूर्वशब्दलोप । द्वन्द्वे हि अभिनिशब्दयो प्रत्येकमभिसबन्ध स्यात्, यथा "उपान्वध्याङ्वस" इत्यत्रेत्याह—**अभिनिनोपसर्गे**त्यादि । पर्व्यते–पूर्यते शिलाभि —**पर्वत** इति "दृपॄवृ०" उणा० ७०४। इत्यते सिध्यति । अभिनिपूर्वात् 'विशत्' प्रवेशनेऽत "निविश" ३।३।२४। इति आत्मनेपदे ते शे च—**अभिनिविशते** इति । **व्यवस्थितविभाषेय**मिति । नाऽत्र वाशब्दो विकल्पार्थो येन समकक्ष्यतया द्वितीयासप्तम्यौ, किं तर्हि ? प्रयोगव्यवस्थयेति । तत्रेयं व्यवस्था–अभिनिपूर्वस्य विशेरस्ति समुदायार्थोऽवयवार्थश्च । तत्र यत्राऽवयवानुगमस्तत्र कर्मभाव –ग्राममाभिमुख्येन निविशते इति प्रतीयते । यत्र तु समुदायार्थवचनोऽवयवार्थस्तत्राऽधिकरणभाव, यथा—**कल्याणेऽभिनिविशते, अर्थेऽभिनिविष्ट** इति । अत्र हि धातूपसर्गसमुदायेन मनस एकाग्रता तात्पर्यमुच्यते । यथा–ग्रामे उपवसतीति भोजनत्याग । **या या संज्ञा यस्मिन् यस्मिन् संज्ञिन्यभिनिविशते** इत्यत्र च सञ्ज्ञानां विषयेणाऽव्यभिचार । **एतेष्वर्थेष्वभिनिविष्टाना**मिति । पा० समर्थसूत्रे भाष्यप्रयोगोऽयम् ॥ २२ ॥

**कालाऽध्वभावदेशं वाऽकर्म चाऽकर्मणाम्** । अत्राऽऽधार कर्मेति चानुवर्तते । अकर्मणां कालाऽध्वभावदेश आधार कर्म वा, अकर्म चेत्यन्वय । अनिर्ज्ञातपरिमाणाया क्रियाया परिच्छेदिका निर्ज्ञातपरिमाणा क्रिया–काल, स च मुहूर्तादिस्वरूप इत्याह—**कालो मुहूर्तादिरि**ति । **गन्तव्य**मिति । गमनार्हं, तेनाऽध्वशब्दाभिधेयस्याऽध्वन कर्मसञ्ज्ञा न भवति, न ह्यसावध्वविशेषक्रोशयोजनादिवद्गमनमर्हति । **भावः-क्रिये**ति । घञादिवाच्या सिद्धताऽऽख्या न साध्यमानेत्यर्थ । **पर्वतादि**रिति । आदिशब्देन खेटकर्वटमडम्बादिर्गृह्यते । **मास आस्यते** इति । आत्मनेपदेन कर्मणोऽभिहितत्वात् मासात् प्रथमा, तत्राऽपि गौणाधिकारात् "कालाऽध्वनो०"इत्यनेनापि द्वितीया न भवति । एव सर्वत्र । **शय्यत** इति । 'शीङ्' स्वप्ने, तत क्ये रूपम् । **गोदोहमास्ते, ओदनपाकं शेत** इति । अत्र गोदोहनपाकादीनां सत्यपि क्रियारूपत्वेन कालत्वे मासादय एव तद्वाचित्वेन लोके प्रसिद्धा न तु गोदोहादय इति भावस्य पृथगुपादानम् । अकर्मणामिति नित्याऽकर्मणामविवक्षितकर्मणां च सामान्येन ग्रहणमित्यविवक्षितकर्मकानुदाहरति—**मासं पचती**त्यादि । **अकर्म चेति किम् ?** इति । असिद्धसति **मासमास्यते, क्रोशं सुप्यत** इति भावे आत्मनेपद न स्यात् सकर्मकत्वादिति, कर्मण्यात्मनेपदे तु तेनैवाभिहितत्वात् कर्मणो द्वितीया न स्यात्, न चाऽभिहिते कर्मणि व्याप्तावपि द्वितीयेष्यते । एव **गोदोहमासितः, इदं गोदोहमासित**मिति कर्तर्याधारे च सकर्मकत्वादकर्मकलक्षण क्तो न स्यादित्याह—**एष्वि**त्यादि । **कथ**मिति । अकर्मणां प्रयोगे कर्मसंज्ञाविधानात् पच्यादीनां सकर्मकत्वात् कथं मासादे कर्मत्वमिति प्रश्नार्थ । समाधत्ते—**द्विकर्मकत्वादि**त्यादि । पूर्वेण सिद्धत्वात् नाऽनेन कर्मसञ्ज्ञेत्यर्थ । **अन्ये त्वि**ति । विश्रान्तविद्याधरादय । तत्र येषां बाह्यमोदनादिक नास्ति ते तदाऽऽसौ स्वमर्थमाश्यन्तराऽपेक्षया कर्माऽपि करणभावेनाऽऽचक्षते ते सकर्मका इत्युच्यन्ते, येषां बाह्य कर्म नास्ति न तदर्थ करणमास्ते तेऽकर्मका इत्युच्यन्ते । तथा सर्वत्र कर्मसञ्ज्ञायां कर्मण्यात्मनेपदादयोऽपि तन्मते सिध्यन्तीत्याह—**अनेने**त्यादि । नन्वेवमनेन व्याप्तौ कर्मसञ्ज्ञायां "कर्मणि" इति द्वितीयाया सिद्धौ "कालाऽध्वनोर्व्याप्तौ" इति सूत्र किमर्थमित्याशङ्का तन्मतेनैव परिहरति—**कालाऽध्वनोरि**त्यादि । अत्राऽऽसनादिक्रियायोगो न तु गुणद्रव्ययोग

---

१ कर्मकत्व० पु० ।

कर्मणि स्याद्यादयोऽपि—आस्यते मासः, सुप्यते क्रोशः, आसितो मासः; शयितः क्रोश इत्यादि। "कालाऽध्वनोर्व्याप्तौ" इति च गुणद्रव्ययोगे एवेच्छन्ति, न तु क्रियायोगे; अत्यन्तसंयोगादन्यत्र तु रात्रौ शेते, अध्वनि स्थित इत्यादावाधारत्वमेव ॥२३॥

## साधकतमं करणम् ॥ २ । २ । २४ ॥

क्रियासिद्धौ यत् प्रकृष्टोपकारकत्वेनाऽव्यवधानेन विवक्षितं तत् साधकतमं कारकं करणसंज्ञं भवति। काष्ठैः स्थाल्यां पचति, दात्रेण लुनाति, दानेन भोगानाप्नोति; अस्य पाकादिक्रियासु ज्वलनादयोऽवान्तरव्यापाराः, विवक्षया च प्रकृष्टोपकारकत्वात् साधकतमत्वम्। तमग्रहणमपादानादिसञ्ज्ञाविधौ तरतमयोगो नास्तीति ज्ञापनार्थम्, तेन—कुशूलात् पचति, गङ्गायां घोषः प्रतिवसतीति व्यवहितोपचरितयोरपि अपादानत्वमधिकरणत्वं च भवति। अस्य च कारकान्तराऽपेक्षया प्रकर्षो, न स्वकक्षायाम्; तेनैकस्यां क्रियायामनेकमपि करणं भवति—नावा नदीस्रोतसा व्रजति, रथेन पथा दीपिकया याति, सूपेन सर्पिषा लवणेन पाणिनौदनं भुङ्क्ते। करणप्रदेशाः—"करणं च" इत्यादयः ॥ २४ ॥

## कर्माऽभिप्रेयः संप्रदानम् ॥ २ । २ । २५ ॥

कर्मणा—व्याप्येन क्रियया वा करणभूतेन यमभिप्रेयते—श्रद्धानुग्रहादिकाम्यया यमभिसंबध्नाति स कर्माऽभिप्रेयः कारकं संप्रदानसंज्ञं भवति। देवाय बलिं ददाति, द्विजाय गामुत्सृजति, याचकायार्थं प्रयच्छति, शिष्याय धर्ममुपदिशति, राज्ञे कार्यमावेदयति; अस्याऽवान्तरव्यापारा अनिराकरणम्, प्रेरणम्, अनुमतिश्च, तान् कुर्वंस्त्यागादौ कारकत्वं लभते। क्रियाऽभिप्रेयः खल्वपि—पत्ये शेते, श्राद्धाय निगल्हते, युद्धाय सन्नह्यते, देवेभ्यो नमति, प्रणम्य शितिकण्ठाय, निवेद्यतां

---

इत्यर्थ । अत्र कृत्प्रयोगे कर्मणि षष्ठी नेष्यते। केचिदिच्छन्ति—मासस्य आसनेति। यदुत्पल—कालाऽध्वनोर्लक्षणत्वकालत्वयोर्या संज्ञा, द्वितीया तु "कालाऽध्वनो०" इत्यनेनैव सिद्धा, इतरयोस्तु द्वितीयार्थमपि ॥ २३ ॥

**साधकतमं करणम्।** "सिध्यतेरज्ञाने" ४।२।११। इति सिध्यतेर्णिग्येवाऽऽत्वे, "णकतृचौ" इति णके तमपि च—साधकतमं, क्रियतेऽनेनेति—करणम्। **प्रकृष्टोपकारकत्वेनेति।** प्रकर्ष—प्रकृष्ट, तेनोपकारकम्। अथवा—प्रकृष्यते स—प्रकृष्टस्तस्योपकारकशब्देन कर्मधारय। ननु सामग्रीत क्रियासिद्धिस्तत्र कथ किंचित् सातिशयोपकारक किंचिद्विपरीतम्[1] अन्वयव्यतिरेकाभ्यां हि सर्वेषा सामान्यमवगम्यते तस्मात् क्रियासिद्धौ साधकतमस्य समवो नास्तीति संमव कल्पनया दर्शयति—**अव्यवधानेन विवक्षितमिति।** वस्तुवृत्तेन साधकतमस्य समवो नास्ति। यद्व्यापाराऽऽनन्तर्येण तु क्रियासिद्धिर्विवक्ष्यते तस्य कल्पनया साधकतमस्येय सज्ञा, युक्त चैतत्, एव हि नैयत्येन न किंचित् करणम्। तथाहि—काष्ठैः पचतीति, कदाचित् काष्ठानि करण काष्ठसंनिधिज्ञानलक्षणव्यापाराऽऽनन्तर्येण क्वचित् क्रियासिद्धेर्विवक्षितत्वात्, कदाचित् स्थाल्या पचतीत्यत्र स्थाली—व्यापारसंभवनधारणलक्षणसामनन्तर्येण पचिक्रियासिद्धौ विवक्षितायां स्थाली करणम्। उक्तंच—"क्रियाया फलनिष्पत्तिर्यद्व्यापारादनन्तरम्। विवक्ष्यते यदा यत्र करण तत्तदा स्मृतम्" ॥ १ ॥, "वस्तुतस्तदनिर्देश्य न हि वस्तु व्यवस्थितम्। स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यत" ॥ २ ॥ ।**दात्रेण लुनातीत्यादि।** दात्रशब्दात् "हेतुकर्तृकरणे०" इति तृतीया, लुनातेश्च श्नाप्रत्यये प्वादित्वात् ह्रस्व । **अस्येति।** करणस्येत्यर्थ, अवान्तरव्यापारशालिन एव कारकत्वे विशेषसञ्ज्ञेति तात्पर्यम्, ज्वलनरूप उत्पातनिपातरूप पुण्यरूपश्च यथाक्रम प्रयोगत्रयेऽप्यवान्तरव्यापार । **विवक्षया चेति।** व्याख्यातप्रायम्। कारकाऽधिकारात् साधकत्वे लब्धे पुन साधकश्रुति प्रकर्षमवगमयिष्यति, यथा—अभिरूपाय कन्या देयेति लौकिके वाक्येऽभिरूपग्रहण प्रकर्षपरिग्रहार्थम्, तत् किमर्थ तमग्रहणमित्याह—**तमग्रहणमित्यादि।** अयमभिप्राय—तमग्रहणं ज्ञापनार्थम्, एतदनेन ज्ञाप्यते—अस्मिन् कारकाऽधिकारे सामान्यशब्द सूत्रोपारूढो यत्नमन्तरेण न विशेषे वर्तते, तेन "अपायेऽवधिरपादानम्" "क्रियाऽऽश्रयस्याऽऽधारोऽधिकरणम्" इत्यवधिना व्यवहितस्याऽऽधारमात्रस्य चापादानसञ्ज्ञाऽधिकरणसंज्ञा च सिद्धा भवति। अन्यथा वृक्षात् पर्णं पतति, दध्नि सर्पिरित्यादावव्यवहितस्याऽनुपचरितस्यैव च स्यात्, वृक्षस्याऽव्यवधानेनाऽवधित्वादाधाराऽऽधेययोश्च साक्षात् संबन्धादिति। न हि कुशूलस्याऽव्यवधानेनाऽवधित्वमस्ति, कुसूलाद्धि सूर्यादिनोद्धृत्य तत पचतीति सूर्यादेरेवाऽव्यवहिताऽवधिभाव, तथा गङ्गायां घोष इत्यत्र घोषगङ्गाकूलाभ्यामाधाराऽऽधेयाभ्यां य संयुक्तो देशस्तेन गङ्गायोगो न तु घोषगङ्गाकूलाभ्यामेव। एव च विप्रकृष्टोऽत्र गङ्गाया आधारभाव इत्यधिकरणसंज्ञा न स्यात्। ननु तरतमयोगो नास्तीति कथ केवलयो प्रत्यययो प्रयोग ? उच्यते—प्रत्ययानुकरणत्वात् तयो, अनुकरणाभ्यां चाऽनुकार्यौ प्रत्ययौ प्रतीयेते, ताभ्यामपि साहचर्यात् तदर्थः प्रकर्षो लक्ष्यत इति तमश्रुतिरेतत् ज्ञापयति—प्रकर्षप्रत्ययग्रहणमन्तरेणेह प्रकरणे सामर्थ्यगम्य प्रकर्षो नाश्रीयत इति। कारकान्तरापेक्षश्च करणस्याऽतिशयो न स्वस्थाने इत्याह—**अस्य चेत्यादि।** **नावा नदीस्रोतसा व्रजतीत्यादौ** सर्वेषां क्रियानिष्पत्तौ संनिपत्योपकारकत्वात् करण सिद्धमित्यर्थ **"करणं च"** २।२।१९। ॥ २४ ॥

**कर्माऽभिप्रेय. संप्रदानम्। करणभूतेनेति।** ननु कथ कर्मण करणत्वम्[?], उच्यते—क्रियाभेदात्, ददातिना व्याप्तुमिष्टत्वात् बल्यादिरर्थ कर्म तेन देवादिरभिसबध्यत इत्यभिसबन्धेन साधकतमत्वात् करणम्, यथा—निपीयमानेन मधुना मत्त इति। **देवाय बलिं ददातीत्यादि।** अत्र देवो बलिकर्मक दानमनिराकुर्वन् द्विजश्च गोकर्मक दान अनुमन्यमानो याचकादिश्चाऽर्थादिकर्मके दानादौ प्रेरणां कुर्वंस्तत्र निमित्तमित्याह—**अस्येत्यादि।** अवान्तरव्यापारवत एव कारकत्वे विशेषसञ्ज्ञाविषयत्वात्, उक्तञ्च—"अनिराकरणात् कर्तुस्त्यागाङ्ग कर्मणि स्थितम्। प्रेरणानुमतिभ्या वा लभते सप्रदानताम्" ॥ क्रियाग्रहणमपि कर्तव्यम्, इहापि यथा स्यात्—पत्ये शेते इत्युपसर्पणाङ्गे शयने 'शीङ्' धातुर्वर्तते। **श्राद्धाय निगल्हत इति।** श्राद्ध निन्दति, नास्तिकत्वात्। **युद्धाय संनह्यते**—युद्धविषय सनहनपूर्वक निश्चय करोतीत्यर्थ। न कर्तव्यम्, अनेनैव सिद्धत्वात्, क्रियां हि नाम लोके कर्मेत्युपचरन्ति—का क्रियां करिष्यसि ?, किं कर्म करिष्यसीति। एवमपि 'कृत्रिमाऽकृत्रिमयो कृत्रिमे संप्रत्ययो भवतीति न प्राप्नोति, नैवम्, क्रियाऽपि हि कृत्रिम कर्म। तथापि न सिध्यति, पत्ये शेते इत्यादौ क्रियान्तराऽनुपादानादेकस्या एव क्रियाया कर्मकरणभावस्यैकदा तदात्मन्येव विरोधात्। किं च "कर्तुर्व्याप्यं कर्म" इत्युच्यते कथ च नाम क्रिया क्रियाया व्याप्या स्यादिति चेत्, अत्रोच्यते—

---

१ °सु° म० म०। २ निगृह्यते म० म०।

महाराजाय सुग्रीवाय । अभिग्रहणादिह न भवति–भ्रतः पृष्ठं ददाति, रजकस्य वस्त्रं ददाति, राज्ञो दण्डं ददाति; इह च भवति–वाताय चक्षुर्ददाति, छात्राय चपेटां प्रयच्छति । संप्रदानप्रदेशाः—"दामः सम्प्रदानेऽधर्म्ये आत्मने च" इत्यादयः ॥ २५ ॥

## स्पृहेर्व्याप्यं वा ॥ २ । २ । २६ ॥

स्पृहयतेर्धातोर्व्याप्यं वा संप्रदानसंज्ञं भवति । पुष्पेभ्यः पुष्पाणि वा स्पृहयति । व्याप्यमिति किम् ? पुष्पेभ्यः स्पृहयति वने, आधारस्य मा भूत् । संप्रदानसंज्ञापक्षे धातोरकर्मकत्वम्, तेन पुष्पेभ्यः स्पृह्यते मैत्रेण, पुष्पेभ्यः स्पृहयितव्यम्, पुष्पेभ्यः सुस्पृहम्, पुष्पेभ्यः स्पृहितो मैत्रः; एषु भावे आत्मनेपदतव्यखलः कर्तरि च क्तः सिद्धः ॥ २६ ॥

## क्रुद्द्रुहेर्ष्याऽसूयार्थैर्यं प्रति कोपः ॥ २ । २ । २७ ॥

अमर्षः–क्रोधः, अपचिकीर्षा–द्रोहः, ईर्ष्या–परसंपत्तौ चेतसो व्यारोषः, गुणेषु दोषाऽऽविष्करणमसूया, एतदर्थैर्धातुभिर्योगे यं प्रति कोपस्तत्कारकं संप्रदानसंज्ञं भवति । मैत्राय क्रुध्यति, मैत्राय कुप्यति, मैत्राय रुष्यति, मैत्राय द्रुह्यति, मैत्रायाऽपचिकीर्षति, मैत्रायाऽपकरोति, मैत्रायेर्ष्यति, मैत्रायेर्क्ष्यति, मैत्राय सूर्क्ष्यति, चैत्रायाऽसूयति । यं प्रति इति किम् ? मनसा क्रुध्यति, मनसा द्रुह्यति, मनसेर्ष्यति, मनसाऽसूयति, करणस्य मा भूत् । प्रतिग्रहणं किम् ? यस्मिन्नित्युच्यमाने कर्तुरपि स्यात्–मैत्रेण क्रुध्यते । कोप इति किम् ? शिष्यस्य कुप्यति विनयाऽर्थम्, धनिनो द्रुह्यति धनाऽर्थी, भार्यामीर्ष्यति–मैनामन्योऽद्राक्षीदिति, चैत्रमसूयति लिप्सया । सम्प्रदानसंज्ञया कर्मसंज्ञाया बाधितत्वात् भावे आत्मनेपदादयः कर्तरि च क्तः सिद्धः–मैत्रायेर्ष्य-

---

क्रियापि सन्दर्शनप्रार्थनाऽध्यवसायादिभिरवश्य पूर्वभाविनीभिराप्तुमिष्टत्वात् कर्म भवति । तथाहि–य एष मनुष्य प्रेक्षापूर्वकारी भवति स बुद्ध्या तावत् कंचिदर्थं संपश्यति, सदृष्टे प्रार्थना, प्रार्थनायामध्यवसाय, अध्यवसाये आरंभ, आरंभे च निर्वृति, निर्वृतौ च फलाऽवाप्ति, इत्येव क्रियापि कृत्रिम कर्मेति प्रतीयमानक्रियाऽपेक्षस्यापि प्रविश पिण्डीमित्यादाविव कारकभावस्य भावादित्याह—**क्रियाभिप्रेयः खल्वपीति** । यथैव ग्राम गच्छतीत्यादौ ग्रामादेरपि क्रियाऽभिसबध्यमानस्य सप्रदानसंज्ञाप्रसङ्ग, नैष दोष, यदा संदर्शनादयो धात्वर्थात् भेदेन विवक्ष्यन्ते तदा तेषा प्राप्तकर्मभावया क्रियया यदभिसंबध्यते तस्येय सप्रदानसज्ञा, अत्र तु भेदस्याऽविवक्षितत्वात् गम्यर्थत्वात् सदर्शनादीनां गम्यवाच्यतैव । गमन ह्यत्राऽनन्तर्भूतसदर्शनादिक विवक्षित तत्कथमात्मन एवाऽऽत्मना व्याप्यमानता स्यात् । सा च भेदाऽभेदविवक्षा प्रयोगदर्शनवशेन नियतविषयैवाऽऽश्रीयते इति प्रयोगस्याऽसकर इति । ननु भ्रत पृष्ठ ददाति, रजकस्य वस्त्रं ददातीत्यादौ दीयमानपृष्ठवस्त्रलक्षणेन कर्मणा भ्रतो रजकस्य च व्याप्यमानत्वात् सप्रदानसज्ञा कुतो न भवतीत्याह–**अभिग्रहणादि**त्यादि । अभिरभिमतार्थ, प्र आरभार्थ, केवलस्य हि ईयतेर्गमन वाच्य नाऽभिसबन्ध । ततोऽभिग्रहण विशिष्टसबन्धप्रतिपत्त्यर्थम् । विशिष्टश्च सबन्ध कर्तु श्रद्धानुग्रहाऽपायाऽपगमकामनाजनित । स चाऽत्र नास्तीति कर्मण सबन्धमात्रेण हि सम्प्रदानत्वेऽभिग्रहणमनर्थक स्यादित्यर्थ । वाताय चक्षुर्ददाति, छात्राय चपेटा प्रयच्छतीत्यत्र तु श्रद्धाजनितसबन्धस्य विद्यमानत्वात् भवत्येवेत्याह—**इह च भवती**ति । कैश्चिदन्वर्थसज्ञाविधानात् ददातिक्रियाविषयैव सप्रदानसज्ञेत्यभ्युपगतम् । दान च स्वस्वत्वनिवृत्ति· परस्वत्वाऽऽपत्तिपर्यन्तमिति प्रत्यज्ञायि । तदुभयमपि न युक्तम्, अन्यत्राऽपि भाष्यकारेण सज्ञाया अभ्युपगमात् । तथा स्वत्वनिवृत्त्यभावेऽपि च ददाते प्रयोगस्य दर्शनात्, यथा–अनभिज्ञाय मतिं दद्यात्, खण्डितोपाध्यायस्तस्मै चपेटां ददातीति "**दामः**०" २।२।५२। ॥ २५ ॥

**स्पृहेर्व्याप्यं वा** । अत्र सप्रदानमित्यनुवर्तते । स्पृहेर्व्याप्य वा संप्रदानमित्यन्वयस्तदर्थमाह—**स्पृहयतेरि**त्यादि । **पुष्पेभ्यः स्पृहयती**त्यादि । अत्राऽदन्तत्वात् स्पृहेरकारलोपस्य "स्वरस्य परे०" इति स्थानिवद्भावात् लघूपान्त्यगुणाभाव, अत्र हि पुष्पादे कर्तु क्रियाव्याप्यत्वात् नित्य कर्मसज्ञायां प्राप्तायां पक्षे संप्रदानसंज्ञा विधीयत इति । तथा च धातोरकर्मकत्वात् भावे आत्मनेपदादय कर्तरि च क्त सिध्यतीत्याह—**संप्रदानसंज्ञापक्षे** इत्यादि ॥ २६ ॥

**क्रुद्द्रुहेर्ष्याऽसूयार्थैर्यं प्रति कोपः** । **यं प्रति कोप** इति । यच्छब्दात् प्रतियोगे "भागिनि च०" २।२।३७। इति द्वितीया । क्रुधादिधातूनामर्थ व्याचष्टे—**अमर्षः–क्रोध** इत्यादिना । पूर्वात् संप्रदानमित्यनुवृत्त्या क्रुद्द्रुहेर्ष्याऽसूयार्थैर्य प्रति कोपस्तत् सप्रदानमित्यन्वय । **अपचिकीर्षा**–अपकर्तुमिच्छा स एव द्रोह । अन्ये 'त्वपकार एव द्रोह' इत्याहु, तथा ह्यपकुर्वन् स्वामिनमभिद्रुह्यतीत्यभिधीयते, तेषामपचिकीर्षेत्यपकारेच्छया तत्पूर्वकापकारोपलक्षणादपकार एवोक्तो भवतीति वेदितव्य । **एतदर्थैरि**ति । एतेऽर्था येषा तैर्धातुभिरिति धातुव्यतिरेकेणान्येषामेतदर्थानामभावादिति । अत्रेद विचार्यते–कोपाद्द्रोहादयो भिन्नस्वभावा व्याख्याता, तत्कथ तदर्थानां य प्रति कोप इति सामान्येनैतद्विशेषणमुपपद्यते ? तेषा हि य प्रति द्रोहो य प्रतीर्ष्या य प्रत्यसूयेत्येव घटते, नैष दोष, क्रोधस्तावत् कोप एव, द्रोहादयोऽपि द्विप्रकारा –केचित् कोपहेतुका केचिद्वस्त्वन्तरहेतुकाश्च । तत्रेह पूर्वेषां ग्रहण यथा स्यादुत्तरेषां मा भूदित्येवमर्थ य प्रति कोप इति विशेषण सामान्येनोपात्तम्, अन्यथाऽव्यभिचारादिदमनुपादेय स्यात् । कोपशब्दोऽपि द्विप्रकारोऽत्र परिगृहीतो मुख्यार्थो गौणार्थश्च । गौणार्थत्व च तस्य कार्ये करणोपचारात् कोपकार्यद्रोहाद्यर्थवृत्तित्वात् । **कोप** इति सामान्यविवक्षया चैकवचनम् । एवं च **भार्यामीर्ष्यती**ति कोपकारणिकाया ईर्ष्याया भार्यायामसभवात् न प्रवर्तते सप्रदानसंज्ञा । अत्र हि परकर्तृकदर्शननिमित्ता भार्यायामीर्ष्या, यदाह—**मैनामन्योऽद्राक्षीदि**ति । तथा शिष्यस्य कुप्यतीत्यादिषु पूर्वोत्तरोदाहरणेषु क्रोधद्रोहाऽसूयानामकोपप्रभवत्वात् संप्रदानत्वाभाव । ननु कोप· क्रोध एवेति भेदाभावात् कथ पौर्वापर्यम् ? उच्यते–प्रथमामनुद्भूतां कोपावस्थां द्वितीयां चोद्भूतां विकृतवाक्कायव्यापारानुमीयमानामाश्रित्य नाऽकुपित क्रुध्यतीत्येतदुच्यते इत्यदोष । 'क्रुधच्' कोपे, 'द्रुहौच्' ऽनुजिघांसायाम्, अनयोरकर्मकत्वात् तदर्थानां य प्रति कोपस्तत्र षष्ठ्यां प्राप्ताया तदपवाद संप्रदानसंज्ञा । 'सूर्क्ष्य', 'ईर्क्ष्य', 'ईर्ष्य', ईर्ष्यार्था, असूयेति

---

१××××× सु° माण्डा० । २ °न×सुमी० पु० । ३ ऽधर्म्ये° पु० । ४ °र्षा पु० । ५ मै० पु० । ६ °ति पु० । ७ °क्षीद ×× पु० ।

ते, मैत्रायाऽसूय्यते, मैत्रायेर्ष्यितव्यम्, मैत्रायाऽसूयितव्यम्, मैत्राय दुरीर्ष्यम्, मैत्राय दुरसूयम्, मैत्राय ईर्ष्यितः चैत्रः, मैत्रायाऽसूयितः। कथं चौरस्य द्विषन्? योऽस्मिन् द्वेष्टि य च वयं द्विष्म? इति, द्विषेरप्रीत्यर्थत्वात् न भविष्यति ॥२७॥

## नोपसर्गात् क्रुद्द्रुहा ॥ २ । २ । २८ ॥

उपसर्गात् पराभ्यां क्रुधिद्रुहिभ्यां योगे य प्रति कोपस्तत्कारक संप्रदानसंज्ञं न भवति। मैत्रमभिक्रुध्यति, मैत्रमभिद्रुह्यति, क्रुधिद्रुही सोपसर्गौ सकर्मकाविति द्वितीया। उपसर्गादिति किम्? मैत्राय क्रुध्यति, मैत्राय द्रुह्यति ॥ २८ ॥

## अपायेऽवधिरपादानम् ॥ २ । २ । २९ ॥

सावधिकं गमनमपायः, तत्र यदवधिभूतमपायेनाऽनधिष्ठितं तत्कारकमपादानसंज्ञं भवति। ग्रामादागच्छति, पर्वतादवरोहति, सार्थाद्धीनः, वृक्षात् पर्णं पतति, धावतोऽश्वात् पतितः, पततो देवदत्तात् धावत्यश्वः, मेषात् मेषोऽपसर्पति। तदेतत् त्रिविधम्—निर्दिष्टविषयम्, उपात्तविषयम्; अपेक्षितक्रियं च। यत्र धातुनाऽपायलक्षणो विषयो निर्दिष्टस्तन्निर्दिष्टविषयम्, यथा—ग्रामादागच्छति। यत्र तु धातुर्धात्वन्तराऽर्थाङ्ग स्वार्थमाह तदुपात्तविषयम्, यथा—बलाहकाद् विद्योतते विद्युत्—अत्र हि निःसरणाङ्गे विद्योतने विद्युतिर्वर्तते, यथा वा—कुशूलात् पचति—अत्राप्यादानाऽङ्गे पाके पचिर्वर्तते इति। यत्र तु क्रियावाचि पद न श्रूयते केवल क्रिया प्रतीयते तदपेक्षितक्रियम्, यथा—सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति। अपायश्च कायसंसर्गपूर्वको बुद्धिससर्गपूर्वको वा विभाग उच्यते, तेन—"बुद्ध्या समीहितैकत्वान् पञ्चालान् कुरुभिर्यदा। बुद्ध्या विभजते वक्ता तदाऽपायः प्रतीयते॥" इति अत्राऽपादानत्व भवति। एवम् अधर्मात् जुगुप्सते, अधर्मो-

---

कण्ड्वादियगन्त, अनयोस्तु सकर्मकत्वात् कर्मसंज्ञायां प्राप्तायां सम्प्रदानसंज्ञा। कथमिति। द्विषे क्रुधाद्यर्थत्वात् कथ चौरादे सम्प्रदानसंज्ञा न भवतीति प्रश्नार्थ। समाधत्ते—द्विषेरित्यादि। अत्राऽनभिनन्दने द्विषिर्वर्तते, यथा—औषध द्वेष्टि इति ॥ २७ ॥

**नोपसर्गात् क्रुद्द्रुहा।** संप्रदानमित्यत्राऽनुवर्तते यं प्रति कोप इति च। उपसर्गात् क्रुद्द्रुहा य प्रति कोपस्तत्र सम्प्रदानमित्यन्वय। क्रुधश्च द्रुहश्चेति समाहारद्वन्द्वात् तृतीया। **मैत्रमभिक्रुध्यतीति।** अत्र सम्प्रदानसंज्ञाया प्रतिषेधात् चतुर्थ्यभावात् द्वितीया। ननु केनाऽत्र द्वितीया? यदि "लक्षणवीप्स्येत्थम्भूतेष्वभिना" २।२।३६। इति सूत्रेण चेत्, नेह चतुर्थीप्राप्तिरस्ति, क्रुधिद्रुहिभ्यां सबन्धाऽभावात् अनुपसर्गत्वात् उपसर्गात् परत्वस्य चाऽसम्भवात् प्रतिषेधोऽनर्थक स्यात्। तथा मैत्रस्याभिक्रोद्धा मैत्रस्याभिद्रोग्धा इति कर्मणि षष्ठी न स्यात्, आत्मनेपदादयश्च न स्युरिति। अत इह कर्मत्वमेषितव्य, तच्चानयोरकर्मकत्वात् न लभ्यते इत्याह—**क्रुधिद्रुही सोपसर्गावित्यादि।** यद्यप्येतावनुपसर्गावकर्मकौ तथापि सोपसर्गौ सकर्मकौ भवत। **मैत्रमभिक्रुध्यति**—मैत्रमभिगम्याभिमुखीकृत्य वा क्रुध्यतीति, अकर्मका अपि हि धातव सोपसर्गा सकर्मका भवन्तीत्युक्तत्वात्; अत "कर्मणि" इत्येवाऽत्र द्वितीया। अथ यदा मैत्रादेर्लक्षणाद्यर्थेनाऽभिना योगस्तदा क्रुधादीनामुपसर्गपरत्वाभावात् प्रतिषेधाप्रवृत्ते सम्प्रदानाच्च "लक्षणवीप्स्ये०"इति द्वितीया वा स्यात् सम्प्रदानचतुर्थी वेति चेदुच्यते—इत्थमभि, मैत्राय क्रुध्यतीत्यादौ द्वयो सावकाशत्वात् इहोभयप्राप्तौ परत्वात् चतुर्थ्यामुत्पन्नायां मैत्रायाभिक्रुध्यति इत्येव स्यादिति ॥ २८ ॥

**अपायेऽवधिरपादानम्।** अथाऽवधिग्रहण किमर्थम्?, न च 'ग्रामादागच्छति शकटेन' इत्यपाये शकटस्यापि साधनत्वादपादानसंज्ञा प्राप्नोतीति वाच्यम्, 'धनुषा विध्यति' इतिवत् करणसंज्ञया बाधनात्। तथा 'ग्रामादागच्छन् कंसपात्र्यां पाणिनौदन भुङ्क्ते' इत्यत्राप्यधिकरणसंज्ञा बाधिका भविष्यति। नन्वागमने कंसपात्री साधनमेव न भवति, भुजिक्रियाया तु साधनमवधिभूता आधारभूता च, तत्र च परत्वादधिकरणसंज्ञेति, नैवम्, वस्तुस्थित्याऽत्राऽऽगमन प्रधानम्, तदङ्गन्तु भोजनम्। शब्दात्तु विपरीतो गुणप्रधानभाव प्रतीयते, तदुक्त हरिणा—"चङ्क्रम्यमाणोऽधीष्वात्र जपश्चङ्क्रमण कुरु। तादर्थ्यस्याविशेषेऽपि शब्दाद्भेद प्रतीयते" ॥ तत्र कंसपात्री भुजेः साधनत्वात् तद्द्वारेणाऽऽगमनस्यापि भवत्येव साधनमिति। इद तर्हि 'वृक्षस्य पर्णं पतति' इत्यादौ स्यात्, अपायस्य विद्यमानत्वात्। नन्वत्रापि कारकत्वाभावात् संज्ञा न भविष्यति, अपायाभावाच्च, सत्येवावधावपायो भवतीति पूर्वमुक्तत्वादिति चेत्, उच्यते—सतीहावऽधिग्रहणे विशिष्टोऽपायो लभ्यते, अन्यथा पातमात्रस्य लोकेऽपायत्वेन प्रसिद्धत्वात् तस्यैव ग्रहणं स्यादित्याह—**सावधिकं गमनमपाय इति।** अवधिश्च नैवविधस्य गमनस्याधिष्ठानमित्याह—**अपायेनाऽनधिष्ठितमिति।** उक्तलक्षणेन गमनेनाऽनाविष्ट इत्यर्थ। नन्वेव तर्हि गतियुक्तेषु 'धावतोऽश्वात् पतित' इत्यादिषु अपादानत्व न स्यात्, 'ग्रामादागच्छति', पर्वतादवरोहतीत्यादिष्वेव स्यात्; अत्र हि धावनश्च पातस्य निमित्त, धावन च गमनमेवेति नास्त्यश्वस्याऽपायेनाऽनधिष्ठितत्वम्। नैष दोष। न हि गमनमात्रमपाय, किं तर्हि? सावधिक गमन, तच्च देवदत्तकर्तृक पातरूप, तेन च धावतोऽप्यश्वस्याऽऽवेशाभावात् न विरुध्यतेऽपादानसंज्ञेति। एव तर्हि 'ग्रामान्नागच्छति' इत्यत्र कथमपादानसंज्ञा?, उक्तस्य गमनस्याभावात्, यस्यां हि सत्यामपादानसंज्ञा स्यात् प्रतिषिध्यतेऽत्र साऽऽगमनक्रिया, नैष दोष, अत्र ह्यपादानसंज्ञायामुत्पन्नायां पश्चात् प्रतिषेधेन सबन्ध, अन्यथा प्रतिषेधस्य विषयो न प्रतिपादित स्यात्। तथाहि—अपादानसाधनाऽऽगमनक्रिया प्रतिषेद्धुमिष्टा, यदि चाऽऽदावेव प्रतिषेधसबन्ध स्यादागमनाऽभावात् तदसबद्धस्य ग्रामस्याऽपादानसंज्ञा न स्यात्, ततश्च या प्रतिषेध्याऽपादानसाधनाऽऽगमनक्रिया प्रतिषेधस्य विषय सा न शक्यते प्रदर्शयितु, न चाऽप्रदर्शितविषय प्रतिषेधो युज्यते, तस्मात् पूर्वमपादानसंज्ञा भवतीति। ननु कुशूलात् पचतीति कथ कुशूलस्यापादानसंज्ञा? न हि पचनमपायो येनाऽपायेऽवधि स्यादित्याह—**तदेतत् त्रिविधमिति।** **निर्दिष्टविषयमित्यादिना** त्रैविध्यमेव स्वरूपोदाहरणाभ्यामाचष्टे। **अत्र हि निःसरणाङ्ग इति।** निःसरण चाऽपायरूपमिति भाव। **साकाश्येभ्यः पाटलिपुत्रका अभिरूपतरा इति।** अत्र सांकाश्यकै पाटलिपुत्रकाणा समगुणत्वात् य साम्यज्ञानयात् स प्रकर्षाऽऽश्रयेण पुनर्बुद्ध्या पृथक्कृत्वा वाक्य प्रयुङ्क्ते इति सिद्धाऽपादानसंज्ञेति। ननु कायसंसर्गपूर्वको विभागो मुख्यो बुद्धिपरिकल्पितस्तु गौण, ततश्च गौणमुख्ययोर्मुख्यस्यैव परिग्रहात् सांकाश्यकेभ्य इत्यादौ कारकशेषत्वात् षष्ठी प्राप्नोति, नैवम्, "साधकतम करणम्" इत्यत्र तमग्रहणेन गौणग्रहणस्यापि ज्ञापितत्वादुभयरूपस्याप्यपायस्य परिग्रह इत्याह—**अपायश्चेत्यादि।** **तेनेत्यादिना** गौणपरिग्रहफल दर्शयति। तेन 'जुगुप्साविरामप्रमादार्थानां प्रयोगेऽपादानसंज्ञार्थं' न यत्नान्तरमन्वेष्यं, तत्रापि बुद्धिकृताऽपायस्य विद्यमानत्वेनाऽनेनैव सिद्धत्वादित्याह—**एवमित्यादि।** यथा चाऽत्र बुद्धिपरि-

---

१ ०थ्रि० पु०।

द्विरमति, धर्मात् प्रमाद्यति; अत्र यः प्रेक्षापूर्वकारी भवति स दुःखहेतुमधर्मं बुद्ध्या प्राप्य नाऽनेन कृत्यमस्तीति ततो निवर्तते, नास्तिकस्तु बुद्ध्या धर्मं प्राप्य नैनं करिष्यामीति ततो निवर्तते इति निवृत्त्यङ्गेषु जुगुप्साविरामप्रमादेष्वेते धातवो वर्तन्त इति बुद्धिसंसर्गपूर्वकोऽपायः । तथा चौरेभ्यो बिभेति, चौरेभ्य उद्विजते, चौरेभ्यस्त्रायते, चौरेभ्यो रक्षति;—अत्र बुद्धिमान् वधबन्धपरिक्लेशकारिणश्चौरान् बुद्ध्या प्राप्य तेभ्यो निवर्तते, चौरेभ्यस्त्रायते इत्यत्रापि कश्चित्सुहृद्यदीम चौराः पश्येयुर्नूनमस्य धनमपहरेयुरिति बुद्ध्या तं चौरैः संयोज्य तेभ्यो निवर्तयतीत्यपाय एव । अध्ययनात् पराजयते, भोजनात् पराजयते;—अत्राऽपि अध्ययनं भोजनं वाऽसहमानस्ततो निवर्तते इत्यपाय एव । यवेभ्यो गां रक्षति, यवेभ्यो गां निषेधयति, कूपादन्धं वारयति, इहाऽपि गवादेर्यवादिसंपर्कं बुद्ध्या समीक्ष्याऽन्यतरस्य विनाशं पश्यन् गवादीन् यवादिभ्यो निवर्तयतीत्यपाय एव । उपाध्यायादन्तर्धत्ते, उपाध्यायात् निलीयते; मा मामुपाध्यायोऽद्राक्षीदिति तिरोभवति इत्यत्राऽप्यपायः । शृङ्गाच्छरो जायते, गोमयाद्वृश्चिको जायते, गोलोमाविलोमभ्यो दूर्वा जायते, बीजादङ्कुरो जायते,—अत्र शृङ्गादिभ्यः शरादयो निष्क्रामन्तीति स्फुट एवापायः । यदि निष्क्रामन्ति किं नाऽत्यन्ताय निष्क्रामन्ति ? संततत्वादन्याऽन्यप्रादुर्भावाद् वा । हिमवतो गङ्गा प्रभवति, महाहिमवतो रोहिता प्रभवति;—अत्राऽप्यापः संक्रामन्तीत्यपायोऽस्ति । यद्यपक्रामन्ति किं नात्यन्तमपक्रामन्ति ? संततत्वादन्याऽन्यप्रादुर्भावाद्वा । वलभ्याः शत्रुञ्जयः षड् योजनानि षट्सु वा योजनेषु भवति,—अत्र वलभ्याः निःसृत्य गतानि योजनानि, गतेषु वा तेषु भवतीत्यर्थः, कार्तिक्या आग्रहायणी मासे, ततः प्रभृति मासे गते भवतीत्यर्थः; उभयत्राऽपायः प्रतीयते । चैत्रात् मैत्रः पटुः, अयमस्मादधिकः, अयमस्मादूनः, माथुराः

कल्पितोऽपायस्सम्भवति तथा दर्शयति—**अत्र य** इत्यादि । **निवृत्त्यङ्गेष्विति** । निवृत्तिश्चाऽपायोपायरूपेत्यर्थः । **तथेति** । बुद्धिकृताऽपायस्य विद्यमानत्वात् 'भीत्रार्थानां भयहेतुरपादानम्' इत्यपि न वक्तव्यमित्यर्थः । 'चुरण्' स्तेये, "चुरादिभ्य॰" इति णिचोऽनित्यत्वात् तदभावे भिदादित्वादङि, आपि च—चुरा, सा शीलमस्येति विग्रहे "अङ्स्याच्छत्रादेरञ्" इत्यञि वृद्धौ भ्यसि च—**चौरेभ्य** इति । भयमाकुलीभावः, त्राणमनर्थप्रतिघात इति तेभ्यो निवर्तत इति निवृत्त्यङ्गे भये बिभेत्यादयो वर्तन्त इत्युपात्तविषयमेतदपादानमित्यर्थः । **अत्रापीति** । **अध्ययनात् पराजयते, भोजनात् पराजयते** इत्यत्र दुःखमध्ययनं, 'दुर्धरं च, गुरवश्च दुरुपचारा'भोजनमपि व्याधितस्यातृप्तेर्भुक्तवतो वा विरसत्वादिना दुःखमिति द्वयं बुद्ध्या प्राप्याऽसहमानस्ततो निवर्तत इति पूर्ववदपादानसंज्ञेति 'पराजेरसोढेऽर्थेऽपादानं' न वक्तव्यम् । तत्राऽसोढग्रहणात् पराजिर्न्यूनीभाव(शक्तिवैकल्य)वृत्तिर्गृह्यते न तु शत्रून् पराजयते इतिवदभिभववृत्तिः । अथ **यवेभ्यो गां रक्षती**त्यादावपादानसंज्ञार्थं 'वारणार्थानामीप्सितः' इति वक्तव्यम् । ननु यस्याऽऽत्मीया गावस्तस्य कथं यवा ईप्सिताः ? ईप्सितशब्दस्याऽभिप्रेतपर्यायस्य लोके रूढत्वात् इति चेदुच्यते—यस्यापि परकीया यवास्तस्यापि ते ईप्सिताः, यत ईप्सितशब्दः क्रियाशब्द आश्रीयते न रूढिशब्दः । तत्र वारणक्रियया परकीया अपि यवा वारयितुराप्तुमिष्टा भवन्ति, मा नशन्नेते इत्येतेभ्योऽसौ गा वारयति । यद्येवं कूपादन्धं वारयतीत्यत्र न प्राप्नोति, न हि तस्य कूप एवेप्सितो वारणक्रियया आप्तुमिष्टत्वात्, स हि अपश्यन्नपि गन्तव्यं जिगमिषति, अन्यथा न क्वचित्तस्य प्रवृत्तिः स्यादिति । अत्राऽपि न यत्नान्तरं विधेयमित्याह—**इहाऽपी**त्यादि । अयं हि पश्यति गवादेर्यवादिसंपर्के नूनमन्यतरस्य विनाशेन भाव्यं, ततश्चाऽधर्मराजभयादिस्ततो निवर्तयतीति सिद्धमपादानमिति । **उपाध्यायादन्तर्धत्ते** इत्यादि । अत्राऽपि पश्यत्ययं यदि मामुपाध्यायः पश्यति, ध्रुवं मे प्रेषणमुपालम्भो वेति स बुद्ध्या प्राप्य ततो निवर्तत इति येनाऽदर्शनक्रियाकर्त्रा उपाध्यायेनाऽऽत्मनो व्यवधाननिमित्तमदर्शनमिच्छति तस्यापि कर्तुरपायेऽवधित्वस्य सिद्धत्वात् 'अन्तर्धौ येनादर्शनमिच्छति' इत्यपि न वक्तव्यमित्याह—**मामुपाध्यायो** इत्यादि । तथा जन्यर्थस्य जायमानस्तस्य प्रकृतिरुपादानसहकारिलक्षणं कारणमपादानमित्यपि न वक्तव्यम् । शृङ्गाच्छरो जायते, गोमयाद्वृश्चिको जायते इत्यादि कथमित्याशङ्कायामाह—**अत्र शृङ्गादिभ्य** इति । पुनः पृच्छति—**यदि निष्क्रामतीति** । अयमर्थो—यद्धि यतोऽपक्रामति तत्पुनस्तत्र न दृश्यत इति प्रसिद्धम्, इह तु तत्राऽस्ति दर्शनमिति । समाधत्ते—**सन्ततत्वा**दित्यादि । यथा बिलात् दीर्घभोगो भोगी निष्क्रामन्नप्यविच्छेदात् तत्रोपलभ्यते तथा शरादयोऽपीति सिद्धा अपादानसंज्ञा, लोकप्रसिद्ध्याऽऽश्रयेणेतदुच्यते, लोके हि यद्यस्माज्जायते तत्तस्मान्निर्गच्छतीत्युच्यते । तर्काश्रयास्तु प्रक्रिया भिद्यन्ते, वैशेषिकदर्शने परमाण्वादिसमवेत कारणेभ्योऽपृथग्देशं कार्यमुत्पद्यत इति नास्ति कार्यस्याऽपक्रमः । साङ्ख्यदर्शनेऽप्याविर्भावतिरोभावलक्षणजन्मनाशरूपपरिणामाऽभ्युपगमात् नास्त्यपक्रमः । अथवा—अन्याऽन्यप्रादुर्भावादित्यनेन अन्ये चाऽन्ये च भवन्ति इत्यर्थकेन क्षणिकपक्षः द्रव्यान्तराऽऽरम्भपक्षः वा परिणामपक्षः वाऽऽश्रित्यैतदुच्यते । ननु सतो जन्माऽयोगादसतश्च कर्तृत्वासम्भवात् कथं शृङ्गाच्छरो जायते इत्यादिप्रयोगः ?, नैष दोषः, बुद्धिव्यवस्थितार्थस्य क्रियायां कारकरूपोपगमात् । एवं 'भुवः कर्तुः प्रभवोऽपादानम्' इत्यपि न वक्तव्यम् । **हिमवतो गङ्गा प्रभवति**—प्रथमत उपलभ्यत इत्यर्थः । अयमर्थो धातूनामनेकार्थत्वाद्वेदितव्यः । जन्यर्थस्तु न सम्भवत्येव, न हि हिमवान् गङ्गायाः कारणं, सा ह्यन्येभ्य एव कारणेभ्य उत्पन्नेति । यथा च न वक्तव्यं तथा दर्शयति—**अत्राऽपी**त्यादि । **यद्यपक्रामन्ती**त्यादिना पूर्ववत् प्रश्नपरिहारौ व्याचष्टे । तथा—**वलभ्याः शत्रुञ्जयः षड् योजनानि षट्सु वा योजनेष्विति** । वलते "कृशॄगॄ॰" उणा॰ ३२९। इत्यभे ततो गौरादित्वात् ङ्या—वलभी, अत्र प्रतीयमानमाह—**अत्र वलभ्या** इत्यादि । निःसृत्येत्येतदपेक्षया वलभ्युपात्तविषयमपादानमित्यत पञ्चमी । **षड् योजनानीति** । अत्र षड्योजनरूपस्याध्वनः शत्रुञ्जय इत्यनेनाऽध्वनोऽन्तेन सह "गते गम्येऽध्वनो॰" इति सूत्रेण सामानाधिकरण्यं तस्माच्च शत्रुञ्जय इत्यस्मात् या प्रथमाविभक्तिः सा योजनानीत्यत्राऽपीति । **गतानीति** । चैत्रेण कर्त्रा षड् योजनानि गतानि—अतिक्रान्तानि इति योजनानां कर्मत्वम्, उपचारात् योजनस्थनरगताऽपेक्षया योजनान्यपि गतशब्देनोच्यन्त इति तेषां कर्तृत्वं वा । गतेषु भवतीत्येतदपेक्षया **षट्सु योजनेष्विति** "यद्भावो भावलक्षणम्" इति सप्तमी । एवं **कार्तिक्या आग्रहायणी मासे**—ततः प्रभृति मासे गते भवतीति प्रतीते पूर्ववत् पञ्चमीसप्तम्यावित्यर्थं इत्याह—**उभयत्रे**त्यादि । ततो 'यतश्चाध्वकालनिर्माणं तत्र पञ्चमी' इति न वक्तव्यम् । कृत्तिकाभिश्चन्द्रयुक्ता पौर्णमासी "चन्द्रयुक्तात् काले॰" इत्यणि ङ्यां च—कार्तिकी, एवमग्रहायणेन मृगशिरसा चन्द्रोपेतेन युक्ता पौर्ण-

१ नि॰ क्रा॰ पु॰ ।

पाटलिपुत्रकेभ्य आढ्यतराः;-अत्र मैत्रादयः पुंस्त्वादिना संसृष्टाः पटुत्वादिधर्मेण ततो विभक्ताः प्रतीयन्ते इति सर्वत्राऽप्यपायविवक्षा । विवक्षान्तरे त्वपादानत्वाभावे यथायोगं विभक्तयो भवन्ति-वलाहके विद्योतते, वलाहकं विद्योतते, अधर्मं जुगुप्सते, अधर्मेण जुगुप्सते, मौर्ख्येण प्रमाद्यति, चौरैर्भयम्, चौरैर्बिभेति, चौरेषु बिभेति, चौराणां बिभेति, भोजनेन पराजयते, शत्रून् पराजयते, यवेषु गां वारयति; शृङ्गे शरो जायते इति ॥ २९ ॥

## क्रियाऽऽश्रयस्याऽऽधारोऽधिकरणम् ॥ २ । २ । ३० ॥

क्रियाऽऽश्रयस्य कर्तुः कर्मणो वा य आधारस्तत् कारकमधिकरणसंज्ञं भवति, अत्राऽपि प्रसिद्धाऽनुवादेनाऽप्रसिद्धस्य विधानमिति यत् क्रियाऽऽश्रयस्याऽधिकरण तदाधारसंज्ञं भवतीत्यपि सूत्रार्थः । कटे आस्ते, स्थाल्यां पचति; चैत्रसमवायिन्यामासिक्रियायां तदाश्रयं चैत्रं धारयन् कटादिर्हेतुतां प्रतिपद्यते, तण्डुलसमवायिन्यां च विक्लेदनक्रियायां तदाश्रयांस्तण्डुलान् धारयन्ती स्थाली हेतुत्वं प्रतिपद्यते इत्युभयत्र कारकत्वम् । तत् षोढा-वैषयिकम्, औपश्लेषिकम्, अभिव्यापकम्, सामीप्यकम्, नैमित्तिकम्; औपचारिकं च । तत्र अनन्यत्र भावो विषयः, तस्मै प्रभवति वैषयिकम्-दिवि देवाः, नभसि तारकाः, भुवि मनुष्याः; पाताले पन्नगाः । एकदेशमात्रसंयोग उपश्लेषस्तत्र भवमौपश्लेषिकम्-कटे आस्ते, पर्यङ्के शेते, शाखायां लम्बते, गृहे तिष्ठति । यस्याऽऽधेयेन समस्ताऽवयवसंयोगस्तदभिव्यापकम्, तद् हि आधेयेनाऽभिव्याप्यते, आधेयं वाऽभिव्याप्नोतीति कृद् "बहुलम्" ॥ ५ । १ । २ ॥ इति कर्मण्यपि णकः, तिलेषु तैलम्, दध्नि सर्पिः, गवि गोत्वम्, तन्तुषु पटः । यदाधेयसंनिधिमात्रेण क्रियाहेतुस्तत्सामीप्यकम्-गङ्गायां घोषः, कूपेषु गर्गकुलम्, बन्धुष्वास्ते; गुरौ वसति।

---

मासी-आग्रहायणी । तथा चैत्रात् मैत्रः पटुरित्यादौ अपि चैत्रादेः पञ्चमीविधानार्थं "पञ्चमी विभक्ते" इति नाऽऽरम्भणीयम्, अत्राप्यपायस्य विद्यमानत्वात्, यथा चाऽपायस्तथा प्रतिपादयति-अत्र मैत्रादय इत्यादि । अयमर्थः-मा भूदत्र विभागे शब्दान्तरोपादानं, अत एव शब्दादत्र विभागः प्रतीयते, तथाहि-चैत्रात् मैत्रः पटुरित्यत्र विनाऽपि तरप्प्रत्ययं पटुत्वेन द्वयोः संसृष्टयोरतिशयेन चैत्रात् मैत्रः पृथक् क्रियमाण एव प्रतीयते । तथा अयमस्मादधिकोऽयमस्मादून इत्यत्रापि आढ्यत्वेनाऽन्येन वा एकवर्गीकृतयोरेकस्मादितरस्य शब्दशक्तिस्वाभाव्यात् विभागः प्रतीयत एव । तथा माथुराश्च पाटलिपुत्रकाश्च द्वयेऽप्याढ्या इत्येकत्वा अनेन रूपेण संसृष्टा आढ्यतरा इति तरप्प्रत्ययार्थेनाऽतिशयेन पाटलिपुत्रकेभ्यो माथुराश्च बुद्ध्या विभज्यमाना श्रूयन्ते इत्यस्ति विभागो विभागश्चापायस्तत्र भवतु मा वा शब्दान्तरोपादानं प्रतीयमानाऽपायाऽवधिद्योतनार्थं पञ्चमी भवति । प्रतीयमानाऽपि हि क्रिया विभक्तिनिमित्तधर्माऽऽविर्भावाय भवत्येवेति प्रागुक्तत्वादिति न यत्नान्तरमास्थेयम् । नन्वेवं तर्हि विवक्षान्तरे विभक्त्यन्तरं प्राप्नोति यत्नान्तरमनारभ्यमाणस्येति चेत्, सत्यम्, इष्टमेवैतदित्याह—विवक्षान्तरे त्वित्यादि । यथायोगमाधारविवक्षायां सप्तमी, कर्मविवक्षायां द्वितीयेत्याद्युदाहरणानुसारेण द्रष्टव्यम् ॥ २९ ॥

**क्रियाऽऽश्रयस्याऽऽधारोऽधिकरणम्** । आश्रीयत इति आश्रयः "भृश्यदोऽल्" ५।३।२३। इत्यलि भवति, क्रियाया आश्रयः-क्रियासम्पादक इत्यर्थः । स च कर्ता कर्म च । द्विविधा हि क्रिया कर्तृसमवायिनी कर्मस्था च कर्मसमवायिनी च, ते वा जनयत इति तस्या आश्रयौ भवतः । आध्रियेते-अवतिष्ठेते क्रियाश्रयौ कर्तृकर्मणी अस्मिन्निति "न्यायावाया०" ५।३।१३४। इति घञि आधारः, अत आह-क्रियाऽऽश्रयस्येत्यादि । क्रियाऽऽधार इत्येतावत्युच्यमाने साक्षात् क्रियाऽऽधारभूतयोः कर्तृकर्मणोरेव संज्ञा स्यात् न तु तदाश्रयस्य कटादेः, मुख्याभावे गौणाश्रयणं स्यात् । न च कर्तृकर्मणोः कर्तृकर्मसंज्ञाभ्यां बाधितत्वात् मुख्याऽसम्भवात् गौणस्वीकार इति वाच्यम्, कर्मस्थक्रियेषु कर्तुः क्रियाश्रयत्वाभावात् अस्याऽप्रवृत्तौ कर्तृसंज्ञायाश्चरितार्थत्वात्, कर्तृस्थक्रियेषु च कर्मणः क्रियाऽऽश्रयत्वाभावात् कर्मसंज्ञाया, तस्मादाश्रयस्येति कर्तव्यम् । अत्रापीति । यथा "कर्तुर्व्याप्यं कर्म" इत्यत्र तथाऽत्रापीत्यर्थः । अयं च व्याख्यातप्रायः । कर्तुः कर्मणश्च क्रमेणाऽऽधारं दर्शयति—कटे आस्ते इत्यादि । एतदेव भावयति—चैत्रेत्यादिना । चैत्रे कर्तर्यासिक्रिया समवेतेत्यर्थः, तण्डुलेषु कर्मसु विक्लेदनक्रिया समवेता । विश्लेषेण स्फुटो भेदोऽवयवानामुच्छूनतालक्षणोऽत्र विचटनशब्देनाऽभिधीयते । नन्वेवं क्रियाऽऽश्रयस्योपकारकत्वात् क्रियासिद्धौ व्यापाराभावात् अकारकत्वात् संज्ञाया अभाव इति चेत्, उच्यते-क्रियाऽऽश्रयस्य धारणद्वारेण क्रियासिद्ध्युपकारकत्वाददोषः । तदुक्तं-"कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् । उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्" ॥ अत एवोक्तं—हेतुत्वं प्रतिपद्यत इति । अधिकरणभेदानाह—तत् षोढेत्यादि । अनन्यत्र भाव इति । यथा चक्षुरादिप्रवृत्तीनामनन्यत्र भावात् चक्षुरादीनां रूपादयो विषयाः, ते हि तत्राऽवसीयन्ते नाऽन्यत्र भवन्तीत्युच्यन्ते । एवं देवादीनामन्यत्र प्रवृत्त्यभावात् दिवादयो विषया इति । "तस्मै योगादेः शक्ते" ६।४।९४। इतीकणि—वैषयिकम् । औपश्लेषिकमिति । "अध्यात्मादिभ्य इकण्" । कटादेर्देवदत्तादिना एकदेशमात्रसंयोगस्य संभवादौपश्लेषिकम् । यस्याऽऽधेयेनेति । यस्य तैलादिना समस्तावयवानां व्याप्तिः संयोगसमवायलक्षणः, संयोगशब्दस्य सम्बन्धमात्रवाचकत्वादित्यर्थः । सा च व्याप्तिराधाराऽऽधेययोः समानेति द्वयोः कर्तृत्वमविशिष्टमित्याह—तद्धीत्यादि । तदधिकरणत्वमित्यर्थः । कर्मणि कर्तरि वा णके तिलादेरेवाऽधिकरणत्वमिति । तिलेषु तैलमित्यादि । अत्र तिलावयवास्तैलावयवान् व्याप्याऽवतिष्ठन्ते तैलावयवा वा तिलावयवानिति । अनवयवस्यापि गोत्वादेर्व्यक्त्याद्यवयवान् व्याप्यावतिष्ठमानस्य व्यक्त्यादिरभिव्यापक एवाऽऽधार-गवि गोत्वमिति । तन्तुषु पट इति । क्रियाया अश्रवणेऽपि प्रतीयमानक्रियाऽपेक्ष आधारः । यदाधेयसंनिधिमात्रेणेति । संनिधिरदूरदेशावस्थितिस्तन्मात्रेणेति संयोगसमवायावत्राऽप्रयोजकावित्यर्थः । सामीप्यकमिति । भेषजादित्वात् स्वार्थिकष्ट्यण्, ततो यावादित्वात् कः । गङ्गाया घोष इत्यादीति । नन्वाश्रय आधारो भवति, आश्रयश्च संयोगसमवायाभ्यां, न चाऽवस्थितिक्रियाश्रयेण घोषादिना गङ्गादेः संयोगसमवायौ स्तः, नैष दोषः, यदायत्ता हि यस्य स्थितिः स विनाऽपि संयोगसमवायौ तस्याश्रयो भवति । तथाहि-यथा राजपुरुष इत्यत्र, पुरुषस्य न राज्ञा सह संयोगसमवायौ स्तः, अथ च तदधीनस्थितित्वात् राजाश्रयः पुरुष इति लोके व्यपदिश्यते । घोषादीनां च गङ्गायामत्ता स्थितिरिति संनिधिमात्रेण क्रियाहेतुत्वात् युक्तो गङ्गादीनामाश्रयभावः । यदा तु गङ्गादिशब्देन तत्समीप एव देशोऽभिधीयते तदा औपश्लेषिक एवाऽऽधार

निमित्तमेव नैमित्तिकम्—युद्धे संनह्यते, शरदि पुष्पन्ति सप्तच्छदाः, आतपे क्लाम्यति; छायायामाश्वसिति । उपचारे भवमौपचारिकम्—अङ्गुल्यग्रे करिशतमास्ते, स मे मुष्टिमध्ये तिष्ठति, यो यस्य द्वेष्यः स तस्याऽक्ष्णोः प्रतिवसति; यो यस्य प्रियः स तस्य हृदये वसति । अधिकरणाऽऽधारप्रदेशाः—"सप्तम्यधिकरणे" ॥ २ । २ । ९५ ॥, "अध्यर्यात्चाऽऽधारे" ॥ ५ । १ । १२ ॥ इत्यादयः ॥ ३० ॥

## नाम्नः प्रथमैकद्विबहौ ॥ २ । २ । ३१ ॥

एकत्वद्वित्वबहुत्वविशिष्टेऽर्थे वर्तमानात् नाम्नः परा यथासंख्यं सिऔजस्लक्षणा प्रथमा विभक्तिर्भवति । कर्मादिशक्तिषु द्वितीयादिविभक्तीनां विधास्यमानत्वादिह विशेषाऽनभिधानाच्च परिशिष्टेऽर्थमात्रे प्रथमेति विज्ञायते । तत्र द्वितीया-

---

इति । **नैमित्तिकमिति** । विनयादित्वात् स्वार्थिक इकण् । **युद्धे सन्नह्यत** इत्यादि । अत्र हि सन्नहनादीना युद्धादिनिमित्ताना विवक्षितत्वात् युद्धादेर्नैमित्तक एवाऽऽधार । सन्नहनादयस्त्वन्यत्राऽपि केनचिन्निमित्तेन सम्भवन्तीति न युद्धादिर्वैषयिक । अन्यत्राऽवस्थितस्यान्यत्राऽध्यारोप उपचारस्तत्र भव—**औपचारिकमिति** । अध्यात्मादित्वादिकण् । **अङ्गुल्यग्रे करिशतमित्यादि** । अत्र हि करिशतादीनामन्यत्राऽवस्थिताना केनाऽपि प्रयोजनादिनाऽङ्गुल्यग्रादावध्यारोप्यमाणानामङ्गुल्यग्रादिरौपश्लेषिकाभिन्न औपचारिक आधार उच्यते । यदा त्वङ्गुल्यग्रादिशब्देनोपचारादाधेयाऽधिष्ठितो देश एवोच्यते तदा औपश्लेषिक एव आधार । अत एवाहु—"आधारस्त्रिविधो ज्ञेय कटाऽऽकाशतिलादिषु । औपश्लेषिको वैषयिकोऽभिव्यापक एव च" ॥ ३० ॥

**नाम्नः प्रथमैकद्विबहौ** । एकद्विबहौ नाम्न प्रथमा इत्यन्वय । 'मर्यादाभिविधौ' इतिवत् '**एकद्विबहौ**' इति कर्मधारयात् सप्तमी । अर्थवच्छब्दरूप नाम । अर्थश्च द्विविधो—जातिर्द्रव्य च । तत्र जातेर्नामार्थत्वे तस्या एकत्वात् द्वित्वबहुत्वाऽसम्भवात् तत्सहचरितद्रव्यगत द्वित्वं बहुत्वं चाश्रयणीयम् । ततश्च वृक्ष इत्यत्राप्यवयवगतबहुत्वसद्भावात् बहुवचनप्रसङ्ग । अस्तु तर्हि द्रव्य नामार्थ , तत्राभिधेयगतमेव बहुत्वमाश्रीयते । वृक्षशब्दस्य त्ववयवी वाच्यो न त्ववयवा इति बहुत्वाऽप्रसङ्ग । आकृतिपक्षेऽप्यदोष , प्रत्यासत्त्या तदाधारद्रव्यगत द्वित्व बहुत्व चाऽश्रीयते न त्ववयवगत, जातेरवयवेष्वनाश्रितत्वात् । दारा इत्यादौ त्ववयवाऽवयविनोरभेदविवक्षया बहुत्वमाकृत्याधारगतमेव बहुवचनवाच्यम् । ननु द्रव्येऽपि नामार्थे विशेषाभावादर्थशब्दस्य वस्तुपर्यायस्यापि संभवात् 'वृक्ष', 'प्लक्ष' इत्यत्राऽपि बहुवचनप्रसङ्ग , बहवस्तेऽर्था —मूल स्कन्ध पलाशमिति । एवं तर्हि येष्वर्थेषु स्यादयो विधीयन्ते तेषु, केषु च स्यादयो विधीयन्ते ? एकत्वादिषु, न च स्कन्धशाखाफलपलाशादिरूपेणानेकत्वेऽपि वृक्षादिशब्दरूप तथाऽऽचष्टे इति न तस्य सा सख्या इति बहुवचन न भवतीति मनस्यनुसधायाऽऽह—**एकत्वद्वित्वबहुत्वविशिष्टेऽर्थे वर्तमानादिति** । यद्येव 'एकद्विबहौ' इति प्रकृत्यर्थविशेषणत्वात् क प्रत्ययार्थ ?, त एवेति ब्रूम , 'अनिर्दिष्टार्थाः प्रत्यया स्वार्थे भवन्ति' इति । तथाहि—पञ्चको नामार्थ । दधि पश्य, पय पयो जरयति, वासो वासश्छादयतीत्यादौ विभक्तिश्रवणमन्तरेणापि पञ्चाप्यर्था स्वार्थादय प्रतीयन्ते, विभक्तयस्तु क्वचित् द्योतकत्वेनापेक्ष्यन्ते । तत्सिद्धमेतत् कर्माद्येकार्यसमवेत एवैकत्वादौ एकवचनद्विवचनबहुवचनानि भवन्ति न त्ववयवगते । यद्येव स तर्हि तथा निर्देश कर्तव्य , न ह्यन्तरेण भावप्रत्यय गुणप्रधानो निर्देशो भवति । ततश्चेत्येके मन्यन्ते, तदेके मन्यन्ते इत्यत्रैकवचन प्राप्नोति, यतो नामार्थ एकत्वमप्यत्रास्ति बहुत्व च, एकद्विबहावित्यत्र च विशेषानुपादानात् वैपुल्यरूपस्यापि बहुत्वस्य ग्रहणात् परत्वात् बहुवचनप्रसङ्गो—बहुरोदन , बहु सूप इति । नैष दोष । अन्तरेणापि भावप्रत्ययात् गुणस्य गुणिविशेषकत्वेन उपादानात् गुणगुणिनोरभेदोपचारात् सामानाधिकरण्यात् गुणप्रधाननिर्देशस्य संभवात् , यथा—पट शुक्ल, इति । यदा तु गुणिना गुणो व्यपदिश्यते—पटस्य शुक्ल इति, तदा स्वप्रधानो गुणो भवतीति द्रव्ये व्यतिरेकविभक्ति षष्ठी । गुणिनो ह्याधारत्वविवक्षायां सप्तम्यपि, यथा—कर्मणि या संख्येति । कर्मादिभिरेकत्वादीनां विशेषणात् विनापि भावप्रत्यय गुणप्रधाननिर्देशप्रतीतिरिति । यद्येव बहुत्वस्यैकत्वात् सर्वदा बहाविति भाव्य कथ बहुषु बहुवचनमिति प्रयोग ?, उच्यते—आश्रयगतं बहुत्वं बहुत्वे गुणे आरोप्य निर्देशाददोष । तथा 'इत्येके मन्यन्ते' इत्यत्राऽन्यार्थवृत्तिग्रहणादेकवचनप्रसङ्गोऽपि न वाच्य , एकशब्दस्य अन्याऽसहायसख्याप्रथमाऽल्पप्रधानसाधारणार्थवृत्तित्वेन अनेकार्थत्वात् । तथाहि—सधमादो द्युम्न एकास्ता । एका—अन्या इत्यन्यार्थवृत्ति । एकव्यञ्जनम् , एकाकिभि क्षुद्रकैर्जितमित्यादावसहायवृत्ति । एको द्वौ बहव इति संख्यावृत्तिरित्यादि । तथा विपुलार्थवृत्तेरपि बहुशब्दस्य नात्र ग्रहणम् , एकद्विबहावित्यत्र सख्यार्थवृत्तिना द्विशब्देन साहचर्यात् एकबहुशब्दावपि तदर्थवृत्ती गृह्येते । प्रसिद्धा च सख्येयार्थत्वमेकादीनामष्टादशान्तानामुच्यते, 'आदशभ्य संख्या सख्येये वर्तत' इति । अन्यथा "द्व्येकयोर्द्विवचनैकवचने" इति समुदायस्य त्र्यर्थत्वात् बहुवचनप्रसङ्ग , द्वित्वैकत्ववृत्तित्वे त्वेकद्विशब्दयोर्द्विवचनमुपपन्न भवति । ननु लौकिकादेव प्रयोगादेकत्वादिषु एकवचनादीनां व्यवस्था भविष्यति किमर्थमेकद्विबहाविति ?, उच्यते—सामान्येन विधानात् दृष्टविरुद्धप्रयोगाच्च नियमार्थमिद, तथाहि—संख्यानिर्देशमन्तरेण सामान्येन नाममात्रात् स्यादयो विधीयन्ते, धातुमात्राच्च त्यादय । अथ शास्त्रेऽनुपात्तोऽप्यर्थ प्रयोगादेव व्यवस्थाप्यते, यत स्यादयस्तावत् स्वार्थे विधीयमाना पञ्चको नामार्थ इति दर्शने सख्याया सिद्धा , सख्याविशेषावगतिस्तु लोकात् सिद्धा । त्यादयोऽपि कर्तृकर्मणोर्विधीयमाना स्वभावत संख्यायुक्तयोरेव तयोर्वाचका भविष्यन्ति, सख्याविशेषश्च प्रयोगदर्शनादवगम्यते । एतदप्यसाधीय , दृश्यते खल्वपि लोके विप्रयोगः । तद्यथा—'अक्षीणि मे दर्शनीयानि', 'पादा मे सुकुमारा' इति द्वित्वेऽपि लोके बहुवचन दृश्यते इति व्यतिकरः प्राप्नोति, अव्यतिकरश्चेष्यते, तच्चान्तरेण यत्न न सिध्यतीति नियमार्थमिदम् । अत एवाऽग्रे वक्ष्यते—**एकद्विबहाविति च संकरनिवृत्त्यर्थ**मिति । न चैव ब्राह्मणा संघ इत्यत्र ब्राह्मणसंघरूपस्यार्थस्य ब्राह्मणरूपेण बहुत्वात् सघरूपेण चैकत्वात् सख्याद्वययोगात् वचनव्यतिकरप्रसङ्ग इति वाच्य, भिन्नपदवाच्यत्वेन भिन्नार्थत्वात् तयो । न हि ब्राह्मणरूपेण संघपद तमर्थमाचष्टे, संघरूपेण वा ब्राह्मणपदम् । भिन्न एव पदार्थ , तदेकत्व पदद्वयगम्य वाक्यार्थ इति शब्दार्थभेदात् नेतरसंख्येति न वचनव्यतिकर । एकद्विबहाविति नाम्नो विशेषणत्वादविशेषेण प्रथमाया विधानात् कर्माद्येकत्वेऽपि प्रसङ्ग इत्यत आह—**कर्मादिशक्तिष्विति** । **परिशिष्टे** इति ।

दिविनिर्मुक्तः स्वार्थद्रव्यलिङ्गसङ्ख्याशक्तिलक्षणोऽसमग्रः समग्रो वा पञ्चको नामार्थोऽर्थमात्रम्, तेषु शब्दस्यार्थे प्रवृत्तिनिमित्तं स्वरूपजातिगुणक्रियाद्रव्यसंबन्धादिरूपं त्वतलादिप्रत्ययाऽभिधेयं स्वार्थः; स च भावो विशेषणं गुण इति चाऽऽख्यायते– डित्थः, डवित्थः, गौः, अश्वः, शुक्लः, कृष्णः, कारकः, पाचकः, दण्डी, विषाणी, राजपुरुषः, औपगवः, गर्गाः, पञ्चालाः। यत् पुनरिदंतदित्यादिना वस्तूपलक्षणेन सर्वनाम्ना व्यपदिश्यते, स्वार्थस्य व्यवच्छेद्य लिङ्गसङ्ख्याशक्त्याद्याश्रयः सत्त्वभूतं तद्द्रव्यं–विशेष्यमिति चाऽऽख्यायते–इयं जातिः, अयं गुणः; इदं कर्मेति। यदर्थे सदसद्वा शब्दत एवाऽऽन्नसीयते तत् ड्याबादिसंस्कारहेतुः–स्त्री, पुमान्, नपुंसकमिति लिङ्गम्; स्त्री, पुमान्, नपुंसकम्, पट्वी, खट्वा, युवतिः। यस्यामेकवचनद्विवचनबहुवचनानि भवन्ति सा भेदप्रतिपत्तिहेतुरेकत्वादिका सङ्ख्या–एकः, द्वौ, बहवः; वृक्षः, वृक्षौ, वृक्षाः। "निमित्तमेक इत्यत्र विभक्त्या नाऽभिधीयते। तद्वतस्तु यदेकत्वं विभक्तिस्तत्र वर्तते" ॥ १ ॥ यस्यां त्यादिभिरनभिहितायां द्वितीयाद्या व्यतिरेकविभक्तयः षष्ठी च भवति, सा स्वपराऽऽश्रयाऽऽश्रितक्रियोत्पत्तिहेतुः कारकरूपा तत्पूर्वकसंबन्धरूपा च शक्तिः, सा चाऽभिहिताऽर्थमात्रम्–क्रियते कटः, कृतः कटः, पचति चैत्रः, स्नानीयं चूर्णम्, दानीयो ब्राह्मणः, गोघ्नोऽतिथिः, प्रस्रवणो गिरिः, भयानको व्याघ्रः, स्थानीयं नगरम्, गोदोहनी पारी, गोमान् मैत्रः; चित्रगुश्चैत्रः। अर्थमात्रं चोपचरितमपि, यथा साहचर्यात्–कुन्ताः प्रविशन्ति, छत्रिणो गच्छन्ति, स्थानात्–मञ्चाः क्रोशन्ति, गिरिर्दह्यते, तादर्थ्यात्–इन्द्रः

---

उच्यते इत्यर्थः। तदेव परिशिष्टमर्थं व्याचष्टे—**तत्र द्वितीयादिविनिर्मुक्त** इत्यादि। तत्र पञ्चकस्य नामार्थस्योक्तस्य क्रमेण लक्षणमाचष्टे—**तेष्वि**त्यादि। **प्रवृत्तिनिमित्त**मिति। यतः शब्दस्य प्रवृत्तिस्तदुच्यते। **स्वार्थ** इति। स्वस्यैवार्थः स्वार्थो विशेषणमसाधारणोऽर्थः। यदा हि स्वरूपान्तरानुपाददानः शब्दः स्वाऽभिधेये प्रवर्तते, तदा सोऽयमित्यभिसंबन्धेन शब्दस्वरूपविशिष्टस्यैवार्थस्य प्रतीतेः शब्दस्वरूपमेव स्वार्थो विशेष्यन्तु द्रव्यं, यथा—**डित्थ** इत्यादि। जातिरनुवृत्तिप्रत्ययहेतुः, यथा—**गौरि**त्यादि। **शुक्ल** इति। अत्र तद्विशिष्टस्य द्रव्यस्य प्रतीतेर्गुणः स्वार्थः। **कारक** इत्यादौ तु क्रियाविशिष्टद्रव्याऽवभासमानात् क्रिया स्वार्थः, क्रियाविशिष्टसंबन्धो वा। द्रव्यमपि यदा द्रव्यान्तरस्य विशेषणभूतं भवति यष्टीः प्रवेशय, कुन्तान् प्रवेशयेति तदा यष्ट्यादिद्रव्यं विशेषणभावाऽऽपन्नं स्वार्थो द्रव्यान्तरं विशेष्यभावाऽऽपन्नं पुरुषादि तु द्रव्यम्। क्वचित् संबन्धोऽपि स्वार्थः, यत्र संबन्धनिमित्तः प्रत्ययो यथा–**दण्डी, विषाणी**। अत्र हि दण्डविषाणयोः संबन्धः स्वार्थः। आदिशब्दात् राजपुरुष इत्यादावप्युन्नेयमित्युदाहरति–**राजपुरुष** इत्यादि। **गर्गाः, पञ्चाला** इति। एतावानेवात्र विशेषो यष्ट्यादौ उपचारात् द्रव्यान्तरप्रतीतिरत्र तु प्रत्ययलुपेति। स्वार्थश्च शास्त्रान्तरे भाव इति विशेषणमिति गुण इति चोच्यते इत्युक्तं—**स चे**त्यादि। द्रव्यं व्याचष्टे—**यत् पुनरि**त्यादि। **वस्तूपलक्षणेनेति**। इदन्तदित्यादिचिह्नेन वस्तु ज्ञायत इत्यर्थः। **स्वार्थस्य व्यवच्छेद्यमिति**। स्वरूपादिलक्षणस्य स्वार्थस्य विशेषणत्वात् तस्य च व्यवच्छेदकत्वादनेन कर्तृभूतेन व्यवच्छिद्यत इत्यर्थः। **लिङ्गसंख्याशक्त्याद्याश्रय** इति। लिङ्गसङ्ख्याशक्तयो वक्ष्यमाणलक्षणाः, आदिशब्दात् स्वरूपादि, तद्धर्मत्वात् तेषां द्रव्यमाश्रयो भवति। लिङ्गं व्याचष्टे—**यदर्थे** इत्यादि। अर्थे–शब्दाभिधेये इत्यर्थः। **ड्याबादिसंस्कारहेतु**रिति। तेन हेतुभूतेन ङ्याबादिना शब्दस्य संस्कारः क्रियत इत्यर्थः। संख्यामाह—**यस्यामि**त्यादि। **भेदप्रतिपत्तिहेतुरि**ति। भेदो विशेषज्ञानोत्पत्तिरूपः, तथा हि पदार्थानां भेदः प्रतीयते, भेदः परिगणनं संख्येति लक्षणत्वात् तस्याः। ननु नामाऽर्थव्यतिरेकेणाऽन्येषामेकत्वादीनां विशेषणीभूतानामभावादेक इत्यादौ प्रथमाया अभावः, अत्रोच्यते—एकत्वादिष्वपि व्यतिरिक्ता एकत्वादयः सन्ति, एतदेवाह—**निमित्तमेक** इत्यादि। यथा शतमित्यत्र प्रवृत्तिनिमित्तं शतसङ्ख्याऽन्या, अन्या च विभक्तिवाच्या नामार्थगतैकत्वसङ्ख्या, तथैक इत्यत्रापि प्रवृत्तिनिमित्तविभक्तिवाच्ये द्वे एकत्वे, तत्र तदभिधानाय प्रथमा भविष्यति। एवं शब्दशक्त्याश्रयेणैकत्वादिभेदेन प्रथमोक्ता। अभेदेऽपि दोषाऽभावः, यत उभयवचना ह्येते द्रव्यं चाऽऽहुर्गुणं च। तत्र गुणोपसर्जनं द्रव्यमभिधीयते नाम्ना, द्रव्योपसर्जनस्तु गुणो विभक्त्या। यथा शौक्ल्यमिति गुणोपसर्जनद्रव्याऽभिधायिनः शुक्लशब्दात् द्रव्योपसर्जने तस्मिन्नेव गुणे भावप्रत्ययः। एतदेव यस्मिन् द्रव्ये स्थित एकत्वादिगुणस्तस्य द्रव्यस्यानुक्ता एकत्वादयः प्राधान्येन तदभिधानाय प्रथमा भविष्यति। अथवा–सङ्ख्या नामेयं परप्रधाना, संख्येयमनया विशेष्यम्। यदि चात्र प्रथमा न स्यात् सङ्ख्येयमविशेषितं स्यात्, केवलस्य नाम्नः प्रयोगाऽभावात् प्रथमाया अभावे एकादिशब्दानुच्चारणात्। अथवा–प्रत्ययपरैव प्रकृतिः प्रयोज्या न केवला इत्येवंरूपात् समयात् भविष्यति। अन्या अपि कस्मान्न भवन्तीति न वाच्यं, कर्मादीनामभावात् 'कर्मण्येव द्वितीया' इत्येवं द्वितीयादीनां नियतत्वात्। एवं तर्हि षष्ठी प्राप्नोति, कर्माद्यभावो हि शेषः, अशेषत्वात् न भविष्यति, उपयुक्तादन्यो हि शेषो नामार्थस्य च प्रथमाविधावुपयोगात् तस्य चाऽव्यतिरिक्तस्येह सद्भावात्। वचनव्यतिरेकप्रसङ्गेऽपि नाम्नि सामर्थ्यात् व्यवस्थासिद्धेः। एक इत्यत्र एकमेवैकत्वं, तच्च नामार्थेनाऽभिहितमित्यप्राप्ता प्रथमा समयवशेन आप्यते। तत्र यथा समयश्च पालितो भवति एकत्वानुगुणं चाऽन्यत्र तदभिधाने दृष्टसामर्थ्यं वचनं भवति, तथा कर्तव्यमिति। शक्तिस्वरूपं लक्षयति—**यस्यामि**त्यादि। **त्यादिभिरि**ति। तिशब्देन तिवादय आख्यातप्रत्यया आदिशब्देन च कृत्तद्धितसमासा उच्यन्ते, **तैरनभिहितायां**—अनुक्तायामित्यर्थः। **व्यतिरेकविभक्तय** इति। व्यतिरिच्यत इति व्यतिरेकस्तस्मिन् व्यतिरेके नामार्थादतिरेके–आधिक्ये द्वितीयाद्या विभक्तयो विशेषविभक्तय इत्यर्थः। **स्वपराश्रयेति**। तत्र कर्तृकर्मशक्ती स्वाश्रयगतक्रियोत्पत्तिहेतुभूते अपि, अन्यास्तु करणादिशक्तयः पराश्रयगतक्रियोत्पत्तिहेतुभूता एव। **तत्पूर्वके**ति। क्रियाकारकपूर्वकेत्यर्थः। **सा च अभिहिता**—निर्दिष्टा उक्ता इति यावत्। **क्रियते कट** इत्यादि। अत्राऽऽत्मनेपदादिभिः कर्मादिशक्तीनामभिहितत्वात् अर्थमात्रत्वात् तत्र सर्वत्र प्रथमेति। **स्नानीयमि**त्यादि। बहुलवचनात् करणसम्प्रदानयोरनीयः, ततः संप्रदाने टकि—**गोघ्नः**। **प्रस्रवण** इति। प्रस्रवत्यस्मादिति "भुजिपत्यादिभ्य०" इत्यपादानेऽनट्। बिभेत्यस्मादिति विग्रहे "शीभीराजेश्चानकः" उणा० ७१। इत्यानके–**भयानकः**। **स्थानीयमि**ति। बहुलवचनादधिकरणेऽनीयः। एवं गावो दुह्यन्तेऽस्यामिति—**गोदोहनी**। **गोमानि**त्यत्र तु संबन्धरूपायां शक्तौ मतुः। **चित्रगुरि**त्यत्र समासः। **उपचरितमि**ति। अध्यारोपितमित्यर्थः, अध्यारोपश्च अतस्मिन् तदिति प्रत्ययः, स च सहचरणादिनिमित्तादनेकधा भिद्यते। यदाहु–सहचरणस्थानतादर्थ्यवृत्तमानधरणसामीप्ययोगसाधनाऽधिपत्येभ्यो ब्राह्मणमञ्चकट-

---

१ °भवति पु०। २ °त्र पु०।

स्थूणा, प्रदीपो मल्लिका; वृत्तात्–यमोऽयं राजा, कुबेरोऽयं राजा; मानात्–प्रस्थो व्रीहिः, खारी मुद्गाः; धरणात्–तुला चन्दनम्, सामीप्यात्–गङ्गातटं गङ्गा, योगात्–रक्तः कम्बलः, साधनात्–अन्नं प्राणाः, आयुर्घृतम्; आधिपत्यात्–ग्रामाऽधिपतिर्ग्रामः । अलिङ्गमपि–त्वम्, अहम्, पञ्च, षट्, कति, अलिङ्गसङ्ख्यमपि–उच्चैः, नीचैः, स्वः, प्रातः; शक्तिप्रधानमपि–यतः, यत्र, यथा, यदा; द्योत्यमपि–प्रपचति, प्रतिष्ठते, प्रतीक्षते, प्रतिपालयति; स्वरूपमात्रमपि–अध्यागच्छति, पर्यागच्छति, प्रलम्बते; निषिञ्चति । तदयं वस्तुसंक्षेपस्त्याद्यन्तपदसामानाधिकरण्ये प्रथमेति । यत्राऽपि त्याद्यन्तं पदं न श्रूयते–वृक्षः, प्लक्ष इति तत्राऽपि गम्यते । यदाह—'यत्राऽन्यत् क्रियापदं न श्रूयते, तत्राऽस्तिर्भवन्तीपरः प्रयुज्यते' इति । नाम्न इति किम् ? निरर्थकाद् वर्णाद् धातुवाक्याभ्यां च मा भूत् । एकद्विबहाविति च सकरनिवृत्त्यर्थम् । ननु चाऽव्ययेभ्य एकत्वाद्यभावादनेन प्रथमा न प्राप्नोति, सत्यम्, लुब्विधानात्तु विभक्तीनां विधिर्विज्ञायते तदन्तर्गतत्वाच्च प्रथमाया अपि,

---

राजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तद्वदुपचार । क्रमेणोदाहरति—साहचर्यादित्यादिना । अहम्, पञ्च, कति इत्येषामलिङ्गत्व, 'नन्ता सख्या डतिर्युष्मदस्मच्च स्युरलिङ्गका' इत्यनुशासनात् । अलिङ्गसंख्यमपीति । सर्वलिङ्गसख्यास्वेकरूपत्वात् उच्चै प्रभृतीनामर्थमात्र विशिष्टलिङ्गसख्याभ्यामयोगादलिङ्गसख्यमित्यर्थ । तसादिभ्योऽपादानादिशक्तीना प्रतीयमानत्वात् यत इत्यादेरर्थमात्र शक्तिप्रधानं भवतीत्याह—शक्तिप्रधानमपीत्यादि । द्योत्यमपीति । प्राद्युपसर्गाणा क्रियार्थद्योतकत्वात् अन्ययोपसर्गत्वाभावात् तदर्थमात्र द्योत्यमेवेति । स्वरूपमात्रमपीति । सोपसर्गानुपसर्गधात्वर्थस्याध्यादिभिर्वैशिष्ट्याऽप्रतीते आगच्छतीत्यादिक्रियापदार्थ एव तदर्थ इत्यर्थ । नन्वर्थमात्रे प्रथमा इत्युक्तत्वात् मात्रग्रहणस्य चाधिकार्थव्यवच्छेदकत्वात् वीर पुरुष इत्यादौ सामानाधिकरण्यात् विशेषणविशेष्यभावस्याधिकस्य प्रतीते प्रथमा न प्राप्नोति । समासविधानमपि प्रथमोत्पत्तेर्लिङ्ग न भवति, वीरं पुरुषमानयेति द्वितीयान्तानामपि समाससभवादिति प्रथमा विधेया, नैष दोष, आधिक्यस्य वाक्यार्थत्वात् वीरनाम्नोऽनपेक्षितशब्दान्तरार्थसंसर्गोपहितविशेषणभावात् स्वार्थमात्रनिष्ठात् प्रथमा विधीयते । एव पुरुषशब्दादपि । पश्चात्त्वाकाङ्क्षादिवशेन विशेषणविशेष्यभावावगतिरुपजायमानबहिरङ्गत्वादन्तरङ्ग पदसंस्कारं पूर्वप्रवृत्त बाधितु न शक्नोतीति सिद्धा प्रथमेति । अथवा–त्यादिकृत्तद्धितसमासैरभिहिताया कर्त्रादिशक्तौ प्रथमेत्युक्तं, ततश्च वीरः पुरुष इत्यत्राऽर्थाधिक्येऽप्यभिहितत्वमात्राश्रया प्रथमेति । यथैव प्रासादे आस्ते इत्यत्रापि सदिक्रियाऽऽसिक्रियाद्वयसाधनाधिकरणशक्तिद्वयसद्भावादासिप्रत्ययेनानभिहितेऽप्यधिकरणे एकस्या शक्तेरभिहितत्वात् तदाश्रया प्रथमा प्राप्नोति, उच्यते–गुणक्रियया अधिकरणशक्तेरभिहितत्वेऽपि प्रधानक्रियाऽनभिहिताऽधिकरणशक्त्यपेक्षया प्रधानानुयायित्वात् व्यवहाराणा सप्तम्येव भवति । तस्मात् स्थितमेतत् 'स्यादिसमानाधिकरणे प्रथमा' इत्यमुमर्थं हृदि निधायाह—तदयं वस्तुसंक्षेप इत्यादि । भवन्तीशब्देन पूर्वाचार्यप्रसिद्ध्या वर्तमानाऽभिधीयते । ननु वर्णस्य निरर्थकत्वात् धातुवाक्यार्थयोश्चासत्त्वरूपत्वात् सख्याया सत्त्वधर्मरूपत्वेन तद्वृत्त्यभावात् सत्त्ववाचिनो नाम्न एव प्रथमा भविष्यति किं नाम्न इत्यनेन ?, उच्यते–यथा धातोरसत्त्ववाचित्वेऽपि साधनाश्रयामेकत्वादिसख्यामाश्रित्य तिवादीनामेकवचनादीनि प्रवर्तन्ते, तथा स्यादीनामपि प्रवर्त्तेरन्, एव वाक्यादप्यवयवगता वर्णाच्च निरर्थकादपि स्वरूपगता संख्यामाश्रित्य प्रथमा स्यादित्याह—निरर्थकादित्यादि । एकद्विबहाविति च सकरनिवृत्त्यर्थं भावात् नाऽव्ययेभ्य प्रथमा प्राप्नोतीत्याक्षिपति—ननु चेत्यादि । समाधत्ते—सत्यमित्यादि । यदि ह्यव्ययेभ्यो विभक्तयो न स्युर्न ततो "अव्ययस्य" इति विभक्तीना लुबुपपद्यते । यद्वा व्याकरणान्तरसूत्रेषु पदसंहिताक्रमभेदात् त्रिधा पाठो भवति । तत्र पदपाठ पदशुद्ध्यर्थं । संहितापाठो ग्रन्थाऽवधारणार्थ. । क्रमपाठ पदशुद्ध्यर्थोऽर्थविशेषार्थश्च । तत्र क्रमपाठमाश्रित्य वाक्यस्य नानात्वे 'नाम्न. प्रथमा' इति वाक्यात् अव्ययेभ्योऽपि सिद्धा प्रथमेति । तस्य चेत्यादिना विभक्तिविधे फल दर्शयति । पदसंज्ञा चेति । फलमिति सबध्यते । एकद्विबहाविति । विभक्तिविधानं यावत् एकद्विबहावित्यधिकारो द्रष्टव्य । स्वार्थद्रव्यलिङ्गसंख्याकर्मादिसमुदायो विभक्त्यन्तात् नाम्न. प्रतीयते । तत्र स्वार्थ –प्रवृत्तिनिमित्त विशेषण जातिगुणक्रियास्वरूपादिलक्षण, तदाधारो द्रव्य–विशेष्य, एतावर्थौ नाम विभक्तिमन्तरेणापि प्रतीतेर्न व्यभिचरतीत्यपोद्धारे नाम्न क्रियमाणेऽविप्रतिपत्तिरेतयोर्नामार्थत्वे । लिङ्ग तु किंचिन्नाम्न एव प्रतीयते–शरत्, दरत्, मधु, हे देवदत्त ? इति । किंचित् प्रत्ययाभिव्यङ्ग्य–कुमारी, प्रष्ठी इति । किंचिद्विभक्तिसधान एव गृह्यते–तट, तटी, तटमिति । सख्याकर्मादयोऽपि कदाचित् नाम्न एव प्रतीयन्ते–पयस्तिष्ठति, पय पश्यति, मधु तिष्ठति, मधु पश्यति इति । अतोऽवश्यमत्राऽऽचारोऽभ्युपगन्तव्यो व्याख्याकाराणाम्–कश्चित् सख्याकर्मादीन् विभक्तिवाच्यान् अभ्युपगच्छति त्रिको नामार्थ इति, कश्चित् सख्यैव विभक्तिवाच्या चतुष्को नामार्थ इति; कश्चित् पुन पञ्चाऽप्यर्था नामवाच्या, विभक्तयस्तु द्योतिका संख्याकर्मादीना स्त्रीप्रत्ययाश्च लिङ्गस्येति प्रतिपन्न । न चात्र काकदन्तपरीक्षायामादर, किमत्र युक्त दर्शनम् ?, यत सर्वस्यैवापोद्धारिकस्यार्थस्य परिकल्पनारूपत्वात् । यदाह–"द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तय । स्याद्वा सख्यावतोऽर्थस्य समुदायोऽभिधायक" ॥ १ ॥ इति । तत्र वार्तिककारश्लोकवार्तिककारयो पञ्चक एव नामार्थ इति दर्शन उभाभ्या नियमार्थत्वस्योपगमात् । भाष्यकारोऽप्यनेकदर्शनोपन्यासेऽपि पञ्चक एव नामार्थ इति दर्शन उभाभ्यां नियमार्थत्वस्यैव व्यवहरति । यदाह–पञ्चक एव नामार्थोऽनेनाश्रित इति । युक्तिरस्यामेव कल्पनायां दृश्यते–सख्याकर्मादयो हि नामवाच्यस्य द्रव्यस्य धर्मा, स्वार्थोपसर्जनश्च शब्दो द्रव्य एव वर्तते, द्रव्येणैवानयननयनादिव्यवहार, तत्र द्रव्यवाचिना शब्देन द्रव्यधर्माणामभ्यन्तरीकरणमिति नाऽयुक्तमेतत् नामार्थत्वेन पञ्चानामभिसंधान । विभक्तय स्त्रीप्रत्ययाश्च द्योतका विशेषवृत्तित्वस्येति । यदा त्वय न्यायोऽङ्गीक्रियते 'संख्याकर्मादयो विभक्तिवाच्या स्त्रिया वाऽभिधेयाया स्त्रीप्रत्यय' तदा विभक्तिमन्तरेण स्त्रीप्रत्ययेन च विना कथ सख्यादिप्रतिपत्ति स्यात्?, पय पयो जरयति, शरदागतेति । न हि बभ्रु, मण्डु, लमक इति प्रत्ययमन्तरेणापत्यार्थे वर्तते । ननु च प्रत्ययमन्तरेणापि वर्तन्ते–गर्गा, वत्सा, विदा, उर्वा इति, तत्र यदि संख्याकर्मादयो विनैव विभक्तेर्नाम्नोऽपि प्रतीतेर्नामार्थ इति व्यवस्थाप्यते अपत्यार्थोऽपि तर्हि कदाचित् प्रकृतिमात्रादेव प्रतीयत इति सोऽपि प्रकृत्यर्थ एव स्यात्, ततश्च सर्वे एव स्वार्थिका प्रत्ययाः प्रसक्ता विषम उपन्यास । प्रकृत्यर्थस्त्वाद्यप्रकृतिवाच्यात् पितुरर्थान्तरभूतोऽपत्यार्थं पुत्रादिवाच्यो न पितुरेवासौ सख्यावद्गुण, तत्राद्यप्रकृतिशब्दा गर्गादयो विनैव प्रत्ययैरत्यन्तभिन्नार्थाभिधायिनो बहुवचनविषया नित्यमनपत्या बहुत्व एव वर्तन्ते तेषां बभ्र्वादीनामिव सोऽयमित्यभिसबन्धेनापत्यार्थेऽवृत्तीनामसाधुत्वे प्रसक्ते लुपा साधुत्वमनुगम्यते 'प्रत्ययमन्तरेणाप्येतेऽपत्यार्थे साधव'। सोऽयमित्यभिसंबन्धमात्रेण त्वपत्यप्रत्ययेन विना बभ्र्वादयो यद्यप्यपत्ये प्रयुज्येरन्, नाऽवश्यमपत्य एव नियमो भवेद्, अनेकनिमित्तत्वात् शब्दस्य । क्वचित् तत्स्थत्वात्–मञ्चा क्रोशन्ति, गिरिर्दह्यते । क्वचित् तात्कर्मादेव

---

१ °वतीतिपर पु० ।

तस्य च फलम्—अथो स्वस्ते गृहम्, अथो स्वस्तव गृहमित्यादिषु "सपूर्वात् प्रथमान्ताद् वा" ॥ २ । १ । ३२ ॥ इति विभाषया ते मे आदेशौ, पदसंज्ञा च "अव्ययस्य" ॥ ३ । २ । ७ ॥ इत्यत्र वक्ष्यते। एकद्विबहार्विंशा विभक्तिविधानादिति ॥ ३१ ॥

## आमन्त्र्ये ॥ २ । २ । ३२ ॥

प्रसिद्धतत्संबन्धस्य किमप्याख्यातुमभिमुखीकरणमामन्त्रणम्, तद्विषय आमन्त्र्यः; तस्मिन्नर्थे वर्तमानात् नाम्न एकद्विबहौ यथासंख्यं प्रथमा विभक्तिर्भवति । हे देवदत्त!, हे देवदत्तौ!, हे देवदत्ताः!; हे पचन्!, हे पचमान! । आमन्त्र्य इति किम्? राजा भव—अत्र राजा नाऽऽमन्त्र्यः, किं तु स एव विधीयत इति पूर्वेणैव प्रथमा । षष्ठीप्राप्तौ वचनम् ॥ ३२ ॥

## गौणात् समयानिकषाहाधिगन्तरान्तरेणाऽतियेनतेनैर्द्वितीया ॥ २ । २ । ३३ ॥

आख्यातपदेनाऽसमानाधिकरणं गौणम्, गौणात् नाम्नः समयादिभिर्निपातैर्युक्तादेकद्विबहौ यथासंख्यम् अमौशस्‌रूपा द्वितीया विभक्तिर्भवति; षष्ठ्यपवादः । समया पर्वतं नदी, निकषा पर्वतं वनम्, हा देवदत्तं वर्धते व्याधिः, धिग् जाल्मम्, अन्तरा निषधं नीलं च विदेहाः, अन्तरेण गन्धमादनं माल्यवन्तं चोत्तराः कुरवः, अन्तरेण धर्मं सुखं न भवति, अति वृद्धं कुरून् महद्बलम्, कुरूनतिक्रमेण वृद्धमित्यर्थः; येन पश्चिमां गतः, तेन पश्चिमां नीतः । अन्तराऽन्तरेणशब्दौ साहचर्यात् निपातौ गृह्येते, तथाऽन्तराशब्दो मध्यमाधेयप्रधानमाचष्टे, अन्तरेणशब्दस्तच्च विनार्थं च; तेनेह न भवति—राजधान्या अन्तरायां पुरि वसति, किं ते केशवाऽर्जुनयोरन्तरेण गतेनेति? । हा तात!, धिग् जाल्म!; हा सुभ्रु! इत्यादावामन्त्र्यतया विवक्षा न हादियुक्तत्वेनेति न भवति । हा कृतं चैत्रस्य, धिक् कृतं मैत्रस्येत्यत्र च हाधिक्‌शब्दाभ्यां कृतशब्दे न्यग्भूतत्वात् न

—अन्नप्रदत्ते मञ्चदत्त इति तत्क्रियाचरणात् । क्वचित् तत्सामीप्यात्—गङ्गायां घोष, कूपे गर्गकुलम् । क्वचित् तत्साहचर्यात्—यष्टीः प्रवेशय, कुन्तान् प्रवेशयेति । उक्त च भाष्ये चतुर्भि—प्रकारैरतस्मिन् तद् इति भवतीति । यथा प्रष्ठोऽयमित्यभिसबन्धे लिङ्गस्य स्त्रीप्रत्ययेनोपव्यक्तिमन्तरेण प्रष्ठादिषु प्रसक्तेषु न नियमेन जायैव प्रतीयते, तस्मात्‌ गर्गादय सोऽयमित्यभिसबन्धेन प्रवृत्ता अपि तु स एवैषामयौं बहुवचनविषयाणामुपान्वाख्यायते । यदाह—"विनैव प्रत्यय वृत्तौ ये भिन्नार्थाभिधायिन । गर्गादयो लुका तेषां साधुत्वमनुगम्यते" ॥१॥ "सोऽयमित्यभिसबन्धात् प्रत्ययेन विना यदि । बह्वादय प्रयुज्येरन्नपत्ये नियमो भवेत्" ॥ २ ॥ "सोऽयमित्यभिसंबन्धे लिङ्गोपव्यञ्जनादृते । प्रष्ठादिषु न जायैव नियमेन प्रतीयते" ॥३॥ एवं यथाऽपत्यार्थं सति प्रत्यये प्रत्ययस्यैवान्वयव्यतिरेकाभ्यां दृष्ट इति प्रत्ययार्थ उपगम्यते, क्वचित् प्रत्ययमन्तरेणापि नियमेन प्रतीते प्रकृतिविशेषवाच्योऽपीत्यभ्युपेयते, तथा पयसी पयांसि पयसा पयस इति प्रतीयन्ते । भवन्तु तत्र विभक्त्यर्थो यत्र तु तामन्तरेणापि दृश्यन्ते—पय पयो जरयतीत्यादौ तत्र नामविशेषस्यापि सख्याकर्मादयोऽर्था इति त्रिको नामार्थ संख्याकर्मादयश्च विभक्तिवाच्या एवेति प्रतिज्ञा हीयते । पञ्चके तु नामार्थे विभक्तिमर्थविशेषस्य द्योतिका सहायमात्रमपेक्षन्ते कदाचिन्नाम । यथा धातुरर्थविशेषे वर्तितुमुपसर्गमिति न कश्चिदुपगतविरोधो दृश्यते ॥ ३१ ॥

**आमन्त्र्ये** । अत्र नाम्न प्रथमैकद्विबहौ इत्यनुवर्तते । आमन्त्र्ये नाम्न एकद्विबहौ प्रथमेत्यन्वय । क्रमेण कर्मप्रयोजनस्वरूपैरामन्त्र्य व्याचष्टे—**प्रसिद्धेत्यादि** । तथा हि—अभिमुखीकरणक्रियाविषयत्वात् **प्रसिद्धतत्संबन्धस्येति** कर्म, इष्टत्वात् **किमप्याख्यातुमिति** प्रयोजनम्, अव्यभिचारात् **अभिमुखीकरणं** स्वरूपम् । प्रसिद्धस्तेन आमन्त्रणे शब्देन सह वाच्यवाचकभावलक्षण संबन्धो यस्य तत्तयोक्त तस्येत्यर्थ , शेष सुबोधम् । नन्वामन्त्रणविषयस्य देवदत्तादे सत्त्वभूतस्यामन्त्र्यस्यैकत्वादिसंख्यायोगात् तद्वाचिनो नाम्न पूर्वेणैव प्रथमा भविष्यति किमर्थमिदमारभ्यत इत्याह—**षष्ठीप्राप्तौ वचनमिति** । आमन्त्र्यपद हि क्रियाया विशेषण भवति—हे देवदत्त! व्रजाम्यहमिति, व्रज्याभिमुखीकृतदेवदत्तविशिष्टा व्रज्या प्रतीयते । यदाह हरि —"आमन्त्रितपद यच्च तत् क्रियाया विशेषकम् । व्रजामि देवदत्तेति निघातोऽत्र प्रतीयते" ॥ १ ॥ ततश्च देवदत्तादेः क्रियाविशेषणात् कर्माद्यतिरिक्ताऽऽमन्त्रणसंबन्धे शेषरूपे वर्तमानात् गौणात् प्रथमाऽपवाद षष्ठी प्राप्नोति, तद्बाधनार्थमिदमुच्यते ॥ ३२ ॥

**गौणात् समयानिकषाहाधिगन्तरान्तरेणाऽतियेनतेनैर्द्वितीया** । अत्र नाम्न इति एकद्विबहाविति च वर्तते । समयानिकषाहाधिगन्तरान्तरेणाऽतियेनतेनैर्युक्तात् गौणात् नाम्न एकद्विबहौ द्वितीयेत्यन्वय । प्रधानमुपकार्यं यदर्थमन्यदुपादीयते यस्याऽऽख्यातपदेन सामानाधिकरण्यमिति, ततोऽन्यत् तस्योपकारक यत् तदर्थं तद्विशेषणं यस्याऽऽख्यातपदेनाऽसामानाधिकरण्य तद्गौणमित्याह—**आख्यातपदेनेत्यादि** । युक्तत्व च प्रकृतेरेव विज्ञायते न यस्य कस्यचिदित्याह—**गौणादित्यादि** । **समया पर्वतं नदीत्यादि** । अत्र समयेत्यादे समीपवचनस्य पर्वतादिविशेषण नद्यादिविशेष्यमित्युभयोरपि युक्तत्व, सर्वत्र सबन्धषष्ठ्यां प्राप्तायां द्वितीयाविधानम् । युक्तादित्यपेक्ष्य समयादिद्वन्द्वात् तृतीया । युक्तत्व च प्रकृतेरेव विज्ञायते न यस्य कस्यचिदितत्र विशेषमस्तीत्याख्यातपदेनासमानाधिकरण गौणमिति गौणादिति वचनात् ततो द्वितीया । **हा देवदत्तमिति** । अत्र शोच्यता देवदत्तस्य हाशब्देन द्योत्यते, यस्य तच्छोच्यत्वं स तेन युक्तस्तत्र निमित्तमित्याह—**वर्द्धते व्याधिरिति** । **धिग् जाल्ममिति** । अत्र जाल्मस्य निन्द्यता । **अन्तरा निषधं नीलं च विदेहा** इति । निषधनीलयोर्मध्ये इत्यर्थ । **एवमन्तरेण गन्धमादनं माल्यवन्तं** चेति । **अन्तरेण धर्म**—विना धर्मेणेत्यर्थ । ननु अन्तराशब्द क्रियावाचकोऽप्यस्ति अव्यय च; एवमन्तरेणेत्यपि अन्तरशब्दात् तृतीयस्यां भवत्यव्यय च, तत्र विशेषानुपादानात् सामान्येनोभयस्यापि ग्रहण कुतो न भवतीत्याह—**अन्तराऽन्तरेणशब्दावित्यादि** । समयादिभिर्निपातै सहैकवाक्योपात्तत्वादेतावपि निपातावित्यर्थ । **तथा अन्तराशब्द** इति । अधीयत इत्यादेय "य एभ्यात" इति य एत्वञ्च, मध्यशब्दस्य सामान्यतस्य यादृशोऽन्तराशब्दस्यापीति बद्धताधारशक्तिकोऽयमित्यर्थ । अन्तरेणशब्दस्य त्वेको दर्शितोऽर्थोऽपरो विनार्थश्चेत्याह—**अन्तरेणेत्यादि** । **राजधान्या अन्तरायामित्यादि** । बाह्यायामभ्यन्तरायां चेत्यर्थ । **किं ते इत्यादि** । अत्रान्तरशब्दो विशेषवाची, गमिर्ज्ञानार्थः, विशेषेण ज्ञातेन किं प्रयोजनमित्यर्थ । यदा तु सामान्येन कष्टादौ हाशब्दादिक प्रयुज्य कश्चिदामन्त्र्यते हा तातेत्यादि तदा न हाशब्दादिना तातादिर्युक्त इति प्रथमैव भवति, यतस्तृतीयया तैर्युक्तत्वमाक्षिप्यत इत्याह—**हा तातेत्यादि** । पदान्तरप्रयोगानपेक्षितयाऽत्रान्तरङ्गत्वादामन्त्र्यविभक्ते प्रथमाया एव न्याय्य-

१ °त्यादिवि° म० म० ।

चैत्रादेः साक्षाद्योगः, किं तर्हि ?; तद्विशिष्टेन कृतशब्देन । बहुवचनादन्येनाऽपि युक्ताद् भवति–न देवदत्तं प्रति भाति किंचित्, बुभुक्षितं न प्रतिभाति किंचित्, 'वृणीष्व भद्रे प्रतिभाति यस्त्वाम्', 'ग्रोऽक्षपादमृषिं न्यायः प्रत्यभाद् वदतां वरम्', धातुसंबद्धोऽत्र प्रतिस्तेन "भागिनि च प्रतिपर्यनुभिः" ॥ २ । २ । ३७ ॥ इति न सिध्यति । गौणादिति किम् ? अन्तरा गार्हपत्यमाहवनीयं च वेदिः,–अत्र प्रधानाद् वेदिशब्दात् न भवति ॥ ३३ ॥

## द्वित्वेऽधोऽध्युपरिभिः ॥ २ । २ । ३४ ॥

अधस्-अधि-उपरिभिर्युक्ताद् गौणात् नाम्न एषामेव द्वित्वे सति द्वितीया भवति, षष्ठ्यपवादः । बहुवचनमेकद्विवहाविति यथासंख्यनिवृत्त्यर्थम् । अधोऽधो ग्रामं ग्रामाः, अध्यधि ग्रामं क्षेत्राणि, उपर्युपरि ग्रामं ग्रामाः । द्वित्व इति किम् ? अधः प्रासादस्य, हर्म्यस्योपरि प्रासादः; असामीप्यात् च द्वित्वं न भवति ॥ ३४ ॥

## सर्वोभयाऽभिपरिणा तसा ॥ २ । २ । ३५ ॥

सर्वादिभिस्तसन्तैर्युक्ताद् गौणात् नाम्नो द्वितीया भवति, षष्ठ्यपवादः । सर्वतो ग्रामं वनानि, उभयतो ग्रामं वनानि, अभितो ग्रामं क्षेत्राणि; परितो ग्रामं क्षेत्राणि ॥ ३५ ॥

## लक्षणवीप्स्येत्थंभूतेष्वभिना ॥ २ । २ । ३६ ॥

लक्ष्यते–दर्श्यते येन तल्लक्षणं–चिह्नम्, अवयवशः समुदायस्य क्रियादिना साकल्येन प्राप्तीच्छा–वीप्सा तत्कर्म वीप्स्यम्, केनचिद् विवक्षितेन विशेषेण भाव इत्थभावस्तद्विषय इत्थंभूतः; एष्वर्थेषु वर्तमानादभिना युक्ताद् गौणात् नाम्नो द्वितीया भवति । वृक्षमभि विद्योतते विद्युत्–अत्र वृक्षो लक्षणम्, विद्योतमाना विद्युल्लक्ष्यम्, अनयोश्च लक्ष्यलक्षण-

---

त्वमिति । न्यग्भूतत्वादिति । तत्संबन्ध एवोपक्षीणशक्तित्वादिति भाव । सर्वत्र बहुवचनमधिकार्थमिति परिभाषितत्वात् शिष्टप्रयोगाच्च विशेषावसायात् तल्लभ्यमर्थं दर्शयति–**न देवदत्तमित्यादि** । बुभुक्षा संजाता अस्येति "तदस्य संजात०" इति इते–बुभुक्षित, **न प्रतिभाति**–न रोचते इत्यत्र प्रतिर्भातिक्रियाविशेषण न तस्य देवदत्तादिना योग इति "भागिनि च प्रतिपर्यनुभि" इत्यतो द्वितीया न सिध्यतीति । यदा तु देवदत्तादिना योगस्तदा तेनैव सिध्यति । नन्वन्तराऽन्तरेणशब्दाभिधेयस्य मध्यस्य अवधिसव्यपेक्षत्वात् गार्हपत्याऽऽहवनीययोर्मध्यस्य चाऽऽधारशक्तिप्राधान्यस्य मध्यस्य ताभ्याममिधेयत्वात् तस्य च प्रधानभूताऽऽधेयाधीनत्वात् तत्र यथा मध्यावच्छेदकाभ्या षष्ठीमपोह्य द्वितीया विधीयते तथा मध्येनाऽवच्छिद्यमानादाधेयादपि कुतो न विधीयत इत्याह–**गौणादिति किमित्यादि** । यद्यप्यवधिराधेयश्चाऽन्तरार्थेन युक्तौ तथापि गौणादिति वचनादप्रधानादवधिभूतात् गार्हपत्यादेर्द्वितीया न प्रधानादिति । अत एव द्वयोरन्तरा कश्चित्पुरुष इत्यादौ द्विशब्दादेर्द्वितीयस्या अभाव । अत्र ह्यनिश्चितावधिक मध्य प्रतीयते, द्वयो सबन्धी कश्चिन्मध्य इत्येतावदर्थप्रतीते, मध्यन्तु द्विशब्दार्थावधिक उताऽन्याऽवधिकमिति संशय एव ॥ ३३ ॥

**द्वित्वेऽधोऽध्युपरिभिः** । अत्र गौणादिति नाम्न इति द्वितीयेति चाऽनुवर्तते । अधोऽध्युपरिभिर्युक्तात् गौणात् नाम्न एषामेव द्वित्वे द्वितीयेत्यन्वयस्तदाह–**अधस् इत्यादि** । अध प्रभृतय कृतद्विर्वचना समीपवचना एव, अन्यत्र द्वित्वस्याभावात्, यस्य तत्सामीप्य ग्रामादेस्तत संबन्धे षष्ठ्यां प्राप्तायां अयमारभ्यत इत्याह–**षष्ठ्यपवाद इति** । **बहुवचनमिति** । अन्यथा समानसंख्यत्वात् यथासंख्य स्यादित्यर्थं । **अधोऽधो ग्राममित्यादि** । "सामीप्येऽधोऽध्युपरि" इति सर्वत्र द्विर्वचनम् । **अधः प्रासादस्येति** । औत्तराधर्यमात्रमत्र विवक्षित न सामीप्यमिति द्वित्वाभाव इत्याह–**असामीप्यादित्यादि** ॥ ३४ ॥

**सर्वोभयाऽभिपरिणा तसा** । गौणादिति नाम्न इति द्वितीयेति चानुवर्तते । सर्वोभयाभिपरिणा तसा युक्तात् गौणात् नाम्नो द्वितीयेत्यन्वय । सर्वादिविशेषणत्वात् "विशेषणमन्त" इति न्यायात् तदन्तप्रतिपत्तिरित्याह–**सर्वादिभिस्तसन्तैरिति** । सप्तम्यन्तात् "आद्यादिभ्य" इति तसु, अभिपरिशब्दाभ्या च "पर्यभे ०" इति तसु । आभिमुख्यवृत्तिरपि तसन्तप्रतिरूपको निपातोऽभित शब्दोऽस्ति सोऽपीह गृह्यते, तद्योगेऽपि षष्ठी प्राप्नोति ॥ ३५ ॥

**लक्षणवीप्स्येत्थंभूतेष्वभिना** । गौणादिति नाम्न इति द्वितीयेति चानुवर्तते । लक्षणवीप्स्येत्थभूतेषु अभिना गौणात् नाम्नो द्वितीयेत्यन्वय । 'लक्षीण्' दर्शने, करणेऽनडित्याह–**लक्ष्यते–दर्श्यते येनेति**। तत्पर्यायान्तरेणाऽऽचष्टे–**चिह्नमिति**। विपूर्वादाप्नोते सनि ततो यप्रत्यये वीप्स्य, विपूर्वश्चाप्नोतिराप्तिविशेषमाह, व्याप्तिश्च द्विष्ठा क्रिया न विना व्याप्यव्यापक च भवतीत्युभयमाक्षिपतीत्युक्त–**समुदायस्य क्रियादिनेति** । अत्र क्रियादिनेति व्यापक, आदिशब्देन जातिगुणद्रव्यस्वरूपपरिग्रह । समुदायस्येति व्याप्य, समुदायश्च वृक्षादिपदवाच्यार्थसार्थ उच्यते, निर्भेदस्यार्थस्य व्याप्त्यर्थाभावात् । गगनमात्र व्याप्नोतीत्यादावपि गगनस्य कल्पितप्रदेशभेदपुर सरव्याप्तिप्रतीतेरनेकात्मन समुदायस्यैव व्याप्ति सभवतीति । समुदायस्य च साकल्येन द्विधा भवति–अवयवश स्वतश्च, यथा–क्रोश कुटिला नदी, मास गुडधाना इति । तत्र सन्प्रत्ययसंनिपातेऽवयवशो व्याप्तिरित्युक्तमवयवश इति । समुदायस्य प्रत्येकमवयवा वृक्षादयोऽनवयवेन पृथक् सेकादिना संबन्ध्यन्त इतीयमत्र व्याप्ति, तस्या या इच्छा सा वीप्सा, तत्कर्म वीप्स्यमिति । अनेन प्रकारेण–इत्थ भवति स्माऽस्मिन्निति "अयर्याथा०" इत्यधिकरणे क्त । अनेनेति कश्चिद्विवक्षित प्रकारश्च सामान्यस्य भेदको धर्मो विशेष इत्याह–**केनचिदित्यादि** । **लक्ष्यलक्षणभावः संबन्ध इति** । वृक्ष प्राप्य विद्योतत इति प्राप्ति-

---

१ °स्त्या° पु० ।

भावः संबन्धोऽभिना द्योत्यते; वृक्षंवृक्षमभि सेकः–एकैकस्य वृक्षस्य सेक इत्यर्थः, साधुर्देवदत्तो मातरमभि–मातृविषये साधुत्वप्रकारं प्राप्त इत्यर्थः । लक्षणादिष्विति किम् ? यदत्र ममाऽभि स्यात् तदीयताम्, अत्राऽभिना भागसंबन्धो द्योत्यते–योऽत्र मम भागः स्यादित्यर्थः । अत्राऽपि बहुवचनं यथासंख्याऽभावार्थम्, एवमुत्तरत्र ॥ ३६ ॥

## भागिनि च प्रतिपर्यनुभिः ॥ २ । २ । ३७ ॥

स्वीक्रियमाणोंऽशो भागः तत्स्वामी भागी, तत्र लक्षणादिषु चाऽर्थेषु वर्तमानात् प्रतिपर्यनुभिर्युक्तात् गौणात् नाम्नो द्वितीया भवति । भागिनि–यदत्र मां प्रति मां परि मामनु स्यात्, योऽत्र मम भाग आभवति स दीयतामित्यर्थः; लक्षणे–वृक्षं प्रति वृक्षं परि वृक्षमनु विद्योतते विद्युत्, वीप्स्ये–वृक्षंवृक्षं प्रति वृक्षंवृक्षं परि वृक्षंवृक्षमनु सेचनम्; इत्थंभूते–साधुर्देवदत्तो मातरं प्रति मातरं परि मातरमनु । एतेष्विति किम् ? अनु वनस्याऽशनिर्गता, समीप इत्यर्थः ॥ ३७ ॥

## हेतुसहार्थेऽनुना ॥ २ । २ । ३८ ॥

हेतुर्जनकः, सहार्थस्तुल्ययोगो विद्यमानता च तद्विषयोऽपि सहार्थ उपचारात्, तयोर्वर्तमानादनुना युक्ताद् गौणात् नाम्नो द्वितीया भवति । जिनजन्मोत्सवमन्वागच्छन् सुराः, देवेन्द्रोपपाताऽध्ययनमन्वागच्छद्देवेन्द्रः, तेन हेतुनेत्यर्थः । पर्वतमन्ववसिता सेना, नदीमन्ववसिता पुरी, पर्वतनदीभ्यां सह सबद्धेत्यर्थः । अन्ये तु तृतीयाऽर्थमात्र इच्छन्ति–पर्वतमन्ववसिता सेना, पर्वतेन कर्त्रा करणेन वा कृतान्तेत्यर्थः । तृतीयाऽपवादो योगः ॥ ३८ ॥

---

क्रियाजनित इति शेष , अत्र सबन्धस्योभयाधिष्ठानतया विद्युतोऽभिना योगेऽपि गौणादिति वचनात् प्रधानत्वात् ततो न द्वितीया । **वृक्षं वृक्षमभि सेक** इति । सेक इति भावे घञन्त , अत्र वृक्षस्य वृक्षस्य सेक इति सेकेन वृक्षाणां वीप्स्यमानानां सेक प्रति यस्तेषां साध्यसाधनभावलक्षण सबन्ध सोऽभिना द्योत्यते, वीप्सा तु द्विर्वचनद्योत्यैवेति । अन्ये त्वन्यथा वर्णयन्ति–वीप्सावीप्स्यमानयो सबन्धो द्विर्वचनेनैव द्योत्यते न त्वभिना इति सबन्धमद्योतयतापि तेन योगे वचनात् द्वितीयेति । **साधुर्देवदत्तो मातरमभि**–अत्र मातुर्देवदत्तस्य साधुभाव प्रति विषयता, इत्थं प्रकार मातुर्विषये प्राप्त इत्यर्थ , योऽसौ मातुरित्यप्राप्त्या विषयविषयिभावलक्षण सबन्ध सोऽभिना द्योत्यत इति । **यदत्र ममाभि स्यात्तद्दीयता**मिति । अत्र ममेति न लक्षणादिरिति ततो द्वितीया न भवति, तदभावे गौणात् प्रथमापवाद "शेषे" २।२।८१। इति षष्ठी । नन्वभ्यादय संबन्धद्योतका , तत् कस्मिन्नत्र सबन्धेऽभिरित्याह—**अभिनेत्यादि** । भागेन य सबन्धोऽस्मदर्थस्य भागिभाव स द्योत्यते, तेन ममेति षष्ठ्यन्त संबन्धमात्रेऽपि संबन्धविशेषो भागसबन्ध प्रतीयते, तद्व्यक्तमाह—**योऽत्र मम भागः स्यादित्यर्थ** इति । अथ कथ यदत्र मामभिष्यात् इत्यत्र द्वितीयाप्रयोग ?, अत्राऽभिरस्तिना युक्त उपसर्गोऽत एव "प्रादुरुपसर्गा०" २।३।५८। इत्यस्ते षत्वम्, उच्यते—अभियुक्तोऽस्तिरामजतीत्यस्मिन्नर्थे वर्तते, तत्र "कर्मणि" इति द्वितीया । पूर्वत्र तु वृक्षादिधर्म सेकाद्यपेक्षया विषयभावसंबन्धमभिद्योतयति न क्रियाधर्ममिति धातुसबन्धाभावादनुपसर्गत्वान्न तत पत्वमिति । ननु "लक्षणवीप्स्येत्थंभूतेषु०" इति बहुवचन किमर्थं ?, लाघवार्थमेकवचनमेव निर्दिश्यतामितीत्याह–**अत्राऽपी**त्यादि । यद्येकवचनेन निर्दिश्येत तदैकद्विबहावित्यस्यैकवचनान्तत्वेन समसंख्यत्वात् यथासख्य स्यात्, ततश्च लक्षणे एकस्मिन्नर्थे वीप्स्ये द्वयोरित्थंभूते बहुषु द्वितीयेत्यर्थ स्यात्, बहुवचन तु सख्याभेदोपादानार्थमिति । एवमुत्तरसूत्रेष्वपि द्रष्टव्यम् ॥ ३६ ॥

**भागिनि च प्रतिपर्यनुभिः** । भजन्ति तमिति भागस्तस्यार्थमाह—**स्वीक्रियमाणोंऽश** इति । यस्त्वस्वीक्रियमाणेऽप्यंशे भागशब्द प्रयुज्यते–'नगरस्य भागः', 'प्रियक्रोर्भाग' इति स स्वीक्रियमाणांशसादृश्यादिति भागस्येश्वरो यमसावाभजति, स भागोऽस्यास्तीति भागी तस्य स्वाम्युच्यते । चकारेण अनन्तरा लक्षणादयोऽर्था अनुकृष्यन्ते, गौणादिति नाम्न इति द्वितीयेति चानुवर्तते । तथा च 'भागिनि च लक्षणवीप्स्येत्थंभूतेषु वर्तमानात् प्रतिपर्यनुभिर्युक्तात् गौणात् नाम्नो द्वितीये'त्यन्वयस्तदाह–तत्र **लक्षणादिषु चाऽर्थे**ष्विति । यदत्र मा प्रतीत्यादि । योऽत्र मम भाग स्यादित्यर्थ । **समीप इत्यर्थ** इति । अनेन वनस्य समीपिभाव इति वीप्स्यादिभावाभाव उक्त ॥ ३७ ॥

**हेतुसहार्थेऽनुना** । गौणादिति नाम्न इति द्वितीयेति चाऽत्र वर्तते । हेतुसहार्थे वर्तमानात् अनुना युक्तात् गौणात् नाम्नो द्वितीयेत्यन्वय । हेतुर्द्विविधो जनको ज्ञापकश्च, तत्र ज्ञापकस्य लक्षणत्वात् तत्र पूर्वसूत्रेणैव द्वितीया सिद्धेति जनक एव गृह्यत इत्याह—**हेतुर्जनक** इति । सहार्थस्य तुल्ययोगादेर्योऽसौ विषय आश्रय पर्वतादिरर्थ सोऽप्युपचारात् सहार्थशब्दवाच्य इत्यदोष । **तद्विषयोऽपी**त्यादि । तस्य **सहार्थ** इत्यादि । ननु तुल्ययोगाद्यर्थे सहादय एव शब्दा वर्तन्ते न पर्वतादिशब्दा इति कथ ततो द्वितीयेत्याह— **जिनजन्मोत्सवमन्वागच्छन् सुरा** इति । अत्र जिनजन्मोत्सवो हेतु सुरागमन हेतुमत्, तत्र जिनजन्मोत्सवस्य हेतुभाव सुराऽऽगमनापेक्ष सोऽनुना द्योत्यते, तस्मात् अनुयुक्तात् गौणात् द्वितीयेति । एव देवेन्द्रोपपातस्य आगमविशेषस्य परावर्तनमपि देवेन्द्रागमस्य हेतुरित्याह—**तेन हेतुनेत्यर्थ** इति । अत्र "हेतुकर्तृकरणेत्थंभूतलक्षणे" २।२।४४। इति प्राप्तां तृतीयां बाधित्वा द्वितीया भवतीति । **पर्वतमन्ववसिता सेने**ति । अवपूर्वस्य सिनोते कर्मणि क्तस्तदर्थमाह—**पर्वतनदीभ्यामि**त्यादि । पर्वतादिना सह य सहभाव सोऽनुना द्योत्यत इति । अत्र यथा साकप्रभृतिभि सहार्थवाचकैर्योगे तृतीया भवति तथाऽनुनाऽपि सहार्थेन स्यात्, सा द्वितीययाऽधुना बाध्यत इति । **अन्ये त्वि**ति । कर्तृता करणभावो वा तृतीयार्थ इत्याह— **पर्वतेन कर्त्रे**त्यादि **कृतान्तेत्यर्थ** इति । अत्र पक्षेऽवसितेति अवपूर्वस्य स्यते क्ते रूपम् । ननु हेतोरपि लक्षणत्वात् तत्र पूर्वेणैव द्वितीया भविष्यति किं हेतुग्रहणेन ?, नैव, जनकस्य लक्षणत्वाभावात्, येन पुन पुनर्लक्ष्यते तल्लक्षणम् । पौन पुन्येन साहचर्याऽवगमे हि लक्ष्यलक्षणभावो भवति, सकृच्चेति जिनजन्मोत्सव निशम्य देवा आगच्छन्तीत्यन्वयव्यतिरेकाभ्यां जिनजन्मोत्सवस्य कारणत्वावगमात् । ननु लक्षणेन हेतुव्याप्तौ हेत्वहेतुविषयत्वात् लक्षणस्य नावश्य तदेव लक्षणं येन पुन पुनर्लक्ष्यते, किं तर्हि ?, यत्सकृदपि निमित्तत्वाय कल्पते तदपि लक्षण भवति । कार्योत्पत्तिनिमित्तमपि तद्विशेषावगतिहेतुत्वात् लक्षणमेव, यथा–अपि भवान् कमण्डलुना छात्रमद्राक्षीदिति, सकृद्देवासौ कमण्डलुपाणि छात्रो दृष्टस्तस्य लक्षण तर्हि द्वितीयार्थं भविष्यति । ननु द्वितीया सिद्धा, न सिध्यति, परत्वात् हेत्वाश्रया तृतीया बाधिका स्यात् । 'येन नाऽप्राते०' इति न्यायेन अन्वादिभिर्युक्ते द्वितीया षष्ठ्या एव बाधिका । तां तु परत्वात् तृतीया बाधेतेति पुनर्विधान स्थानान्तरप्राप्तामपि तृतीयां द्वितीया बाधत इत्याह— **तृतीयापवादो योग** इति ॥ ३८ ॥

## उत्कृष्टेऽनूपेन ॥ २ । २ । ३९ ॥

उत्कृष्टेऽर्थे वर्तमानात् अनूपाभ्यां युक्ताद् गौणात् नाम्नो द्वितीया भवति । अनु सिद्धसेनं कवयः, अनु मल्लवादिनं तार्किकाः, उपोमास्वाति संग्रहीतारः, उप जिनभद्रक्षमाश्रमणं व्याख्यातारः; तस्मादन्ये हीना इत्यर्थः ॥ ३९ ॥

## कर्मणि ॥ २ । २ । ४० ॥

गौणात् नाम्नः कर्मणि कारके द्वितीया भवति । कटं करोति, ओदनं पचति, आदित्यं पश्यति, अहिं लङ्घयति-ग्रामं गच्छन् वृक्षमूलान्युपसर्पति, अजां नयति ग्रामम्; गां दोग्धि पयः । अथेह कस्मात् न भवति—क्रियते कटः ?, कृतः कटः ?, शतेन क्रीतः—शत्यः पटः ?, आरूढो वानरो यं स आरूढवानरो वृक्ष इति ?; त्यादिकृत्तद्धितसमासैरभिहितत्वात् लोकशास्त्रयोश्चाऽभिहितेऽर्थे शब्दप्रयोगाऽयोगात् । यद्येव कटं करोति भीष्ममुदारं दर्शनीयमिति भीष्मादिविशेषणवि-

---

**उत्कृष्टेऽनूपेन** । अत्र गौणादिति नाम्न इति द्वितीयेति चाऽनुवर्तते । उत्कृष्टे अनूपेन गौणात् नाम्नो द्वितीयेत्यन्वयस्तदाह—**उत्कृष्टेऽर्थे** इत्यादि । उत्कृष्टशब्दो हीनापेक्ष , तेन हीनोत्कृष्टसम्बन्धेऽनुना द्योत्ये द्वितीयाऽनेन विधीयते । उत्पूर्वात् कृषते कर्मणि क्त "यज्ञावो०" इति सप्तम्यां–उत्कृष्टे इति । **अनु सिद्धसेनं कवय** इति । सिद्धसेनकविनिष्ठस्य हीनोत्कृष्टसम्बन्धस्य अपेक्षणक्रियाजनितत्वमनुना ख्याप्यते । यथाऽत्र सिद्धसेनमुत्कृष्टमनूद्य कवीनां हीनत्वविधाने दत्तमुदाहरण, तथा कवीन् हीनाननूद्य सिद्धसेनस्योत्कृष्टत्वेऽप्युदाहरण द्रष्टव्यम्, यथा–अनु कवीन् सिद्धसेन इति । पूर्ववदिदमुदाहरण कवीन् हीनाननूद्य सिद्धसेनस्योत्कृष्टत्वेन बोध्यम् । एवमु**पोमे**ति । **संग्रहीतार** इति । सग्रहविधातार इति, सग्रहश्च शास्त्रेषु विततस्य प्रकीर्णस्य चाऽर्थस्य संक्षेपेणैकत्र सम्यग्ग्रहणमिति । तदाह—**तस्मादन्ये हीना इत्यर्थ** इति । ननु "लक्षण-वीप्स्ये०"इत्यादिसूत्रचतुष्टयी किमर्थमारभ्यते ?, यतोऽप्रयुज्यमानां काञ्चित् सकर्मिकां क्रियामाश्रित्य "कर्मणि" इत्यनेनैव द्वितीया भविष्यति, यथा–प्रादेश प्रादेश विपरिलिखतीति । नाऽत्र वेर्लिखिं प्रति क्रियायोग , किन्त्वप्रयुज्यमानं धातु प्रति, न हि प्रादेशो लिख्यते । प्रादेशे च योग्या क्रिया वेराक्षेप्येति विमानक्रियाया आक्षेप , तदपेक्षया च द्वितीया–प्रादेश प्रादेश विपरिलिखतीति । अत्र केचिदाहु —अन्वादयो गम्यादिक्रियाजनिते नामार्थव्यतिरेके विषयभावादौ वर्तन्ते, यथा–राज्ञ पुरुष इत्यत्र भरणादिक्रियाजनितव्यतिरेके पुरुषसम्बन्धे षष्ठी; न हि क्रियामन्तरेण अय – शलाकाकल्पानां नामार्थाना कश्चित् सम्बन्ध । तत्राऽन्तर्भावेऽपि क्रियया न क्रियासम्बन्ध उच्यते, अपि तु स्वेन स्वामिन सम्बन्ध एव, तद्वदत्राऽपि विषयभावादिरूपसम्बन्धो न तु कर्मतेतीद द्वितीयाविधानम् । प्रादेश प्रादेश विपरिलिखतीत्यत्र तु अप्रयुज्यमानमाव्यपेक्षया कर्मतैवोच्यते न त्वन्यत् किञ्चित्, यथा–प्रविश पिण्डीमिति भक्षयेति प्रतीयमानापेक्षया । ईदृशी शब्दशक्ति , न एकरूपा एव भावा भवन्ति ॥ ३९ ॥

**कर्मणि** । अत्र गौणादिति नाम्न इति द्वितीयेति चाऽनुवर्तते । गौणात् नाम्न कर्मणि कारके द्वितीयेत्यन्वयस्तदाह—**गौणात् नाम्न** इत्यादि । निर्वर्त्यादिभेदेन त्रिविधस्याऽपि कर्मणोऽत्र विशेषानुपादानात् ग्रहणमिति त्रिविधेऽप्युदाहरति—**कटं करोतीति** । निर्वर्त्ये । **ओदनं पचतीति** । विकार्ये, अत्र हि ओदनशब्दस्तण्डुलवृत्ति , अतस्तण्डुलान् पचतीत्यर्थ । **आदित्यं पश्यतीति** । प्राप्ये । सख्यादिकर्मादिशक्ती विभक्तिवाच्ये तत्रेति त्यादिकृत्तद्धितसमासैरनभिहितकर्माद्याश्रयेष्वेकत्वादिषु द्वितीयाद्या विभक्तयो यथा स्युरिति 'अनभिहिते' इति प्रकृत्य द्वितीयादीनां विधानमुचित, तच्चेह न कृतमिति त्यादिकृत्तद्धितसमासाभिहितकर्माद्याश्रयेष्वेकत्वादिषु द्वितीयादय प्राप्नुवन्तीत्याशङ्क्याह—**अथेह कस्मान्न भवतीत्यादि** । **क्रियत** इति । कर्मण्यात्मनेपदम् । **कृत** इति । कर्मणि क्त । **शत्य** इति । शतेन क्रीत इति "शताद् केवलादतस्मिन् येकौ" ६।४।१३१। इति यप्रत्यय । परिहरति—**त्यादिकृत्तद्धितेत्यादिना** । अयमर्थ —अभिपूर्वस्तावत् दधातिर्बन्धनोच्चारणप्रतिपादनेषु वर्तते । 'अश्वाभिधानीमादत्ते' इत्यत्र बन्धनवृत्ति । 'अभिहित श्लोक' इत्युच्चारणवृत्ति । 'अभिहितोऽर्थ' इति प्रतिपादनवृत्ति । हिनोतेरपि गतिवृद्ध्यर्थस्य 'अभिहित'मिति भवति, तत्र वक्ष्यमाणाना कर्मादर्थाना बन्धनाद्यर्थचतुष्टयाऽसम्भवात् प्रतिपादनवचन एवाऽभिहितशब्द आश्रयणीय । याव-दुक्त भवत्यनुक्तेऽनिर्दिष्टे इति तावदनभिहिते इति, ततोऽन्यत्र त्यादिभिरभिहिते कर्मादौ प्रयोजनाभावात् द्वितीयादीनामप्रवृत्तेरनर्थकोऽयमनभि-हिताधिकार इति स्वोक्तमेव युक्त्यन्तरेण द्रढयति—**लोकशास्त्रयोश्चेत्यादिना** । अयमाशय —अर्थप्रत्यायनाय लोके शब्द प्रयुज्यते, स चाऽर्थो यदा शब्दान्तरेण प्रतिपादित स्यात् तदा प्रयोजनाभावात् शब्दान्तरप्रयोगेण न भाव्यम् । अक्षिनिकोचादिभिरप्यवगतेऽर्थे शब्दो न प्रयुज्यते, किं पुन शब्दान्तरप्रतिपादितेऽर्थे । यथा–चित्रगु , शबलगुरित्यत्र बहुव्रीहिणोक्तत्वात् मत्वर्थीयो न भवति । गर्गा , वत्सा , विदा , उर्वा इति यञन्तेनाऽणन्तेन चोक्तत्वादपत्यार्थस्य यञञोर्लोपे विरोधाभावादुक्तार्थत्वाश्रयेणैवाऽणोऽनुत्पत्ति । एव सप्तपर्णोऽष्टापद इति वीप्सायां विषये द्विर्वचन-मुच्यते, अस्ति चेह वीप्सा–सप्त सप्त पर्णान्यस्येति, समासेन तु शब्दशक्तिस्वाभाव्यात् वीप्साया गमितत्वात् द्विर्वचनाभाव । ननु दर्शितेषु नोक्ता-र्थत्वेन मत्वर्थीयाद्यभाव , किन्त्वन्यथा, तथा हि–अस्तिसामानाधिकरण्ये मत्वर्थीयो विधीयते, न चाऽत्राऽस्तिसामानाधिकरण्यमस्ति, वर्तिपदार्थयो-रन्यपदार्थे उपसङ्क्रान्तत्वादस्त्यर्थस्य तत्रैवाऽन्तर्भूतत्वात् स्वार्थस्य ससृष्टत्वात् । यदाऽप्यन्यपदार्थेन तद्वत्ता प्रतिपिपादयिषिता भवति तदा भवत्येव चित्रगुमानिति । तथा "षाऽऽद्यात्" इत्यधिकारादपत्यवद्वाचिन षष्ठ्यन्तात् प्रत्ययेन भाव्य, न त्वपत्यवाचिनो द्वितीयमर्थमुपक्रान्तात्, यञञोश्च लुपि कृते प्रकृतिरेवापत्यार्थाभिधायिनीत्यण् न भवति । तथा वीप्स्यमानार्थाभिधायिन पदस्य द्विर्वचन विधीयते, पर्वार्थस्य वीप्सायोग , न चाऽत्र पर्वशब्दस्य प्रयोगोऽस्ति । पर्वणि पर्वणि सप्तपर्णान्यस्येति, पङ्क्तौ पङ्क्तावष्टौ पदानीति हि वीप्सायुक्त पद न प्रयुज्यते । एवं तर्हि श्नवकच्प्रत्ययेषूक्ता-र्थत्वेनाश्रयणीय, तथा हि–छिनत्तीति श्नेनोक्तत्वात् कर्तृत्वस्य कर्तरि शव् न भवति, 'भावकर्मकर्तारो विकरणार्था' इति पूर्वाचार्यसमयात् । बहुकृतं बहुभुक्तमितीषदूनत्वस्य बहुनोक्तत्वात् कल्पबादयो न भवन्ति । उच्चकै नीचकैरिति कुत्सनादीनामकैव द्योतितत्वात् कप् न भवति इति । न चात्रा-प्यपवादत्वात् श्नादय शवादीनां बाधका इत्यन्यथासिद्धत्वादुक्तत्वस्य दृष्टान्ताभावादहेतुत्वमिति वाच्यम्, समानदेशे उत्सर्गाणामपवादैर्बाधनात् नानादेशत्वात् तदप्राप्तेरनन्यथासिद्धत्वादुक्तत्वस्य दृष्टान्तभावात् हेतुत्वमिति । अत्राऽनभिहिताधिकारवादी प्रत्यवतिष्ठते–किमिहाऽकर्तव्योऽनभिहिता-धिकार क्रियते, आहोस्विदपूपौ द्वौ इत्यभिहितेऽपि प्रत्ययेन द्वित्वे द्विशब्दप्रयोगदर्शनात् श्नादिभिरभिहिते शवादिनिवृत्त्यर्थोऽन्यत्र कर्तव्य सन् क्रियत इति, उच्यते–इहाऽकर्तव्य क्रियते, अपूपौ द्वाविति तु गतार्थस्यापि द्विशब्दस्य लोके प्रयोगदर्शनात् । अन्यस्य गतार्थस्याऽप्रयोग प्रयोजनाभावात् सिद्ध एवेत्यभिहिते विहित न भविष्यति । अत्र स एव पुन प्रत्यवतिष्ठते–नन्वनभिहितो विभक्त्यर्थ , सोऽभिहिते कर्मादौ मा भूदित्येवमर्थमनभिहित-

शिष्टस्य कटस्य करोतिक्रियया व्याप्यत्वात् कर्मत्वम्, तच्च कटशब्दादेवोत्पन्नया द्वितीययाऽभिहितमिति भीष्मादिभ्यो द्वितीया न प्राप्नोति, यथा कृतः कटो भीष्म उदारो दर्शनीय इति करोतेः क्तप्रत्ययेनेति; नैवम्-भीष्मत्वादियुक्तस्य कटस्य संबन्धि कर्मत्वं प्रतिपाद्यम्, न च जातिशब्दाः संभविनोऽपि गुणान् प्रतिपादयितुं समर्था इति तत्प्रतिपादनाय यथा भीष्मादिशब्दप्रयोगो भवति तथा द्वितीयापि तेभ्यो भविष्यति; न हि सामान्यवाचिनः कटशब्दादुत्पद्यमाना द्वितीया भीष्मादीनामनियताऽऽधाराणां गुणानां कर्मत्वमभिधातुं शक्नोति । यदि वा कटोऽपि कर्म भीष्मादयोऽपि, यथैव ह्यय कटं करोत्येव तद्गतान् भीष्मादीनपि; तत्र यद्यत् करोतिना व्याप्तुमिष्टं तत्सर्वं द्रव्यं गुणश्च कर्मेति सर्वेषां पृथक्कर्मत्वे प्रत्येकं द्वितीया,

वचनम् । एकत्वादयश्च विभक्त्यर्थाः, तथा हि-"कर्मणि" इत्यत्र 'एकद्विबहौ' इत्येकवाक्यतापत्तौ यदैकत्वादीनि विशेषणानि, कर्मादीनि विशेष्याणि, एकस्य यत्कर्म तत्र द्वितीयैकवचनमिति, तदा कर्म द्वितीयाया अर्थः संपद्यते । तच्च यदा त्यादिभिरभिहितं भवति तदा गतार्थत्वात् द्वितीयाया प्राप्तिरेव नास्तीति शाऽर्थोऽनभिहितवचनेन । यदा तु कर्मादीनां विशेषणत्वं, एकत्वादीनां विशेष्यत्वं, कर्मणो यदेकत्वादि तत्र द्वितीयेति, तदैकत्वादयो विभक्त्यर्थाः संपद्यन्ते । ते चाऽभिहितेष्वपि त्याद्यादिभिः कर्मादिष्वनभिहिता इति तदभिधानाय कर्तव्योऽनभिहिताधिकार इति । न च "कर्मणि" इत्यादौ कर्मादीनां श्रुतत्वात् तेषामेव विभक्त्यर्थत्वेन भाव्यमिति वाच्यम्, कर्मणीति सप्तमीनिर्देशस्यैकत्वाद्यपेक्षत्वादभिधेयत्वाप्रतिपत्तेः, कर्मणि यदेकत्वादि तत्र द्वितीयेति प्रतिपत्तिः । यच्च मन्यते-कर्मादयो विभक्त्यर्थास्तेष्वनभिहितेषु विभक्तीनामुत्पत्तिरिति नार्थोऽनभिहिताधिकारेणेति, तस्य वृक्षः, प्लक्ष इत्यादौ प्रथमा न प्राप्नोति, नामार्थस्यापि प्रथमार्थत्वे नाम्नैवोक्तत्वात् तदभिधानाय प्रथमाया अप्रवृत्तेरिति । नैष दोषः । न क्वचिन्नाम्नाऽनुक्तो नामार्थस्तेन "नाम्नः प्रथमै०" इति वचनसामर्थ्यात् भविष्यति । द्वितीयादयस्त्वनभिहिते कर्मादौ सावकाशत्वादभिहिते न भविष्यन्तीति । अनभिहिताधिकारवादिन एवाय दोषो-यस्य ते एकत्वादयो विभक्त्यर्था इति, पचत्योदनं देवदत्त इति एकत्वस्य त्यादिनोक्तत्वात् प्रथमाया अभावः । अनभिहितैकत्वाद्यभिधानाय तव विभक्तिविधानम् । पचतीति च कर्तुरेकत्वं तिवाऽभिहितमिति न स्यादिति । नैष दोषः । न क्वचित्तिवाऽनभिहितत्वमेकत्वादीनामिति वचनसामर्थ्यात् भविष्यति । न च वृक्षः प्लक्ष इत्यादावनभिहिते सावकाशत्वात् कथं वचनसामर्थ्यमिति वाच्यम्, तत्राप्यप्रयुज्यमानस्यास्तीत्यस्य गम्यमानत्वात् अभिधानात् सूक्तं वचनसामर्थ्यादिति । ननु च यदि कर्मादयो विभक्त्यर्थास्तदा यथोक्त-कृतः कटो भीष्म इत्यादौ केन कर्मणोऽभिहितत्वात् द्वितीया न भवति, एवं कटं करोति भीष्ममित्यादौ भीष्मादिविशेषणविशिष्टात् कटादुत्पन्नया द्वितीययोक्तत्वात् भीष्मादिभ्यः कर्मणि द्वितीयस्या अप्रसङ्ग इत्येकं सधित्सतोऽन्यत् प्रच्यवत इति । अनभिहिताधिकारपक्षे तु त्यादिकृत्तद्धितसमासैरनभिहिते इति परिगणनाद्दोषाभाव इति चेतसि निधायाऽऽक्षिपति—**यद्येवमित्यादि** । परिहरति च—**नैवमित्यादि** । अयमर्थः-भीष्मत्वादियुक्तकटसंबन्धि कर्मत्वं प्रतिपाद्यं, तत्र च यथा कटशब्देन जातिशब्दत्वात् भीष्मत्वादिगुणानामनभिधानात् तदभिधानाय भीष्मादिशब्दप्रयोगस्तथा द्वितीयाऽपि तेभ्यो भविष्यति, न ह्यन्यथा भीष्मादिगुणानामनियताधारत्वात् तद्विशिष्टत्वं कटस्य प्रत्याययितुं शक्यते इति । अथवा-यद्यत् करोतिक्रिययाऽऽप्तुमिष्यते तत्सर्वं गुणश्च द्रव्यं कर्म भवति । न ह्यसौ कटमात्रेण संतुष्यति । तत्र करोतिक्रियायां पृथक्सर्वेषां व्याप्यतया कर्मत्वे द्वितीयोत्पत्तिः, पश्चादेकवाक्यतया विशेषणविशेष्यभाव इत्याह—**यदि वेत्यादि** । ननु यद्यपि गुणद्रव्ययोः करोतिना सबन्धस्तथापि व्याप्यमित्यत्र विशब्दश्रुत्या प्रकर्षस्याऽऽश्रितत्वात् द्रव्यस्यैव क्रियान्तरे उपयोक्ष्यमाणत्वात् व्याप्यत्वात् कर्मत्वं न गुणस्येति कथं भीष्मादिभ्यो द्वितीया [1], उच्यते-भवतु कट एव कर्म, तथापि तत्सामानाधिकरण्यात् तदेकयोगक्षेमत्वात् केवलानां च नाम्नां प्रयोगाऽनर्हत्वात् भीष्मादीनां स्वयमकर्मत्वेऽपि विशेष्यसंबन्धिन्या एव विभक्त्या भाव्यम् । यथा ईश्वरसुहृदः स्वयं निर्धना अपि तदीयेन धनेन तत्फलभाज एवं गुणा अपि । अस्ति खल्वपि क्तप्रत्ययद्वितीययोर्वैधर्म्यम्, करोतेरुत्पद्यमानः क्तः साकल्येन भीष्मादिगुणगतमपि कर्माऽभिधत्ते, कटशब्दात् पुनरुत्पद्यमानया द्वितीयया कटस्य यत्कर्मत्वं तच्छक्यमभिधातुं न तु भीष्मादिगुणगतविशेषकर्मत्वं, तथा च नामार्थगताया एव कर्मशक्तेर्वाचिका द्वितीयेत्यत आह—**यदि वा द्रव्यस्येत्यादि** । किंच 'यस्यैवैकत्वादयो विभक्त्यर्थाः' तस्याय दोषः 'अभिहिते प्रथमाया अभावः'-एकः द्वौ बहवः इति । अनभिहितैकत्वाद्यभिधानाय तव विभक्तिविधानम्, तानि चैकादिभिरेवोक्तानीति प्रथमाया अप्राप्तिः । ननु मत्सापि 'कर्मादयो विभक्त्यर्थाः' तस्याप्ययं दोषो यतस्तेनाऽपि "कर्मणि" इत्यादीनामेकद्विबहावित्यनेनैकवाक्यताऽभ्युपगन्तव्या । गुणप्रधानभावः एव तस्य तु विपरीतः । तत्र नामार्थगतैकत्वादिविशिष्टे कर्मणि द्वितीया इत्येवमादिर्वाक्यार्थस्तस्य संपद्यते । एवं चैकत्वादिविशिष्टस्य कर्मणो वाचिका द्वितीया, तच्च नाम्नैवाऽभिहितम्, नामार्थव्यतिरेकेणाऽन्येषामेकत्वादीनां विशेषणीभूतानामभावादेक इत्यादौ भवतोऽपि प्रथमाया अभाव इति । अत्रोच्यते—एकत्वादिष्वपि व्यतिरिक्ता एकत्वादयः सन्ति, तदुक्तं हरिणा-"निमित्तमेकं इत्यत्र विभक्त्या नाभिधीयते । तद्गतस्तु यदेकत्वं विभक्तिस्तत्र वर्तते" ॥ इति, यथा-शतमित्यत्र प्रवृत्तिनिमित्तं शतसंख्याऽन्या, अन्या च विभक्तिवाच्या नामार्थशतैकत्वसंख्या, तथा एक इत्यत्राऽपि प्रवृत्तिनिमित्तविभक्तिवाच्ये द्वे एकत्वे इति । यथैव ममापि तेष्वनभिहितेषु प्रथमा भविष्यति । किं चैकादयः समयवचना द्रव्यं चाऽऽहुर्गुणं च । तत्र नाम्ना गुणोपसर्जनं द्रव्यमभिधीयते, द्रव्योपसर्जनस्तु गुणो विभक्त्या । यथा शौक्ल्यमिति गुणोपसर्जनद्रव्याभिधायिनः शुक्लशब्दात् द्रव्योपसर्जने तस्मिन्नेव गुणे भावप्रत्ययः । तदेव यस्मिन् द्रव्ये स्थितः एकत्वादिगुणस्तस्य द्रव्यस्यानुक्ता एकत्वादयस्तदभिधानाय प्रथमा भविष्यति । अथवा-संख्या नामेयं परप्रधाना, संख्येयमनया विशेष्यम् । यदि चाऽत्र प्रथमा न स्यात् केवलस्य नाम्नः प्रयोगाभावात् प्रथमाया अभावे एकादिशब्दानुच्चारणात् । अथवा-'प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या न केवला' इत्येवंरूपात् समयाद्भविष्यति । अन्या अपि कस्मान्न भवन्ति [1], कर्मादीनामभावात्, कर्मण्येव द्वितीयेत्येवं द्वितीयादीनां नियतत्वात् । तर्हि षष्ठी प्राप्नोति, कर्माद्यभावस्य शेषरूपत्वात्, नैवमशेषत्वात् न भविष्यति, उपयुक्तादन्यो हि शेषः, नामार्थस्य च प्रथमाविधावुपयोगात्तस्य चाऽव्यतिरिक्तस्य सद्भावात् । वचनव्यतिकरप्रसङ्गोऽपि नास्ति, सामर्थ्याद्व्यवस्थासिद्धेः । एक इत्यत्रैकमेवैकत्वं, तच्च नाम्नैवाऽभिहितमित्यप्राप्ताऽपि प्रथमा समयवशेन प्राप्यते । तत्र यथा समयश्च पालितो भवति, एकत्वानुगुणं चाऽन्यत्र तदभिधाने दृष्टसामर्थ्यं वचनं भवतीति 'संख्याविभक्त्यर्थस्तत्राऽनभिहिताधिकारः परिगणनं च त्यादिकृत्तद्धितसमासैरिति युक्तम्-क्रियते कटः, कृतः कटः, औपगवः, चित्रगुरित्यादौ कर्मापत्यापत्यवत्स्वस्वामिसंबन्धानां त्यादिकृत्तद्धितसमासैरभिहितत्वात् द्वितीयादयो न भवन्ति । तथाऽनभिहितमिति सामान्येन विधीयमाने यत्र बहूनि नामानि समानाधिकरणानि तत्रैकयोगक्षेमत्वादेकत उत्पन्नया द्वितीयया सर्वनामार्थगतं कर्मत्वमभिहितमित्यन्येभ्यो द्वितीया न प्राप्नोति का तर्हि स्यात् [1], षष्ठी, कर्मादीनामभावादन्याश्च नितान्तं न प्राप्नुवन्ति । समयश्च कृतः-'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः' इति । न चाऽन्या उत्पद्यमाना सामानाधिकरण्यसंबन्धमुत्सहते वक्तुमिति द्वितीया

१ त्यत्क० पु० ।

पश्चात्त्वेकवाक्यतया विशेषणविशेष्यभाव इति। यदि वा द्रव्यस्य क्रियासु साक्षादुपयोगादस्तु कटस्यैव कर्मत्वम्, भीष्मादीनां तु 'न केवला प्रकृतिः प्रयोक्तव्या' इति नियमात् अविभक्तिकानामप्रयोगार्हत्वादेकविभक्तिमन्तरेण च सामानाधिकरण्यविशेषणत्वाऽयोगात्; यथा ईश्वरसुहृदां स्वयं निर्धनत्वेऽपि तदेकयोगक्षेमत्वात् तद्धनेनैव फलभाक्त्वं भवत्येवमकर्मणामपि कटकर्मत्वेनैव द्वितीया भविष्यति। कुतः कटो भीष्म उदारो दर्शनीय इत्यादौ तु करोतेरुत्पद्यमानः क्तो यस्य यस्य तया क्रियया संबन्धस्तस्य तस्य साकल्येन कर्मत्वमभिदधातीति क्वचिदपि द्वितीया न भवति। कथं तर्हि कृतं पश्य ?, आहृतमाहर ?, कर्त्रा क्रियते ?, दात्रेण लुनाति ?, दानीयाय ददाति ?, भीमाद् बिभेति ?, प्रासादे प्रसीदति ?, शयने शेते ? इत्यादिषु क्तादिभिरभिहितेषु कर्मादिषु द्वितीयादयो भवन्ति ?, उच्यते—कर्मादिसामान्य कृद्भिरभिहितम्, तत्राऽप्यभिहितः सोऽर्थोऽन्तर्भूतो नामाऽर्थः सपन्न इति कर्मादिशक्तियुक्तं द्रव्यमेव तदन्तैः शब्दैरभिधीयते, यथेद कर्म, इद करणमिति। तत्र याऽसौ स्वरूपकालभिन्नायां क्रियायां सव्यापारतया कर्मादिरूपता तदभिधानाय यथायथ द्वितीयादयो भवन्ति। यत्र पुनरेकद्रव्याऽऽधारा प्रधानाऽप्रधानक्रियाविषयाऽनेका शक्तिर्भवति तत्र प्रधानक्रियाविषयायां शक्तौ प्रत्ययैरभिहितायामप्रधानक्रियाविषया शक्तिः प्रधानशक्त्यनुरोधादभिहितवत्प्रकाशमाना विभक्त्युत्पत्तौ निमित्त न भवति। यथौदनः पक्त्वा भुज्यते देवदत्तेनेति भावाऽभिधायिना क्त्वाप्रत्ययेनौदनाऽधिकरणाऽप्रधानपचिक्रियाविषया कर्मशक्तिरनभिहिताऽपि प्रधानभुजिक्रियाविषयाऽऽत्मनेपदेनाऽभि-

---

भविष्यति इति, सत्य, अस्तु सत्यऽपि विभक्त्यर्थस्तथापि न कर्तव्योऽनभिहिताधिकार। स हि क्रियते कट इत्यादौ द्वितीयादिनिवारणाय क्रियते। यदि चाऽत्र द्वितीयादय· स्युस्तत प्रथमा निरवकाशैव स्यात् तस्मादनवकाशत्वात् प्रथमैव द्वितीयादीना बाधिका भविष्यति नार्थोऽनभिहिताधिकारेण। अथ अकारके—वृक्ष, प्लक्ष इत्यादौ क्रियापदमात्रस्याप्यश्रवणाद्विभक्त्यन्तराप्राप्ते सावकाशा प्रथमेति चेत्, न, अत्रापि 'अस्तिर्भवन्तीपर· प्रथमपुरुषोऽप्रयुज्यमानोऽस्ति', वृक्ष इत्युक्तेऽस्ति इति गम्यते। यतो ज्ञात वस्तु परं प्रतिपादयितु शब्द प्रयुज्यते, ज्ञान च सत इति यत्र क्रियापदान्तरस्याऽप्रयोगस्तत्रोत्सर्गत सत्ताप्रतीतिरित्यस्तीतिक्रियापदाऽनुषङ्गात् कर्तरि तृतीयाप्रसङ्गादनवकाशा प्रथमेति। यद्यभिहिते कर्मादावनवकाशत्वात् प्रथमैव प्राप्नोतीत्युच्यते तर्हि द्वयो क्रिययोरन्यतरकारकेऽभिहिते द्वितीयादिविभक्तिर्न प्राप्नोति—कृत पश्य, अत्र करोतिक्रियाया· पश्यतिक्रियायाश्चैकमेव कटादिक कर्म, तच्चाऽन्यतरेण करोतिप्रत्ययेन क्तेनाऽभिहितमिति द्वितीया न प्राप्नोति। यत्राऽपि सैव सा क्रिया, यथा—कर्त्रा क्रियते, अत्र खल्वेकैव करणक्रिया तस्याश्च कर्ता तृच्प्रत्ययेनाभिहित इति तृतीयाया अप्राप्ति। एव दात्रेण लुनातीत्यादावपि द्रष्टव्यम्। द्रव्य च कारक, तद्व्यतिरेकेण शक्तिसद्भावे प्रमाणाऽभावात्। न तावत् प्रत्यक्ष द्रव्यव्यतिरिक्तस्वरूपपरिच्छेदि समुपजायते, द्रव्यस्वरूपाऽतिरेकेण शक्तिरूपानुपलम्भात्। प्रत्यक्षाऽप्रवृत्तौ च तत्पूर्वकस्याऽनुमानस्याऽपि शक्तिसद्भाववेदने नास्ति प्रवृत्ति। कार्यं च द्रव्यस्वरूपायत्तमेवेति कार्यव्यतिरेकादपि नास्ति शक्तिसद्भावावगम। द्रव्यस्य चैकत्वात् युगपदभिहितत्वानभिहितत्वाऽसम्भव इत्याशङ्क्य पृच्छति—**कथमि**त्यादि। समाधत्ते—**उच्यत** इत्यादि। **कर्मादिसामान्य**मिति। करणादिक्रियामात्रयोग्यमित्यर्थ। **तत्राऽपि**—अभिधाने सत्यपीत्यर्थ। **अभिहित** इति। प्रथमोत्पत्तिनिमित्तकथनम्। अनुद्भूतोऽपि कर्मादिरर्थो गुणभावेन कृदभिधेयत्वादभिहित इत्युच्यते। तत्राऽभिहितोऽपि कश्चिन्नान्तर्भवति, यथा—राज्ञ पुरुष इत्यत्र वाक्ये षष्ठ्या संबन्धोऽभिधीयते न तु क्वचिदन्तर्भावमुपयातीति द्वयोरुपादानम्। **तदन्तै**रिति। कृदन्तैरित्यर्थ। **तत्रे**ति। कर्मादिशक्तियुक्ते द्रव्ये इत्यर्थ। **स्वरूपकालभिन्नाया**मिति। तत्र स्वरूपकालभिन्ना यथा—कृत पश्येति, अत्र हि करोतिक्रियाया अतीतकालप्रत्ययोक्ताया· पश्येतिवर्तमानकाला क्रिया स्वरूपत कालतश्च भिद्यत इति। **आहृतमाहरे**त्यत्र त्वाहरेतिक्रिया कालत एव भिद्यते। एव कर्त्रा क्रियते इत्यादावपि भिन्नपदप्रत्याय्ये भिन्ने एव करणक्रिये, एकपदोपात्ते हि क्रियासाधनसबन्धे अनेन विभक्तयो निवार्यन्ते न तु वाक्योपात्ते। तथाहि—शय्यतेऽस्मिन्निति शयनमुच्यते। यदि च शयनक्रिया शेते सनिधीयते ततस्तदपेक्षया तच्छयनमुच्यते। एव सामर्थ्याच्छेते शेति कर्त्री भवति, सर्वकालश्च प्रत्यय, अनट सामान्येन विधानात्। अपरस्य बाह्य देवदत्तादिसाधन, वर्तमानकालश्च प्रत्यय। एव कर्त्रा क्रियत इत्यादावपि द्रष्टव्यम्। तदयमर्थ—यदा नामार्थस्य स्वरूपकालभिन्नक्रियाऽऽवेशविवक्षाया कर्मादिशक्तिलक्षणार्थातिरेको भवति तदा नामार्थता शक्तयो न प्रतिपद्यन्ते इति व्यभिचारात् द्वितीयादिविभक्तिनिमित्त भवन्ति। यदा तु अपरोपकारित्वेन स्वनिष्ठतया नामार्थो विवक्ष्यते तदा व्यभिचाराभावात् ता शक्तय कर्मादिसज्ञामेव प्राप्ता न विभक्त्युत्पत्तिं प्रयोजयन्ति। तदुक्तम्—स्वशब्दैरभिधानेऽपि स धर्मो नाभिधीयते। विभक्त्यादिभिरेवासावुपकार प्रतीयते। तत्राऽय वस्तुसक्षेप—कर्मकरणसप्रदानापादानादिशब्दै करणादिक्रियामात्रयोग्यवस्तुमात्रमनुद्भूतशक्तिकमभिधीयते। तत्र क्रियान्तरापेक्षोद्भूतशक्तिप्रतिपादनाय विभक्तिरवश्योत्पाद्येति। ननु द्रव्यस्य कारकत्वात् तस्य चैकत्वात् युगपदुद्भूतत्वादिविरुद्धधर्माऽसभवस्योक्तत्वात् कथमेष परिहार इति ?, उच्यते—शक्तेः कारकत्वात् तस्याश्च भेदादभिहितत्वानभिहितत्वसभवात् भवत्येष परिहार इति। कथ पुनर्ज्ञायते शक्ति कारक न द्रव्यमिति चेत्, उच्यते—एव हि कश्चित् कंचित् पृच्छति—क्व देवदत्त इति। स तस्मायाचष्टे—वृक्षेऽसाविति। कस्मिन्[2] य पुरस्तिष्ठतीति। स वृक्षोऽधिकरण भूत्वाऽन्येन शब्देनाऽभिसंबध्यमान कर्ता सपद्यते। द्रव्ये तु साधने यदधिकरणमधिकरणमेव स्यात्। अयमभिप्राय—यदि द्रव्य साधनं स्यात् तदा तस्यैकरूपत्वात् तन्निबन्धनाऽबाधितप्रत्यभिज्ञाविषयत्वात् नानार्थक्रियानिबन्धनो व्यपदेशभेदो न स्यात्, दृश्यते चाऽसाविति नानाशक्तिसद्भावावगम सिद्ध इति। नन्वेकस्यापि द्रव्यस्य स्वरूपादिभिन्नक्रियाया व्यापारवत्तयाऽनेककर्मादिशक्त्यधिष्ठानत्वात् तदभिधानाय च द्वितीयादिप्रवृत्तेः प्रतिपादितत्वादोदन पक्त्वा भुज्यत इति भुजिप्रत्ययेन कर्मशक्तेरभिहितत्वेऽपि पचिप्रत्ययेनाऽनभिहितादोदनात् द्वितीया कस्मान्न भवतीत्यत आह—**यत्र पुनरि**त्यादि। एकस्मिन् वाक्ये युगपदनेकप्रधानक्रियाणामसभवात् प्रधानाऽप्रधानक्रियाविषयैवानेका शक्तिरिति तत्क्रियापेक्षया शक्तेरपि गुणप्रधानभावो भवतीत्यत प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशते, तस्यास्तदनुबन्धित्वादित्युक्त—**प्रधानशक्त्यनुरोधादि**त्यादि। अत्रैवोदाहरणान्तरं दर्शयति—**यथा च ग्रामो गन्तुमिष्यत** इति। स्पष्टोऽर्थ। ननु गौणात् नाम्न कर्मणि द्वितीयेत्युक्तम्, अजां नयति ग्राममित्यादौ तु ग्रामाद्यपेक्षया अजादे प्रधानत्वात् न ततो द्वितीया प्राप्नोतीत्याह—**इह च गौणत्वमि**त्यादि। ननु यदि त्यादिकृत्तद्धितसमासैरभिहितत्वात् कर्मादिषु द्वितीयादयो न भवन्तीत्युच्यते, तदा कृतपूर्वी कटमित्यादौ कृतादिशब्देनैककटादिकर्मणोऽभिहितत्वात् कथ द्वितीयेति ?, उच्यते—योऽसौ

---

१ समानाधिकरणवि० पु०। २ इत्यत्र पु०। ३ इत्यादौ पु०।

द्वितेति तद्वत्प्रकाशमाना द्वितीयोत्पत्तौ निमित्तं न भवति, यथा च ग्रामो गन्तुमिष्यते देवदत्तेनेति ग्रामस्य प्रधानेषिक्रियाविषयां कर्मशक्तिमात्मनेपदेनाऽभिद्धताऽप्रधानगमिक्रियाविषयाऽपि कर्मशक्तिरुपभुक्तेति तदभिधानाय द्वितीयाचतुर्थ्यौ न भवत इति । इह च गौणत्वं क्रियाऽपेक्षं, तेनाऽजां नयति ग्राममित्यादौ ग्रामाद्यपेक्षयाऽजादेः प्रधानत्वेऽपि गौणत्वं न विहन्यत इति । इह तु कृतपूर्वी कट, भुक्तपूर्वी ओदनम्, व्याकरणं सूत्रयतीत्यादौ यः कृतादिभिः कटादेरभिसबन्धः स प्रत्ययेऽर्थान्तराऽभिधायिन्युत्पन्ने कृतादीनामुपसर्जनत्वात् निवर्तते, क्रियया तु सह संबन्धोऽस्तीति व्याप्यत्वाद् द्वितीया भवति ॥४०॥

## क्रियाविशेषणात् ॥ २ । २ । ४१ ॥

क्रियाया यद्विशेषण तद्वाचिनो गौणात् नाम्नो द्वितीया भवति । मृदु पचति, स्तोकं पचति, मन्दं गच्छति, सुख शेते, दुःखं जीवति, सयुक्तिकं भाषते, अथो पचति शोभन ते भार्या;–अत्र "सपूर्वात् प्रथमान्तात् वा" ॥ २ । १ । ३२ ॥ इति विकल्पो न भवति । द्वितीयार्थं च[1] वचनं न कर्मसंज्ञार्थम्, तेन कृद्योगे कर्मनिमित्ता[2] षष्ठी न भवति; ओदनस्य शोभनं पक्ता, सुखं स्थाता, कष्टं स्थाता, चिरमासिता, तथा मन्द गन्ता ग्रामायेत्यादौ चतुर्थी न भवति ॥ ४१ ॥

---

कृतादिभि कटादेरभिसंबन्ध स वृत्ते परार्थाभिधायित्वेन कृतादीनामुपसर्जनत्वादुत्पन्ने प्रत्ययेऽर्थान्तराभिधायित्वात् निवर्तते । अस्ति च करोतेरभिसबन्ध कटादिनेति कृत्वा द्वितीया भविष्यति । न च प्रत्ययाभावोऽसामर्थ्यात्, यतो नेद युगपदुभय भवति–वाक्य च प्रत्ययश्च । यदा वाक्य, न तदा प्रत्यय । यदा प्रत्यय, सामान्येन तदा वृत्ति । तत्राऽवश्य विशेषार्थिना विशेषोऽनुप्रयोक्तव्य –कृतपूर्वी, किम्? कटमिति । भुक्तपूर्वी, किम्? ओदनमिति । एवमन्यत्रापीत्याह—**इह त्वित्यादि** । अत्राऽय तात्पर्यार्थ –कृत कट पूर्वमनेनेति वाक्ये कृतकटयो सामानाधिकरण्यम् । असिद्धार्थविशेषे वृत्त्या न भाव्य, तस्या सामान्यविषयत्वात् । सामान्येन च व्यवहारयोगात् तस्मात् कर्मसामान्ये भावे वा क्त उपपद्यते । तत्र कृत पूर्वमनेनेत्यस्मिन्नर्थे कृतपूर्विशब्दो वर्तते, तेन पूर्व कृतवानित्यर्थ संपद्यते । तत्र करोतिवाच्यक्रियापेक्षमस्ति कटादे कर्मत्वम् । तथाऽऽह हरि –"विशेषकर्मसबन्धे निर्भुक्तेऽपि कटादिभि । विशेषनिरपेक्षोऽन्य कृतशब्द प्रवर्तते" ॥१॥ "अकर्मकत्वे सत्येव क्तान्ते भावाभिधायिनि । तत क्रियावता कर्त्रा योगो भवति कर्मणाम्" ॥२॥ "अविग्रहा गतादिस्था यथा ग्रामादिकर्मभि । क्रिया सबध्यते तद्वत् कृतपूर्व्यादिषु स्थिता" ॥३॥ **व्याकरणं सूत्रयतीत्यत्रापि** लक्ष्ये लक्ष्यलक्षणसमुदाये वा व्याकरणशब्दो वर्तते, तत्र व्याकरणस्य सूत्र करोतीति वाक्ये भेदनिबन्धना षष्ठी । यदा तु लक्षण एव व्याकरणसूत्रशब्दौ वर्तेते तदा व्यपदेशिवद्भावनिमित्ता षष्ठी । उत्पन्ने तु प्रत्यये योऽसौ सूत्रव्याकरणयोरभिसबन्ध स निवर्तते । अपि च करोतेर्व्याकरणेनाऽभिसबन्ध इति द्वितीया भवति । तदयमर्थः—**वाक्ये** द्रव्यरूपं सूत्र शब्देनाऽभिधीयते । णिचि तूत्पन्ने सत्त्वभावातिवर्तनात् करोत्यर्थाभिधायी सूत्रशब्द संपद्यते, परार्थाभिधायित्वाद्वृत्तेरिति । प्रक्रियागतविभागाऽऽश्रयणेन चेदमुच्यते । परमार्थतश्च धात्वन्तरं सूत्रि –'सूत्रण्' क्रियावचन इति ॥ ४० ॥

**क्रियाविशेषणात्** । गौणात् नाम्नो द्वितीयेत्यनुवर्तते । क्रियाविशेषणात् गौणात् नाम्नो द्वितीयेत्यन्वय । करोतेर्भावे कर्मणि वाऽत्र अप्रत्यये–क्रिया, विपूर्वात् 'शिष्लृप्' विशेषणे, इत्यतो विशिष्यते–अवच्छिद्यतेऽनेनेति करणेऽनटि–विशेषणम्, धात्वर्थ –क्रिया परिणामपरिस्पन्दवर्तनालक्षणा त्रिधा, तस्या यद्विशेषणमवच्छेदक तत इत्याह—**क्रियाया यद्विशेषणमिति** । ननु रूपाद्युपाधिवत् क्रिया द्रव्यस्यैवोपाधि, न चोपाधेरुपाध्यन्तरसंभव, 'निर्गुणा गुणा क्रिया च' इति वचनात् । तत्कथं क्रियाया विशेषणसभव?, सत्यमेतत्–किन्तु सजातीयस्य द्रव्योपाधेरपेक्षयोत्कर्षो दृश्यते, यथा–शुक्ल, शुक्लतर, शुक्लतम इति रूपरसादीनां कला इति प्रविभागप्रचयापचयाभ्यामुत्कर्षापकर्षवृत्तित्व भवति, तत्रूपाध्यन्तरयोगात् । तदाहुस्तद्विद –"भवेद् द्विगुणमाधुर्यमनन्तगुणकालकम् । द्रव्य चतुर्गुणोद्भूतगन्धमाम्रफलादिकम्" ॥ १ ॥ यथा च रूपादीनां तथा क्रियाणामपि परस्परापेक्षया विशेषसभवे शोभन पचतीत्येव विशेषणयोग स्यात्, कथमन्यथा पापच्यते पचतितरामित्यादौ तासामेकरूपत्वात् यङादिप्रत्ययविधि स्यात् । ननु चासत्त्वभूता क्रिया, तदुपाधिस्तु सुतरामसत्त्वभूत, तत्कथ सत्त्वाभिधायिना नाम्ना प्रतिपाद्यत इति?, उच्यते–धातुप्रकृतिवाच्याऽसत्त्वभूतैव क्रिया यथा क्रियाशब्देन नामरूपेण सत्त्वरूपापन्ना प्रतिपाद्यते, तथोपाधिरपि सत्त्वरूपापन्न शोभनादिशब्देनेत्यदोष । कथ पुनरसत्त्वभूतोऽर्थ सत्त्वरूपेण प्रकाश्यत इति चेत्?, स्ववाचकप्रकाशबलादिति ब्रूम, स्वशक्तिरिय वाचकानां यदसत्त्वं सत्त्वरूपतया प्रकाशयन्ति, पदार्थस्य वा स्वरूपमिदमीदृश यद्विशिष्टेन वाचकेनाऽभिधीयमानोऽसत्त्वरूप सत्त्वरूपतया प्रकाशते । तदुक्त–"व्यपदेशे पदार्थानामन्या सत्तौपचारिकी । सर्वावस्थासु सर्वेषामात्मरूपनिदर्शिनी" ॥१॥ "स्फटिकादि यथा द्रव्य भिन्नरूपैरुपाश्रयै. । स्वशक्तियोगात् सबद्धं ताद्रूप्येणैव गम्यते ॥ २ ॥ इति । उदाहरण–**मृदु पचतीत्यादि** । ननु 'क्रियाऽव्ययविशेषणे' इति लिङ्गानुशासनकारिकावचनात् नपुसकत्वमेकत्व च क्रियाविशेषणानामभिहित, तत्र "नाम्न प्रथमे०" इति सूत्रेण यथा प्रथमा विहिता समेभ्योऽव्ययेभ्यस्तथा क्रियाविशेषणादपि प्रथमा । अन्ये त्वाहु –धात्वर्थ क्रिया, सा च कारकचक्रनिष्पाद्यत्वात् कर्मरूपतां नाऽतिक्रामति, ततो यथा–भीष्ममुदारं दृश्य कट करोतीत्यादौ कटादिकर्मविशेषणतया भीष्मादिशब्देभ्यो द्वितीया तथा मन्दं पचति साधु गच्छतीत्यादौ कर्मत्वात् क्रियाविशेषणादपि स्यात् किमनेनेत्याशङ्क्याऽऽह–**द्वितीयार्थमित्यादि** । तत्फल दर्शयति–**तेनेत्यादि** । अयमर्थ –यथा ओदनस्य पक्तेत्यादौ कृदन्तकर्मत्वादोदनादिशब्दात् कर्मणि षष्ठी, एव शोभनं पक्तेत्यादौ शोभनशब्दादपि स्यात्, न चासाविष्टा, शिष्टाऽसंमतत्वात् । तथा मन्द गन्ता ग्रामायेत्यादौ चतुर्थी चाऽनिष्टा स्यात् । ननु शोभन पक्तेत्यादौ "कर्मणि कृत" इत्यनेन कर्मणि षष्ठ्युच्यते, शोभनमिति क्रियाविशेषणत्वेन कृदन्तस्य कर्म, तद्धि कृदन्तधातुवाच्याया क्रियाया विशेषण, न च सा क्रिया आत्मन एव कर्मोऽपि तु करोतीति क्रियान्तरस्य, सा यस्या क्रियाया कर्म तस्या एवेदमपि कर्म तत्सामानाधिकरण्याद्धस्य कर्मत्वमिति क्रियाविशेषणे षष्ठी न भवति । नैवम्–नाऽत्र पचतीत्यादिक्रियाया कर्मत्व, न ह्यत्र क्रियान्तरमस्ति, यदपेक्षया धात्वर्थस्य कर्मता स्यात् । तथा हि–धातुर्विक्लेदार्थं देवदत्तादिव्यापारं क्रियामाचष्टे प्रत्ययश्च साधन, त च व्यापारं दर्शयता विक्लेदार्थं पाकशब्दमुपादाय पाकं करोतीत्युच्यते, न त्वत्र धातूपात्ताया विक्लेदसाधनदेवदत्तादिव्यापारलक्षणाया क्रियाया कर्मत्वापत्तौ क्रियान्तरं प्रतीयते येनेद कर्म स्यात् । अत क्रियाविशेषणात् प्रथमैव भवति न विभक्त्यन्तरस्य प्राप्तिरस्तीति । नन्वस्तु प्रथमा, प्रथमाद्वितीयैकवचनयो रूप प्रत्यविशेष इत्युक्तत्वात् दोषाभावात्, नैवम्–प्रथमाविधाने **अथो पचति शोभनं ते भार्या** इत्यादौ तेमे विधान **"सपूर्वात् प्रथमान्तात् वा"** इत्यन्वादेशे विकल्पित स्यात् नित्य चेष्यत इति प्रथमाविधिर्नेष्ट इति द्वितीयार्थमिदमुच्यत इति ॥ ४१ ॥

---

१ × वचन पु० । २ सकर्म° पु० ।

## कालाऽध्वनोर्व्याप्तौ ॥ २ । २ । ४२ ॥

स्वेन संबन्धिना द्रव्यगुणक्रियारूपेण कार्त्स्न्येन संबन्धो व्याप्तिः, अत्यन्तसंयोग इति यावत्; तस्यां द्योत्यायां कालेऽध्वनि च वर्तमानाद् गौणात् नाम्नो द्वितीया भवति । मासं गुडधानाः, मासं कल्याणी, मासमधीते, क्रोशं पर्वतः, क्रोशं कुटिला नदी; क्रोशमधीते । कालाऽध्वनोरिति किम्?, स्थाल्यां पचति । व्याप्ताविति किम्?, मासस्य मासे वा द्व्यह गुडधानाः, मासस्य मासे वा एकरात्रं कल्याणी, मासस्य मासे वा द्विरधीते; क्रोशस्य क्रोशे वा एकदेशे पर्वतः, क्रोशस्य क्रोशे वा एकदेशे कुटिला नदी; क्रोशस्य क्रोशे वा एकदेशेऽधीते । षष्ठ्याः सप्तम्या वा अयमपवादः, तेन मासमधीते, क्रोशमधीते इत्यकर्मकत्वे इदमुदाहरणम्; कर्मत्वे "कर्मणि" ॥ २ । २ । ४० ॥ इत्येव द्वितीया सिद्धा । भावादपीच्छन्त्यन्ये—गोदोहं वक्रः, गोदोह बुद्बुदाः ॥ ४२ ॥

## सिद्धौ तृतीया ॥ २ । २ । ४३ ॥

सिद्धौ—क्रियाफलनिष्पत्तौ द्योत्यायां कालाऽध्ववाचिनो गौणात् नाम्नः टाभ्याम्भिस्लक्षणा यथासंख्यमेकद्विबहौ तृतीया विभक्तिर्भवति; व्याप्तौ गम्यायाम् । मासेन मासाभ्यां मासैर्वाऽऽवश्यकमधीतम्, क्रोशेन क्रोशाभ्यां क्रोशैर्वा प्राभृतमधीतम् । सिद्धाविति किम्?, मासमधीते आचारो[1] न चाऽनेन[2] गृहीतः, अत्र व्याप्तिमात्र गम्यते न सिद्धिः । भावादपीच्छन्त्यन्ये—गोदोहेन कृतः कटः । द्वितीयाऽपवादो योगः ॥ ४३ ॥

## हेतुकर्तृकरणेत्थंभूतलक्षणे ॥ २ । २ । ४४ ॥

फलसाधनयोग्यः पदार्थो हेतुः, इमं कंचित्प्रकार भूत—आपन्न इत्थंभूतः स लक्ष्यते येन स इत्थभूतलक्षणः;

---

**कालाऽध्वनोर्व्याप्तौ** । व्याप्तिं व्याचष्टे—**स्वेन संबन्धिने**त्यादिना । **स्वेन संबन्धिने**त्यत्र "द्विहेतो०" इत्यनेन विकल्पेन षष्ठीविधानात् कर्तरि तृतीया । सबन्धिन दर्शयति—**द्रव्यगुणक्रियारूपेणे**ति । **कार्त्स्न्येने**ति । सहार्थे तृतीया । **संबन्ध** इति । अत्र कालाऽध्वनो कर्मतापन्नयोरिति गम्यम् । **अत्यन्तसंयोग** इति । तत्र संयोगस्याविच्छेद इत्यर्थ । गौणात् नाम्नो द्वितीयेत्यनुवर्तते । अनुवर्तमान गौणादिति कालाध्वनोरित्यनेन विशिष्यते, तेन चानुवर्तमान नाम्न इति । तथा च कालाध्वनोर्वर्तमानात् गौणात् नाम्नो द्वितीयेत्यन्वयस्तदाह—**कालेऽध्वनि च वर्तमाना**दित्यादि । कालाध्वनो प्रत्येक द्रव्यगुणक्रियाऽत्यन्तसयोगे क्रमेण द्वितीयामुदाहरति—**मासं गुडधाना** इत्यादि । गुडे धाना गुडधाना इति द्रव्येण जातिरूपेण वा व्याप्ति कालस्य, मासे निरन्तरं गुडधाना सन्तीत्यर्थ । **क्रोशं पर्वत** इत्यध्वनो द्रव्येण जात्या वा व्याप्ति, क्रोशपर्यन्त निरन्तर पर्वतो वर्तते नान्यत् किमपि । **मासं कल्याणी, क्रोशं कुटिला नदी**ति । कालाध्वनोर्गुणेन व्याप्ति, मासेऽविच्छिन्नमङ्गलवान् इति क्रोशपर्यन्तं कौटिल्यवती नदीति चार्थः । **मासमधीते, क्रोशमधीत** इति । कालाध्वनो क्रियया व्याप्ति, त्रिंशद्दिनात्मके मासे निरन्तरमधीते इति क्रोशपर्यन्त निरन्तरमधीत इति चार्थ । **स्थाल्या पचती**ति । पाकेन स्थाल्यां व्याप्तायामपि कालाध्वनोरिति वचनादत्र द्वितीया न भवति, तदभावे "सप्तम्यधिकरणे" इति सप्तमी । द्वयोरह्नोः समाहार इति "द्विगोरन्नह्नोऽट्" इत्यटि—**द्व्यहमि**ति । द्वौ वारावस्येति विग्रहे "द्वित्रिचतु०" इति सुचि—**द्विरि**ति । अत्र गुडधानादिना मासस्य क्रोशस्य वा कार्त्स्न्येन सबन्धाभावात् षष्ठी सप्तमी वा भवतीति । एव क्रोशस्य क्रोशे वा एकदेशे पर्वत इत्यादावपि व्याप्तेरभावो द्रष्टव्य इति । अत्र कालाऽध्वनो सम्बन्धमात्रविवक्षाया षष्ठी, आधारविवक्षाया तु सप्तमी । अत्रैकदेशशब्दाद्व्याप्ते समवेऽपि अध्वनोऽभावादनेन द्वितीया न । इय च द्वितीया षष्ठीसप्तम्योरुक्तेन प्रकारेण बाधिकेत्याह—**षष्ठ्याः सप्तम्या वाऽयमपवाद** इति । न च कालाध्वनो कर्मत्वेन द्वितीययैव भाव्य किमर्थमेतदिति वाच्यम्, "कालाऽध्वभावदेशं वाऽकर्म चाऽकर्मणाम्" इत्यकर्मकधातुसंबन्धित्वेनाधारस्य कर्मसंज्ञाविधानात् सकर्मकधातुसबन्धित्वेऽनयोरुक्तेन प्रकारेण षष्ठी सप्तमी वा स्यात् न कर्मत्वमित्याह—**तेने**त्यादि । कालाध्वनोरिव भावादपीच्छतां मतमुपन्यस्यति—**भावादपीच्छन्त्यन्ये** इति । प्राञ्च, अपिशब्दात्तेषां मते कालाऽध्वनो समुच्चय, तन्मतेनोदाहरति—**गोदोह**मित्यादि ॥ ४२ ॥

**सिद्धौ तृतीया** । अत्र "कालाऽध्वनोर्व्याप्तौ" इति गौणात् नाम्न इति चानुवर्तते । सिद्धौ व्याप्तौ कालाऽध्वनोर्वर्तमानात् गौणात् नाम्नो द्वितीयेत्यन्वय । यद्यपि त्रिप्रकारा व्याप्ति प्रस्तुता तथापि सामर्थ्यात् क्रियाव्याप्तेरेव सिद्धाविति विशेषणम् । यस्य ह्यारम्भस्तस्य सिद्धि, द्रव्यगुणयोश्च सिद्धरूपयो शब्देनाप्रतिपादनाच्च तावारभ्येते, नापि निष्पद्येते इति न ताभ्यां व्याप्ते सिद्ध्या सबन्ध । ननु यदि क्रिया सिद्धिं व्यभिचरेत्तदा युज्येत एतद्विशेषण क्रियाव्याप्ते, न च काचित् क्रियाऽपरिसमाप्ताऽस्ति । सत्यमेतत्—किंतु काचित् फल सपाद्य समाप्यते, काचिदन्यथा, तत्र विशेषणोपादानसामर्थ्यादधिगतफला या समाप्यते तद्व्याप्तौ द्वितीयाबाधिका तृतीयेत्याह—**सिद्धौ—क्रियाफलनिष्पत्तावि**त्यादि । सिद्धि—क्रियाफलनिष्पत्तिस्तत्र्च क्रियाव्याप्तावेवाऽय विधिर्न द्रव्यगुणव्याप्ताविति क्रियाव्याप्तावेवोदाहरति—**मासेन मासाभ्या मासैर्वाऽऽवश्यकमि**ति । आवश्यकं नामाऽध्ययनविशेष । **अधीतमि**ति । सिद्ध गृहीत शिक्षितमिति यदर्थमध्ययन तत्फलनिष्पत्तिर्गम्यते । तदभावे प्रत्युदाहरणे द्वितीयैवेत्युदाहरति—**मासमधीत आचारो न चाऽनेन गृहीत** इति । अत्र व्याप्तिमात्र गम्यते न सिद्धिरिति सिद्ध्यर्थाविवक्षामात्रेण तृतीयाया अभाव । अत्रापि कालाध्वनोर्व्याप्तेर्विद्यमानत्वात् पूर्वेण द्वितीयायां प्राप्तायां तद्बाधनार्थो योग, तेन यदुच्यते कैश्चित्—मासेनानुवाकोऽधीत, क्रोशेनानुवाकोऽधीत इति करण एव तृतीया इतीद नाऽऽरम्भणीयमिति तदसम्यगित्याह—**द्वितीयापवादो योग** इति ॥ ४३ ॥

**हेतुकर्तृकरणेत्थंभूतलक्षणे** । गौणादिति नाम्न इति तृतीयेति चाऽनुवर्तते । हेतुकर्तृकरणेत्थभूतलक्षणे गौणात् नाम्नस्तृतीयेत्यन्वयः । कर्तृप्रयोजकस्यापि शास्त्रकृतां हेतुत्वेन व्यवहारादुभयगतत्वेऽपि लौकिक एव हेतुरिह गृह्यते, कर्तु प्रयोजके हि कर्तृत्वात् कर्तृद्वारेणैव तृतीयासिद्धेरित्याह—**फलसाधनयोग्य** इत्यादि । फल—कार्यं, तस्य साधन—निष्पादनं करणमिति यावत्, तत्र योग्य—सामान्यतो दृष्टसामर्थ्यः ।

---

[1] °तमाचारो° पु० । [2] °नाऽनेन° पु० ।

हेत्वादिष्वर्थेषु वर्तमानाद् गौणात् नाम्नस्तृतीया भवति । हेतौ–धनेन कुलम्, अन्नेन वसति, विद्यया यशः, कन्यया शोकः, तीक्ष्णेन परशुना छिनत्ति; कर्तरि–चैत्रेण कृतम्, मैत्रेण भुज्यते, करणे–दात्रेण लुनाति, मनसा मेरु गच्छति, समेन धावति–समेन पथा ग्रामं धावतीत्यर्थः, एव विषमेण धावति, आकाशेन याति, आधारविवक्षायां तु सप्तम्यपि–समे धावति, विषमे धावति, आकाशे याति; इत्थंभूतलक्षणे–अपि भवान् कमण्डलुना छात्रमद्राक्षीत्, चूलया परिव्राजकमद्राक्षीत्; छात्रत्वादिकं प्रकारमापन्नस्य मनुष्यस्य कमण्डल्वादि लक्षणम् । इत्थंभूतग्रहणं किम्?, वृक्षं प्रति विद्योतनम् । अपि भवान् कमण्डलुपाणिं छात्रमद्राक्षीदित्यत्र तु लक्ष्यप्रधानो निर्देशो न लक्षणप्रधान इति न भवति । "सहार्थे" इत्येव तृतीया सिध्यति, लक्ष्यलक्षणभावे तु षष्ठी मा भूदितीत्थभूतलक्षणम् । तथा धान्येनाऽर्थः धान्येनाऽर्थी, मासेन पूर्वः, मासेनाऽवरः, असिना कलहः, वाचा निपुणः, गुडेन मिश्रः, आचारेण श्लक्ष्णः, माषेणोनः, माषेण न्यूनः, मासेन विकलः, पुंसानुजः, शष्कुलया खण्डः; गिरिणा काण इत्यादौ हेतौ कृतमवत्यादिगम्यमानक्रियाऽपेक्षया कर्तरि करणे वा तृतीयेति ॥४४॥

## सहार्थे ॥ २ । २ । ४५ ॥

सहार्थस्तुल्ययोगो विद्यमानता च, तस्मिन् शब्दादर्थाद् वा गम्यमाने गौणात् नाम्नस्तृतीया भवति । पुत्रेण

---

योग्यग्रहणमन्तरेण फलसाधन इत्युच्यमाने यः फल साधयति क्रियाविष्टस्तत्र प्रतिपत्ति स्यात्, योग्यग्रहणेन तु योग्यतामात्रप्रतिपत्तावकुर्वन्नपि तत्फल हेतुरिति हेतुत्वं फलसाधनयोग्यत्वम् । तेन रूपेण पदार्थो हेतुरिति हेतुतृतीयया तत्र तस्य योग्यतामात्र द्योत्यते । तथा च धनादीनि कुलादिक न कुर्वन्त्यपि योग्यतामात्रेण तृतीयामुत्पादयन्ति । यत्रापि क्रिया दृश्यते–अन्नेन वसतीति, तत्रापि क्रियायामन्नादेर्योग्यतामात्रविवक्षयैव हेतुतृतीया । प्रक्रंस्यमाणव्यापारविवक्षायां तु करणे तृतीया स्यादिति । ननु योग्यस्य हेतुत्वे सर्वमेव कारक हेतुरेव स्यात् अयोग्यस्याकारकत्वात्, तत्र कर्तृकरणयोस्तृतीयाविधानमनर्थकं, "हेतु°"इत्येव गतत्वात् । कर्मादौ च यद्यपि विभक्त्यन्तरं विहित तथापि यत्र कारकत्वमेव भवति न कर्मादिविशिष्टरूपता तत्राऽपवादाभावात् तृतीया प्राप्नोति–नटस्य शृणोति, ग्रन्थिकस्य शृणोतीति, उच्यते–न हेतुमात्र कारकत्वमपि तु विशिष्टरूप क्रियाया निर्वर्तकं नाम । तत्रापि कर्त्रादिभावो विशिष्टस्तस्य विशिष्टस्य रूपस्य कर्तृकरणयोर्विधान, अन्यथा तत्र षष्ठी स्यात् । नटस्य शृणोतीत्यत्रापि योग्यता न विवक्षिताऽपि तु क्रियायामप्रधानतामात्रमिति न भवति, तद्विवक्षायां तु तत्रापि तृतीया भवत्येव–नटेन शृणोतीति । इममिति । प्रत्यक्षीक्रियमाणस्य प्रकृत्यर्थस्यानवधारणात् तमाह–**कंचिदिति** । विवक्षितमित्यर्थं । **प्रकारमिति** । थमूप्रत्ययार्थं । **आपन्न** इति । भूतार्थ, भूङ प्राप्त्यर्थस्य प्रयोगात् । स लक्ष्यते येनेत्यादितात्पर्यकथनम् । क्रमेणोदाहरति–**धनेन कुलमित्यादि** । कुलकरणे धनस्य योग्यता परिदृष्ट तत्सम्प्रत्य कुर्वदपि तत्र हेतुरिति व्यपदिश्यते । **अन्नेन वसतीति** । वसनक्रियालक्षणस्य फलस्य साधनयोग्यत्वादन्न हेतु । एव विद्याकन्यातीक्ष्णानामपि तद्योग्यत्वात् हेतुत्व द्रष्टव्यम् । ननु यूपाय दार्वित्यादौ तादर्थ्यलक्षणे संबन्धे हेतुहेतुमद्भावस्य प्रकारभूते प्रतिपाद्ये दारुणो हेतोस्तृतीया कस्मान्न भवति ?, उच्यते–हेतुमतो यूपादेस्तादर्थ्यचतुर्थ्योत्पद्यमानया द्विष्ठस्य संबन्धस्याभिहितत्वाद्गौणत्वाच्च सबन्धाभिधायिन्यास्तृतीयस्या अप्रवृत्ति, एव तृतीययाऽर्थाभिहिते चतुर्थ्यो इति । **चैत्रेण कृतं, मैत्रेण भुज्यते** इति । अत्र चैत्रादि करणादिक्रियायाः कर्तेति ततस्तृतीयेति । **दात्रेण लुनातीत्यादीनि** । अत्र दात्रादिना देवदत्तादि कर्ता लवनादिक्रियां करोतीति साधकतमत्वात् दात्रादि करणमिति ततस्तृतीया । **छात्रत्वादिकमित्यादिनेत्थभूतलक्षणार्थमुदाहरणे योजयति**, अननुगमत्वात् । सामान्यस्य भेदको धर्म–प्रकार इति मनुष्य इति सामान्यस्य भेदकश्छात्रत्वादिको धर्म प्रकार इत्यर्थ । आदिशब्देन कुमारत्वादिपरिग्रह । **तमापन्नस्य**–प्राप्तस्येत्यर्थ । **कमण्डल्वादि**–अत्राऽऽदिशब्देनाऽवदातवर्णादिपरिग्रह । तच्च लक्षण, तेन हि स इत्थभूतो दृश्यते इति ततस्तृतीया । ननु कमण्डल्वादिलक्षणस्य हेतुत्वमप्यस्तीति तद्द्वारेणैव भविष्यति, उच्यते–न, तावत् छात्रादिस्वरूप लक्षणाधीनमिति न तस्य लक्षण हेतु । छात्रादिप्रतीतेस्तु तद्धेतु, न चेह तत्प्रतीति केनचिदभिधीयते । सूत्रेण त्वनेन तृतीया विधीयमाना लक्षणत्वमवद्योतयतीति युक्तोऽस्याऽऽरंभ इति । **वृक्षं प्रति विद्योतनम्**–अत्र विद्योतन नाम प्रकारस्तमापन्नस्य कस्यचिन्न वृक्षो लक्षणम्, "लक्षणवीप्स्येत्थभूते°"इत्यादिना प्रत्यादियोगे लक्षणे द्वितीयस्या अपवादरूपाया विद्यमानत्वात् कथं प्रत्युदाहरणमिति चेत्, सत्यमेवैतत् जातौ पदार्थे, व्यक्तौ तु पर्याय स्यादिति प्रत्युदाह्रियते । अथवा–**वृक्षं प्रतीति** वृक्षस्य लक्षणत्वप्रदर्शनपरमेतत्, प्राप्तिस्त्वत्रेत्थभूतग्रहणाभावे वृक्षेण विद्योतनमिति तृतीयाप्रसक्ते प्रत्यभाव एव विज्ञायत इत्यदोष । अथेत्थभूतलक्षणे लक्ष्यवाचिशब्दस्थे प्रतिषेधो वक्तव्य, अन्यथा 'कमण्डलुपाणिं छात्रमद्राक्षीद्'इति बहुव्रीहौ कृते कमण्डलुशब्दात् तृतीया स्यात् । न च प्रत्ययलक्षणेन "अधातुविभक्ति०" इति नामसंज्ञाप्रतिषेध, "नाऽऽमन्त्र्ये" इति नलोपप्रतिषेधज्ञापकात् । न च तृतीयस्या लुप् प्राप्नोति समासनामावयवत्वात्, कृते समासे तस्या उत्पादात्, नैष दोष–इत्थभूतस्य लक्षणेनापृथग्भावात् ततस्तृतीया न भवति । यत्रेत्थभूतस्य लक्षण पृथग्भूत तत्र तृतीया भवति, न चात्रेत्थभूतस्य लक्षण पृथग्भूत, तथा च प्राधान्येन लक्षण निर्दिशति–इत्थंभूतस्य लक्षणमिति । षष्ठीतत्पुरुषस्योत्तरपदार्थप्रधानत्वात् इत्थभूतस्य यल्लक्षण प्रधान अप्राप्तोपसर्जनभाव तत्र तृतीया, यथा–**कमण्डलुना छात्रमद्राक्षीदिति** । बहुव्रीहौ तु स्वार्थोपसर्जनान्यपदार्थाभिधायित्वात् वर्तिपदानां नास्ति लक्षणस्य प्राधान्य, अन्यपदार्थे लक्ष्यस्यैव प्राधान्यादित्याह–**लक्ष्यप्रधान इत्यादि** । ननु कमण्डलुना छात्रमद्राक्षीदित्यादौ कमण्डलुना सह छात्रमद्राक्षीदिति सहार्थयोगोपपत्ते "सहार्थे" इति तृतीया सिध्यति, तदर्थमनर्थकमित्थभूतग्रहणमित्याह–**सहार्थे इत्येवेत्यादि** । अयमर्थ–अत्र सहार्थयोग संभवति, तद्विवक्षाया च तृतीया सिध्यति, लक्ष्यलक्षणभावश्चेहाऽधिकोऽस्ति इति तत्र षष्ठीबाधयाऽनेन तृतीया विधीयत इति । ननु धान्येनार्थो धान्येनार्थीत्यादौ क्रियापदाश्रवणात् कर्तृकरणयोरभावात् षष्ठी प्राप्नोतीत्याह–**हेतावित्यादि** । गम्यमानक्रियापेक्षयापि कर्त्रादिभावदर्शनात्, यथा–प्रविश पिण्डीमिति ॥ ४४ ॥

**सहार्थे** । अत्र गौणात् नाम्नस्तृतीयेति वर्तते । सहार्थे गौणात् नाम्नस्तृतीयेत्यन्वय । सहस्य–सहशब्दस्यार्थो द्योत्य–सहार्थ–तुल्य साधारणोऽप्रधानस्य प्रधानेन क्रियादिना य सबन्ध स–**तुल्ययोगः** । **विद्यमानता**–सत्ता । ननु च विद्यमानतायामपि तुल्ययोगोऽस्त्येव, सत्तया सहोभयो संबन्धात्, तथाहि–सहैव दशभि पुत्रैर्भारं वहति गर्दभीति सहैव दशभि पुत्रै सतीति वाक्य प्रतिपत्तुं, तत्र विद्यमानता चेति तुल्ययोगात् किं पृथगुपादीयते ?, उच्यते–विवक्षितयोगाभावात् सहैव दशभिरित्यत्र वहनमात्र विवक्षितं तद्गर्दभ्या एव न तत्पुत्राणाम्,

सहाऽऽगतः, पुत्रेण सह स्थूलः, पुत्रेण सह गोमान्, शिष्येण सह ब्राह्मणः, तिलैः सह माषान् वपति; सहैव दशभिः पुत्रैर्भारं वहति गर्दभी । अर्थग्रहणात्–पुत्रेण साकम्, पुत्रेण समम्, पुत्रेण सार्धं, पुत्रेणामा, पुत्रेण युगपद्; अर्थाद्गम्यमाने–पुत्रेणाऽऽगतः; वृद्धो यूना, न्यक्षेण करोति; एवं कार्त्स्न्येन, साकल्येन, अनवयवेनेत्यादावपि सहार्थोऽस्ति । सुखेनास्ते, दुःखेन जीवति, कष्टेन क्रामति, अनायासेन करोति इत्यादावास्यादिक्रियाभिः सह सुखादेः सहार्थोऽस्ति । क्रियाविशेषणत्वविवक्षायां तु द्वितीयैव–सुखमास्ते, दुःखं जीवति, कष्टं क्रामति; अनायासं करोति इत्यादि । गौणादित्येव ?, सहोभौ चरतो धर्मम्, चैत्रमैत्राभ्यां सह कृतमिति तु कर्तर्येव तृतीया ॥ ४५ ॥

## यद्भेदैस्तद्वदाख्या ॥ २ । २ । ४६ ॥

यस्य–भेदिनः–प्रकारवतोऽर्थस्य भेदैः–प्रकारैर्विशेषैस्तद्वतः–तत्प्रकारवदर्थयुक्तस्याऽऽख्या–निर्देशो भवति, तद्वाचिनो गौणात् नाम्नस्तृतीया भवति । अक्ष्णा काणः, पादेन खञ्जः, हस्तेन कुणिः, शिरसा खल्वाटः, प्रकृत्या दर्शनीयः, प्रायेण वैयाकरणः, गोत्रेण काश्यपः, जात्या ब्राह्मणः, जात्या सुशीलः, स्वभावेनोदारः, निसर्गेण प्राज्ञः, वर्णेन गौरः, स्पर्शेन शीतः, वचनेन मृदुः, रसेन स्वादुः, मुखेन सुरूपः, उरसा विशालः, बाहुभ्यां दृढः; सर्वत्र पुरुषस्तद्वान् संबध्यते ।

---

यथा–पुत्रेण सहाऽऽगत इत्यागमनमुभयोरपीति तुल्ययोगात् विद्यमानता पृथगुपादीयते । तुल्ययोगोऽपि केनचित् क्रियादिना भवति–तत्र पुत्रेण सहाऽऽगत इत्यत्रागमनक्रियया पितापुत्रयोस्तुल्ययोग, पुत्रेण सह स्थूल इत्यत्र स्थौल्येन गुणेन, पुत्रेण सह गोमानित्यत्र च गोभिर्द्रव्येण, शिष्येण सह ब्राह्मण इत्यत्र ब्राह्मण्येन जात्येति । सर्वत्राऽत्र यद्यप्युभयो क्रियादियोगस्तथाप्यागत इत्यादिशब्देनाभिधीयमान क्रियादियुक्त पित्रादिरभिधाया प्रधानमितरदप्रधानं, तत्र षष्ठ्यां प्राप्तायां तृतीया । ननु पुत्रेण सहाऽऽगत इत्यत्र प्रधानकर्तरि क्तस्य विधानात् तत्रैकेन शब्देन भिन्नकक्षत्वात् गुणप्रधानयो कर्त्रोरभिधानासंभवात् प्रधाने कार्यसंप्रत्ययात् प्रधानस्यैवाभिधान न्याय्यमित्यप्रधानस्य प्रतीयमानगमिक्रियापेक्षकर्तृत्वाश्रयेण सिद्धा तृतीया । एवं तर्हि पुत्रेण सह स्थूल इत्यादौ गुणसंबन्धप्रतिपादनपरत्वादत्र क्रियाया अभावात् पुत्रस्य कर्तृत्वाभावात् तृतीया न सिध्यतीत्येवमर्थम् । किंच पुत्रेण सहाऽऽगमन देवदत्तस्येत्यनया कर्तुरनभिहितत्वादुभयत्र षष्ठी मा भूदप्रधाने तु तृतीया यथा स्यादित्येवमर्थं तृतीयाविधानम् । ननु प्रधानयोरेव कर्तृकर्मणो षष्ठीत्यप्रधाने कर्तरि तृतीयैव भविष्यति, नैवम्, कृत्प्रयोगे प्रधानाप्रधानकर्त्रो षष्ठीदर्शनात्, यथा–भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामित्यप्रधाने षष्ठीबाधनार्थं तृतीयाविधानम् । अथवा तिलै सह माषान् वपतीत्यत्रोप्यमानत्वात् माषा प्रधान कर्म, तिलास्तु तथायुक्ततया वृक्षमूलानीवोपसर्पणेऽप्रधानमित्यप्रधाने कर्मणि द्वितीयायां प्राप्तायां तृतीया विधीयते । ननु तिलैर्मिश्रीकृत्य माषा उप्यन्त इत्यन्तरङ्गत्वात् पूर्वं मिश्रणक्रियायां तिलानां करणत्वात् पश्चाद्वपनक्रियाया कर्मत्वात् तत्र करण इत्यनेन सिद्धा तृतीया, सत्यम्, सिध्यत्येवं–यदि मिश्रीकृत्य वपति, यदा तु न मिश्रणं केवलमेककालता तिलवापकाल एव माषान् वपति तदा मिश्रीकरणाभावेन तिलानां करणत्वाभावादत्र न सिध्यति तृतीयेति । यद्वा कश्चित् माषबीजाऽऽवाप उपस्थितस्तदर्थं च क्षेत्रमुपार्जित, तत्राऽन्यदपि किंचिदुप्यते–यदि भविष्यति भविष्यतीति एकक्षेत्रे च वापात् सहयोग कालभेदेऽप्यविरुद्ध इति । **सहैव दशभिः पुत्रैरिति** । विद्यमानतायामुदाहरणम् । अत्रापि प्रतियोगिनो नानाविभक्तियोगे तृतीयाविधान द्रष्टव्यम् । ननूदाहृते सहेत्यनेनापि सिध्यति किमर्थमर्थग्रहणमित्याह—**अर्थग्रहणादिति** । सहशब्देन लक्षितो योऽर्थस्तस्मिन्नपि यथा स्यादित्येवमर्थमित्यर्थ । तेन सहशब्दस्याप्रयोगेऽपि तदर्थस्य सद्भावे भवति, अन्यथा सहेनेत्युच्यमाने तच्छब्दप्रयोग एव विज्ञायेत । तदप्रयोगे तदर्थसद्भावो द्विधा भवति, पर्यायशब्दप्रयोगादर्थप्रकरणादेश्च तदर्थप्रतिपत्तेर्वेत्युदाहरति—**पुत्रेण साकमित्यादि** । अत्र पर्यायशब्दप्रयोगात् **पुत्रेण आगत** इत्यादावर्थात् सहार्थसत्तेति । **सुखेनाऽऽस्त** इति । अत्रापि सहार्थ एव तृतीयेत्याह—**आस्यादिक्रियाभिरित्यादि** । यदा तु विशेषणत्वविवक्षा तदा "क्रियाविशेषणात्" इति द्वितीयेत्याह—**क्रियाविशेषणत्वेत्यादि** । **गौणादित्येवेति** । असति गौणाधिकारे प्रधानादपि स्यादित्यर्थ । ननु 'उपपदविभक्ते कारकविभक्तिर्बलीयसि' इति यथा गा स्वामी व्रजति–अत्र व्रजिक्रियायां गवां कर्मत्वात् तन्निबन्धना द्वितीया "स्वामीश्वरा०" इति प्राप्ते उपपदविभक्ती षष्ठीसप्तम्यौ बाधित्वा प्रवर्तते, तथा **उभावित्यत्र** तृतीयामुपपदविभक्तिं बाधित्वा कारकविभक्ति प्रथमा भविष्यति । अथ शिष्येणोपाध्यायस्य गौरित्यत्र गवापेक्षया शिष्योपाध्यायौ द्वावपि गुणौ, उपाध्यायापेक्षया तु शिष्यो गुण, उपाध्यायस्य शब्देन गवा सबन्धात् शिष्यस्य तु सहयोगान्यथानुपपत्त्या, तत्राऽसति गौणादित्यधिकारे उभाभ्यामपि शिष्योपाध्यायाभ्यां षष्ठीं बाधित्वा तृतीया स्यादिति, नैवम्, अत्राप्युपाध्यायस्य गवा संबन्धोऽन्तरङ्ग इत्युपाध्यायात् षष्ठ्येव भविष्यति, सत्यम्, अत्रानुवादार्थं गौणादित्यधिक्रियते इति । **चैत्रमैत्राभ्यामिति** । क्तप्रत्ययेन कर्तुरनुक्तत्वादिति शेष ॥ ४५ ॥

**यद्भेदैस्तद्वदाख्या** । गौणात् नाम्नस्तृतीयेत्यनुवर्तते । यस्य भेदैरिति षष्ठीसमास, यस्येत्यनेन च यस्य ते भेदा स भेदी निर्दिश्यते इत्याह—**यस्य भेदिन इति** । तमेवार्थं स्पष्टयति—**प्रकारवतोऽर्थस्येति** । भेदशब्द प्रकारवचन इत्याह—**भेदैः प्रकारैरिति** । पुन स्पष्टयति—**विशेषैरिति** । जातौ बहुवचन, यद्भेदैर्यद्भेदेनेत्यर्थ । तद्वदाख्येत्यपि षष्ठीसमास इत्याह—**तद्वत इति** । यद्भेदैरिति यच्छब्देन निर्दिष्टो भेदी 'अक्ष्णा काण' इत्यक्ष्यादिरर्थस्तच्छब्देन निर्दिश्यते, सोऽस्यास्तीति तद्वानिति यस्य सोऽक्ष्यादिरर्थ स देवदत्तादिरुच्यते इत्याह—**तत्प्रकारवदर्थयुक्तस्येति** । स प्रकारवान् अक्ष्यादिरर्थ, तेन युक्तस्य देवदत्तादेरित्यर्थ । **अक्ष्णा काण इति** । अक्षि काण चाकाण च भवतीति इति तद्भेदेन काण इत्यक्षिमान् देवदत्त आख्यायते, अवयवधर्मेण हि समुदायो व्यपदिश्यते यथा–आढ्यमिद नगरमित्यक्षिशब्दात् तृतीया । एव **पादेन खञ्जः, हस्तेन कुणिरित्यादावपि** द्रष्टव्यम् । 'कुक' शब्देऽत "ऋतृघसकु०" उणा० ६३५ । इति किति णे–कुणि । खलन्त्यपगच्छन्ति केशा अस्मादिति "कपाटविराट०" उणा० १४८ । इत्याटे निपातनात्—**शिरसा खल्वाट इति** । **प्रकृत्या दर्शनीय इति** । प्रकृति –स्वभाव, स्वभावे हि दर्शनीयत्वमदर्शनीयत्व च भवति; तद्भेदेन दर्शनीय इति प्रकृतिमानाख्यायते । **प्रायेण वैयाकरण इति** । प्रैतीति "तन्व्यधि०" इति णे–प्रायः, तद्भेदो वैयाकरणत्व तार्किकत्व च, तद्भेदेन वैयाकरण इति तद्वान् निर्दिश्यते । **गोत्रेण काश्यप इति** । काश्यपो माठर इति च गोत्रभेद, तेन च भेदेन गोत्रमानाख्यायते—**काश्यप इति** । **जात्या ब्राह्मण इति** । अत्राऽपि जातिभेदेन ब्राह्मण्येन तद्वानिति प्रकृत्यादिभ्य-

यद्ग्रहणं प्रकृतिनिर्देशार्थम्, तत इत्याक्षेपात् । भेदग्रहणं किम्?, यष्टीः प्रवेशय, कुन्तान् प्रवेशय । तद्वद्ग्रहणं किम्?, अक्षि काणं पश्य । आख्याग्रहणं प्रसिद्धिपरिग्रहार्थम्, तेनाऽक्ष्णा दीर्घ इति न भवति । कृतभवत्यादिक्रियाऽध्याहारेण कर्तृकरणयोस्तृतीया सिद्धैव संबन्धषष्ठीनिवृत्त्यर्थं तु वचनम् ॥ ४६ ॥

## कृताद्यैः ॥ २ । २ । ४७ ॥

कृत इत्येवंप्रकारैर्निषेधार्थैर्युक्ताद् गौणात् नाम्नस्तृतीया भवति । कृतं तेन, भवतु तेन, अलमतिप्रसङ्गेन; किं गतेन । कृत, कृतम्, भवतु, अलम्, किम्, एवंप्रकाराः कृतादयः ॥ ४७ ॥

## काले भात् नवाऽऽधारे ॥ २ । २ । ४८ ॥

काले वर्तमानात् नक्षत्रवाचिनो गौणात् नाम्न आधारे तृतीया वा भवति । पुष्येण पायसमश्नीयात्, पुष्ये पायसमश्नीयात्; मघाभिः पललौदनम्, मघासु पललौदनम् । काल इति किम्?, पुष्येऽर्कः, मघासु ग्रहः,–अध्वनि मा भूत् । चित्रासु जाता चित्रा माणविका, तस्यां–चित्रायामास्ते–अत्र माणविकायां मा भूत् । भादिति किम्?, तिलपुष्पेषु यत्क्षीर,

---

स्तृतीयेत्याह—सर्वज्ञेत्यादि । ननु च प्रकृत्या दर्शनीयः प्रायेण वैयाकरण इति युक्तः प्रयोगः, दर्शनीयत्वं हि प्राकृतं वैकृतं चास्ति वैयाकरणत्वं प्रायिकमन्यच्च, तत्रेतरव्युदासार्थं प्रकृत्या प्रायेणेति चार्थवत् । काण इत्यादिप्रयोगे तु अक्ष्णेत्यादिरव्यभिचारेण प्रतीतेरयुक्तः प्रयोगोऽर्थस्य गतत्वात्, उच्यते–लोकोऽत्र पर्यनुयोक्तव्यो योऽर्थवतोऽनर्थकतामनपेक्ष्य प्रतीतेऽपि शब्दान् प्रयुङ्क्ते, लोके च न सर्व एवं सूक्ष्मेक्षिकया शब्दान् प्रयुङ्क्ते । यस्त्वेवं समीक्षते स न प्रयुङ्क्ते तत्रापि चोपचरितार्थनिवृत्तिरक्ष्णेत्यादिप्रयोगप्रयोजनम्, सत्यमयं काणो न तूपचारेणेति । यद्ग्रहणमिति । अयमर्थः–यच्छब्देन तत इत्याक्षिप्यते, ततस्तस्मादिति च प्रकृतिर्निर्दिश्यते–यद्भेदैस्तद्भेदाख्या भवति ततस्तृतीया भवतीति यद्ग्रहणं प्रकृतिनिर्देशार्थं, असति तु यदित्यस्मिन् प्रकाराद्वचनप्रकृतित्वं विज्ञायेत । यष्टीः प्रवेशयेति । यदि भेदग्रहणं न क्रियते तदा येन तद्वदाख्येत्युच्यमानेऽत्रापि स्यात्, अत्र हि यष्ट्यादिना तद्वानुपचारेणाख्यायते । अक्ष्णा काण इत्यादौ च न स्यात्, न ह्यत्राक्ष्यादिशब्देन तद्वान् निर्दिश्यते इतीष्टानिष्टयोः सिद्ध्यसिद्ध्यर्थं भेदग्रहणम् । अक्षि काणं पश्येति । यदि तद्वदिति नोपादीयते तदाऽत्रापि स्यात्, काणशब्देन हि अक्षिभेदेनाक्षि आख्यायते, तद्वद्ग्रहणे तु काणशब्देन नेहाऽक्षिमान् आख्यायते इति न भवति । अक्षि काणमिति द्वितीयान्तं विज्ञायते, न च गौणादित्यधिकारादिह न भवतीत्याशङ्कनीयम् । आख्याग्रहणमिति । यद्भेदैस्तद्वन्तं यत्र लोक आचष्टे तत्र यथा स्यादिति प्रसिद्धपरिग्रहार्थं, तेन लौकिकप्रयोगाभावान्न भवति । तद्दर्शयति—अक्ष्णा दीर्घ इति न भवतीति । दीर्घ इति लोकः कायेनाचष्टे न त्वक्ष्णेत्यर्थः । ननु किमर्थमिदमारभ्यते?, यावता 'अक्ष्णा काण' इत्यादौ कृतभवत्यादिक्रियाऽध्याहारेण अक्षिशब्दादिभ्यः कर्तृकरणलक्षणैव तृतीया भविष्यतीत्याह—कृतभवत्यादीत्यादि । यद्यप्यश्रुतां क्रियां कल्पयित्वा तदाश्रयेण करणादिकल्पनायां सिध्यत्येव तृतीया तथापि यदा नामार्थसंबन्धो विवक्ष्यते क्रियामकल्पयित्वा तदा षष्ठी मा भूत्तृतीयैव यथा स्यादित्येवमर्थं । ननु मा भूत् कर्त्रादौ तृतीया, इत्थंभूतलक्षणत्वादक्ष्यादेर्भविष्यति, यदाह–"इत्थंभूतस्य काणस्य लक्षणं ह्यक्षि बुध्यते । ततस्तृतीया तेनैव तत्र सूत्रेण सिध्यति" ॥१॥ अत्रोच्यते–अक्ष्यादेरित्थंभूतस्य काणादिलक्ष्यस्य भेदाभावात् लक्षणत्वानुपपत्तिः । यदाह उद्द्योतकरः–"लक्ष्यलक्षणभावो हि भेदे सत्युपपद्यते । यथा छात्रकमण्डल्वोश्छत्रोपाध्याययोर्यथा" ॥१॥, "लक्षणादातपत्रादेस्तत्र लक्ष्यं तु भिद्यते । इह त्वेवमसंभाव्यमभेदादक्षिकाणयोः" ॥२॥, "यत्तत्काणं तदेवाक्षि लक्ष्यते तत्र तेन किम् । तत्काणः पुरुष इत्येतत् कथं तूपचारतः" ॥३॥ ॥४६॥

कृताद्यैः । गौणात् नाम्नस्तृतीयेत्यनुवर्तते । कृताद्यैर्युक्तात् गौणात् नाम्नस्तृतीयेत्यन्वयः । कृतादयो न गर्गादिगणवत् सन्निविष्टा एव केचन, किं तर्हि?, कृतप्रकाराः शक्तितोऽवसेया इत्याह—कृत इत्येवंप्रकारैरिति । निषेधार्थवृत्तित्वं च कृतादीनामनेकार्थत्वात् लक्षणातो वा स्यात् । किं गतेनेति । नायं प्रश्ने किंशब्दः, किं तर्हि?, निषेधे । यद्वा प्रश्नार्थवृत्तिरेवायं, प्रक्रमात्तु निषेधप्रतीतिः सामर्थ्याक्षिप्तलक्षणया न तु शब्दादिति युक्ततरः प्रश्नः ॥ ४७ ॥

काले भात् नवाऽऽधारे । अत्र गौणात् नाम्नस्तृतीयेति वर्तते । काले भात् गौणात् नाम्न आधारे तृतीया नवेत्यन्वयस्तदाह—काले वर्तमानादित्यादि । भशब्दो नक्षत्रवाचीत्याह—नक्षत्रवाचिन इति । ननु यदि नक्षत्रवाचिन इति शब्दो लक्षणत्वात् न तदानीमसौ नक्षत्रं वक्ति, नक्षत्रोपाधिकं कालं, रूपसामान्यात्तु तत्त्वाध्यवसायः । पुष्येण पायसमश्नीयादिति । पुष्येण चन्द्रयुक्तेन युक्तः काल इति विग्रहे "चन्द्रयुक्तात् काले लुप्त्वप्रयुक्ते" ६।२।६। इत्यणि, तत्रत्यापरांशेन 'लुप्त्वप्रयुक्ते' इत्यनेन लुपि पुष्यशब्दो नक्षत्रवाची काले वर्तते; तत आधारे तृतीया । तद्विमुक्तपक्षे सप्तमी—पुष्ये पायसमिति । एवं मघासु पललौदनमित्यत्रापि । 'स्वार्थिकप्रत्यया नातिवर्तन्ते प्रकृतिलिङ्गवचनानि' इति कालेऽपि नक्षत्रशब्दो नक्षत्रलिङ्गसंख्य एव । अत्राप्यश्नीयादिति योज्यम् । पुष्येऽर्कः, मघासु ग्रह इति । अत्र विशिष्टतारकावच्छिन्ने क्षेत्रे पुष्यमघाशब्दौ वर्तेते न काले इति तद्ग्रहणान्न भवति । चित्रासु जाता चित्रा माणविका, तस्यां–चित्रायामास्ते इति । अत्र चित्राभिश्चन्द्रयुक्ताभिर्युक्तः काल इति पूर्ववदण् तल्लोपश्च, ततश्चित्रासु जाता इति विग्रहे "भर्तुसन्ध्यादेरण्" ६।३।८९। इत्यण् "चित्रारेवतीरोहिण्याः स्त्रियाम्" ६।३।१०८। इति तल्लोपः । "ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणीसूच्योः" इत्याकारनिवृत्तौ पुनः "आत्" इत्याप् । इदानीं यद्यपि चित्राशब्दो माणविकायां वर्तमानः कालमप्युपाधित्वेनादत्ते तत्र चास्य वृत्तिः समाव्यते, तथापि काल इति सप्तम्या शब्दप्रवृत्तेराधारत्वेन कालो निर्दिश्यते । इह च चित्रायामास्ते इति तत्कालजातायां माणविकायां नक्षत्रशब्दस्य वृत्तिर्न तु काले । यद्यपि च विशेषणत्वेन प्रतीयमानत्वात् कालेऽपि वृत्तिः समाव्यते तथापि तत्र कालस्य गौणत्वात् 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययात्' न भवति । तिलपुष्पेषु यत्क्षीरं तिलच्छेदेषु यद्दधि इति । अत्र तिलपुष्पतिलच्छेदशब्दावुपचारेण यत्र तिला पुष्प्यन्ति

तिलच्छेदेषु यद्दधि;—अत्र तिलपुष्पतिलच्छेदशब्दौ स्वाऽवच्छिन्ने काले वर्तेते इति प्राप्नोति। आधार इति किम्?, अद्य पुष्यं विद्धि। स्थाल्या पच्यते इत्यादिवत् आधारस्य करणविवक्षायां तृतीया सिध्यति, संबन्धविवक्षायां तु षष्ठी मा भूदिति वचनम् ॥ ४८ ॥

## प्रसितोत्सुकावबद्धैः ॥ २ । २ । ४९ ॥

एतैर्युक्तादाधारे वर्तमानाद् गौणात् नाम्नस्तृतीया वा भवति। केशैः प्रसितः, केशेषु प्रसितः;—प्रकर्षेण सितो बद्धः प्रसितः, नित्यप्रसक्त इत्यर्थः; गृहेणोत्सुकः, गृहे उत्सुकः, केशैरवबद्धः, केशेष्ववबद्धः। आधार इत्येव?, मनसा प्रसितः, मनसोत्सुकः, मनसाऽवबद्धः; करणतृतीयाया विकल्पो मा भूत्। अवबद्धोत्सुकशब्दसाहचर्यात्तदर्थ एव प्रसितशब्दोऽत्र गृह्यते। पूर्ववत् षष्ठीबाधनार्थं वचनम्। बहुवचनमेकद्विबहाविति यथासंख्यनिवृत्त्यर्थम् ॥ ४९ ॥

## व्याप्ये द्विद्रोणादिभ्यो वीप्सायाम् ॥ २ । २ । ५० ॥

व्याप्ये वर्तमानेभ्यो द्विद्रोणादिभ्यो गौणनामभ्यो वीप्सायां तृतीया वा भवति। द्विद्रोणेन धान्यं क्रीणाति, द्विद्रोणं द्विद्रोणं क्रीणाति;—तृतीया वीप्सायां विहितेति तृतीयान्तस्य पदस्य द्विर्वचनं न भवति, द्वितीया तु कर्मणि विहिता न वीप्सायामतस्तदन्यस्य द्विर्वचनं भवति। एवं पञ्चकेन पशून् क्रीणाति, पञ्चकं पञ्चकं क्रीणाति, सहस्रेणाऽश्वान् क्रीणाति, सहस्रं सहस्रं क्रीणाति। द्विद्रोणादयः प्रयोगगम्याः ॥ ५० ॥

## समो ज्ञोऽस्मृतौ वा ॥ २ । २ । ५१ ॥

अस्मृतौ वर्तमानस्य सपूर्वस्य जानातेर्व्याप्यं तत्र वर्तमानाद् गौणात् नाम्नस्तृतीया वा भवति। मात्रा संजानीते, मातरं संजानीते। सम इति किम्?, मातरं जानाति। ज्ञ इति किम्?, मातरं संवेत्ति। अस्मृताविति किम्?, मातरं संजानाति,

---

छिद्यन्ते वा तस्मिन् काले वर्तेते, न तु नक्षत्रशब्दाविति मादिति वचनान्न भवति। **अद्य पुष्यं विद्धि**—अत्र नक्षत्रवाचिनः शब्दस्य काले वर्तमानत्वेऽप्याधार इति वचनात् कर्मणस्तृतीया न भवति। **स्थाल्या पच्यत इत्यादिवदिति**। आधारस्य करणविवक्षा यथा—स्थाल्या पच्यत इति, आधारो हि स्थाली पाकस्य करणभावेनापि निर्दिश्यते, वस्तुनोऽनेकशक्तियुक्तत्वात् किमर्थमेतदारभ्यते इत्याक्षेपार्थं। यथैवाऽऽधारस्य करणविवक्षाऽस्ति, तथा संबन्धविवक्षाऽपि। यथा—वृक्षे शाखा, वृक्षस्य शाखेति। तत्रेह षष्ठी मा भूत् तृतीया यथा स्यादित्येवमर्थं वचनमिति ॥४८॥

**प्रसितोत्सुकावबद्धैः**। अत्र आधारे इति नवेति गौणान्नाम्नस्तृतीयेति चानुवर्तते। प्रसितोत्सुकावबद्धैर्युक्तादाधारे गौणात् नाम्नस्तृतीया नवेत्यन्वयस्तदाह—**एतैर्युक्तादित्यादि**। प्रसितशब्दोऽयं गुणवचनोऽप्यस्ति—प्रकृष्टः सितः शुक्ल इति। क्रियावचनोऽप्यस्ति—यः स्यते सिनोतेर्वा भवतीति। तत्रोत्सुकावबद्धशब्दसाहचर्यात् तदर्थः सिनोतिरेव क्तान्तो गृह्यते इति। प्रकर्षेण सितो बद्ध इति कथमेवमुच्यत इत्याह—**नित्यप्रसक्त इत्यर्थ** इति। मुख्यस्य व्यतिषङ्गरूपस्य बन्धनस्याभावात् सादृश्यात् गौणार्थपरिग्रहात् यः केशसंस्कारे सक्तः स तत्र बद्ध इव भवति। यो हि यत्र प्रसक्तः स तत्र बद्ध इव भवति। प्रसितत्वमुत्सुकत्वमवबद्धत्वं च केशविषयमिति सप्तम्यधिकरण एव सिद्धा पक्षे तृतीयाविधानार्थं वचनम्। **विकल्पो मा भूदिति**। अत्रापि करणविवक्षया तृतीयासिद्धौ पूर्ववत् समाधातव्यम्। ननु प्रसितशब्दस्य गुणवचनस्य क्रियार्थस्य च समवादुभयार्थस्यापि ग्रहणप्रसङ्ग, न च गुणवचनस्य तृतीयेष्यते, न च नियामकमस्तीत्याह—**अवबद्धेत्यादि**। उत्सुकशब्दोऽवबद्धार्थवृत्तिरिति। **पूर्ववदित्यादि**। गतार्थमिति। ननु समाहारद्वन्द्वमाश्रित्य 'प्रसितोत्सुकावबद्धेन' इति निर्देष्टव्ये किमर्थो बहुवचननिर्देश इत्याह—**बहुवचनमित्यादि** ॥४९॥

**व्याप्ये द्विद्रोणादिभ्यो वीप्सायाम्**। तृतीयेति नवेति गौणात् नाम्न इति च अर्थवशात् वचनविपरिणत वर्तते। व्याप्ये द्विद्रोणादिभ्यो गौणनामभ्यो वीप्सायां तृतीया नवेत्यन्वयस्तदाह—**व्याप्ये वर्तमानेभ्य इत्यादि**। **द्विद्रोणेनेति**। द्रवते "द्रोर्वा" उणा० ८४। इति णे—द्रोण, द्वयोर्द्रोणयो समाहारो द्विद्रोण पात्रादित्वात् स्त्रीत्वाभाव; अत्र द्रोणो व्रीहिराढको व्रीहिरितिवत् द्विद्रोणशब्दो मेयवृत्तिस्तेन धान्यस्य समानाधिकरणो द्विद्रोणशब्द। द्रोणद्वयसंघात धान्यं क्रीणातीत्यर्थ। अत्र श्रूयमाणक्रीणातिक्रियाव्याप्यत्वात् द्रोणादेर्धान्यादिविशेषणत्वात् द्वितीयायां प्राप्तायां तृतीयाविधि। ननु वीप्सायां तृतीयाविधान, न च वीप्सा तृतीयान्तस्य दृश्यते, तत्कथमिदमित्याह—**तृतीया वीप्सायामित्यादि**। **एवं पञ्चकेन पशून् क्रीणातीति**। पञ्च मानमस्य "संख्याया संघसूत्रपाठे" ६।४।१७१। इति यथाविहित "संख्याडतेश्चाशत्तिष्टेः कः" इति क, पञ्चक पञ्चक संघ पशून् क्रीणातीत्यर्थं। **पञ्चकं पञ्चकमित्यत्र** पशुसामानाधिकरण्येऽपि पञ्चकशब्दाद् ब्राह्मणाः संघ इतिवत् एकवचनम्। एवं सहस्रेणाश्वान् क्रीणातीत्याद्यपि। आदिशब्दस्य प्रकारार्थत्वात् येभ्यो वीप्सायां प्रयोगे तृतीया दृश्यते ते द्विद्रोणादय, न तु गर्गादिवत् सन्निविष्टा इत्याह—**द्विद्रोणादयः प्रयोगगम्या** इति ॥ ५० ॥

**समो ज्ञोऽस्मृतौ वा**। व्याप्ये इति गौणान्नाम्नस्तृतीयेति चानुवर्तते। अस्मृतौ समः ज्ञो यद्व्याप्यं तत्र गौणात् नाम्नस्तृतीया वेत्यन्वयस्तदाह—**अस्मृतौ वर्तमानस्य संपूर्वस्य जानातेरिति**। **मात्रा संजानीते** इति। 'ज्ञांश्' अवबोधने-संपूर्व, "संप्रतेरस्मृतौ" ३।३।६९। इत्यात्मनेपदम्, क्र्यादित्वात् श्नाप्रत्यय, "जा ज्ञाजनोऽत्यादौ" ४।२।१०४। इति आदेश, "एषामीर्व्यञ्जनेऽदः" ४।२।९७। इतीत्वं च। **मातरं जानाति**—प्रतिपद्यत इत्यर्थः, सम इति वचनात् स्मृतौ तृतीयाया अभावात् "स्मृत्यर्थदयेशः" इति पाक्षिके कर्मत्वे कर्मणि द्वितीया,

यद्ग्रहणं प्रकृतिनिर्देशार्थम्, तत इत्याक्षेपात्। भेदग्रहणं किम्?, यष्टीः प्रवेशय, कुन्तान् प्रवेशय। तद्वद्ग्रहणं किम्?, अक्षि काणं पश्य। आख्याग्रहणं प्रसिद्धिपरिग्रहार्थम्, तेनाऽक्ष्णा दीर्घ इति न भवति। कृतभवत्यादिक्रियाऽध्याहारेण कर्तृकरणयोस्तृतीया सिद्धैव संबन्धषष्ठीनिवृत्त्यर्थं तु वचनम् ॥ ४६ ॥

## कृताद्यैः ॥ २ । २ । ४७ ॥

कृत इत्येवंप्रकारैर्निषेधार्थैर्युक्ताद् गौणात् नाम्नस्तृतीया भवति। कृत तेन, भवतु तेन; अलमतिप्रसङ्गेन; किं गतेन। कृत, कृतम्, भवतु, अलम्, किम्; एवंप्रकाराः कृतादयः ॥ ४७ ॥

## काले भात् नवाऽऽधारे ॥ २ । २ । ४८ ॥

काले वर्तमानात् नक्षत्रवाचिनो गौणात् नाम्न आधारे तृतीया वा भवति। पुष्येण पायसमश्नीयात्, पुष्ये पायसमश्नीयात्; मघाभिः पललौदनम्, मघासु पललौदनम्। काल इति किम्?, पुष्येऽर्कः, मघासु ग्रहः,—अध्वनि मा भूत्। चित्रासु जाता चित्रा माणविका, तस्याः—चित्रायामास्ते—अत्र माणविकायां मा भूत्। भादिति किम्?, तिलपुष्पेषु यत्क्षीर,

---

त्वृतीयात्वात्—यथेष्टत्यादि। ननु च प्रकृत्या दर्शनीयः प्रायेण वैयाकरण इति युक्तः प्रयोगः, दर्शनीयत्वं हि प्राकृतं वैकृतं चाक्षि वैयाकरणत्वं प्रायिकमन्यच्च, तथेतरव्युदासार्थं प्रकृत्या प्रायेणेति चार्थवत्। काण इत्यादिप्रयोगे तु अक्ष्णेत्यादिरव्यभिचारेण प्रतीतेरयुक्तः प्रयोगोऽर्थस्य गतत्वात्, उच्यते—नैषोऽत्र पर्यनुयोक्तव्यो योऽर्थवतोऽनर्थकतामनपेक्ष्य प्रतीतेऽपि शब्दान् प्रयुङ्क्ते, लोके च न सर्व एव सूक्ष्मेक्षिकया शब्दान् प्रयुङ्क्ते। यस्त्वेव समीक्षते स न प्रयुङ्क्ते तथापि चोपचरितार्थनिवृत्तिरक्ष्णेत्यादिप्रयोगप्रयोजनम्, सत्यमयं काणो न तूपचारेणेति। यद्ग्रहणमिति। अयमर्थः—यच्छब्देन तत इत्याक्षिप्यते, ततस्तस्मादिति च प्रकृतिर्निर्दिश्यते—यद्भेदैस्तद्भेदाख्या भवति ततस्तृतीया भवतीति यद्ग्रहणं प्रकृतिनिर्देशार्थं; अभवति तु यदित्यस्मिन् प्रकारादृचनप्रकृतिरत्र विज्ञायेत। यष्टीः प्रवेशयेति। यदि भेदग्रहणं न क्रियते तदा येन तद्वदाख्येत्युच्यमानेऽत्रापि स्यात्, अत्र हि यष्ट्यादिना तद्वानुपचारेणाख्यायते। अक्ष्णा काण इत्यादौ च न स्यात्, न ह्यत्राक्ष्यादिशब्देन तद्वान् निर्दिश्यते तृतीयानिष्ट्यो विरुद्धसिद्ध्यर्थं भेदग्रहणम्। अक्षि काणं पश्येति। यदि तद्वदिति नोपादीयते तदाऽत्रापि स्यात्, काणशब्देन हि अक्षिभेदेनाक्षि आख्यायते, तद्वद्ग्रहणे तु काणशब्देन नेहाऽक्षिमान् आख्यायते इति न भवति। अक्षि काणमिति द्वितीयान्तं विज्ञायते, न च गौणादित्यधिकारादिह न भवतीत्याशङ्कनीयम्। आख्याग्रहणमिति। यद्भेदैस्तद्वन्तं यत्र लोक आचष्टे तत्र यथा स्यादिति प्रसिद्धपरिग्रहार्थं, तेन लौकिकप्रयोगाभावान्न भवति। तद्दर्शयति—अक्ष्णा दीर्घ इति न भवतीति। दीर्घ इति लोकः कायेनाचष्टे न त्वक्ष्णेत्यर्थः। ननु किमर्थमिदमारभ्यते?, यावता 'अक्ष्णा काण' इत्यादौ कृतभवत्यादिक्रियाऽध्याहारेण अक्षिशब्दादिभ्यः कर्तृकरणलक्षणैव तृतीया भविष्यतीत्याह—कृतभवत्यादीत्यादि। यद्यप्यश्रुतां क्रियां कल्पयित्वा तदाश्रयेण करणादिकल्पनायां सिध्यत्येव तृतीया तथापि यदा नामार्थसंबन्धो विवक्ष्यते क्रियामकल्पयित्वा तदा षष्ठी मा भूत्तृतीयैव यथा स्यादित्येवमर्थः। ननु मा भूत् कर्त्रादौ तृतीया, इत्थंभूतलक्षणत्वादक्ष्यादेर्भविष्यति, यदाह—"इत्थंभूतस्य काणस्य लक्षणं यक्षि बुध्यते। ततस्तृतीया तेनैव तत्र सूत्रेण सिध्यति" ॥१॥ अत्रोच्यते—अक्ष्यादेरित्थंभूतस्य काणादिलक्ष्यस्य भेदाभावात् लक्षणत्वानुपपत्तिः। यदाह उद्द्योतकरः—"लक्ष्यलक्षणभावो हि भेदे सत्युपपद्यते। यथा छात्रकमण्डल्वोश्छात्रोपाध्याययोर्यथा" ॥१॥, "लक्षणादातपत्रादेस्तत्र लक्ष्यं तु भिद्यते। इह त्वेवमसंभाव्यमभेदादक्षिकाणयोः" ॥२॥, "यत्तत्काणं तदेवाक्षि लक्ष्यते तत्र तेन किम्। तस्काणः पुरुष इत्येतत् कथं तूपचारतः" ॥३॥ ॥४६॥

कृताद्यैः। गौणात् नाम्नस्तृतीयेत्यनुवर्तते। कृताद्यैर्युक्तात् गौणात् नाम्नस्तृतीयेत्यन्वयः। कृतादयो न गर्गादिगणवत् सन्निविष्टा एव केचन, किं तर्हि?, कृतप्रकाराः शक्तितोऽवसेया इत्याह—कृत इत्येवंप्रकारैरिति। निषेधार्थवृत्तित्वं च कृतादीनामनेकार्थत्वात् लक्षणातो वा स्यात्। किं गतेनेति। नायं प्रश्ने किंशब्दः, किं तर्हि?, निषेधे। यद्वा प्रश्नार्थवृत्तिरेवायं, प्रक्रमात्तु निषेधप्रतीतिः सामर्थ्याक्षिप्तलक्षणया न तु शब्दादिति युक्ततरः प्रश्नः ॥ ४७ ॥

काले भात् नवाऽऽधारे। अत्र गौणात् नाम्नस्तृतीयेति वर्तते। काले भात् गौणात् नाम्न आधारे तृतीया नवेत्यन्वयस्तदाह—काले वर्तमानादित्यादि। भशब्दो नक्षत्रवाचीत्याह—नक्षत्रवाचिन इति। ननु यदि नक्षत्रवाचिन इति शब्दो लक्षणत्वात् न तदानीमसौ नक्षत्रं वक्ति, नक्षत्रोपाधिकः कालः, रूपसामान्याच्च तत्त्वाध्यवसायः। पुष्येण पायसमश्नीयादिति। पुष्येण चन्द्रयुक्तेन युक्तः काल इति विग्रहे "चन्द्रयुक्तात् काले लुप्त्वप्रयुक्ते" ६।२।६। इत्यणि, तत्रत्यापरांशेन 'लुप्त्वप्रयुक्ते' इत्यनेन लुपि पुष्यशब्दो नक्षत्रवाची काले वर्तते, तत आधारे तृतीया। तद्विमुक्तपक्षे सप्तमी—पुष्ये पायसमिति। एवं मघासु पललौदनमित्यत्रापि। 'स्वार्थिकप्रत्यया नातिवर्तन्ते प्रकृतिलिङ्गवचनानि' इति कालेऽपि नक्षत्रशब्दो नक्षत्रलिङ्गसंख्य एव। अत्राप्यश्नीयादिति योज्यम्। पुष्येऽर्कः, मघासु ग्रह इति। अत्र विशिष्टतारकावच्छिन्ने क्षेत्रे पुष्यमघाशब्दौ वर्तेते न काले इति तद्ग्रहणाच्च भवति। चित्रासु जाता चित्रा माणविका, तस्याः—चित्रायामास्ते इति। अत्र चित्राभिश्चन्द्रयुक्ताभिर्युक्तः काल इति पूर्ववदण् तल्लोपश्च, ततश्चित्रासु जाता इति विग्रहे "भर्तुसंध्यादेरण्" ६।३।८९। इत्यण् "चित्रारेवतीरोहिण्याः स्त्रियाम्" ६।३।१०८। इति तल्लोपः। "ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणीसूच्योः" इत्याकारनिवृत्तौ पुनः "आत्" इत्याप्। इदानीं यद्यपि चित्राशब्दो माणविकायां वर्तमानः कालमप्युपाधित्वेनादत्ते तत्र चास्य वृत्तिः संभाव्यते, तथापि काल इति सप्तम्या शब्दप्रवृत्तेराधारत्वेन कालो निर्दिश्यते। इह च चित्रायामास्ते इति तत्कालजातायां माणविकायां नक्षत्रशब्दस्य वृत्तिर्न तु काले। यद्यपि च विशेषणत्वेन प्रतीयमानत्वात् कालेऽपि वृत्तिः संभाव्यते तथापि तत्र कालस्य गौणत्वात् 'गौणमुख्ययोश्च मुख्ये कार्यसंप्रत्ययात्' न भवति। तिलपुष्पेषु यत्क्षीरं तिलच्छेदेषु यद्दधि इति। अत्र तिलपुष्पतिलच्छेदशब्दावुपचारेण यत्र तिला पुष्प्यन्ति

तिलच्छेदेषु यद्वधि;–अत्र तिलपुष्पतिलच्छेदशब्दौ स्वाऽवच्छिन्ने काले वर्तेते इति प्राप्नोति। आधार इति किम् ?, अद्य पुष्यं विद्धि । स्थाल्या पच्यते इत्यादिवत् आधारस्य करणविवक्षायां तृतीया सिध्यति, संबन्धविवक्षायां तु षष्ठी मा भूदिति वचनम् ॥ ४८ ॥

## प्रसितोत्सुकावबद्धैः ॥ २ । २ । ४९ ॥

एतैर्युक्तादाधारे वर्तमानाद् गौणात् नाम्नस्तृतीया वा भवति । केशैः प्रसितः, केशेषु प्रसितः;–प्रकर्षेण सितो बद्धः प्रसितः, नित्यप्रसक्त इत्यर्थः; गृहेणोत्सुकः, गृहे उत्सुकः; केशैरवबद्धः, केशेष्ववबद्धः । आधार इत्येव ?, मनसा प्रसितः, मनसोत्सुकः, मनसाऽवबद्धः; करणतृतीयाया विकल्पो मा भूत् । अवबद्धोत्सुकशब्दसाहचर्यात्तदर्थ एव प्रसितशब्दोऽत्र गृह्यते । पूर्ववत् षष्ठीबाधनार्थं वचनम् । बहुवचनमेकद्विबहाविति यथासंख्यनिवृत्त्यर्थम् ॥ ४९ ॥

## व्याप्ये द्विद्रोणादिभ्यो वीप्सायाम् ॥ २ । २ । ५० ॥

व्याप्ये वर्तमानेभ्यो द्विद्रोणादिभ्यो गौणनामभ्यो वीप्सायां तृतीया वा भवति । द्विद्रोणेन धान्यं क्रीणाति, द्विद्रोणं द्विद्रोण क्रीणाति;–तृतीया वीप्सायां विहितेति तृतीयान्तस्य पदस्य द्विर्वचन न भवति, द्वितीया तु कर्मणि विहिता न वीप्सायामतस्तदन्यस्य द्विर्वचनं भवति । एवं पञ्चकेन पशून् क्रीणाति, पञ्चक पञ्चकं क्रीणाति, सहस्रेणाऽश्वान् क्रीणाति, सहस्रं सहस्रं क्रीणाति । द्विद्रोणादयः प्रयोगगम्याः ॥ ५० ॥

## समो ज्ञोऽस्मृतौ वा ॥ २ । २ । ५१ ॥

अस्मृतौ वर्तमानस्य संपूर्वस्य जानातेर्व्याप्यं तत्र वर्तमानाद् गौणात् नाम्नस्तृतीया वा भवति । मात्रा संजानीते, मातर संजानीते । सम इति किम् ?, मातरं जानाति । ज्ञ इति किम् ?, मातरं सवेत्ति । अस्मृताविति किम् ?, मातरं संजानाति,

---

छिद्यन्ते वा तस्मिन् काले वर्तेते, न तु नक्षत्रशब्दाविति आदिति वचनाच्च भवति । **अद्य पुष्यं विद्धि**–अत्र नक्षत्रवाचिन शब्दस्य काले वर्तमानत्वेऽप्याधार इति वचनात् कर्मणस्तृतीया न भवति । **स्थाल्या पच्यत इत्यादिवदिति**। आधारस्य करणविवक्षा यथा–स्थाल्या पच्यत इति, आधारो हि स्थाली पाकस्य करणभावेनापि निर्दिश्यते, वस्तुनोऽनेकशक्तियुक्तत्वात् किमर्थमेतदारभ्यते इत्याक्षेपार्थः । यथैवाऽऽधारस्य करणविवक्षाऽस्ति, तथा सबन्धविवक्षाऽपि । यथा–वृक्षे शाखा, वृक्षस्य शाखेति । तत्रेह षष्ठी मा भूत् तृतीया यथा स्यादित्येवमर्थं वचनमिति ॥४८॥

**प्रसितोत्सुकावबद्धैः** । अत्र आधारे इति नवेति गौणान्नाम्नस्तृतीयेति चानुवर्तते । प्रसितोत्सुकावबद्धैर्युक्तादाधारे गौणात् नाम्नस्तृतीया नवेत्यन्वयस्तदाह—**एतैर्युक्तादित्यादि** । प्रसितशब्दोऽयं गुणवचनोऽप्यस्ति–प्रकृष्ट· सित शुक्ल इति । क्रियावचनोऽप्यस्ति–य· स्यते· सिनोतेर्वा भवतीति । तत्रोत्सुकावबद्धशब्दसाहचर्यात् तदर्थ सिनोतिरेव क्तान्तो गृह्यते इति । प्रकर्षेण सितो बद्ध इति कथमेवमुच्यत इत्याह—**नित्यप्रसक्त इत्यर्थ** इति । मुख्यस्य व्यतिषङ्गरूपस्य बन्धनस्याभावात् सादृश्यात् गौणार्थपरिग्रहात् य केशसंस्कारे सक्त स तत्र बद्ध इव भवति । यो हि यत्र प्रसक्त स तत्र बद्ध इव भवति । प्रसितत्वमुत्सुकत्वमवबद्धत्वं च केशविषयमिति सप्तम्यधिकरण एव सिद्धा पक्षे तृतीयाविधानार्थं वचनम् । **विकल्पो मा भूदिति** । अत्रापि करणविवक्षया तृतीयासिद्धौ पूर्ववद् समाधातव्यम् । ननु प्रसितशब्दस्य गुणवचनस्य क्रियार्थस्य च समवादुभयार्थस्यापि ग्रहणप्रसङ्ग ,न च गुणवचनस्य तृतीयेष्यते, न च नियामकमस्तीत्याह—**अवबद्धेत्यादि** । उत्सुकशब्दोऽवबद्धार्थवृत्तिरिति । **पूर्ववदि**त्यादि । गतार्थमिति । ननु समाहारद्वन्द्वमाश्रित्य 'प्रसितोत्सुकावबद्धेन' इति निर्देष्टव्ये किमर्थो बहुवचननिर्देश इत्याह—**बहुवचनमित्यादि** ॥४९॥

**व्याप्ये द्विद्रोणादिभ्यो वीप्सायाम्** । तृतीयेति नवेति गौणात् नाम्न इति च अर्थवशात् वचनविपरिणत वर्तते । व्याप्ये द्विद्रोणादिभ्यो गौणनामभ्यो वीप्सायां तृतीया नवेत्यन्वयस्तदाह—**व्याप्ये वर्तमानेभ्य** इत्यादि । **द्विद्रोणेनेति** । द्रवते "द्रोर्वा" उणा० ८४ । इति णे–द्रोण , द्वयोर्द्रोणयो समाहारो द्विद्रोण पात्रादित्वात् स्त्रीत्वाभाव ; अत्र द्रोणो व्रीहिराढको व्रीहिरितिवत् द्विद्रोणशब्दो मेयवृत्तिस्तेन धान्यस्य समानाधिकरणो द्विद्रोणशब्द । द्रोणद्वयसघात धान्य क्रीणातीत्यर्थं । अत्र श्रूयमाणक्रीणातिक्रियाव्याप्यत्वात् द्रोणादेर्धान्यादिविशेषणत्वाद् द्वितीयाया प्राप्तायां तृतीयाविधि । ननु वीप्सायां तृतीयाविधान, न च वीप्सा तृतीयान्तस्य दृश्यते, तत्कथमिदमित्याह—**तृतीया वीप्सायामि**त्यादि । **एवं पञ्चकेन पशून् क्रीणातीति**। पञ्च मानमस्य "सख्याया सघसूत्रपाठे" ६।४।१७१। इति यथाविहित "सख्याडतेश्चाशत्तिष्टे क" इति क , पञ्चक पञ्चक सघ पशून् क्रीणातीत्यर्थं । **पञ्चकं पञ्चकमि**त्यत्र पशुसामानाधिकरण्येऽपि पञ्चकशब्दाद् ब्राह्मणा सघ इतिवत् एकवचनम् । एव सहस्रेणाश्वान् क्रीणातीत्यत्रापि । आदिशब्दस्य प्रकारार्थत्वात् येभ्यो वीप्सायां प्रयोगे तृतीया दृश्यते ते द्विद्रोणादय , न तु गर्गादिवत् सन्निविष्टा इत्याह—**द्विद्रोणादय· प्रयोगगम्या** इति ॥ ५० ॥

**समो ज्ञोऽस्मृतौ वा** । व्याप्ये इति गौणान्नाम्नस्तृतीयेति चानुवर्तते । अस्मृतौ सम ज्ञो यद्व्याप्य तत्र गौणात् नाम्नस्तृतीया वेत्यन्वयस्तदाह—**अस्मृतौ वर्तमानस्य संपूर्वस्य जानातेरिति** । **मात्रा संजानीते** इति । 'ज्ञाश्' अवबोधने–सपूर्व , "संप्रतेरस्मृतौ" ३।३।६९। इत्यात्मनेपदम्, क्र्यादित्वात् श्नाप्रत्यय , "जा ज्ञाजनोऽत्यादौ" ४।२।१०४। इति जादेश , "एषामीर्व्यञ्जनेऽद" ४।२।९७ इतीत्वं च । **मातर जानाति**–प्रतिपद्यत इत्यर्थं , सम इति वचनात् स्मृतौ तृतीयाया अभावात् "स्मृत्यर्थदयेश·" इति पाक्षिके कर्मत्वे कर्मणि द्वितीया,

मातुः संजानाति; स्मरतीत्यर्थः। व्याप्य इत्येव?, मातरं स्वरेण संजानीते,—करणे विकल्पो न भवति। मातुः संज्ञातेति कृति परत्वात् षष्ठी। नवाऽधिकारे वाग्रहणमुत्तरत्र तन्निवृत्त्यर्थम् ॥ ५१ ॥

## दामः संप्रदानेऽधर्म्ये आत्मने च ॥ २ । २ । ५२ ॥

संपूर्वस्य दामः सम्प्रदानेऽधर्म्येरूपे वर्तमानात् नाम्नस्तृतीया भवति, तत्संनियोगे च दाम आत्मनेपदं भवति। दास्या सम्प्रयच्छते, वृषल्या संप्रयच्छते;—कामुकः सन् द्रव्य दास्यै ददातीत्यर्थः। दाम इति किम्?, दास्यै संददाति। संप्रदान इति किम्?, द्रव्यं वृषल्या संप्रयच्छते, कर्मणि मा भूत्। अधर्म्य इति किम्?, पत्न्यै संप्रयच्छति। सम इत्येव?, दास्यै प्रयच्छति। इह संपूर्वस्य दामः प्रशब्दव्यवधानमन्तरेण प्रयोगाऽभावात् तद्व्यवधानेऽपि भवति ॥ ५२ ॥

## चतुर्थी ॥ २ । २ । ५३ ॥

संप्रदाने वर्तमानाद् गौणात् नाम्नो ङेभ्यांभ्यस्लक्षणैकद्विबहौ यथासंख्यं चतुर्थी विभक्तिर्भवति। द्विजाय गां ददाति, शिष्याभ्यां धर्ममुपदिशति, मुनिभ्यो भिक्षां ददाति, पत्ये शेते, राज्ञे विज्ञपयति, राज्ञे दण्डं ददाति। संप्रदान इत्येव?, अजां नयति ग्रामम् ॥ ५३ ॥

---

अन्यत्र षष्ठी। स्मरतीत्यर्थ इत्यनेन अस्मृतावित्यस्य व्यवच्छेद्यां स्मृत्यर्थतां दर्शयति। **मातरं स्वरेण संजानीते**—नन्वत्र मातरमिति व्याप्यमस्त्येव, तत्कथमिदं व्याप्य इत्यस्यानुवर्तमानस्य स्यात् प्रत्युदाहरणमिति[1], अथ स्वरेणेत्यत्र न भवतीति चेन्न—अत्र तृतीयाया सिद्धत्वादित्याह—**करणे विकल्पो न भवतीति**। यद्यत्र व्याप्य इति नानुवर्तेत तदाऽनेन विधीयमानस्तृतीयाविकल्प सामान्यविहितत्वात् करणेऽपि स्यात्। **मातुः संज्ञातेति**। अत्र कृत्प्रयोगे इय तृतीया च प्राप्नोति "कर्मणि कृत" इति षष्ठी च, उभय चान्यत्र सावकाशं, तत्रोभयप्राप्तौ परत्वात् षष्ठ्येव भवतीत्याह—**कृतीत्यादि**। **नवाऽधिकार** इति। नवाधिकारेणैव विकल्पस्य लब्धत्वात् तदर्थं वाग्रहणमुत्तरत्र नवाधिकारनिवृत्त्यर्थमिति, तेनोत्तरो नित्य एव विधिरित्यर्थः। कर्मण करणविवक्षायां पक्षे तृतीयाया द्वितीयायाश्च सिद्धत्वात् सूत्रारम्भवैयर्थ्यात् प्रत्युदाहरणेषु कृत्प्रयोगे चैवं तृतीया स्यादत कर्मणि तद्विवक्षान्युदासार्थमय पाक्षिकस्तृतीयारम्भः ॥ ५१ ॥

**दामः संप्रदानेऽधर्म्ये आत्मने च**। नाम्नस्तृतीयेत्यनुवर्तते। सम इत्यनुवर्तमानेन दाम इति विशिष्यते, तथा चायमन्वय —समो दाम सम्प्रदाने अधर्म्ये वर्तमानात् नाम्नस्तृतीया, दाम आत्मने चेति। तदाह—**संपूर्वस्येत्यादि**। **अधर्म्येरूप** इति। अधर्मं —शास्त्रनिषिद्ध इत्यर्थ। आत्मनेपदस्य दाम्प्रकृतिर्विज्ञायत इत्याह—**तत्संनियोगे च दाम आत्मनेपदमिति**। **दास्या संप्रयच्छते** इति। दासी दानक्रियाकर्मणाऽभिप्रेयेति ततस्तृतीया, संप्रयच्छत इति सम्प्र इत्युपसर्गपूर्वात् 'दाम्'दाने, इत्यतोऽनेन वर्तमानाऽऽत्मनेपदं ते, मध्ये शव्, "श्रौतिकृवुधिवु०" ४।२।१०८। इति दामो यच्छादेशः। **कामुकः सन्नि**त्यादिना धात्वर्थस्याधर्मतां दर्शयति। **दास्यै संददातीति** तु 'डुदांग्क्' दाने, संपूर्वस्तस्तिव्, "हवः शिति" ४।१।१२। इति द्विर्वचन, नाऽय दामिति नाऽत्र तृतीया नाप्यात्मनेपदमिति। **द्रव्यं वृषल्या संप्रयच्छते इति**। अत्राऽसति संप्रदाने इति व्याप्य इत्यनुवृत्ते क्रियाव्याप्यत्वात् द्रव्यात् तृतीया प्रसज्येतेत्याह—**कर्मणि मा भूदिति**। **पत्न्यै संप्रयच्छति**—पत्न्यै दान नाधर्म्यं इत्यत्र न भवति। **दास्यै प्रयच्छतीति**। सम इत्यनुवृत्तेरत्र न भवति। ननु सम इति परदिग्योगलक्षणा पञ्चमी, ततश्च "पञ्चम्या निर्दिष्टे परस्य" तत्रानन्तरस्येति "समो ज्ञोऽस्मृतौ" इत्यत्र व्यवधाने सति न भवति तत्कथ संप्रयच्छत इति प्रशब्देन व्यवधाने विधिरित्याह—**इह संपूर्वस्येत्यादि**। इहाऽस्मिन् सूत्रे प्रशब्देन समो व्यवधानेऽपि विधिर्भवति, कुत —प्रशब्दव्यवधानमन्तरेण प्रयोगाभावात्। न हि तद्व्यवधानमन्तरेण संपूर्वस्य दाम संयच्छतीति प्रयोग, यत्र लक्ष्यं तत्र यत्नेरेव। एवं च 'येन नाऽव्यवधान तेन व्यवहितेऽपि' इति वचनप्रामाण्यात् प्रशब्देन व्यवधानमाश्रीयत इति। यद्वा सम इति पूर्वत्र पञ्चम्यन्तमपीह लक्ष्यवशात् षष्ठ्यन्त विज्ञायते, तत्र व्यवधानेऽपि समा योग्यमानार्थत्वात् दाम सम्बन्धोपपत्तेर्भवत्येव विधि। ननु अनेन ब्राह्मणेन दानं प्रवृत्तमित्यादिवत् संप्रदानस्य करणत्वविवक्षायां 'दास्या सम्प्रयच्छते' इत्यादौ तृतीयोपपत्तेः किमर्थमिदमारभ्यते[2], यद्वा सहार्थे इय तृतीया, तथाहि—दास्यै स्वम धनं ददाति साप्यात्मानं तस्मै ददातीति दानपूर्वके वा संभोगे दाम् वर्तते—दत्त्वा दास्या सह संभुङ्क्ते इति। एवं चात्र क्रियाव्यतिहारोपपत्तेस्तद्द्वारेणैव आत्मनेपदम्। अत्रोच्यते—एवं हि धात्वन्तरेऽपि विनाऽपि समुपसर्गेणाऽधर्म्यत्वाभावेऽपि धात्वर्थस्य प्रत्युदाहरणेऽप्युक्तविवक्षोपपत्तेस्तृतीया प्राप्नोति। द्रव्य वृषल्या संप्रयच्छते इत्यत्रापि संप्रदानविवक्षायां चतुर्थी स्यादत इह चतुर्थी प्रत्युदाहरणेषु च तृतीया मा भूदित्येवमर्थमिदं वक्तव्यमिति विशिष्ट एव विषये लोकस्य विवक्षेति लोकविवक्षानियमो विना वचनेन दुरधिगम इति इदमारभ्यत इति ॥ ५२ ॥

**चतुर्थी**। संप्रदान इति गौणात् नाम्न इति एकद्विबहाविति चानुवर्तते। संप्रदाने गौणात् नाम्न एकद्विबहौ चतुर्थीत्यन्वयस्तदाह—**संप्रदाने वर्तमानादित्यादि**। **द्विजाय गां ददातीत्यादि**। गवादिना कर्मणा द्विजादेराप्यमानतया विवक्षितत्वात् संप्रदानत्वात् ततो चतुर्थी। **अजां नयति ग्राममिति**। अत्राऽजा देवदत्त स्वव्यापारेणाऽऽप्नोति, अजा च ग्रामश्च तौ व्याप्यरूपौ, व्याप्येन चाऽऽप्यमानस्य संप्रदानत्वादिह च तदभावात् चतुर्थी न भवतीति ॥ ५३ ॥

---

१ विकल्पनि° पु०। २ °र्थो° पु०। ३ वितरति पु०।

## तादर्थ्ये ॥ २ । २ । ५४ ॥

किञ्चिद्वस्तु संपादयितुं यत्प्रवृत्तं तत्तदर्थम्, तस्य भावे तादर्थ्ये—संबन्धविशेषे द्योत्ये गौणात् नाम्नः षष्ठ्यपवादश्चतुर्थी भवति । यूपाय दारु, कुण्डलाय हिरण्यम्, रन्धनाय स्थाली, अवहननायोलूखलम् ॥ ५४ ॥

## रुचिकृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु ॥ २ । २ । ५५ ॥

रुच्यर्थैः कृप्यर्थैर्धारिणा च धातुना योगे यथाक्रमं प्रेये विकारे उत्तमर्णे च वर्तमानाद् गौणात् नाम्नश्चतुर्थी भवति, वचनसाम्यं यथासंख्यार्थम्; बहुवचनं तु एकद्विबहाविति यथासंख्याऽभावार्थम् । रुच्यर्थैः प्रेये—प्रीयमाणे,—जिनदत्ताय रोचते धर्मः, गुरुदत्ताय स्वदते दधि, तस्याऽभिलाषमुत्पादयतीत्यर्थः । प्रेय इति किम्?, चैत्राय रोचते मोदको माधुर्येण, माधुर्यशब्दात् न भवति । प्रेयसंबन्धादभिलाषकरणार्थस्य रुचेर्ग्रहणम्, तेनेह न भवति—सर्वेषामेतद्रोचते कथं वा तवेति?—प्रतिभातीत्यर्थः । कथं रोचते मम घृतं सह मुद्गैः शालयो दधिशरं कुकुराश्च?, घृतमेव ममापि रोचते घृतशीतं च सशर्करं पयः?,—सबन्धमात्रविवक्षायां षष्ठ्येव भविष्यति । कृप्यर्थैर्विकारे—मूत्राय कल्पते यवागूः, उच्चाराय संपद्यते यवाऽन्नम्, श्लेष्मणे जायते दधि; तद्विकाररूपमापद्यत इत्यर्थः । विकार इति किम्?, चैत्रस्य कल्पन्ते धनानि, संपद्यन्ते शालयः । गौणादित्येव?, मूत्रमिदं सपद्यते यवागूः, उच्चारोऽयं संपद्यते यवाऽन्नम्, शृङ्गाच्छरो जायते, गोमयाद् वृश्चिकः

---

**तादर्थ्ये** । गौणात् नाम्न इति चतुर्थी इति च वर्तते । तादर्थ्ये गौणात् नाम्नश्चतुर्थीत्यन्वय । तच्छब्देन कार्यं निर्दिश्यते । तस्मायिदं तदर्थमिति समासेन विशिष्टकार्यप्रयोजनं कारणमभिधीयत इत्याह—**किञ्चिद्वस्तु संपादयितुं यत्प्रवृत्तं तत्तदर्थ**मिति । तदर्थस्य भावस्तादर्थ्यमिति कार्यकारणसबन्ध उच्यते, समासकृत्तद्धितेषु भावप्रत्ययेन सबन्धाभिधानमिति वचनात्, तत्र च संबन्धस्य द्विष्ठत्वेऽपि गौणादित्यधिकारात् अप्रधानाद्विशेषणादेव चतुर्थी भवति । तत उत्पद्यमानेवाऽसौ वस्त्वन्तरार्थता गमयितु शक्नोतीति नान्यास्वित्याह—**तस्य भावे** इत्यादि । **यूपाय दार्विति** । अत्र यूपादिहेतुभूतस्य दार्वादेर्हेतुहेतुमद्भावस्य चतुर्थ्यैव गमितत्वात् नामार्थव्यतिरेके च हेतुतृतीयाविधानादिह च नामार्थव्यतिरेकाभावात् "हेतु"इति तृतीया न भवति । ननु तस्मै इद तदर्थमिति सत्यां चतुर्थ्यां समास , सति च समासे तदनुवादेन चतुर्थीविधानमितीतरेतराश्रयादप्रसिद्धिर्निर्देशस्येति, उच्यते—आचार्यप्रवृत्तिर्ज्ञापयति भवत्यर्थशब्दयोगेन चतुर्थीति यदयं "तदर्थोऽर्थेन" इत्यर्थशब्देन समासं शास्ति । षष्ठीसमासो वा, सबन्धसामान्यविवक्षायामस्त्येव षष्ठी, यथा गुरोरिद गुर्वर्थमिति । ऊर्ध्वं ख बिल वाऽस्येति पृषोदरादित्वादुलूखलम् ॥५४॥

**रुचिकृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु** । अत्र गौणात् नाम्नश्चतुर्थीति वर्तते । रुचिकृप्यर्थधारिभि प्रेयविकारोत्तमर्णेषु वर्तमानात् गौणात् नाम्न चतुर्थीत्यन्वय । रुचिशब्दो रुच्यर्थे वर्तते, रुचिश्चान्यकर्तृकोऽभिलाष । कृपिश्च विकृतिमत्कृप्यर्थे वर्तते । रुचिश्च कृपिश्च रुचिकृपी तावर्थौ येषान्ते रुचिकृप्यर्था , रुचिकृपिवाच्योऽर्थोन्येषां न सभवतीति सामर्थ्यादिवार्थलोपो द्रष्टव्य , रुचिकृप्यर्थ इवार्थो येषां ते तथोक्ता इत्यर्थ । अत्र रुचिकृप्यर्थेत्यर्थशब्द प्रत्येकमभिसबध्यते न समुदायेन, तथैव व्यवस्थिते । यदि खलु प्रत्यासत्त्या कृपिनैव सबध्येत तदा धारिवत् रुचिरप्यर्थशब्दात् पर एव क्रियेत, तथा सति किं रुचिना सबध्यते उत नेति सन्देहोऽपि न स्यात् । धारेश्च परनिपातेन लक्षणव्यभिचारो न कृत स्यात्, रुचिधारी समस्य कृप्यर्थेन समासात्, अन्यथा धारेरल्पस्वरत्वात् पूर्वनिपातार्हस्य परनिपातेन लक्षणं व्यभिचरितं स्यादित्याह—**रुच्यर्थैः कृप्यर्थैरि**ति । रुचिकृपिसमानार्थैरित्यर्थ । रुचिकृप्यर्थधारिभिरिति बहुवचनान्तस्य प्रेयविकारोत्तमर्णेष्विति बहुवचनान्तेन यथासंख्यमभिसबन्ध इत्याह—**वचनसाम्यं यथासंख्यार्थ**मिति । ननूभयत्रैकवचननिर्देशेऽपि साम्यात् यथासख्य भविष्यति किं बहुवचनेनेत्याह—**बहुवचनं त्वि**त्यादि । भिन्नवचनत्वादिति शेष । एकद्विबहावित्यस्य तु भेन्याभ्यसितत्वेनैव यथासख्यमिति । **रुच्यर्थैः प्रेय** इत्यादिना भेदेनोदाहरति । प्रेय इति प्रीणाते "य एचात" इति कर्मणि यप्रत्यये रूपमित्याह—**प्रीयमाण** इति । **रोचते** इति । 'रुचि' अभिप्रीत्यां चेत्यतो वर्तमानायास्तेप्रत्यये भवति । **तस्याभिलाष**मित्यादिना रुच्यर्थतां दर्शयति । किं पुनरत्र प्राप्त?, केचिदाहु —देवदत्तो रोचयति मोदकमिति प्राप्नोति, देवदत्त हि प्राप्य मोदको रुचिविषयो न सर्वमेव, भिन्नेच्छत्वात् प्राणिनाम् । केचिदाहु —कर्मणि द्वितीयायां प्राप्तायां प्रीयमाणं देवदत्त प्रीणयति मोदक इति । अन्ये आहु —कारकशेषत्वे षष्ठी प्राप्ता नटस्य शृणोतीति यथा, सर्वथा तु कारकस्याविवक्षायां न भवति—'देवदत्तस्य रोचते घृत न यज्ञदत्तस्येति,' संबन्धपरत्वविवक्षाया । यथोदाहृत भर्तृहरिणा—यद्यपि पाणिनेरभिरुचिता नित्यताऽनित्यता चेति, तदाह—"हेतुत्वे कर्मसंज्ञायां शेषत्वेनापि कारकम् । रुच्यर्थादिषु शास्त्रेण चतुर्थी संप्रकीर्तिता" ॥१॥ **चैत्राय रोचते**—तस्याभिलाषं करोतीति तत्र प्रेयो नाम अभिलाषकरण एव संभवति, यो हि यमभिलषति तस्याभिलाषस्य कर्ता त प्रीणातीति तेन स प्रीयते इति नार्थान्तरेऽस्ति प्रेय इति तदन्यथानुपपत्त्याभिलाषकरणार्थस्य रुचेर्ग्रहणात् । **सर्वेषामेतद्रोचते** इत्यादौ प्रतिभानार्थप्रयोगे प्रेयाभावात् चतुर्थी न भवतीति । यद्येवं **रोचते मम घृतं सह मुद्गै**रित्यादावभिलाषकरणार्थस्य रुचे प्रेयस्य सद्भावात् तत कुतो न चतुर्थीति पृच्छति—**कथमि**त्यादि । समाधत्ते—**संबन्धमात्रविवक्षाया**मिति । अत्र सत्यपि प्रेयत्वे प्रेयता न विवक्षिता, अपि तु तत्क्रियासबन्धमात्रमिति न चतुर्थीति षष्ठ्येव भवति । **मूत्राय कल्पते यवागूरि**ति । यवागू कर्त्री संपद्यते, किं संपद्यते?, मूत्र—मूत्ररूपमित्यर्थ । ननु मूत्रयवागूशब्दयोर्द्वयोरपि संपद्यते इति क्रियया सह संबन्धात् गौणत्वाभावात् कथ मूत्रशब्दात् चतुर्थी?, उच्यते—एतत्सूत्रसामर्थ्यादेवात्र गौणमुख्यभावेन क्रियासंबन्धात् मूत्रस्य गौणत्व, तथा हि—प्रथम यवाग्वा सह क्रियाया सबन्ध. पश्चान्मूत्रस्येति । गौणादिति व्यावृत्त्युदाहरणे तु मूत्रादेर्विशेष्यार्थं मूत्रादिक प्रथम क्रियया संबन्धनीयम् । यद्वा मूत्रायेति कोऽर्थ?, मूत्ररूपविकारसंबन्धित्वेन संपद्यत इत्यर्थ । 'कृपौङ्' सामर्थ्ये, इत्यस्य कल्पत इति । सपूर्व 'पदिंच्' गतौ इत्यस्य **संपद्यत** इति । 'जनैचि' प्रादुर्भावे, इत्यस्य—**जायते** इति । **तद्विकाररूपमापद्यत इत्यर्थ** इत्यनेन मूत्रयवाग्वादीनां विकारविकारिभाव दर्शयति । **चैत्रस्य कल्पन्ते धनानी**ति । अत्र चैत्रो धनादीनां स्वामी न विकार इति न भवति । **मूत्रमिदं संपद्यते यवागूरि**त्यादि । अत्र विकारविकारिणोरभेदविवक्षया विकार प्रधानमिति गौणादिति अधि-

---

१ कुकुराश्च पु० । २ °श्च रोचते कविकथासु विचित्रासु हेमरसनाश्च युवत घृ° पु० ।

मातुः संजानाति; स्मरतीत्यर्थः। व्याप्य इत्येव?, मातरं स्वरेण संजानीते,–करणे विकल्पो न भवति। मातुः संज्ञातेति कृति परत्वात् षष्ठी। नवाऽधिकारे वाग्रहणमुत्तरत्र तन्निवृत्त्यर्थम् ॥ ५१ ॥

## दामः संप्रदानेऽधर्म्ये आत्मने च ॥ २ । २ । ५२ ॥

संपूर्वस्य दामः संप्रदानेऽधर्म्यरूपे वर्तमानात् नाम्नस्तृतीया भवति, तत्संनियोगे च दाम आत्मनेपदं भवति। दास्या संप्रयच्छते, वृषल्या संप्रयच्छते;–कामुकः सन् द्रव्यं दास्यै ददातीत्यर्थः। दाम इति किम्?, दास्यै संददाति। संप्रदान इति किम्?, द्रव्यं वृषल्या संप्रयच्छते, कर्मणि मा भूत्। अधर्म्य इति किम्?, पत्न्यै संप्रयच्छति। सम इत्येव?, दास्यै प्रयच्छति। इह सपूर्वस्य दामः प्रशब्दव्यवधानमन्तरेण प्रयोगाऽभावात् तद्व्यवधानेऽपि भवति ॥ ५२ ॥

## चतुर्थी ॥ २ । २ । ५३ ॥

संप्रदाने वर्तमानाद् गौणात् नाम्नो ङेभ्यांभ्यस्लक्षणैकद्विबहौ यथासंख्यं चतुर्थी विभक्तिर्भवति। द्विजाय गां ददाति, शिष्याभ्यां धर्ममुपदिशति, मुनिभ्यो भिक्षां ददाति, पत्ये शेते, राज्ञे विज्ञपयति, राज्ञे दण्डं ददाति। संप्रदान इत्येव?, अजां नयति ग्रामम् ॥ ५३ ॥

---

अन्यत्र षष्ठी। **स्मरतीत्यर्थ** इत्यनेन अस्मृताविल्यस्य व्यवच्छेद्यां स्मृत्यर्थतां दर्शयति। **मातरं स्वरेण संजानीते**–नन्वत्र मातरमिति व्याप्यमस्त्येव, तत्कथमिदं व्याप्य इत्यस्यानुवर्तमानस्य स्यात् प्रत्युदाहरणमिति ?, अथ स्वरेणेत्यत्र न भवतीति चेन्न–अत्र तृतीयाया सिद्धत्वादित्याह—**करणे विकल्पो न भवतीति**। यद्यत्र व्याप्य इति नानुवर्तेत तदाऽनेन विधीयमानस्तृतीयाविकल्प सामान्यविहितत्वात् करणेऽपि स्यात्। **मातुः संज्ञातेति**। अत्र कृत्प्रयोगे इय तृतीया च प्राप्नोति "कर्मणि कृत" इति षष्ठी च, उभय चान्यत्र सावकाशं, तत्रोभयप्राप्तौ परत्वात् षष्ठ्येव भवतीत्याह—**कृतीत्यादि**। **नवाऽधिकार** इति। नवाधिकारेणैव विकल्पस्य लब्धत्वात् तदर्थं वाग्रहणमुत्तरत्र नवाधिकारनिवृत्त्यर्थमिति, तेनोत्तरो नित्य एव विधिरित्यर्थः। कर्मण करणविवक्षायां पक्षे तृतीयाया द्वितीयायाश्च सिद्धत्वात् सूत्रारम्भवैयर्थ्यात् प्रत्युदाहरणेषु कृत्प्रयोगे चैवं तृतीया स्यादत कर्मणि तद्विवक्षान्युदासार्थमय पाक्षिकस्तृतीयारंभ ॥ ५१ ॥

**दामः संप्रदानेऽधर्म्ये आत्मने च**। नाम्नस्तृतीयेत्यनुवर्तते। सम इत्यनुवर्तमानेन दाम इति विशिष्यते, तथा चायमन्वय –समो दाम सम्प्रदाने अधर्म्ये वर्तमानात् नाम्नस्तृतीया, दाम आत्मने चेति। तदाह—**संपूर्वस्येत्यादि**। **अधर्म्यरूप** इति। अधर्म –शास्त्रनिषिद्ध इत्यर्थ। आत्मनेपदस्य दाम्प्रकृतिर्विज्ञायत इत्याह—**तत्संनियोगे च दाम आत्मनेपदमिति**। **दास्या संप्रयच्छते** इति। दासी दानक्रियाकर्मणाऽत्राभिप्रेयेति ततस्तृतीया, सम्प्रयच्छत इति सम्प्र इत्युपसर्गपूर्वात् 'दाम्'दाने, इत्यतोऽनेन वर्तमानाऽऽत्मनेपद ते, मध्ये शव्, "श्रौतिकृवुधिवु०" ४।२।१०८। इति दामो यच्छादेश। **कामुकः सन्नित्यादिना** धात्वर्थसाधर्मतां दर्शयति। **दास्यै संददातीति** तु 'डुदांग्क्' दाने, संपूर्वस्त्वतस्तिव्, "हव शिति" ४।१।१२। इति द्विर्वचन, नाऽय दामिति नाऽत्र तृतीया नाप्यात्मनेपदमिति। **द्रव्यं वृषल्या संप्रयच्छते** इति। अत्राऽसति संप्रदाने इति व्याप्य इत्यनुवृत्ते क्रियाव्याप्यत्वात् द्रव्यात् तृतीया प्रसज्येतेत्याह—**कर्मणि मा भूदिति**। **पत्न्यै संप्रयच्छति**—पत्न्यै दान नाधर्म्य इत्यत्र न भवति। **दास्यै प्रयच्छतीति**। सम इत्यनुवृत्तेरत्र न भवति। ननु सम इति परदिग्योगलक्षणा पञ्चमी, ततश्च "पञ्चम्या निर्दिष्टे परस्य" तत्रानन्तरस्येति "समो ज्ञोऽस्मृतौ" इत्यत्र व्यवधाने सति न भवति तत्कथं सम्प्रयच्छत इति प्रशब्देन व्यवधाने विधिरित्याह—**इह संपूर्वस्येत्यादि**। इहाऽस्मिन् सूत्रे प्रशब्देन समो व्यवधानेऽपि विधिर्भवति, कुत –प्रशब्दव्यवधानमन्तरेण प्रयोगाभावात्। न हि तद्व्यवधानमन्तरेण सपूर्वस्य दाम. सयच्छतीति प्रयोग, यत्र त्वस्ति तत्र यमेरेव। एवं च 'येन नाऽव्यवधान तेन व्यवहितेऽपि' इति वचनप्रामाण्यात् प्रशब्देन व्यवधानमाश्रीयत इति। यद्वा सम इति पूर्वत्र पञ्चम्यन्तमपीह लक्ष्यवशात् षष्ठ्यन्त विज्ञायते, तत्र व्यवधानेऽपि समा द्योत्यमानार्थत्वात् दाम संबन्धोपपत्तेर्भवत्येव विधि। ननु अनेन ब्राह्मणेन दान प्रवृत्तमित्यादिवत् संप्रदानस्य करणत्वविवक्षाया 'दास्या सम्प्रयच्छते' इत्यादौ तृतीयोपपत्ते किमर्थमिदमारभ्यते ?, यद्वा सहार्थे इय तृतीया, तथाहि–दास्यै स्वय धन ददाति साप्यात्मानं तस्मै ददातीति दानपूर्वके वा संभोगे दाम् वर्तते–दत्त्वा दास्या सह संभुङ्क्ते इति। एवं चात्र क्रियाव्यतिहारोपपत्तेस्तद्द्वारेणैव आत्मनेपदम्। अत्रोच्यते—एवं हि धात्वन्तरेऽपि विनाऽपि समुपसर्गेणाऽधर्म्यत्वाभावेऽपि धात्वर्थस्य प्रत्युदाहरणेऽप्युक्तविवक्षोपपत्तेस्तृतीया प्राप्नोति। द्रव्य वृषल्या सम्प्रयच्छते इत्यत्रापि संप्रदानविवक्षायां चतुर्थी स्यादत इह चतुर्थी प्रत्युदाहरणेषु च तृतीया मा भूदित्येवमर्थमिद वक्तव्यमिति विशिष्ट एव विषये लोकस्य विवक्षेति लोकविवक्षानियमो विना वचनेन दुरधिगम इति इदमारभ्यत इति ॥ ५२ ॥

**चतुर्थी**। संप्रदान इति गौणात् नाम्न इति एकद्विबहाविति चानुवर्तते। संप्रदाने गौणात् नाम्न एकद्विबहौ चतुर्थीत्यन्वयस्तदाह—**संप्रदाने वर्तमानादित्यादि**। **द्विजाय गां ददातीत्यादि**। गवादिना कर्मणा द्विजादेराप्यमानतया विवक्षितत्वात् संप्रदानत्वात् ततो चतुर्थी। **अजां नयति ग्राममिति**। अत्राऽजां देवदत्त स्वव्यापारेणाऽऽप्नोति, अजा च ग्रामश्च तौ व्याप्यरूपौ, व्याप्येन चाऽऽप्यमानस्य संप्रदानत्वादिह च तदभावात् चतुर्थी न भवतीति ॥ ५३ ॥

---

१ मिकल्पनि° पु०। २ °र्म्ये° पु०। ३ वितरति पु०।

## तादर्थ्ये ॥ २ । २ । ५४ ॥

किञ्चिद्वस्तु संपादयितुं यत्प्रवृत्तं तत्तदर्थम्, तस्य भावे तादर्थ्ये-संबन्धविशेषे द्योत्ये गौणात् नाम्नः षष्ठ्यपवादश्चतुर्थी भवति । यूपाय दारु, कुण्डलाय हिरण्यम्, रन्धनाय स्थाली, अवहननायोलूखलम् ॥ ५४ ॥

## रुचिकॢप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु ॥ २ । २ । ५५ ॥

रुच्यर्थैः कॢप्यर्थैर्धारिणा च धातुना योगे यथाक्रमं प्रेये विकारे उत्तमर्णे च वर्तमानाद् गौणात् नाम्नश्चतुर्थी भवति, वचनसाम्यं यथासंख्यार्थम्; बहुवचनं तु एकद्विबहाविति यथासंख्याऽभावार्थम् । रुच्यर्थैः प्रेये-प्रीयमाणे,-जिनदत्ताय रोचते धर्मः, गुरुदत्ताय स्वदते दधि; तस्याऽभिलाषमुत्पादयतीत्यर्थः । प्रेय इति किम्?, चैत्राय रोचते मोदको माधुर्येण, माधुर्यशब्दात् न भवति । प्रेयसंबन्धादभिलाषकरणार्थस्य रुचेर्ग्रहणम्, तेनेह न भवति-सर्वेषामेतद्रोचते कथं वा तवेति?-प्रतिभातीत्यर्थः । कथं रोचते मम घृतं सह मुद्गैः शालयो दधिशरं कुकुराश्चं[1]?, घृतमेव ममापि रोचते घृतशीतं च सशर्करं पयः[2]?,-संबन्धमात्रविवक्षायां षष्ठ्येव भविष्यति । कॢप्यर्थैर्विकारे-मूत्राय कल्पते यवागूः, उच्चाराय संपद्यते यवाऽन्नम्, श्लेष्मणे जायते दधि; तद्विकाररूपमापद्यत इत्यर्थः । विकार इति किम्?, चैत्रस्य कल्पन्ते धनानि, संपद्यन्ते शालयः । गौणादित्येव?, मूत्रमिदं संपद्यते यवागूः, उच्चारोऽयं सपद्यते यवाऽन्नम्, शृङ्गाच्छरो जायते, गोमयाद् वृश्चिकः

---

**तादर्थ्ये** । गौणात् नाम्न इति चतुर्थी इति च वर्तते । तादर्थ्ये गौणात् नाम्नश्चतुर्थीत्यन्वय । तच्छब्देन कार्यं निर्दिश्यते । तस्मायिदं तदर्थमिति समासेन विशिष्टकार्यप्रयोजनं कारणमभिधीयत इत्याह—**किञ्चिद्वस्तु संपादयितुं यत्प्रवृत्तं तत्तदर्थमिति** । तदर्थस्य भावस्तादर्थ्यमिति कार्यकारणसंबन्ध उच्यते, समासकृत्तद्धितेषु भावप्रत्ययेन संबन्धाभिधानमिति वचनात्, तत्र च सबन्धस्य द्विष्ठत्वेऽपि गौणादित्यधिकारात् अप्रधानाद्विशेषणादेव चतुर्थी भवति । तत उत्पद्यमानेवाऽसौ वस्त्वन्तरार्थतां गमयितुं शक्नोतीति नान्याख्यित्याह—**तस्य भावे** इत्यादि । **यूपाय दार्विति** । अत्र यूपादिहेतुभूतस्य दार्वादेर्हेतुहेतुमद्भावस्य चतुर्थ्यैव गमितत्वात् नामार्थव्यतिरेके च हेतुतृतीयाविधानादिह च नामार्थव्यतिरेकाभावात् "हेतु"इति तृतीया न भवति । ननु तस्मै इद तदर्थमिति सत्यां चतुर्थ्यां समास, सति च समासे तदनुवादेन चतुर्थीविधानमितीतरेतराश्रयादप्रसिद्धिर्निर्देशस्येति, उच्यते-आचार्यप्रवृत्तिर्ज्ञापयति भवत्यर्थशब्दयोगेन चतुर्थीति यदय "तदर्थोऽर्थेन" इत्यर्थशब्देन समासं शास्ति । षष्ठीसमासो वा, संबन्धसामान्यविवक्षायामस्त्येव षष्ठी, यथा गुरोरिद गुर्वर्थमिति । ऊर्ध्वं ख खिलं वाऽस्येति पृषोदरादित्वादुलूखलम् ॥५४॥

**रुचिकॢप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु** । अत्र गौणात् नाम्नश्चतुर्थीति वर्तते । रुचिकॢप्यर्थधारिभि प्रेयविकारोत्तमर्णेषु वर्तमानात् गौणात् नाम्न चतुर्थीत्यन्वय । रुचिशब्दो रुच्यर्थे वर्तते, रुचिश्चान्यकर्तृकोऽभिलाष । कॢपिश्च विकृतिमत्कॢप्यर्थे वर्तते । रुचिश्च कॢपिश्च रुचिकॢपी तावर्थौ येषान्ते रुचिकॢप्यर्था, रुचिकॢपिवाच्योऽर्थोन्येषां न समवतीति सामर्थ्यादिवार्थलोपो द्रष्टव्य, रुचिकॢप्यर्थे इवार्थो येषा ते तयोक्ता इत्यर्थ । अत्र रुचिकॢप्यर्थेत्यर्थशब्द प्रत्येकमभिसंबध्यते न समुदायेन, तथैव व्यवस्थिते । यदि खलु प्रत्यासत्त्या कॢपिनैव सबध्येत तदा धारिवत् रुचिरप्यर्थशब्दात् पर एव क्रियेत, तथा सति किं रुचिना सबध्यते उत नेति सन्देहोऽपि न स्यात् । धारेश्च परनिपातेन लक्षणव्यभिचारो न कृत स्यात्, रुचिधारी समस्य कॢप्यर्थेन समासात्, अन्यथा धारेरल्पस्वरत्वात् पूर्वनिपातार्हस्य परनिपातेन लक्षणं व्यभिचरितं स्यादित्याह—**रुच्यर्थैः कॢप्यर्थैरिति** । रुचिकॢपिसमानार्थैरित्यर्थ । रुचिकॢप्यर्थधारिभिरिति बहुवचनान्तस्य प्रेयविकारोत्तमर्णेष्विति बहुवचनान्तेन यथासंख्यमभिसंबन्ध इत्याह—**वचनसाम्यं यथासंख्यार्थमिति** । ननूभयत्रैकवचननिर्देशेऽपि साम्यात् यथासख्य भविष्यति किं बहुवचनेनेत्याह—**बहुवचनं त्वित्यादि** । भिन्नवचनत्वादिति शेष । एकद्विबहावित्यस्य तु ङेभ्याम्भ्यसित्यनेनैव यथासख्यमिति । **रुच्यर्थैः प्रेय** इत्यादिना भेदेनोदाहरति । **प्रेय** इति प्रीणाते "य एचात." इति कर्मणि यप्रत्यये रूपमित्याह—**प्रीयमाण** इति । **रोचते** इति । 'रुचि' अभिप्रीत्यां चेत्यतो वर्तमानायास्तेप्रत्यये भवति । **तस्याभिलाष**मित्यादिना रुच्यर्थतां दर्शयति । किं पुनरत्र प्राप्त?, केचिदाहु -देवदत्तो रोचयति मोदकमिति प्राप्नोति, देवदत्त हि प्राप्य मोदको रुचिविषयो न सर्वमेव, भिन्नेच्छत्वात् प्राणिनाम् । केचिदाहु -कर्मणि द्वितीयायां प्राप्तायां प्रीयमाण देवदत्त प्रीणयति मोदक इति । अन्ये आहु -कारकशेषत्वे षष्ठी प्राप्ता नटस्य शृणोतीति यथा, सर्वथा तु कारकस्याविवक्षायां न भवति-'देवदत्तस्य रोचते घृत न यज्ञदत्तस्येति,' सबन्धपरत्वविवक्षाया । यथोदाहृत भर्तृहरिणा-यद्यपि पाणिनेरभिरुचिता नित्यताऽनित्यता चेति, तदाह-"हेतुत्वे कर्मसंज्ञाया शेषत्वेनापि कारकम् । रुच्यर्थादिषु शास्त्रेण चतुर्थी संप्रकीर्तिता" ॥१॥ **चैत्राय रोचते**-तस्याभिलाष करोतीति तत्र प्रेयो नाम अभिलाषकरण एव संभवति, यो हि यमभिलषति तस्याभिलाषस्य कर्ता तं प्रीणातीति तेन स प्रीयते इति नार्थान्तरेऽस्ति प्रेय इति तदन्यथानुपपत्त्याभिलाषकरणार्थस्य रुचेर्ग्रहणात् । **सर्वेषामेतद्रोचते** इत्यादौ प्रतिभानार्थप्रयोगे प्रेयाभावात् चतुर्थी न भवतीति । यद्येव **रोचते मम घृतं सह मुद्गै**रित्यादावभिलाषकरणार्थस्य रुचे प्रेयस्य सद्भावात् तत कुतो न चतुर्थीति पृच्छति—**कथमित्यादि** । समाधत्ते—**संबन्धमात्रविवक्षायामिति** । अत्र सत्यपि प्रेयत्वे प्रेयता न विवक्षिता, अपि तु तत्क्रियासबन्धमात्रमिति न चतुर्थीति षष्ठ्येव भवति । **मूत्राय कल्पते यवागूरिति** । यवागू कर्त्री संपद्यते, किं संपद्यते?, मूत्रं-मूत्ररूपमित्यर्थ । ननु मूत्रयवागूशब्दयोर्द्वयोरपि संपद्यते इति क्रियया सह संबन्धात् गौणत्वाभावात् कथ मूत्रशब्दात् चतुर्थी?, उच्यते-एतत्सूत्रसामर्थ्यादेवात्र गौणमुख्यभावेन क्रियासबन्धात् मूत्रस्य गौणत्व, तथा हि-प्रथम यवाग्वा सह क्रियाया सबन्ध पश्चान्मूत्रस्येति । गौणादिति व्यावृत्त्युदाहरणे तु मूत्रादेर्विशेष्यार्थं मूत्रादिकं प्रथम क्रियया संबन्धनीयम् । यद्वा मूत्रायेति कोऽर्थ?, मूत्ररूपविकारसंबन्धित्वेन संपद्यत इत्यर्थ । 'कृपौङ्' सामर्थ्ये, इत्यस्य कल्पत इति । संपूर्व 'पदिंच्' गतौ इत्यस्य **संपद्यत** इति । 'जनैचि' प्रादुर्भावे, इत्यस्य—**जायते** इति । **तद्विकाररूपमापद्यत** इत्यर्थ इत्यनेन मूत्रयवाग्वादीनां विकारविकारिभाव दर्शयति । **चैत्रस्य कल्पन्ते धनानीति** । अत्र चैत्रो धनादीनां स्वामी न विकार इति न भवति । **मूत्रमिदं संपद्यते यवागूरित्यादि** । अत्र विकारविकारिणोरभेदविवक्षया विकार प्रधानमिति गौणादिति अधि-

---

१ कुकुराश्च पु० । २ °श्च रोचते कपिकथासु विचिन्वाल हेमरसनाश्च युवत. घृ° पु० ।

प्रभवति, मूत्रं संपद्यते यवाग्वाः; यवाग्वा इति च पञ्चमी अपायविवक्षायाम् । धारिणोत्तमर्णे—चैत्राय शतं धारयति। उत्तमर्ण इति किम् ?, शतशब्दात् न भवति, उत्तमर्णो धनिकः ॥ ५५ ॥

## प्रत्याङः श्रुवाऽर्थिनि ॥ २ । २ । ५६ ॥

प्रत्याङ्भ्यां परेण शृणोतिना युक्तादर्थिन्यभिलाषुके वर्तमानाद् गौणात् नाम्नश्चतुर्थी भवति । द्विजाय गां प्रतिशृणोति, द्विजाय गामाशृणोति; याचितोऽयाचितो वा प्रतिजानीते इत्यर्थः । प्रत्याङ इति किम् ?, चैत्रस्य शृणोति । अर्थिनीति किम् ?, द्विजाय गां प्रतिशृणोतीत्यत्र गवि मा भूत् ॥ ५६ ॥

## प्रत्यनोर्गृणाऽऽख्यातरि ॥ २ । २ । ५७ ॥

प्रत्यनुभ्यां परेण गृणातिना योगे आख्यातरि वर्तमानाद् गौणात् नाम्नश्चतुर्थी भवति । आचार्याय प्रतिगृणाति, आचार्यायानुगृणाति;—आचार्योक्तमनुवदति, प्रशसन्तं वा प्रोत्साहयतीत्यर्थः । प्रत्यनोरिति किम् ?, आचार्यं गृणाति । आख्यातरीति किम् ?, आचार्याय मनसा प्रतिगृणातीत्यत्र मनसि मा भूत् ॥ ५७ ॥

## यद्वीक्ष्ये राधीक्षी ॥ २ । २ । ५८ ॥

वीक्ष्यं—विमतिपूर्वकं निरूपणीयम्,—विप्रश्नविषय इति यावत्, तद्विषया क्रियापि वीक्ष्यम्; यत्संबन्धिनि वीक्ष्ये राध्यतिरीक्षतिश्च वर्तते तस्मिन् वर्तमानाद् गौणात् नाम्नः सामर्थ्याद् राधीक्षिभ्यामेव युक्तात् चतुर्थी भवति । मैत्राय राध्यति, मैत्रायेक्षते;—तस्य दैवं पर्यालोचयतीत्यर्थः । स्त्रीभ्य ईक्षते—स्त्रीणामभिप्रायः कीदृश इति विमतिपूर्वकं निरूपयतीत्यर्थः । ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयम्, परस्त्रीणामभिप्राये यत्सदेहादीक्षितव्यम्—निरूपयितव्यं; किमेव करोषि नवेति तद्रक्षसां कुलधर्मो न दोषः । दैवे एवेक्ष्ये इच्छन्त्येके । राधीक्ष्यर्थधातुयोगेऽपि इच्छन्त्येके—मैत्राय राधयति, साधयति,

---

कारान्न भवति । **मूत्रं संपद्यते यवाग्वा** इत्यत्र मूत्रविकारस्य प्राधान्यात् मा भूत् ततश्चतुर्थी, यवाग्वा इत्यत्र तु पञ्चमी कथमित्याह—**यवाग्वा** इत्यादि । ततो यवाग्वा अपगच्छदिद मूत्रं संपद्यत इत्यपायोऽत्र विवक्षित, तत्र "पञ्चम्यपादाने" इति पञ्चमी भवति । **चैत्राय शतं धारयतीति** । 'धृङ्त्' अवस्थाने, ध्रियते तिष्ठति स्वरूपान्न प्रच्यवत इत्यर्थ, ततो ध्रियमाण प्रयुङ्क्ते इति णिग् ततस्तिवादि । **शतशब्दात् न भवतीति** । शतं धारयतीत्यत्र धार्यमाणे शते कर्मण्युत्तमर्णत्वाभावान्न भवतीत्यर्थ । उत्तमर्णं व्याचष्टे—**उत्तमर्णो धनिक** इति । यो हि धन प्रयुङ्क्ते स लोके उत्तमत्वेन प्रसिद्धो यस्तु गृह्णाति सोऽधमत्वेन । उत्तमाधमाभ्यां संबद्धमृणमपि तथैव व्यपदेष्टव्यमित्युत्तमम्रुण यस्येति बहुव्रीहिणोत्तमर्णशब्देन धनिकोऽभिधीयत इत्यर्थ ॥ ५५ ॥

**प्रत्याङः श्रुवाऽर्थिनि** । अत्र गौणात् नाम्नश्चतुर्थीत्यनुवर्तते । प्रत्याङः श्रुवा अर्थिनि गौणात् नाम्नश्चतुर्थीत्यन्वय । अर्थयत इत्यर्थी—अभिलाषुक, 'अर्थणि' उपयाचने, इति हि पाठात् । प्रत्याङ इति पञ्चमी न तु षष्ठी, षष्ठ्या हि प्रत्याङ्श्रुवेति लाघवात् समस्येत, अस्ति हि तत्र समास "षष्ठ्ययत्नात्०" इति । न च तत्र समुदायानुकरण स्यादिति वाच्य, ङकारानर्थक्यप्रसङ्गात्, तदा हि प्रत्याश्रुवेति निर्दिश्येत । अत एव च प्रत्येकमभिसबन्धो न समुदायेनेति द्विवचनेनाह—**प्रत्याङ्भ्या परेणेति** । एवमुत्तरत्रापि । **प्रतिशृणोतीति** । 'श्रुट्' श्रवणे, प्रतिपूर्वस्तत-स्तिव्, "स्वादे श्नु" इति श्नु, "श्रौतिकृ०" इति श्रुव शृभाव, इदमेव त्वया कर्तव्यमिति याचमाने महत्त्वादयाचमानेऽपि केनाप्याकारादिना स्वाभिलाष समर्पयति द्विजादौ ओमिति तस्य प्रतिपद्यते अभ्युपगच्छतीति यावदित्यर्थ । **गवि मा भूदिति** । असत्यर्थिनीत्यस्मिन् कर्मद्वितीयामन्यत्र सावकाशा परत्वात् चतुर्थी बाधेतेत्यर्थिग्रहणम् ॥ ५६ ॥

**प्रत्यनोर्गृणाऽऽख्यातरि** । गौणात् नाम्नश्चतुर्थीति वर्तते । प्रत्यनो गृणा आख्यातरि गौणात् नाम्न चतुर्थीत्यन्वय । **गृणेति** गृणातेस्तिवन्तस्यैकदेशोऽनुक्रियत इत्याह—**गृणातिना योग इति** । **आचार्योक्त**मित्यादिना । आचार्यस्याऽऽख्यातृत्वमाख्यातुमुदाहरणार्थमाचष्टे । **आचार्यं गृणातीति** । आचष्टे इत्यर्थ, अत्राऽऽचार्यमाचक्षाणमिति प्रतिपत्तव्यम्, अन्यथा ह्यसविकल स्यादिति । ननु 'श्रुवाङोऽर्थिनि', 'गृणानोश्चाऽऽख्यातरि' इत्येव किं न विन्यस्यते ?, एव हि विन्यस्यमाने प्रतेरिति पूर्वेणोत्तरेण वाऽनुवृत्त्याऽभिसबन्धात् द्वि प्रतिग्रहणं न कर्तव्य भवति, वर्णेन चैकेन लाघवमिति, नैव, अक्षराधिक्याद्धि योगविभागश्चकाराकाङ्क्षण च गरीय इति ॥ ५७ ॥

**यद्वीक्ष्ये राधीक्षी** । गौणात् नाम्नश्चतुर्थीति वर्तते । यद्वीक्ष्ये राधीक्षी गौणात् नाम्न चतुर्थीत्यन्वय । वीक्ष्य व्याचष्टे—**वीक्ष्यमित्यादिना** । विविधा विशेषानुपलम्भादेकस्मिन् वस्तुनि सादृश्यादिनिमित्तादनेकपक्षालम्बनाऽनवधारणात्मिका मतिर्विमति —संदेहज्ञानमिति यावत्, तत्पूर्वकं निरूपणीयमदृष्टमिष्टानिष्टफल पुण्यपापरूपमप्रत्यक्षं पराभिप्रायादिकं वा, तस्यैव निरूपणार्हत्वात् । पुन स्पष्टयति—**विप्रश्नविषय इति** । विशिष्ट प्रश्नो विप्रश्नोऽभिमानोन्मादादिप्रयुक्त पूर्वपक्ष, तस्य विषय आश्रयोऽविज्ञाततत्त्वसदिग्धोऽर्थ । नि संदिग्धे विप्रश्नस्याभावात् धातोश्च क्रियावचनत्वात् तत्र वृत्त्यभावात् वीक्ष्यविषया क्रियैवोपचारात् वीक्ष्यशब्दाभिधेयेत्याह—**तद्विषयेत्यादि** । 'राधच्' वृद्धौ, तिव्, दिवादित्वात् श्ये—**राध्यतीति** । **तस्य दैवं पर्यालोचयतीत्यर्थ** इति । केनचित् पृष्टो नैमित्तक इति शेष, शुभाशुभं तत्कृत फलं वा सुखदुःखात्मक-दैवम् । **स्त्रीभ्य ईक्षते** इत्यस्यार्थं **स्त्रीणामभिप्राय** इत्यादिना व्याचष्टे । ननु राधीक्ष्योर्वृद्धिदर्शनयोर्वर्तमानत्वात् कथ दैवादिनिरूपणे वृत्ति ?, उच्यते—वृद्धिदर्शनविषय निरूपणमत्र वृद्धिदर्शनशब्दाभिधेयमिति न कश्चिद्दोष इति । विमतिपूर्वकाभिप्रायनिरूपणे स्त्रीणां चतुर्थीमन्ये मान्या-स्त्रीभ्य ईक्षत इत्यादौ न मन्यन्ते इत्याह—**दैवे एवेत्यादि** । **एके** शाकटायना । अन्ये तु राधीक्षी इत्यर्थनिर्देशमाहु, *यस्य साक्षात् वीक्ष्य* विषयता उपपद्यते सोऽर्थो राधीक्षी इति निर्दिष्ट, ततश्च तदर्थसबंधधातुयोगे चतुर्थी भवतीत्याह—**राधीक्ष्यर्थधातुयोगेऽपि इच्छन्त्येक** इति । एके—चान्द्रा । साध्नोति राध्नोति च दैव तत्प्रयुक्त इति *णिग्*—**राधयति, साधयतीति**। ननु यद्ग्रहणात् मा भूत् शुभाशुभात् चतुर्थी,

---

१ °वि XX पु० ।

पश्यति, जानीत इति चोदाहरन्ति । यद्ग्रहणं किम्?, मैत्रस्य शुभाशुभमीक्षते–शुभाऽशुभात् मा भूत्, मैत्रात्तु राधीक्षिभ्यां योगाभावादेव न भवति । वीक्ष्यग्रहण किम्?, मैत्रमीक्षते । राधीक्ष्यर्थविषयात् विप्रष्टव्यादिच्छत्यन्यः–लाभाय राध्यति, लाभाय राधयति, लाभाय साधयति, लाभायेक्षते, लाभाय पश्यति ॥ ५८ ॥

## उत्पातेन ज्ञाप्ये ॥ २ । २ । ५९ ॥

उत्पात–आकस्मिकं निमित्तम्, तेन ज्ञाप्ये–ज्ञाप्यमानेऽर्थे वर्तमानाद् गौणात् नाम्नश्चतुथा भवति । "वाताय कपिला विद्युदातपायाऽतिलोहिनी । पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥ १ ॥" वातादयः स्वकारणेभ्य एवोत्पद्यन्ते, विद्युता तु ज्ञाप्यन्त इति तादर्थ्यं नास्ति । उत्पातेनेति किम्?, राज्ञ इदं छत्रमायातं विद्धि राजानम् । षष्ठ्यपवादो योगः ॥ ५९ ॥

## श्लाघह्नुस्थाशपा प्रयोज्ये ॥ २ । २ । ६० ॥

ज्ञाप्य इत्यनुवर्तते, श्लाघादिभिर्धातुभिर्युक्ताद् ज्ञाप्ये प्रयोज्येऽर्थे वर्तमानाद् गौणात् नाम्नश्चतुर्थी भवति । मैत्राय श्लाघते, मैत्राय ह्नुते, मैत्राय तिष्ठते, मैत्राय शपते, श्लाघाह्नवस्थानशपथान् कुर्वाण आत्मान परं वा ज्ञाप्यं जानन्त मैत्रं प्रयोजयतीत्यर्थः । प्रयोज्य इति किम्?, मैत्रायाऽऽत्मानं श्लाघते, मैत्राय शत ह्नुते,–आत्मादौ मा भूत् । केचित्त्वप्रयोज्यो यो ज्ञाप्यो य आख्यायते तत्रैवेच्छन्ति ॥ ६० ॥

## तुमोऽर्थे भाववचनात् ॥ २ । २ । ६१ ॥

क्रियायां क्रियार्थायामुपपदे तुम् वक्ष्यते, तस्याऽर्थे ये भाववाचिनो घञादयः प्रत्यया विधास्यन्ते; तदन्ताद् गौणात् नाम्नः स्वार्थे चतुर्थी भवति । पाकाय व्रजति, पक्तये व्रजति, पचनाय व्रजति, इज्यायै व्रजति; पक्तुं यष्टुं वा व्रजतीत्यर्थः ।

---

यस्य तद्देव ततो मैत्रात् कस्मात् न भवति ?, भवति ह्यत्र मैत्रो दैवधान्, उच्यते–सामर्थ्यात् राधीक्षिभ्यामेव युक्ताद् चतुर्थीति व्याख्यानात् । मैत्रस्य त्वत्र शुभाशुभसबन्धितयैव विवक्षितत्वात् राधीक्षिभ्या योगाभावात् न भवतीत्याह—**मैत्रात्त्वित्यादि** । **मैत्रमीक्षत** इति । अत्र मैत्रविषय एवेक्षतिर्न तद्वीक्ष्यविषय इति वीक्ष्यग्रहणात् न भवति । **राधीक्ष्यर्थविषयादि**ति । विविध प्रष्टव्यो विप्रष्टव्य, किं भविष्यति न भविष्यति कथ भविष्यतीति स यदा राधीक्ष्यर्थविषयो भवति तदा ततश्चतुर्थीति न दैवबत्येनाऽपि तु दैवेऽपीति । **अन्य** इति । रत्नमतिर्बौद्ध । तन्मतमुदाहरति—**लाभाय राध्यतीत्यादि** ॥ ५८ ॥

**उत्पातेन ज्ञाप्ये** । अत्र गौणात् नाम्नश्चतुर्थीत्यनुवर्तते । उत्पातेन ज्ञाप्ये गौणात् नाम्नश्चतुर्थीत्यन्वय । **उत्पात** इत्यादिना उत्पात व्याचष्टे । **वाताय कपिलेति** । ननु कपिलादिविद्युता वातादीनां जन्यमानत्वात् तेभ्यस्तादर्थ्ये एव भविष्यतीति चेत्, न, तादर्थ्याभावात् । तादर्थ्याभावमेव दर्शयति—**वातादय** इत्यादि । **राज्ञ इदं छत्रमायातं विद्धि राजान**मिति । अत्रानेन छत्रेण आगच्छद्राजा ज्ञाप्यत इति ज्ञाप्यतामाचष्टे ह्यत्रविकलतां परिहर्तुमिति । नाऽत्र छत्रमुत्पात, उत्पातो हि नाम शुभाशुभसूचक कादाचित्को महाभूतपरिणाम उच्यते । न चैव छत्रमिति, तेन ज्ञाप्ये न भवति । वाताय कपिलेत्यादौ ज्ञाप्यज्ञापकसबन्धिविवक्षायां षष्ठ्यां प्राप्तायां तदपवादश्चतुर्थीत्याह—**षष्ठ्यपवादो योग** इति ॥ ५९ ॥

**श्लाघह्नुस्थाशपा प्रयोज्ये** । ज्ञाप्ये इति गौणात् नाम्नश्चतुर्थीत्यनुवर्तते । श्लाघह्नुस्थाशपा ज्ञाप्ये प्रयोज्ये गौणात् नाम्नश्चतुर्थीत्यन्वयस्तदाह—**श्लाघादिभिरित्यादि** । जानातेरणिक्प्रकृतेर्य कर्मभूत सोऽपि ज्ञाप्य इत्युच्यते, यथा "उत्पातेन ज्ञाप्ये" इत्यत्र, यश्च जानाते· कर्ता णिग कर्म सोऽपि, यथा ज्ञाप्यो धर्म देवदत्त इति । श्लाघिप्रभृतयोऽप्यत्र विषये नयत्यादिवत् द्विकर्मका, तत्र जानाते कर्तृभूत ज्ञाप्य परिग्रहीतु प्रयोज्य इत्युच्यते । स च प्रयोज्य –प्रवर्त्य क्व भवतीत्याह—**अर्थे** इति । प्रकृत्यर्थ इत्यर्थ । 'श्लाघृङ्' कत्थने, 'ह्नुङ्' अपनयने, 'ष्ठां' गतिनिवृत्तौ, अत्र "ज्ञीप्सास्थेये" ३।३।६४। इत्यात्मनेपदम् । 'शपीं' आक्रोशे, "शप उपलम्भने" ३।३।३५। इत्यात्मनेपदम् । मैत्रायाऽऽत्मान पर वा श्लाघ्य कथयतीति योऽर्थ स —**मैत्राय श्लाघते** इत्यस्य । एव **मैत्राय ह्नुते**–ह्नोतव्य किंचिन्मैत्र ज्ञापयतीत्यर्थ । **मैत्राय तिष्ठत** इति । स्थानेनाऽऽत्मान ज्ञापयति–प्रकाशयतीत्यर्थ । **मैत्राय शपते**–वाचा मात्रादिशरीरस्पर्शनेन नाऽहं जाने न मया कृतमिति मैत्र ज्ञापयतीति । अमुमेवार्थं स्पष्टयन्नाह—**श्लाघेत्यादि** । **मैत्रायाऽऽत्मानं श्लाघत** इत्यादौ त्वात्मादिर्ज्ञाप्य प्रयोज्यो न भवति, जानातेः कर्मत्वादिति प्रयोज्यग्रहणात् ततो न चतुर्थीत्याह—**आत्मादौ मा भूदि**ति । दर्शनान्तरे प्रयोज्यग्रहण प्रत्याचष्टे—**केचित्त्वित्यादि** । भोजशाकटायना । यस्तु मैत्रादिर्जानन् ज्ञाप्यते तत्र न भवतीति, तथा चाऽन्येषां ग्रन्थे द्विकर्मकोऽय ज्ञापि, केचिद्यस्मै आख्यायते त ज्ञाप्य सप्रदानत्वेन प्रतिपन्ना । केचिद आख्यायते तमिति तन्मते मैत्रमात्मने श्लाघत इत्युदाहरणम् ॥ ६० ॥

**तुमोऽर्थे भाववचनात्** । अत्र गौणात् नाम्नश्चतुर्थीति वर्तते । तुमोऽर्थे भाववचनात् गौणात् नाम्नश्चतुर्थीत्यन्वय । यत्र हि तुम् विधीयते स तुमोऽर्थ, कुत्र च तुम् विधीयत इत्याह—**क्रियायामित्यादि** । भवनं भाव, भवीतीति वचन, भावस्य वचनो भाववचन । स च घञादिप्रत्यय, ततश्च केवलाद्विभक्तेरसभवात् नाम्नो विशेषणत्वात् तदन्तलाभ इत्याह—**तदन्ताद् गौणात् नाम्न** इति । **पाकाय व्रजतीत्यादि** । पक्तु–पाकायेत्यादि विगृह्य "भाववचना" ५।३।१५। इति घञादय·, अत्र व्रजतिक्रियाया पच्याद्यर्थत्व भाववचनेनैव प्रतिपादितमिति तादर्थ्ये चतुर्थी न प्राप्नोति शेषत्वात् षष्ठी स्यात्, व्रजतिक्रियाया हेतुमत्त्वात् पाकस्य च हेतुत्वात् हेतुलक्षणा वा तृतीया स्यादित्याह—**ताद-**

---

१ जानान° पु० । २ °त्म० पु० ।

तादर्थ्यस्य प्रत्ययेनैवोक्तत्वात् चतुर्थी न प्राप्नोतीति शेषषष्ठी हेतुहेतुमद्भावविवक्षायां वा हेतुतृतीया स्यादिति चतुर्थ्यर्थं वचनम् । तुमोऽर्थे इति किम् ?, पाकस्य, त्यागस्य, पाकेन वर्तते, त्यागेन वर्तते, अध्ययनेन वसति; नाऽत्र क्रियायां क्रियार्थायामुपपदे प्रत्ययो विहितः, किं तर्हि ?, भावमात्रे,—पश्चात्तु क्रिययाऽभिसंबन्ध इति हेतौ तृतीयैव भवति । भाववचनादिति किम् ?, पक्ष्यतीति गां दास्यतीति च पाचकस्य व्रज्या, गोदायस्य परिसर्या । तुम इति व्यस्तनिर्देश उत्तरार्थः ॥ ६१ ॥

## गम्यस्याऽऽप्ये ॥ २ । २ । ६२ ॥

यस्यार्थो गम्यते न च शब्दः प्रयुज्यते स गम्यः, तस्य तुमो यदाप्यं—व्याप्यं तत्र वर्तमानाद् गौणात् नाम्नश्चतुर्थी भवति । द्वितीयाऽपवादः । एधेभ्यो व्रजति, फलेभ्यो व्रजति; एधान् फलानि चाऽऽहर्तुं व्रजतीत्यर्थः । गम्यस्येति किम् ?, एधानाहर्तुं व्रजति । आप्य इति किम् ?, एधेभ्यो व्रजति शकटेन, करणात् मा भूत् । तुम इत्येव ?, प्रविश पिण्डीं द्वारम्, अत्र भक्षयेति पिधेहीति च गम्यम् ॥ ६२॥

## गतेर्नवाऽनाप्ते ॥ २ । २ । ६३ ॥

गतिः—पादविहरणं, तस्या गतेराप्येऽनाप्तेऽसंप्राप्ते वर्तमानाद् गौणात् नाम्नश्चतुर्थी वा भवति । ग्रामं गच्छति, ग्रामाय गच्छति; नगरं व्रजति, नगराय व्रजति; विप्रनष्टः पन्थानं गच्छति, पथे गच्छति, उत्पथेन पन्थानं पथे वा गच्छति । गतेरिति किम् ?, आदित्यं पश्यति, मेरुं शृणोति, स्त्रियं गच्छति; मनसा मेरुं गच्छतीत्यत्र ज्ञानार्थो गमिः । आप्य इत्येव ?, ग्रामादागच्छति । अनाप्त इति किम् ?, पन्थानं गच्छति । कृद्योगे तु परत्वात् षष्ठ्येव भवति—ग्रामस्य गन्ता । द्वितीयैवेत्यन्ये—ग्रामं गन्ता । चतुर्थी चेत्यन्ये—ग्रामं गन्ता, ग्रामाय गन्तेति ॥ ६३ ॥

---

र्थ्यस्येत्यादि । **पाकस्य, त्यागस्येति** । नाऽत्र तुमोऽर्थे-क्रियायां क्रियार्थायामुपपदे प्रत्यय इत्यतश्चतुर्थी न भवति । ययैव **पाकेन** इत्यादौ क्रियायां क्रियार्थायां उपपदभूतायां विद्यमानत्वात् प्रत्ययस्य च भाववचनत्वात् तत कुतो न चतुर्थी ?, सत्यम्, अत्र भावमात्रे प्रत्ययमुत्पाद्य पश्चात् तदन्तं क्रिययाऽभिसंबध्यत इति न तुमोऽर्थे भाववचनप्रत्ययोऽतो हेतोस्तृतीयैव च न चतुर्थीत्याह—**नाऽत्रेत्यादि** । **पक्ष्यतीति गां दास्यतीति च पाचकस्य व्रज्येत्यत्र** व्रजिक्रियायां भविष्यत्पचनादिक्रियार्थायां उपपदत्वेऽपि कर्तरि णको विहित इति भाववचनग्रहणात् न ततश्चतुर्थीति । ननु च तुमर्थ इति समासनिर्देशो मात्रालाघवार्थं कुतो न कृत इत्याह—**तुम** इत्यादि । **उत्तरार्थ** इति । उत्तरसूत्रे सप्रयोजनोऽयमित्यर्थः ॥ ६१ ॥

**गम्यस्याऽऽप्ये** । अत्र तुम इति गौणात् नाम्नश्चतुर्थी इति चानुवर्तते । गम्यस्य तुम आप्ये गौणात् नाम्नश्चतुर्थीत्यन्वयः । शब्दो ह्यर्थवानपि प्रयुज्यमानश्च भवति, अप्रयुज्यमानश्च । अर्थप्रकरणशब्दान्तरसंनिधाने प्रतीयमानार्थः स च गम्य इत्युच्यत इत्याह—**यस्यार्थ** इत्यादि । अर्थप्रकरणादिनेति शेषः । **द्वितीयाऽपवाद** इति । **एधेभ्यो व्रजतीत्यत्र** मन्यायाः एधाहरणार्थता गम्यते न त्वेधार्थता, तेन तादर्थ्यचतुर्थ्या सूत्राऽऽरम्भमन्तरेण एधादिभ्यश्चतुर्थी सिध्यतीति न वक्तुं शक्यं, आहरतेरप्रयुज्यमानस्य क्रियार्थव्रजतिक्रियोपपदस्य तुमन्तस्य एधानां कर्मत्वात् । तत्राऽनेन द्वितीयाऽऽपवादश्चतुर्थी विधीयत इति । अत्र ह्ययमर्थो गम्यते, एधानाहर्तुं व्रजतीत्याह—**एधान् फलानि चेत्यादि** । **एधानाहर्तुं व्रजतीति** । अत्र तुमन्तस्य प्रयुज्यमानत्वात् गम्यस्येति वचनात् तत्कर्मणि द्वितीयैव । आप्य इति किमर्थं ?, **एधेभ्यो व्रजति शकटेनेति** करणे मा भूदित्याह—**आप्य इति किमित्यादि** । **प्रविश पिण्डीं द्वारमिति** । इह प्रविश गृहं, पिण्डीं भक्षय, द्वारं पिधेहीति वाक्येषु, वाक्यैकदेशा अप्यर्थतः प्रकरणात् शब्दान्तरसंनिधेर्वाऽवगमिततदर्थाः साधव इष्यन्ते । यदुक्तं—'वाक्येषु वाक्यैकदेशा वर्तन्ते पदेषु च पदैकदेशा' इति । तत्तत्र प्रविशेर्गृहं कर्म, पिण्डीद्वारे तु भक्षयतिपिदधात्योरप्रयुक्तयोरर्थाद् गम्यमानयोरित्यस्त्यत्र भक्षयेति पिधेहीति च गम्यमानस्याप्यं न तु तुमन्तस्येति तयोर्व्याप्ये न भवति ॥ ६२ ॥

**गतेर्नवाऽनाप्ते** । गौणात् नाम्नश्चतुर्थीति आप्य इति च वर्तते । गतेराप्येऽनाप्ते गौणात् नाम्नश्चतुर्थीत्यन्वयः । गतिशब्दस्य ज्ञानाद्यर्थत्वेऽप्यनाप्त इति वचनात् पादविहरणरूपैव गतिर्गृह्यते, ज्ञानादिव्याप्यस्यानाप्तत्वासंभवादित्याह—**गतिः-पादविहरणमिति** । अनाप्त इत्यस्यार्थमाह—**असंप्राप्त** इति । अनाक्रान्त इत्यर्थः । गत्यर्था हि ज्ञानार्था भवन्ति, न च ज्ञानात्मिका गतिरिह गृह्यत इत्या**दित्यं पश्यतीत्यादौ** न भवति । **स्त्रियं गच्छतीत्यत्र** गमिर्मैथुनार्थो न गत्यर्थ इति न भवति । **ग्रामादागच्छति**—अत्राऽसत्यामाप्य इत्यनुवृत्तौ ग्रामादित्यत्राऽप्ययं विधिः प्रसज्येतेति । **पन्थानं गच्छतीत्यत्र** त्वनाप्त इति वचनात् न भवति । अनाप्तेऽसंप्राप्ते कर्मणि चतुर्थी, असंप्राप्तं तु तद्वस्तु यद्गमनेन संप्राप्स्यते, तस्मिन् कर्मणि चतुर्थी पन्थास्तु संप्राप्त इति चतुर्थ्यभावः । **कृद्योग** इति । अयमर्थः—ग्रामाय गच्छतीत्यादौ चतुर्थी सावकाशा, अपां स्रष्टेति षष्ठी, **ग्रामस्य गन्तेत्युभयप्राप्तौ** परत्वात् षष्ठ्येव भवतीति । **द्वितीयैवेत्यन्य** इति । सारसंग्रहकारादयः, ते हि "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ" इति सूत्रेण कर्मणि द्वितीयायां तदपवादो वैकल्पिकी चतुर्थ्यारभ्यते इति पक्षे द्वितीया सिद्धैवेति द्वितीयाग्रहणात् ग्रामं गन्तेत्यत्र कृतः कर्मणि क्षपवादभूतामपि षष्ठीं बाधित्वा द्वितीयैव भवति, चतुर्थी तु षष्ठ्या परत्वात् बाध्यत एवेति मन्यते । **चतुर्थी चेत्यन्ये** इति । उत्पल इत्यर्थः, स ह्येवं मन्यते—द्वितीयाविषय इयं वैकल्पिकी चतुर्थ्यारभ्यते, द्वितीयस्याश्चात्राऽपवादात् कुतोऽपि विषय उपनत इति तद्विषये पक्षे चतुर्थी प्रवर्तत एव—**ग्रामं गन्ता, गामाय गन्तेति** । एतेषु चायमस्मदभिमतः षष्ठीपक्षः श्रीशेषभट्टारकस्यापि संमत इति तदभिप्रायं साधारणभागकारोऽपि हरिणा प्रकीर्णके संप्रदानोद्देशे निर्णीतमाह—यथा कृद्योगलक्षणा षष्ठी न भवतीति तत्कथनमतिसाहसं च । कथं हि शब्दानां साधुत्वं युक्तिबलेन शक्यं व्यवस्थापयितुं ?, यत्र तुल्यपदार्थे उष्णं च तदुदकं च उष्णोदकमिति साधु, उष्णं च तत्पानीयं च उष्णपानीयमिति कालदृष्टोऽपशब्दः । तापसश्चायं कुमारश्च तापसकुमार इति साधु, तापसी चेयं कुमारी च तापसकुमारीति अचिकित्स्योऽपशब्दः । पानीयोष्णम्, कुमारतापसीति च साधुरेव । एवंप्रकारेषु स्मृतिसमधिगम्यसाधुत्वेषु कथं युक्त्या निश्चय इति ?, तत्राऽयं भाष्यकारः सूत्रकार इव व्याकरणे प्रमाणभूतः सर्ववृद्धानामेतन्मतमधमत्य अन्यस्य कस्य किं ग्राह्यमिति न प्रेक्षापूर्वकारितेति ॥ ६३ ॥

---

१ ××××××° पु० । २ ××आप्येऽना० पु० ।

## मन्यस्याऽनावादिभ्योऽतिकुत्सने ॥ २ । २ । ६४ ॥

अतीव कुत्स्यतेऽनेनेत्यतिकुत्सनम्, तस्मिन् मन्यतेराप्ये वर्तमानात् नावादिगणवर्जितात् गौणात् नाम्नश्चतुर्थी वा भवति । न त्वा तृणाय मन्ये, न त्वा तृणं मन्ये; न त्वा बुसाय मन्ये, न त्वा बुसं मन्ये; न त्वा लोष्टाय मन्ये, न त्वा लोष्टं मन्ये; न त्वा शुने मन्ये, न त्वा श्वानं मन्ये;–तृणाद्यपि न मन्ये तृणादेरपि निकृष्टं मन्य इति कुत्सयते । मन्यस्येति किम्?, न त्वा तृणं चिन्तयामि । श्यनिर्देशः किम्?, न त्वा तृण मन्वे । अनावादिभ्य इति किम्?, न त्वा नाव मन्ये, न त्वा अन्नं मन्ये; न त्वा शुकं मन्ये, न त्वा शृगालं मन्ये, न त्वा काकं मन्ये;–नावन्नयोरपि परप्रणेयताऽनायासोच्छेद्यतादिभिरतिकुत्सनत्वं भवति । कुत्सन इति किम्?, न त्वा रत्न मन्ये, न ते मुखं चन्द्र मन्ये, न ते मुखं पद्मं मन्ये,–रत्नादिभ्योऽपि त्वदादीन् अधिकान् मन्य इति प्रशसा । कुत्स्यते अनेनेति करणाऽऽश्रयणं किम्?, न त्वा तृणाय मन्य इति युष्मदो न भवति । अतिग्रहण किम्?, त्वां तृणं मन्ये, सुवर्णं तृण मन्ये;–अत्र नञ्प्रयोगाऽभावे साम्यमात्रं प्रतीयते न त्वतिकुत्सा । कुत्सामात्रेऽपीच्छन्त्येके–तृणाय त्वां मन्ये, तृणाय मन्यमानः सर्वान्; हरिमपि अमंसत तृणायेति । न त्वा तृणस्य मन्तेति कृद्योगे परत्वात् षष्ठी । चतुर्थ्यपीति कश्चित्–न तव बुसाय मन्ता, न तव बुसस्य मन्ता; न चैत्रस्य शुने मन्ता, न चैत्रस्य शुनो मन्तेति । उक्तकर्मणि तु–न त्वं बुसो मन्यसे मया, न चैत्रः श्वा मन्यते मया; नाऽह बुसो मन्ये वृषलेनेत्यतिकुत्सनात् प्रथमेति । बहुवचनमाकृतिगणार्थम् ॥ ६४ ॥

## हितसुखाभ्याम् ॥ २ । २ । ६५ ॥

हितसुखाभ्यां युक्ताद् गौणात् नाम्नश्चतुर्थी वा भवति । आतुराय आतुरस्य वा हितम्, आमयाविने आमयाविनो वा हितम्; चैत्राय चैत्रस्य वा सुखम् ॥ ६५ ॥

## तद्भद्राऽऽयुष्यक्षेमाऽर्थोऽर्थेनाऽऽशिषि ॥ २ । २ । ६६ ॥

तदिति हितसुखयोः परामर्शः, अर्थशब्दः प्रत्येकमभिसंबध्यते; हिताद्यर्थैर्युक्ताद् गौणात् नाम्न आशिषि गम्यमानायां चतुर्थी वा भवति । हितार्थे–हित जीवेभ्यो भूयात्, हित जीवानां भूयात्; पथ्यं मैत्राय भूयात्, पथ्य मैत्रस्य भूयात्; सुखार्थे–सुखं प्रजाभ्यो भूयात्, सुख प्रजानां भूयात्; श प्रजाभ्यो भूयात्, शं प्रजानां भूयात्; शर्म भवताद् भव्येभ्यः, शर्म भवताद् भव्यानाम्, भद्रार्थे–भद्रमस्तु जिनशासनाय, भद्रमस्तु जिनशासनस्य; भद्रमस्तु जिनशासनाय, भद्रमस्तु

---

**मन्यस्याऽनावादिभ्योऽतिकुत्सने** । अत्र नवेति आप्य इति गौणात् नाम्नश्चतुर्थीति वर्तते । अतिकुत्सने मन्यस्य आप्ये अनावादिभ्यो गौणात् नाम्नश्चतुर्थीत्यन्वय । अतिकुत्सनशब्दस्याऽन्वर्थमाह–**अतीवे**त्यादि । तेन अतिकुत्सन–प्रकृष्य कुत्सनमित्यर्थ । यद्वाग्विनश्चतुर्थी विधीयते तत्प्रकर्षेण चेत्कुत्सान् प्रतिपद्यते तदा चतुर्थी भवति न तु साम्यविवक्षायाम्, तेन प्रतिषेधयुक्तायां कुत्सायां चतुर्थीविधानम् । **मन्यस्येति** मन्यत इत्यत्र यद्विकरणपर्यन्त रूपं तस्यानुकरणं, ततश्च मन्यतिपरिग्रह इत्याह–**मन्यतेरिति** । **न त्वा तृणाये**त्यादि । तरते "भ्रूणतृणगुण०" इति णे–तृणम्, 'बुसच्' उत्सर्गे, इत्यतो नाम्युपान्त्यत्वात् के–बुस । तृणायापीत्यपिशब्दार्थो द्रष्टव्य इत्याह–**तृणाद्यपि न मन्य** इति । एतदेव व्याचष्टे–**तृणादेरपी**त्यादि । **न त्वा तृणं चिन्तयामि**–तृणमपि न चिन्तयामीत्यर्थ, अत्र मन्यस्येति वचनान्न भवति । **न त्वा तृणं मन्वे** इति । 'मनूयि' बोधने, वर्तमानाया एप्रत्यय, तत "कृगतनादेरु", श्यनिर्देशेन दिवादिपरिग्रहात् तनादे कर्मणि न भवति । **न त्वा नावं मन्य** इति । नावादयो लक्ष्यदर्शनेनानुसर्तव्या । "सर्तेर्गोऽन्तश्च" इत्यालप्रत्यये गकारागमे च–सृगाल इति । ननु नावन्नयोरत्यन्तोपकारकत्वात् कथमतिकुत्सनत्व गम्यत इत्याह–**नावन्नयोरपी**त्यादि । परेण स्वेच्छया प्रकर्षेण नीयतेऽभिमत स्थान–पराधीनप्रवृत्तिरिति यावत् । **अनायासोच्छेद्यताऽऽदिभि**रित्यादिशब्दादचेतनत्वविनश्वरत्वादिपरिग्रह । **न त्वां रत्नं मन्ये** इत्यादि । अत्र कुत्सन इति वचनात् प्रशसाया न भवति । यथा च प्रशसा गम्यते तथाऽऽह–**रत्नादिभ्योऽपी**त्यादि । न त्वा तृणाय मन्य इत्यादौ युष्मदोऽपि मन्यव्याप्यत्वात् पक्षे चतुर्थीं प्राप्नोतीत्याह–**कुत्स्यत** इत्यादि । करणाऽऽश्रयणेन हि येन कुत्स्यते तत एव तृणादेश्चतुर्थीत्यर्थ । **त्वां तृणं मन्ये** इति । अत्र नञो योगाऽभावात् सातिशयकुत्साया अप्रतीयमानत्वात् साम्यमात्रविवक्षाया न भवत्येवेत्याह–**अत्र नञ्प्रयोगाऽभाव** इत्यादि । **कुत्सामात्रेऽपीच्छन्त्येके** इति । पाणिनिसूत्रव्याख्यातार एव साधारणभागप्रभृतय । **परत्वादिति** । उभयोरन्यत्र चरितार्थत्वादित्यर्थ । **चतुर्थ्यपीति कश्चिदिति** । अजितयशोवादीत्यर्थ । **उक्तकर्मणि त्विति** । मन्यस्याऽऽप्ये कर्मद्वितीयाया विषये पक्षे चतुर्थी विधीयते, यत्र तु कर्मण्युक्तत्वात् द्वितीयाया अप्रवृत्तिस्तत्र चतुर्थ्यपि न प्रवर्तते, उक्तकर्मणस्तु नामार्थत्वादिति कुत्सनात् प्रथमैवेत्यर्थ । अथ 'अनावादे' इत्येकवचनेऽपि सिध्यति बहुवचन किमर्थमित्याह–**बहुवचनमि**त्यादि ॥ ६४ ॥

**हितसुखाभ्याम्** । अत्र नवेति गौणात् नाम्नश्चतुर्थीति च वर्तते । हितसुखाभ्या युक्तात् गौणात् नाम्नश्चतुर्थी नवेत्यन्वय । योगसबन्धलक्षणा षष्ठी सिद्धेति पक्षे चतुर्थ्यपि यथा स्यादिति वचनम् । आमीनातीत्यचि–आमय, तत "आमयाद्दीर्घश्च" इति विनि, दीर्घत्वे–**आमयावी** ॥ ६५ ॥

**तद्भद्राऽऽयुष्यक्षेमाऽर्थोऽर्थेनाऽऽशिषि** । अत्र नवेति गौणात् नाम्नश्चतुर्थीति च वर्तते । तद्भद्राऽऽयुष्यक्षेमाऽर्थोऽर्थेन गौणात् नाम्नश्चतुर्थी नवेत्यन्वय । **तदितीति** । तच्छब्दस्य पूर्ववस्तुपरामर्शत्वादिति शेष । **अर्थशब्द इति** । अन्त्य इति शेष । **भवतादिति** । 'भू' सत्तायाम्, तत पञ्चम्या हि, "कर्तर्यनद्भ्य शव्" इति शव्, "आशिषि तुह्योस्तातङ्" इति तातङ् । 'भदुङ्' सुखकल्याणयोस्तत "भन्देर्वा" उ० ३९१ । इति रप्रत्यये–**भद्रम्** । 'मदैच्' हर्षेऽतो "मीवृधि" उ० ३८७ । इति रप्रत्यये–**मद्रम्** । कले "कल्याणपर्याणादय" उ० १९३ । इत्याणप्रत्यये

---

१ °ष्टा° म० म० । २ मन्मान पु० । ३ °कृत्तयोगे° (स, तयोगे) पु० ।

जिनशासनस्य; कल्याणमस्तु जिनशासनाय, कल्याणमस्तु जिनशासनस्य; आयुष्यार्थे-आयुष्यमस्तु चैत्राय, आयुष्यमस्तु चैत्रस्य; दीर्घमायुरस्तु मैत्राय, दीर्घमायुरस्तु मैत्रस्य; चिरजीवितमस्तु मैत्राय, चिरजीवितमस्तु मैत्रस्य; क्षेमार्थे-क्षेमं भूयात् संघाय, क्षेमं भूयात् संघस्य; कुशलं भूयात् संघाय, कुशलं भूयात् संघस्य; निरामयं भूयात् साधुभ्यः, निरामयं भूयात् साधूनाम्; अर्थार्थे-अर्थो भूयात् मैत्राय, अर्थो भूयात् मैत्रस्य; प्रयोजनं भूयात् मैत्राय, प्रयोजनं भूयात् मैत्रस्य, कार्यं भूयात् मैत्राय, कार्यं भूयात् मैत्रस्य । आशिषीति किम् ?, आयुष्यं प्राणिनां घृतम्,-तत्त्वाख्याने न भवति । हितसुखशब्दाभ्यां पूर्वेण विकल्पः सिद्ध एव, तदर्थार्थं तु तद्ग्रहणम् ॥ ६६ ॥

## परिक्रयणे ॥ २ । २ । ६७ ॥

परिक्रीयते-नियतकालं स्वीक्रियते येन तत् परिक्रयणं-वेतनादि, तस्मिन् वर्तमानाद् गौणात् नाम्नश्चतुर्थी वा भवति । शताय परिक्रीतः, शतेन परिक्रीतः;-संभोगाय परिक्रीता कर्ताऽसि तव नाऽप्रियम्, संभोगेन वा;-शतादिना नियतकालं स्वीकृत इत्यर्थः । परीति किम् ?, शतेन क्रीणाति,-क्रयस्याऽत्र करणं न परिक्रयस्य । करणाऽऽश्रयणं किम् ?, शताय परिक्रीतो मासम्,-मासात् मा भूत् ॥ ६७ ॥

## शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाभिः ॥ २ । २ । ६८ ॥

शक्तार्थैर्वषडादिभिश्च शब्दैर्युक्तात् गौणात् नाम्नश्चतुर्थी भवति । पृथग्योगाद्वेति निवृत्तम् । शक्तो मैत्रश्चैत्राय, शक्नोति मैत्रश्चैत्राय, प्रभवति मैत्रश्चैत्राय, अलं मल्लो मल्लाय, समर्थो मल्लो मल्लाय, प्रभुर्मल्लो मल्लाय; वषट्-वषडग्नये, वषडिन्द्राय; नमस्-नमोऽर्हद्भ्यः, नमः सिद्धेभ्यः; स्वस्ति-स्वस्ति प्रजाभ्यः, स्वस्ति सघाय; स्वाहा-इन्द्राय स्वाहा, अग्नये स्वाहा; स्वधा-पितृभ्यः स्वधा । स्वस्तिशब्दः क्षेमार्थः, तद्योगे आशिष्यपि परत्वात् नित्यमेव-स्वस्ति सघाय भूयात्, स्वस्ति प्रजाभ्यो भूयात् । तृतीयया योगाऽभिधानादिह न भवति-नमो जिनाऽऽयतनेभ्यः,-नाऽत्र जिनानां नमसा योगः,

---

याऽऽगमे च-**कल्याणम्** । 'इण्क्' गतावत "इणो णित्" उ० ५९८। इति णित्युसि प्रत्यये वृद्धौ च आयु, तत आयु प्रयोजनमस्येति "स्वर्गस्वस्तिवाचनादिभ्यो यलुपौ" ६।४।१२३। इति यप्रत्यये—**आयुष्यम्** । 'क्षित्' निवासगत्योरत " "अर्तीरि०" उ० ३३८। इति मे—**क्षेमम्** । 'कुषच्' श्लेषणे, इत्यत "तृपिवपिकुपिकुशि०" उ० ४६८। इति किदले—**कुशलम्** । **आयुष्यं प्राणिनां घृतमिति** । तत्त्वाख्यानमेतत्, नाऽत्राऽऽशीरिति न भवति । ननु हितसुखाभ्यां योगे पूर्वेणैव चतुर्थीविकल्प सिद्ध किं पुनस्तदर्थेन तद्ग्रहणेनेत्याह—**हितसुखशब्दाभ्यामित्यादि** । अयमर्थ —"हितसुखाभ्याम्" इति पूर्वसूत्रेण पक्षे चतुर्थी विधीयत एवेति न तत्प्रापणार्थमिदम्, किन्तु तत्र शब्दग्रहणमिह तु तदर्थार्थं पुनरुपादानमिति ॥ ६६ ॥

**परिक्रयणे** । अत्र नवेति गौणात् नाम्नश्चतुर्थीति च वर्तते। परिक्रयणे गौणात् नाम्न चतुर्थी नवेत्यन्वय । **नियतकालमिति** । स्तोकं कालमित्यर्थ । स्वीकारो ह्यात्मसात्करणं परिक्रय उच्यते, परिशब्दोऽत्र प्रत्यासत्तिं द्योतयति, यथा-परिसहस्रा गाव इति सहस्रप्रत्यासन्ना गाव उच्यन्ते । एवमत्रापि क्रयप्रत्यासन्नोऽल्पकालो वेतनादिना स्वीकार परिक्रय उच्यते । तत्र यत्करण परिक्रयक्रियायां साधकतम वेतनादि तत्करणव्युत्पत्त्या परिक्रयणमुच्यते । **वेतनादीत्यादि**शब्दात् भाटकादिपरिग्रह । **शताये**त्यादि व्याचष्टे—**शतादिनेत्यादि** । **शतेन क्रीणाति**-अत्र क्रय एव, न परिक्रयोऽतस्तस्य करणे पक्षे न चतुर्थीति । **शताय परिक्रीतो मासमिति** । यदि परिक्रयण इति प्रकृत्यर्थविषयतया निर्दिश्यते परिक्रयणे-परिक्रये यदर्थं परिक्रयविषयस्ततश्चतुर्थीति मासादेरपि प्राप्नोति, करणाश्रयणत्वे न भवतीत्याह—**मासान् मा भूदिति** ॥६७॥

**शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाभिः** । अत्र गौणात् नाम्नश्चतुर्थीति वर्तते । शक्तार्थवषड्नम स्वस्तिस्वाहास्वधाभिर्गौणात् नाम्नश्चतुर्थीत्यन्वय । **पृथग्योगा**दिति । "हितसुखाभ्याम्" इत्यत स्वस्तिशब्दस्य पृथक्करणादित्यर्थ , अन्यथाऽनाशसायां 'हितसुखस्वस्तिभि' इति कृतेऽनेन विकल्प आशसायां तु "तद्भद्रा०" इत्यनेनेति । "परिक्रयणे" इत्यनेन त्वेकयोगत्व न व्याख्येय, अर्थस्यासङ्गते । तत्र हि परिक्रयणे वर्तमानान्नाम्न इत्युक्त, अनेन त्वेकयोगे वषडादिवत् परिक्रयणशब्दस्वरूपपरिग्रह स्यादिति । **शक्तो मैत्रश्चैत्रायेति** । शक्नोतेरकर्मकलक्षण कर्तरि क्त, **शक्तार्थ** इति नात्र प्रत्ययार्थो विवक्षित किंतु प्रकृतिमात्र, अन्यथा **अलं मल्लो मल्लायेत्य**त्र न स्यात् । न ह्यत्र कर्ता प्रत्ययार्थोऽस्ति, तस्याऽसत्त्वप्रधानत्वेन सामर्थ्यमात्रद्योतकत्वात् । **मल्ल** इति तु प्रथमा, अल भवतीति सामानाधिकरण्यात्, तेन शक्यते मल्लेन मल्लायेत्यपि द्रष्टव्यम् । एव **वषडग्नये** इत्यादि । **स्वस्तिशब्दः क्षेमार्थ** इत्यनेन विकल्पप्राप्तिं दर्शयति । **परत्वान्नित्यमेवेति** । स्वस्तिचतुर्थ्या अवकाश -स्वस्ति जाल्माय, तत्त्वाख्यानमिद जाल्मत्वादाशीरभावात् । क्षेमार्थचतुर्थ्या अवकाश -कुशल भूयात् सघाय । इहोभय प्राप्नोति—**स्वस्ति प्रजाभ्य** इति, तत्र परत्वादाशिष्यपि नित्य स्वस्तिचतुर्थी भवतीत्यर्थः । **तृतीयया योगाभिधानादिति** । शक्तार्थादिभिर्युक्तात् चतुर्थी त्यर्थावसायात् तैरयुक्तान्न भवतीत्यर्थ । **नमस्यति जिनानिति** । अत्रापि नमसा योगाभावात् जिनानित्यत्र चतुर्थ्यभाव , यद्वा नम शब्दस्यार्थवतो ग्रहणात् तेन अनर्थकेन योगे न भवति, अत्र हि नमस्यधातुरर्थवान् तु तदेकदेशो नम शब्द इति । अथवा-पदान्तरसंबन्धानपेक्षणादन्तरङ्गया कारकविभक्त्या द्वितीयया उपपदविभक्तिश्चतुर्थी बाध्यते, 'उपपदविभक्ते कारकविभक्तिर्बलीयसी' इति न्यायात् । ननु कारकविभक्तिरपि क्रियापदापेक्षिणीति कथमन्तरङ्गा स्यात् ?, नैष दोष , कारकस्य क्रियामात्रसबन्धाव्यभिचारात् स्वरूपान्तर्गतैव सापेक्षेति । विशिष्टक्रियापदश्रवणेन तु सैवापेक्षा नियम्यत इति । उपपदार्थापेक्षा तूपपदविभक्तिप्रकृतेर्नाम्नो न स्वाभिधेयान्तर्गता इत्यमुमेवार्थं चेतसि निधाय पृच्छति—

---

१ °ता पु० । २ × × × ×° पु० । ३ स्वीक्रियत° पु० ।

नमस्यति जिनानित्यत्राऽपि नमस्यधातुना योगो न नमसा । यद्येवं कथं स्वयंभुवे नमस्कृत्येति ?, नाऽनेनाऽत्र चतुर्थी, किंतु नमस्कृतिलक्षणया क्रिययाऽभिप्रेयमाणत्वात् संप्रदानत्वे "चतुर्थी" ॥ २ । २ । ५३ ॥ इत्यनेनैव, स्वयंभुवं नमस्कृत्येत्यत्र तु क्रियाऽभिप्रेयत्वाऽविवक्षायां द्वितीयैव ॥ ६८ ॥

## पञ्चम्यपादाने ॥ २ । २ । ६९ ॥

अपादाने कारके गौणात् नाम्नो यथासङ्ख्यमेकद्विबहौ ङसिभ्यांभ्यस्लक्षणा पञ्चमी विभक्तिर्भवति । ग्रामादागच्छति, पर्वतादवरोहति, गोदाभ्यामागच्छति; यवेभ्यो गां वारयति, कुसूलात् पचति, बलाहकाद् विद्योतते विद्युत्; चौराद् बिभेति ॥ ६९ ॥

## आङाऽवधौ ॥ २ । २ । ७० ॥

अवधिर्मर्यादा, अभिविधिरपि तद्विशेष एवेति तस्याऽपि ग्रहणम्; अवधौ वर्तमानात् आङा युक्ताद् गौणात् नाम्नः पञ्चमी भवति । आ पाटलिपुत्राद् वृष्टो मेघः—पाटलिपुत्रमवधीकृत्य तद्व्याप्याऽव्याप्य वा वृष्ट इत्यर्थः, आ कुमारेभ्यो यशो गतं गौतमस्य ॥ ७० ॥

## पर्यपाभ्यां वर्ज्ये ॥ २ । २ । ७१ ॥

वर्ज्ये—वर्जनीयेऽर्थे वर्तमानात् पर्यपाभ्यां युक्ताद् गौणात् नाम्नः पञ्चमी भवति । परि पाटलिपुत्राद् वृष्टो मेघः, परि परि पाटलिपुत्राद् वृष्टो देवः; अप पाटलिपुत्राद् वृष्टो देवः,—पाटलिपुत्र वर्जयित्वेत्यर्थः । वर्ज्य इति किम् ?, अपशब्दो मैत्रस्य ॥ ७१ ॥

## यतः प्रतिनिधिप्रतिदाने प्रतिना ॥ २ । २ । ७२ ॥

प्रतिनिधीयत इति प्रतिनिधिर्मुख्यस्य सदृशोऽर्थः, प्रतिदानं—गृहीतस्य प्रत्यर्पणम्—विशोधनमिति यावत्; प्रतिना योगे यतः प्रतिनिधिर्यतश्च प्रतिदानम् तद्वाचिनो गौणात् नाम्नः पञ्चमी भवति । प्रद्युम्नो वासुदेवात् प्रति, अभयकुमारः

---

**यद्येवं कथमि**त्यादि । कारकविभक्त्या द्वितीयया बाध्यमाना कथमत्र चतुर्थीति प्रश्नार्थ । परिहरति—**नाऽनेनाऽत्र चतुर्थी**त्यादि । यदि नमस्कृतिलक्षणक्रियाभिप्रेयमाणतया सम्प्रदानत्वं, कथ तर्हि स्वयभुव नमस्कृत्येत्यत्र तन्न भवतीति यदि कस्याप्याशङ्का स्यात्तदा तन्निवृत्त्यर्थमाह—**स्वयंभुवमि**त्यादि । बहुवचनमसन्देहार्थम् ॥ ६८ ॥

**पञ्चम्यपादाने** । अत्र गौणात् नाम्न इति वर्तते । अपादाने गौणात् नाम्न पञ्चमीत्यन्वयस्तदाह—**अपादाने कारके** इत्यादि । **ग्रामादागच्छती**ति पदस्य योऽर्थ आगमनक्रियालक्षणस्तस्यावधिभावेन ग्रामो विवक्षित इति "अपायेऽवधिरपादानम्" इत्यस्याऽपादानत्वात् पञ्चमी । एवं **पर्वतादवरोहती**त्यादावपि द्रष्टव्यम् ॥ ६९ ॥

**आङाऽवधौ** । गौणात् नाम्न पञ्चमीति वर्तते । अवधौ आङा गौणात् नाम्न॰ पञ्चमीत्यन्वय । अवधिशब्दस्य पर्यायेणार्थमाह—**अवधिर्मर्यादे**ति । प्रवृत्तस्य यत्र निरोध स मर्यादा, तद्विशेष एवेति मर्यादाविशेषोऽभिविधिरिति मर्यादाभूतमेव यदा क्रियया व्याप्यते तदाऽभिविधिरित्यवधिशब्देनैव मर्यादार्थेन तस्यैव सामान्येन ग्रहणमित्यर्थ । **आ पाटलिपुत्राद् वृष्टो मेघ** इति । अत्र वर्षस्य पाटलिपुत्रमवधिराङा च युक्तमतस्तत॰ पञ्चमी । **पाटलिपुत्रमवधीकृत्ये**तावानर्थ आङा द्योत्यते । अवधि पुनर्व्याप्तिरिति च विशेषो न गम्यते, प्रमाणान्तरेण तु गम्यत इत्याह—**तद्व्याप्याऽव्याप्य वे**ति । **आकुमारेभ्यो यशो गतं गौतमस्ये**ति । समन्ततो विसर्पणेऽपि आपाटलिपुत्रादिति पाटलिपुत्रवत् कुमारा अवधित्वेन प्रतीयन्ते ॥ ७० ॥

**पर्यपाभ्यां वर्ज्ये** । अत्र गौणात् नाम्न पञ्चमीति वर्तते । वर्ज्ये पर्यपाभ्यां गौणात् नाम्न॰ पञ्चमीत्यन्वय । **परि पाटलिपुत्राद् वृष्टो देव** इत्यादौ वर्ज्यवर्जकसबन्ध पर्यपाभ्या द्योत्यत इति तत्र तद्युक्तात् वर्जनीयात् सबन्धषष्ठ्यां प्राप्तायां पञ्चमी विधीयते इति । **परि परि पाटलिपुत्रादि**ति । "वाक्यस्य परिवर्जने" ७।४।८८। इति द्विर्वचनम् । **पाटलिपुत्रं वर्जयित्वे**त्यर्थ इत्यनेन पाटलिपुत्रस्य वर्ज्यत्वं दर्शयति । पर्यपौ तु पाटलिपुत्रस्य वृष्ट्या वर्ज्यमानतां द्योतयत । **अपशब्दो मैत्रस्ये**ति । अपगत शब्दादपशब्द इति पूर्वपदप्रधान समास॰, अत्र अपेन युक्तो मैत्रो न वर्ज्य इति वर्ज्य इति वचनात् न भवति । नन्वपेन साहचर्यात् परेरपि वर्जनार्थस्य ग्रहणात् वर्जनार्थाभ्यां पर्यपाभ्यां युक्तात् पञ्चमीत्यर्थावसायात् कर्तुर्यदर्थं क्रियारम्भस्तत्प्रधानमिति व्याप्यस्य वर्ज्यमानस्य प्राधान्यात् ताभ्यां युक्तत्वात् पाटलिपुत्रादे क्रियाव्याप्ये द्वितीयाया॰ प्रसङ्गे सम्बन्धिरूपतया वाऽपेक्षिते षष्ठ्यां प्राप्तायां वर्जनीयादेव पञ्चमी भविष्यति किं वर्ज्यग्रहणेन ?, सत्यम्, एवं सति प्रतिपत्तिगौरवं स्यात् । किं च न हि साहचर्यं प्रमाणमस्ति, अर्थप्रकरणादिभिर्लोके सहचरितस्य ग्रहणात् सव्यभिचारत्वात् चेत्यदोष ॥ ७१ ॥

**यतः प्रतिनिधिप्रतिदाने प्रतिना** । अत्र गौणात् नाम्न पञ्चमीति वर्तते । प्रतिना यत प्रतिनिधिप्रतिदाने तद्वाचिनो गौणात् नाम्न पञ्चमीत्यन्वय । **प्रतिनिधीयत** इति—मुख्यस्यासभवे कार्ये विनियुज्यते, इति मुख्यसदृशोऽर्थ इत्याह—**प्रतिनिधिरि**त्यादि । मुख्यो य॰ कश्चित् कार्ये रूढसबन्धो यथा—अर्जुन शत्रुजये, तस्यासन्निधाने यस्तत्कार्ये तद्बुद्ध्या विनियुज्यते स प्रतिनिधिरित्यर्थ । **प्रतिदान**मिति । गृहीतस्य पूर्वदत्तस्य तिलादे॰ प्रत्यर्पण—निर्यातन तुल्यजातीयेनाऽतुल्यजातीयेन वेति शेष । पुन प्रत्यर्पण स्पष्टयति—**विशोधन**मिति । **यतः प्रतिनिधिर्यतश्च प्रतिदान**मिति । यत इत्यत्र यच्छब्दात् मुख्यपूर्वदत्तप्रतिपादकात् "गम्ययप कर्माऽऽधारे" इति कर्मणि पञ्चमी, यमपेक्ष्य प्रतिनिधिप्रतिदाने भवतस्तत पञ्चमीति सार्थो गम्यते, मुख्यपूर्वदत्ते चापेक्षिते भवत संबन्धिशब्दत्वादिति । **प्रद्युम्नो वासुदेवात् प्रति** इति ।

---

१ देव. पु० ।

श्रेणिकतः प्रति,–सदृश इत्यर्थः; तिलेभ्यः प्रति माषानस्मै प्रयच्छति,–तिलान् गृहीत्वा माषान् ददातीत्यर्थः, एवं सर्पिषो-ऽस्मै तैलं प्रति सिञ्चति, सर्पिषोऽस्मै तैलं प्रति सिक्त्वा व्रजति। यत इति किम्?, तिलेभ्यः प्रति माषान् प्रयच्छति इत्यत्र माषशब्दात् मा भूत्। प्रतिनिधिप्रतिदान इति किम्?, वृक्षं प्रति विद्योतते विद्युत् ॥ ७२ ॥

## आख्यातर्युपयोगे ॥ २ । २ । ७३ ॥

आख्याता–प्रतिपादयिता, तत्र वर्तमानाद् गौणात् नाम्नः पञ्चमी भवति; उपयोगे–नियमपूर्वकविद्याग्रहणविषये। उपाध्यायादधीते, आचार्यादागमयति, श्रावकात् शृणोति; प्रत्येकबुद्धादधिगच्छति। आख्यातरीति किम्?, उपाध्यायात् शास्त्र-मागमयति,–अत्र शास्त्रात् मा भूत्। उपयोग इति किम्?, नटस्य शृणोति, उपयोगविवक्षायां त्वत्राऽपि भवति–नटाद् भारतं शृणोति। अपादानत्वेनैव सिद्धे उपयोग एव यथा स्यादित्येवमर्थं वचनम् ॥ ७३ ॥

## गम्ययपः कर्माऽऽधारे ॥ २ । २ । ७४ ॥

गम्यस्याऽप्रयुज्यमानस्य यपो–यबन्तस्य यत्कर्म आधारश्च तत्र वर्तमानाद् गौणात् नाम्नः पञ्चमी भवति। द्वितीयासप्तम्यो-रपवादः। प्रासादात् प्रेक्षते, आसनात् प्रेक्षते, प्रासादमारुह्याऽऽसने चोपविश्य प्रेक्षते इत्यर्थः। गम्यग्रहणं किम्?, प्रासादमारुह्य शेते, आसने उपविश्य भुङ्क्ते,–न ह्यत्र यबन्तस्याऽप्रयोगे तदर्थः प्रतीयते। यब्ग्रहणं किम्?, प्रविश पिण्डीम्, प्रविश तर्पणम्, वृक्षे शाखा, ग्रामे चैत्र',–अत्र हि भक्षयकुरुआस्तेवसतीनां गम्यता न तु यपः। ननु यथा कुशूलादादाय पचति–कुशू-

प्रद्युम्नस्य वासुदेवप्रतिनिधित्वात् वासुदेवात् पञ्चमी। द्युपूर्वात् 'मांक्'मानशब्दयोरित्यत "द्युद्रुनिभ्यो माङो डित्" उ०२६६। इति डिति ने-द्युम्न, पश्चात् प्रेण बहुव्रीहौ–प्रद्युम्न। एवं अभयकुमारस्य श्रेणिकप्रतिनिधित्वात् श्रेणिकात् पञ्चमी, "प्रतिना पञ्चम्या" ७।२।८७ इति तसु। **तिलेभ्यः प्रति माषानस्मै प्रयच्छति**–ये तिला माषार्थं पूर्वं गृहीतास्तेभ्यो माषाणां प्रतिदानमिति तिलशब्दात् पञ्चमी इत्यमुष्योदाहरणस्यार्थं स्पष्टयति–**तिलान् गृहीत्वे**त्यादिना। एवं **सर्पिषोऽस्मै तैलं प्रति सिञ्चती**त्यादावपि द्रष्टव्यम्। अत्र यद्यपि मुख्यप्रतिनिध्योर्गृहीतप्रतिदानयोश्च प्रतिना योगस्तथापि यत इति निर्देशात् मुख्यात् गृहीताच्च तद्युक्तात् पञ्चमी विधीयते, तत एव च तया उत्पद्यमानया उभयगतसंबन्धस्य प्रतिपादितत्वात्। इतराभ्यां तद्युक्ताभ्यामपि पञ्चम्या अप्रवृत्तिरितीत्याह–**यत इति किमि**त्यादि। ननु प्रतिनिधिप्रतिदानयोः स्वेन प्रतियोगिना प्रतिनिधिप्रतिदानवता संबन्धमभिव्यक्तुं प्रतिः प्रयुज्यते, तत्र द्विष्ठत्वात् संबन्धस्य प्रतिनिधिप्रतिदानयोः प्रतिनिधिप्रतिदानवतोश्च तुल्येऽपि प्रतिना योगे प्रतिनिधिप्रतिदानाभ्यां कारकविभक्तिविषयाभ्यां नोपपदविभक्तिः पञ्चमी भविष्यति किं तदर्थेन यत इत्यनेन?, उपपदविभक्तयो हि षष्ठ्यपवादः, षष्ठी च संबन्धस्येदंभावलक्षणे; कारकभावस्य च संबन्धिकारणभूतस्य विवक्षायामस्येदमित्येवंरूपस्य संबन्धस्य फलभूतस्य प्रागभावादेव उपपदविभक्तीनामनुपजातनिमित्तानां स्वत एवाभावः सिद्धः। अयमेव चार्थं पूर्वाचार्यैः परिभाषारूपेणानेन च वचनेन पठ्यते 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति। तत्र यथा प्रद्युम्नमाषयोः कारकयोरसति प्रतिना संबन्धे 'वासुदेवस्य प्रतिनिधिरयं प्रद्युम्नस्तिलानां प्रतिदानं माषान् प्रयच्छतीति' कारकविभक्तिः प्रधानादप्रधानाच्च षष्ठी, तथा प्रतिनाऽपि योगे तं संबन्धमभिधातुं पञ्चम्युत्पद्यमाना तत एव तु प्रतियोगिनः षष्ठीयुक्तादुत्पत्स्यते न तु प्रतिनिधिप्रतिदानाभ्यामिति न्यायादेव सिद्धं, सत्यम्, इमामेव नियतविषयामुत्पत्तिं यत इत्यनेन दर्शयतीत्यदोषः। **वृक्षं प्रति विद्योतते** इति। अत्र वृक्षस्य प्रतिना योगेऽपि प्रतिनिधिप्रतिदानयोरभावात् मुख्यगृहीताऽसंभवात् न ततः पञ्चमीति "भागिनि च प्रतिपर्यनुभिः" इति द्वितीयैव ॥ ७२ ॥

**आख्यातर्युपयोगे।** अत्र गौणात् नाम्नः पञ्चमीति वर्तते। आख्यातरि गौणात् नाम्नः पञ्चमी उपयोगे इत्यन्वयः। अत्र उपपूर्वो युजिर्व्यापारमात्रेऽप्यस्ति, यथा–अयमस्मदर्थं–उपयुज्यते–व्याप्रियत इति। स यदि विज्ञायेत, नटस्य शृणोतीत्यत्रापि स्यात्, आख्यातृश्रोत्रोराख्यानश्रवणलक्षणस्य व्यापारस्य विद्यमानत्वात्। तथोपादाने–स्वीकारेऽप्यस्ति, यथा पक्वान्येतानि फलानि एकशाखाप्रभवत्वादुपयुक्तफलवदिति–उपात्तफलवदिति गम्यते। यद्यप्ययमत्रार्थः स्यात् 'तथापि नटस्य शृणोति' इत्यत्रापि स्यात्, अत्रापि हि उपाध्यायोच्चारितशब्दवत् नटोच्चारितशब्दः श्रोतृभिः श्रोत्रपदमुपगम्यते–उपादीयते। तत्र न केवलमुपयोगग्रहणमनर्थकं सूत्रमेवानर्थकं स्यात् तन्निवृत्त्यर्थत्वात् सूत्रस्य, अतो नाऽयमर्थोऽपि त्वयमित्याह–**उपयोग** इत्यादि। नियमो विद्याग्रहणार्थं गुरुशुश्रूषादिकां शिष्यवृत्तिमाख्यायते। **प्रत्येकबुद्धादधिगच्छति**–किञ्चिन्निमित्तमासाद्याव्याप्तपञ्चमहाव्रतप्राच्यजन्मसंस्कारोद्बुद्धसकलशास्त्रस्मृतिः प्रत्येकबुद्धः। ननु यदा नटादेर्भरतशास्त्रादिकमात्मसात्कर्तुकामः शृणोति तदा कथं पञ्चमीत्याह–**उपयोगविवक्षायां त्वि**त्यादि। अयमर्थः–अत्रापि तदनुरूपोऽस्ति कश्चिन्नियमः, न ह्यत्र प्रेक्षणवत् यथाकथंचिदनियमेनोपरोधेन वा श्रवणात्। **नियमपूर्वकविद्याग्रहणमि**त्यनेन वा ग्रन्थस्यार्थस्य चैदंपर्येण परिग्रह एवोच्यते, स तत्राप्यस्तीति भावः। विद्याग्रहणमित्येतावति तूच्यमाने प्रेक्षणकेऽपि शृण्वतः किमप्यस्ति विद्याग्रहणं, तद्व्यवच्छेदार्थं नियमपूर्वकमित्युपादीयते। ननूपाध्यायादेरस्ति विद्यापरिग्रहेऽपायेऽवधिभूतत्वं, ततो हि विद्या श्रोतारमुपैति, संततत्वात् नात्यन्ताय ततोऽपक्रामतीति "पञ्चम्यपादाने" इति सिद्धा पञ्चमी किमनेनेति?, उच्यते–उपयोग एव यथा स्यात् तदभावे मा भूदित्येवमर्थमिदमिति सूत्रतात्पर्यमाह–**अपादानत्वेनैवे**त्यादि ॥ ७३ ॥

**गम्ययपः कर्माऽऽधारे।** अत्र गौणात् नाम्नः पञ्चमीति वर्तते। गम्ययपः कर्माऽऽधारे गौणात् नाम्नः पञ्चमीत्यन्वयः। यबिति यबन्तं गृह्यते केवलस्य प्रयोगाभावादित्याह–**यपो यबन्तस्ये**ति। तत्र यबन्तस्य कर्मणि द्वितीया प्राप्नोति, आधारे च सप्तमीति तयोरपवादः पञ्चमीयमित्याह–**द्वितीये**त्यादि। **प्रासादात् प्रेक्षते** इत्यादिप्रयोगार्थं कथयन् गम्ययबन्तं दर्शयति। तथा च **गम्यग्रहणं किमि**ति प्रत्युदाह्रियते–**प्रासादमारुह्य शेते, आसने उपविश्य भुङ्क्ते** इति। **तदर्थ** इति। आरुह्येत्यादियबन्तार्थ इत्यर्थः। **प्रविश पिण्डीमि**त्यादौ अर्थात्प्रकरणाद्वा **भक्षये**त्यादि गम्यमपेक्ष्य, तच्च न यबन्तमिति पञ्चमी न भवति। ननु किमर्थमिदं सूत्रमारभ्यते?, प्रासादात् प्रेक्षते, आसनात् प्रेक्षत इति ततो दृष्टिरपैतीति प्रासादादेरपायेऽवधिभूतत्वादपादाने पञ्चमी सिद्धैव। तथाहि–इह तावदेकेषां दर्शनं 'अधिष्ठानदेशात् नात्यन्ताय निर्गच्छद् बहिरिन्द्रियं विषयं परिच्छिनत्ति' यथा जलौकसा पूर्वदेशाऽपरित्यागेनाऽपरदेशप्राप्तिः, 'तथेन्द्रियाणामपि अधिष्ठानापरित्यागेन विषयप्राप्तिरिति नाऽनिन्द्रियमधिष्ठानमिति, ततोऽपक्रान्त्या च स्पष्टोऽवधिभावः। येषां तु क्षणिकानीन्द्रियाणि प्राप्यकारीणि चेति दर्शनं

१ सु० म० म०।

त्वात् पचतीत्यत्राऽऽदानाऽङ्गे पाके पचेर्वर्तमानादुपात्तविषयमेतदपादानमिति पञ्चमी भवति, एवमिहाऽपि अपक्रमणाऽङ्गे दर्शने ईक्षेर्वर्तनाद् भविष्यति, तथा हि—तत्ततोऽपक्रामति अनपक्रामद्धि न विषयं गृह्णीयात्, सत्यम्; किं तु आरुह्य उपविश्येति यबन्तार्थोऽपि गम्यते, ततो यथा यबन्ते प्रयुज्यमाने कर्माऽधिकरणयोर्द्वितीयासप्तम्यौ भवतस्तद्वदप्रयुज्यमानेऽपि तदर्थप्रतीतेस्ते प्रसज्येयातामिति सूत्रमारभ्यते ॥ ७४ ॥

## प्रभृत्यन्यार्थदिक्शब्दबहिराराादितरैः ॥ २ । २ । ७५ ॥

प्रभृत्यर्थैः अन्यार्थैः दिक्शब्दैर्बहिस् आरात् इतर इत्येतैश्च शब्दैर्युक्ताद् गौणात् नाम्नः पञ्चमी भवति । प्रभृत्यर्थैः—ततः प्रभृति, कार्तिक्याः प्रभृति, आरभ्य ग्रीष्मात्, ग्रीष्मादारभ्य । अन्यार्थैः—अन्यो मैत्रात्, भिन्नश्चैत्रात्, अर्थान्तरं घटात्, व्यतिरिक्तः पटात्, विलक्षणोऽश्वात्, पृथग् गजात्; हिरुग् गार्ग्यात् । दिक्शब्द—ग्रामात् पूर्वस्यां दिशि वसति, ग्रामादुत्तरस्यां दिशि वसति; दिशि दृष्टाः शब्दा दिक्शब्दा इति देशकालादिवृत्तिनापि भवति—पूर्वं उज्जयिन्या गोनर्दः, उत्तरो विन्ध्यात् पारियात्रः, पूर्वो ग्रीष्माद् वसन्तः, पश्चिमो रामाद् युधिष्ठिरः, एतदर्थमेव च शब्दशब्दोपादानम्; गम्यमानेनाऽपि च दिक्शब्देन भवति—क्रोशात् लक्ष्यं विध्यति—परेणेति गम्यते, "कर्मेणिङ्" ॥ ३ । ४ । २ ॥ परो भवतीति गम्यते; प्राग् ग्रामात्, प्रत्यग् ग्रामात्, उदग् ग्रामात्, प्राचीन ग्रामादाम्राः, दक्षिणाहि ग्रामात्, उत्तराहि ग्रामात्, दक्षिणा ग्रामात्, उत्तरा ग्रामात्; न्यग् मैत्रस्याऽवस्थित इत्युपसर्जनत्वात् न दिक्शब्दता । बहिस्—बहिर्ग्रामात्, बहिःपुरात्;

---

तेषामपीन्द्रियक्षण एकस्मिन् विषये गच्छति अन्य इन्द्रियक्षणोऽधिष्ठानदेशे प्रादुर्भवतीत्यन्योन्यप्रादुर्भावात् न निरिन्द्रियाधिष्ठानदोष इति ततोऽपक्रमेण द्योतितमवधित्वम् । येषां पुनरप्राप्यकारीणीन्द्रियाणि तेषामपि प्रेक्षणक्रियायास्ततोऽभावात् प्रासादादेरनुपहतोऽवधिभाव इति । अपि चेमानीन्द्रियाणि प्राप्यकारीण्येवेति केषांचिद्दर्शनं, यदि हि तानि तथा न स्युस्तदा दूरवर्तिनो व्यवहितमपि पदार्थमुपलभेरन्, ततोऽनुमितिमिमामाहु 'यदुत सत्यस्मिन् नयनयुगले विततमुखा रश्मयो ये विषयमासाद्य गृह्णन्तीति' । एव च सर्वं उत्प्रेक्षत इत्यस्यायमर्थ —नयनदीधितयोऽस्य नि सृत्य विषय गृह्णन्तीति भवति प्रासादोऽवधित्वादपादानमिति ततोऽनपक्रामत्त चेन्द्रिय विषय परिच्छिनत्तीति सिद्धाऽपादानपञ्चमीत्यमुमेवार्थं संप्रधार्योदाहरणे प्रदर्शनपुर सरमाक्षिपति—नन्वित्यादि । परिहरति—सत्यमित्यादि । अयमर्थ —सत्य सिध्यति पञ्चमी, किन्तु प्रतीयमानयबन्तक्रियापेक्षया कर्मभावस्याधारभावस्य च विद्यमानत्वात् द्वितीयासप्तम्यावपि स्यातां तदर्थमिदमारभ्यते । तद्विवक्षा इह नास्तीति लोकात् प्रतिपत्तौ तत इद वचन लघु मन्यत इति । किं च न भवदुदीरित प्रेक्षतेरर्थश्चक्षुरिन्द्रियकरणिकायामुपलब्धौ सम्भवति, प्रेक्षते देवदत्त चक्षुरिन्द्रियेण करणभूतेन पदार्थमुपलभत इति देवदत्तस्य कर्तृत्वमुपलभ्यते न चक्षुरिन्द्रियस्य । यश्च चाक्षुषो व्यापारो नि सरणाख्यो विषयग्रहणलक्षण स न शब्दोपात्त, केवलं नयनदीधितीना विषयग्रहणाऽन्यथानुपपत्त्या व्यापारोऽनुमीयते । न चानुमानसमधिगम्योऽर्थ शब्दार्थो भवितुमर्हतीति प्रेक्षत इति—नायनरश्मयोऽस्य नि सृत्य विषय गृह्णन्तीति अशब्दार्थोऽयमिति कथ ग्रामादागच्छतीति शब्दोपात्तक्रियापेक्षे कारकभावे सत्यनुमितक्रियापेक्षया साक्षादशब्दोपात्तव्यापारं कारकभावमुररीकृत्य पञ्चमीं समर्थयामहे ?, तस्मात् प्रासादात् प्रेक्षत इत्यत्र चक्षुषो न कर्तृत्व नापि तद्रश्मेरित्यारब्धव्यमेवेदमिति । अपि चास्तां तावत् शब्दार्थताप्रयास, नयनरश्मयोऽस्य नि सृत्य विषयं गृह्णन्तीति अयमेव प्रेक्षतेर्भवत्वर्थ; प्रासादस्य तु तत्क्रियापेक्षयाऽपादानादन्यत्व ब्रूमः । न तावत् प्रासादरश्मय प्रसरन्ति किन्तु चक्षूरश्मय इति प्रत्युत प्रासादो देवदत्तस्याधार इति । स्यादेतत्—पारम्पर्येण प्रासादस्यावधिभाव, प्रासादस्थात् चक्षुषो यतो निर्यान्त्यत पारम्पर्येण प्रासादादेव ते निर्यान्तीति तदिदमतिदुर्भाषितम् । एव हि मुख्यस्यापादानत्व स्यात्, ततश्च मुख्यात् प्रेक्षत इत्यपि प्रसज्येत । को हि विशेष पारम्पर्येणावधिभावात्, मुख्यस्य वाऽप्यपादानत्वमस्तु प्रासादस्येवेति । अपि च केषाञ्चिदेव दर्शनं यन्नायना रश्मयो विषय गृह्णन्तीति । अन्येषा तायागतादीनां गोलकस्यैवविधा काचिच्छक्तिरिति यया विषय प्रतीप्सति, तथाहि—धातुदोषोपलिप्तकृष्णसारं पश्यदन्धमित्यभिदधति जना इति तेषां दर्शन प्रति का वाऽत्र गति ?, न च विशेषापेक्षया शब्दस्थिति, अनवस्थाप्रसङ्गादिति युक्तमिदमारभ्यत इति ॥ ७४ ॥

[1] प्रभृत्यन्यार्थदिक्शब्दबहिराराादितरैः । गौणात् नाम्न पञ्चमीति वर्तते । प्रभृत्यन्यार्थदिक्शब्दबहिराराादितरैर्गौणात् नाम्न पञ्चमीत्यन्वय । अर्थशब्द प्रभृत्यन्यशब्दाभ्यां प्रत्येकमभिसंबध्यत इत्याह—प्रभृत्यर्थैरिति । अत एव च पर्यायप्रयोगेऽप्युदाहरति—आरभ्येत्यादि । दिक्शब्दैरिति । दिशा शब्दा दिक्शब्दा इति षष्ठीसमास । के च दिशां शब्दा ?, ये दिक्षु वर्तन्ते, अतद्वृत्तेरपि तच्छब्दत्वेऽतिप्रसङ्गात् । न च वर्तमाननिमित्तसम्भवे कालान्तरे श्रुतिपरिग्रहो युक्त, तत्र दिश्येव प्रयोगे पञ्चमी स्यात् नान्यत्र देशादावित्याह—दिशि दृष्टा इत्यादि । दिशि ये वाचकत्वेन दृष्टा शब्दास्त इह दिक्शब्दा इति विज्ञायन्ते न तु दिशि वर्तमाना एव, तेन दिशो वाचकत्वेन दृष्टस्य शब्दस्य देशे काले आदिशब्दात् भावे द्रव्ये च वृत्तावपि तद्योगे पञ्चमी, यथा—पूर्वं उज्जयिन्या गोनर्द इति । अत्र कथमिदं विज्ञायते दिशि दृष्टा एव शब्दा दिक्शब्दा न दिशि वर्तमाना इत्याह—एतदर्थमेव चेत्यादि । चो हेतौ, यस्मात् दिक्शब्देति शब्दस्योपादानं तस्मात् दिशि दृष्टा शब्दा दिक्शब्दा इति । नन्वेतदेव कथ विज्ञायते ?, एतदर्थमेव शब्दोपादानमिति, उच्यते—अन्यथा शब्दशब्दोपादानानर्थक्यात्, यदि हि दिशि वर्तमानस्यैव प्रयोगे पञ्चमी स्यात् शब्दशब्दोपादानमनर्थकं स्यात् । तत्र दृष्टश्च तस्येति व्यपदिश्यते, यथा कश्चिद्ग्रामे दृष्टो मनुष्योऽन्यत्रापि दृश्यमानस्तस्य ग्रामस्याय मनुष्य इति व्यपदिश्यते । गम्यमानेनाऽपीति । अप्रयुज्यमानेनेत्यर्थ । प्राग् ग्रामादिति । प्रपूर्वादञ्चते क्विप्, तत प्राची दिक् प्राग् देश कालो वेति "दिक्शब्दाद्दिग्देशकालेषु प्रथमापञ्चमीसप्तम्या" ७।२।११३। इति धाप्रत्यय, "अदूरे एन" ७।२।१२२। इत्येनप्रत्ययो वा तस्य "लुबञ्चे" ७।२।१२३ इति लोप, तद्योगे ग्रामादिति पञ्चमी । एव प्रत्यग् ग्रामादित्यादावपि द्रष्टव्यम् । दक्षिणाहि ग्रामात्—"आहि दूरे" ७।२।१२०। इत्याहि प्रत्यय । एवमुत्तराहीत्यत्रापि । दक्षिणा ग्रामादिति । "वा दक्षिणात्०" ७।२।११९। इत्याप्रत्यय । न्यग् मैत्रस्येति ।

---

१ °चेयर्थ×ना° म० म० । २ प्रभृत्यर्थ पु० । ३ अन्यार्थ पु० । ४ गर्गात् पु० । ५ उज्जयन्या पु० । ६ °नर्द पु० । ७ वहि पु० पु० ।

आरादित्यव्ययं दूरसमीपयोर्वाचकम्, तेन तद्योगे वक्ष्यमाणस्य "आरादर्थैः" ॥ २ । २ । ७८ ॥ इति विकल्पस्याऽपवादोऽयम्—आराद् ग्रामात् क्षेत्रम्, आरात् मैत्रात् पीठम्; इतरशब्दो द्वयोरुपलक्षितयोरन्यतरवचनस्तेनाऽन्यार्थोद् भिद्यते—इतरश्चैत्रात्, तस्य द्वितीयो मैत्रादिरित्यर्थः । अथ जिनदत्तादन्योऽयं मैत्रस्य, जिनदत्तादितरोऽयं चैत्रस्य, छात्राणां पूर्वमामत्रयस्य, कायस्य पूर्वमित्यादौ मैत्रचैत्रच्छात्रकायशब्देभ्यः कथं न भवति ?, उच्यते—प्रत्यासत्तेर्येनैवाऽन्यत्वादिधर्मेनिमित्तोऽन्यशब्दादिना योगस्तत एव जिनदत्तादेः पञ्चमी भवति न मैत्रादेरिति ॥ ७५ ॥

## ऋणाद्धेतोः ॥ २ । २ । ७६ ॥

फलसाधनयोग्यः पदार्थो हेतुः, हेतुभूतं यद् ऋणं तद्वाचिनो गौणात् नाम्नः पञ्चमी भवति । तृतीयाऽपवादः । शताद् बद्धः, सहस्राद् बद्धः । हेतोरिति किम् ?, शतेन बद्धः, शतेन बन्धितः, शतेन चैत्रेण बन्धितः;—कर्तरि प्रयोज्ये प्रयोजके च कर्तृलक्षणा तृतीया भवति, हेतुर्हि फलसाधनयोग्यः पदार्थः कर्त्रादिभ्योऽन्य उच्यते इति कथं कर्तुर्हेतुत्वम् ॥ ७६ ॥

## गुणादस्त्रियां नवा ॥ २ । २ । ७७ ॥

अस्त्रियां वर्तमानात् हेतुभूतगुणवाचिनो गौणात् नाम्नः पञ्चमी वा भवति । जाड्याद् बद्धः, जाड्येन बद्धः; पारिख्यात्यात् मुक्तः, पारिख्यात्येन मुक्तः, मोहाद् बद्धः, मोहेन बद्धः, ज्ञानात् मुक्तः, ज्ञानेन मुक्तः । गुणादिति किम् ?, धनेन कुलम् । हेतोरित्येव ?, जाड्यस्यैतद्रूपम् । अस्त्रियामिति किम् ?, बुद्ध्या मुक्तः, प्रज्ञया मुक्तः; विद्यया यशः । अस्त्यत्राऽग्निर्धूमात्, नाऽस्तीह घटोऽनुपलब्धेः, सर्वमनेकान्तात्मकम् सत्त्वाऽन्यथाऽनुपपत्तेरित्यादौ नाऽग्न्यादेर्धूमादिर्हेतुः, कस्य

---

अथ क्रियाविशेषणत्वादुपसर्जनवचनो न दिक्शब्द इति मैत्रस्येत्यत्र षष्ठी भवति न पञ्चमीति । अथ दूरान्तिकार्थमारादित्यव्ययं सूत्रेऽनुक्रियते, तद्योगे च "आरादर्थैः" इत्यनेनैव पञ्चमी सिद्धा किमिहोपादानेन ?, सत्यम्, सिध्यति परं विकल्पेन, इह तु आराच्छब्दयोगे नित्यं तदपवाद पञ्चमीति तदाह—"आरादर्थैः" २।२।७८। इति विकल्पस्येत्यादि । इतरशब्दवाच्येऽर्थेऽन्यशब्दस्यापि प्रवृत्ते सूक्ष्ममन्तरमप्रतिपद्यमान इतरशब्दमन्यार्थमेव यो मन्यते त प्रति भिन्नार्थतां दर्शयति—इतरशब्द इत्यादि । अयमर्थ —अन्य इति प्रकृतिविलक्षणोऽर्थ उच्यते, इतर इति च दृश्यमानप्रतियोगीत्यर्थ । अथ जिनदत्तादन्योऽयं मैत्रस्येति । अयमर्थ —यथा जिनदत्तस्य अन्यशब्दाभिधेयेनाऽर्थेन योग, तथा मैत्रस्यापि, तद्योगापेक्षा ह्यत्र षष्ठी—मैत्रस्येति । एतावांस्तु विशेष —जिनदत्तापेक्षं अयमिति शब्दाभिधेयमन्यत्वमिति अन्यत्वेन योगो जिनदत्तस्य, मैत्रस्य तु स पुत्रः पिता भृत्यो वेति पुत्रत्वादिविशिष्टेनाऽन्यार्थेनेति । अनेकधर्माधिष्ठान हि द्रव्य भवति, तत्र योगाविशेषात् यथा अन्यत्वेन युक्ते जिनदत्ते पञ्चमी, तथा स्वभावान्तरेण युक्ते मैत्रेऽपि स्यादिति । एव छात्राणा पूर्वमामन्त्रयस्येत्यादावपि पञ्चमी प्राप्नोति, पूर्वेण दिक्शब्देन छात्रादीनां अन्येन मैत्रवत् योगादित्याशङ्क्य परिहरति—उच्यत इत्यादि । अत्रान्यत्वादि विशेषणमात्र शब्देनाभिधीयते न द्रव्य, विशेषणेऽयशब्दार्थ एव शब्दाभिहिताद्विशेषणात् प्रतीयत इति पञ्चमीप्रतिपत्तावन्यत्वादिना विशेषणेन योग । द्रव्येण योगोऽपि सोऽन्याययोग इति पञ्चम्यप्रसङ्ग, अत्रोपपत्ति —प्रत्यासत्तेरिति । येन स्वभावभेदेन तद्द्रव्यमन्यादिव्यपदेश लभते तेनैव योगो विज्ञायते । स्वभावान्तरेण तु योगे नासावन्यादियोगः, न हि तद्द्रव्यं यत् नान्यादि भवति । अन्यत्वादिभावमात्रेण अन्यादिप्रतिपत्ते स्वभावान्तरयोगेऽपि पञ्चमीप्रतिपत्तौ नान्यत्वादिधर्मशून्यं किञ्चिदस्तीति व्यवच्छेद्याभावादन्यादिग्रहणमनर्थक स्यादिति । मैत्रस्येत्यत्र तु पुत्रत्वादिना योगोऽन्यत्वेन जिनदत्तादित्यत्र । छात्राणां पूर्वमित्यत्र पूर्वस्य छात्रान्तरापेक्ष न छात्राणामिति समुदायापेक्ष, समुदायस्य हि एकदेश स न तस्य समुदायापेक्ष पूर्वत्व । तत्र पूर्वत्वेन योगश्छात्रान्तरस्य, समुदायस्य तु एकदेशत्वेनेति न भवति । तथा कायस्य पूर्वमित्यत्रापि पूर्वत्व नाभ्याद्यवयवान्तरापेक्षया, कायस्य तु अवयवत्वेन तद् संबन्धीति न भवति । एवमन्यत्रापि । बहुवचन लाघवार्थम् ॥ ७५ ॥

ऋणाद्धेतोः । गौणात् नाम्न पञ्चमीति वर्तते । हेतो ऋणात् गौणात् नाम्न पञ्चमीत्यन्वय । तृतीयाऽपवाद इति । अत्र शताद् बद्ध इत्यादौ उत्तमर्णेन धार्यमाण ऋण शतसहस्रे बन्धनस्यानाविष्टव्यापारतया निमित्तभूते लौकिको हेतु, ततस्तृतीयाबाधिकाऽनेन पञ्चमी विधीयते । शतेन कर्तरि प्रयोज्ये प्रयोजके चेति । कर्तरीति तृतीयानिमित्तं शेषयोरपि योजनीयम्, प्रयोज्ये कर्तरि प्रयोजके च कर्तरीत्यर्थः । शतेन बन्धित इति । अत्र तु शत बन्धबद्ध इति । शतमृण बन्धकत्वेन कर्तृ विवक्षितमतस्तत्र "हेतुकर्तृकरणे०" इति कर्तरि तृतीया । शतेन चैत्रेण बन्धित इति । शत णिगर्थकर्तृत्वेन विवक्षित चैत्रस्य कमन्यस्य णिक्प्रकृत्यर्थकर्तु प्रयोज्यत्वेन विवक्षितमिति प्रयोज्ये कर्तरि तृतीया । ननु बध्नातिर्बन्धप्रवृत्तिर्न गत्यर्थादिष्वन्तर्भवति इति कथ प्रयोज्यस्य यत्कर्म तस्मिन्नयमिति प्रकृतिकर्तु प्रयोजकमिति प्रयोजके कर्तरि तृतीयेति । ननु बध्नातिर्बन्धप्रवृत्तिर्न... हेतुर्हीत्यादि । हिर्यस्मादर्थे, यस्माद्धेतुर्नाम फलसाधनयोग्य पदार्थ फलयोग्यत्वमात्रेण विनाऽपि कर्तृत्वेन विवक्षितस्य न हेतुभाव इत्याह—हेतुर्हीत्यादि । हिर्यस्मादर्थे, यस्माद्धेतुर्नाम फलसाधनयोग्य पदार्थ फलयोग्यत्वमात्रेण विनाऽपि क्रियां हेतुराख्यायते, कर्त्रादि च कारक क्रियाया निर्वर्तकं न क्रियामन्तरेण भवितुमर्हतीति न तत्र हेतुकार्यम् । अत एव च कर्त्रादिभ्यो विलक्षणो हेतुरिति स्वस्काराभिव्यक्त्यर्थं फलसाधनयोग्य इत्यादिना हेतुस्वरूप पुनरुक्तम् । प्रायो हि कर्तृविशेषमपि हेतुशब्देनाचक्षते । यतश्च "हेतुकर्तृकरणे०" इत्यत्र हेतुग्रहण कृत्वा कर्तृकरणग्रहण कृत्वा हेतुकर्तृकरणग्रहण कृतमतो विज्ञायते कर्त्रादिभ्यो विलक्षणो हेतुरिति ॥ ७६ ॥

गुणादस्त्रियां नवा । अत्र हेतोरिति गौणात् नाम्न पञ्चमीत्यनुवर्तते । अस्त्रियां हेतोर्गुणात् गौणात् नाम्न पञ्चमी नवेत्यन्वय । अनुवर्तमान हेतोरिति गुणादित्यस्य विशेषणमित्याह—हेतुभूतगुणवाचिन इति । द्रव्याश्रित पर्यायो गुण । जाड्याद् बद्ध इति । यदय जडस्तस्मादय बद्ध इत्यर्थ । एव यदय परिख्यातस्तस्मान्मुक्त इत्याद्यपि व्याख्येयम् । जडस्य भाव, परिख्यातस्य भाव इति विग्रह "पतिराजान्त०" ७।१।६०। इति व्यण् । पञ्चम्यभावपक्षे तु "हेतुकर्तृकरणे०" इति हेतौ तृतीया, तस्या प्राप्तायामय विकल्प इति । धनेन कुलमिति । धन द्रव्यं न गुण इत्यत्र न भवति । नाग्न्यादेर्धूमादिर्हेतुरिति । ज्ञापकस्य हेतोर्धूमादेर्नाग्न्यादि फल, तस्य तेनाजन्यत्वादिति भाव । हेतावेव पञ्चमीति

१ नास्ती° पु० ।

तर्हि ?, तज्ज्ञानस्य, कथं तर्हि पञ्चमी ?, "गम्ययपः कर्माऽऽधारे" ॥ २ । २ । ७४ ॥ इति भविष्यति, धूमादिकमुपलभ्याऽग्न्यादिः प्रतिपत्तव्य इति ह्यत्राऽर्थः । ज्ञानहेतुत्वविवक्षायां तु हेतुलक्षणा तृतीया भवति–धूमेनाऽग्निः, अनुपलब्ध्या घटाऽभावः, सत्त्वाऽन्यथाऽनुपपत्त्या, सर्वमनेकान्तात्मकं प्रतिपत्तव्यमिति ॥ ७७ ॥

## आरादर्थैः ॥ २ । २ । ७८ ॥

आराद्–दूराऽन्तिकयोः, तन्त्रेणोभयग्रहणम्, दूरार्थैरन्तिकार्थैश्च शब्दैर्युक्ताद् गौणात् नाम्नः पञ्चमी वा भवति । दूरं ग्रामात्, दूरं ग्रामस्य; विप्रकृष्टं ग्रामात्, विप्रकृष्टं ग्रामस्य; अन्तिकं ग्रामात्, अन्तिकं ग्रामस्य; अभ्याशं ग्रामात्, अभ्याशं ग्रामस्य; [3]सनिकृष्टं ग्रामात्, [3]सनिकृष्टं ग्रामस्य । आरात्शब्दयोगे तु प्रभृत्यादिसूत्रेण नित्यमेव पञ्चमी । अथ दूरं हितं ग्रामात्, दूरं हितं ग्रामस्य भूयादित्यादौ हितादियोगे पञ्चम्यभावपक्षे "हितसुखाभ्याम्" ॥ २ । २ । ६५ ॥ इति चतुर्थी कस्मात् न भवति ?, उच्यते–हितसुखादियोगे सा चतुर्थी, इह तु दूरान्तिकादिनैव योगो न तद्विशेषणेन हितादिनेति न भवति, यदा तु हितादिना विशेष्यतया योगस्तदा चतुर्थी भवत्येव । अन्ये त्वसत्त्ववचनैरेवाऽऽरादर्थैरिच्छन्ति ॥ ७८ ॥

## स्तोकाऽल्पकृच्छ्रकतिपयादसत्त्वे करणे ॥ २ । २ । ७९ ॥

यतो द्रव्ये शब्दप्रवृत्तिः स पर्यायो गुणोऽसत्त्वात्, तेनैव वा रूपेणाऽभिधीयमानं द्रव्यादि; तस्मिन् करणे वर्तमानेभ्यः स्तोकादिभ्यः पञ्चमी वा भवति । स्तोकात् मुक्तः, स्तोकेन मुक्तः; अल्पात् मुक्तः, अल्पेन मुक्तः; कृच्छ्रात् मुक्तः, कृच्छ्रेण मुक्तः; कतिपयात् मुक्तः, कतिपयेन मुक्तः । असत्त्व इति किम् ?, स्तोकेन विषेण हतः, अल्पेन मधुना मत्तः, कृच्छ्रेण भोजनेन निर्विण्णः;–विषादिद्रव्यसामानाधिकरण्यात् अत्र सत्त्ववृत्तिता । करण इति किम् ?, क्रियाविशेषणे मा भूत्–स्तोकं चलति, इह च स्तोकादीनामसत्त्ववाचित्वात् द्वित्वबहुत्वाऽसंभवे एकवचनमेव । "स्तोकस्य चाऽभिनिर्वृत्तेरनिर्वृत्तेश्च तस्य वा । प्रसिद्धिं करणत्वस्य स्तोकादीनां प्रचक्षते" ॥ १ ॥ ७९ ॥

---

मन्यमान पृच्छति—**कस्य तर्हीति** । धूमादिर्हेतुरिति शेष । समाधत्ते—**तज्ज्ञानस्येति** । पुन पृच्छति—**कथमिति** । अयमर्थ –भवतु वह्न्यादिज्ञानस्य धूमादिर्हेतुस्तथापि धूमादे पञ्चमी न प्राप्नोति, वाक्येऽश्रूयमाणवह्न्यादिप्रत्ययहेतुत्वादगुणत्वात् स्त्रीलिङ्गत्वाच्चेति । न चायमप्रयोग., सर्वशिष्टैरभिमानेन प्रयुज्यमानत्वादित्यत आह—"**गम्ययपः०**" इत्यादि । उदाहरणार्थं दर्शयन् पञ्चमीनिमित्त दर्शयति—**धूमादिकमित्यादि** । यदा तु धूमादेरग्न्यादिज्ञानहेतुत्व विवक्ष्यते तदा "हेतुकर्तृकरणे०" इति हेतौ तृतीयैव भवति इत्याह—**ज्ञानहेतुत्वविवक्षायां त्वित्यादि** । **धूमेनाऽग्निरित्यादा**वपि प्रतिपत्तव्य इति योजनीयम् ॥ ७७ ॥

**आरादर्थैः** । अत्र नवेति गौणात् नाम्न पञ्चमीति च सबध्यते । आरादर्थैं गौणात् नाम्न पञ्चमी नवेत्यन्वय । **आराद्–दूरान्तिकयोः, तन्त्रेणोभयग्रहणमिति** । आराच्छब्दो दूरमित्यस्मिन्नर्थेऽन्तिकमित्यस्मिंश्चार्थे तन्त्रेण–साधारण्येन वर्तते, आराच्छब्दो ह्यर्थद्वयस्यापि साधारण इत्यर्थ- शब्दोपनिधानेन चेहार्थपरिग्रह क्रियते, आरात्–आराच्छब्दवाच्योऽर्थो येषामिति तत उभयस्यापि परिग्रह , ततश्चायमर्थो भवतीत्याह—**दूरार्थैरन्तिकार्थैश्चेति** । **दूर ग्रामादिति** । अत्र कारकशेषत्वात् षष्ठ्यां प्राप्तायामिय पञ्चमीति तद्विमुक्तपक्षे षष्ठी । "आरादर्थैं" इत्युच्यमाने आराच्छब्दोऽप्यारादर्थं इति तद्योगेऽप्यय विधि प्राप्नोति, यथा "न स्त मत्वर्थे" इति न तावपीति य शङ्कते त प्रत्याह—**आराच्छब्देत्यादि** । "प्रभृत्यन्यार्थदिक्शब्दबहिरारादि०" इत्याराच्छब्दयोगे नित्य पञ्चमी भवति, तत्र ह्याराद्ग्रहणमस्य विकल्पस्यापवाद इति । **ननु दूर हितं ग्रामस्येत्यादौ** पञ्चम्यभावपक्षे ग्रामस्य हितेन दूरेण च योगात् हितयोगे "हितसुखाभ्याम्" इति चतुर्थ्यपि प्राप्नोतीत्यारादर्थैर्योगे षष्ठीपञ्चम्यावेव यथा स्यातां न त्वन्या विभक्तिरिति तद्बाधनार्थं 'आरादर्थैं षष्ठी च' इति षष्ठीग्रहण कर्तव्यमन्यथाऽत्र चतुर्थी स्यादिति पृच्छति—**अथेत्यादि** । समाधत्ते—**उच्यत इत्यादि** । अयमर्थ –वस्तुत उभययोगेऽपि शब्दो नोभययोग प्राधान्येन साक्षादुपादत्ते किन्त्वन्यतरयोगमेव, इतरेण तु तद्विशेषणभावापन्नेन योग प्रकरणादे पारम्पर्येण प्रतीयते इत्यारादर्थैर्विशेष्यतया योगे विवक्षिते चतुर्थीप्रसङ्ग एव नास्ति । यदा तु हितादिना योगः प्राधान्येन विवक्ष्यते आरादर्थैश्च तद्विशेषणतया तदा चतुर्थी भवत्येव । **अन्ये त्विति** । ललितस्वभाव इत्यर्थ ॥ ७८ ॥

**स्तोकाऽल्पकृच्छ्रकतिपयादसत्त्वे करणे** । अत्र पञ्चमीति नवेति च वर्तते । असत्त्वे करणे स्तोकाऽल्पकृच्छ्रकतिपयात् पञ्चमी नवेत्यन्वय । स्तोकादय शब्दा यत्र सामानाधिकरण्यमनुभवन्ति स्तोकधनमिति तद्द्रव्यम् सीदन्त्यस्मिन् गुणादय इति व्युत्पत्त्या सत्त्वमुच्यते । न सत्त्वमसत्त्व, सत्त्वादन्यदसत्त्व किं तदित्याह—**यत इत्यादि** । अनन्तपर्यायात्मके हि द्रव्ये प्रवर्तमान शब्द कञ्चिदेव स्वभावमुपादाय प्रवर्तते, तत्र योऽसौ द्रव्ये स्तोकादिशब्दप्रवृत्तिनिमित्तभूत पर्यायभेद स गुणो द्रव्ये परार्थतया प्रतीयमानत्वादसत्त्वम् । अथ **स्तोकात् मुक्त., स्तोकेन मुक्त** इति द्रव्यादेव तद्रूपान्तरं करणतया प्रतीयते तत्कथमित्याह—**तेनैव वेत्यादि** । अयमर्थ –तिरोहितघनादिविशेषस्वभावान्तरं स्तोकादिरूपेणैव सामान्याऽऽत्मनाऽभिधीयमान घनादिरूपव्यावृत्त स्तोकादिरूपाऽऽपन्न द्रव्य गुण क्रिया वा यदा प्रतीयते तदा द्रव्याद्यसत्त्वमिति । **स्तोकात् मुक्त** इति । पञ्चम्यभावपक्षे "हेतुकर्तृकरणे०" इति करणे तृतीया । **स्तोकेण विषेण** इति । अत्र स्तोकादय शब्दा स्तोकत्वादिक धर्म प्रवृत्तिनिमित्तमुपादाय तद्वति विषादौ द्रव्ये सत्त्वे सामानाधिकरण्येन वर्तन्त इति नासत्त्ववृत्तय इत्याह—**विषादीत्यादि** । **स्तोकं चलतीति** । आख्यातेनोच्यमानस्य स्तोकरूपस्य चलनस्य स्तोकगुण समानाधिकरणतया विशेषण, स्तोकस्य च क्रियाविशेषणत्वात् क्रियायाश्चासत्त्वभूतत्वात् स्तोकगुणान्वितेऽपि चलने वृत्तस्य स्तोकशब्दस्यासत्त्ववृत्तित्वेवेति असति करण इति क्रियाविशेषणादपि पञ्चमी स्यादिति करण इत्युच्यते । एकार्थत्वेऽपि स्तोकादीना भेदेनोपादान पर्यायनिवृत्त्यर्थमितीह न भवति–मात्रया मुक्त इति । **इह चेति** । सत्त्वस्यैव विशेषसंख्यायोगित्वादिति शेष । **स्तोकस्य चाऽभिनिर्वृत्तेरिति** । स्तोकस्याऽभिनिर्वृत्तत्वादिद प्रयुज्यते–स्तोकेन मुक्त , स्तोकेन मुक्तो निष्पन्न इत्यर्थ । **अनिर्वृत्तेश्चेति** । स्तोकस्याऽनिष्पन्नत्वात् तेन मुक्त इत्यस्यां विवक्षायां करणत्वमाहु ॥ ७९ ॥

---

१ °र्या हेतुत्वलक्षणा° म० भ० । २ °भ्यासं° पु० । ३ सन्नि° पु० ।

## अज्ञाने ज्ञः षष्ठी ॥ २ । २ । ८० ॥

अज्ञानेऽर्थे वर्तमानस्य जानातेः सवन्धिनि करणे वर्तमानाद् गौणात् नाम्न एकद्विबहौ यथासख्यं ङसोसाम्लक्षणा षष्ठी विभक्तिर्भवति । वेति निवृत्तम् । सर्पिषो जानीते,–सर्पिषा करणभूतेन प्रवर्तत इत्यर्थः, प्रवृत्तिरत्र जानातेरर्थः; एव सर्पिषोर्जानीते, सर्पिषां जानीते; अथवा–सर्पिषि रक्तो विरक्तो वा चित्तभ्रान्त्या सर्वमेवोदकादि सर्पीरूपेण प्रतिपद्यत इति मिथ्याज्ञानवचनोऽत्र जानातिः, मिथ्याज्ञान चाऽज्ञानमेव भवति । अज्ञान इति किम् ?, स्वरेण पुत्र जानाति । करण इत्येव ?, तैलं सर्पिषो जानाति–तैल सर्पीरूपेण प्रतिपद्यत इत्यर्थः,–अत्र तैलात् कर्मणो मा भूत्, सर्पिषस्तु करणत्वाद् भवत्येव । तृतीयाऽपवादो योगः ॥ ८० ॥

## शेषे ॥ २ । २ । ८१ ॥

कर्मादिभ्योऽन्यः क्रियाकारकपूर्वकः कर्माद्यविवक्षालक्षणोऽश्रूयमाणक्रियः श्रूयमाणक्रियो वाऽस्येदंभावरूपः–स्वस्वामिभावादिः संवन्धविशेषः–शेषः, तत्र गौणात् नाम्नः षष्ठी भवति । राज्ञः पुरुषः, उपगोरपत्यम्, पशोः पादः, वृक्षस्य शाखा, क्षीरस्य विकारः, गवां समूहः, कुम्भस्य समीपम्, पृथिव्याः स्वामीति, न माषाणामश्नीयात्, सुभाषितस्य शिक्षते, न ते सुखस्य जानते, न तस्य सायमश्नीयात्, अन्नस्य नो देहि, अक्षाणां दीव्यति, भ्रतः पृष्ठ ददाति, नटस्य शृणोति,

---

**अज्ञाने ज्ञः षष्ठी** । करणे इति गौणात् नाम्न एकद्विबहाविति च वर्तते । अज्ञाने ज्ञ करणे गौणात् नाम्न एकद्विबहौ षष्ठीत्यन्वय । ननु ज्ञानमिति भावेऽनटि रूप, ततश्च तदेव ज्ञान नाम यो जानातेरर्थ, तत्र जानातिर्वर्तते तत्कथमिदमुच्यते **अज्ञानेऽर्थे वर्तमानस्य जानाते**रिति ?, उच्यते—ज्ञानमिति रूढिशब्दोऽयमवबोधे प्रमेये निश्चये च वर्तते न जानात्यर्थमात्रे, अनेकार्थत्व च धातूनामित्यज्ञानेऽवबोधादन्यत्रार्थे वर्तमानस्येत्ययमर्थ इत्यदोष । **वेति निवृत्तमिति** । भिन्नप्रकरणत्वादिति शेष । **सर्पिषा करणभूतेन प्रवर्तत इत्यर्थ** इति । **सर्पिषो जानीत** इत्यत्र सर्पिषो जानाते करणत्व जानातेश्चाज्ञानार्थत्वं षष्ठीनिमित्त दर्शयितु वाक्यार्थ उक्त । तत्र निष्कृष्याज्ञानरूपजानात्यर्थमाह—**प्रवृत्तिरि**त्यादि । अनेकार्थत्वात् धातूनां प्रवृत्तौ जानातिरत्र वर्तत इत्यर्थ, तत्र च सर्पिरादि साधकतम भोजनादिस्तु तस्य विषय, अत एव 'कर्मण्यसति' इत्यधिकृत्य अकर्मकत्वात् "ज्ञ" ३।३।८२। इत्यात्मनेपदम् । अथवा–जानातेर्ज्ञानलक्षणेनार्थेन अव्यभिचाराद् सर्वत्रैव तत्प्रतीतेश्चेदमुच्यते 'अज्ञानेऽर्थे वर्तमानस्य' इति, तत्र गौणमुख्यन्यायेन सम्यग्ज्ञानमविपरीतविषयपरिच्छेदकमज्ञानार्थस्य प्रतिषिध्यते मिथ्याज्ञानवृत्तेस्तु तस्य करणे षष्ठी विधीयत इत्याह—**अथवे**त्यादि । यद्यपि च मिथ्याज्ञानतया लोके प्रसिद्ध तथापीह सूत्रार्थपर्यालोचनया तज्ज्ञानरूपतया न गृह्यते इत्युपसंहारद्वारेणाह—**मिथ्याज्ञानं चे**त्यादि । ज्ञानकार्याकरणात् ज्ञानरूपतया नैवेह तद्गृह्यत इत्यर्थ, ज्ञानकार्याकरण तत सम्यग्ज्ञानवदर्थक्रियानवाप्तिरिति । **स्वरेण पुत्रं जानाति**–अत्राऽवबोधार्थत्वात् जानातेरज्ञान इति वचनात् न भवति । **तैलं सर्पीरूपेण प्रतिपद्यत इत्यर्थ** इत्यनेन **तैलं सर्पिषो जानाति** इत्यत्र तैल कर्म न करणमिति दर्शयति, ततश्च करण इति वचनात् तैलात् न भवति सर्पिषस्तु भवतीति । इह सर्पिषो जानीते इत्यत्र करणस्य सवन्धिरूपविवक्षायां षष्ठी सिध्यतीति किमर्थोऽय योग इत्याह—**तृतीयाऽपवादो योग** इति । अयमर्थ –सिध्यति षष्ठी किंतु करणविवक्षायां तृतीया मा भूदित्यय योग ॥ ८० ॥

**शेषे** । गौणात् नाम्न षष्ठीति वर्तते । शेषे गौणात् नाम्न षष्ठीत्यन्वय । नन्वनेकार्थ शेषशब्द, तत्र न तावदप्रधानवचनो गौणाधिकारेणैव तदर्थलाभात् शेषग्रहणानर्थक्यप्रसङ्गात् । तथा सति सर्वेषा कारकाणा क्रियार्थत्वेनाप्राधान्यात् सर्वेभ्य एव कारकेभ्य षष्ठी स्यात्, वचनप्रामाण्याच्च द्वितीयादिभि समावेशो न बाध्यबाधकभाव इति । अपि च अप्रधाने षष्ठीत्येवमर्थे जाते नीलमुत्पलमित्यादौ नीलशब्दाद्विशेष्यसमानाधिकरणादपि विशेषणत्वादप्राधान्यादुत्पलमित्यत्र कृतावकाशां प्रथमां बाधित्वा षष्ठ्येव स्यात् । नाऽपि नगरजनवचन, तथा हि–राज्ञ पुरुष इत्यत्र संबन्धे षष्ठी न स्यात् । अपि च शेषशब्दात् तृतीयादिविभक्तीनामनया षष्ठ्या बाधितत्वात् शेषेण भ्रियते भूमिरित्यादिप्रयोगराशिर्न स्यात्, तस्मात् केषुचिदर्थेषु सत्सु शेषशब्द उपाधीयमान उपयुक्तेतरवचन एव भवतीत्याह—**कर्मादिभ्योऽन्य** इत्यादि । ते हि पूर्वमुपयुक्ता नामार्थस्य प्रथमाविषयत्वात् कर्मादिभ्योऽन्य सवन्ध एव तिष्ठत इति सामर्थ्यात् सवन्धे षष्ठी भवति । नीलोत्पलमित्यत्र तु नीलमिति नामार्थादप्रच्युत विशेष्यसामानाधिकरण्येन प्रयोगात्तत प्रथमैव भवति न षष्ठी, विशेषणविशेष्यभावस्य नामार्थव्यतिरिक्तस्य वाक्यार्थत्वात् । यदुक्त भाष्ये–आधिक्यस्य वाक्यार्थत्वादिति । यद्येव राज्ञ पुरुष इत्यत्रापि संबन्धस्य वाक्यार्थत्वात् षष्ठी न प्राप्नोति, नैष दोष, राज्ञ इति पद सवन्धित्वेन विवक्षितत्वात् प्रयुक्तमित्यत सवन्धषष्ठी कृता । एतच्च भाष्य एव निर्णीतमित्यास्ताम् । स्यादेतदत्र द्वयी कल्पना नामार्थस्य, कदाचित्प्रयोक्तृविवक्षया क्रियाभिर्संबन्ध कदाचित् स्वनिष्ठ एव । यदा तावत् क्रियाभिसंबन्धस्तदा कर्मादिशक्तीनामुद्भवो यथा वृक्ष पश्येति दृशिक्रियाविशेषात् कर्मत्वम् । यदा तु स्वनिष्ठोऽव्यतिरिक्त एव तदा प्रथमाविषय, न चाऽपरो नामार्थोऽस्ति, यत्र कर्मादिविशेषव्यतिरिक्तत्वमिति क शेषो नामावतिष्ठते य एव षष्ठी स्यादित्याशङ्क्याह—**क्रियाकारकपूर्वक** इति । अयमर्थ –राज्ञ पुरुष इत्यत्र योऽय राजपुरुषयो संबन्धो नाय कारणान्तरनैरपेक्ष्येण अकस्मादुपजायते, अपि तु अन्तर्भूतक्रियाकारकसंबन्धनिबन्धनो यत पुरुषो योगक्षेमकामो राजानमुपसर्पति राजाऽपि तमभिलपितधनादिना बिभर्ति क्रियान्तरं वा प्रकल्पनीय ततो राज्ञोऽसौ संबन्धीभूत इति **राज्ञः पुरुष** इति । उपगोरपत्यमित्यत्रापि जनिक्रियाजनित संबन्ध, उपगुरपत्य जनयति तदपि ततो जायत **इत्युपगोरपत्य**मिति । पशो पाद इत्यत्राप्यवस्थितिक्रियालम्भित संबन्धो यत पशो पादोऽवस्थितोऽत **पशोः पाद** इति । एव **वृक्षस्य शाखे**त्यादावपि अवस्थितिक्रियाजनितत्व सबन्धस्येति । एतच्च बाहुल्याभिप्रायेण न त्वैकान्तिकम्, यत **कर्माद्यविवक्षालक्षण** इति । कर्मादीनामविवक्षया सामान्यकारकविवक्षायामेव केवलायां सबन्धस्य प्रादुर्भावात् कारकशेष इति व्यवह्रियते इत्याह—कर्मादिभ्योऽन्य इति तु विशेषेभ्योऽन्यत्व विवक्षितु न तु सामान्यादनाश्रितविशेषात् कारकादपि । तदुक्तम्–"संबन्ध कारकेभ्योऽन्य क्रियाकारकपूर्वक । श्रुतायामश्रुताया वा क्रियाया सोऽभिधीयते" ॥१॥ इत्यत्रापि द्रष्टव्यम् । तत्र राज्ञ पुरुष इत्यादौ क्रियाकारकपूर्वकोऽश्रूयमाणक्रिय स्वस्वामिभावादि सबन्ध । न माषाणामश्नीयादित्यादौ तु श्रूयमाणक्रियत्वे सत्यपि कर्मत्वाद्यविवक्षितत्वात् विशेषणविशेष्यभाव एव प्रतिपाद्यते

---

१ °न न ज्ञान जा° पु० । २ X मा° पु० ।

वृक्षस्य पर्णं पतति; महतां विभाषते । कथं पुनः कर्मादीनां सतामप्यविवक्षा?, यथा—अनुदरा कन्या, अलोमिका एडकेति । गौणादित्येव ?, राज्ञः पुरुषः—अत्र संबन्धस्य द्विष्ठत्वेऽपि प्रधानात् पुरुषात् न भवति, प्राधान्यं चाऽस्याऽऽख्यातपदसामानाधिकरण्यम्, तेन ततः प्रथमैव भवति । यदा तु पुरुषो राजानं प्रति गुणत्वं प्रतिपद्यते, तदा पुरुषस्य राजेति भवत्येव । कथं राज्ञः पुरुषस्य कम्बल इति ?, राजाऽपेक्षया पुरुषस्य प्राधान्येऽपि कम्बलाऽपेक्षया गौणत्वात् भवति । प्रथमाऽपवादो योगः ॥ ८१ ॥

## रिरिष्टात्स्तादस्तादसतसाता ॥ २ । २ । ८२ ॥

रिरिष्टात्स्तात्अस्तात्अस्अतस्आत्प्रत्ययान्तैर्युक्ताद् गौणात् नाम्नः षष्ठी विभक्तिर्भवति । रि—उपरि ग्रामस्य, रिष्टात्—उपरिष्टात् ग्रामस्य, स्तात्—परस्ताद् ग्रामस्य, अवरस्ताद् ग्रामस्य; अस्तात्—पुरस्तात् ग्रामस्य, अवस्ताद् ग्रामस्य; अधस्तात् ग्रामस्य; अस्—पुरो ग्रामस्य, अवो ग्रामस्य, अधो ग्रामस्य; अतस्—दक्षिणतो ग्रामस्य, उत्तरतो ग्रामस्य, परतो ग्रामस्य, अवरतो ग्रामस्य, आत्—अधराद् ग्रामस्य, दक्षिणात् ग्रामस्य, उत्तरात् ग्रामस्य, पश्चात् ग्रामस्य, दक्षिणपश्चात् ग्रामस्य । पञ्चम्यपवादो योगः ॥ ८२ ॥

---

माषसंबन्ध्यशनमिति । **स्वस्वामिभावादि**रिति । आदिशब्दाज्जन्यजनकभावादयो गृह्यन्ते । ननु क्रियामन्तरेण सबन्धाऽभावात् सर्वत्र तस्या अवश्यं भावात् तन्निमित्तस्य च कर्मादे सत्त्वात् कथ तस्याविवक्षेत्याक्षिपति—**कथं पुन**रित्यादि । समाधत्ते—**यथाऽनुदरे**त्यादि । ननु शेषशब्देन स्वस्वामिभावादे संबन्धस्याभिधानात् तस्य च द्विष्ठत्वात् राज्ञ पुरुष इत्यत्र तु पुरुषशब्दादपि षष्ठी प्राप्नोति, तत्र प्रथमा वक्तव्या, प्रतिषिद्धायामपि षष्ठ्यां नामार्थमात्रे विधीयमानाया प्रथमाया सबन्धस्याधिकस्य भावादप्रसङ्ग इति, नैष दोष , गौणाधिकारादप्रधानादेव भवतीत्याह—**गौणादित्येवे**त्यादि । प्रधानात्तु प्रथमाया अप्रसङ्गो न वाच्य , आधिक्यस्य वाक्यार्थत्वादित्युक्तत्वादिति । 'राज्ञ' इत्येतत्पदसंनिधाने पुरुषस्य संबन्धित्व प्रतीयते नाऽन्यथा, पुरुषनाम तु स्वार्थमात्रे वर्तते इति प्रथमा सिध्यति । यथैव पुरुषपदसंनिधान एव राज्ञ सबन्धित्वावगमो नान्यथेति राजशब्दादपि प्रथमाप्रसङ्ग , नैष दोष , 'राज्ञ'इति केवलेऽपि पदे उच्चार्यमाणे सबन्धित्वमनियतप्रतियोगि राज्ञो गम्यते । यस्माद्राजा परोपकारित्वेन विवक्षितो न स्वनिष्ठत्वेन । पुरुषस्य तु राजशब्दमन्तरेण सोऽर्थो न प्रतीयते इति वाक्यार्थ । अस्त्यत्र कारण, राजशब्दाद्धि भवान् षष्ठीमुच्चारयति । अङ्ग! हि पुरुषशब्दादुच्चारितात् गम्यते सोऽर्थ इति । ननु नैतेनैव भवितव्यम्, न हि शब्दस्य भावाभावाभ्यामर्थस्य भावाभावौ क्रियेते । किं तर्हि ?, अर्थस्य प्रतिपिपादयिषया विषयीकरणाऽकरणाभ्यां शब्दस्योच्चारणानुच्चारणलक्षणौ भावाभावौ । तत्र परोपकारित्वेन राज्ञो विवक्षितत्वात् षष्ठी भवति, पुरुषस्य तूपकार्यतया स्वनिष्ठत्वेन विवक्षितत्वात् प्रथमा । तदुक्त हरिणा—"द्विष्ठोऽप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते । तत्राऽभिधीयमानश्च प्रधानेऽप्युपयुज्यते" ॥ १ ॥ तस्मादर्थरूपमेवैतदेव जातीयक येनाऽन्त्रान्तरेणापि पुरुषशब्दस्य प्रयोग राजनि सोऽर्थो गम्यत इति । किं पुनस्तत् ?, स्वामित्वम्, 'समासकृत्तद्धितेषु सम्बन्धाभिधानमि'ति वचनात् स्वस्वामिसबन्ध इत्यर्थ । किं कृत पुनस्तत् ?, स्वकृतम्, ततश्चाऽनियत स्वमपेक्ष्य राज्ञ सबन्धाश्रया षष्ठी उत्पाद्यते । पुरुषशब्दसंनिधौ तु स्वविशेषप्रतिपत्ति । यथा नामार्थाना क्रियाकृता विशेषाशक्तय प्रतीयन्ते शक्तिकृताश्च कर्माद्याख्या प्रादुर्भवन्ति । ताश्च पुनर्विभक्ती कदाचिन्निमित्तत्वेनोपादीयन्ते, यदा क्रियां प्रति व्यापारावेशविवक्षा भवति—दात्रेण लुनातीति । कदाचिन्न, यदा योग्यतामात्रविवक्षा भवति तदा 'दात्र लवने करण'मिति । अयमर्थ —यदा नामार्थस्य क्रियावेशविवक्षाया शक्तिलक्षणार्थातिरेको भवति तदा नामार्थता शक्तयो न प्रतिपद्यन्ते इति व्यभिचाराद्विभक्तेर्निमित्त भवन्ति । यदा तु अपरोपकारित्वेन स्वनिष्ठतया नामार्थो विवक्ष्यते तदा व्यभिचाराभावात् ता शक्तय कर्मकरणसज्ञामेव प्राप्ता न विभक्त्युत्पत्तिं प्रयोजयन्ति । तदुक्तम्—"स्वशब्दैरभिधानेऽपि स धर्मो नाऽभिधीयते । विभक्त्यादिभिरेवाऽसावुपकार प्रतीयते" ॥१॥ तथैव यथा क्रियाऽपेक्षया दात्रेणेति भवति तथा राज्ञ इति स्वापेक्षया । यथा च स्वनिष्ठत्वाऽऽश्रयेण दात्र करण तथा राजा स्वामीत्युक्त भवति । यथैव तर्हि राजनि स्वकृत स्वामित्व तत्र षष्ठी भवत्येव पुरुषेऽपि राजकृत स्वत्व तत षष्ठी प्राप्नोति, उच्यते—राज्ञ पुरुष इति गुणप्रधानभावेनाऽर्थद्वयमवस्थित, तत्र संबन्धो गुणे पद न्यस्य द्विष्ठत्वात् प्रधानमपि संस्पृशति । गुणश्च प्रधानोपकाराय प्रवृत्तो रूपान्तरमाश्रयति, प्रधान तु स्वनिष्ठमेव न तु रूपान्तरं भजत इति पुरुषशब्दात् न षष्ठी । अथ राज्ञ पुरुष इत्यत्र द्वयोरपि सबन्ध प्रति साधारण्यात् किं तत् पुरुषस्य प्राधान्यमित्याह—**प्राधान्यं चे**त्यादि । तेनेत्यादिना प्राधान्यफल दर्शयति । **यदा त्विति** । यदा तु पुरुषस्य गुणभावो राज्ञस्तु विशेष्यत्वात् प्राधान्य तदा पुरुषस्य राजेति भवत्येव । **कथमिति** । एकस्य गुणप्रधानभावो विरुध्यत इत्याशङ्कार्थ । समाधत्ते—**राजाऽपेक्षये**त्यादि । एकस्यापि भिन्नविषयो गुणप्रधानभावो न विरुध्यत इत्यर्थ । स्वगुणे राजनि प्राधान्यमनुभूय पुन प्रधानकम्बलाऽपेक्षया पुरुष शेषतामनुभवतीति । **प्रथमाऽपवादो योग** इति । एकद्विबह्वाविति संख्यामात्रमुपादाय नाम्नप्रधानादप्रधानाच्च सामान्येन प्रथमा विधीयते, तत्राऽय षष्ठीविधिर्गौणादिति विशेषमुपादाय प्रवर्तमानस्तदपवादो भवति ॥ ८१ ॥

**रिरिष्टात्स्तादस्तादसतसाता** । गौणात् नाम्न षष्ठीति वर्तते । रि—रिष्टात्—स्तात्—अस्तात्—अस्—अतस्—आता गौणात् नाम्न षष्ठीत्यन्वयस्तदाह—**रिरिष्टादि**त्यादि । उपरीत्यादिप्रयोगस्थितानां "ऊर्ध्वाद्रिरिष्टातावुपश्चास्य" ७।२।११४। इति, "परावरात् स्तात्" ७।२।११६। इति, "पूर्वावराधरेभ्योऽसस्तातौ पुरवधश्चैषाम्" ७।२।११५। इति, "दक्षिणोत्तराच्चातस्" ७।२।११७। इति, "अधरापराच्चात्" ७।२।११८। इत्यादिभिर्विहितानां प्रत्ययानामनुकरणम्, ततस्तृतीया । **उपरि ग्रामस्येति** । ऊर्ध्वशब्दस्य दिग्देशकालार्थस्य "ऊर्ध्वाद्०" इत्यनेनैवोपभाव । एव पूर्वावराधराणां "पूर्वावराधरेभ्यो०" इति यथाक्रम पुर् अव् अध् इत्येते भवन्ति । एव **पुरो ग्रामस्ये**त्यादावपि । **पश्चात् ग्रामस्येति** । "पश्चोऽपरस्य०" ७।२।१२४। इति पश्चादेश । अथ पूर्वेणैवेद सिध्यति किमर्थोऽय योग इत्याह—**पञ्चम्यपवादो योग** इति । रिप्रभृतयः प्रत्यया स्वार्थिका दिक्शब्देभ्यो विधीयन्तेऽतस्तदन्ता अपि दिक्शब्दा एव इति "शेषे" इत्यस्याऽपवाद ,"प्रभृत्यन्यार्थ०" इति पञ्चमी विधीयते, अत एव दक्षिणा ग्रामाद्रमणीय, दक्षिणाहि ग्रामाद्रमणीयमिति "आहि दूरे" इति प्रत्ययद्वययोगे षष्ठी न लभ्यत इति पञ्चमीबाधनार्थोऽयमिति ॥८२॥

## कर्मणि कृतः ॥ २ । २ । ८३ ॥

कृतः—कृदन्तस्य संबन्धिनि कर्मणि गौणात् नाम्नः षष्ठी भवति । द्वितीयाऽपवादः । अपां स्रष्टा, पुरां भेत्ता, वर्षशतस्य पूरकः, पुत्रपौत्राणां दर्शकः, यवानां लावकः, ओदनस्य भोजकः, विश्वस्य ज्ञाता, तीर्थस्य कर्त्ता, उदकस्य पिबः, ग्रामस्य गमनम्; गवां दोहः । कर्मणीति किम् ?, शस्त्रेण भेत्ता । क्रियाविशेषणस्याऽपि कर्मत्वाऽभावात् न भवति—साधु पक्ता, स्तोकं पक्ता । कृत इति किम् ?, कटं करोति, कृतपूर्वी कटम्, भुक्तपूर्वी ओदनम्; त्यादितद्धितयोः कर्मणि मा भूत् । कथम् अर्थस्य त्यागी ?, सुखस्य भोगी ?, विषयाणां जयी ?, वीराणां प्रसविनीति ?;—अत्र ताच्छीलिकयोर्घिन्-णिनोः कर्मेति भवति ॥ ८३ ॥

## द्विषो वाऽतृशः ॥ २ । २ । ८४ ॥

अतृश्प्रत्ययान्तस्य द्विषः कर्मणि गौणात् नाम्नः षष्ठी वा भवति । चौरस्य द्विषन्, चौरं द्विषन्; "तृन्नु०" आदिसूत्रेण प्रतिषेधे प्राप्ते विकल्पोऽयम् ॥ ८४ ॥

## वैकत्र द्वयोः ॥ २ । २ । ८५ ॥

द्विकर्मकेषु धातुषु द्वयोः कर्मणोरेकत्रैकतरस्मिन् वा षष्ठी भवति । अन्यत्र पूर्वेण नित्यमेव । अजाया नेता स्रुघ्नस्, अजाया नेता स्रुघ्नस्य; अथवा—अजां नेता स्रुघ्नस्य, अजाया नेता स्रुघ्नस्य; पयसो दोहको गाम्, पयसो दोहको गोः; यदि वा गोर्दोहकः पयः, गोर्दोहकः पयसः । अन्ये तु नीवह्यादीनां द्विकर्मकाणां गौणे कर्मणि, दुहादीनां तु प्रधाने विकल्पमिच्छन्ति, उभयत्राऽपि नित्यमेवेत्यन्ये ॥ ८५ ॥

---

**कर्मणि कृतः ।** गौणात् नाम्न षष्ठीति वर्तते । कृत कर्मणि गौणात् नाम्न षष्ठीत्यन्वयस्तदाह—**कृतः-कृदन्तस्येत्यादि।** "कर्मणि" इति सामान्येन द्वितीयाविधानात् कृदन्तकर्मण्यपि द्वितीयाप्राप्तौ तदपवादस्तत्र षष्ठीत्याह—**द्वितीयाऽपवाद** इति । **अपा स्रष्टेत्यादीनि** । एतेषु "णकतृचौ" इति तृच्णकौ । 'पा' पाने इत्यत "घ्राध्मापाट्धेदृश श" ५।१।५८। इति शे, "श्रौतिकृवुधिवु०" ४।२।१०८। इति पिबादेशे—**पिबः** । गमेर्भावेऽनटि—**गमनम्** । एव दुहेर्घञि लघूपन्त्यगुणे—**दोहः** । **कृत इति किमिति** । एव मन्यते—कर्म कारक, तच्च क्रियामन्तरेण न सभवति, क्रियाया हि कारक भवति । सा च वाचक धातु प्रत्ययसहितमाक्षिपति, धातोश्च द्वये प्रत्यया विधीयन्ते त्यादय कृतश्च । तत्र "तद्वेत्त्यधीते" इति ज्ञापकात् त्यादिप्रयोगे द्वितीयाविधानात् कृत्प्रयोग एव षष्ठी भविष्यतीति व्यावर्त्याऽसंभवादिहानर्थकं कृद्ग्रहणम्, नैवम्, कृद्ग्रहणमन्तरेण तद्धितप्रयोगेऽपि यत्कर्म तत्र षष्ठी स्यात् तत्र च मा भूदित्येवमर्थं कृद्ग्रहणमित्युदाहरति—**कृतपूर्वीत्यादि** । सति त्वेवमर्थे कृद्ग्रहणे त्यादिव्यावृत्तिरपि प्रयोजनम् । कृत पूर्वमनेन भुक्त पूर्वमनेनेति च "पूर्वमनेन सादेश्चेन्" ७।१।१६७। इत्यनेन कर्तर्यर्थे इन्प्रत्यय, तेन कृतपूर्वीति पूर्वं कृतवानित्यर्थं । तत्र यथा चित्रगुरित्यादौ बहुव्रीहिणा स्वामिसामान्येऽभिहिते विशेषाभिधानाय चैत्रादि प्रयुज्यते, तथाऽत्रापि सामान्यकर्मण्यभिहिते विशिष्टकर्माऽभिधानाय कटादे केनाऽनभिहितस्य प्रयोग, सामान्येन व्यवहाराऽसभवात् विशेषेणाऽवश्य निर्वाह कार्य । एतद्विषयस्तु विचार "कर्मणि" इत्यत्र सूत्रे कृत इति नेह प्रतन्यते । **कथमिति** । त्यागादिभ्यस्त्यागोऽस्यास्तीतीनि तद्धितप्रयोगेऽर्थस्येत्यादि कर्मणि षष्ठी न प्राप्नोतीत्याशङ्कार्थं । परिहरति—**अत्र ताच्छीलिकयोरित्यादि** । त्यजतीत्येवंशील इत्यादिविग्रहेषु "युजभुजभजत्यज०" ५।२।५०। इति घिनणि—**त्यागी, भोगी** । "जीणदृक्षि०" ५।२।७२। इति, "प्रात्सूजोरिन्" ५।२।७१। इति, चेनि—**जयी, प्रसविनी** ॥ ८३ ॥

**द्विषो वाऽतृशः ।** कर्मणीति गौणात् नाम्न षष्ठीति च वर्तते । अतृशो द्विष कर्मणि गौणात् नाम्न षष्ठी वेत्यन्वयस्तदाह—**अतृश्प्रत्ययान्तस्येत्यादि** । **चौरस्य द्विषन्निति** । 'द्विषींक्' अप्रीतावित्यत "सुगद्विषार्ह सत्रिशत्रुस्तुत्ये" ५।२।२६। इत्यतृश, तद्योगे च कर्मणि षष्ठीप्रतिषेधादनेन विकल्पो विधीयत इत्याह—**"तृन्नु०" आदि सूत्रेणेत्यादि** । अन्ये सबन्धविवक्षायामेवेय षष्ठीति प्रतिपन्ना. सूत्र नाऽऽरभन्ते । एव "वा क्लीबे" इत्यपि ॥ ८४ ॥

**वैकत्र द्वयोः ।** कर्मणीति षष्ठीति च वर्तते । द्वयो कर्मणोरेकत्र षष्ठी वेत्यन्वय । विशेषणसामर्थ्यात् कर्मणीत्यनुवर्तमान विशेष्य सप्तम्येकवचनान्तमपि द्विवचनान्तमिह संबध्यत इत्याह—**द्वयोः कर्मणोरिति** । ते च द्वे कर्मणी **द्विकर्मकेषु धातुष्विति** । अथ कृत इत्यस्यैव षष्ठ्यन्तस्य द्वयोरिति विशेषण कस्मात् न क्रियते ?, तत्रापि हि द्वयो कृदन्तयोरेक यत्कर्म तत्र षष्ठी वा भवतीत्ययमर्थ सपद्यते । तथा च सति अपा स्रष्टा भेत्ता च मैत्र इत्यादावेव विकल्प स्यादिति, नैवम्, एव सति 'कर्मणि कृतो द्वयोश्च वा' इत्येकमेव योग कुर्यात् । तस्मिन्नपि हि सकलार्थस्य सिद्धत्वात् । तस्मात् पृथग्योगात् कर्मण एव विशेषण न कृत इति । एकत्रेति सामान्येन निर्देशात् प्रधानाऽप्रधानकर्मणोरविशेषेण ग्रहणमित्युभयत्रैवोदाहरति—**अजाया नेता स्रुघ्नमित्यादि** । **अन्ये त्विति** । वार्तिककृत, 'गुणकर्मणि वेष्यते' इति वचनात् किन्त्वय विशेषस्वन्मते—प्रधाने तु नित्यैव षष्ठीति एकदेशाऽनुमत्या तन्मतोपन्यास । **उभयत्रापि नित्यमेवेत्यन्ये** इति । आचार्यपाणिनि । ननु 'कर्मणि' इत्यधिकृतत्वादेकशब्दस्य च द्वितीयसव्यपेक्षत्वात् एकस्मिन् कर्मणीत्युक्तेऽपि द्वयो कर्मणोरेकतरस्मिन्निति गम्यत एव किं द्वयोरित्यनेन ?, उच्यते—द्विकर्मकेषु धातुष्वेकस्मिन् कर्मणि षष्ठीविकल्प इत्युच्यमाने 'प्रधानाऽप्रधानसंनिधौ प्रधाने कार्यसप्रत्यय' इति न्यायात् प्रधान एव कर्मणि स्यात् । यद्वा गौणादित्यधिकारात् कर्माऽपेक्षयाऽपि गुणकर्मण्येव स्यात्, अत एव आचार्यशाकटायन "कर्मणि गुण" इति पठति, तस्माद् द्वयोरपि प्रधानाऽप्रधानकर्मणोः पर्यायेण षष्ठीविकल्प इत्येतदर्थं द्वयोरित्युपादानमित्यदोष ॥ ८५ ॥

## कर्तरि ॥ २ । २ । ८६ ॥

कृदन्तस्य कर्तरि गौणात् नाम्नः षष्ठी भवति । तृतीयाऽपवादः । भवत आसिका, भवतः शायिका, भवतः स्वापः, भवत आसना; भवतोऽग्रगामिका । कर्तरीति किम् ?, गृहे शायिका । कृत इत्येव ?, त्वया शय्यते ॥ ८६ ॥

## द्विहेतोरस्त्र्यणकस्य वा ॥ २ । २ । ८७ ॥

स्त्र्यधिकारविहिताभ्यामकारणकाभ्यामन्यस्य द्वयोः कर्तृकर्मषष्ठ्योः प्राप्तिहेतोः कृतः कर्तरि षष्ठी वा भवति । नित्यं प्राप्ते विभाषेयम् । विचित्रा सूत्रस्य कृतिराचार्यस्याऽऽचार्येण वा, साधु खल्विदं शब्दानामनुशासनमाचार्यस्याऽऽचार्येण वा, साध्वी संग्रहण्याः कृतिः क्षमाश्रमणस्य क्षमाश्रमणेन वा, आश्चर्यो गवां दोहोऽगोपालकस्य अगोपालकेन वा, साधु खलु पयसः पानं मैत्रस्य मैत्रेण वा, साध्वी खल्वनेकान्तजयपताकायाः कृतिराचार्यहरिभद्रस्याऽऽचार्यहरिभद्रेण वा । गम्यमानेऽपि कर्मणि भवति–अन्तर्द्धौ येनाऽदर्शनमिच्छति, यस्याऽदर्शनमिच्छतीति वा;–अत्राऽऽत्मन इति कर्म गम्यते । द्विहेतोरित्येकवचननिर्देशः किम् ?, आश्चर्यमोदनस्य नाम पाकोऽतिथीनां च प्रादुर्भाव इति भिन्नकृतोः कर्तृकर्मषष्ठीहेतुत्वमत्रेति न भवति । अस्त्र्यणकस्येति किम् ?, चिकीर्षा मैत्रस्य कथा काव्यानाम्, भेदिका चैत्रस्य[1] काष्ठानाम्; णिंगंतभिदेस्तु भेदिका चैत्रस्य मैत्रस्य काष्ठानाम् । कर्तरीत्येव ?, साधु खल्विदं शब्दानामनुशासनमाचार्यस्याऽऽचार्येण वेत्यत्र शब्दशब्दात् कर्मणि विकल्पो न भवति । अन्ये तु घञल्प्रत्यययोर्द्विहेत्वोः कर्मण्येव षष्ठीमिच्छन्ति न कर्तरि–आश्चर्यो गवां दोहोऽगोपालकेन, आश्चर्यं इन्द्रियाणां जयो यूना ॥ ८७ ॥

## कृत्यस्य वा ॥ २ । २ । ८८ ॥

कृत्यस्य कर्तरि गौणात् नाम्नः षष्ठी वा भवति । भवतः कार्यः कटः, भवता कार्यः कटः; कर्तव्यः, करणीयः, देयः; कृत्यो वा कटः । कर्तरीत्येव ?, गेयो माणवको गाथानाम्, प्रवचनीयो गुरुर्द्वादशाऽङ्गस्य ॥ ८८ ॥

---

**कर्तरि** । कृत इति गौणात् नाम्न षष्ठीति च वर्तते । कृत कर्तरि गौणात् नाम्न षष्ठीत्यन्वयस्तदाह—**कृदन्तस्येत्यादि** । **तृतीयाऽपवाद** इति । कृदन्तप्रयोगकर्तृवाचिन शब्दात् "हेतुकर्तृकरणे०" इति तृतीयायां प्राप्तायां तदपवाद षष्ठीत्यर्थ । **भवत आसिका, भवत शायिकेति** । 'आसिक्' उपवेशने, 'शीङ्' स्वप्ने, आभ्यां "पर्यायाऽर्हणोत्पत्तौ च णक" ५।३।१२०। इति णक । आसितु शयितु च भवत क्रम इत्यर्थं । **स्वाप** इति । "भावाऽकर्त्रो" ५।३।१८। इति घञ् । **आसनेति** । "णिवेत्त्यासश्रन्थघट्टवन्देरन" ५।३।१११। इत्यन । **भवतोऽग्रगामिकेति** । पूर्ववण्णक । **शय्यत** इति । "क्ङिति यि शय्" ४।३।१०५। इति शयादेश ॥ ८६ ॥

**द्विहेतोरस्त्र्यणकस्य वा** । कृत इति कर्तरीति षष्ठीति च वर्तते । अस्त्र्यणकस्य द्विहेतो कृत कर्तरि षष्ठी वेत्यन्वय । द्वयोर्हेतुरिति षष्ठीतत्पुरुष, तच्च कृत इत्यनुवर्तमानस्य विशेषणमित्याह—**द्वयोः–कर्तृकर्मषष्ठ्यो प्राप्तिहेतो कृत** इति । **नित्यं प्राप्ते** इति । "कर्तरि" इति सूत्रेणेति शेष । **विचित्रा सूत्रस्य कृतिराचार्यस्याऽऽचार्येण** वेति । अत्र कृतिरिति "स्त्रियां क्ति" इति भावे क्ति, अस्याश्च कृते सूत्र कर्म आचार्य कर्ता, उभयत्र च "कर्मणि कृत" इति, "कर्तरि" इति च द्वयो षष्ठ्यो प्राप्तिरिति द्विहेतुरय कृत् । एवमुत्तरत्रापि भावनीयम् । **अनुशासनमिति** । भावे करणाऽऽधारे वाऽनट् । **अन्तर्द्धौ येनाऽदर्शनमिच्छतीति** । पञ्चमीविधायक पाणिनिसूत्रमिदम्, अस्य चाऽयमर्थ – अन्तर्द्धौ–अन्तर्द्धिविषये आत्मन कर्मतापन्नस्य येन–उपाध्यायादिना कर्तृभूतेन यददर्शन तदिच्छतीत्यर्थ । **आश्चर्यमोदनस्य पाकोऽतिथीनां च प्रादुर्भाव इतीति** । अत्र पाक इत्येतदपेक्षया ओदनस्येति न तदपेक्ष्यमतिथीनामिति कर्तृत्वेन न ह्यतिथय पक्तार किन्तु प्रादुर्भवितार इति कृतोर्भिन्नत्वात् न भवति । ननु कथमिदमुच्यते ?, घञ एकत्वादिति, नैवम्, धातुभेदात् तस्याऽपि भेद इत्यदोष । **चिकीर्षेति** । करोते सन्नन्तात् "शंसिप्रत्ययात्" ५।३।१०५। इति अप्रत्यये आपि च रूपम् । **भेदिकेति** । पर्यायेण भेदनमिति "पर्यायाऽर्हणो०" इति णक । **णिगन्तभिदेस्त्विति** । भिदेर्ण्यन्तात् पर्यायादिषु णक । अथ कथ **चैत्रस्य मैत्रस्येत्युभयत्र** कर्तरि षष्ठी?, यतोऽत्र प्रयोजककर्ता णिगर्थस्य प्राधान्यात् प्रधान, प्रयोज्यकर्ता तु प्रकृत्यर्थस्याऽप्राधान्यादप्रधान, तत्र प्रधानाऽप्रधानसन्निधौ प्रधानादेव षष्ठी नाऽप्रधानादिति चेत्, सत्यम्, तृतीयावत् कर्तृमात्रे षष्ठीत्याश्रयणात् भिन्नशब्दवाच्ययो प्रधानाऽप्रधानयो कर्त्रोरेकशब्दवाच्यताया अभावात् विरोधाभावात् षष्ठी सिध्यतीत्यदोष । **अन्य** इति । ललितस्वभाव इत्यर्थ । काशिकाकारस्तु स्त्र्यधिकारविहितयोरणकयो प्रतिषेधादन्यस्मिन्नपि स्त्रीप्रत्यय एव षष्ठीमिच्छति । अपरे त्वकाकारयोर्भावाभिधायकयो कृतोरुपयोगात् ताभ्यामन्यस्मिन्नपि भावाभिधायक एव षष्ठीमिच्छन्ति ॥ ८७ ॥

**कृत्यस्य वा** । कर्तरीति गौणात् नाम्न षष्ठीति च वर्तते । कृत्यस्य कर्तरि गौणात् नाम्न षष्ठी वेत्यन्वयस्तदाह—**कृत्यस्येत्यादि** । **कार्य** इति । "ऋवर्णव्यञ्जनाद् घ्यण्" ५।१।१७। इति घ्यण् । **कर्तव्यः, करणीय** इति । "तव्यानीयौ" ५।१।२७। इति तव्यानीयौ । **देय** इति । "य एचात" इति यप्रत्यये आकारस्य च एत्वम् । **कृत्य** इति । "कृवृषिमृजि०" ५।१।४२। इति क्यप्, "ह्रस्वस्य त पित्कृति" ४।४।११३। इति तोऽन्त । **गेयो माणवको गाथानामिति** । गायतीति ये–गेय "भव्यगेयजन्य०" ५।१।७। इति कर्तरि निपात, गीयमानत्वाच्च गाथानां कर्मत्वमत कर्तरीत्यनुवर्तमानात् कर्मणि षष्ठीविकल्पो न भवति । एव **प्रवचनीय** इत्यत्राऽपि द्रष्टव्यम् ॥ ८८ ॥

---

१ कर्मण ° पु० । २ °इति XXग° पु० । ३ XX का° म० म० । ४ °स मैत्रस्य का° म० म० । ५ °णिगतभिदेस्तु भेदिका म०म० । ५ °कार्य XX कर्त° पु० ।

## कर्मणि कृतः ॥ २ । २ । ८३ ॥

कृतः—कृदन्तस्य संबन्धिनि कर्मणि गौणात् नाम्नः षष्ठी भवति । द्वितीयाऽपवादः । अपां स्रष्टा, पुरां भेत्ता, वर्षशतस्य पूरकः, पुत्रपौत्राणां दर्शकः, यवानां लावकः, ओदनस्य भोजकः, विश्वस्य ज्ञाता, तीर्थस्य कर्त्ता, उदकस्य पिवः, ग्रामस्य गमनम्; गवां दोहः । कर्मणीति किम् ?, शस्त्रेण भेत्ता । क्रियाविशेषणस्याऽपि कर्मत्वाऽभावात् न भवति–साधु पक्ता, स्तोकं पक्ता । कृत इति किम् ?, कटं करोति, कृतपूर्वी कटम्, भुक्तपूर्वी ओदनम्; त्यादितद्धितयोः कर्मणि मा भूत् । कथम् अर्थस्य त्यागी ?, सुखस्य भोगी ?, विषयाणां जयी ?, वीराणां प्रसविनीति ?,—अत्र ताच्छीलिकयोर्घिन्-णिनोः कर्मेति भवति ॥ ८३ ॥

## द्विषो वाऽतृशः ॥ २ । २ । ८४ ॥

अतृश्प्रत्ययान्तस्य द्विषः कर्मणि गौणात् नाम्नः षष्ठी वा भवति । चौरस्य द्विषन्, चौरं द्विषन्; "तृन्नु०" आदिसूत्रेण प्रतिषेधे प्राप्ते विकल्पोऽयम् ॥ ८४ ॥

## वैकत्र द्वयोः ॥ २ । २ । ८५ ॥

द्विकर्मकेषु धातुषु द्वयोः कर्मणोरेकत्रैकतरस्मिन् वा षष्ठी भवति । अन्यत्र पूर्वेण नित्यमेव । अजाया नेता स्रुघ्नम्, अजाया नेता स्रुघ्नस्य; अथवा–अजां नेता स्रुघ्नस्य, अजाया नेता स्रुघ्नस्य; पयसो दोहको गाम्, पयसो दोहको गोः; यदि वा गोर्दोहकः पयः, गोर्दोहकः पयसः । अन्ये तु नीवह्यादीनां द्विकर्मकाणां गौणे कर्मणि, दुहादीनां तु प्रधाने विकल्पमिच्छन्ति, उभयत्राऽपि नित्यमेवेत्यन्ये ॥ ८५ ॥

---

कर्मणि कृतः । गौणात् नाम्न षष्ठीति वर्तते । कृत कर्मणि गौणात् नाम्न षष्ठीत्यन्वयस्तदाह—कृतः–कृदन्तस्येत्यादि । "कर्मणि" इति सामान्येन द्वितीयाविधानात् कृदन्तकर्मण्यपि द्वितीयाप्राप्तौ तदपवादस्तत्र षष्ठीत्याह—द्वितीयाऽपवाद इति । अपां स्रष्टेत्यादीनि । एतेषु "णकतृचौ" इति तृच्णकौ । 'पां' पाने इत्यत "घ्राध्मापाट्धेदृश श" ५।१।५८। इति शे, "श्रौतिकृवुधिवु०" ४।२।१०८। इति पिवादेशे—पिवः । गमेर्भावेऽनटि—गमनम् । एव दुहेर्घञि लघूपान्त्यगुणे—दोहः । कृत इति किमिति । एव मन्यते–कर्म कारक, तच्च क्रियामन्तरेण न संभवति, क्रियाया हि कारक भवति । सा च वाचक धातु प्रत्ययसहितमाक्षिपति, धातोश्च द्वये प्रत्यया विधीयन्ते त्यादय कृतश्च । तत्र "तद्वेत्त्यधीते" इति ज्ञापकात् त्यादिप्रयोगे द्वितीयाविधानात् कृत्प्रयोग एव षष्ठी भविष्यतीति व्यावर्त्त्यासमवादिहानर्थक कृद्ग्रहणम्, नैवम्; कृद्ग्रहणमन्तरेण तद्धितप्रयोगेऽपि यत्कर्म तत्र षष्ठी स्यात् तत्र च मा भूदित्येवमर्थं कृद्ग्रहणमित्युदाहरति—कृतपूर्वीत्यादि । सति त्वेवमर्थे कृद्ग्रहणे त्यादिव्यावृत्तिरपि प्रयोजनम् । कृत पूर्वमनेन भुक्त पूर्वमनेनेति च "पूर्वमनेन सादेश्चेन्" ७।१।१६७। इत्यनेन कर्त्रर्थे इन्प्रत्यय, तेन कृतपूर्वीति पूर्वं कृतवानित्यर्थ । तत्र यथा चित्रगुरित्यादौ बहुव्रीहिणा स्वामिसामान्येऽभिहिते विशेषाभिधानाय चैत्रादि प्रयुज्यते, तथाऽत्रापि सामान्यकर्मण्यभिहिते विशिष्टकर्माऽभिधानाय कटादे केनाऽनभिहितस्य प्रयोग, सामान्येन व्यवहाराऽसंभवात् विशेषेणाऽवश्य निर्वाह कार्य । एतद्विषयस्तु विचार "कर्मणि" इत्यत्र सूत्रे कृत इति नेह प्रतन्यते । कथमिति । त्यागादिभ्यस्त्यागोऽस्यास्तीतीनि तद्धितप्रयोगेऽर्थस्येत्यादि कर्मणि षष्ठी न प्राप्नोतीत्याशङ्कार्थ । परिहरति—अत्र ताच्छीलिकयोरित्यादि । त्यजतीत्येवशील इत्यादिविग्रहेषु "युजभुजभजत्यज०" ५।२।५०। इति घिनणि—त्यागी, भोगी । "जीणृदृक्षि०" ५।२।७२। इति, "प्रात्सूजोरिन्" ५।२।७१। इति, चेनि—जयी, प्रसविनी ॥ ८३ ॥

द्विषो वाऽतृशः । कर्मणीति गौणात् नाम्न षष्ठीति च वर्तते । अतृशो द्विष कर्मणि गौणात् नाम्न षष्ठी वेत्यन्वयस्तदाह—अतृश्-प्रत्ययान्तस्येत्यादि । चौरस्य द्विषन्निति । 'द्विषीं' अप्रीतावित्यत "सुगृद्विषार्ह सत्रिशत्रुस्तुत्ये" ५।२।२६। इत्यतृश्, तद्योगे च कर्मणि षष्ठीप्रतिषेधादनेन विकल्पो विधीयत इत्याह—"तृन्नु०" आदि सूत्रेणेत्यादि । अन्ये संबन्धविवक्षायामेवेय षष्ठीति प्रतियन्त सूत्र नाऽऽरभन्ते । एव "वा क्लीबे" इत्यपि ॥ ८४ ॥

वैकत्र द्वयोः । कर्मणीति षष्ठीति च वर्तते । द्वयो कर्मणोरेकत्र षष्ठी वेत्यन्वय । विशेषणसामर्थ्यात् कर्मणीत्यनुवर्तमान विशेष्य सप्तम्येकवचनान्तमपि द्विवचनान्तमिह सबन्ध्यत इत्याह—द्वयोः कर्मणोरिति । ते च द्वे कर्मणी द्विकर्मकेषु धातुष्विति । अथ कृत इत्यस्यैव षष्ठ्यन्तस्य द्वयोरिति विशेषण कस्मात् न क्रियते ?, तत्रापि हि द्वयो कृदन्तयोरेक यत्कर्म तत्र षष्ठी वा भवतीत्ययमर्थं सपद्यते । तथा च सति अपा स्रष्टा भेत्ता च मैत्र इत्यादावेव विकल्प स्यादिति, नैवम्, एव सति 'कर्मणि कृतो द्वयोश्च वा' इत्येकमेव योग कुर्यात् । तस्मिन्नपि हि सकलार्थस्य सिद्धत्वात् । तस्मात् पृथग्योगात् कर्मण एव विशेषण न कृत इति । एकत्रेति सामान्येन निर्देशात् प्रधानाऽप्रधानकर्मणोरविशेषेण ग्रहणमित्युभयत्रैवोदाहरति—अजाया नेता स्रुघ्नमित्यादि । अन्ये त्विति । वार्तिककृत, 'गुणकर्मणि चेष्यते' इति वचनात् किन्त्वय विशेष-स्वन्मते–प्रधाने तु नित्यैव षष्ठीति एकदेशाऽनुमत्या तन्मतोपन्यास । उभयत्रापि नित्यमेवेत्यन्ये इति । आचार्यपाणिनि । ननु 'कर्मणि' इत्यधिकृतत्वादेकशब्दस्य च द्वितीयसव्यपेक्षत्वात् एकस्मिन् कर्मणीत्युक्तेऽपि द्वयो कर्मणोरेकतरस्मिन्निति गम्यत एव किं द्वयोरित्यनेन ?, उच्यते–द्विकर्मकेषु धातुष्वेकस्मिन् कर्मणि षष्ठीविकल्प इत्युच्यमाने 'प्रधानाऽप्रधानसंनिधौ प्रधाने कार्यसंप्रत्यय' इति न्यायात् प्रधान एव कर्मणि स्यात् । यद्वा गौणादित्यधिकारात् कर्माऽपेक्षयाऽपि गुणकर्मण्येव स्यात्, अत एव आचार्यशाकटायन "कर्मणि गुण" इति पठति, तस्माद् द्वयोरपि प्रधानाऽप्रधानकर्मणो पर्यायेण षष्ठीविकल्प इत्येतदर्थं द्वयोरित्युपादानमित्यदोष ॥ ८५ ॥

## कर्तरि ॥ २ । २ । ८६ ॥

कृदन्तस्य कर्तरि गौणात् नाम्नः षष्ठी भवति । तृतीयाऽपवादः । भवत आसिका, भवतः शायिका, भवतः स्वापः, भवत आसना, भवतोऽग्रगामिका । कर्तरीति किम् ?, गृहे शायिका । कृत इत्येव ?, त्वया शय्यते ॥ ८६ ॥

## द्विहेतोरस्त्र्यणकस्य वा ॥ २ । २ । ८७ ॥

स्त्र्यधिकारविहिताभ्यामकारणकाभ्यामन्यस्य द्वयोः कर्तृकर्मषष्ठ्योः प्राप्तिहेतोः कृतः कर्तरि षष्ठी वा भवति । नित्यं प्राप्ते विभाषेयम् । विचित्रा सूत्रस्य कृतिराचार्यस्याऽऽचार्येण वा, साधु खल्विदं शब्दानामनुशासनमाचार्यस्याऽऽचार्येण वा, साध्वी संग्रहण्याः कृतिः क्षमाश्रमणस्य क्षमाश्रमणेन वा, आश्चर्यो गवां दोहोऽगोपालकस्य अगोपालकेन वा, साधु खलु पयसः पान मैत्रस्य मैत्रेण वा, साध्वी खल्वनेकान्तजयपताकायाः कृतिराचार्यहरिभद्रस्याऽऽचार्यहरिभद्रेण वा । गम्यमानेऽपि कर्मणि भवति—अन्तर्द्धौ येनाऽदर्शनमिच्छति, यस्याऽदर्शनमिच्छतीति वा;—अत्राऽऽत्मन इति कर्म गम्यते । द्विहेतोरित्येकवचननिर्देशः किम् ?, आश्चर्यमोदनस्य नाम पाकोऽतिथीनां च प्रादुर्भाव इति भिन्नकृतोः कर्तृकर्मषष्ठीहेतुत्वमत्रेति न भवति । अस्त्र्यणकस्येति किम् ?, चिकीर्षा मैत्रस्य कथा काव्यानाम्, भेदिका चैत्रस्य काष्ठानाम्; णिगंतभिदेस्तु भेदिका चैत्रस्य मैत्रस्य काष्ठानाम् । कर्तरीत्येव ?, साधु खल्विदं शब्दानामनुशासनमाचार्यस्याऽऽचार्येण वेत्यत्र शब्दशब्दात् कर्मणि विकल्पो न भवति । अन्ये तु घञलप्रत्यययोर्द्विहेत्वोः कर्मण्येव षष्ठीमिच्छन्ति न कर्तरि—आश्चर्यो गवां दोहोऽगोपालकेन, आश्चर्यं इन्द्रियाणां जयो यूना ॥ ८७ ॥

## कृत्यस्य वा ॥ २ । २ । ८८ ॥

कृत्यस्य कर्तरि गौणात् नाम्नः षष्ठी वा भवति । भवतः कार्यः कटः, भवता कार्यः कटः; कर्तव्यः, करणीयः, देयः; कृत्यो वा कटः । कर्तरीत्येव ?, गेयो माणवको गाथानाम्, प्रवचनीयो गुरुर्द्वादशाङ्गस्य ॥ ८८ ॥

---

**कर्तरि** । कृत इति गौणात् नाम्न षष्ठीति च वर्तते । कृत कर्तरि गौणात् नाम्न षष्ठीत्यन्वयस्तदाह—**कृदन्तस्येत्यादि** । **तृतीयाऽपवाद** इति । कृदन्तप्रयोगकर्तृवाचिन शब्दात् "हेतुकर्तृकरणे०" इति तृतीयायां प्राप्तायां तदपवाद षष्ठीत्यर्थ । **भवत आसिका, भवतः शायिकेति** । 'आसिक्' उपवेशने, 'शीङ्' स्वप्ने, आभ्यां "पर्यायाऽर्हणोत्पत्तौ च णक" ५।३।१२०। इति णक । आसितु शयितु च भवत क्रम इत्यर्थ । **स्वाप** इति । "भावाऽकर्त्रो" ५।३।१८। इति घञ् । **आसनेति** । "णिवेत्त्यासश्रन्थघट्टवन्देरन" ५।३।१११। इत्यन । **भवतोऽग्रगामिकेति** । पूर्ववण्णक । **शय्यत** इति । "क्ङिति यि शय्" ४।३।१०५। इति शयादेश ॥ ८६ ॥

**द्विहेतोरस्त्र्यणकस्य वा** । कृत इति कर्तरीति षष्ठीति च वर्तते । अस्त्र्यणकस्य द्विहेतो कृत कर्तरि षष्ठी वेत्यन्वय । द्वयोर्हेतुरिति षष्ठीतत्पुरुष , तच्च कृत इत्यनुवर्तमानस्य विशेषणमित्याह—**द्वयोः-कर्तृकर्मषष्ठ्यो· प्राप्तिहेतोः कृत** इति । **नित्यं प्राप्ते** इति । "कर्तरि" इति सूत्रेणेति शेष । **विचित्रा सूत्रस्य कृतिराचार्यस्याऽऽचार्येण वेति** । अत्र कृतिरिति "स्त्रियां क्ति" इति भावे क्ति , अस्याश्च कृते· सूत्र कर्म आचार्य कर्ता, उभयत्र च "कर्मणि कृत" इति, "कर्तरि" इति च द्वयो षष्ठ्यो प्राप्तिरिति द्विहेतुरय कृत् । एवमुत्तरत्रापि भावनीयम् । **अनुशासनमिति** । भावे करणाऽऽधारे वाऽनट् । **अन्तर्द्धौ येनाऽदर्शनमिच्छतीति** । पञ्चमीविधायक पाणिनिसूत्रमिदम्, अस्य चाऽयमर्थ —अन्तर्द्धौ—अन्तर्द्धिविषये आत्मन कर्मतापन्नस्य येन—उपाध्यायादिना कर्तृभूतेन यददर्शन तदिच्छतीत्यर्थ । **आश्चर्यमोदनस्य पाकोऽतिथीनां च प्रादुर्भाव इतीति** । अत्र पाक इत्येतदपेक्षया ओदनस्येति न तदपेक्ष्यमतिथीनामिति कर्तृत्वेन न ह्यतिथय पचार किन्तु प्रादुर्भवितार इति कृतोभिन्नत्वात् न भवति । ननु कथमिदमुच्यते ?, घञ एकत्वादिति,नैवम्, धातुभेदात् तस्याऽपि भेद इत्यदोष । **चिकीर्षेति** । करोते सन्नन्तात् "शसिप्रत्ययात्" ५।३।१०५। इति अप्रत्यये आपि च रूपम् । **भेदिकेति** । पर्यायेण भेदनमिति "पर्यायाऽर्हणो०" इति णक । **णिगन्तभिदेस्त्विति** । भिदेर्ण्यन्तात् पर्यायादिषु णक । अथ कथं **चैत्रस्य मैत्रस्येत्युभयत्र** कर्तरि षष्ठी?, यतोऽत्र प्रयोजककर्ता णिगर्थस्य प्राधान्यात् प्रधान, प्रयोज्यकर्ता तु प्रकृत्यर्थस्याऽप्राधान्यादप्रधान, तत्र प्रधानाऽप्रधानसन्निधौ प्रधानादेव षष्ठी नाऽप्रधानादिति चेत्, सत्यम्, तृतीयावत् कर्तृमात्रे षष्ठीत्याश्रयणात् भिन्नशब्दवाच्ययो प्रधानाऽप्रधानयो कर्त्रोरेकशब्दवाच्यताया अभावात् विरोधाभावात् षष्ठी सिध्यतीत्यदोष । **अन्य** इति । ललितस्वभाव इत्यर्थ । काशिकाकारस्तु स्त्र्यधिकारविहितयोरणकयो प्रतिषेधादन्यस्मिन्नपि स्त्रीप्रत्यय एव षष्ठीमिच्छति । अपरे त्वकाकारयोर्भावाभिधायकयो कृतोरुपयोगात् ताभ्यामन्यस्मिन्नपि भावाभिधायक एव षष्ठीमिच्छन्ति ॥ ८७ ॥

**कृत्यस्य वा** । कर्तरीति गौणात् नाम्न षष्ठीति च वर्तते । कृत्यस्य कर्तरि गौणात् नाम्न षष्ठी वेत्यन्वयस्तदाह—**कृत्यस्येत्यादि** । **कार्यं** इति । "ऋवर्णव्यञ्जनाद् घ्यण्" ५।१।१७। इति घ्यण् । **कर्तव्यः, करणीय** इति । "तव्यानीयौ" ५।१।२७। इति तव्यानीयौ । **देय** इति । "य एचात" इति यप्रत्यये आकारस्य च एत्वम् । **कृत्य** इति । "कृवृषिमृजि०" ५।१।४२। इति क्यप्, "ह्रस्वस्य त पित्कृति" ४।४।११३। इति तोऽन्त· । **गेयो माणवको गाथानामिति** । गायतीति ये—गेय "भव्यगेयजन्य०" ५।१।७। इति कर्तरि निपात , गीयमानत्वाच्च गाथाना कर्मत्वमत कर्तरीत्यनुवर्तमानात् कर्मणि षष्ठीविकल्पो न भवति । एव **प्रवचनीय** इत्यत्राऽपि द्रष्टव्यम् ॥ ८८ ॥

---

१ कर्मण ° पु० । २ °इति XXग° पु० । ३ X X का° म० म० । ४ °स मैत्रस्य का° म० म० । ५ °णिगतमिदेस्तु भेदिका म०म० । ५ °कार्ये X X कर्त° पु० ।

## नोभयोर्हेतोः ॥ २ । २ । ८९ ॥

उभयोः कर्तृकर्मणोः षष्ठीहेतोः कृत्यस्य सम्बन्धिनोरुभयोरेव षष्ठी न भवति । नेतव्या ग्राममजा मैत्रेण, कष्टव्या ग्रामं शाखा चैत्रेण; जेतव्यः शतं मैत्रश्चैत्रेण । उभयोर्हेतोरिति किम् ?, एकैकहेतोर्मा भूत्—उपस्थानीयः पुत्रः पितुः, उपस्थानीयः पिता पुत्रस्य ॥ ८९ ॥

## तृन्नुदन्ताऽव्ययक्वस्वानाऽतृश्शतृङिणकचूखलर्थस्य ॥ २ । २ । ९० ॥

तृनः उदन्तस्य अव्ययस्य क्वसोः आनस्य अतृशः शतुः ङेः णकचः खलर्थस्य च कृतः संबन्धिनोः कर्मकर्त्रोः षष्ठी न भवति । तृन्—वदिता जनाऽपवादान्, उदन्त—कन्यामलंकरिष्णुः, रिपून् जिष्णुः, शरान् क्षिप्णुः, ओदनं बुभुक्षुः, देवान् वन्दारुः, धारुर्वत्सो मातरम्, श्रद्धालुस्तत्त्वम्, अव्यय—कटं कृत्वा, पयः पायंपायं व्रजति, ओदनं भोक्तुं व्रजति; क्वसु—ओदनं पेचिवान्, तत्त्वं विद्वान्; आनेति उत्सृष्टाऽनुबन्धनिर्देशात् कानशानाऽऽनशां ग्रहणम्, (कान—)कटं चक्राणः, वचनमनूचानः; शानः—मलयं पवमानः, कतीह कवचमुद्वहमानाः, कतीह शत्रून् निघ्नानाः; कतीह वपुर्भूषयमाणाः; आनश्—ओदनं पचमानः, चैत्रेण पच्यमानः; कटं करिष्यमाणः; अतृश्—अधीयंस्तत्त्वार्थम्, धारयन्नाचाराङ्गम्, शतृ—कटं कुर्वन्, कटं करिष्यन्, ङि—परीषहान् सासहिः, कटं चक्रिः; दधिश्रितम्, णकच्—एधानाहारको व्रजति, कटं कारको व्रजति; चिन्निर्देशात् णकस्य न भवति—वर्षशतस्य पूरकः, पुत्रपौत्रस्य दर्शकः; खलर्थः—ईषत्करः कटो भवता, सुज्ञानं तत्त्वं भवता ॥ ९० ॥

## क्तयोरसदाधारे ॥ २ । २ । ९१ ॥

सतो वर्तमानादाधाराच्चान्यस्मिन्नर्थे विहितौ यौ क्तौ—क्तक्तवतू तत्सम्बन्धिनोः कर्मकर्त्रोः षष्ठी न भवति । कटः

---

**नोभयोर्हेतोः** । कृत्यस्येति षष्ठीति च वर्तते । उभयोर्हेतोः कृत्यस्य उभयोरेव षष्ठी नेत्यन्वयः । उभयोरिति सप्तमीद्विवचनान्तं प्रकृतयोः कर्तृकर्मणोर्विशेषणमित्याह—**उभयोः कर्तृकर्मणोरिति** । प्राप्त्यनुवादेन प्रतिषेधविषयं दर्शयति—**उभयोरेवेति** । द्विकर्मकप्रयोगेऽयं प्रतिषेधो द्रष्टव्यः, तत्रैवोभयप्राप्तिसंभवात् । **नेतव्या, कष्टव्या, जेतव्यः** इति । नयतेः कर्षतेर्जयतेश्च "तव्यानीयौ" इति प्रधानकर्मणि तव्यः । ननु द्विकर्मकेषु धातुष्वयं प्रतिषेधः, तत्र प्रधानकर्मणः कृत्येनैवाऽभिहितत्वात् कर्तर्येव प्रतिषेधो न्याय्य इत्युभयग्रहणमतिरिच्यते, नैवम्, द्वितीयाबाधिका हि कृत्प्रयोगे षष्ठी विधीयते द्वितीया चाऽप्रधानादस्तीति तत्र षष्ठी स्यात् । न च 'प्रधानकर्मण्याख्येये त्यादीनाहुर्द्विकर्मणाम्' इत्यत्रादिशब्देन षष्ठ्यपि गृह्यत इति वाच्यम्, तस्य व्यवस्थावाचित्वात् कृत्यक्तखलर्थानामेव ग्राहकत्वादिति । किं च 'द्विकर्मणां धातूनां प्रधानकर्मणि तिवादय उत्पद्यन्ते' इति न्यायोऽयं, यतो येनैकेन शब्देनाजाग्रामलक्षणयोर्द्वयोः कर्मणोः सन्निपातितयोरेकतरकर्माभिधानीयं न तु द्वे अपि कर्मणी, अजावत् ग्रामस्यानिनीषितत्वात् तथाप्रतीत्यभावाच्च । न ह्यजा ग्रामो नीयते इत्युक्ते अजा ग्रामं नीयते इतिवद्गुणमुख्यभावेन प्रतीतिरस्ति किन्तु तौ द्वावपि किमप्यन्यत्र नीयेते इत्यर्थान्तरं प्रतीयेत इति तदत्र कतरत् कर्मानेनोच्यतामिति विरोधात् प्रधानकर्मणि त्यादय उत्पद्यन्त इत्युच्यते, तेनोक्तं 'प्रधानकर्मण्याख्येये त्यादीनाहुर्द्विकर्मणामि'ति । षष्ठी तु भिन्नाभ्यामाभ्यां कर्मवाचिभ्यामुत्पद्यमाना भिन्नैवोच्यत इति विरोधाभावात् कथमसौ प्रधानादेव स्यान्नाप्रधानादित्यविशेषेणैवानयोरुत्पत्तव्यम् । तत्रापि तत्र भवद्भुजगविभुना षष्ठीविधावेव 'प्रधानाद्धि षष्ठीष्यते' इतीष्टिरारब्धा । यदेव कथमुक्तं—दुहादीनामप्रधाने कर्मणि तिवादय इति ?, तत्रापि पूर्वं प्रवृत्तिविषयत्वेनान्तरङ्गत्वाद् गवादेरेव प्राधान्यं व्यवहारापेक्षया तु पयःप्रभृतेरिति ॥८९॥

**तृन्नुदन्ताऽव्ययक्वस्वानाऽतृश्शतृङिणकचूखलर्थस्य** । अत्र नेति उभयोरिति षष्ठीति च वर्तते । तृन्नुदन्ताऽव्ययक्वस्वानाऽतृश्शतृङिणकच्खलर्थस्य कृत उभयोः षष्ठी नेत्यन्वयः । "कर्मणि कृतः" इति, "कर्तरि" इति च प्राप्तायाः षष्ठ्याः प्रतिषेधार्थमिदम् । वदेः "तृन् शीलधर्मसाधुषु" ५।२।२७। इति तृनि—**वदिता** । अलंपूर्वात् करोतेः "भ्राज्यलंकृग्०" ५।२।२८। इतीष्णौ—**अलंकरिष्णुः** । जयतेः—"भूजेः ष्णुक्" इति ष्णुकि—**जिष्णुः** । क्षिपतेः "त्रसिगृधिधृषि०" ५।२।३२। इति क्नौ णत्वे च—**क्षिप्णुः** । बुभुक्षेः "सन्भिक्षाशंसेरुः" ५।२।३३। इत्युप्रत्यये—**बुभुक्षुः** । वन्देः "शॄवन्देरारुः" ५।२।३५। इत्यारौ—**वन्दारुः** । धयतेः "दाधेट्सिशदसदो रुः" ५।२।३६। इति रौ—**धारुः** । श्रत्पूर्वात् दधातेः "शीङ्श्रद्धा०" ५।२।३७। इत्यालौ—**श्रद्धालुः** । कृत्वेति । "प्राक्काले०" इति क्त्वाप्रत्ययः । पिबतेः "ख्णम् चाऽऽभीक्ष्ण्ये" ५।४।४८। इति ख्णमि द्वित्वे—**पायंपायमिति** । भुजेः "क्रियायां क्रियार्थायां०" ५।३।१३। इति तुमि—**भोक्तुम्** । पचेः "तत्र क्वसुकानौ तद्वत्" ५।२।२। इति क्वसौ, "अनादेशादेः०" इत्येत्वे द्वित्वाभावे "घसेकस्वरात् क्वसोः" ४।४।८२। इति इटि—**पेचिवान्** । कानादीनां सर्वेषामनुबन्धवतामप्यानेति प्रयोगोपयोगिस्वरूपनिर्देशात् सर्वेऽपि तद्रूपा गृह्यन्त इत्याह—**आनेतीत्यादि** । करोतेः "तत्र क्वसु कानौ०" इति कानप्रत्यये द्वित्वादौ—**चक्राणः** । अनुपूर्वात् वचेः "वेयिवदनाश्वदनूचानम्" ५।२।३। इति निपातनात्—**अनूचानः** । पवतेः "पूङ्यजः शानः" ५।२।२३। इति शाने—**पवमानः** । उत्पूर्वात् वहेः "वयः शक्तिशीले" ५।२।२४। इति शाने—**उद्वहमानाः** । एवं **निघ्नानाः, भूषयमाणा** इत्यपि । **पचमान** इति । "शत्रानशा०" ५।२।२०। इत्यानश्, **करिष्यमाण** इति—'एष्यति तु सस्यौ' इति स्यसहितः । अधिपूर्वादिङो धारयतेश्च "धारीङोऽकृच्छ्रेऽतृश्" ५।२।२५। इत्यतृशि—**अधीयन्, धारयन्निति** । **कुर्वन्, करिष्यन्** इति । "शत्रानशा०" इति शतृप्रत्ययो यथायोगं स्यसहितश्च । सासह्यतेः "क्रौ सासहिवावहि०" ५।२।३८। इति कौ—**सासहिः** । एवं करोतेर्दधातेश्च "सस्रिचक्रिदधिजज्ञिनेमि" ५।२।३९। इति—**चक्रिः, दधिः** । आङ्पूर्वात् हरतेः "क्रियायां क्रियार्थायां०" इति णके—**आहारकः** । एवं **कारकः** । **चिन्निर्देशादिति** । वर्षशतस्य पूरक इति "णकतृचौ" इति णकः, णकजितिनिर्देशादत्र षष्ठीप्रतिषेधो न भवति । **ईषत्कर** इति । "दुःस्वीषतः०" ५।३।१३९। इति खल् । **सुज्ञानमिति** । "शासूयुधि०" ५।३।१४१। इत्यनः ॥ ९० ॥ सत इत्यस्य पर्यायोऽयं—**वर्तमा-**

**क्तयोरसदाधारे** । उभयोरिति षष्ठीति नेति च वर्तते । असदाधारे क्तयोरुभयोः षष्ठी नेत्यन्वयः । तत्र सति प्रत्ययविधिरेव नास्ति

**नादिति** । ननु सन् धात्वर्थः, तत्र धातुरेव वर्तते, कृत्प्रत्ययस्तु "कर्तरि" इत्यादिना कारके भावे च विधीयते ।

कृतो मैत्रेण, कट कृतवान्; गतो ग्रामं चैत्रः, ग्रामं गतवान् । असदाधार इति किम्?, राज्ञां ज्ञातः, राज्ञां बुद्धः, राज्ञां मतः, राज्ञामिष्टः, राज्ञां पूजितः, कान्तो हरिश्चन्द्र इव प्रजानाम्; "ज्ञानेच्छा०" ॥५।२।९२॥ इत्यादिसूत्रेण सत्यत्र क्तः । कथं शीलितो मैत्रेण?, रक्षितश्चैत्रेण?, भूतेऽयं क्तः, वर्तमानताप्रतीतिस्तु प्रकरणादिनेति । अन्ये तु ज्ञानेच्छार्चार्थञ्जी-च्छील्यादिभ्योऽतीते क्त नेच्छन्ति, तन्मते—अपशब्दावेतौ । आधारे—इदमोदनस्य भुक्तम्, इद सक्तूनां पीतम्, इदमहेः सृप्तम्, इदमेषामासितम्; "अद्यर्थाच्चाऽऽधारे" ॥ ५ । १ । १२ ॥ इति क्तः ॥ ९१ ॥

## वा क्लीबे ॥ २ । २ । ९२ ॥

क्लीबे यो विहितः क्तस्तस्य कर्तरि षष्ठी वा न भवति । छात्रस्य हसितम्, छात्रेण हसितम्; मयूरस्य नृत्तम्, मयूरेण नृत्तम्; कोकिलस्य व्याहृतम्, कोकिलेन व्याहृतम्; इहाहेः सृप्तम्, इहाऽहिना सृप्तम् । क्लीब इति किम्?, चैत्रेण कृतम्—"क्तक्तवतू" इति भावे क्तः । पूर्वेण प्रतिषेधे प्राप्ते विकल्पोऽयम् ॥ ९२ ॥

## अकमेरुकस्य ॥ २ । २ । ९३ ॥

कमेरन्यस्योकप्रत्ययान्तस्य कर्मणि षष्ठी न भवति । आगामुकं वाराणसीं रक्ष आहुः, भोगानभिलाषुकः । अकमे-रिति किम्?, दास्याः कामुकः ॥ ९३ ॥

## एष्यदृणेनः ॥ २ । २ । ९४ ॥

एष्यत्यर्थे ऋणे च विहितस्येनः कर्मणि षष्ठी न भवति । इन इति इन्णिनोर्ग्रहणम् । ग्रामं गमी—औणादिक इन्, ग्राममागामी—औणादिको णिन्; शतं दायी, सहस्रं दायी, कारी मेऽसि कटम्, हारी मेऽसि भारम्,—एष्वाधमर्ण्ये णिन् । एष्यदृणेति किम्?, अवश्यंकारी कटस्य, साधुदायी वित्तस्य ॥ ९४ ॥

---

कथ प्रतिषेध ?—सतोऽन्यस्मिन्नर्थे इति[1], नैष दोष, सदर्थसहचारी प्रत्ययार्थोऽपि सन्नित्युच्यते । यद्वा धात्वर्थोऽपि सन्निति प्रत्ययत एव विज्ञायते, न हि धातुत क्रियालक्षणो धात्वर्थो भूतो भवन् भविष्यन्निति वा ज्ञातु शक्य, धातुर्हि क्रियामात्रमाह न त्वस्य विशेषम् । स तु प्रत्ययादेव प्रतीयत इति कर्त्रादिकारकवृत्तिरपि प्रत्यय सतीति विज्ञायते । क्रियते स्मेति कर्मणि क्ते—कृतः । करोति स्मेति कर्तरि क्तवतौ—कृतवान् । गत इति । गच्छति स्मेति "गत्यर्थोऽकर्मक०" इति कर्तरि क्त । राज्ञां ज्ञात इत्यादि । कर्तरि षष्ठीयं, "ज्ञानेच्छाऽर्चार्थञ्जीच्छील्यादिभ्य क्त" ५।२।९२। इति वर्तमाने क्त । अथ केन सूत्रेण क्तो भवतीत्याह—ज्ञानेच्छेत्यादि । भूतकालविहितस्य च क्तस्य वर्तमानकाले विहित क्त सामान्य-भावेन बाधक इति स्थितम् । कथमिति । शीलितो मैत्रेणेत्यादावपि "ज्ञानेच्छाऽर्चा०" इत्यनेन क्त, तथा च वर्तमानप्रतीतिरत्र कस्मात् न भवतीति शङ्कार्थ । परिहरति—भूतेऽयं क्त इति । अयमर्थ—वर्तमानायामपि क्रियायां केचित् क्रियाभागा गता भवन्ति, तत्र "क्तक्तवतू" इति भूतेऽय क्त । यद्येव कथमत्र वर्तमानताप्रतीति[2], अत्रापि शील्यत इत्याह—वर्तमानतेत्यादि । आदिशब्दादर्थप्रकरणशब्दान्तरसन्निध्यादि-परिग्रह । अन्ये इति । पूर्वे इत्यर्थ । इदमोदनस्य भुक्तमित्यादि । "अद्यर्थाच्चाऽऽधारे" ५।१।१२। इति क्ते ओदनस्येति, सक्तूनामिति च "कर्मणि कृतः" इति कर्मणि षष्ठी । अहेरेषामिति च कर्तरि षष्ठी । सदाधारादन्यत्र चातु शब्द्य भवति, यदा कर्तरि क्तस्तदा 'इममहि सृप्तो देश' यदा कर्मणि तदा 'अयमहिना सृप्तो देश' भावे तु "वा क्लीबे" वा षष्ठ्या'महे सृप्तम्' अहिना सृप्तमिति ॥ ९१ ॥

वा क्लीबे । क्तस्येति कर्तरीति नैकदेशो नेति षष्ठीति च वर्तते । क्लीबे क्तस्य कर्तरि षष्ठी वा नेत्यन्वयस्तदाह—क्लीबे य इत्यादि । 'भावे' इत्यधिकृत्य "क्लीबे क्त" इत्यनेन य कालसामान्यावच्छिन्नधात्वर्थाभिधायकत्वाद्धातोरुत्पन्नस्तत्र योगे षष्ठीविकल्पोऽयमित्युदाहरति—छात्रस्य हसितमित्यादि । हसन—हसितं, नर्तन—नृत्तम्; व्याहरण—व्याहृतम् । भावे क्त इति । "तत्साप्यानाप्यात्०" इत्यनेनेति शेष । पूर्वेणेति । "क्तयोरसदाधारे" इत्यनेनेत्यर्थ ॥ ९२ ॥

अकमेरुकस्य । कर्मणीति षष्ठीति नेति च वर्तते । अकमे उकस्य कर्मणि षष्ठी नेत्यन्वयस्तदाह—कमेरन्यस्येत्यादि । आगामुकमिति । "शृकमगम०" ५।२।४०। इति ताच्छीलिक उकण्, आहुरित्येतदपेक्षया कर्मणि द्वितीया । एव रक्षः शब्दादपि । वाराणसीश-ब्दात्तु गमिक्रियाकर्मणोऽनेन षष्ठी प्रतिषिध्यते । वरणा च असिश्च वरणासी नद्यौ ते विद्येते यस्यां "अभ्रादिभ्योऽम्" इत्यत्रि पृषोदरादित्वात् ह्रस्वदीर्घव्यत्ययेऽसन्तत्वात् ङ्या—वाराणसी । आहुःशब्दो "ब्रूग पञ्चानां०" इति व्युत्पाद्यते । दास्याः कामुक इति । दासशब्दात् ङ्यां—दासी, तत्र प्रतिषेधस्य प्रतिषेधात् षष्ठ्येव भवति ॥ ९३ ॥

एष्यदृणेन. । कर्मणीति षष्ठीति नेति चाऽनुवर्तते । एष्यदृणेन कर्मणि षष्ठी न इत्यन्वयस्तदाह—एष्यत्यर्थे इत्यादि । एष्यच्च ऋणञ्च एष्यदृणे तयोरिन् एष्यदृणेन् तस्येति विग्रह । एष्यता ऋणेन च प्रत्येकमिन् विशिष्यत इति । इन इति स्वरूपनिर्देशात् निरनुबन्धस्य च तस्य ऋणेऽसंभवात् ऋणग्रहणात् सानुबन्धस्य ग्रहणमित्याह—इन इति इन्णिनोर्ग्रहणमिति । ग्रामं गमीति । "वर्त्स्यति गम्यादि" ५।३।१। इति वचनात् "गमेरिन्" इति भविष्यति इन् । एव "आङ्श्च णित्" इति णिनि—ग्राममागामी । येषां तु "गवेर्नवाऽनाप्ते" इत्यस्य स्थाने "गत्यर्थकर्मणि०" इत्यत्र द्वितीयायां सिद्धायां द्वितीयाग्रहणमपवादविषयेऽपि षष्ठीबाधनार्थं तेषामत्र षष्ठीप्राप्तेरभावात् 'ग्राम गमी, गाम-मागामी'त्युदाहरणानुपपत्ति, प्रतिषेधस्य प्राप्तिपूर्वकत्वादिति । शतं दायीति । ददाते "णिन् चाऽऽवश्यकाधमर्ण्ये" इति णिनि "आत ऐ कृञ्चौ" ४।३।५३। इति एत्वमायादेशश्च ॥ ९४ ॥

---

१ °च्छाXXदि° पु० । २ °यी—कारी° पु० ।

## सप्तम्यधिकरणे ॥ २ । २ । ९५ ॥

गौणात् नाम्न एकद्विबहावधिकरणे कारके ङिओस्सुपूलक्षणा यथासंख्यं सप्तमी विभक्तिर्भवति । दिवि देवाः, पर्यङ्के आस्ते, तिलेषु तैलम्, गुरौ वसति, युद्धे संनह्यते, अङ्गुल्यग्रे करिशतम् ॥ ९५ ॥

## नवा सुजर्थैः काले ॥ २ । २ । ९६ ॥

सुचोऽर्थो वारलक्षणो येषां प्रत्ययानां तदन्तैर्युक्तात् कालेऽधिकरणे वर्तमानाद् गौणात् नाम्नः सप्तमी वा भवति । द्विरह्नि भुङ्क्ते, पक्षे शेषे षष्ठी–द्विरह्नो भुङ्क्ते; मासे पञ्चकृत्वो भुङ्क्ते, मासस्य पञ्चकृत्वो भुङ्क्ते; बहुधाऽह्नि भुङ्क्ते, बहुधाह्नो भुङ्क्ते । सुजर्थैरिति किम् ?, अह्नि भुङ्क्ते, रात्रौ शेते । बहुव्रीह्याश्रयण किम् ?, सुजर्थप्रत्ययस्याऽप्रयोगे गम्यमाने तदर्थे मा भूत् । काल इति किम् ?, द्विः कांस्यपात्र्यां भुङ्क्ते । अधिकरणे इत्येव ?, द्विरह्ना भुङ्क्ते । आधारस्याऽऽधारत्वाऽविवक्षायां पक्षे शैषिकी षष्ठी सिद्धैव, नियमार्थं तु वचनम्, तेन प्रत्युदाहरणेषु शेषे षष्ठी न भवत्येव ॥ ९६ ॥

## कुशलाऽऽयुक्तेनाऽऽसेवायाम् ॥ २ । २ । ९७ ॥

कुशलो निपुणः, आयुक्तो व्याप्तः[2], आभ्यां युक्तादाधारे वर्तमानाद् गौणात् नाम्नः सप्तमी वा भवति, आसेवायां–तात्पर्ये गम्यमाने । कुशलो विद्याग्रहणे, आयुक्तस्तपश्चरणे, पक्षे–अधिकरणाऽविवक्षाया शेषषष्ठी–कुशलो विद्याग्रहणस्य, आयुक्तस्तपश्चरणस्य । आसेवायामिति किम् ?, कुशलश्चित्रकर्मणि, न च करोति, आयुक्तो गौः शकटे–आकृष्य युक्त इत्यर्थः, अधिकरणे[3] इत्येव नित्य सप्तमी । पक्षे आधारस्याऽविवक्षायां विकल्पे सिद्धेऽनासेवायामाधाराऽविवक्षानिवृत्त्यर्थं वचनम् ॥ ९७ ॥

## स्वामीश्वराऽधिपतिदायादसाक्षिप्रतिभूप्रसूतैः ॥ २ । २ । ९८ ॥

एभिर्युक्ताद् गौणात् नाम्नः सप्तमी वा भवति, पक्षे–शेषषष्ठी । गोषु स्वामी, गवां स्वामी, गोष्वीश्वरः, गवामीश्वरः;

---

**सप्तम्यधिकरणे** । गौणात् नाम्न इति एकद्विबहाविति चानुवर्तते । गौणात् नाम्न एकद्विबहावधिकरणे सप्तमीत्यन्वयस्तदाह—**गौणादित्यादि** । क्रियाऽऽश्रयस्य कर्तुः कर्मणो वा य आधारस्तदधिकरणमिति प्रागुक्त, तस्य चोक्तप्रकारेणैव षड् भेदा भवन्तीति क्रमेणोदाहरति—**दिवि देवा** इत्यादि ॥ ९५ ॥

**नवा सुजर्थैः काले** । गौणात् नाम इति सप्तम्यधिकरणे इति च वर्तते । सुजर्थैः कालेऽधिकरणे गौणात् नाम्न सप्तमी नवेत्यन्वय । सुचोऽर्थ सुजिति उपचारात्, तेन सुजर्थो येषामिति बहुव्रीहि । एतच्च बहुवचनाद् विज्ञायते, अन्यपदार्थस्याऽनेकत्वाद् बहुत्वोपपत्ते । तत्पुरुषे तु अर्थस्यैकत्वादेकवचनमेव स्यात्, यथा "सहार्थे" इति इत्यवधार्याऽऽह—**सुचोऽर्थ** इत्यादि । सुचोऽर्थोपचार–क्रियाभ्यावृत्ति, स चार्थ प्रत्ययानामेवेत्याह—**प्रत्ययानामिति** । **तदन्तैरिति** । ते च प्रत्यया केवला न प्रयुज्यन्ते इत्येतदुच्यत इत्यर्थ । काल इत्यधिकरण इत्यस्याऽनुवर्तमानस्य विशेषणमित्याह—**कालेऽधिकरणे** इति । **द्विरह्नि भुङ्क्ते**–द्वौ वारावस्येति "द्वित्रिचतुर ०" ७।२।११०। इति सुच् । तद्विसुकपक्षे त्वधिकरणस्य शेषविवक्षया "शेषे" इत्यनेन षष्ठीत्याह—**पक्ष** इत्यादि । **पञ्चकृत्व** इति । पञ्च वारा अस्येति "वारे कृत्वस्" ७।२।१०९। इति कृत्वस् । **बहुधेति** । बहव आसन्ना वारा अस्येति "बहोर्धाऽऽसन्ने" इति धा, यद्यप्यत्राऽऽसत्तिरप्यस्ति तथापि सुचोऽर्थोऽस्तीति विकल्पो भवत्येव । **बहुव्रीह्याश्रयणं किमिति** । बहुव्रीहौ हि शब्दप्रधानो निर्देश, तत्र तदर्थैः शब्दैर्युक्तादिति युक्तत्व यद्यपि नामार्थ एव तथापि तत्प्रयोग एव भवति, अन्यथा बहुव्रीहेरानर्थक्यात् तदभावे तु अर्थप्रधाने निर्देशेऽर्थादिना यदाऽह्नि भुङ्क्ते इति द्विस्त्रिर्वेति प्रतीयेत तदाऽपि स्यात्, तदा मा भूदित्येतदर्थं तदाऽऽश्रयणमित्यर्थ । **द्विरह्ना भुङ्क्ते** इति । अहरधिकरणमपि अत्राऽशने करणविवक्षामनुभवति, तत्राधिकरण इत्यधिकारात् सप्तम्यभावात् तृतीयैव भवति । अधिकरणमाधार इति पर्यायशब्दौ "क्रियाऽऽश्रयस्या०" इत्यत्र दर्शिताविति तत्पर्यायेणैवाऽऽह—**आधारस्ये**त्यादि । अत्राऽयमर्थ –आधारस्य सबन्धविवक्षाया अप्युपपत्ते षष्ठीसप्तमीसिद्धावपि नियमार्थो योग इत्यर्थ । सूत्रदर्शितविषय एव आधारस्य संबन्धविवक्षाऽन्यत्र मा भूदित्येषमर्थं इत्यर्थनियमो व्यवच्छेदफल इत्याह—**तेनेत्यादि** । सुजर्थैरेव योगे काले सप्तमी वा भवतीति नियमात् प्रत्युदाहरणेषु आधारसप्तम्येव न षष्ठीति ॥ ९६ ॥

**कुशलाऽऽयुक्तेनाऽऽसेवायाम्** । सप्तम्यधिकरणे इति नवेति गौणात् नाम्न इति च वर्तते । कुशलाऽऽयुक्तेनाऽधिकरणे गौणात् नाम्न सप्तमी नवेत्यन्वय । **कुशलाऽऽयुक्तशब्दौ** निपुणव्यापृतपर्यायावित्याह—**कुशलो निपुण** इत्यादि । आसेवायामित्यस्य पर्यायमाह—**तात्पर्य** इति । **कुशलो विद्याग्रहण** इति । तत्परो निपुण इत्यर्थ । **आयुक्तस्तपश्चरणे** इति । तात्पर्येण व्यापृत इत्यर्थ । **न च करोती**त्यासेवायास्तात्पर्यरूपाया अभावमाह । **आकृष्य युक्त** इत्यर्थ इत्यनेनाऽप्यर्थाभिधानेन तात्पर्याऽभाव एवाभिधीयते । **पक्षे आधारस्येति** । पूर्ववद्विभक्तिद्वयसिद्धिः, अनासेवायां विभक्त्यन्तरनिवृत्तिरेव सूत्रस्य फलमित्यर्थं ॥ ९७ ॥

**स्वामीश्वराऽधिपतिदायादसाक्षिप्रतिभूप्रसूतैः** । गौणात् नाम्न इति नवेति सप्तमीति च वर्तते । स्वामीश्वराऽधिपतिदायादसाक्षिप्रतिभूप्रसूतैर्गौणात् नाम्न सप्तमी नवेत्यन्वयस्तदाह—**एभिरित्यादि** । **स्वामीति** । स्वशब्दात् "स्वान्मिन्नीशे" इति मिन् दीर्घत्वं च । ईष्टे "स्थेशभासपिसकसो वर" ५।२।८१। इति वरे—**ईश्वर** इति । दायमादत्त इति "दश्वाङ" ५।१।७८। इति डप्रत्यये, दायमत्तीत्यदेर्वाऽणि—

---

१ °र्थैस्स° पु० । २ व्यापृत पु० । ३ °णे अत्र नि° पु० ।

गोष्वधिपतिः, गवामधिपतिः; गोषु दायादः, गवां दायादः; गोषु साक्षी, गवां साक्षी; गोषु प्रतिभूः, गवां प्रतिभूः, गोषु प्रसूतः, गवां प्रसूतः । "स्वामीश्वराऽधिपति०" इति पर्यायोपादानात् पर्यायान्तरयोगे न भवति–ग्रामस्य राजा, ग्रामस्य पतिः, षष्ठ्येव भवति । सप्तम्यर्थं वचनम् ॥ ९८ ॥

## व्याप्ये क्तेनः ॥ २ । २ । ९९ ॥

इष्टादिभ्यः क्तान्तेभ्य इष्टमनेनेत्याद्यर्थे तद्धित इन् वक्ष्यते, क्तप्रत्ययान्ताद् य इन् तदन्तस्य व्याप्ये वर्तमानाद् गौणात् नाम्नः सप्तमी भवति । वेति निवृत्तम् । अधीतं व्याकरणमनेनेति वाक्याऽवस्थायामभिधायाऽधीतीति वृत्तौ क्तेनाऽनभिहिते कर्मणि प्रत्ययार्थकर्तृकेण च धात्वर्थेन व्याप्यमाने कृतपूर्वी कटमित्यादाविव द्वितीयायां प्राप्तायां तदपवादोऽयम् । अधीतं व्याकरणमनेनाऽधीती व्याकरणे, आम्नातं द्वादशाङ्गमनेनाऽऽम्नाती द्वादशाङ्गे, परिगणित ज्योतिरनेन परिगणिती ज्योतिषि, इष्टो यज्ञोऽनेनेष्टी यज्ञे । क्तेन इति किम् ?, कटं करोति । क्तग्रहण किम् ?, कृतपूर्वी कटम्, भुक्तपूर्वी ओदनम् । इन्ग्रहण किम् ?, उपश्लिष्टो गुरून् मैत्रः । व्याप्य इति किम् ?, मासमधीती व्याकरणे–अत्र मासात् मा भूत्, मासस्य हि न कर्मत्वम्, द्वितीया तु "कालाऽध्वनोर्व्याप्तौ" ॥ २ । २ । ४२ ॥ इत्यनेन ॥ ९९ ॥

## तद्युक्ते हेतौ ॥ २ । २ । १०० ॥

हेतुर्निमित्तं–कारणम्, तेन व्याप्येन युक्ते संयुक्ते हेतौ वर्तमानाद् गौणात् नाम्नः सप्तमी भवति । हेतुतृतीयाऽपवादः । "चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति, सीम्नि पुष्पलको हतः" ॥१॥ तद्युक्त इति किम् ?, वेतनेन धान्यं लुनाति–नाऽत्र वेतन धान्येन सयुक्तम्, धनेन वसति । हेताविति किम् ?, देवस्य पादौ स्पृशति ॥१००॥

---

दायाद इति । स्वामीश्वराऽधिपतीनामेकार्थत्वेऽपि भेदेनोपादान पर्यायान्तरनिवृत्त्यर्थमित्याह—स्वामीत्यादि । तदुदाहरति—ग्रामस्य राजेति । स्वाम्यर्थग्रहणात्तु अत्राऽपि स्यात्, तदर्थवृत्तित्वादिति । षष्ठीसप्तम्यौ द्वेऽपि प्राप्तेऽनेन विधीयते उत अन्यतराप्राप्तेत्याशङ्क्याह—सप्तम्यर्थं वचनमिति । स्वाम्यादीनां गवादिसबन्धित्व, तन्निवृत्तौ हि तेषां स्वाम्यादिभावाभाव , तत्राऽस्त्येव षष्ठी, सप्तमी तु नास्ति क्रियाप्रतीत्यभावादिति पक्षे सप्तमीप्रापणार्थं वचनमिति ॥ ९८ ॥

व्याप्ये क्तेन. । गौणात् नाम्न सप्तमीति वर्तते । क्तेनो व्याप्ये गौणात् नाम्न सप्तमीत्यन्वय । क्ताद् येन सूत्रेण यस्मिंश्चाऽर्थे इन् भवति तदाह—इष्टादिभ्य इत्यादि । क्तादिन् क्तेन् तस्य क्तेन इत्यस्याऽयमर्थ इत्याह—क्तप्रत्ययान्ताद् य इत्यादि । वेति निवृत्तमिति । पृथग्योगादिति शेष । अथ यस्मात् क्तवप्रत्ययादिन् विधीयते तस्य यत्कर्म तत्राऽधिकरणविवक्षया सप्तमी सिध्यति किमर्थमिदमित्याशङ्क्याऽऽह—अधीतमित्यादि । अधीतं व्याकरणमनेनेति वाक्याऽवस्थायां क्तेन सामान्यकर्म अभिधाय अधीतीति वृत्तौ क्तेनाऽनभिहिते कर्मणि–विशेषकर्मणि, तदभिधानाय द्वितीया प्राप्नोति, गतो ग्राममितिवत् प्रत्ययार्थकर्तृकेण ( प्रत्ययस्यार्थ प्रत्ययार्थ , प्रत्ययार्थ कर्ता यस्य धात्वर्थस्य अध्ययनलक्षणस्य तेनेत्यर्थ ) धात्वर्थेन व्याप्यमानत्वात् । सामान्यस्य विशेषमन्तरेणाऽनवस्थानमित्यर्थप्रदर्शनाय व्याकरणशब्दोपादानमिति वृत्तेरर्थ । इदमत्र तात्पर्य–यथैव हि 'अधीती व्याकरणे' इत्यत्र कर्मणोऽधिकरणत्वेन विवक्षितत्वात् सप्तमी प्रवर्तते तथा कृतपूर्वी कटमित्यादावपि प्रवर्तेत । तस्माद् विवक्षाप्रविभागायेदमारभ्यत इति क्तेन्कर्मविषयेऽधिकरणविवक्षा नाऽन्यत्रेति । अध्ययनमधीतं–अविवक्षितकर्मकत्वादिभो भावे क्तप्रत्यय , तत इष्टादित्वादिन् । एवमितरत्रापि । कर्मणि वा क्त , तत्रापि हि उत्पद्यमान क्त कर्मसामान्यमाचष्टे न विशिष्टम् । इन्प्रकृतिर्हि क्तान्तोऽनेनेति कर्त्रा प्रत्ययार्थेनैकार्थीभावमापद्यमानो विशेषेण व्याकरणादिकर्मणा सबन्ध नाऽर्हति । यद्यर्हेत्तत प्रत्ययो नोत्पद्येत, सापेक्षत्वादसामर्थ्यात् समर्थाच्च तद्धितस्य विधानादिति । तस्मायोऽसौ विशेषकर्मणा क्तान्त सबन्धमुपगच्छति तस्मादयमिन्प्रकृतिभूत क्तान्तप्रत्ययार्थोऽत्यन्तमन्तर्लीनतामापाद्यमानो विशेषेण सबन्धगमनाक्षमोऽन्य एवेति । अत एव 'अधीतमनेनेत्यादि' इन उत्पत्तौ विग्रहो न त्वधीत व्याकरणमनेनेति, तस्मात् प्रागविवक्षितमपि विशिष्टकर्मकर्त्रा पश्चात् सबन्धमुपैतीति सामान्येन व्यवहाराऽसभवात् । तदुक्त–'निर्विशेष न सामान्य भवेच्छशविषाणवत्' इति । तथेदमप्युक्त–'तत क्रियावता कर्त्रा योगो भवति कर्मणा' इति । अधीत व्याकरणमनेनेत्यादिवाक्यचतुष्टय तु नेभिन्नृत्त्यर्थं किन्त्वर्थकथनार्थं वृत्तौ दर्शितमिति ॥ ९९ ॥

तद्युक्ते हेतौ । गौणात् नाम्न इति सप्तमीति च वर्तते । तद्युक्ते हेतौ गौणात् नाम्न सप्तमीत्यन्वय । हेतुर्निमित्तं–कारणमिति । नानादेशजविनेयाऽनुग्रहार्थं पर्यायकथनम् । हेतुशब्दोपादानात्त्विह विशिष्टमेव निमित्तमभिप्रेत न निमित्तमात्र, अन्यथा 'तद्युक्ते निमित्ते' इति कृते दात्रेण धान्य लुनातीति निमित्तमात्रवाचिनो दात्रादपि स्यात् । न च 'उपपदविभक्ते कारकविभक्तिर्बलीयसी' इति न भविष्यतीति वाच्यम्, यत कारकश्रुत्या कर्तृकरणयोस्तृतीयावत् कारकेण कर्मणा सबन्धे विधीयमानत्वादस्या अपि कारकविभक्तित्वम् । सा ह्युपपदविभक्तिर्यत्र कारकगन्धोऽपि नास्ति, यथा–शक्तार्थवषडादिभिर्योगे चतुर्थीति । तस्माद्धेतुशब्दाऽभिधेय विशिष्टमेव निमित्त यत्क्रियाया प्रयोजन यदर्थं क्रियाऽऽरम्भो न च दात्रार्था लवनक्रियेति "हेतुकर्तृकरणे०" इति तृतीया प्राप्नोतीत्याह—हेतुतृतीयेति । चर्मणीत्यादि । अत्र द्वीपिवधे चर्म निमित्त–हेतु , चर्मार्थं हन्ता हन्ति, तस्य च कर्मणा साधनेन द्वीपिनमित्यनेन युक्तत्व योग –संबन्धस्तस्य तच्चर्मेति । एव कुञ्जरहननस्य दन्तौ, चमरीहननस्य केशा , पुष्पलकलक्षणवस्तुहननस्य सीमेति । द्विधा गता आपोऽस्मिन्निति "ऋक्पू पथ्यपोऽत्" ७।३।७६। इत्यति, "द्व्यन्तरनवर्णोपसर्गादप ईप्" ३।२।१०९। इतीपादेशे, मत्वर्थीये इनि—द्वीपी । "मघ्वादिभ्यो र" इति रे—कुञ्जर. । क्लिशे "क्लिश के च" उणा० ५३०। इति शे के चाऽऽदेशे—केश. । चमे "ऋच्छिचटि०" उणा० ३९७ इत्यरे जाति ङ्याम्—चमरी । पुष्प लातीति "आतो डो०" इति डे, अज्ञातार्थविवक्षायाञ्च के—पुष्पलकः । कर्मसयोगाऽभावे तु तृतीयैवेत्याह—वेतनेनेत्यादि । देवस्येति । अस्त्यत्र पादलक्षणेन कर्मणा देवस्य सयोगो हेतुत्व तु नास्ति ॥ १०० ॥

## अप्रत्यादावसाधुना ॥ २ । २ । १०१ ॥

असाधुशब्देन युक्ताद् गौणात् नाम्नोऽप्रत्यादौ-प्रत्यादिप्रयोगाऽभावे सप्तमी भवति । असाधुर्मैत्रो मातरि । अप्रत्यादाविति किम् ?, असाधुर्मैत्रो मातरं प्रति, मातरं परि, मातरमनु; मातरमभि ॥ १०१ ॥

## साधुना ॥ २ । २ । १०२ ॥

साधुशब्देन युक्ताद् गौणात् नाम्नोऽप्रत्यादौ सप्तमी भवति । साधुर्मैत्रो राजनि, साधुर्मातरि । अप्रत्यादावित्येव ?, साधुर्मैत्रो राजानं प्रति, राजानं परि, राजानमनु, राजानमभि । उत्तरत्राऽर्चायां विधानात् अनर्चायां तु व्यावृत्तेस्तत्त्वाख्याने विधिरयम्। कथं तर्हि साधुर्भृत्यो राज्ञ इति ?, भृत्याऽपेक्षाऽत्र षष्ठी न साध्वपेक्षा, साध्वपेक्षायां तु सप्तम्येव भवति ॥१०२॥

## निपुणेन चाऽर्चायाम् ॥ २ । २ । १०३ ॥

निपुणशब्देन साधुशब्देन च युक्ताद् गौणात् नाम्नोऽप्रत्यादौ सप्तमी भवति, अर्चायां गम्यमानायाम्। षष्ठ्य-पवादः । मातरि निपुणः, पितरि साधुः । अर्चायामिति किम् ?, निपुणो मैत्रो मातुः, साधुर्मैत्रः पितुः; मातैवैन निपुणं मन्यते पितैव साधुमित्यनर्चायां न भवति । अप्रत्यादावित्येव ?, निपुणो मैत्रो मातरं प्रति, मातरं परि, मातरमनु, मातरमभि ॥ १०३ ॥

## स्वेशेऽधिना ॥ २ । २ । १०४ ॥

स्वे-ईशितव्ये ईशे च स्वामिनि वर्तमानादधिना युक्ताद् गौणात् नाम्नः सप्तमी भवति, अधिः-स्वस्वामिसंबन्धं द्योतयति, तत्र स्वस्वामिवाचिनोर्यद् गौणत्वेन विवक्ष्यते ततो भवति । स्वे-अधि मगधेषु श्रेणिकः; अध्यवन्तिषु प्रद्योतः; ईशे-अधि श्रेणिके मगधाः, अधि प्रद्योतेऽवन्तयः; षष्ठीबाधनार्थो योगः ॥ १०४ ॥

---

**अप्रत्यादावसाधुना** । गौणात् नाम्न सप्तमीति वर्तेते । असाधुना गौणात् नाम्नोऽप्रत्यादौ सप्तमीत्यन्वयस्तदाह—**असाधुशब्देन युक्तादि**त्यादि । **अप्रत्यादा**विति । अत्रादिशब्दस्य व्यवस्थावाचित्वात् प्रति परि अनु अभि इत्येत एव अप्रत्यादावित्यनेन ग्राह्या । ननु साधु-शब्देन सदाचार उच्यते, आचरण च क्रियाविषयमिति मातृशब्देन तत्स्या परिचर्यादिक्रिया उच्यते इति मातृपरिचरणादिक्रियाणा सम्यगाचरिता मातरि साधुरित्युच्यते, तद्वैपरीत्येनाऽसाधुर्मातरीति । यदि तु साधुशब्दो भक्तिप्रधाने सकल्पविशेषे वर्तते तद्वैपरीत्ये चाऽसाधुशब्दस्तदा मातुरेव विषयभावसंभवात् सिद्धैव सप्तमी नैतदुपयुज्यते इति । यद्येवमसाधुर्मैत्रो मातरीति मातृविषयस्य साधुत्वस्य निषेधात् प्रथम मात्रा साधोर्योगाद-न्तरङ्गत्वादुत्तरेणैव सिद्धा सप्तमी किमनेन ?, नैवम्, पदान्तरसंबन्धादेकपदवर्तित्वेन नञ्सबन्धस्यान्तरङ्गत्वादसमर्थनञ्समासस्य च नियतविषय-त्वादर्थान्तराऽभिधायिना नञ्समासेनैव मातु सबन्धो युक्तोऽब्राह्मणमानयेत्यादिवत् इति "साधुना" इत्युत्तरेण न सिध्यतीति वचनम् । नन्वभियोगे "लक्षणवीप्स्ये०" इत्यनेन प्रत्यादियोगे तु "भागिनि०" इत्यनेन च द्वितीयाया विशेषविधानात् सप्तमी न भविष्यति किमप्रत्यादावित्यनेन ?, सत्यम्, असाधुशब्दाभावेऽपि द्वितीया चरितार्था इति प्रत्यादियोगे सप्तमी स्यात् ॥ १०१ ॥

**साधुना** । गौणात् नाम्न सप्तमीति अप्रत्यादाविति च वर्तेते । साधुना गौणात् नाम्नोऽप्रत्यादौ सप्तमीत्यन्वयस्तदाह—**साधुशब्देने**त्यादि । सामान्येन विधानेऽप्युपपत्त्या विषयविशेष दर्शयति—**उत्तरत्रे**त्यादि । पूर्वे त्वर्चाग्रहणमुत्तरत्र निपुणविशेषणार्थमेव प्रतियन्त सर्वत्र साधुशब्दयोगे सप्तमीं प्रतियन्ति । यदुत्पल —एव चाऽर्चाग्रहण निपुणविशेषणार्थं सपद्यत इति । उद्योतकरोऽपि निपुणविशेषणार्थमेवाऽर्चाग्रह-णस्य चरितार्थत्वादित्युवाच । **साधुर्भृत्यो राज्ञ** इत्यत्रापि तत्त्वाख्यानस्य सद्भावात् साधुयोगे सप्तमी प्राप्नोतीत्याशङ्कार्थं । परिहरति—**भृत्याऽपे-क्षे**त्यादि । अत्र पराऽभिप्रायेण सप्तमीमाशङ्क्य तत्परिहारार्थं स्वगुरुमतमुपदर्शयन्नुद्योतकर आह—यथाऽत्र भवानस्मदुपाध्यायो व्याकरणरत्नाकर-पूर्णचन्द्रमा कैय्यटाख्य शिष्यसार्थमिदमवोचत् 'भृत्याऽपेक्षयाऽत्र षष्ठी कृता न साध्वपेक्षया' । अयमर्थ —योऽयं भृत्यो राज्ञ सुसाधुर्गुणवानिति । यदा तु साधुनैवाभिमुख्येन सबन्धस्तदा वाढ सप्तम्यैव भवितव्यम्, यथा राजनि साधुरिति ॥ १०२ ॥

**निपुणेन चाऽर्चायाम्** । गौणात् नाम्न सप्तमीति अप्रत्यादाविति चकारात् साधुनेति च वर्तेते । निपुणेन साधुना च गौणात् नाम्नो-ऽप्रत्यादौ सप्तमी, अर्चायामित्यन्वयस्तदाह—**निपुणशब्देने**त्यादि । **मातरि निपुण** इति । अत्र मातरि सुष्ठु वर्तत इति, मैत्रादेः प्रशसा गम्यत इति तद्योगे मातृशब्दात् सप्तमीति । एव पितरि साधुरित्यत्राऽपि ॥ १०३ ॥

**स्वेशेऽधिना** । गौणात् नाम्न सप्तमीति वर्तेते । स्वेशेऽधिना गौणात् नाम्न सप्तमीत्यन्वयस्तदाह—**स्वे-ईशितव्ये** इत्यादि । अधे-रुपरिभावस्वस्वामिसंबन्धयोर्द्योतकत्वेऽपि स्वेशे इति वचनादत्र स्वस्वामिसबन्धद्योती गृह्यत इत्याह—**अधिरि**त्यादि । सबन्धस्योभयनिष्ठत्वे युगप-दुभयत्र सप्तमी स्यादित्याशङ्कायामाह—**तत्र स्वस्वामिवाचिनोरि**त्यादि । सर्वत्र च सबन्धे किंचिदनूद्यते किंचिदाख्यायते, यत्प्रसिद्ध तदनूद्यते यदप्रसिद्ध तदाख्यायते-विधीयते-ज्ञाप्यते । तत्र यद्विधीयते-तत्प्रधानमितरदप्रधानम् । तत्र यदप्रधानतया विवक्ष्यते तत्र सप्तमी नेतरत्रेत्यु-भयत्र पर्यायेण सप्तमी भवति न यौगपद्येनेति । **अधि मगधेषु श्रेणिक** इति । मगधानामीश श्रेणिक इत्यर्थ । एवमध्यवन्तिषु **प्रद्योत** इति । **अधि श्रेणिके मगधा** इति । श्रेणिकस्य ईशितव्या मगधा इत्यर्थ । एवम**धि प्रद्योतेऽवन्तय** इति । नन्वत्र क्रमेण परस्परमाधा-राऽऽधेयभावविवक्षया पर्यायेणाऽप्रधानात् "सप्तम्यधिकरणे" इत्यधिकरण एव सप्तमी भविष्यति किमनेनेति ?, उच्यते-संबन्धविवक्षायां षष्ठ्यपि स्यादित्याह—**षष्ठीबाधनार्थो योग** इति । ननु "विभक्तिसमीप०" ३।१।३९। इत्यादिना विभक्त्यर्थे यदव्यय तद्विभक्त्यन्तेन सह समस्यते स चाऽव्ययीभाव , यथा अधिस्त्रीति, एवमत्रापि कस्मात् न भवति ?, तथा सति नित्य समास इति वाक्य निवर्तेत । अथैव सति वचनमिदमनर्थक

## उपेनाऽधिकिनि ॥ २ । २ । १०५ ॥

उपेन युक्तादधिकिनि वर्तमानाद् गौणात् नाम्नः सप्तमी भवति, उपेत्यधिकाऽधिकिसंबन्धं द्योतयति । उप खार्यां द्रोणः, द्रोणोऽधिकः खार्या इत्यर्थः । उप निष्के[1] कार्षापणः, कार्षापणोऽधिको निष्कस्येत्यर्थः । उपेनेति किम् ?, खार्या उपरि द्रोणः । अधिकिनीति किम् ?, अधिके मा भूत्, तेनोप द्रोणे खारीति न भवति ॥ १०५ ॥

## यद्भावो भावलक्षणम् ॥ २ । २ । १०६ ॥

भावः-क्रिया, प्रसिद्धं लक्षणमप्रसिद्धं लक्ष्यम्; यस्य 'संबन्धिना भावेन क्रियया भावोऽपरक्रिया[3] लक्ष्यते, तस्मिन्[4] वर्तमानाद् गौणात् नाम्नः सप्तमी भवति । गोषु दुह्यमानासु गतः, 'दुग्धास्वागतः[2];-अत्र कालतः प्रसिद्धेन गवां दोहेन भावेनाऽन्यस्य गमनमप्रसिद्धं लक्ष्यते, एवं देवाऽर्चनायां क्रियमाणायां गतः कृतायामागतः । गम्यमानेनाऽपि भावेन भावलक्षणे भवति-आम्रेषु कलायमात्रेषु गतः, पक्वेषु आगतः; अत्र जातेष्विति गम्यते । गम्यमानमपि हि विभक्तेर्निमित्तं भवति, यथा-वृक्षे शाखा, ग्रामे चैत्रः;-अत्र भवति, वसति चेत्याधारनिमित्तं गम्यते । यत्र क्रियाऽर्हाणां कारकत्वं तद्विपर्ययो वा, यथा-ऋद्धेषु भुञ्जानेषु दरिद्रा आसते, ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते[5] । यत्र[6] क्रियानर्हाणामकारकत्वं तद्विपर्ययो वा, यथा-दरिद्रेष्वासीनेषु ऋद्धा भुञ्जते, दरिद्रेषु भुञ्जानेषु ऋद्धा आसते, तत्राऽपि भावो भावस्य लक्षण भवतीत्यनेनैव सप्तमी । यद्ग्रहणं प्रकृत्यर्थम् । भाव इति किम् ?, यो जटाभिस्तस्य भोजनम् । भावलक्षणमिति किम् ?, यस्य भोजनं स मैत्रः । तृतीयाऽपवादो योगः ॥ १०६ ॥

---

स्याद्, न च "सप्तम्या वा" ३।२।४। इत्यम्भावाभावपक्षे सप्तमीश्रवण फलमिति वाच्यम्, वर्तिपदसप्तमीलोपात्, समाससप्तम्या हि स विकल्प । किं च षष्ठीबाधनार्थोऽय योग इत्युक्तत्वात्, न चाऽव्ययीभावे षष्ठीभावाऽभावयोर्विशेषोऽस्ति । न चाऽत्राऽधिर्विभक्त्यर्थेऽस्ति, क्व तर्हि ?, स्वस्वामिभावे, तस्य च विषयभाव सप्तमी द्योतयति, एतद्विषयमस्य स्वत्व स्वामित्व चेति । अधिकीत्यादौ त्वाचार सप्तम्यर्थं एवाऽधेरर्थ । यदा तु सप्तम्यर्थं एवाऽधिशब्दस्तदाऽत्राऽप्यव्ययीभाव एव अध्यवन्ति प्रद्योत इति ॥ १०४ ॥

उपेनाऽधिकिनि । गौणात् नाम्न सप्तमीति वर्तते । उपेन अधिकिनि गौणात् नाम्न सप्तमीत्यन्वयस्तदाह—उपेन युक्तादित्यादि । अधिकिनीति । तत्कर्म कर्ता चोभयमपि भवति । तत्रेहाऽधिकमिति कर्ताऽभिधीयते-यदध्यारोहति, तत "अतोऽनेकस्वरात्" इतीनि-अधिकिनीति कर्माऽभिधीयते-यदध्यारुह्यते । तयोर्य सबन्धोऽध्यारोहणक्रियाजनितस्तमुपशब्दो द्योतयतीत्याह—उपेत्यधिकेत्यादि । अधिकसबन्ध च द्योतयितु अधिकिनीति मत्वर्थीयेन निर्देश । द्रोणोऽधिकः खार्या इत्यर्थ इति । उप खार्यां द्रोण इत्यत्र खारी विशेषणं द्रोणो विशेष्य इति तथैवार्थोऽभिधानमिदमित्यर्थं । अधिके मा भूदिति । अध्यारूढवति मा भूदित्यर्थ । तद्भावयर्थमाह—तेन उप द्रोणे खारीति न भवतीति । अत्राऽप्याधारविवक्षया सप्तमी सिद्धा, अधिकमध्यारूढ हि तत्रोपश्लिष्ट भवति, परं पूर्ववद्विभक्त्यन्तरबाधनार्थं वचनमिति ॥ १०५ ॥

यद्भावो भावलक्षणम् । गौणात् नाम्न सप्तमीति वर्तते । यद्भावो भावलक्षण तस्मिन् गौणात् नाम्न सप्तमीत्यन्वय । यद्यपि भावक्रिययोरन्यत्राऽपरिस्पन्दमानसाधनसाध्यता परिस्पन्दमानसाधनसाध्यता चेति विशेष प्रतिपादितस्तथापीह यत्तत्सबद्ध सामान्यानुभयरूप तदाश्रित्य तयोरभेदेनेहाऽऽश्रयणमिति दर्शयितुमाह—भावः—क्रियेति । उभयत्राऽपि भावशब्द क्रियावचन इत्यर्थ । तत्र यद्भाव इति भावशब्देन लक्षणभावोऽभिधीयते, भावलक्षणमिति लक्ष्यभाव , लक्षणस्य लक्ष्याऽपेक्षित्वात् । अविज्ञातस्वरूपस्य च वस्तुनो हानमुपादान वा कर्तुं न शक्यत इति तयो स्वरूपमाह—प्रसिद्धमित्यादि । प्रकर्षेण ज्ञाता या क्रिया सैवेतरस्या अपरिच्छिन्नस्वरूपाया क्रियाया लक्षण, अन्यथा तां प्रति लक्षणत्वाऽनुपपत्ते । गोषु दुह्यमानासु गत इति । दुहे कर्मणि आनश्, "क्य शिति" इति क्य , "अतो म आने" इति माऽऽगम , गमे 'गच्छति स्म ग्राम' इति गत्यर्थत्वात् कर्तरि क्त । दुग्धास्वित्यत्र गोष्विति सबन्धनीयम् । अत्र दोहनक्रियाविशिष्टकालसमाश्रयणेन सर्वलोकैरनुमीयमानतया प्रसिद्धत्वात् मैत्रादिगमनक्रियाया कालतोऽप्रसिद्धाया लक्षणमित्याह—अत्र कालत इत्यादि । लक्षणवतश्च गो सप्तमी । नन्वाम्रेषु कलायमात्रेषु गत इति लक्षणभूतक्रियाया अभावात् कथ तद्वत सप्तमीत्याह—गम्यमानेनाऽपीत्यादि । अत्र जातेष्विति गम्यत इति । जननलक्षणगम्यमाना क्रिया गमनस्य लक्षणमिति न दोष । गम्यमान विभक्तिनिमित्त नेति कश्चिन्मन्यते इति तन्निमित्तभाव दृष्टान्तोपदर्शनद्वारेण द्रढयति—गम्यमानमपि हीत्यादि । अयमर्थ —वृक्षे शाखेत्यादौ गम्यमानक्रियैव कारकविभक्तेर्निमित्त, क्रियाप्रतिपत्तिमन्तरेण कारकविभक्तेरप्रवृत्तेरिति । अथ ऋद्धेषु भुञ्जानेषु दरिद्रा आसते इत्यादौ यत्र क्रियार्हाणा कारकत्वं, क्रियानर्हाणामकारकत्व, तद्विपर्यासो वा गम्यते तत्र कथमियं सप्तमी ?, अत्र ऋद्धा भुञ्जते, दरिद्रा आसते इत्येतावन्मात्रप्रतीतेर्भावयोर्लक्ष्यलक्षणभावाभावादित्याशङ्क्याऽऽह—यत्र क्रियाऽर्हाणामित्यादि । अनुष्ठानरूपमौचित्यमर्हन्तीति क्रियार्हा । तद्विपर्यय इति । तच्छब्देन कारकत्व परामृश्यते, क्रियार्हाणामपि कुतश्चिन्निमित्तात् कारकत्वविपर्ययो चेत्यर्थ । ऋध्यन्तीति-ऋद्धा , भुजेरानशि-भुञ्जाना । दरिद्रतीत्यचि-दरिद्रा । अत्र ऋद्धा भुजिक्रियामर्हन्तीति तेषा भुञ्जत इति क्रियार्हाणां कारकत्वम् । ऋद्धेष्वासीनेषु दरिद्रा भुञ्जत इति । ऋद्धाना भोजनक्रियार्हाणामपि भुक्तत्वात् न ते पुनस्तत्प्रति कर्तृत्व भजन्त इत्यकारकत्वम् । दरिद्रेष्वासीनेषु ऋद्धा भुञ्जत इति । दरिद्रा न भोजनर्हा इति तेषां भुञ्जत इति क्रियानर्हाणामकारकत्वम् । तद्विपर्यासे च दरिद्रेषु भुञ्जानेषु ऋद्धा आसते इत्युदाहरण द्रष्टव्यम् । अत्राऽप्येव लक्ष्यलक्षणभावस्य विवक्षितत्वादनेनैव सप्तमी । यद्ग्रहणं प्रकृत्यर्थमिति । यस्य भावो भावस्य लक्षण ततो भाववत सप्तमीष्यते, यद्ग्रहणमन्तरेण चैतन्न लभ्यते, यद्ग्रहणे तु यद्भावो भावलक्षण तस्मिन्नित्याक्षेपात् लभ्यत इति प्रकृत्यर्थं यद्ग्रहणम् । यो जटाभिस्तस्य भोजनमित्यत्र जटा भोजनस्य भावस्य लक्षण न तु भाव इति तत सप्तमी न भवति । यस्य भोजनं स मैत्र इति । अत्र भोजनेन भावेन मैत्रो द्रव्य लक्ष्यते न भाव इति यस्येत्यतो भाववत सप्तमी न भवति । तृतीयाऽपवादो योग इति । असति ह्यस्मिन् सूत्रे "हेतुकर्तृकरणेत्थभूतलक्षणे" तृतीया प्राप्ताऽतस्तदपवादोऽयमित्यर्थ ॥१०६॥

---

१ नि कस॰ पु॰ । २ × × ॰पु॰ । ३ ॰पराक्रि॰ पु॰ । ४ ॰स्मिन् भाववति स॰ पु॰ । ५ ॰भुंजते पु॰ । ६ ॰यत्र च क्रि॰ पु॰ ।

## गते गम्येऽध्वनोऽन्तेनैकार्थ्यं वा ॥ २ । २ । १०७ ॥

कुतश्चिदवधेर्विवक्षितस्याऽध्वनोऽवसानमन्तः, यद्भावो भावलक्षणं तस्याऽध्वनोऽध्ववाचिशब्दस्याऽध्वन एवाऽन्तेनाऽन्तवाचिना सहैकार्थ्यं सामानाधिकरण्यं वा भवति, तद्विभक्तिस्तस्माद्भवतीत्यर्थः; गते गम्ये—गतशब्देऽप्रयुज्यमाने इत्यर्थः। गवीधुमतः सांकाश्यं चत्वारि योजनानि,—चतुर्षु योजनेषु गतेषु भवतीत्यर्थः; एवं लोकमध्यात् लोकान्तमुपर्यधश्च सप्त रज्जूनामनन्ति, पक्षे—पूर्वेण सप्तमी; गवीधुमतः सांकाश्यं चतुर्षु योजनेषु, गतेष्विति गम्यते। गत इति किम् ?, दग्धेषु लुप्तेष्विति वा प्रतीतौ मा भूत्। गम्य इति किम् ?, गतशब्दप्रयोगे मा भूत्—गवीधुमतः सांकाश्यं चतुर्षु योजनेषु गतेषु भवति, अत्रैकार्थ्यं न भवति, सप्तमी तु पूर्वेण नित्यं भवति। अध्वन इति किम् ?, कार्तिक्या आग्रहायणी मासे—अत्राऽप्यैकार्थ्याभावे पूर्वेण नित्यं सप्तमी। अन्तेनेति किम् ?, अद्य नश्चतुर्षु गव्यूतेषु भोजनम्, भोजनं हि भोक्तृधर्मो नाऽध्वनोऽन्त इति पूर्ववत् सप्तम्येव। नन्वन्तेन सहाऽध्वनोऽभेदोपचारात् सिद्धमेवैकार्थ्यं किमनेन ?, सत्यम्, कालेऽप्येव मा भूदिति वचनम्॥१०७॥

## षष्ठी वाऽनादरे ॥ २ । २ । १०८ ॥

यद्भावो भावलक्षणं तस्मिन् भाववति वर्तमानाद् गौणात् नाम्नोऽनादरे गम्यमाने षष्ठी[2] वा भवति, पक्षे पूर्वेण सप्तमी। रुदतो लोकस्य प्राव्राजीत्, रुदति लोके प्राव्राजीत्; क्रोशतो बन्धुवर्गस्य प्राव्राजीत्, क्रोशति बन्धुवर्गे प्राव्राजीत्;—रुदन्तं क्रोशन्तं वाऽनादृत्य प्राव्राजीदित्यर्थः ॥ १०८ ॥

## सप्तमी चाऽविभागे निर्धारणे ॥ २ । २ । १०९ ॥

जातिगुणक्रियादिभिः समुदायादेकदेशस्य बुद्ध्या पृथक्करणं निर्धारणम्, तस्मिन् गम्यमाने गौणात् नाम्नः षष्ठी सप्तमी च भवति; अविभागे—निर्धार्यमाणस्यैकदेशस्य समुदायेन सह कथंचिदैक्ये शब्दाद् गम्यमाने। क्षत्रियः पुरुषाणां

---

**गते गम्येऽध्वनोऽन्तेनैकार्थ्यं वा।** यद्भावो भावलक्षणमिति वर्तते। यद्भावो भावलक्षणं तस्य अध्वन एव अन्तेन ऐकार्थ्यं वा, गते गम्ये इत्यन्वयः। **कुतश्चिदिति**। गवीधुमदादेः। **अवधेरिति**। व्यवस्थायाः। **विवक्षितस्येति**। इयत्तापरिच्छेदायोपात्तस्येत्यर्थः, यदित्थभूत एवाऽध्वा अन्तेनैकार्थ्यमनुभवति। **यद्भाव** इति। यस्याऽध्वनश्चतुर्योजनरूपस्य भावेन गमनरूपेणाऽपरो भावः सांकाश्यभवनरूपो लक्ष्यते इति तस्येत्यर्थ इति सूत्रार्थमाह—**तस्येति**। यच्छब्दोद्दिष्टः प्रतिनिर्दिश्यते। **ऐकार्थ्यमिति** विधेयकथनम्। एकोऽर्थो द्रव्यमनेकभेदाधिष्ठानं यस्य स एकार्थस्तद्भाव ऐकार्थ्यं, तदाह—**सामानाधिकरण्यमिति**। एवं चैतद्विज्ञायत इत्याह—**तद्विभक्तिरित्यादि**। अन्यथैकविभक्तिमन्तरेण सामानाधिकरण्यं न घटेत इति भावः। **गवीधुमतः सांकाश्यं चत्वारि योजनानीति**। गवीधुमन्नाम नगरं, तत आरभ्य सांकाश्यं चतुर्भिर्योजनैः प्राप्यत इत्यर्थः। गवीधुमच्छब्दोऽव्युत्पन्नः। सकाशशब्दात् "सुपन्थ्यादेर्ञ्यः" ६।२।८४। इति ञ्ये—सांकाश्यम्। युजे करणेऽनटि—योजनं। गतेषु—अतिक्रान्तेषु, **भवतीत्यर्थ** इत्यनेन लक्षणमुदाहरणाय योजयति। एवं **लोकमध्यादित्यादा**वपि सप्तसु रज्जुषु गतासु लोकान्तमामनन्तीति पक्षे सप्तमी द्रष्टव्या। **गम्यत** इति। न प्रयुज्यत इत्यर्थः। **दग्धेषु लुप्तेष्विति** वेत्यनेन भावान्तरप्रदर्शनेन गतशब्दाभावं दर्शयति। **प्रतीतौ**विति। प्रकरणादेरिति शेषः। **गवीधुमतः सांकाश्यं चतुर्षु योजनेषु गतेषु भवतीति**। अत्र गतेष्विति प्रयुज्यमानं न गम्यं, गम्यं हि प्रतीयमानार्थमप्रयुज्यमानमुच्यते इति गम्य इति वचनादिह न भवति। **पूर्वेणेति**। यद्भावो भावलक्षणमित्यनेनेत्यर्थः। **कार्तिक्या आग्रहायणी मास** इति। अत्र मासे गते इति गतं गम्यमस्ति, परं मासः कालो नाऽध्वेति तस्याऽन्तेनाऽऽग्रहायण्या ऐकार्थ्यं न भवति। **अद्य नश्चतुर्षु गव्यूतेषु भोजनमिति**। अत्र भोजनं क्रिया भोक्तृधर्मो नाऽध्वान्त इति नैकार्थ्यं, तदभावे "यद्भावो भावलक्षणम्" इति सप्तम्येव भवतीत्याह—**भोजनं हीत्यादि**। **नन्वन्तेनेति**। अध्वाऽन्तयोरभेदोपचारादेवैकार्थ्यं सिद्धं किं तत्र वचनेनेत्याक्षेपार्थः। परिहरति—**सत्यमित्यादिना**। अभेदोपचारे हि कालेऽपि स्यात्, अध्वनोऽन्यत्र काले एवमुपचारो मा भूदध्वन्येव यथा स्यादित्येवमर्थमिदं वचनमित्यर्थः ॥१०७॥

**षष्ठी वाऽनादरे।** यद्भावो भावलक्षणमिति वर्तते गौणात् नाम्न इति च। यद्भावो भावलक्षणं तस्मिन् गौणात् नाम्नोऽनादरे षष्ठी वेत्यन्वयस्तदाह—**यद्भाव** इत्यादि। वा शब्दः पक्षे सप्तमीप्राप्त्यर्थ इत्याह—**पक्षे पूर्वेण सप्तमीति**। वाशब्दमन्तरेणाऽनादरे षष्ठ्याऽपवादतया सप्तमी बाध्येत। ननु "यद्भावो०" इति भावलक्षणे सामान्ये सप्तमी, तत्राऽनादरे इति विशेषे षष्ठी, सप्तम्यामनादरप्रतीतिरर्थप्रकरणादेरित्यर्थभेदान्न बाध्यबाधकभावोऽस्तीति किं पक्षे सप्तम्यर्थेन वाशब्देनेति ?, उच्यते—यथाऽनादरादन्यत्र साम्प्रतं सप्तम्यस्ति, एवं "शेषे" इत्यनेन षष्ठ्यपि, तत्रोभयत्रापि प्रव्रजन् रुदतापि लोकेन निवर्त्यमानस्तद्रोदनमनादृत्य प्राव्राजीदित्यनादरः प्रकरणादेः प्रतीयत इति सामान्येऽर्थे षष्ठी सप्तमीं बाधेतेति पक्षे तदर्थं वा वचनमिति। **प्राव्राजीदिति**। 'व्रज' गतावित्यतोऽद्यतन्यां दि, "सिजद्यतन्याम्" इति सिच्, "स सिजस्तेर्दिस्योः" ४।३।६५। इतीत्, "स्ताद्यशितो०" इतीट्, "वदव्रजल" इति वृद्धिः, "इट ईति" इति सिचो लुक्, "अड् धातो०" इत्यडागमः ॥ १०८ ॥

**सप्तमी चाऽविभागे निर्धारणे।** चकारात् षष्ठीति गौणात् नाम्न इति च वर्तते। निर्धारणे गौणात् नाम्नः षष्ठी सप्तमी च अविभागे इत्यन्वयः। निर्पूर्वात् धारयतेर्भावेऽनटि—निर्धारणं, तच्च समुदायभावापन्नस्यैकदेशस्य केनचिद्धर्मेण पृथक्करणं, धर्मश्च जात्यादिरित्याह—**जातिगुणेत्यादि**। विपूर्वाद्भजेर्भावे घञि—विभागो भेदस्तत्प्रतिषेधोऽविभागः—केनचिद्धर्मेण ऐक्यम्, तच्च सामर्थ्यात् निर्धार्यमाणस्य समुदायेन सहेत्याह—**निर्धार्यमाणस्येत्यादि**। **क्षत्रियः पुरुषाणां पुरुषेषु** वेत्यादि। अत्र क्षत्रियत्वशालित्वजात्या कृष्णत्वगुणेन धावनक्रियया आदिशब्दात् युधिष्ठिरप्रभृतिसंज्ञया च निर्धारणं द्रष्टव्यम्। ननु निर्धार्यमाणस्याऽवयवस्य समुदायाभ्यन्तरत्वात् समुदायस्य चाधिकरणविवक्षायां वृक्षे शाखेतिवत् सप्तम्याः सिद्धत्वात् सम्बन्धविवक्षायां त्ववयवस्य वृक्षस्य शाखेतिवत् षष्ठ्या अपि सिद्धत्वात् किमनेनेति ?, नैवं, विभागे प्रतिषेधार्थ-

---

१ °ज्जूराम° पु०। २ °ष्ठी भवति वा° पु०।

पुरुषेषु वा शूरतमः, शालयः शूकधान्यानां शूकधान्येषु वा पथ्यतमाः, कृष्णा गवां गोषु वा संपन्नक्षीरतमा, धावन्तो गच्छतां गच्छत्सु वा शीघ्रतमाः; युधिष्ठिरः श्रेष्ठतमः कुरूणां कुरुषु वा । अविभाग इति किम् ?, माथुराः पाटलिपुत्रकेभ्य आढ्यतराः, पञ्चालाः कुरुभ्यः संपन्नतराः, मैत्रश्चैत्रात् पटुः, अयमस्मादधिकः;–अत्र हि शब्दात् भेद एव प्रतीयते, न तु कथंचिदैक्यमिति न भवति । पञ्चमीबाधनार्थं वचनम्, अन्ये तु पञ्चमीमपीच्छन्ति गोभ्यः कृष्णा संपन्नक्षीरतमा ॥१०९॥

## क्रियामध्येऽध्वकाले पञ्चमी च ॥ २ । २ । ११० ॥

क्रिययोर्मध्ये योऽध्वा कालश्च तस्मिन् वर्तमानाद् गौणात् नाम्नः पञ्चमी, चकारात् सप्तमी च भवति । इहस्थोऽयमिष्वासः क्रोशात् लक्ष्यं विध्यति, क्रोशे वा लक्ष्यं विध्यति,–इह धानुष्काऽवस्थानमिषुमोक्षो वैका क्रिया लक्ष्यव्यधश्च द्वितीया तन्मध्ये क्रोशोऽध्वा; अद्य भुक्त्वा मुनिर्द्व्यहात् भोक्ता, द्व्यहे वा भोक्ता,–अत्र द्वयोर्भुक्तिक्रिययोर्मध्ये द्व्यहः कालः । ननु च क्रोशे स्थितं लक्ष्यं विध्यति, द्व्यहे पूर्णे भुङ्क्ते इत्यधिकरण एव सप्तमी, क्रोशात् निःसृत्य स्थित लक्ष्यं विध्यति, द्व्यहमतिक्रम्याऽऽतु भुङ्क्ते इत्यपादाने "गम्ययपः कर्माऽऽधारे" ॥२।२।७४॥ इति पञ्चमी सिद्धैव, सत्यम्; यदा त्वस्यैव क्रियाकारकसबन्धस्य फलभूता शेषसंबन्धलक्षणोत्तरावस्था विवक्ष्यते, यथा–द्विरह्नो भुङ्क्ते, योजनस्य शृणोतीति तदाऽपि क्रियामध्ये षष्ठी मा भूदिति वचनम् ॥ ११० ॥

## अधिकेन भूयसस्ते ॥ २ । २ । १११ ॥

अधिरूढ इत्यर्थेऽधिकशब्दो निपात्यते, अधिरूढ इति कर्तरि कर्मणि च क्तो भवति, तत्र यदा कर्तरि तदाऽधिक इत्येननाऽल्पीयानुच्यते; यदा तु कर्मणि तदा भूयान्, तत्र सामर्थ्यादल्पीयो वाचिनाऽधिकशब्देन युक्ताद् भूयसो भूयोवाचिनो गौणात् नाम्नस्ते सप्तमीपञ्चम्यौ भवतः । अधिको द्रोणः खार्याम्, अधिको द्रोणः खार्याः ॥ १११ ॥

---

त्वादस्येत्याह—**अविभाग इति किमिति** । अयमभिप्राय –सर्वत्रैव निर्धारणस्य विभागरूपत्वेनाऽविभागपूर्वकत्वात् सूत्रस्य निर्विषयत्वात् अविभागग्रहणसामर्थ्यादवधारण समाश्रीयते–अविभागो यत्र शब्दत एव प्रतीयते, तत्र निर्धारणे सप्तमीषष्ठ्याविति । गोषु कृष्णत्वेन निर्धार्यमाणस्याऽवयवस्य गोत्वेनाऽन्तर्भूतत्वात् गोषु कृष्णेत्यादावेव सप्तमी षष्ठी च युज्यते, इह तु **माथुराः पाटलिपुत्रकेभ्य आढ्यतरा** इति न केनचित् प्रकारेण माथुराणां पाटलिपुत्रकेष्वविभागो न हि पाटलिपुत्रका माथुरा नाप्याढ्यतरा इति वाक्याद् भेद एव प्रतीयत इत्याह—**अत्र हि शब्दादित्यादि** । गवां कृष्णेत्यादौ तु विभज्यमाना गौर्गोत्वेन समुदायादविभक्ता कार्ष्ण्येन तु विभक्ता, तस्माद् विभज्यमानस्यैकदेशस्य विभागाऽऽश्रयस्य च समुदायस्य यत्र विभागाऽविभागौ स एवाऽनयोर्विषय । यत्र तु तयोर्विभाग एव न कथञ्चिदैक्य तत्र पञ्चम्येव भवति, अत एवाऽऽह–**पञ्चमीबाधनार्थमिति** । अयमर्थ.–निर्धारणस्य विभागरूपत्वात् यस्य हि यतो विभागस्तस्य तदपेक्षयाऽवधिरूपत्वात् अपादानत्वात् पञ्चम्या प्राप्ताया यत्राऽविभागोऽपि तत्र तदपवादो योग इत्यर्थ । यद्येव सर्वथा समुदायभावानापन्ने निर्धारणमेव न युज्यते, समुदायाद्धि एकदेशस्य पृथक्करण निर्धारणमित्युक्तत्वात्, सत्यमेतत्, बुद्ध्या हि केनचिद्धर्मेण कल्पितेन माथुरा पाटलिपुत्रकाश्च समुदायभावमापद्यन्त इति सिध्यति निर्धारणमित्यदोष । **अन्य इति** । अभयनन्द्याचार्या ॥ १०९ ॥

**क्रियामध्येऽध्वकाले पञ्चमी च** । गौणात् नाम्न इति चकारात् सप्तमीति च वर्तेते । क्रियामध्ये अध्वकाले गौणात् नाम्न पञ्चमी सप्तमी चेत्यन्वय । क्रियाया मध्य क्रियामध्यमिति षष्ठीतत्पुरुप, न च विग्रहवाक्यार्थप्रतिपादने य शक्त स समर्थ इति समासे च द्वित्वार्थोऽनवगतेरसामर्थ्यात् समासाभाव इति वाच्यम्, मध्यस्य द्विष्ठत्वात् क्रियार्थगतस्य द्वित्वस्याऽवगमादित्याह—**क्रिययोर्मध्य इति** । **इह धानुष्कावस्थानमित्यादिना** उदाहृतोदाहरणे लक्षण योजयति । नन्विष्वास इति धनुरुच्यते, यथाऽङ्गराजो महेष्वास इति । धनुश्च व्यधने करण कर्ता तु मैत्रादिस्तत्कथमुक्तमिष्वासो विध्यतीति [2], उच्यते–इष्वास इति क्रियाशब्दोऽयम्, इषूनस्यति–क्षिपति इति मैत्रादिरेवोच्यते । रूढिशब्दत्वेऽपि करणस्य स्वातन्त्र्यविवक्षायां इष्वासो विध्यतीत्युपपद्यत एव । **इहस्थोऽयमिष्वास** इति प्रत्येक प्रतिपत्तव्य, वाक्यभेदात् । ननु चेहस्थोऽयमिष्वास इत्यादि क्रियाभेदात् युक्तमुदाहरणं, इद त्वयुक्त, अद्य भुक्त्वा मुनिर्द्व्यहाद्भोक्तेति, भुजिक्रियाया एकत्वात्, सत्यम्, भुजिक्रियाया एकस्या अपि कालभेदाद् भेदस्य सिद्धत्वादाधारोऽपि तस्या भिद्यते इत्याह—**अत्र द्वयोरित्यादि** । **ननु चेति** । क्रियामध्यव्यवस्थितस्याऽध्वनोऽधिकरणत्वात् सप्तमी सिद्धा, क्रोशैकदेशस्याऽधिकरणत्वात् क्रोशेऽप्यधिकरणत्वस्य वक्तु शक्यत्वात् । एव कालादपि द्व्यहे पूर्णे यदुपश्लिष्टमहस्तत्र भोक्त्र्यर्थावसायादौपश्लेषिकी सप्तमी सिद्धा । पञ्चमी त्वध्वनोऽपादानत्वात् क्रोशान्निर्गच्छद्भि शरैर्लक्ष्य विध्यतीत्यर्थोऽवगमात् । कालात्तु "गम्ययप ०" इति द्व्यहमतिक्रम्य भोक्तेत्यर्थप्रतीते किमर्थोऽय योग इत्याक्षेपार्थ । यद्यपि शरनिर्गमनस्य धनुरपादान न क्रोशस्तथापि क्रोशस्थमेव धनुरत्र क्रोशशब्देनाऽभिधीयते, यथा 'मञ्चा क्रोशन्ति' इति मञ्चस्था पुरुषा मञ्चशब्देनेति । परिहरति—**सत्यमित्यादिना** । **अस्यैवेति** । अपादानस्याऽऽधारस्य वेत्यर्थ । **फलभूतेति** । क्रियाकारकसंबन्धो हि कट करोतीत्यादावप्यस्ति, तद्व्यवच्छित्त्यै शेषसबन्धलक्षणा फलभूता–कार्यभूतोत्तरावस्था इत्युक्तम् । अयमर्थ –यदा भोजनश्रवणादौ कालाऽध्वनो क्रियाकारकजन्य शेषसबन्धित्वमेव केवल विवक्ष्यते न त्वपादानाऽधिकरणत्वे तदा ताभ्या षष्ठ्येव स्यादिति सूत्रारंभ । किं च यदा द्व्यहक्रोशशब्दौ द्व्यहक्रोशविषयावेव न तदेकदेशविषयौ तदानाऽपायो नाप्याधारत्वेति षष्ठी प्राप्नोति । क्रोश वाहयित्वा विध्यति, द्व्यह वाहयित्वा भोक्तेति वा प्रतीतेर्द्वितीया प्राप्नोति तद्बाधनार्थोऽय योग आरभ्यते । वृत्तौ तु **षष्ठी मा भूदिति** षष्ठीग्रहणमुपलक्षणार्थं, तेन द्वितीयाऽपि मा भूदित्यर्थ सिद्धो भवति ॥ ११० ॥

**अधिकेन भूयसस्ते** । गौणात् नाम्न इति वर्तते । अधिकेन भूयसो गौणात् नाम्नस्ते इत्यन्वय । **तत्र यदेति** । अध्यारोहतीति शेष । भूयस इत्युपादानादधिकशब्देनाऽल्पीयानेवोच्यते इत्याह—**तत्र सामर्थ्यादित्यादि** । **अधिको द्रोण• खार्यामिति** । अत्राऽधिकाऽधिकिसंबन्धस्य विद्यमानत्वात् खारीशब्दात् "शेषे" इत्यनेन षष्ठी प्राप्नोति, तथा अधिकशब्दस्य कर्तृसाधनाऽध्यारूढार्थत्वात् "कर्मणि" इति द्वितीया च, अतस्तयोर्बाधिके सप्तमीपञ्चम्यावनेन विधीयेते ॥ १११ ॥

---

१ °तमा ° पु० । २ °म्य × मु° पु० । ३ वा° पु० ।

## तृतीयाऽल्पीयसः ॥ २ । २ । ११२ ॥

अधिकशब्देन सामर्थ्याद् भूयोवाचिना युक्तादल्पीयो वाचकाद् गौणात् नाम्नस्तृतीया भवति । अधिका खारी [1]द्रोणेन ॥ ११२ ॥

## पृथग्नाना पञ्चमी च ॥ २ । २ । ११३ ॥

पृथग्नानाशब्दाभ्यां युक्ताद् गौणात् नाम्नः पञ्चमी तृतीया च भवति । पृथग् मैत्रात्, पृथग् मैत्रेण; नाना चैत्रात्, नाना चैत्रेण । यदा पृथग्नानाशब्दावन्यार्थौ तदा प्रभृत्यादिसूत्रेण पञ्चमी सिद्धैव तृतीयैवाऽनेन विधीयते, यदा त्वसहायार्थौ तदा पञ्चमीविधानार्थमपीदम् । अन्ये तु द्वितीयामपीच्छन्ति ॥ ११३ ॥

## ऋते द्वितीया च ॥ २ । २ । ११४ ॥

ऋते इत्येतदव्ययं वर्जनार्थम्, तेन युक्ताद् गौणात् नाम्नो द्वितीया पञ्चमी च भवति । चित्रं यथाश्रयमृते, न ह्यङ्गं विक्रियते रागमृते, ऋते धर्मात् कुतः सुखम् । द्वितीयां नेच्छन्त्येके ॥ ११४ ॥

## विना ते तृतीया च ॥ २ । २ । ११५ ॥

विनाशब्देन युक्ताद् गौणात् नाम्नस्ते द्वितीयापञ्चम्यौ तृतीया च भवति । विना वातम्, विना वर्षम्, न विना शब्दभावनाम्, याच्ञां विना विद्धि; विना वातात्, विना वातेन । द्वितीयां नेच्छन्त्यन्ये ॥ ११५ ॥

## तुल्यार्थैस्तृतीयाषष्ठ्यौ ॥ २ । २ । ११६ ॥

तुल्यार्थैर्युक्ताद् गौणात् नाम्नस्तृतीयाषष्ठ्यौ भवतः । मात्रा तुल्यः, मातुस्तुल्यः; पित्रा समानः, पितुः समानः; गुरुणा समः, गुरोः समः; चैत्रेण सदृशः, चैत्रस्य सदृशः । अर्थग्रहणं पर्यायार्थम् । उपमा नास्ति कृष्णस्य, तुला नास्ति सनत्कुमारस्येत्यादौ उपमादयो न तुल्यार्था इति न भवति । गौणाधिकाराच्च गौरिव गवयः, यथा गौस्तथा गवय इत्यादौ न भवति । तृतीयामविकल्प्य षष्ठीविधानं सप्तमीबाधनार्थम्, तेन—गवां तुल्यः स्वामी, गोभिस्तुल्यः स्वामीत्यत्र "स्वामीश्वरा०" इत्यादिना सप्तमी न भवति ॥ ११६ ॥

---

**तृतीयाऽल्पीयस.** । अधिकेनेति गौणात् नाम्न इति च वर्तते । अधिकेन अल्पीयसो गौणात् नाम्नस्तृतीयेत्यन्वय । अल्पीयस इत्युपादानात् कर्मसाधनो भूयोऽर्थोऽधिकशब्द प्रतिपत्तव्य इत्याह—**सामर्थ्याद् भूयोवाचिनेति** । **अधिका खारी द्रोणेनेति** । भूयोवाचिनाऽधिकशब्देन युक्तादल्पीयोवाचकाद् गौणात् नाम्नो द्रोणात् तृतीयेति ॥ ११२ ॥

**पृथग्नाना पञ्चमी च** । गौणात् नाम्न इति चकारात् तृतीयेति च वर्तते । पृथग्नाना गौणात् नाम्न पञ्चमी तृतीया चेत्यन्वय । पृथग्नानेति तृतीयान्तमित्याह—**पृथग्नानाशब्दाभ्यां युक्तादिति** । तृतीयैवाऽनेन भवतीति, पञ्चमी तु सिद्धैव परत्वाद् विशेषविहितत्वाच्च तृतीया न बाधेत तामित्यनूद्यते इत्यर्थ । **यदा त्विति** । विशेषस्याऽनुपादानादुभयार्थयोरपि पृथग्नानाशब्दयोर्ग्रहणादसहायार्थपक्षे पञ्चमी न सिध्यतीति तद्विधानार्थमपीदमुपपद्यत एवेति ॥ ११३ ॥

**ऋते द्वितीया च** । गौणात् नाम्न इति चकारात् पञ्चमीति च वर्तते । ऋते गौणात् नाम्नो द्वितीया पञ्चमी चेत्यन्वय । ऋते इत्यतोऽव्ययाद् वर्जनार्थादनुकार्याऽनुकरणयोरभेदविवक्षितत्वात् "अव्ययस्य" इति युक्त्वाऽपेक्षयोत्पन्नस्य तृतीयैकवचनस्य लुबित्याह—**ऋते** इत्यादि । चकारेणाऽनन्तरोक्ता पञ्चमी समुच्चीयते इत्याह—**द्वितीया पञ्चमी** चेति । यद्यपि पाणिन्यादिभिर्ऋतेशब्देन योगे द्वितीया नोक्ता तथापि शिष्टैः प्रयुज्यत इति शिष्टप्रयोगमेवोदाहरति—**चित्रं यथाश्रयमृते** इत्यादि । **द्वितीया नेच्छन्त्येके** इति । एक इति पाणिन्यादय, तेषामपि मते 'ततोऽन्यत्रापि दृश्यते' इति व्याख्याकारवचनाद् द्वितीया सिध्यति ॥ ११४ ॥

**विना ते तृतीया च** । गौणात् नाम्न इति वर्तते । विना गौणात् नाम्नस्ते तृतीया चेत्यन्वय । विनेत्यपि तृतीयान्तमेवाऽव्ययमित्याह—**विनाशब्देनेति** । तच्छब्दस्य पूर्ववस्तुपरामर्शित्वात्ते इत्यनेनाऽनन्तरोक्ते द्वितीयापञ्चम्यौ परामृश्येते इत्याह—**ते-द्वितीयापञ्चम्याविति** ॥ ११५ ॥

**तुल्यार्थैस्तृतीया पष्ठ्यौ** । गौणात् नाम्न इति वर्तते । तुल्यार्थैर्गौणात् नाम्नस्तृतीयाषष्ठ्यावित्यन्वय । **तुल्यार्थैर्युक्तादिति** । तुल्य —सदृशोऽर्थोऽभिधेयो येषां ते तुल्यार्थास्तैर्युक्तादिति तुल्यशब्दस्योपमेयार्थत्वात्तैर्युक्तादुपमानादित्यर्थ । **अर्थग्रहणं पर्यायार्थमिति** । तुल्यशब्दार्थाभिधायिन शब्दान्तरस्यापि परिग्रहार्थमित्यर्थ । असत्यर्थग्रहणे तुल्यशब्देन रूपतोऽर्थतो वा समानै शब्दैर्योग इति विज्ञायेत, अर्थग्रहणे तु प्रत्यासत्तेस्तत्पर्याया विज्ञायन्त इति इहोपमा नास्ति कृष्णस्येत्यादौ सादृश्यप्रतीतेरुपमादय शब्दास्तुल्यार्था इति तद्युक्तात् कृष्णादेस्तृतीया स्यादिति य कश्चिदाशङ्कते त प्रत्याह—**उपमा नास्तीत्यादि** । तुल्यशब्दस्योपमेयवचनत्वादुपमादयस्तुल्यपर्याया न भवन्तीत्यर्थ । **गौणाधिकाराच्चेति** । **गौरिव गवय** इत्यादौ प्रधानाद् गोशब्दात् न भवतीत्यर्थ । तुल्यार्थताऽपि नास्तीति **च**कारेण परिहारान्तरं समुच्चीयत इति शेष । नन्वनन्तरात् पूर्वसूत्रात् तृतीयाऽनुवर्तते, तत 'तुल्यार्थैर्वा' इति तद्विकल्पे कृते "शेषे" इत्यनेन पक्षे शेषलक्षणा षष्ठी सिद्धैव किमर्थं तद्विधानमित्याह—**तृतीयामविकल्प्येत्यादि** । षष्ठीविधानस्य फल दर्शयति—**तेनेत्यादि** ॥ ११६ ॥

---

[1] ×××××××××× पु० ।

## द्वितीयाषष्ठ्यावेनेनाऽनञ्चेः ॥ २ । २ । ११७ ॥

एनप्रत्ययान्तेन युक्ताद् गौणात् नाम्नो द्वितीयाषष्ठ्यौ विभक्ती भवतः, न चेत् सोऽञ्चेः परो विहितो भवति । पूर्वेण ग्रामम्, पूर्वेण ग्रामस्य; अपरेण ग्रामम्, अपरेण ग्रामस्य, दक्षिणेन विजयार्द्धम्, दक्षिणेन विजयार्द्धस्य; उत्तरेण हिमवन्तम्, उत्तरेण हिमवतः । अनञ्चेरिति किम् ?, प्राग्ग्रामात्, प्रत्यग्ग्रामात्; उदग्ग्रामात् ॥ ११७ ॥

## हेत्वर्थैस्तृतीयाद्याः ॥ २ । २ । ११८ ॥

हेतुर्निमित्तं-कारणमिति पर्यायाः, एतदर्थैः शब्दैर्युक्तात् प्रत्यासत्तेस्तैरेव समानाधिकरणात् गौणाद् नाम्नस्तृतीयाद्यास्तृतीयाचतुर्थीपञ्चमीषष्ठीसप्तम्यो भवन्ति । धनेन हेतुना वसति, धनाय हेतवे वसति, धनाद् हेतोर्वसति, धनस्य हेतोर्वसति, धने हेतौ वसति; एव धनेन निमित्तेन, धनेन कारणेन, धनेनाऽपदेशेन; धनेन प्रयोजनेनेत्यादयोऽपि । तत्सामानाधिकरण्याच्च हेत्वर्थेभ्योऽपि ता एव भवन्ति । प्रत्यासत्तेस्तैरेव समानाधिकरणादिति किम् ?, अन्नस्य हेतुः । अन्ये तु हेत्वर्थशब्दयोगे नेच्छन्ति-हेतुशब्दप्रयोगे तु षष्ठीमेवेच्छन्ति । असर्वाद्यर्थमिदम् ॥ ११८ ॥

## सर्वादेः सर्वाः ॥ २ । २ । ११९ ॥

हेत्वर्थैर्युक्तात् प्रत्यासत्तेस्तत्समानाधिकरणात् सर्वादेर्गौणात् नाम्नः सर्वा विभक्तयो भवन्ति । को हेतुर्वसति चैत्रः, कं हेतुं वसति, केन हेतुना, कस्मै हेतवे, कस्माद् हेतोः, कस्य हेतोः, कस्मिन् हेतौ, एवं यो हेतुः, यं हेतुम्, येन हेतुना, यस्मै हेतवे, यस्माद् हेतोः, यस्य हेतोः, यस्मिन् हेतौ; स हेतुः, तं हेतुम्, तेन हेतुना, तस्मै हेतवे, तस्माद् हेतोः, तस्य हेतोः, तस्मिन् हेतौ; सर्वो हेतुः, सर्वं हेतुम्, भवान् हेतुः, भवन्त हेतुम्, भवता हेतुना; उभौ हेतू, उभाभ्यां हेतुभ्याम् इत्यादि; एवं किं कारण ?, कि निमित्तं ?; कि प्रयोजनमित्यादि । तत्समानाधिकरणादित्येव ?, कस्य हेतुः । प्रथमां नेच्छन्त्येके। द्वितीयामपरे ॥ ११९ ॥

## असत्त्वारादर्थात् टाङसिङ्यम् ॥ २ । २ । १२० ॥

सत्त्वं-द्रव्यं ततोऽन्यदसत्त्वम्, आराद्-दूराऽन्तिकयोः, तत्रेणोभयोर्ग्रहणम्, असत्त्ववाचिनो दूरार्थादन्तिकार्थाच्च टा ङसि ङि अम् इत्येते प्रत्यया भवन्ति, गौणादिति निवृत्तम् । (दूरार्थः-)दूरेण ग्रामस्य ग्रामाद् वा, दूराद् ग्रामस्य ग्रामाद् वा, दूरे ग्रामस्य ग्रामाद् वा, दूर ग्रामस्य ग्रामाद् वा वसति; एव विप्रकृष्टेन, विप्रकृष्टात्, विप्रकृष्टे, विप्रकृष्टं ग्रामस्य ग्रामाद् वा तिष्ठति; अन्तिकार्थः-अन्तिकेन, अन्तिकात्, अन्तिके, अन्तिक ग्रामस्य ग्रामाद् वा वसति; एवमभ्याशेन, अभ्याशात्, अभ्याशे, अभ्याशं ग्रामस्य ग्रामाद् वा । केचिदारादर्थैः पञ्चम्यन्तैर्युक्तात् पञ्चमीं नेच्छन्ति, तेन-दूराद् ग्रामस्य, अन्तिकाद् ग्रामस्येत्येव भवति, न तत्सर्वसमतम्; पञ्चम्या अपि दर्शनात्-"दूरादावसथात् मूत्रं दूरात् पादावसेचनम् । दूराच्च भाव्यं दस्युभ्यो दूराच्च कुपिताद् गुरोः" ॥ १ ॥ इति । असत्त्वेति किम् ?, दूरः पन्थाः, अन्तिकः पन्थाः, दूराय पथे देहि, अन्तिकाय पथे देहि, दूरस्य पथः; अन्तिकस्य पथः स्वम् । कथं चिरं ?, चिरेण ?, चिराय ?, चिरात् ?, चिरस्येति ?; विभक्तिप्रतिरूपका निपाता एते, यथा-परस्परम्, परस्परेण, परस्परस्येत्यादयः ॥ १२० ॥

---

**द्वितीयाषष्ठ्यावेनेनाऽनञ्चेः** । गौणात् नाम्न इति वर्तते । एनेन गौणात् नाम्नो द्वितीयाषष्ठ्यौ, अनञ्चेरित्यन्वय । **पूर्वेण ग्राममिति** । ग्रामाददूरा पूर्वा इति "अदूरे एन" ७।२।१२२। इति एन प्रत्यय । **प्राग्ग्रामादिति** । लुबञ्चे " ७।२।१२३। इति एनप्रत्ययस्य लुप्, अनञ्चेरिति प्रतिषेधात् द्वितीयाषष्ठ्योरभावात् "प्रभृत्यन्यार्थ०" इति ग्रामात् पञ्चमी ॥ ११७ ॥

**हेत्वर्थैस्तृतीयाद्याः** । गौणात् नाम्न इति वर्तते । हेत्वर्थैर्गौणात् नाम्नस्तृतीयाद्या इत्यन्वय । **प्रत्यासत्तेस्तैरेव समानाधिकरणादिति** । हेत्वर्थैस्तु व्यधिकरणाद् हेतुसम्बन्धे षष्ठ्येवाऽस्ति न तृतीयाद्या इति सामर्थ्याद् हेत्वर्थै समानाधिकरणाद् हेतोरेव तृतीयाद्या भवन्तीति । अत्र च हेतोस्तृतीयाया "ऋणाद्धेतो", "गुणादस्त्रिया नवा" इति पञ्चम्यां प्राप्तायामय विधिरारभ्यत इति । ननु ततोऽप्युत्तरसूत्रेण सर्वा विभक्त्य इति सर्वविभक्त्यन्तर्गतत्वात् तृतीयाद्या अपि सिद्धा किमर्थमिदमित्याह—**असर्वाद्यर्थमिदमिति** । उत्तरसूत्रेण हि हेत्वर्थैर्युक्तात् सर्वादेरेव सर्वा विभक्त्य उच्यन्ते, अनेन त्वसर्वादेरेवेत्यर्थ ॥ ११८ ॥

**सर्वादे· सर्वा·** । हेत्वर्थैरिति वर्तते गौणात् नाम्न इति च । हेत्वर्थै सर्वादेर्गौणात् नाम्न सर्वा इत्यन्वय । शेष पूर्वेण गतार्थमिति । **एके** इति, **अपरे** इति च वार्तिकव्याख्यातार ॥ ११९ ॥

**असत्त्वारादर्थात् टाङसिङ्यम्** । स्पष्टोऽन्वय । **गौणादिति निवृत्तमिति** । अयमर्थ —असत्त्ववचनाद् दूरान्तिकार्थात् टादीना विधानात् तस्य च यथास्व प्रधानतया गौणत्वाऽभावात् प्रधानादेव ततष्टादय इति। **दूरेण ग्रामस्य ग्रामाद्वेति**। इदतदिति सर्वनामप्रत्यवमर्शयोग्यार्थाऽभिधायकत्वेऽप्येतेषां धर्ममात्रेण प्रयोगादसत्त्वरूपार्थाऽभिधायकत्व न विरुध्यते, चतसृणां विभक्तीनां तृतीयापञ्चमीसप्तमीद्वितीयानां विधानात् तद्व्यतिरिक्ता प्रथमाचतुर्थीषष्ठ्य स्वे स्वे विषये एताभिरबाधनात् प्रवर्तन्त इति । ग्रामस्य ग्रामाद्वेति "आरादर्थै" इति विकल्पेन पञ्चमी, तद्विमुक्तपक्षे च "शेषे" इति षष्ठी । **केचिदारादर्थै**रित्यादिना मतान्तरमुपन्यस्य **दूरादावसथात् मूत्र**मित्यादिना शिष्टप्रयुक्तोदाहरणप्रदर्शनेन दूषयति । **दूरः पन्था इति** । अत्र सत्त्ववाचित्वाद् दूरान्तिकार्थादपि टादयो न भवन्ति, किन्तु यथाशास्त्र प्रथमादय इति। **कथमिति** । चिर-

१ °यार्थम् म० म० । २ ×तदर्थै ° पु० । ३ °क्तात्××××त° पु० । ४ पथे×× पु० ।

## जात्याख्यायां नवैकोऽसंख्यो बहुवत् ॥ २ । २ । १२१ ॥

जातेरेकत्वादेकवचन एव प्राप्ते, पक्षे–बहुवचनार्थं बहुवद् भाव उच्यते, जातेराख्याऽभिधानं जात्याख्या; तस्यामेकोऽर्थो जातिलक्षणोऽसंख्यः संख्यावाचिविशेषणरहितो बहुवद् वा भवति । सपन्नो यवः, सपन्ना यवाः, संपन्नो व्रीहिः, संपन्ना व्रीहयः; जात्यर्थस्य बहुवद्भावात् तद्विशेषणानामपि बहुवद्भावः, तथा चोभयवाचिभ्यो बहुवचनम् । जातिग्रहण किम् ?, चैत्र., मैत्रः । आख्याग्रहणं किम् ?, काश्यपप्रतिकृतिः काश्यपः,–भवत्यय जातिशब्दो न त्वनेन जातिराख्यायते, किं तर्हि ?, प्रतिकृति. । एक इति किम् ?, सपन्नौ व्रीहियवौ । मगधेषु स्तनौ पीनौ, कलिङ्गेष्वक्षिणी शुभे इत्यादावपि सव्येतरत्वलक्षणाऽवान्तरजातिद्वयोपाधियोगादेकत्वं नास्तीति बहुवद्भावो न भवति, जातिमात्रविवक्षायां तु भवत्येव–मगधेषु स्तनाः पीनाः, स्तनः पीनः, कलिङ्गेष्वक्षीणि शुभानि, अक्षि शुभमिति । असख्य इति किम् ?, एको व्रीहिः संपन्नः सुभिक्षं करोति–अत्र विशेषणभूतसख्याप्रयोगोऽस्तीति ऐके व्रीहयः सपन्नाः सुभिक्षं कुर्वन्ति इति न भवति ॥ १२१ ॥

## अविशेषणे द्वौ चाऽस्मदः ॥ २ । २ । १२२ ॥

अस्मदो द्वावेकश्चाऽर्थो वा बहुवद्भवति, अविशेषणे–न चेत्तस्य विशेषणं प्रयुज्यते । आवां ब्रूवः, वयं ब्रूमः, अहं ब्रवीमि, वय ब्रूमः । अविशेषण इति किम् ?, आवां गार्ग्यौ ब्रूवः, अह पण्डितो ब्रवीमि, अहं चैत्रो ब्रवीमि । कथं नाढ्ये च दक्षा वयम् ?; त्वं राजा वयमप्युपासितगुरुप्रज्ञाऽभिमानोन्नताः ?, सा बाला वयमप्रगल्भमनसः ? इत्यादि, दक्षत्वादीनां

---

शब्दाद् द्वितीयादीनां विभक्तीना दर्शनात् तदर्थं यत्नान्तरमारभ्यमित्याशङ्कार्थं । परिहरति—**विभक्तिप्रतिरूपका** इति । श्लोकमेव **यथा परस्परमि**त्यादि दृष्टान्तप्रदर्शनेन द्रढयति ॥ १२० ॥

**जात्याख्यायां नवैकोऽसंख्यो बहुवत्** । जात्याख्यायामेकोऽसख्यो बहुवत् नवेत्यन्वय । जायेतेऽनया भिन्नेष्वभिन्नाऽभिधानप्रत्ययाविति–जाति । आख्यान चाऽऽख्या, तया षष्ठीसमासे जातेराख्या इति । तदनन्तरं वैषयिकेऽधिकरणे सप्तमी निमित्तसप्तमी वा—**जात्याख्यायामि**ति । जातिर्नामाऽयमेकोऽर्थ , तदभिधाने एकवचनमेव प्राप्तमत इदमारभ्यते, तदेतत्सर्वमाह—**जातेरेकत्वादि**त्यादि । **एकोऽर्थ** इति । एकसख्याक इत्यर्थं , लौकिक्या भेदपरिगणनरूपाया सख्याया जातिलक्षणोऽर्थोऽसावेको न तु वैशेषिकसिद्धान्तप्रसिद्धाया गुणपदार्थसंग्रहीताया , सा हि द्रव्य एव समवेता न पदार्थान्तरे इत्येतावता जात्यर्थस्य बहुवदित्यतिदेशो बहुवद्भावेन बहुत्वाऽऽश्रयकार्यप्रतिपत्त्यर्थो न जातिशब्दस्य बहुवचनविधानार्थ इति । तथा सति सपन्ना यवा इति यवशब्दादेव जातिशब्दाद् बहुवचन स्यात् न संपन्नशब्दात्तद्विशेषणभूतादिति । जात्यर्थस्य तु बहुवद्भावे सपन्नादिविशेषणान्यपि सामानाधिकरण्याद् यवादिशब्दोपात्ते जात्यर्थे वर्तन्त इति तेभ्योऽपि बहुत्वाऽऽश्रय बहुवचनमुपपन्नमित्याह—**जात्यर्थस्ये**त्यादि । **चैत्र., मैत्र** इति । नेह जातिरभिधेया यदृच्छाशब्दत्वादनयोरिति । जातिर्हि सामान्यमुच्यते, यच्छबलशाबलेयधवलधावलेयाद्यनेकव्यक्तिभेदेषु गौर्गौरित्याद्यनुवृत्तप्रत्ययकारणमिति । यदि च बालकुमारादिभेदेऽनुवर्तमानमभिन्न रूप जातिरुच्येत तदा न जाति कश्चिच्छब्दार्थोऽस्ति इति जातिग्रहणमनर्थक स्यात्, तस्मात् सादृश्यसामान्यमिह जातिर्न स्वरूपसामान्यमिति । **काश्यप** इति । कश्यपस्याऽपत्यमिति विग्रहे "विदादेर्वृद्धे" ६।१।४१। इत्यञि–काश्यप , अयञ्च काश्यपप्रतिकृतौ तत्तुल्येऽर्थे वर्तत इति । **काश्यपप्रतिकृतिरि**त्यनेन दर्श्यते । **भवत्ययं जातिशब्द** इति । गोत्राभिधायकत्वादिति शेष , **न त्वनेन** प्राधान्येन **जातिराख्यायत** इत्यभिप्राय । जातिविशिष्टा हि प्रतिकृतिरत्र प्रतिपत्तव्या, आख्याग्रहणाच्च प्राधान्येन जातावभिधेयायां बहुवद्भाव इति विज्ञायते । **व्रीहियवा**विति । द्वयोरत्र जात्योराख्या न त्वेकस्या इति एकग्रहणाद् बहुवद्भावो न भवति । **मगधेष्वि**ति । **स्तनौ पीना**वित्यत्र सव्यदक्षिणस्तनभेदेन जातिद्वयमुच्यते इत्येकग्रहणात् न भवति । एव**मक्षिणी शुभे** इत्यत्रापि । एव तर्हि **पीनाः स्तना** इत्यादि न भवितव्यमित्याह—**जातिमात्रविवक्षायामि**त्यादि । अयमर्थं – केचित् पदार्था प्रत्येक रमणीया न च तेषा संनिपातो रमणीयो, यथाऽञ्जनसनिपात , तत्र कलिङ्गेष्वक्षिणी शुभे इत्यत्र नैतद्विवक्षित शुभमक्षि कलिङ्गेष्विति, किं तर्हि ?, तुल्यलक्षणत्वादक्ष्णो सनिपात शुभ इति । इय च विवक्षा न द्वित्वोपादानमन्तरेण सिध्यतीत्युपात्तयो सव्येतरयोरक्ष्णोर्न बहुवद्भाव इति । यदा त्वक्ष्ण शोभनत्व विवक्षित न सनिपातशोभा तदा सव्येतरभेदोपादानेन नार्थ इति भवितव्यमेव पक्षे बहुवद्भावेन । नन्वेक अयेह कस्मान्न भवति ?, **एको व्रीहिः संपन्न. सुभिक्षं करोति**, अस्ति ह्यत्र एको जातिलक्षणोऽर्थ इत्याह—**असंख्य** इत्यादि । नन्वेक इति सख्याशब्द प्रयुज्यमान स्वत सदेकत्वमुद्भावयति, तेन चैकत्वेन विरुद्ध बहुत्वमिति बहुवदतिदेशो न भविष्यति किमसख्य इति विशेषणेन ?, सत्यम् , अस्यैवार्थस्याऽनुवादार्थमेतदित्यदोष ॥ १२१ ॥

**अविशेषणे द्वौ चाऽस्मदः** । चकारात् एक इति बहुवदिति नवेति च वर्तते । अस्मदो द्वावेकश्च वा बहुवत्, अविशेषणे इत्यन्वय । अस्मद इत्यत्र अनुकरणत्वादस्मच्छब्दकार्याप्रवृत्ति । **द्वावेकश्चाऽर्थ** इति । नन्वेकसंख्याकप्रत्यात्मवचनत्वादस्मद कथ द्वावर्थौ स्यातामिति ?, नैष दोष , आत्मत्व यदा परत्रोपचर्यते 'अय मे द्वितीय आत्मा' अहमेव वाऽयमिति, त्व चाऽहं च आवामित्येकशेषो वा तदा परस्याऽप्यस्मदर्थोपपत्तेरुपपन्नमस्मदर्थस्य द्वित्वमिति । **अविशेषण** इति । यद्यत्र पर्युदास स्याद्विशेषणादन्यस्मिन्निति तदा विशेषणे न विधिर्नाऽपि प्रतिषेधो विशेष्यस्य विशेषणादन्यस्मिंस्तु प्रयुज्यमाने विधिरिति सत्यप्यस्मदर्थस्य विशेषणे ततोऽन्यस्मिन् प्रयुज्यमाने स्यात्, अह मैत्रो ब्रवीमीति, मिवन्तस्य विशेष्यस्य भावात् । अतोऽविशेषण इति विशेषणस्याऽभाव इत्ययमर्थो विज्ञायत इत्याह—**न चेत्तस्ये**त्यादि । **आवा गार्ग्या**विति । अत्र गोत्र धर्मान्तरं सज्ञा चाऽस्मदर्थस्य भेदकत्वेनोपादीयत इत्यविशेषण इत्यतो न भवति । **कथमि**ति । **नाढ्ये च दक्षा वयम्, त्वं राजा वयमि**त्यादौ कथं सविशेषणस्य बहुवद्भावो दृश्यत इति प्रश्नार्थ । समाधत्ते—**दक्षत्वादीनामि**त्यादिना आदिशब्दात् उपासितगुरुप्रज्ञाभिमानोन्नतत्वाप्रगल्भमन-

---

१ °स्याXXविशे° पु० । २ °एको० पु० ।

विधेयत्वेनाऽविशेषणत्वात् भविष्यति, यदनूद्यमानमवच्छेदकं तद्विशेषणम् इति । एकाऽनेकस्वभावस्याऽऽत्मनोऽनेकस्वभावविवक्षायां बहुवचनं सिद्धमेव सविशेषणप्रतिषेधार्थं तु वचनम् ॥ १२२ ॥

## फल्गुनीप्रोष्ठपदस्य भे ॥ २ । २ । १२३ ॥

फल्गुनीशब्दस्य प्रोष्ठपदाशब्दस्य च भे–नक्षत्रे वर्तमानस्य द्वावर्थौ बहुवद् वा भवतः । कदा पूर्वे फल्गुन्यौ, कदा पूर्वाः फल्गुन्यः, कदा पूर्वे प्रोष्ठपदे, कदा पूर्वाः प्रोष्ठपदाः; उदिते पूर्वे फल्गुन्यौ, उदिताः पूर्वाः फल्गुन्यः, उदिते पूर्वे प्रोष्ठपदे, उदिताः पूर्वाः प्रोष्ठपदाः । भ इति किम् ?, फल्गुनीषु जाते फल्गुन्यौ माणविके । द्वावित्येव ?, तेनैकस्मिन् ज्योतिषि न भवति–दृश्यते फल्गुनी । एकवचनान्तः प्रयोग एव नास्तीत्यन्ये । फल्गुनीप्रोष्ठपदस्येति शब्दपरो निर्देशः किम् ?, तत्पर्यायस्य मा भूत्–अद्य पूर्वे भद्रपदे ॥ १२३ ॥

## गुरावेकश्च ॥ २ । २ । १२४ ॥

गुरौ–गौरवार्हेऽर्थे वर्तमानस्य शब्दस्य द्वावेकश्चाऽर्थो बहुवद् वा भवति । त्वं गुरुः, यूयं गुरवः, युवां गुरू, यूयं गुरवः, स कारुणिक उपाध्यायः, ते कारुणिका उपाध्यायाः; तौ कारुणिकावुपाध्यायौ, ते कारुणिका उपाध्यायाः; एष मे पिता, एते मे पितरः; अयं तपस्वी, इमे तपस्विनः, गुरुशिष्यौ, गुरुशिष्याः, इह भवानाह, इह भवन्तस्त्वाहुः । आपः, दाराः, गृहाः, वर्षाः, पञ्चालाः जनपदः, गोदौ ग्रामः, खलतिकं वनानि, हरीतक्यः फलानि, पञ्चालमधुरे; चञ्चाऽभिरूपो

---

स्त्वादिग्रहणम् । **यदनूद्यमानमवच्छेदकं तद्विशेषणमिति** । दक्षत्वादिक च विधीयमान नाऽनूद्यमानमिति नैवविधो विषय प्रतिषेधस्य । **एकाऽनेकस्वभावस्येति** । अयमर्थ –एकोऽप्यात्मा यथैकत्वेनाऽनुभूयते तथा द्रष्टा श्रोता मन्तेत्यादि नानात्वेनापि, न ह्येकान्तेनैकत्वेनाऽनेकत्वेन वेतरविनिर्मुक्तेन प्रतिपत्तिरस्ति, तत्र यथैकत्वेन द्वित्वेन च तस्मिन् विवक्षिते एकवचन द्विवचनञ्च तथा बहुत्वस्याऽप्युपपत्तेर्बहुत्वविवक्षायां बहुवचन सिद्धम् । एवं तर्हि किमर्थमिदमित्याह—**सविशेषणेत्यादि** । यथा युष्मदर्थे गुरौ चैकस्मिन्नपि बहुवचन प्रयुज्यते–यूय ब्रूथ, भवन्तो ब्रुवन्तीति तथाऽस्मदर्थस्याऽपि बहुवचने सिद्धे सविशेषणे तस्मिन् विवक्षिते द्वयोरेकत्र च बहुवद्भावप्रतिषेधार्थमिदं वचनमिति ॥ १२२ ॥

**फल्गुनीप्रोष्ठपदस्य भे** । अत्र बहुवदिति नवेति द्वाविति च वर्तते । भे फल्गुनीप्रोष्ठपदस्य द्वौ बहुवन्नवेत्यन्वय । फल्गुनी च प्रोष्ठपदा चेति फल्गुनीप्रोष्ठपदमिति शब्दपरो निर्देश , अतोऽर्थसबन्धे षष्ठी—**फल्गुनीप्रोष्ठपदस्येति** । फल्गुनीशब्दस्य प्रोष्ठपदाशब्दस्य च नक्षत्रे वर्तमानस्य यदभिधेयस्तस्य च द्वावित्यनुवर्तमान विशेषण, एतावता फल्गुनीप्रोष्ठपदाशब्दौ नक्षत्रशब्दावित्यर्थ । नक्षत्रशब्दश्चेहाऽर्थगत स्वभाव प्रवृत्तिनिमित्तीकृत्य यदि न वर्तेत तर्हि यावान् कश्चिन्नक्षत्रलभ्योऽर्थ स सर्वो न लभ्येत । नक्षत्रशब्दश्चेह चन्द्रोपेताया ज्योतिरवस्थाया प्रयुज्यते । तथा च चन्द्रोपेत ज्योतिर्विशेषमुपलभ्य ज्योतिर्विदो वदन्ति–अद्य नक्षत्र पूर्वा फल्गुन्य इत्यादि । विनाऽपि चन्द्रेण तदुपलक्षिते ज्योतिषि किमिदं नक्षत्र–फल्गुन्य प्रोष्ठपदा वेति, विनाऽपि चन्द्रेण ज्योतिर्दर्शनादय नक्षत्रव्यवहार । काले च "चन्द्रयुक्तात् काले०" इति प्रत्ययस्य 'लुबविशेषे' इति लुपि–पूर्वासु फल्गुनीषु गत , पूर्वासु प्रोष्ठपदासु गत इति, नाऽत्र सर्वत्रैकमनुवृत्तमतद्व्यावृत्त वस्तुरूपमुपलभ्यते । शब्दस्तु तस्याऽर्थस्य साधारणस्तद्रूपभेदादतस्तेनाऽसावर्थो लक्षणीय । एवमर्थ एव च 'फल्गुनीप्रोष्ठपदस्य' इति अर्थाद्व्यावृत्त षष्ठ्या शब्दपरो निर्देशोऽन्यथा 'फल्गुनीप्रोष्ठपद भ' इत्यभेदेन निर्दिश्येतेत्याह—**फल्गुनीशब्दस्येत्यादि** । **कदा पूर्वे फल्गुन्याविति** । चन्द्रोपेते ज्योतिषी तद्युक्तो वा कालोऽत्रार्थ , तस्य भावाना प्रवृत्तिविशेषत्वात् तत्त्वाध्यवसायात् फल्गुन्यादिरूपत्वाद् द्विरूपता । **उदिते पूर्वे फल्गुन्यौ** इत्यादाविति । ज्योतिरत्राऽर्थ । **फल्गुनीषु जात** इति । जातेऽर्थे "फल्गुन्याष्ट " ६।३।१०६। इति टप्रत्यये, "अवर्णेवर्णस्य" इतीकारलोपे, टित्त्वात् ङ्या—**फल्गुन्यौ माणविके** इति । भ इति वचनादत्र न भवति, माणविके इत्यनेन नक्षत्राऽर्थाऽवृत्तिता दर्शिता । **एकस्मिन् ज्योतिषि न भवतीति** । ननु फल्गुनीप्रोष्ठपदाशब्दौ नक्षत्रवाचित्वात् द्वित्वाऽव्यभिचारिणौ यतश्चन्द्रमसा योगे नक्षत्रता, तेन च द्वयोरेव नैकैकस्य, तद्धि तारमेव तारक नक्षत्रमुच्यत इति किमर्थं तस्य द्वाविति विशेषणमनुवर्त्यत इति ?, नैष दोष , भग्रहणेनाऽत्र ज्योतिष्ट्वस्योपलक्षितत्वात् तस्य च द्वयोरेकैकस्य चाऽविशिष्टत्वादत्रापि स्यात्—**दृश्यते फल्गुनीति** । **अन्ये** इति । शाकटायना । **अद्य पूर्वे भद्रपदे** इति । अर्थपरे हि निर्देशेऽत्रापि तदर्थस्य मियमानत्वात् बहुवद्भाव स्यादिति। अथ किमर्थमिदम् ?, न हि बहुवचनात् द्वित्वप्रतीतिरस्ति, बहुत्वस्य तत प्रतीते । बहुत्व च तत्र यथाकथञ्चित् संपाद्य, चन्द्रोपेते हि ज्योतिषी इति बहुत्व सिद्धम् । फल्गुनीप्रोष्ठपदाशब्दयोश्च चन्द्रमसि वृत्तिरुपचारात्, मुख्योपचरितयोश्चाऽर्थयोर्युगपदुपादानात् कालेऽपि तद्रूपाध्यारोपात् चन्द्रस्याऽसन्निहितत्वेऽप्युदिताः **पूर्वाः फल्गुन्य** इति पूर्वदृष्टसमुदायरूपेणैवाऽभिधानात् । द्विवचन च चन्द्राविवक्षायां तयोरेव ज्योतिषोर्भवति । न चैव तिष्यपुष्यादावतिप्रसङ्ग , तत्र बहुत्वसप्रत्ययाऽभावात् नियतविषयित्वादुपचारकल्पनाया अभावात् अर्थात् प्रतीयमानायाश्च गरीयस्त्वादितीदमुच्यते ॥ १२३ ॥

**गुरावेकश्च** । अत्र बहुवदिति नवेति द्वाविति च वर्तते । गुरौ द्वावेकश्च बहुवत् नवेत्यन्वय । गुराविति धर्मिप्रधानो निर्देश इत्याह—**गुरौ–गौरवार्ह** इति । **त्वं गुरुः, यूयं गुरव** इति । अत्रैकस्याऽर्थस्य पाक्षिके बहुवत्त्वे प्रयोगद्वयम् । एव द्वयोरर्थयोरपि पाक्षिके बहुवत्त्वे—**युवां गुरू, यूयं गुरव** इति । एवं **सकारुणिक उपाध्याय** इत्यादावपि बोध्यम् । **इह भवान्**–अयं भवान् "भवत्वायुष्मद्दी०" ७।२।९१। इत्यधिकारात्, "अप् च" ७।२।९२। इति अप्, "ककुत्रा०" ७।२।९३। इति पक्षान्निपात्यते । **इह भवन्त**०–इमे भवन्त । पञ्चालाना देशोऽप्युपचारात्—**पञ्चाला** इति । गोदौ–ह्रदौ, तत्समीपग्रामोऽपि—**गोदौ** । **खलतिकं वनानीति** । खलतीति "कुशिक०" इत्यादिना निपात्यते इत्याम्नाय , यद्वा खलान् तिक्नोति "मूलविभुजादय " क , खलतिकाऽऽख्यपर्वतसमीपवर्तिवनानामपि खलतिक इत्याख्या । हरति रोगानिति "हरुहि०" इति ईतके—**हरीतकी** । पञ्चालाश्च मधुरा च—**पञ्चालमधुरे** । चीयते–उपचीयते तृणैरिति—**चञ्चा**, "चिमेर्डोंच-

---

१ °प्रोष्ट° (सर्वत्र) पु० ।

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| ६२ | "ऋतो रस्त०" | —नन्विदं तद्धितग्रहणप्रयोजनमयुक्तं, कार्यमित्यत्र "ऋवर्ण०" ॥५।१।१७॥ इति घ्यणि तस्य णोपदेशाद् वृद्धेरेव प्राप्तेः ?, इति चेत्, उच्यते— | ॥३३।२८॥ |
| ६३ | "एदोतः०" | —न च एदोत इति सूत्रवैयर्थ्यात् पदान्ते इत्यस्य अस्य इत्यनेनाऽसम्बन्ध इति वाच्यम् । | ॥३३।३२॥ |
| ६४ | "स्वरे वा" | —ननु गोरोतो विद्यमानत्वेन कथं नाऽव इत्यादेशः ?, इत्याह— | ॥३४।२४॥ |
| ६५ | "इन्द्रे" | —नन्वेव गवेन्द्रयज्ञ इति सिद्धावपि गवेन्द्र इति कथमिति चेत् ? | ॥३४।२८॥ |
| ६६ | " | —ननु पूर्वसूत्रेणैव सिद्धे किमर्थमिदम् ?, इत्याह— | ॥३४।३०॥ |
| ६७ | "वाऽत्यसन्धि." | —ननु चित्रगो अग्रं,-अत्र गोरोतो विद्यमानत्वेन कथं नाऽसन्धिः ?, इत्याह— | ॥३४।३४॥ |
| ६८ | "प्लुतोऽनितौ" | —नन्वस्य वाक्यान्तत्वाभावात् कथं प्लुतः ?, इति चेत्, | ॥३४।३७॥ |
| ६९ | "ईदूदे०" | —ननु ईदूदेद्द्विवचनमित्यस्य कोऽर्थः ?,— | ॥३५।११॥ |
| ७० | " | —नन्वेवं मुनी, साधू ; खट्वे इत्यादौ ईदूदेद्रूपद्विवचनसत्त्वेन तदन्तद्विवचनाभावात् कथमसन्धिरिति चेत् ?,— | ॥३५।१६॥ |
| ७१ | " | —ननु 'तव ई आसाते' इत्यत्र स्वराव्यवहितस्य ई इति द्विवचनस्याऽसन्धौ पूर्वेणाऽपि तव इत्यस्याऽकारेण सहाऽसन्धिः स्यात् ?, इत्यत आह— | ॥३५।२३॥ |
| ७२ | "चादिः स्वरो०" | —तितउशब्दे उकारस्य चादित्वाभावात् कथमसन्धि. ?, इत्याशङ्कते । | ॥३६।१९॥ |
| ७३ | " | —ननु जानु उ अस्य रुजति इत्यत्र स्वराव्यवहितपूर्वस्य चादेः स्वरस्याऽनेन सन्धिप्रतिषेधे पूर्वेण सहाऽप्यसन्धिः ?, इत्याह— | ॥३६।२६॥ |
| ७४ | " | —नन्वनाङिति पर्युदासः, स किमर्थः ?; इति पृच्छति । | ॥३६।३६॥ |
| ७५ | " | —ननु सर्वत्र 'आ' इत्यस्यैव श्रवणं तथा च कथं बोध्यमयमाकार आङोऽयमनाङ इति ? | ॥३६।३७॥ |
| ७६ | "ॐ चोञ्" | —अथ ॐ इत्येव चादिषु पठ्यता किमादेशेन ?, नैवम् ; | ॥३७।१०॥ |
| ७७ | "सौ नवेतौ" | —नन्वत्राऽनुकरणे विभक्तिः कथं न भवतीति विशङ्क्य स्याद्वादसमाश्रयणेन अनुकार्यानुकरणयोर्भेदाभेदविवक्षापक्षद्वयेऽभेदविवक्षायामर्थवत्त्वाभावेन नामत्वाभावान्न विभक्त्युत्पत्ति. ?, इत्याह— | ॥३७।२४॥ |
| ७८ | "ॐ चोञ्" | —नन्वत उञिति एतदर्थकं अञ्वर्गादित्यत्राऽनुवर्तते, तथा सति जानू अस्य० इत्यादौ कथं "अञ्वर्गात्०" इति वत्वमिति चेत् ?, उच्यते— | ॥३७।३५॥ |
| ७९ | " | —ननु ॐ इति चादिगणपाठे "चादि. स्वरोऽनाङ्" इत्यनेनाऽसन्धौ सति सिद्धं, उ इति उञ् इत्येतत्सूत्रेण सिद्धं, तदभावपक्षे "इवर्णादे०" इति वत्वे विति, इति रूपत्रयसिद्धौ ॐ च इत्यादेशवचनं किमर्थम् ?, इत्याशङ्कते । | ॥३७।३६॥ |
| ८० | "अञ्वर्गात्०" | —ननु कुङ्ङास्ते इत्यत्र परत्वाद्वत्वापेक्षया पूर्वं "ह्रस्वा०" इति द्वित्वे, ततोऽनेन वत्वे रूपसिद्धौ असन् इति किमर्थमिति चेत् ?, उच्यते— | ॥३८।२०॥ |
| ८१ | "अइउवं०" | —ननु पदान्ते इत्यनुवृत्तौ सूत्रेऽन्तग्रहणं किमर्थम् ?, इत्यत आह— | ॥३८।२६॥ |
| ८२ | " | —ननु नामँ अत्र, नाम अत्र, इत्यादौ अनुनासिकादेशे वा तदभावे कथं न सन्धिः ?, इत्याह— | ॥३८।३०॥ |
| ८३ | " | —ननु वृक्ष इत्यत्राऽकारस्य पदान्तत्वाभावेन सूत्राप्रवृत्तेः पदान्त इति अन्त इति च पदद्वयफलमिदं कथं भगवता वृत्तिकृता अन्त इत्यस्यैव फलतया प्रदर्शितमिति चेत् ?,— | ॥३८।३३॥ |
| ८४ | " | —ननु कथं अ !,-विष्णो !, इत्यत्र चादिरिति सूत्राऽविषयः ?, इत्यत आह— | ॥३८।३७॥ |
| ८५ | "तृतीयस्य०" | —ननु षण्णया इत्यादौ "अदीर्घाद्विरामैकव्यञ्जने" ॥१।३।३२॥ इत्यनेन तृतीयस्य द्वित्वे कृतेऽन्त्यस्याऽनुनासिके च तृतीयस्याऽपि श्रुतिः प्राप्नोति ?, नैवम्, | ॥३९।९॥ |
| ८६ | " | ननु वर्ग्या अनुनासिकाः पञ्च ङञणनमा इति वर्गतृतीयस्यैकस्य स्थाने कथमादेशपञ्चकम् ?, इत्याह— | ॥३९।१५॥ |
| ८७ | " | —ननु येषां मते व्यञ्जनस्य स्थानेऽनुनासिके परेऽनुनासिक इति तन्मते "ह्रस्वाद् ङणनो द्वे" ॥१।३।२७॥ इति द्वित्वं भवति नवा ?, इत्यत आह— | ॥३९।३१॥ |
| ८८ | " | —ननु षड्नया इत्यादौ अनुनासिकात् पूर्वं डकारद्वित्वे षड्ड् नया इति स्थितेऽन्त्यडस्याऽनेनाऽनुनासिके षड्ड् नया इति भाव्यम् ?, इत्याशङ्कते । | ॥३९।३५॥ |
| ८९ | "प्रत्यये च" | —ननु पूर्वसूत्रेणैव पदान्तस्थस्य वर्गतृतीयस्य पञ्चमादौ प्रत्ययेऽनुनासिके सिद्धे किमर्थमिदम् ?, इत्याह— | ॥४०।१४॥ |
| ९० | "ततो हः०" | —ननु तत इति किमर्थम् ?, यतो 'ऽर्थवशाद्विभक्तिपरिणाम' इति न्यायात् पूर्वसात्तृतीयस्येत्यनुवृत्त्याऽत्र पञ्चम्यन्तत्वेन विपरिणामात्तृतीयादित्यर्थलाभादिति चेत् ?, उच्यते— | ॥४०।२४॥ ॥४०।२५॥ |
| ९१ | " | —न च पदान्ते हकारासम्भव. ?, भूतपूर्वगत्या तत्सम्भवात् । | |
| ९२ | " | —यद्यपि हकारस्य कण्ठ्यत्वेन तदासन्नघकारेणैव भाव्यं न झढधभैरिति पूर्वग्रहणकर्तव्यं तथापि सूत्रे चतुर्थ इत्युक्त्या निमित्तप्रत्यासत्तिराश्रीयते, अन्यथा ह्रो घ इति विदध्यात् | ॥४०।२७॥ |
| ९३ | "प्रथमा०" | —नन्वेतेषु तृतीयस्य प्रथमे सत्यस्य प्रवृत्तेरिति पूर्वोक्तत इत्यनुवृत्त्य सर्वेष्टसिद्धौ प्रथमादिति किमर्थम् ?,— | ॥४०।३२॥ |

| क्र० | सूत्रम्। | शङ्का। | पृ० पं० |
|---|---|---|---|
| ९४ | "प्रथमा०" | —न चैतत्सूत्राऽपेक्षया "अघोषे०" इति परत्वात् पूर्वमेव प्रथमो विधास्यति, यतस्तत्राऽन्वित्यधिकारसत्त्वादिति चेत्?,—उच्यते— | ॥४०।४३॥ |
| ९५ | "रः कख०" | —यद्यपि 'निरनुबन्धग्रहणे न सानुबन्धस्य' इति न्यायादत्र सानुबन्धस्याऽऽदेशो न प्राप्नोति, तथापि "अरोः सुपि०" ॥१।३।५७॥ इति सूत्रे "र० पदान्ते०" इत्यनेन र इत्यनुवृत्तौ रुवर्जितस्य रेफस्य सुपि परे रेफ एव सेत्स्यति किमर्थं 'अरो०" इति?, तद्बोधयति 'निरनुबन्धग्रहणे सामान्यग्रहणं' तथा चाऽत्र सामान्यग्रहणं भवति। | ॥४१।१८॥ |
| ९६ | "शषसे०" | —ननु शषसमिति विहाय स इति न्यासेन 'शषसे सो वा' इत्येव सूत्र्यताम्?, कश्शेते, कष्षण्डः, कस्साधुरिति, "सस्य शषौ" ॥१।३।६१॥ इत्यनेनैतद्विहितसकारस्य शषौ, कस्साधुरित्यत्राऽनेन स इति सकलाभीष्टप्रयोगसिद्धेः। | ॥४१।२३॥ |
| ९७ | ,, | —न च "चटते सद्वितीये" इत्युत्तरार्थमिदं, तत्राऽपि स इत्यनुवृत्त्या तस्य "सस्य शषौ" इत्यनेन 'शषौ' सिध्यतः, कश्चरति, कष्टीकते इत्यादौ। | ॥४१।२४॥ |
| ९८ | ,, | —न च कश्शेते इत्यादौ "धुटस्तृतीय०" इति तृतीयबाधनाय शषयोर्विधानमिति वाच्यं, 'असिद्धं बहिरङ्गमन्तरङ्गे' इति न्यायेन कश्शेते इत्यादौ अन्तश्शेते इत्यादौ च रुत्वस्य शत्वस्य चाऽसिद्धत्वेन तृतीयाप्रवृत्तेरिति चेत्?,— | ॥४१।२५॥ |
| ९९ | ,, | —ननु गीर्षु, धूर्षु इत्यादौ "नाम सिद०" इति पदान्त रेफस्य षपरस्य कथं न षः?, इति शङ्कते— | ॥४१।३१॥ |
| १०० | ,, | —ननु वासर् क्षौमं, अद्भिर् प्सातं, अत्र पदान्तसस्य "सो रुः" इति रुत्वे "र० कख०" इति कथं न भवति?, असेर् त्सरु०—अत्र पदान्तसस्य रेफे सति "चटते सद्वितीये" इति कथं न स०?, इत्याह— | ॥४१।३६॥ |
| १०१ | ,, | —ननु नवा इत्यनुवृत्तिस्वीकारेण विकल्पबोधेऽत्र वा इति किमर्थम्?, इत्याह— | ॥४१।३८॥ |
| १०२ | "चटते०" | —नन्वत्र स्वरूपेण 'चछटठतथे' इत्यसन्देहार्थं किं न निर्दिश्यते?, इति चेत्, सत्यम्,— | ॥४१।४३॥ |
| १०३ | ,, | —नन्वेवं सत्यपि चविशिष्ट० छः, टविशिष्ट० ठः, तविशिष्टः थ० इति यत्र भवेत्तत्रैवेदं स्यादिति नाऽऽशङ्कनीयम्। | ॥४१।४५॥ |
| १०४ | "नोऽप्रशा०" | —ननु सूत्रेऽधुटीत्युक्त्याऽधुटि परतो यच्चटतं तस्मिन्नकारस्य शादयो भविष्यन्तीति किमर्थं परग्रहणमिति चेत्?, सत्यम्,— | ॥४२।२०॥ |
| १०५ | "द्वि० कानः०" | —ननु 'कास्कान्' इत्यत्राऽनेन सकारे सति "सो रुः" इति रुत्वं कुतो न भवति?, इत्याह— | ॥४३।२७॥ |
| १०६ | ,, | —ननु कस्यादिरिति तत्पुरुषपक्षेऽनुस्वारस्य व्यञ्जनत्वेनैतत्सूत्रविहितसस्य "पदस्य" इति लोपः कथं न भवतीति चेत्?, उच्यते— | ॥४३।२९॥ |
| १०७ | "स्सटि सम०" | —न चाऽत्र सम् स्क इत्यवस्थाया प्रत्ययात् पूर्वमेव सर्वस्य निमित्तस्य सद्भावात् "स्सटि सम०" इति सादादेशप्रसङ्ग इति वाच्यम्?,— | ॥४३।३९॥ |
| १०८ | "लुक्" | —ननु 'सटि समो लुक् च' इत्येवं योगविन्यासे लक्ष्यसंसिद्धौ, कथं "लुक्" इति भिन्नयोगाऽऽरम्भः?,— | ॥४४।१३॥ |
| १०९ | ,, | —न चैकयोगे लुक्पक्षे अनुस्वारानुनासिकौ स्याताम्, सकारसन्नियोगशिष्टत्वादनुस्वारानुनासिकयो० सकारनिवृत्तावनुस्वारानुनासिकयोरपि निवृत्तिरिति चेत्?, सत्यम्;— | ॥४४।१४॥ |
| ११० | "तौ मुमो०" | —ननु पूर्वस्मादनुवृत्तं पदान्त इति मुमोश्चैकविभक्तिनिर्दिष्टत्वात् कथं मकारस्यैव विशेषणमुक न स्वागमस्य?, इत्यत आह— | ॥४४।२३॥ |
| १११ | ,, | —त्वन्तरसीत्यादौ पतत्सूत्रविहितनकारस्य "नोऽप्रशानो०" इति कस्मान्न भवति?, इत्याह— | ॥४४।४१॥ |
| ११२ | "मनयव०" | —ननु 'मनयवले' इति सप्तम्यन्तपाठे परशब्दाभावे च मकारादौ परे यो ह्कारस्तस्मिन् इत्यर्थेनाऽभिप्रेतलक्ष्यसंसिद्धौ, किमर्थं परग्रहणमिति चेत्?, उच्यते— | ॥४५।१६॥ |
| ११३ | "ङ्णोः कटा०" | —ननु अन्तग्रहणं निष्फलं 'ङ्णो० कटौ' इत्यनुक्त्वा 'ङ्ण० कटं' इति समाहारद्वन्द्वं कृत्वा पञ्चम्यन्तत्वेनाऽऽदेशत्वनिरासे लक्ष्यसिद्धेरिति चेत्?, मैवम्;— | ॥४५।२७॥ |
| ११४ | "ङ्न० स०" | —ननु षड् इत्यत्र "अघोषे प्रथमोऽशिट०" इति टत्वं कथं न भवति?, इत्याह— | ॥४५।४१॥ |
| ११५ | ,, | —ननु मधुक् इत्यत्र "णेरनिटि" इति जातस्य णिलोपरूपस्वरादेशस्य "स्वरस्य परे प्राग्विधौ" ॥७।४।११०॥ इति सूत्रेण स्थानिवत्त्वात् शलोपः "संयोगस्यादौ०" इति न प्राप्नोति,— | ॥४६।१७॥ |
| ११६ | ,, | —"न सन्धिङीयक्विद्विदीर्घासद्विधावस्क्लुकि" ॥७।४।१११॥ इत्यत्राऽस्क्लुकीति वचनात् स्थानित्वप्रतिषेधाभावादिति चेत्?, न,— | ॥४६।१८॥ |
| ११७ | ,, | —ननु ङ्न इति कथ?, ङ्न इति "तवर्गस्य०" इत्यनेन भाव्यमिति चेत्, सत्यम्;— | ॥४६।२१॥ |
| ११८ | "न० शि ञ्" | —ननु "ङ्न० स त्सोऽश्वः" इति सूत्रे न इति पृथग्योगविधानेन 'अर्थवशाद्विभक्तिपरिणाम०' इति न्यायेन पञ्चम्यन्तस्य तस्य षष्ठ्या विपरिणामेन अत्राऽनुवृत्तौ स्थानित्वं भविष्यति किमर्थं सूत्रे न इत्युपादानम्? | ॥४६।२३॥ |
| ११९ | ,, | —यदि चोच्येत तुल्ययुक्त्या सूत्रे शि इति षष्ठ्या विपरिणामे शकारस्य स्थानित्वं कस्मान्न?, इति चेत्,— | ॥४६।२५॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| १२० | "नः शि ञ्च्" | —नन्वत्र "चजः कगम्" इत्यनेन कत्वं कथं न भवति ?, इत्याह— | ॥४६।३१॥ |
| १२१ | "घोषवति" | —ननु पूर्वसूत्र एव घोषवद्ग्रहणं क्रियतामर्थस्य समानत्वात् किं पृथग्योगेन ?,—सत्यम्; | ॥४७।१६॥ |
| १२२ | "अवर्णभो०" | —ननु सन्धिरूपतायामसन्धिरिति प्रतिषेधो युक्तः, लुक्तु अभावरूपत्वात् सन्धिरूप एव न भवतीति कथं स प्रतिषेध्यः ?, इत्यत आह— | ॥४७।२२॥ |
| १२३ | " | —ननु को गच्छतीत्यादौ पूर्वेणोत्वं अनेन च लोपः प्राप्त इत्युभयप्राप्तौ परत्वाल्लोप एव स्यादिति चेत् ?,-न, | ॥४७।२५॥ |
| १२४ | " | —न च "अवर्णभो०" इति सूत्रे 'अवर्ण' इत्यत्र वर्णग्रहणाज्जातिग्रहणेन सर्वविधाकारग्रहणे 'प्रतिलक्ष्यं लक्षणोपप्लव' इति सिद्धान्तादरे ह्रस्वाकारविषयकस्याऽस्याऽपि निरवकाशत्वमिति वाच्यम् । | ॥४७।२६॥ |
| १२५ | " | —ननु सति सद्भावे प्रतिषेध उपपद्यते, अवर्णादिभ्यस्तु घोषवति रोर्लुकि सन्धिसम्भव एव नास्ति ?, इत्यत आह— | ॥४७।३३॥ |
| १२६ | "ह्रस्वाद्०" | —ननु कुर्वन्नास्ते, कृषन्नास्ते इत्यत्राऽनेन नस्य द्वित्वे सति द्वितीयनस्य पदान्तत्वेऽपि पूर्वस्य नस्याऽनन्त्यस्य "रषृवर्णान्नोण०" ॥२।३।६३॥ इत्यनेन णत्वं कथं न भवति ?,-इत्याह— | ॥४९।२२॥ |
| १२७ | " | —ननु चाऽत्र मा भूदनेन द्वित्वं "अदीर्घाद्विरामैकव्यञ्जने" इत्यनेन द्वित्वं भविष्यति तत्किमर्थमेतन्निवृत्तये स्वर इत्युच्यत इति चेत् ?, सत्यम्; | ॥४९।२७॥ |
| १२८ | " | —ननु ह्रस्वात् परेषां पदान्ते वर्तमानानां ङ्णनां अनेन द्वित्वे सति कथं "उणाद्यः", "अनतो०" इत्यादयो निर्देशाः ?, इत्यत आह— | ॥४९।३१॥ |
| १२९ | "स्वरेभ्य." | —ननु स्वरादित्युक्तेऽपीष्टस्य सिद्धत्वाद्बहुवचनं व्यर्थं ?, इत्यत आह— | ॥५०।३१॥ |
| १३० | "ह्रीर्दह्०" | —ननु द्वित्वं कृतमपि 'निमित्ताभावे नैमित्तिकस्याऽप्यपाय' इति न्यायेन निवर्त्स्यति किमनुग्रहणेन ?, इति चेत्, न; | ॥५१।२१॥ |
| १३१ | "अदीर्घाद्०" | —ननु त्वक् इत्यादौ "पदस्य" इति संयोगान्तलोपः कथं न भवति ?, इत्याह— | ॥५१।३९॥ |
| १३२ | " | —यद्यपि त्वक् इत्यत्र "पदस्य" इति संयोगान्तलोपस्याऽऽदेशबलादभावेऽपि "संयोगस्यादौ स्कोर्लुक्" इति लोपः पूर्वककारस्य प्राप्तस्तथापि ककारादन्यत्र द्वित्वश्रुतेश्चाश्रितार्थ्येऽपि सूत्रे पूर्वसादर्हस्वरस्येत्यनुवृत्त्या तत्र रेफहकाररूपव्यक्त्युपादानात् 'व्यक्तिः पदार्थ आश्रीयते' तत्र च ककारविषयस्य द्वित्वस्याऽऽनर्थक्यं मा भूदिति न भवति । | ॥५१।४२॥ |
| १३३ | "ततोऽस्याः" | —नन्वस्मिन्नन्तरङ्गे द्वित्वे कर्तव्ये 'असिद्धं बहिरङ्गम्' इति न्यायेन बहिरङ्गो याद्यादेशः कथं नाऽसिद्धो भवति ?,- | ॥५२।२३॥ |
| १३४ | " | —न चाऽस्य योगस्य वैयर्थ्यं ?,-ध्यानमित्यादावनादेशरूपे यादौ तस्य सावकाशत्वादिति चेत् ?, सत्यम्; | ॥५२।२३॥ |
| १३५ | " | —ननु दृष्यत्र इत्यादौ तकारात् परस्य रस्य कस्मान्न द्वित्वमिति चेत् ?, | ॥५२।२५॥ |
| १३६ | "म्नां धुड्०" | —ननु सूत्रे म्नामिति बहुवचनं किमर्थं ?, इत्यत आह— | ॥५४।११॥ |
| १३७ | "रो रे लुग्०" | —नन्वत्राऽपदान्त इत्यनुवर्तेत तदा अजर्घाः, अपास्पाः, अचोकूः, अचाखाः, अचाकाः, अपापाः इत्यादिष्वेव सूत्रं प्रवर्तेत न स्वाराज्यमित्यादौ इति चेत् ?, सत्यम्; | ॥५५।११॥ |
| १३८ | " | —न हीकारात् परस्य रेफस्य रेफेऽपदान्ते सम्भवोऽस्ति यथा अग्नी रथेन, नीरक्तमित्यादौ | ॥५५।१३॥ |
| १३९ | " | —अकारोकाराभ्या परस्य रेफस्य हि रेफेऽपदान्ते पदान्ते च सम्भवो यथा-अजर्घा., अचोकूः, पुना रमते; दूरक्तमित्यादौ । | ॥५५।१३॥ |
| १४० | " | —अपि च सूत्रे भिन्नस्थानि-निमित्तकथनेनाऽपि तदननुवृत्तिरेव बोध्या । | ॥५५।१५॥ |
| १४१ | " | —ननु सूत्रे रो इत्यनेन सानुबन्धो निरनुबन्धो वा ?, नाऽऽद्य., तथा सति अग्नी रथेनेत्यादि सिद्धावपि पुना रमते इत्यादि न सिध्येत्, न द्वितीयस्तथा सति पुना रमते इत्यादि सिद्धावपि अग्नी रथेनेत्यादि न सिध्येत् । | ॥५५।१६॥ |
| १४२ | " | —न च लक्ष्यानुरोधेनोभयपरिग्रह., तस्य सर्वत्र नियामकत्वेऽतिप्रसंगादिति चेत् ?,— | ॥५५।१७॥ |
| १४३ | " | —अथ अग्नी रथेनेत्यादौ व्यवहितस्याऽकारस्य दीर्घ. कस्मान्न भवति ?, इत्याशङ्कायामाह— | ॥५५।२०॥ |
| १४४ | " | —ननु सामान्यनिर्देशादनन्तराणामेवेति कुतो लभ्यत इति चेत् ?, उच्यते— | ॥५५।२०॥ |
| १४५ | "उदः स्था०" | —कथमुत्स्कन्दतीति उत्कन्दको रोग इति ?, पृषोदरादित्वात् । | ॥५६।८॥ |
| १४६ | " | —उत्पूर्वात् 'ष्ठा' धातोर्यङन्ता द्विप्रत्यये सिज्लुगादौ उदस्थादत्र सकारलोप. कस्मान्न भवति ?, | ॥५६।२३॥ |
| १४७ | " | —ननूदस्थादित्यत्राऽडागमात् पूर्वं कथं न सलोप. ?, इति चेत्; | ॥५६।२६॥ |
| १४८ | " | —ननु उत्स्थान इत्यत्र उद. परत्र स्थाधातोर्विद्यमानत्वात् कुतो न सलोप. ?, इत्यत आह— | ॥५६।२७॥ |
| १४९ | " | —ननु उत्स्थान इत्यत्र कुतो ज्ञायते उद इत्यविशेषणं स्थाधातोरिति ?,— | ॥५६।२९॥ |
| १५० | " | —'उदः स्कन्दे रोगे' इति वक्तव्यं, उदः परस्य स्कन्दे. सकारस्य लोपो भवति; कथमन्यथा उत्कन्दको रोग इति सिध्यतीति पृच्छति । | ॥५६।३१॥ |

| क्र० | सूत्रम्। | शङ्का। | पृ० पं० |
|---|---|---|---|
| १५१ | "एतदश्च०" | —अपि च 'अनञ्नञ्समासे' इत्यनेन तदन्तविधिः 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायश्च ज्ञाप्यते। | ॥५७।१७॥ |
| १५२ | " | —ननु प्रसज्यप्रतिषेधार्थकनञो ग्रहणे वाक्यभेद इति चेत्?,— | ॥५७।२०॥ |
| १५३ | " | —सेरिति सानुबन्धोपादानं कथम्?, इत्यत आह— | ॥५७।२४॥ |
| १५४ | " | —अथाऽत्र परत्वादेत्त्वे षत्वे च कृते सकारस्याऽभावाल्लोपो न भविष्यतीति चेत्?, उच्यते— | ॥५७।२५॥ |
| १५५ | "धुटो धुटि०" | —नन्वत्र स्थानिनिमित्तयोः समसंख्यावचनत्वात् यथासंख्यप्रतिपत्तौ धकारस्य धकारे एव लोपो विज्ञायेत, इत्यत्र प्रसङ्ग एव नाऽस्तीति किमेतन्निवृत्त्यर्थेन स्वे इति ग्रहणेनेति चेत्?, उच्यते— | ॥५८।२०॥ |
| १५६ | "तृतीयस्तृ०" | —अथ पृथङ्निमित्तत्वेनोपस्थानान्निमित्तानुवृत्तिः कथं नेष्यते?, इति चेत्,— | ॥५८।२५॥ |
| १५७ | " | —तथा च तत्र तत्र प्रकृतानुप्रकर्षणाय चकारस्य क्रियमाणत्वं यथा "मो नो म्वोश्च" इत्यादौ, इह तु तदकरणात् प्रकृते तदननुवृत्तिरेव, इत्याह— | ॥५८।२६॥ |
| १५८ | "रः पदान्ते०" | —कथं नृपतेरपत्यं नार्पत्यः?, नृकुट्यां भवो नार्कुटः?, तवकारः?, प्राच्छेति?, इत्यादि, | ॥५९।१२॥ |
| १५९ | " | ननु गीरित्यादौ दीर्घात् पूर्वमेव विरामाघोषयोरनेन विसर्गे निमित्तरेफस्याऽभावात् कथं "पदान्ते" ॥२।१।६४॥ इति दीर्घः?, इत्यत आह— | ॥५९।३९॥ |
| १६० | "ख्यागि" | —अथ किमर्थमिदं ख्यागि रेफस्य पदान्तत्वात् पूर्वेणैव सिध्यतीति चेत्?, सत्यम्; | ॥५९।४६॥ |
| १६१ | "शिट्यघो०" | ननु "रः पदान्ते०" इत्यनेन विसर्गे सिद्धे किमर्थमिदम्?, इत्यत आह— | ॥६०।१८॥ |
| १६२ | "अरोः सुपि०" | —ननु रेफस्य सिद्धत्वात् विधेश्चाऽप्राप्तप्रापणरूपत्वाद्रेफस्य रेफविधानमनर्थकं?, न त्वनर्थकं, नियमार्थत्वेन कार्यान्तरबाधनार्थत्वात्?, इत्याह— | ॥६०।२६॥ |
| १६३ | "वाऽहर्पत्या०" | —ननु वृत्तिप्रदर्शितेभ्योऽन्यान्यपि सन्तीति कुत एतत्?, उच्यते— | ॥६०।३८॥ |
| १६४ | "तवर्गस्य०" | —ननु तवर्गस्य कार्यित्वात् तेन च विशिष्टवर्णसमुदायस्याऽभिधानात्तच् शेते इत्यादिषु एकैकस्य तवर्गशब्दाप्रतीतौ कथं कार्यित्वम्?, इति चेत्, उच्यते— | ॥६१।२२॥ |
| १६५ | " | —ननु यथा पूर्वेण चवर्गेण योगे तवर्गस्य चवर्ग इत्युदाहृते कथं नोदाहृतं पूर्वेण शकारेण?, इत्यत आह— | ॥६१।३६॥ |
| १६६ | " | —ननु पूर्ववत् परत्र षकारेण योगेऽपि कथं नोदाहृतम्?, इत्यत आह— | ॥६१।३८॥ |
| १६७ | " | —अथ तच् शेते, मज्जतीत्यादौ "चजः कगम्" ॥२।१।८६॥ इति आदेशभूतयोश्चजयोः कगौ कस्मान्न भवतः?, उच्यते— | ॥६२।१७॥ |
| १६८ | " | —ननु तच् शेते इत्यादौ मा भूत् चस्य कत्वं, मज्जति इत्यादौ जकारस्य धुडाश्रयं गत्वं कस्मान्न भवति?, इत्याह— | ॥६२।२१॥ |
| १६९ | "लि लौ" | —अथ किमर्थं सूत्रे लौ इति द्विवचनम्?, | ॥६३।२८॥ |
| १७० | "अत आः०" | —नन्वत्र "एद्बहुस्भोसि" ॥१।४।४॥ इत्येत्त्वं कथं नेति चेत्?,-उच्यते— | ॥६४।१८॥ |
| १७१ | " | अत्राऽऽकारोऽप्राप्तप्रापणार्थः, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न्यायेनाऽकारसंनिपातेन विधीयमानो यकारस्तद्विघाताय कथं प्रभवतीति न वाच्यं, यग्रहणवैयर्थ्यप्रसंगात्। | ॥६४।२०॥ |
| १७२ | " | —यद्यप्यासन्न इति न्यायादाकारः कण्ठ्यादिधर्मत्वेन तत्सदृशस्यैव स्थानिनो भवन्नकारस्यैव भविष्यति, तथाप्यवर्णादिक्रमेण कार्याणामत्र कार्यविधानात्तमन्तरेण च सर्वमुखस्थानमवर्णादेरपि स्यादित्यत आह— | ॥६४।२१॥ |
| १७३ | " | —नन्वत्र 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इति न्यायेन स्यादाविति लब्धे किमर्थं तद्?, इति पृच्छति। | ॥६४।२६॥ |
| १७४ | " | —न चाऽऽशङ्क्यम् "त्रिचतुरः०" ॥२।१।१॥ इति स्यादावित्यस्य तत्र ग्रहणं, यतस्तत्र तद्ग्रहणस्य निष्फलत्वात्। | ॥६४।२९॥ |
| १७५ | " | —अपि चाऽत्र स्यादावित्यधिकारार्थं, अन्यथा तस्य "ङित्यदिति" ॥१।४।२३॥ इत्यत्र विशेष्यतया सम्बन्धाभावेन शुचिशब्दाद् ङयां तेन प्रत्ययत्वादेत्वस्य प्राप्तेः— | ॥६४।२९॥ |
| १७६ | "भिस ऐस्" | —नन्वत्र "एद्बहुस्भोसि" इति परत्वादेत्त्वं कथं न भवतीति चेत्?,-उच्यते— | ॥६४।३५॥ |
| १७७ | " | —न च 'साम्प्रतिकाभावे भूतपूर्वगतिः' इति न्यायेन कृतेऽप्येत्वे सावकाशत्वमैस्त्वस्येति वाच्यं, सम्भवति मुख्ये गुणकल्पनाया अयोगात्। | ॥६४।३६॥ |
| १७८ | " | —परत्वात् पूर्वमेत्त्वमित्यपि न वाच्यं, उभयोरन्यत्र सावकाशयोरेकत्र युगपत्प्रवृत्तौ स्पर्द्धसम्भवे परत्वसम्भवादिति। | ॥६४।३७॥ |
| १७९ | " | —न चाऽत्रैसोऽन्यत्र सावकाशत्वमस्ति, अतोऽपवादत्वेनैवैत्त्वस्याऽयं बाधकः। | ॥६४।३७॥ |
| १८० | " | —इह कश्चिदविमृश्यकारी एत्वैस्त्वयोरुत्सर्गापवादभावमपहृत्य परत्वादेत्त्वप्रवृत्तिं कथयन् भूतपूर्वगत्या नित्यत्वमैस्त्वस्याऽऽचक्षाण एत्त्वस्यैवाऽयं बाधक इति प्रतिपादयति, यदाह— | ॥६४।३८॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| १२० | "नः शि ञ्च्" | —नन्वत्र "घजः कगम्" इत्यनेन कत्वं कथं न भवति ?, इत्याह— | ॥४६।३१॥ |
| १२१ | "घोषवति" | —ननु पूर्वसूत्र एव घोषवद्ग्रहणं क्रियतामर्थस्य समानत्वात् किं पृथग्योगेन ?,—सत्यम्; | ॥४७।१६॥ |
| १२२ | "अवर्णभो०" | —ननु सन्धिरूपतायामसन्धिरिति प्रतिषेधो युक्तः, लुकु अभावरूपत्वात् सन्धिरूप एव न भवतीति कथं स प्रतिषेध्यः ?, इत्यत आह— | ॥४७।२२॥ |
| १२३ | " | —ननु को गच्छतीत्यादौ पूर्वेणोत्वं अनेन च लोपः प्राप्त इत्युभयप्राप्तौ परत्वाल्लोप एव स्यादिति चेत् ?,-न, | ॥४७।२५॥ |
| १२४ | " | —न च "अवर्णभो०" इति सूत्रे 'अवर्णे' इत्यत्र वर्णग्रहणाज्जातिग्रहणेन सर्वविधाकारग्रहणे 'प्रतिलक्ष्यं लक्षणोपप्लव' इति सिद्धान्तादरे ह्रस्वाकारविषयकस्याऽस्याऽपि निरवकाशत्वमिति वाच्यम् । | ॥४७।२६॥ |
| १२५ | " | —ननु सति सद्भावे प्रतिषेध उपपद्यते, अवर्णादिभ्यस्तु घोषवति रोर्लुकि सन्धिसम्भव एव नास्ति ?, इत्यत आह— | ॥४७।३३॥ |
| १२६ | "ह्रस्वाद्०" | —ननु कुर्वन्नास्ते, कृपन्नास्ते इत्यत्राऽनेन नस्य द्वित्वे सति द्वितीयनस्य पदान्तत्वेऽपि पूर्वस्य नस्याऽनन्त्यस्य "रपृवर्णान्नोण०" ॥२।३।६३॥ इत्यनेन णत्वं कथं न भवति ?,-इत्याह— | ॥४९।२२॥ |
| १२७ | " | —ननु चाऽत्र मा भूदनेन द्वित्वं "अदीर्घाद्विरामैकव्यञ्जने" इत्यनेन द्वित्वं भविष्यति तत्किमर्थमेतन्निवृत्तये स्वर इत्युच्यत इति चेत् ?, सत्यम्; | ॥४९।२७॥ |
| १२८ | " | —ननु ह्रस्वात् परेषां पदान्ते वर्तमानानां ङ्णनां अनेन द्वित्वे सति कथं "उणादयः", "अनतो०" इत्यादयो निर्देशाः ?, इत्यत आह— | ॥४९।३१॥ |
| १२९ | "स्वरेभ्यः" | —ननु स्वरादित्युक्तेऽपीष्टस्य सिद्धत्वाद्बहुवचनं व्यर्थं ?, इत्यत आह— | ॥५०।३१॥ |
| १३० | "ह्रोर्दृ०" | —ननु द्वित्वं कृतमपि 'निमित्ताभावे नैमित्तिकस्याऽप्यपाय' इति न्यायेन निवर्त्स्यति किमनुग्रहणेन ?, इति चेत्, नः | ॥५१।२१॥ |
| १३१ | "अदीर्घाद्०" | —ननु त्वक्क् इत्यादौ "पदस्य" इति संयोगान्तलोपः कथं न भवति ?, इत्याह— | ॥५१।३९॥ |
| १३२ | " | —यद्यपि त्वक्क् इत्यत्र "पदस्य" इति संयोगान्तलोपस्याऽऽदेशबलादभावेऽपि "संयोगस्यादौ स्कोर्लुक्" इति लोपः पूर्वककारस्य प्राप्तस्तथापि ककारादन्यत्र द्वित्वश्रुतेश्चारितार्थ्येऽपि सूत्रे पूर्वस्मादह्रस्वस्वरस्येत्यनुवृत्त्या तत्र रेफहकाररूपव्यक्त्युपादानात् 'व्यक्तिः पदार्थ आश्रीयते' तत्र च ककारविषयस्य द्वित्वस्याऽऽनर्थक्यं मा भूदिति न भवति । | ॥५१।४२॥ |
| १३३ | "ततोऽस्याः" | —नन्वस्मिन्नन्तरङ्गे द्वित्वे कर्तव्ये 'असिद्धं बहिरङ्गम्' इति न्यायेन बहिरङ्गो याद्यादेशः कथं नाऽसिद्धो भवति ?,- | ॥५२।२३॥ |
| १३४ | " | —न चाऽस्य योगस्य वैयर्थ्यं ?,-ध्यानमित्यादावनादेशरूपे यादौ तस्य सावकाशत्वादिति चेत् ?, सत्यम्; | ॥५२।२३॥ |
| १३५ | " | —ननु दध्यत्र इत्यादौ तकारात् परस्य रस्य कस्मान्न द्वित्वमिति चेत् ?, | ॥५२।२५॥ |
| १३६ | "ञ्नां धुट्०" | —ननु सूत्रे ञ्नामिति बहुवचनं किमर्थं ?, इत्यत आह— | ॥५४।११॥ |
| १३७ | "रो रे लुग्०" | —नन्वत्राऽपदान्त इत्यनुवर्तेत तदा अजर्घाः, अपास्पाः, अचोकूः, अचाखाः, अचाकाः, अपापाः इत्यादिष्वेव सूत्रं प्रवर्तेत न स्वाराज्यमित्यादौ इति चेत् ?, सत्यम्; | ॥५५।११॥ |
| १३८ | " | —न हीकारात् परस्य रेफस्य रेफेऽपदान्ते सम्भवोऽस्ति यथा अग्नी रथेन, नीरकमित्यादौ | ॥५५।१२॥ |
| १३९ | " | —अकारोकाराभ्यां परस्य रेफस्य हि रेफेऽपदान्ते पदान्ते च सम्भवो यथा-अजर्घाः, अचोकूः, पुना रमते, दूरक्कमित्यादौ । | ॥५५।१३॥ |
| १४० | " | —अपि च सूत्रे भिन्नस्थानि-निमित्तकथनेनाऽपि तदननुवृत्तिरेव बोध्या । | ॥५५।१५॥ |
| १४१ | " | —ननु सूत्रे रो इत्यनेन सानुबन्धो निरनुबन्धो वा ?, नाऽऽद्यः, तथा सति अग्नी रथेनेत्यादि सिद्धावपि पुना रमते इत्यादि न सिध्येत्, न द्वितीयस्तथा सति पुना रमते इत्यादि सिद्धावपि अग्नी रथेनेत्यादि न सिध्येत् । | ॥५५।१६॥ |
| १४२ | " | —न च लक्ष्यानुरोधेनोभयपरिग्रहः, तस्य सर्वत्र नियामकत्वेऽतिप्रसंगादिति चेत् ?,— | ॥५५।१७॥ |
| १४३ | " | —अथ अग्नी रथेनेत्यादौ व्यवहितस्याऽकारस्य दीर्घः कस्मान्न भवति ?, इत्याशङ्कायामाह— | ॥५५।२०॥ |
| १४४ | " | —ननु सामान्यनिर्देशादनन्तराणामेवेति कुतो लभ्यत इति चेत् ?, उच्यते— | ॥५५।२०॥ |
| १४५ | "उदः स्था०" | —कथमुत्स्कन्दतीति उत्कन्दको रोग इति ?, पृषोदरादित्वात् । | ॥५६।८॥ |
| १४६ | " | —उत्पूर्वात् 'ष्ठा' धातोरद्यतन्या दिमत्यये सिज्लुबादौ उदस्थादत्र सकारलोपः कस्मान्न भवति ?, | ॥५६।२३॥ |
| १४७ | " | —ननूदस्थादित्यत्राऽड्डागमात् पूर्वं कथं न सलोपः ?, इति चेत्; | ॥५६।२६॥ |
| १४८ | " | —ननु उत्स्थान इत्यत्र उदः परत्र स्थाधातोर्विद्यमानत्वात् कुतो न सलोप ?, इत्यत आह— | ॥५६।२७॥ |
| १४९ | " | —ननु उत्स्थान इत्यत्र कुतो ज्ञायते उद इत्यविशेषणं स्थाधातोरिति ?,— | ॥५६।२९॥ |
| १५० | " | —'उदः स्कन्दे रोगे' इति वक्तव्यं, उदः परस्य स्कन्देः सकारस्य लोपो भवति; कथमन्यथा उत्कन्दको रोग इति सिध्यतीति पृच्छति । | ॥५६।३१॥ |

| क० | सूत्रम्। | शङ्का। | पृ० प० |
|---|---|---|---|
| १५१ | "एतदश्च०" | —अपि च 'अनञ्ञ्समासे' इत्यनेन तदन्तविधिः 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायश्च ज्ञाप्यते। | ॥५७।१७॥ |
| १५२ | " | —ननु प्रसज्यप्रतिषेधार्थकनञो ग्रहणे वाक्यभेद इति चेत्?,— | ॥५७।२०॥ |
| १५३ | " | —सेरिति सानुबन्धोपादानं कथम्?, इत्यत आह— | ॥५७।२४॥ |
| १५४ | " | —अथाऽत्र परत्वादेत्त्वे षत्वे च कृते सकारस्याऽभावाल्लोपो न भविष्यतीति चेत्?, उच्यते— | ॥५७।२५॥ |
| १५५ | "धुटो धुटि०" | —नन्वत्र स्थानिनिमित्तयोः समसंख्यावचनत्वात् यथासंख्यप्रतिपत्तौ पकारस्य पकारे एव लोपो विज्ञायेत, इत्यत्र प्रसङ्ग एव नाऽस्तीति किमेतन्निवृत्त्यर्थेन स्वे इति ग्रहणेनेति चेत्?, उच्यते— | ॥५८।२०॥ |
| १५६ | "तृतीयस्तृ०" | —अथ पृथङ्निमित्तत्वेनोपस्थानान्निमित्तानुवृत्तिः कथं नेष्यते?, इति चेत्,— | ॥५८।२५॥ |
| १५७ | " | —तथा च तत्र तत्र प्रकृतानुप्रकर्षणाय चकारस्य क्रियमाणत्वं यथा "मो नो म्वोश्च" इत्यादौ, इह तु तदकरणात् प्रकृते तदननुवृत्तिरेव, इत्याह— | ॥५८।२६॥ |
| १५८ | "रः पदान्ते०" | —कथ नृपतेरपत्यं नार्पत्यः?, नृकुट्यां भवो नार्कुट·?, तवकारः?, प्राच्छेति?, इत्यादि, | ॥५९।१२॥ |
| १५९ | " | ननु गीरित्यादौ दीर्घात् पूर्वमेव विरामाघोषयोरनेन विसर्गे निमित्तरेफस्याऽभावात् कथं "पदान्ते" ॥२।१।६४॥ इति दीर्घः?, इत्यत आह— | ॥५९।३९॥ |
| १६० | "ख्यागि" | —अथ किमर्थमिदं ख्यागि रेफस्य पदान्तत्वात् पूर्वेणैव सिध्यतीति चेत्?, सत्यम्; | ॥५९।४६॥ |
| १६१ | "शिट्यघो०" | ननु "र· पदान्ते०" इत्यनेन विसर्गे सिद्धे किमर्थमिदम्?, इत्यत आह— | ॥६०।१८॥ |
| १६२ | "अरोः सुपि०" | —ननु रेफस्य सिद्धत्वात् विधेश्चाऽप्राप्तप्रापणरूपत्वाद्रेफस्य रेफविधानमनर्थकं?, न त्वनर्थक, नियमार्थत्वेन कार्यान्तरबाधनार्थत्वात्?, इत्याह— | ॥६०।२६॥ |
| १६३ | "वाऽहर्पत्या०" | —ननु वृत्तिप्रदर्शितेभ्योऽन्यान्यपि सन्तीति कुत एतत्?, उच्यते— | ॥६०।३८॥ |
| १६४ | "तवर्गस्य०" | —ननु तवर्गस्य कार्यित्वात् तेन च विशिष्टवर्णसमुदायस्याऽभिधानात्तच् शेते इत्यादिषु एकैकस्य तवर्गशब्दाप्रतीतौ कथं कार्यित्वम्?, इति चेत्, उच्यते— | ॥६१।२२॥ |
| १६५ | " | —ननु यथा पूर्वेण चवर्गेण योगे तवर्गस्य चवर्ग इत्युदाहृते कथं नोदाहृतं पूर्वेण शकारेण?, इत्यत आह— | ॥६१।३६॥ |
| १६६ | " | —ननु पूर्ववत् परत्र षकारेण योगेऽपि कथं नोदाहृतम्?, इत्यत आह— | ॥६१।३८॥ |
| १६७ | " | —अथ तच् शेते, मज्जतीत्यादौ "चज· कगम्" ॥२।१।८६॥ इति आदेशभूतयोश्चजयोः कगौ कस्मान्न भवत·?, उच्यते— | ॥६२।१७॥ |
| १६८ | " | —ननु तच् शेते इत्यादौ मा भूत् चस्य कत्वं, मज्जति इत्यादौ जकारस्य धुडाश्रयं गत्वं कस्मान्न भवति?, इत्याह— | ॥६२।२१॥ |
| १६९ | "लि लौ" | —अथ किमर्थं सूत्रे लौ इति द्विवचनम्?, | ॥६३।२८॥ |
| १७० | "अत आः०" | —नन्वत्र "एद्बहुस्भोसि" ॥१।४।४॥ इत्येत्त्वं कथं नेति चेत्?,–उच्यते— | ॥६४।१८॥ |
| १७१ | " | अत्राऽऽकारोऽप्राप्तप्रापणार्थः, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न्यायेनाऽकारसंनिपातेन विधीयमानो यकारस्तद्विघाताय कथं प्रभवतीति न वाच्यं, यग्रहणवैयर्थ्यप्रसंगात्। | ॥६४।२०॥ |
| १७२ | " | —यद्यप्यासन्न इति न्यायादाकारः कण्ठ्यादिधर्मत्वेन तत्सदृशस्यैव स्थानिनो भवन्नकारस्यैव भविष्यति, तथाप्यवर्णादिक्रमेण कार्याणामत्र कार्यविधानात्तमन्तरेण च सर्वमुखस्थानमवर्णादेरपि स्यादित्यत आह— | ॥६४।२१॥ |
| १७३ | " | —नन्वत्र 'प्रत्ययाप्रत्यययो· प्रत्ययस्यैव ग्रहणम्' इति न्यायेन स्यादाविति लब्धे किमर्थं तद्?, इति पृच्छति। | ॥६४।२६॥ |
| १७४ | " | —न चाऽऽशङ्क्यम् "त्रिचतुर·०" ॥२।१।१॥ इति स्यादावित्यस्य तत्र ग्रहणं, यतस्तत्र तद्ग्रहणस्य निष्फलत्वात्। | ॥६४।२९॥ |
| १७५ | " | —अपि चाऽत्र स्यादावित्यधिकारार्थं, अन्यथा तस्य "ङित्यदिति" ॥१।४।२३॥ इत्यत्र विशेष्यतया सम्बन्धाभावेन शुचिशब्दाद् ङ्यां तेन प्रत्ययत्वादेत्वस्य प्राप्तेः— | ॥६४।२९॥ |
| १७६ | "भिस ऐस्" | —नन्वत्र "एद्बहुस्भोसि" इति परत्वादेत्त्वं कथं न भवतीति चेत्?,–उच्यते— | ॥६४।३५॥ |
| १७७ | " | —न च 'साम्प्रतिकाभावे भूतपूर्वगति·' इति न्यायेन कृतेऽप्येत्त्वे सावकाशत्वमैस्त्वस्येति वाच्यं, सम्भवति मुख्ये गुणकल्पनाया अयोगात्। | ॥६४।३६॥ |
| १७८ | " | —परत्वात् पूर्वमेत्त्वमित्यपि न वाच्यं, उभयोरन्यत्र सावकाशयोरेकत्र युगपत्प्रवृत्तौ स्पर्द्धसम्भवे परत्वसम्भवादिति। | ॥६४।३७॥ |
| १७९ | " | —न चाऽत्रैसोऽन्यत्र सावकाशत्वमस्ति, अतोऽपवादत्वेनैवैत्त्वस्याऽयं बाधकः। | ॥६४।३७॥ |
| १८० | " | —इह कश्चिदविमृश्यकारी एत्त्वैस्त्वयोरुत्सर्गापवादभावमपहृत्य परत्वादेत्त्वप्रवृत्तिं कथयन् भूतपूर्वगत्या नित्यत्वमैस्त्वस्याऽऽचक्षाण एत्त्वस्यैवाऽयं बाधक इति प्रतिपादयति, यदाह— | ॥६४।३८॥ |

| क्र० | सूत्रम्। | शङ्का। | पृ० पं० |
|---|---|---|---|
| १८१ | "भिस ऐस्" | —ननु भिस ऐस् इत्यत्र एसादेश एवाऽस्तु किमैसादेशेन ?, "एदै०" इत्येत्त्वे रूपस्य सिद्धत्वात्,-उच्यते— | ॥६४।४२॥ |
| १८२ | " | —न च वाच्यमेसादेशे कृते "लुगस्यादेत्यपदे" ॥२।१।११३॥ इति अकारलोप इति, एत्त्वविधानसामर्थ्यात् तस्याऽप्रवृत्तेः, अन्यथा यदि देवैरित्यमीष्टं स्यात्तदा इसिति कुर्यात्। | ॥६४।४५॥ |
| १८३ | " | —यदि सन्निपातन्यायस्य नित्यत्वं स्वीक्रियेत तर्हि कृतह्रस्वं जरशब्दान्तं नाम समाश्रित्य ऐस्भावः प्रवृत्तो जरसादेशद्वारा कथं तद्विघातस्य निमित्तं स्यात् ?,- | ॥६४।४७॥ |
| १८४ | " | —ननु विनाऽपि स्याद्यधिकार 'अर्थवद्ग्रहणे नाऽनर्थकस्य' इति न्यायाद् भिस्साभिस्सटाशब्दयोरेकदेशस्य भिसोऽनर्थकत्वादैस् न भविष्यति ?, सत्यं, अविच्छेदार्थं स्याद्यधिकार' स चेहाऽनुवर्तमानः 'अर्थवद्ग्रहणे नाऽनर्थकस्य' इत्येतन्न्यायानपेक्षं विशिष्टस्यैव भिस ऐसादेशं नियमयतीत्येतदर्थं नाऽयमपेक्षणीय इति। | ॥६५।१७॥ |
| १८५ | "इदमद०" | —ननु तेन न्यायेनाऽवधारणस्य लब्धत्वात् तदर्थं एवकारोऽनर्थकः ?, इत्याह— | ॥६५।२८॥ |
| १८६ | "टाङसो०" | —ननु सत्यां सन्निपातपरिभाषाया कृते इनादेशे कथं जरस् ? इत्याह— | ॥६६।१२॥ |
| १८७ | "ङेङसो०" | —न च अदिति करणे "लुगस्यादेत्यपदे" इत्यकारलोपे वृक्षादित्याद्यसिद्धौ कथमाद्विधानमतिजरसादित्यर्थमिति वाच्यम्। | ॥६६।२०॥ |
| १८८ | "सर्वादेः०" | —ननु बहुव्रीहेरन्यपदार्थप्रधानत्वात् सर्वशब्दस्य च समासवर्तिपदार्थत्वादन्यपदार्थत्वाभावाद्विश्वादिशब्दानामेव सर्वादिशब्देन बहुव्रीहिणाऽवगमात् सर्वादिकार्यं स्यान्न तु सर्वशब्दस्य, यथा-चित्रगुरानीयतामित्युक्ते स्वामिन एवाऽऽनयनं न तु गवां। | ॥६६।२४॥ |
| १८९ | " | —न च वाच्य यथा चित्रा गावो या अस्येति गवा विशेष्यत्वं तद्वतश्च विशेषणत्वमवगम्यते तथेहाऽप्यवगंस्यत इति। | ॥६६।२६॥ |
| १९० | " | —अथवा-सर्वादेरित्यस्यावृत्त्या समीहितलाभ इति चेत्, सत्यं, संयोगसमवायलक्षणसम्बन्धे यदा बहुव्रीहिस्तदा तद्गुणसंविज्ञानं भवति-शुक्लवासाः, लम्बकर्ण इति। | ॥६६।३०॥ |
| १९१ | " | —नन्वेवं मध्यमस्यामवमस्यामिति न प्राप्नोति ?, गणे पाठाभावात्, तस्मादस्तु प्रकारार्थोऽयमादिशब्दः। | ॥६६।४३॥ |
| १९२ | " | —वृत्तौ द्विवचनविषयत्वादित्यत्र द्विवचनशब्देन प्रत्ययो न गृह्यते, किं तर्हि ?, द्व्यर्थाभिधानसमर्थ इत्यर्थस्य विवक्षितत्वाद्द्विवचनशब्देन स्यादिप्रत्ययाग्रहणात् स्वार्थिकत्वेन चोभार्थस्याहानात् आपूर्वद्वचनमन्तरेण द्विवचनपरतायाः सिद्धत्वात्। | ॥६७।१४॥ |
| १९३ | " | —ननु यथा स्वार्थिकत्वेन परार्थानभिधानात् कप्परस्य साधुत्वमेवं त्रतसपरस्यापि साधुत्वप्रसङ्गः ?, नैवं, त्रतसादीना विभक्त्यर्थमात्रवचनत्वेन सर्वस्यैव भेदस्य परित्यक्तत्वादसाधुत्वमुभशब्दस्य। | ॥६७।१५॥ |
| १९४ | " | —नन्वन्यतरशब्दस्य डतरप्रत्ययान्तत्वेन सर्वादिकार्यं गणपाठाभावेऽपि भविष्यति ?, तत्र डतरग्रहणादित्याह— | ॥६७।२१॥ |
| १९५ | " | —ननु तर्हि स कथं साधुरित्याह— | ॥६७।२७॥ |
| १९६ | " | —ननु डतरडतमशब्दयोः क्वापि प्रयोगादर्शनात् किमर्थस्तयोः पाठ इत्यत आह— | ॥६७।३१॥ |
| १९७ | " | —ननु च सत्यस्मिन् प्रयोजने कथं स्वार्थिकप्रत्ययान्तानां सर्वादित्वाभावार्थं स्याज्ज्ञापकमिदम्, अन्यथा चाऽनुपपद्यमानं ज्ञापकं भवति। | ॥६७।४०॥ |
| १९८ | " | —न च सत्यस्मिन् प्रयोजनेऽस्याऽन्यथानुपपत्तिरस्ति। | ॥६७।४१॥ |
| १९९ | " | —न च दादेशार्थमात्रत्वे दादेशविधौ डतरडतमग्रहणं कर्त्तव्यं, गणे तु करणात् स्वार्थिकप्रत्ययान्ताना सर्वादित्वाभावार्थमपि भवतीति वाच्यं। | ॥६७।४२॥ |
| २०० | " | —कथं पुनरयमर्थो यावता स्वे पुत्रा इति ज्ञात्यर्थो गम्यते, स्वे गाव इति धनार्थः ?, नैतदस्ति; पुत्रगोशब्दयोरिह सन्निधानेनोभयं गम्यते, स्वशब्दात्त्वात्मीयत्वमात्रं प्रतीयते। | ॥६८।३४॥ |
| २०१ | " | —ननु यदि शब्दान्तरनिरपेक्ष एव स्वशब्दो ज्ञातिधनयोर्वर्त्तते ?, कथं तर्हि ?— "धूमायन्त इवाऽऽश्लिष्टाः, प्रज्वलन्तीव संहताः। उल्मुकानीव मेऽमी स्वा, ज्ञातयो भरतर्षभ!॥" इत्यादौ ज्ञातिशब्दस्याऽनुप्रयोगः ?,— | ॥६८।३५॥ |
| २०२ | " | —ननु कर्मार्थकरणार्थभेदाद्भिन्नस्याऽप्युपसंव्यानशब्दस्य ग्रहणमनर्थकं, सर्वत्र बहिर्योगेण सिद्धत्वादिति चेत् ?, उच्यते;— | ॥६९।१४॥ |
| २०३ | " | —ननु तच्छब्दभवच्छब्दयोस्त्यदादित्वाविशेषात् कस्य शेष इत्यत आह— | ॥६९।३२॥ |
| २०४ | " | —ननु सूत्रे विशेषस्याऽनिर्देशात् संज्ञायामपि सर्वादीनां सर्वादिकार्यप्रसङ्गः ?, नैष दोषः, तत्र गणपाठात् पर्युदासः शुद्धान्येव हि गणे सर्वादीनि सन्निविष्टानि न संज्ञाभूतानि। | ॥६९।४०॥ |
| २०५ | " | —ननु संज्ञाया गौणत्वादेव न भविष्यति-सर्वाय देहीति, प्रसिद्धिवशात् सम्भवत्येव 'गौणमुख्यन्याय' इति किमसंज्ञायामिति विशेषणेन ?, नैवं, पदकार्येष्वेवाऽयं न्याय उपतिष्ठते न नामकार्ये इति। | ॥६९।४४॥ |
| २०६ | " | —न चैवं शब्दान्तरात् संज्ञाप्रतीतिरस्ति। | ॥६९।४८॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० प० |
|---|---|---|---|
| २०७ | "सर्वादि:०" | —न च संज्ञाशब्दो गुणद्वारेण प्रवर्तते, येन प्रसिद्ध्यप्रसिद्धिवशाद्गौणत्वं तस्य सम्भवति | ॥७०।८॥ |
| २०८ | " | —ननु मा भूत्सर्वो नाम कश्चित्सर्वायेत्यादौ असंज्ञायामिति विशेषणात् सर्वादिकार्यं, प्रियाः सर्वे यस्य सर्वानतिक्रान्तो य इत्युपसर्जनस्य प्राप्नोति ?, इत्याह— | ॥७०।८॥ |
| २०९ | " | —न ह्यत्र गृह्यमाणात् सर्वादेर्विहिता विभक्तिरपि तु समासादिति चेत्, न; गृह्यमाणस्य सर्वादेरर्थद्वारेण सम्बन्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मादिवाचिनी तस्याः सर्वादिकार्यमित्यर्थोऽत्र विवक्षितः । | ॥७०।१०॥ |
| २१० | " | —ननु प्रतिनियतभागाभिनिवेशित्वाच्छब्दानां सर्वत्वमोदनशब्देन नाभिहितं, ओदनत्वमपि सर्वशब्देनेति कुतोऽयं प्रसङ्गः ?, तत्रेदं दर्शनं— | ॥७०।१७॥ |
| २११ | " | —एवं तर्ह्युभयमनेन क्रियते, पाठश्चैव विशेष्यते विधिश्च, कथं पुनरेकेन यत्नेनोभयं लभ्यते ?,— | ॥७०।२०॥ |
| २१२ | " | —अथाऽऽढ्यो भूतपूर्वो मयूरव्यंसकादित्वात् समासे आढ्यपूर्वस्तस्मै आढ्यपूर्वाय देहीत्यत्र कथं सर्वादिकार्यं न भवति ?, न च व्यवस्थाया अभावः, पूर्वमाढ्यो न च सम्प्रतीति व्यवस्था प्रतीयते । | ॥७०।२३॥ |
| २१३ | " | —ननु अहकं पिता यस्य मकत्पितृकः, त्वकं पिता यस्य त्वकत्पितृकः, द्वकौ पुत्रौ यस्य द्वकिपुत्र इति ?, अन्तरङ्गत्वात् सर्वाभिधाननिमित्तेनाऽका तावद्भाव्यम्— | ॥७०।२५॥ |
| २१४ | " | —न चाऽन्तरङ्गानपि विधीन् बहिरङ्गो विधिर्बाधते इति वक्तुं शक्यं, लुग्विषयत्वे एव तस्य ज्ञापितत्वात् । | ॥७०।२९॥ |
| २१५ | "जस इः" | —अथ नपुंसके सर्वशब्दात् नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् जसः स्थाने इकारादेशः कस्मान्न भवति ?, उच्यते— | ॥७१।२७॥ |
| २१६ | "नेमार्ध०" | —नन्वसंज्ञायामित्यस्य सर्वादेर्विशेषणत्वेनाऽसर्वादीनामर्धादीना संज्ञायामनेन विकल्पेन जस इकारादेशः कथन्न भवतीत्याह— | ॥७१।४३॥ |
| २१७ | "द्वन्द्वे वा" | —ननु चान्तरशब्दो बहुव्रीहौ वर्तते न द्वन्द्वे इति कथमदः प्रत्युदाहरणं ?, न, तदवयवको बहुव्रीहिर्द्वन्द्व इति सोऽपि द्वन्द्व इति प्रत्युदाह्रियते । | ॥७२।१९॥ |
| २१८ | "न सर्वादिः" | —ननु सर्वस्य सर्वादिकार्यस्य निषेधात् कथमत्र "सर्वादयोऽस्यादौ" इति पुंवद्भावः?, उच्यते— | ॥७२।२६॥ |
| २१९ | " | —ननु कतरे च कतमे चेति द्वन्द्वे सर्वादिकार्यस्य निषेधादज्ञाताद्यर्थेऽक्प्रत्ययाभावेऽपि कप्रत्यये सति स्वार्थिकत्वेन प्रकृत्यर्थाविशिष्टत्वात् कतरकतमका इति "द्वन्द्वे वा" इति "जस इः" कस्मान्न भवति ?, अत आह— | ॥७२।२८॥ |
| २२० | "तृतीयान्ता०" | —अथवा बहुव्रीहिरेव, तृतीयाया अन्तो विनाशो यत्र, तृतीया अन्ते यस्येति वा । | ॥७२।३९॥ |
| २२१ | " | —ननु लाघवार्थं 'तृतीयासमासे' इति सूत्रकरणेऽन्यस्यापि सर्वादेः सर्वादिकार्यप्रतिषेधप्रसङ्ग इति वाच्यम् । | ॥७२।४३॥ |
| २२२ | " | —अथैवं सति वाक्यस्य परिग्रहाभाव इति चेत्, एकस्तृतीयासमासः प्राथमकल्पिको यस्मिन्नेकपद्यं एकविभक्तिकत्वं चोच्यत इति । | ॥७२।४४॥ |
| २२३ | " | —ननु योगग्रहणेनैव व्यावर्तितमिदम् ?, नैवं, तृतीयान्तमाश्रित्येति लभ्यत्वाद्विशिष्टयोगस्य । | ॥७३।१५॥ |
| २२४ | " | —ननु यास्यति चैत्रो मासेन पूर्वस्मै इत्यत्र योगग्रहणं विनापि "समर्थः पदविधिः" इति न्यायेन भविष्यति निषेधः किं योगग्रहणेन ?, उच्यते— | ॥७३।१८॥ |
| २२५ | "तीयं ङित्०" | —तथाहि-जातीयसमुदायेन वा तस्य लाक्षणिकत्वं बोध्यमित्यर्थः । | ॥७३।३८॥ |
| २२६ | "सर्वादेर्डे०" | —यद्येवं, कथं दक्षिणपूर्वस्यै ?,-दक्षिणा चासौ पूर्वा चेति कर्मधारये भविष्यति । | ॥७५।५॥ |
| २२७ | " | —अथ च बहुव्रीह्यादेः सर्वादित्वाभावे कथं त्वकत्पितृकः ?, मकत्पितृकः ?, द्वकिपुत्रः ?, कर्किसव्रतचारी ?, इत्यादावक्प्रत्ययः;-उच्यते, अन्तरङ्गत्वात् पूर्वमेवाऽक् भविष्यति । | ॥७५।६॥ |
| २२८ | "इदुतो०" | —कथं शस्त्रीमतिक्रान्तौ अतिशस्त्रीपुरुषौ ?, 'अर्थवद्ग्रहणे नाऽनर्थकस्य' इति प्रतिषेधाभावात् | ॥७६।८॥ |
| २२९ | "औता" | —नन्वेकेन सम्बन्धेन चरितार्थत्वात् स्थानसम्बन्धो न घटते ?, एकारस्यादेशत्वात्तस्य च स्थानमन्तरेणासम्भवात् प्रत्यासत्तेस्तस्यैव स्थानित्वं परिकल्प्यत इत्यदोषः । | ॥७६।१६॥ |
| २३० | "इदुतो०" | —नन्वस्त्रेरिति प्रतिषेधोऽनर्थकः, परत्वादतिस्त्रियावित्यत्रैयादेशेनैव भाव्यमत आह— | ॥७६।३५॥ |
| २३१ | " | —ननु ज्ञाप्यमस्तु ज्ञापकं माऽस्तु इति चेत्, उच्यते— | ॥७६।३८॥ |
| २३२ | "ङित्यदिति" | —नन्विकारोकारमात्रापेक्षत्वेनाऽन्तरङ्गत्वात् पूर्वमेवैदोतौ स्यातां न दायाद्यादेशाः, तेषां स्त्रीत्वविशिष्टेकारोकारापेक्षत्वेन बहिरङ्गत्वात्, कृतयोरप्येदोतोरिकारोकाराभावात् वर्णविधित्वाच्च स्थानिवत्त्वाभावात् दैदासाद्यादेशाभावात् प्रतिषेधो न युक्तः?, | ॥७७।१७॥ |
| २३३ | " | —न च तदन्तादादेशविधानात् अवर्णविधित्वात् स्थानिवत्त्वं, अप्रधानेऽपि वर्णविधिप्रतिषेधात् । | ॥७७।१९॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| २३४ | "डिडौँ" | —अथ कस्मात् "डिडौँ" इत्ययमभेदनिर्देशो यावता स्थानिन एकवर्णत्वादन्याभावात् स्थानषष्ठ्या भेदनिर्देशेऽपि न किञ्चिद्विनंक्ष्यति, नैवं, भेदनिर्देशे हि डेरिति रूपस्य साम्याच्चतुर्थ्येकवचनस्यापि प्रतिपत्तिः स्यादित्याह— | ॥७७।३१॥ |
| २३५ | " | —ननु दाम्करणसामर्थ्यादेव डौर्न स्यात्किं व्यावृत्तावदितीति दर्शनेन ?, | ॥७७।३६॥ |
| २३६ | " | —किञ्च यथासंख्यार्थं "स्त्रिया ङिता०" इत्यत्र दाम्ग्रहणं कार्यं, अन्यथा इदं सूत्रमन्यथा उत्तर चान्यथा कार्यं स्यात्, तथा च गरीयसी रचना स्यादिति । | ॥७७।३८॥ |
| २३७ | "केवल०" | —ननु पतिशब्दात् केवलादपि डेर्डौरपि भवति, प्रयुज्यते व्यक्तावेव पठ्यते पताविति तत्कथमेतदित्याह— | ॥७८।१७॥ |
| २३८ | " | —नन्वनयोरिकारान्तत्वेन व्यभिचाराभावादिदन्ताभ्यामिति विशेषणं न सार्थकं यत्रापि क्यन्नादौ दीर्घोऽस्ति तत्रापि स्वरूपान्यथात्वान्न भविष्यति ?, नैवं, | ॥७८।१८॥ |
| २३९ | " | —नन्वत्र "स्थानीवाऽवर्णविधौ" इति न्यायात् क्विप. स्थानित्वे सति "य्वोः प्वय्व्यञ्जने०" इति यलोप. कस्मान्न भवति ?, | ॥७८।२३॥ |
| २४० | " | —नन्वेषु औकाराभावे किं स्यादत आह— | ॥७८।२९॥ |
| २४१ | "स्त्रिया ङितां०" | —कथं तत्सिध्यतीति चेत्, उच्यते-"स्त्रीदूतः" इति वक्ष्यमाणसूत्रात् स्त्रीविच्छेदात्। | ॥७९।२३॥ |
| २४२ | "स्त्रीदूतः" | —अथैतत्पक्षोक्तदोषपरिजिहीर्षया स्त्रियावीदूतौ यस्य तत्स्त्रीदूदिति बहुव्रीहिः, अत्रापि स एव दोषः, समुदायस्यैव स्त्र्यर्थत्वान्नावयवस्येति, | ॥७९।४२॥ |
| २४३ | " | —ननु आधीप्रधीशब्दौ क्रियाशब्दत्वात् सर्वलिङ्गत्वात् ग्रामण्यादिशब्दवन्न नित्यस्त्रीविषयाविति चिन्त्यमेतत् । | ॥८०।२५॥ |
| २४४ | " | —अथोच्यते-सत्यपि स्त्र्यर्थत्वे ईकारोकारान्तत्वाभाव इति चेत्, तत्र लुग्ह्रस्वस्थानिवद्भावे सतीदूदन्तता भविष्यतीत्याह— | ॥८०।३४॥ |
| २४५ | "वेयुवो०" | —ननु "वेयुवोऽस्त्रिया." इति माऽस्तु, परन्तु पूर्वशास्त्रस्य "स्त्रीदूतः" इत्यस्य प्रवृत्तौ किं बाधकम् ?, अत आह— | ॥८०।४५॥ |
| २४६ | " | —न च वाच्यमाधीप्रधीशब्दयो. क्रियाशब्दत्वेन सर्वलिङ्गत्वात् नित्यस्त्रीविषयत्वाभावात् पूर्वेणाऽपि कथं दायाधादेशा इति । | ॥८१।१९॥ |
| २४७ | " | —ननु चाध्यै प्रध्यै इति यद्यपि यकारेणेयादेशो बाध्यते, तथापि धियौ, धिय इत्यादावियभावादिय्सम्बन्धी ईकार इति शक्यं व्यपदेष्टुम् ?, | ॥८१।२०॥ |
| २४८ | " | —यदाऽस्य स्थाने इयादिर्भवति तदाऽसावियादेरीदादि॰, न चान्यस्मिन् भवत्यसावियादेरीदादिस्तयोरभेदप्रसङ्गादिति विकल्पो न भवति । | ॥८१।२२॥ |
| २४९ | " | —ननु स्त्रियै इत्यादौ असत्यप्यनेन विकल्पे कथं पूर्वेण नित्यमादेशो यतः परत्वादियुवादिभावादीदूदन्तत्वाभावादप्रवृत्तिरेवेत्याह— | ॥८१।२६॥ |
| २५० | "आमो नाम्वा" | —ननु श्रियमतिक्रान्तानि कुलानि तेषामतिश्रीणामित्यादौ "क्लीबे" ॥२।४।९७॥ इति ह्रस्वत्वे सति कथमामो नामित्यत आह— | ॥८१।३९॥ |
| २५१ | "संख्यानां०" | —ननु च त्रिंशदादय. शब्दाः सख्येयेष्वपि वर्तमानाः "विंशत्याद्याः शताद्द्वन्द्वे" इति वचनादेकत्व एव वर्तन्ते इत्यत्रैकवचनान्ता एव भवितुमर्हन्ति कथं बहुवचनम् ?, सत्यं, एकशेषात् । | ॥८२।२४॥ |
| २५२ | " | —अथाऽष्टन्शब्दादामि परत्वात् "वाऽष्टन०" इत्याकारे नान्तत्वाभावात् कथं नाम्भावो ?, अत आह— | ॥८२।२५॥ |
| २५३ | "पदोद्भ्या०" | —"आतो नेन्द्रवरुणस्य" ॥७।४।२९॥ इति ज्ञापकात् पूर्वं पूर्वोत्तरपदयोः कार्यं, ततः सन्धिकार्यं; अतः परमैरिति प्राप्नोति ?,-नैवं, | ॥८२।४३॥ |
| २५४ | " | —ननु वचनाभेदार्थमुभयत्र समाहारेतरेतरयोगौ कस्मान्न कृतौ, न ह्यसति प्रयोजने वचनभेदो युक्त इत्याह— | ॥८२।४४॥ |
| २५५ | "खितिखी०" | —न च सखायं यातीत्यप्रयोगिणि प्रत्यये कृते "लुगातोऽनापः" ॥२।१।१०७॥ इत्याकारलोपे सम्भवतीति वाच्यं, प्रयुक्तानामन्वाख्यानात्तेषां च प्रयोगासम्भवात्तदभाव. । | ॥८३।१३॥ |
| २५६ | " | —खीतीभ्या तु कल्पनानिर्मितस्याऽसम्भव एव । | ॥८३।१४॥ |
| २५७ | " | —नन्वत्र नत्वे सति तीरूपत्वाभावात् कथमनेनोत्वमित्यत आह—, | ॥८३।२९॥ |
| २५८ | "ह्रस्वस्य०" | —नन्वत्र सूत्रे शौ निमित्ते किं न दर्शितम् ?, "स्वराच्छौ" ॥१।४।६५॥ इति नागमेन व्यवधानान्न प्राप्नोतीति चेत्, न; नागमः प्रकृतेरेवांश इति । | ॥८४।३०॥ |
| २५९ | " | —ननु नप्त्रादयोऽपि व्युत्पाद्यन्त इति तत्कथमुच्यतेऽव्युत्पन्नानामिति ?, | ॥८४।३९॥ |
| २६० | "अर्डौ च" | —ननु नागमे सति कथमर्न ?, व्यवधायकत्वाभावादागमस्येत्याह— | ॥८५।१४॥ |
| २६१ | "ह्रस्वस्य०" | —ह्रस्वस्येत्यस्य ह्रस्वान्तस्येत्यर्थकत्वे कस्य गुणो ह्रस्वान्तस्य त्वसम्भवादिति चेत्, सत्यम्; | ॥८५।२६॥ |
| २६२ | " | —अथ प्रमाणाऽसत्त्या इकारोकारयोरप्यरादेश. कस्मान्न भवति ?, मात्रिकस्य हि द्विमात्राद्ध्यर्धमात्रिक आसन्नो भवति । | ॥८५।२९॥ |

| क्र० | सूत्रम्। | शङ्का। | पृ० पं० |
|---|---|---|---|
| २९८ | "वाऽन्यतः०" | —अथ विशेषणलक्षणपदोपक्षीणत्वात् कार्यं सन्निधानाभावात् स्त्रियामपि पुंभावः स्यादिति चेत्, न,— | ॥९४।२२॥ |
| २९९ | "दध्यस्थि०" | —ननु सत्यपि तदन्तविधौ दध्याद्यन्तस्याऽनपुंसकस्य ग्रहणं नोपपद्यते नपुंसकस्येत्यनुवृत्तेः ?,— | ॥९४।४७॥ |
| ३०० | " | —यदि तर्हि तदन्तस्य ग्रहणं केवलाना न सिध्यति ?, अयमप्यदोषः, व्यपदेशिवद्भावात् केवलानामपि भविष्यति। | ॥९५।११॥ |
| ३०१ | " | —ननु दृढसक्थ्ना शकटेन, स्थूलाक्ष्णा इक्षुणा इत्यत्र "सक्थ्यक्ष्णः०" इति समासान्तः टप्रत्ययः कथं न भवति ?, इत्याह— | ॥९५।१३॥ |
| ३०२ | " | —नन्वत्राऽनेनाऽनादेशे सति 'सन्निपात०' इति न्यायसत्त्वे कथ "स्त्रिया नृतो०" इति ङीः ?, इत्याह— | ॥९५।१७॥ |
| ३०३ | " | —दध्यादीनां स्वभावेनैव नपुंसकत्वाद् व्यभिचाराभावात् तद्विशेषणमनर्थकम् ?,— | ॥९५।१८॥ |
| ३०४ | " | —अतिदध्ना ब्राह्मणेन वारिणीत्यादौ अन्नागमयोः सावकाशत्वाद्दध्ना इत्यादावुभयप्राप्तौ "स्पर्धे" परमिति परत्वादसम्बाधितत्वान्नागम एव प्राप्नोति ?,— | ॥९५।२०॥ |
| ३०५ | " | —यदाऽस्य योगस्योत्तरत्रानुवृत्तेः "अनाम्स्वरे नोऽन्तः" "दध्यस्थिसक्थ्यक्ष्णोऽन्तस्याऽन् टादाविति" तत्र वाक्यभेदेन "अनाम्स्वरे०" इति सामान्येन नोऽन्तो भवति, दध्यादीना तु टादौ स्वरे अन् भवतीति। | ॥९५।२२॥ |
| ३०६ | "अनाम्स्वरे०" | —प्रियास्तिस्रो यस्य कुलस्येति प्रियत्रिशब्दात् षष्ठ्येकवचनेऽपि नित्यत्वान्नागमे कथं तिस्रादेश इति ?,— | ॥९५।२८॥ |
| ३०७ | " | —अथ किमर्थमाम्वर्जनं नामि नागमे च रूपस्य समानत्वात् ?,— | ॥९५।२९॥ |
| ३०८ | " | —अथ किमर्थं स्वरग्रहणं ?, न च वाच्यं त्रपुभ्या त्रपुभिरित्यादौ व्यञ्जनेऽपि नोऽन्तः स्यादिति तद्व्यावृत्त्यर्थमिति, कृतेऽपि नागमे "नाम्नो नोऽनह्नः" इति नलोपभावात्। | ॥९५।३०॥ |
| ३०९ | " | —अथ स्याद्याक्षिप्तायाः प्रकृते रैशब्देन विशेषणाद् रैशब्दान्तयोः प्रकृतेरात्वं विधीयत इति नाऽस्ति नागमेन प्रकृतेर्व्यवधानम्। | ॥९५।३३॥ |
| ३१० | " | —इह तर्हि प्रियतिसृभ्यां, प्रियतिसृभिरिति नित्यत्वात् पूर्वं नागमे सति तिसृभावो न प्राप्नोति ?,— | ॥९५।३५॥ |
| ३११ | " | —अथ तत्र विहितविशेषणात् कृतेऽपि नागमे नाम्भविष्यति ?,— | ॥९५।४०॥ |
| ३१२ | " | —यद्वा "अनाम्" इत्याम्प्रतिषेधात् पूर्वं नामादेशे तस्य च स्थानिवद्भावाभावान्नागमाभावे न काचित् क्षतिरिति। | ॥९५।४१॥ |
| ३१३ | " | —एवं तर्हि स्वरादौ यथा स्यादिह मा भूत्–त्रपु, जतु; प्रत्ययलोपलक्षणेन स्यादिसद्भावात्। | ॥९५।४१॥ |
| ३१४ | " | —अथ "लुप्यय्वृल्लेनत्" इति प्रतिषेधात् स्यादेरभावान्न भविष्यति। | ॥९५।४२॥ |
| ३१५ | " | —द्विविधं हि विभक्तेरस्तित्वं, मुख्यमौपचारिकं च; तत्र मुख्यं श्रूयमाणाया इतरत्तु लुप्तायास्तत्कार्यस्य हि अस्तित्वाद्विभक्तिरप्युपचारेणाऽस्तीति। | ॥९५।४४॥ |
| ३१६ | " | —कथं 'मर्यादाभिविधौ च यः' इति समाहारत्वे नपुंसकत्वात् स्वरे नागमो न भवतीति ?, | ॥९६।१०॥ |
| ३१७ | "स्वराच्छौ" | —ननु इवर्णादेः "अनाम्स्वरे नोऽन्तः" इति शौ नागमः सिद्ध एव, आकारान्तस्य तु अन्त्यस्य नपुंसके ह्रस्वविधानात् स्थितिरेव नाऽस्तीति अत इत्येव युज्यते किं स्वरग्रहणेन ?, | ॥९६।२०॥ |
| ३१८ | "धुटां प्राक्" | —ननु श्रेयांसि भूयांसीति धुड्लक्षणे नागमे कृते 'पुनः प्रसङ्गविज्ञानात्०' ऋदुदिल्लक्षणः प्राप्नोतीति तस्य प्रतिषेधो वक्तव्यः ?, | ॥९६।२६॥ |
| ३१९ | " | —न च ऋदुदिल्लक्षणमयं बाधिष्यत इति वाच्यं, व्यक्तौ पदार्थे 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायः प्रवर्तते। | ॥९६।२७॥ |
| ३२० | " | —अनागमस्य पूर्वो विधीयते सनागमस्य तु पर इति स्यादेतत्, अन्यस्याऽप्युच्यमानं कार्यमन्यस्य बाधकं भवति। | ॥९६।३०॥ |
| ३२१ | " | —भवतु को दोषः ?, द्वयोर्नकारयोः श्रवणं प्रसज्येत। | ॥९६।३२॥ |
| ३२२ | " | —ननु नैकस्यैको नकारः परस्य द्वावित्येकत्वप्रतिज्ञाभेदः ?, | ॥९६।३२॥ |
| ३२३ | " | —श्रुतिभेदेऽसति किं प्रतिज्ञाभेदः करिष्यति ?, कथं पुनः श्रुतिभेदाभावो यावताऽनेकव्यञ्जनोच्चारणेनाऽधिककालो व्याप्यते, एकव्यञ्जनोच्चारणेन त्वल्पकाल इति। | ॥९६।३३॥ |
| ३२४ | " | —तथा च श्रेयांसीत्यादौ परस्य नकारस्याऽनुस्वारे पूर्वस्य नकारस्य श्रवणं प्राप्नोति। | ॥९६।३६॥ |
| ३२५ | " | —ननु 'वर्णग्रहणे जातिग्रहणं' इति द्वयोर्नकारयोरेकोऽनुस्वार आदेशो विधास्यते, नैतदस्ति; जातेः कार्यासम्भवात् तदाधाराया व्यक्तौ कार्यसम्भवात्, स्थानिभेदादनुस्वारादेशद्वयप्रसङ्गात्। | ॥९६।३८॥ |
| ३२६ | " | —यदप्युक्तं 'असति सम्भवे बाधनं' इति, तदपि न; सत्यपि सम्भवे बाधनोपपत्तेः। | ॥९६।४१॥ |
| ३२७ | " | —यदप्युक्त-श्रुतिकृतोऽपि भेदोऽस्ति, तत्र पूर्वनकारस्य श्रवणम्। | ॥९६।४४॥ |

| क० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| ३२८ | "धुटां प्राक्" | —न च द्वयोर्नकारयोरेकस्वरापेक्षं परत्वं सम्भवति, पचतीत्यत्र तु शिति परतः शब्विधानात् विकरणव्यवधानमाश्रितमेव । | ॥९६।४६॥ |
| ३२९ | " | —अथापि स्यात्तथापि सकारात् परस्य नकारस्य श्रवणं स्यात्, तस्मात् परत्वात् पूर्वं जरसादेश एष्टव्यः । | ॥९७।१३॥ |
| ३३० | " | —अथेह लुक्कस्मान्न भवति ?, अतिजरसं पश्येति । | ॥९७।१४॥ |
| ३३१ | " | —ननु अतिजरशब्दस्याऽदन्तत्वात् "अतः स्यमोऽम्" इत्यम्भावेन लुब्बाधिता कथं प्राप्नोति ?, | ॥९७।१५॥ |
| ३३२ | " | —ननु किमर्थमम एव लुप् चोद्यते ?, न हि सेर्जरस्भाव. प्राप्नोति स्वर इत्युक्तेरिति । | ॥९७।१७॥ |
| ३३३ | " | —तथाहि-स्वरादिसन्निपातेन जरस्भावो निष्पन्नो नोत्सहते स्वराद्यानन्तर्यं विहन्तुम् । | ॥९७।१८॥ |
| ३३४ | " | —यद्येवमतिजरसमतिजरसैरिति अप्राप्तिः, अतिजरमतिजरैरिति भाव्यम् । | ॥९७।१८॥ |
| ३३५ | " | —तथाहि-सेर्भिसश्चाकारान्तसन्निपातेन स्वरादिरादेशोऽकारान्तविघातिनं जरसादेशं प्रत्यनिमित्तं स्यात् सन्निपातपरिभाषावशात् । | ॥९७।१९॥ |
| ३३६ | "घुटि" | —नपुंसकस्य घुटि परतो नोऽन्तो भवतीति विधिरेव कस्मान्न भवति ?, | ॥९७।२८॥ |
| ३३७ | " | —अथेदानीं यत्राऽल्पीयांसो वर्णा भूयांसश्च योगास्तत्र किं कर्तव्यम् ?, | ॥९७।४०॥ |
| ३३८ | " | —यद्येवं नाऽर्थोऽनेन, केनेदानीमधिकारो भविष्यति ?, | ॥९७।४२॥ |
| ३३९ | " | —ननु चोक्तं-अन्यनिर्देशो निवर्तक इति । | ॥९७।४३॥ |
| ३४० | " | —किञ्चाऽऽचार्याचाराच्च शैलीयमाचार्यस्य यत्र पृथगधिकारस्तत्र तं करोति । | ॥९७।४४॥ |
| ३४१ | "ऋदुदितः" | —अथ उदितो धातो. "उदित. स्वरा०" इत्युपदेशावस्थायामेव नागमविधानात् कृते च नागमे "धुटां प्राक्" इत्यनुवर्तनादनेन नागमाभावः, ऋदितस्तु कस्मान्न भवति ?, इत्याह— | ॥९८।२६॥ |
| ३४२ | "अनडुह्०" | —नन्वनडुही इत्यत्र 'नामग्रहणे लिङ्गविशिष्टस्याऽपि' इति न्यायेनाऽत्र स्त्रीत्वविशिष्टस्यापि तस्य ग्रहणान्नागमः कथं न भवति ?, इति चेत्, न, | ॥९८।४१॥ |
| ३४३ | "आ अम०" | —नन्वत्र अता इत्यभावे "समानानां०" इति दीर्घेणैव गा इत्यादिसिद्धावपि तद्विना पुंलिङ्गे स्त्रीलिङ्गे च "शसोऽता०" इति "लुगातो०" इति च प्रवर्त्तेयाताम् । | ॥९९।३४॥ |
| ३४४ | "पथिन्मथि०" | —न च तस्य क्यन्नर्थः सम्भवी, पथिन् इत्येतस्याऽतदर्थत्वात् । | ॥१००।१७॥ |
| ३४५ | " | —नन्वनेन आत्वरूपे स्यादिविधौ विधातव्ये नलोपस्याऽसिद्धत्वाद् नान्तत्वमस्ति ?, न च वाच्यं "अतः" इत्यलुकः "स्वरस्य परे०" इति स्थानिवद्भावेन नान्तत्वानुपपत्तिरिति । | ॥१००।२१॥ |
| ३४६ | " | —अत्र तु अस्य लुक् क्विपि, आत्वं तु सौ प्रत्यये प्राप्नोतीति कृत्वाऽत्र नान्तत्वमस्त्येवेति प्राप्नोत्यात्वम् । | ॥१००।२२॥ |
| ३४७ | " | —एवं तर्हि "दीर्घङ्याब्०" इति सूत्रेण सेर्लुक्कस्मान्न भवति ?, यतोऽयमपि स्यादिविधिः, स्यादिविधौ च नलोपोऽसन् भवतीति । | ॥१००।२६॥ |
| ३४८ | " | —एवं तर्हि या सा इत्येवमादिषु च सेर्लुग्न प्राप्नोति ?,— | ॥१००।२८॥ |
| ३४९ | "सख्युरि०" | —अथ शौ सति 'आदेशादागमः' इति न्यायादैत्त्वात् प्रथममेव नागमेन भाव्यं, ततस्तेन व्यवधानादैकारो न भविष्यतीति । | ॥१०२।१८॥ |
| ३५० | " | —न च द्वयोरप्यन्यत्र सावकाशत्वादैकार स्यादिति वाच्यं, कृतेऽप्यैकारे "क्लीबे" ॥२।४।९७॥ इति ह्रस्वत्वे ततो नागमे दीर्घत्वे न कश्चिद्दोष. ?,— | ॥१०२।१९॥ |
| ३५१ | " | —ननु भवत्वेवं तथापि कृता-कृतप्रसङ्गित्वेन नित्यत्वात् पूर्वं नागम इति घुड् व्यवधायको भविष्यति ?,— | ॥१०२।२१॥ |
| ३५२ | "इन्हन्०" | —ननु इन्नादीना नान्तत्वात् शिस्योर्घुट्त्वात् "नि दीर्घ." इत्यनेनैव दीर्घ. सिध्यति किमनेनेति ?,— | ॥१०३।२८॥ |
| ३५३ | " | —यद्येषा शिस्योरेव दीर्घ इति नियमसामर्थ्यादेव दीर्घो न भविष्यति, तर्हि किमर्थं "अहन्पञ्चमस्य०" ॥४।१।१०७॥ इत्यत्र हन्वर्जनम् ?,— | ॥१०३।३२॥ |
| ३५४ | " | —न च घुट्प्रकरणत्वात् घुट्येव दीर्घस्य नियमेन निवृत्त्या नाऽन्यत्रेति वृत्रहणीति सप्तम्येकवचने "ईङौ वा" इत्यल्लोपाभावपक्षे "अहन्पञ्चमस्य क्विति" इति दीर्घप्रसङ्ग इति वाच्यम्— | ॥१०३।३३॥ |
| ३५५ | " | —यद्येवं वृत्रहेवाऽऽचरतीति वृत्रहायते दण्डीभूत इति "दीर्घश्चियङ्यक्क्येषु च" इति दीर्घत्वं न प्राप्नोति ?, नैवम्;— | ॥१०३।३७॥ |
| ३५६ | " | —किञ्चैकस्मिन्नपि योगे घुड्निवृत्तावपि दोष., यतो द्विविधो घुड्-शिः स्यमौजसश्च, तत्र शिर्नपुंसकस्य, अन्ये तु स्त्रीपुंसयोरिति । | ॥१०३।३८॥ |
| ३५७ | " | —ननु भवत्वत्र प्रकरणे तदन्तविधिस्तथापि इन्निति प्रत्ययग्रहणं भवतीति दण्डीनीत्यत्रैव दीर्घत्वेन भवितव्यं, न तु वहवो दण्डिनो येषामिति बहुदण्डीन्यत्र, नैतदस्ति;— | ॥१०३।४७॥ |
| ३५८ | "नि वा" | —ननु नीति विषयसप्तम्येव घटते, कथमुक्तं नागमे सतीति ?,— | ॥१०४।२४॥ |

| क्र० | सूत्रम्। | शङ्का। | पृ० पं० |
|---|---|---|---|
| ३५९ | ” | —अयं तु दीर्घः साक्षादपूशब्दमुच्चार्य विधीयमानोऽल्पाश्रयत्वादन्तरङ्ग इति पूर्वं प्रवर्त्तते पश्चात्तु नागम इति। | ॥१०४।२६॥ |
| ३६० | “अभ्वादे०” | —नन्वसोऽर्थवतो ग्रहणात् पिण्डग्र इत्यादौ धात्वेकदेशस्याऽनर्थकत्वाद्दीर्घो न भविष्यति, किं भ्वादिवर्जनेन?, इत्याह— | ॥१०४।३५॥ |
| ३६१ | ” | —ननु अनिनसन्निन्त्यत्र अतोरनिर्दिष्टत्वादनर्थकेन तदन्तविधेरप्रयोगात् 'अर्थवद्ग्रहणे नाऽनर्थकस्य' इति न्यायात् क्रियानित्यत्रैव दीर्घः प्राप्नोति, न गोमानित्यादौ इति। | ॥१४०।३९॥ |
| ३६२ | ” | —ननु तथापि 'तदनुबन्धकग्रहणेऽतदनुबन्धकस्य ग्रहणं न' इति ( स एवाऽनुबन्धो यस्यासौ तदनुबन्धकः, स चाऽन्यश्चाऽनुबन्धो यस्य सोऽतदनुबन्धक इति ) न्यायात् 'यत्तदेतदो डावादेर्ग्रहणाप्रसङ्गः' क्वतोरपि ककारानुबन्धसद्भावात् ग्रहणाभावः। | ॥१०४।४१॥ |
| ३६३ | ” | —एवं तर्हि गोमन्तमिच्छतीति क्यनि, क्विपि, तदन्तस्य च धातुत्वाद्धानेः कथं दीर्घः?, इत्याह— | ॥१०४।४४॥ |
| ३६४ | ” | —न च कृतमतो भ्वादिपठितानामेव वर्जनमित्यर्थः। | ॥१०४।४५॥ |
| ३६५ | “क्रुशस्तु०” | —अथाऽत्र बहुव्रीहौ तृजादेशे सति ऋदन्तत्वात् “ऋन्नित्यदितः” ॥७।३।१७१॥ इति ऋदिल्लक्षणः समासान्तः कच् कस्मान्न भवति?, इत्याह— | ॥१०५।१९॥ |
| ३६६ | ” | —अथ लाघवार्थं 'क्रोष्टोः क्रोष्टृ पुंसि' इति किमिति न कृतं?, एवमपि कृते न काचिल्लक्ष्यक्षतिरिति चेत्, न; तृशब्दस्य विधीयमान आरादेशः क्रोष्टृशब्दस्य न स्यात्, इत्याह— | ॥१०५।२४॥ |
| ३६७ | “टादौ०” | —ननु क्रुशेस्तृच्प्रत्ययेनैव सिद्धे किमर्थोऽयं तुनस्तृजादेशः?,— | ॥१०५।३१॥ |
| ३६८ | ” | —न च तृप्रत्ययान्तः क्रियाशब्दो न मृगवचनः, तुन्प्रत्ययान्तः पुनर्मृगे रूढस्तत्र तृप्रत्ययान्तेनाऽपि मृगाभिधानं यथा स्यादित्येवमर्थ आदेश इति वाच्यम्— | ॥१०५।३१॥ |
| ३६९ | ” | —नन्वेवं सत्यविशेषोपदेशादुभयोरविशेषेण प्रयोगः स्यात्तन्निवृत्त्यर्थं आदेश इत्यपि न वाच्यं, अविशेषोपदेशेऽपि हि विशेषेणैव प्रयोगदर्शनात्। | ॥१०५।३३॥ |
| ३७० | ” | —अथ च विशेषेणैव प्रयुज्यते-घृतं, घृणा, घर्म इति। | ॥१०५।३४॥ |
| ३७१ | “स्त्रियाम्” | —ननु घुटीत्यस्याऽननुवृत्तावपि स्याद्यधिकारस्याऽनुवृत्तिरस्तु?, “टादौ स्वरे वा” इत्यत्राप्यादिशब्दस्य व्यवस्थावाचित्वाट्टादिः स्यादिरेव गृह्यत इति चेत्, मैवम्, | ॥१०५।४३॥ |
| ३७२ | ” | —ननु स्त्रियामीकारस्याऽवश्यम्भावित्वादीकार एवाऽयमादेशो भविष्यति, कथमुक्तं निर्निमित्त इति?,— | ॥१०६।११॥ |
| ३७३ | ” | —ननु प्रश्लिष्टनिर्देशान्निर्दिष्ट एव, स्त्री ई स्त्रीति-स्त्रिया ई स्त्रीत्वस्य द्योतक ईकार इत्यर्थः। | ॥१०६।११॥ |
| ३७४ | ” | —नन्वेवं सत्यपि इकणि “जातिश्च णि०” ॥३।२।५१॥ इति पुंवद्भावः प्राप्नोति, तस्मिंश्च सति स्त्रीत्वाभावात् तृजादेशो न स्यात्?, नैवम्,— | ॥१०६।१६॥ |
| ३७५ | ” | —ननु तथापि इकणः प्लुपः पित्त्वस्य पुंवद्भावफलत्वात् “क्यङ्मानि०” ॥३।२।५०॥ इति पुंवद्भावेन स्त्रीत्वनिवृत्त्या तन्निमित्तस्य तृजादेशस्यापि निवृत्तिः प्राप्नोति?,— | ॥१०६।१८॥ |
| ३७६ | “त्रिचतुर०” | —कथं तिसृका नाम ग्रामः?, संज्ञाशब्दोऽयम्। | ॥१०७।१३॥ |
| ३७७ | ” | —ननु प्रियतिसृणीत्यादौ स्यादौ परे कृताकृतप्रसङ्गित्वेन नित्यत्वात् “अनाम्स्वरे नोऽन्तः” इति पूर्वं नागमे कृते पश्चात्तेन व्यवधानात् कथं तिस्रादेश इति चेत्, न, | ॥१०७।२९॥ |
| ३७८ | ” | —किञ्च “ऋतो रः स्वरेऽनि” इत्यत्र अनीतिवचनमनर्थकं स्यात्, स्वरादौ पूर्वं नकारे तिस्राद्यादेशाभावाद्रत्वप्रसङ्ग एव नाऽस्तीत्यनीतिवचनान्नागमादेः पूर्वं तिस्राद्यादेश इति विज्ञायत इति। | ॥१०७।३१॥ |
| ३७९ | ” | —कथमिति प्रियतिसृ कुलमित्यादौ प्रियत्रिशब्दात् “अनतो लुप्” इत्यन्तरङ्गमपि तिस्रादेशं पूर्वोक्तन्यायेन बाधित्वा लुपि कृतायां “लुप्यय्वृल्लेनत्” इति स्थानिवद्भावप्रतिषेधात् स्यादेरभावात् कथं तिस्रादेश इति प्रश्नार्थः। | ॥१०७।३५॥ |
| ३८० | ” | —कथमिति-त्रिशब्दात् संज्ञायां के आपि बहुवचने च स्यादेर्व्यवधानात् कथं तिसृभाव इति प्रष्टुरभिप्रायः। | ॥१०७।४०॥ |
| ३८१ | “ऋतो रः०” | —ननु स्वरादौ तिस्राद्यादेशे परत्वान्नागमबाधाऽनेन रत्वप्रवृत्तेः क्व अनीत्युपयुज्यत इति चेत्, | ॥१०८।१९॥ |
| ३८२ | ” | —ननु स्वरादौ स्यादौ तिस्राद्यादेशे “इवर्णादे०” इति रत्वं सिद्धमित्यत आह— | ॥१०८।२०॥ |
| ३८३ | ” | —ननु ऋत इति किमर्थं?, यावता पूर्वसूत्रात्तिसृचतसृ इत्येतयोरनुवृत्तौ तयोश्च षष्ठ्यन्ततया विपरिणामेन कार्यप्रतिपत्तौ “षष्ठ्याऽन्त्यस्य” इति तदन्तस्य विधिर्भवन् ऋकारस्यैव भविष्यति?,— | ॥१०८।२७॥ |
| ३८४ | “जराया०” | —ननु जरामतिक्रान्तावित्यादि विग्रहे “गोश्चान्ते०” इति ह्रस्वत्वे जराशब्दस्याऽभावात् कथं जरसादेशः?,— | ॥१०८।२८॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० प० |
|---|---|---|---|
| ३८५ | "जराया०" | —ननु जरसा दन्ताः शीर्यन्ते, जरसे त्वा परिदधुरिति तृतीयाचतुर्थ्येकवचनयोरेव बाहुल्येन प्रयोगदर्शनात् कथं सर्वत्रोदाहृतम् ?,— | ॥१०८।४०॥ |
| ३८६ | " | —ननु पूर्वमपि नागमे कृते सनागमस्याऽऽदेशे पुनर्धुडन्तलक्षणे नागमे रूपस्य सिद्धत्वात् किं परत्वचिन्तयेति चेत्, न;— | ॥१०८।४४॥ |
| ३८७ | " | —अथापि स्यात्तथापि सकारात् परस्य नागमस्य श्रवणं स्यात्, तस्मात् परत्वात् पूर्वं जरसादेश एवैष्टव्यः । | ॥१०८।४७॥ |
| ३८८ | "आ रायो०" | —ननु सत्यपि तदन्तग्रहणे रैशब्दान्तस्य नपुंसकवृत्तौ "क्लीबे" इति ह्रस्वत्वे ततो भ्यामादौ रैशब्दस्योच्यमानमात्वं रैशब्दाभावात्तदन्तस्यादिश्यते चेत्याह— | ॥१०९।३०॥ |
| ३८९ | " | —ननु सकारभकारावन्तरेण रैशब्दात् स्यादेरन्यस्य व्यञ्जनस्याऽसम्भवाल्लाघवार्थं च स्भीत्येवोच्यतां किं व्यञ्जनग्रहणेन ?, इत्याह— | ॥१०९।३१॥ |
| ३९० | " | —यद्युत्तरार्थं व्यञ्जनग्रहणं तर्हि तत्रैव क्रियतां किमत्रोपादानम् ?, इति चेत्, उच्यते,— | ॥१०९।३२॥ |
| ३९१ | "टाड्योसि०" | —नन्वोसि यत्ववचनं किमर्थम् ?, विनाऽप्योस्ग्रहणं "शेषे लुक्" इत्यन्त्यस्य लोपे "पद्बहुस्भोसि" इत्येत्त्वेऽयादेशे च युवयोरित्यादौ यत्वं सिध्यति ?,— | ॥११०।२४॥ |
| ३९२ | "शेषे लुक्" | —ननु त्वं ब्राह्मणीत्यादौ सामानाधिकरण्यात् सत्त्ववृत्तित्वात् सम्भाव्यमानलिङ्गयोगित्वात् युष्मभ्यमित्यादौ "षष्ठ्याऽन्त्यस्य" इति न्यायेन दकारमात्रलोपेऽकारान्तत्वात् स्त्रियामाप् प्राप्नोति ?,— | ॥११०।२९॥ |
| ३९३ | " | —ततश्चाऽनिष्टरूपतापत्तिरतस्तन्निवृत्त्यर्थमन्त्यस्वरादेरिति वक्तव्यम् ?, न च वक्तव्यमित्याह— | ॥११०।४०॥ |
| ३९४ | "मोर्वा" | —अथ शब्दान्तरप्रवृत्त्या यत्वस्याऽनित्यत्वे द्वयोरन्यत्र सावकाशत्वात् परत्वात् त्वमाद्यादेशस्तदापि 'पुनः प्रसङ्गविज्ञानात्' अकारस्य यत्वं प्राप्नोति ?, | ॥१११।१९॥ |
| ३९५ | " | अथ सामान्याश्रयत्वात् पुनः प्रसङ्गविज्ञानाभावात् 'सकृद्गते०' इत्याश्रयणाद्यत्वाभाव एव | ॥१११।२०॥ |
| ३९६ | " | ननु त्वे मे इत्यत्राऽकारान्तत्वात् स्त्र्यादेशः कथं न भवति ?, इत्याह— | ॥१११।२१॥ |
| ३९७ | "मन्तस्य०" | —ननु "शेषे लुक्" इत्यादौ स्वयं कार्ययोगित्वेन विज्ञातयोर्युष्मदस्मदोः कथमिह मन्तस्येत्येतद्विशेषणत्वम् ?,–इति चेत्, सत्यम्, | ॥१११।३०॥ |
| ३९८ | " | —नन्वत्राऽन्तर्भूतान्तार्थपरिग्रहार्थं परिग्रहणं विधेयं, अन्यथा युष्, अस् इत्येतयोरेवाऽऽदेशाः स्युर्न युष्म अस्म इत्येतयोः ?, नैष दोषः । | ॥१११।३४॥ |
| ३९९ | " | —न च नद्यन्तं क्षेत्रमित्यत्राऽन्तशब्दसद्भावेऽपि नद्याः क्षेत्रेऽननुप्रवेशात् कथमेवमुच्यते इति वाच्यम् । | ॥१११।३५॥ |
| ४०० | " | —अथापि तस्य प्रयोक्त्रायत्तत्वाद् वैयधिकरण्यमाश्रीयते–युष्मदस्मदोरवयवस्य मन्तस्येति । | ॥१११।३९॥ |
| ४०१ | " | —न च व्यपदेशिवद्भावोऽस्ति, 'अनाम्ना' इति प्रतिषेधात् । | ॥१११।४०॥ |
| ४०२ | " | —ननु सिजसङेङसोऽतिक्रम्य कथमुदाहृतं, किन्त्वत्र युवावौ न भवतः ?, ओमित्याह– | ॥११२।१९॥ |
| ४०३ | "त्वमौ प्रत्य०" | —ननु त्वदयति, मदयतीत्यत्रोभयोरन्यत्राऽन्यत्र लब्धावकाशत्वादन्त्यस्वरादिलोपः कस्मान्न भवति ?, इत्याह— | ॥११२।४३॥ |
| ४०४ | " | —नन्वत्राऽन्त्यस्वरादिलोपात् प्रागेव नित्यत्वात्त्वमादेशे कृते पश्चादप्यन्त्यस्वरादिलोपः कस्मान्न भवतीति चेत्, | ॥११२।४४॥ |
| ४०५ | " | —ननु प्रत्ययोत्तरपदग्रहणं किमर्थम् ?, स्यादावित्येव सिद्धत्वात् । | ॥११३।२५॥ |
| ४०६ | " | —ननु स्यादेरपि प्रत्ययत्वात् तत्रापि प्रत्ययग्रहणेनैव भविष्यति ?, इत्यत आह— | ॥११३।३३॥ |
| ४०७ | "त्वमहं०" | —ननु त्वं पुत्रोऽस्य त्वत्पुत्र इत्यादौ 'अन्तरङ्गानपि विधीन् बाधित्वा बहिरङ्गा लुप् प्रवर्तते' इति न्यायात् "ऐकार्थ्ये" इति सेर्लुपि प्रत्ययलोपलक्षणेन स्थानिवत्त्वात्त्वमहमादेशः कस्मान्न भवति ?, इत्याह— | ॥११३।३८॥ |
| ४०८ | " | —ननु तन्मते त्वम्, अहम्, यूयम्, वयमित्यादयः कथं सिध्यन्ति ?, इत्याह— | ॥११३।४२॥ |
| ४०९ | "तव मम" | —ननु कथं तवता ?, ममता ?, तवायितं ?, ममायितम् ?; | ॥११४।३४॥ |
| ४१० | "शसो न." | —ननु युष्मानित्यादौ द्वयं प्राप्नोति "शेषे" इत्यन्तलोपोऽनेन नकारश्च, तत्र कृताकृतप्रसङ्गित्वेन नकारस्य नित्यत्वाल्लोपस्य च कृते नकारे शेषत्वाभावादप्रसङ्गित्वेनाऽनित्यत्वात् पूर्वं नकार एव भवति ?, | ॥११५।१८॥ |
| ४११ | " | —यद्येवं किमनेन ?, "शसोऽता०" इत्यनेनैव सिद्धत्वात् ?, उच्यते— | ॥११५।२०॥ |
| ४१२ | "अभ्यम्०" | —ननु पारिशेष्यादप्यस्यार्थस्य सिद्धेः, तथाहि— | ॥११५।२४॥ |
| ४१३ | " | —नन्वेवमस्तु प्रक्रियागौरवं परिहृतं भविष्यति । | ॥११५।२६॥ |
| ४१४ | "ङसेश्चाद्" | —ननु भवत्वत्र ङसिसाहचर्यात् पञ्चमीभ्यसो ग्रहणेन चतुर्थीभ्यस आदेशाभावः ?, | ॥११५।३३॥ |
| ४१५ | " | —अभ्यमादेशस्तु पञ्चमीभ्यसः कस्मान्न भवति ?, न चादेशेनाऽपोदितत्वादिति वाच्यम् | ॥११५।३४॥ |

| क्र० | सूत्रम्। | शङ्का। | पृ० पं० |
|---|---|---|---|
| ४१६ | "ङसेश्चाद्" | —न हि गोधा सर्पणादहिर्भवति, एवं चतुर्थीभ्यसनुवर्तनात् पञ्चमीभ्यस् भवति। | ॥११५।३५॥ |
| ४१७ | " | —नन्वनुवर्तनादर्थेषु अन्यथात्वं मा भूत्, शब्देषु तु दर्शनाद्भवतु, तर्हि आवृत्त्या एवं व्याख्यायते-पञ्चमीभ्यसस्तत्र सूत्रे ग्रहणाभावाच्चतुर्थीभ्यसस्तु युष्मभ्यं, अस्मभ्यं; पञ्चमीभ्यसोऽभ्यमादेशाभाव इति। | ॥११५।३७॥ |
| ४१८ | "आम आकम्" | —नन्वामः कमिति न्यासे "युष्मदस्मदोः" इत्यात्वे युष्माकमित्यादिसिद्धौ किमर्थमाकारकरणम्?, इत्याह— | ॥११५।४२॥ |
| ४१९ | "पदाद्युग्०" | —ननु च वाक्यान्तरस्थात् पदात् परयोर्युष्मदस्मदोः सामर्थ्याभावादेव वस्नसादयो न भविष्यन्ति, किमेकवाक्यग्रहणेन?, | ॥११६।१०॥ |
| ४२० | " | —अत्राऽनेकमपि स्याद्यन्त सम्भवति, पश्य मृगो धावति, पचति ,भवति, इत्यादि ह्येतदेकार्थे साकाङ्क्षं च विभागे पश्य, किं मृगो धावतीत्येतदिति। | ॥११६।१९॥ |
| ४२१ | " | —ननु च प्रयोगे वस्नसादीनां विकल्पेन प्रयुज्यमानत्वात् सूत्रे च तदर्थस्य वाग्रहणादेर्नवेत्यधिकारस्य चाऽभावात् कथं विकल्पो लभ्यते?, इत्याह— | ॥११६।२३॥ |
| ४२२ | " | —ननु वाक्ये व्यपेक्षालक्षणस्य सामर्थ्यस्याऽङ्गीकृतत्वात्तस्याऽत्र सद्भावात् कथमत्र व्यपेक्षालक्षणसामर्थ्यासद्भाव इति चेत्?, उच्यते, | ॥११६।३८॥ |
| ४२३ | " | —अत्र तु प्रकारान्तरेण, तथाहि— | ॥११६।४०॥ |
| ४२४ | " | —ननु द्विवचनैकवचनयोरादेशान्तरविधानाद्बहुत्व एव वस्नसौ विज्ञायेते?, तथाहि— | ॥११६।४५॥ |
| ४२५ | " | —न चैतद्विषयेऽप्यनयोः प्रवृत्तिः स्यादिति वाच्यं, यतोऽपवादविषयपरिहारेणोत्सर्गः प्रवर्तते। | ॥११६।४६॥ |
| ४२६ | " | —किञ्च यथा घ्यण्विषये "कृवृषिमृजि०" ॥५।१।४२॥ इति प्रारभ्यमाणोऽपवादोऽपि क्यप् पक्षे घ्यणः प्रवृत्तिं न विहन्ति। | ॥११६।४८॥ |
| ४२७ | "ङेङसा०" | —'कथं न मे श्रुता नाऽपि च दृष्टपूर्वा'?,-न मे न मयेति ह्यत्रार्थः, असाधुरेवाऽयं, स्यादिप्रतिरूपकमव्ययं वा। | ॥११७।१५॥ |
| ४२८ | "पदाद्युग्०" | —तत्रापि द्वितीयैकवचनस्य त्वामादेशविधानात् डेङसावेव परिशिष्येते किं तदुपादानेन?, | ॥११७।२४॥ |
| ४२९ | "ङेङसा०" | —ननु ङेङसोर्द्वित्वसंख्याविषयत्वात् किमर्थमेकवचनम्?, उच्यते, | ॥११७।३२॥ |
| ४३० | " | —ननु साधुत्वं शिष्टप्रयुक्तेरिति चेत्?, तदा स्यादिप्रतिरूपकमेवमर्थं, इत्याह— | ॥११७।३४॥ |
| ४३१ | "असदिवा०" | —ननु पूर्वस्याऽऽमन्त्र्यस्याऽविद्यमानवद्भावात् कथं 'ग्रामाश्चैत्र ते स्वमथो' इत्यादौ पदात् परयोर्युष्मदस्मदोरुच्यमानस्तेमयाद्यादेशः?, इत्याह— | ॥११८।१९॥ |
| ४३२ | " | —ननु च परार्थे प्रयुज्यमानाः शब्दा अतिदेशं गमयन्ति, यथा गौर्वाहीक इति। | ॥११८।२२॥ |
| ४३३ | " | —अतिदेशधर्मश्च स्वाश्रया निवृत्तिरिति नार्थ इव ग्रहणेन। | ॥११८।२३॥ |
| ४३४ | " | —ननु प्रत्यासत्तेरव्यवहितस्यैव पूर्वस्याऽविद्यमानवद्भावः, ततश्चैत्र! धर्मो वोऽथो रक्षत्वित्यादौ व्यवहितस्याऽऽमन्त्र्यस्य चैत्रादेरविद्यमानवद्भावाभावात् "सपूर्वात्प्र०" इति विकल्पप्रसङ्गः इति चेत्, मैवम्, | ॥११८।२८॥ |
| ४३५ | "नाऽन्यत्" | —ननु विशेष्यस्याऽसत्त्वप्राप्तौ तद्विशेषणपदे परतः सत्त्वमनेन विधीयते, परपदस्य च "असदिवामन्त्र्यं०" इत्यसत्त्वात् परत्वाभावः?, सत्यम्; | ॥११९।२२॥ |
| ४३६ | " | —ननु चामन्त्र्यपदमभिमुखीभव इति क्रियान्तरमाक्षिपद्वाक्यान्तरमेव, ततश्च वाक्यभेदादेवादेशाभावः सिद्धः किमनेन?, इति चेत्, मैवम्; | ॥११९।२४॥ |
| ४३७ | "पादाद्यो." | —ननु किमर्थं पादाद्योरिति द्विवचननिर्देशः?, पादादावित्युच्यमाने पादस्य प्रथमावयवत्वे वर्तमानयोर्युष्मदस्मदोरिति विज्ञायमाने सिध्यत्येवेष्टं, सत्यम्, | ॥११९।३३॥ |
| ४३८ | "चाहह०" | —ननु किमर्थं योगग्रहणम्?, "चाहहवैवे.०" इति तृतीयानिर्देशस्य सापेक्षत्वात् तृतीयैव युक्तमध्याहरिष्यति, यथा "गौणात्समया०" ॥२।२।३३॥ इत्यादौ, इत्याह— | ॥१२०।१९॥ |
| ४३९ | " | —ननु सन्निकृष्टे साक्षाद्योगे प्रतिषेधस्य चरितार्थत्वात् न व्यवहिते विप्रकृष्टयोगे प्रवर्तिष्यत इति किं योगग्रहणेन?, इति चेत्,— | ॥१२०।२३॥ |
| ४४० | "नित्यम०" | —नन्विदं किमर्थम्?, सामान्येन वस्नसादीना विधानादन्वादेशेऽपि सिद्धत्वात्, नित्यार्थमित्यपि न वाच्यं, तत्र विकल्पाभावान्नित्यत्वस्यापि सिद्धत्वात्। | ॥१२०।३९॥ |
| ४४१ | " | —न चाऽनन्वादेशे विकल्पार्थमिति वाच्यं, "अन्वादेशे०" इत्यारम्भसामर्थ्यादनन्वादेशे विकल्पस्य सिद्धत्वादिति चेत्, मैवम्;— | ॥१२०।४०॥ |
| ४४२ | " | —न च "सपूर्वात्०" इत्यन्वादेशे विकल्पविधानान्नित्यग्रहणमन्तरेणाऽप्यन्वादेश एव विकल्प इति वाच्यम्,— | ॥१२०।४२॥ |
| ४४३ | "त्यदामेन०" | —न हि पश्चादुच्चारणमात्रमन्वादेशः, किं तर्हि?, एकस्यैवाभिधेयस्य पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनमन्वादेशस्तेनेह न भवति। | ॥१२१।४३॥ |

सूत्रम्। शङ्का। पृ० पं०

"त्यदामेन०"—अत्र तु वस्तुमात्रानुवादेन वेदनक्रियां प्रति आकारस्य कर्मभावो दण्डस्य तु हरण-क्रियां प्रति करणत्वं विधीयत इत्येकमेव विधानं न विधानान्तरमस्ति, इत्याह— ॥१२२।२२॥

"इदमः"—ननु 'त्यदामेनदेतदिदमो द्वितीयाटौस्स्ववृत्त्यन्ते' इत्येकयोगेनैव सिद्धत्वाद्योगविभागः किमर्थः?, इत्याह— ॥१२२।२९॥

"अद्व्य०"—ननु पूर्वसूत्रे इदमः षष्ठ्यन्तत्वात् "षष्ठ्याऽन्त्यस्य" इति न्यायादन्तस्यैव प्राप्नोति कथं सर्वस्याऽयमादेश इति?,— ॥१२२।३२॥

" —न च अदित्यकारकरणात् सर्वस्याऽयमादेशोऽन्यथा "आ द्वेरः" इत्यकारे, "लुगस्यादे-त्यपदे" इति पूर्वस्य लुकि अकारस्याकारकरणमनर्थकं स्यादिति वाच्यम्। ॥१२२।३२॥

" —ननु सेरपि व्यञ्जनादित्वात्तस्मिन् कथं नाऽयमादेश.?, इत्याह— ॥१२२।४१॥

" —नन्विदं किमर्थम्?, यावतोत्तरसूत्रेणान्वादेशेऽनन्वादेशेऽप्यदादेशः सिद्ध इत्याह- ॥१२२।४३॥

"अनक्"—नन्विदमूह्त्यधिकारादिदम्‌रूपस्य विधिस्तत्राऽकि कृते इदम्‌रूपस्याऽभावादेव न भविष्यति किं प्रतिषेधेनेति चेत्, सत्यम्,— ॥१२३।२४॥

१ " —ननु अनगिति इदमः पूर्वत्र षष्ठ्यन्तनिर्दिष्टस्य विशेषणत्वात् कथं कार्येणाऽभेद-निर्देशः?, इत्याह— ॥१२३।३२॥

१ "अयमियं०"—नन्वत्रादेशे कृतेऽन्त्यमकारस्य "आ द्वेर." इत्यत्वं कथं न भवतीति चेत्, सत्यम्,-॥१२३।४०॥

३ "दो म.०"—ननु मकारस्य मकारकरणवैयर्थ्यात् "आ द्वेरः" इत्यत्वप्रवृत्तेश्च व्यञ्जनत्वेन स्वरस्या-ऽनासन्नत्वादेकवर्णत्वेनाऽन्तस्य भवन्नपि सामर्थ्यादुपात्तस्य दकारस्यैव भविष्यति किं द इति ग्रहणम्?, इति चेत्, उच्यते,— ॥१२४।१७॥

३ " —अथवा मकारस्याऽभेदनिर्देशेन "अद् व्यञ्जने" इतिवत् सर्वस्याऽपि स्यादिति दग्रहणम्॥१२४।१९॥

५ "किमः०"—ननु "किमः क." इति गुरुकरणं किमर्थम्?, 'आ द्वेरस्तसादौ च' इति कृत्वा, 'इम' इत्येव सूत्र्यताम्। ॥१२४।२६॥

६ " —न चैकवर्णत्वादन्त्यस्य स्यादिति वाच्यं 'नानर्थके तदन्तविधिः' इत्याश्रयणादिति। ॥१२४।२९॥

७ " —यद्वाऽभेदनिर्देशात् सर्वस्याऽपीमोऽकारादेशे न कश्चिद्दोष इति चेत्, मैवम्;— ॥१२४।३०॥

८ "आ द्वेरः"—ननु आ द्वेरिति किमर्थम्?, असदन्ताना भवदन्ताना वा मा भूदिति। ॥१२४।३६॥

९ " —तत्र सत्यपि द्विशब्दात् परत. शब्दचतुष्टयस्य पाठे भवच्छब्दस्यैवात्वापत्तिर्दोषो न किं-युष्मदस्मदाम्। ॥१२४।३९॥

० " —नैषोऽस्ति दोषः-यदयं त्यदादीनामत्वे सिद्धे "शेषे लुक्" शास्ति तज्ज्ञापयति नेतः प्रागकार इति, नैवम्;— ॥१२४।४०॥

१ " —किञ्चाऽत्वे सत्याप्यप्रसङ्गात्तदभावार्थः "शेषे लुक्" इति अन्त्यस्वरादिलोपो बोद्धव्यः॥१२४।४२॥

२ " —नन्वेवं तर्हि-अन्त्यस्वरादिलोपो वक्तव्यः। ॥१२४।४३॥

३ " —न चाऽत्वेन सिद्धत्वाद्वचनादेव अन्त्यस्वरादिलोपो भविष्यतीति वाच्यं, उपसर्जन-स्यात्वासिद्धेरुपसर्जनार्थत्वात् तस्येति चेत्, न वक्तव्यः। ॥१२४।४३॥

४ " —तथाहि-लोपमुत्सर्गं विधाय व्यञ्जनादावात्वं टाङ्योसि च यत्वमपवादो विधास्यत इति शेषग्रहणमनर्थकं तत्क्रियमाणं लोपस्य विषयार्थं स्यात्;— ॥१२४।४४॥

६५ " —यदि च द्विशब्दात् परेषामत्वं स्यात् किमः कं न विदध्यात्, किन्तु "आ द्वेरः" इत्य-नन्तरं "किम" इत्येव ब्रूयात्। ॥१२५।१३॥

६६ " —ननु तथापि कुत एतज्ज्ञापकं?, किम इत्येवोच्यमानेऽन्त्यस्य मकारस्य पूर्वेणाऽकारे तस्यैव पुनरनेनाऽपि स्यात्। ॥१२५।१६॥

६७ " —न चोक्तानुवाददोषादन्त्यस्य न भविष्यतीति वाच्यम्?, काभ्यां, केभ्य इति विध्यन्तर-बाधनार्थत्वादिति कथं द्विपर्यन्ताना भविष्यति न पुनरसदन्तानां भवदन्तानां वा ॥१२५।१६॥

६८ " —किं चाऽवश्यं कादेशः सागर्थोऽपि वक्तव्यः, तेनाऽज्ञातार्थविवक्षायां क इत्येव भवति, न तु कक इति भवति। ॥१२५।१८॥

६९ " —न च 'निर्दिश्यमानस्यादेशा भवन्ति' इति साकः कादेशो न प्राप्नोतीति वाच्यम्, "किम. क." इति वचनसामर्थ्याद्भविष्यति। ॥१२५।१८॥

७० "अदसो०"—नन्वदस इति किमर्थम्?, पारिशेष्याददस एव दकारस्य सकारो भविष्यति। ॥१२५।२६॥

७१ " —किं चाऽन्त्यदकारस्य सकारेऽपि "द्वित्यन्त्यस्वरादे." इत्यन्त्यस्वरादिलोपे विशेषा-भावात् सकारकरणमनर्थकं स्यात्। ॥१२५।२८॥

७२ " —न चाऽनन्त्यस्य भवन्निदमोऽपि स्यादिति वाच्यं "अयमियं पुंस्त्रियोः सौ" इत्य-शेषस्य विधानादयमियमोस्तत्र बाधकत्वात्। ॥१२५।२९॥

७३ " —द्विशब्दस्य च द्वित्वार्थविषयत्वात् सेरभावादप्रसङ्ग इति चेत्, न, ॥१२५।२९॥

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| ४७४ | "अदसो०" | —तस्मात्यदूतदूयदेतदामन्त्यदकारस्य सकारः स्यात्, अदस एव यथा स्यादन्यस्य मा भूदित्येतदर्थमदसग्रहणम् । | ॥१२५।३१॥ |
| ४७५ | " | —नन्वेवं यद्यदस एव दस्य सत्त्वं विधीयते, ततो द्वाविच्छति द्वीयति, ततः क्विप्, अकारयकारक्विपो लोपे, ततः सावीकारस्य त्यदाद्यत्वे द्व इति प्राप्नोति स्व इति चेष्यत इति चेत्, सत्यम्; | ॥१२५।३१॥ |
| ४७६ | " | —एवं तर्हि-असकौ ब्राह्मणी, असौ ब्राह्मणीत्यत्र "एदापः०" इति, "दीर्घङयाब्०" इति चैत्त्वलोपयोः प्रसङ्ग. ?, | ॥१२५।३९॥ |
| ४७७ | "मोऽवर्णस्य" | —नन्वसाविव दृश्यत इत्यदसः परतो दृशेः "त्यदाद्यन्यसमानादुपमानात्०" ॥५।१।१५२॥ इति क्विपि, टकि, सकि च स्याद्यभावादत्वाभावे कथं 'अमूदृग्' इत्यादौ मत्वं ?, इत्याह– | ॥१२६।२५॥ |
| ४७८ | " | —ननु अदः कुलमिच्छतीत्यस्मिन् वाक्येऽदस्शब्दान्नपुंसकादमो लुपि "सो रु." इति रुत्वे, "रोर्य." इति यत्वे, "स्वरे वा" इति यलोपेऽवर्णान्तत्वान्मत्वप्रसङ्ग इति चेत्, उच्यते— | ॥१२६।२७॥ |
| ४७९ | "मादुवर्णो०" | —नन्वत्र "इवर्णादे०" इति वकारः कस्मान्न भवति ? इत्याह— | ॥१२६।४५॥ |
| ४८० | " | —ननु मत्वे कृते पूर्वं पश्चाद्वा उवर्णादेशे अमुमित्यादीनां सिद्धत्वादनुग्रहणं किमर्थम् ?, इति पृच्छति । | ॥१२६।४५॥ |
| ४८१ | "प्रागिनात्" | —ननु परत्वान्नित्यत्वादिनादेशात् पूर्वमुवर्णः सिद्ध एव किमनेन ?, इति चेत्, | ॥१२७।१६॥ |
| ४८२ | "बहुष्वेरी." | —नन्विकारस्य षष्ठ्यामेरूपस्य समानत्वात्ततश्चाऽदसोऽद्यागमे कृते तदवयवस्यैकारस्य यत्वं बाधित्वा इत्वं स्यादिति कथमेकारस्येत्युक्तं ?, इति चेत्, मैवम्, | ॥१२७।२१॥ |
| ४८३ | " | —किञ्च "अदो मुमी" ॥१।२।३५॥ इत्यत्र मीति निर्देशान्न हीकारपरिग्रहेऽदसो मीरूपसम्भवोऽस्तीति तस्मात् सूक्तमेकारस्येति । | ॥१२७।२४॥ |
| ४८४ | "धातोरि०" | —नन्विवर्णोवर्णस्येति धातोरित्यस्य विशेषणत्वात्तदन्तसम्प्रत्यये धातोरिवर्णोवर्णान्तस्येति समानाधिकरणषष्ठ्या सम्भवन्त्यां व्यधिकरणषष्ठ्याः प्रतिपत्तिगौरवात् परिग्रहायोगात् कथमेवमुच्यत इति ?, | ॥१२७।३१॥ |
| ४८५ | " | —न च समानाधिकरणषष्ठ्यामनेकवर्णत्वात् सर्वादेशप्रसङ्ग इति वाच्यं, यतो 'निर्दिश्यमानस्याऽऽदेशा भवन्ति' इति इवर्णोवर्णयोरेवेयुवौ भविष्यत इति चेत्, सत्यम्; | ॥१२७।३२॥ |
| ४८६ | " | —ननु नयतेर्लुनातेश्च "करणाधारे" ॥५।३।१२९॥ इत्यनटि, "णकतृचौ" ॥५।१।४८॥ इति कर्तरि णके च इवर्णोवर्णान्तत्वादियुवौ कस्मान्न भवत. ?, इत्याह— | ॥१२७।४३॥ |
| ४८७ | "इणः" | —नन्विणो धातुत्वात् स्वरादौ प्रत्यये पूर्वेणैवेयादेशो भविष्यतीति चेत्, उच्यते,— | ॥१२८।१८॥ |
| ४८८ | " | —इणधातोर्वर्तमानाया अन्तिप्रत्यये पञ्चम्या अन्तुप्रत्यये च स्वरादित्वात् "इण." इतीयादेशः कस्मान्न भवति ?, इति प्रश्नार्थ. । | ॥१२८।२१॥ |
| ४८९ | " | —नन्वस्तु यन्ति, यन्त्वित्यत्र परत्वात् "क्षिणो०" इति यत्वं, परन्तु इण्धातोरनटि णके च स्वरादौ प्रत्ययेऽनेनेयादेश. कस्मान्न भवति ?, इत्याह— | ॥१२८।२२॥ |
| ४९० | "संयोगात्" | —ननु धातोरिति विशेषणं कार्यितया प्राधान्यादिवर्णोवर्णयोरेव युज्यते न संयोगस्य, तस्य तद्विशेषणत्वेनाऽप्राधान्यात्; प्रधानासम्भवे हि विशेषणं गौणे युज्यत इति । | ॥१२८।२६॥ |
| ४९१ | " | —न च तस्य प्रधानान्वये व्यावर्त्याभाव इति वाच्यं, धातोरेवाऽवयवो य इवर्ण उवर्णश्च संयोगात् परस्तयोरियुवाविति विशेषणविशेष्यभावादत्र धात्ववयवस्य व्यावर्त्यलाभात् । | ॥१२८।२७॥ |
| ४९२ | " | —न च तत्र "इवर्णादे०" इति यकारवकारयोः सम्भवादव्यावर्त्यत्वमिति शङ्क्यं, यत्र समानदीर्घत्वं बाधकमस्ति तत्र व्यभिचारादर्थवदिवर्णोवर्णयोर्धातोरिति विशेषणमिति प्रधानगामिनि सम्भवति विशेषणे गुणस्य तेन सम्बन्धो न न्याय्य इति चेत्, उच्यते— | ॥१२८।२८॥ |
| ४९३ | "स्त्रियाः" | —न च तदन्तग्रहणात् शस्त्रीशब्दस्याऽपि रूयन्त्यत्वादियादेशप्रसङ्ग इति वाच्यं, तदेकदेशस्याऽनर्थकत्वात्, इत्याह— | ॥१२९।१९॥ |
| ४९४ | " | —नन्वतिस्त्रिशब्दाज्जसि टाया ङेङसिङस्ङिषु चाऽनेनेयादेश. कस्मान्न भवतीति शङ्कते । | ॥१२९।२०॥ |
| ४९५ | " | —ननु स्त्रीशब्दादामि प्राप्त इयादेश. कस्मान्न भवति ?, इत्याह— | ॥१२९।२१॥ |
| ४९६ | "वाऽम्शसि" | —ननु धातुरूपस्यैव स्त्रीशब्दस्य विकल्पार्थमिदं कस्मान्न भवति ?, कथमुक्तं "धातोरिवर्णोवर्ण०" इत्यादिना नित्यमियादेश इति ?, उच्यते— | ॥१२९।२८॥ |
| ४९७ | " | —न चाऽनुवर्तमानस्याऽन्यथात्वं भवति, यदाह-श्रीशेषराजः- | ॥१२९।३०॥ |
| ४९८ | "क्विब्वृत्ते०" | —नन्वेवमनेन न्यायेन परमन्याविति भाव्यमिष्यते च परमनियाविति तत्कथमिति चेत्, उच्यते— | ॥१३०।१७॥ |

| क्र० | सूत्रम्। | शङ्का। | पृ० प० |
|---|---|---|---|
| ४९९ | "क्विब्वृत्ते०" | —यद्यपि षष्ठीसमासस्तदापि सम्बन्धविवक्षायां तिरोहिता भवति समासहेतुभूत-कारकत्वविवक्षा। | ॥१३०।१९॥ |
| ५०० | " | —यद्यपि परमं शास्त्रं नयतीति नयनक्रियाकर्मण· शास्त्रादेर्विशेषणं परमशब्दस्तदा सत्यपि कर्मत्वे शास्त्राद्यपेक्षत्वात् सामर्थ्याभावात् ऋद्धस्य राज्ञ· पुरुष इतिवत् वाऽन्तर्भावः, तस्मात् परमनियाविलेव भवति, इत्याह— | ॥१३०।२०॥ |
| ५०१ | "दृन्पुन०" | —ननु भुवः क्विबन्तस्य दृन्नादिभिर्वृत्तौ पूर्वेण सिद्धत्वात् किमर्थमिदम्?,इत्याशङ्क्याऽऽह- | ॥१३०।३५॥ |
| ५०२ | "णषम०" | —ननु णषशब्देन णत्वषत्वविधायकशास्त्राभिधानात् तत्र च षत्वशास्त्रस्य पूर्वभावित्वात् पूर्वनिर्देशे प्राप्ते परनिर्देश· किमर्थः?, इति चेत्,— | ॥१३०।४४॥ |
| ५०३ | " | —ननु सिद्धस्य णषशास्त्रस्य तत्कार्यस्य च कथमनेन वचनमात्रेणासत्त्वमारोपयितुं शक्यम्?, इति चेत्, उच्यते— | ॥१३१।११॥ |
| ५०४ | " | —नन्वेवं तर्हि "पदस्य", "रात्सः" इत्यादौ षष्ठीनिर्देशानां परस्यां "षष्ठ्याऽन्त्यस्य" इति परिभाषायामसिद्धत्वात् सा तेषु व्यवस्थापिका न स्यात्, प्रत्युत तस्या· षष्ठ्याः समीपयोगत्वकल्पने पदान्ते वर्तमानस्य संयोगस्य समीपे यस्तस्य लोपः स्यादित्यर्थापत्तेश्च | ॥१३१।२३॥ |
| ५०५ | " | —एवं "हो धुट्पदान्ते" इत्यादौ सप्तमीनिर्देशस्याऽसिद्धत्वात् "सप्तम्या पूर्वस्य" इति परिभाषानुपस्थितौ पूर्वस्यैवाऽनन्तरे भवितव्यमित्यस्य नियमस्याऽभावात् सामान्येन पूर्वस्य परस्य वाऽनन्तरे धुटि च कार्यं स्यात्, तथा "अधश्चतुर्थात्०" इत्यादौ "पञ्चम्या निर्दिष्टे परस्य" इत्यनुपस्थित्या परयोर्व्यवहितयोश्च तकारथकारयोः कार्यं स्यादिति चेत्, उच्यते— | ॥१३१।२५॥ |
| ५०६ | " | —न चैवं तर्हि देशभेदेन निर्देशस्तासां कथमिति वाच्यम्?, | ॥१३१।३१॥ |
| ५०७ | " | —किञ्च प्रधानदेशे तासामुपदेशे यस्यैव प्रधानस्य समीपे उपदिष्टास्तदेव ता उपकुर्युर्न प्रधानान्तरम्। | ॥१३१।३२॥ |
| ५०८ | " | —ननु यदि कार्यकाले संज्ञापरिभाषे इति स्वीक्रियेत तदा विपूर्वस्य स्फुरेरवपूर्वस्य गुरेश्च "ऋवर्णव्यञ्जनात्०" ॥५।१।१७॥ इति ध्यणि धातोरनयोः कुटादिपाठे सत्यपि "कुटादेर्ङिद्वदञ्णित्" ॥४।३।१७॥ इत्यञ्णित्प्रत्ययस्य ङिद्वत्वेऽत्र तु णितो ङित्वाभावात् "स्पर्धे" इति परिभाषायाश्च सत्त्वे "लघोरुपान्त्यस्य" ॥४।३।४॥ इत्युपान्त्यगुणाप्रवृत्तौ "भ्वादेर्नामिन०" ॥२।१।६३॥ इति दीर्घत्वेऽनिष्टरूपापत्तेः, इष्टस्य च गुणस्याऽभावेन विस्फोर्यमवगोर्यमिति रूपानापत्तेश्च। | ॥१३१।३७॥ |
| ५०९ | " | —ननु "स्पर्धे" इति परिभाषयोपान्त्यगुणो भवत्विति चेत्, तन्न;— | ॥१३१।४०॥ |
| ५१० | " | —एवं पूर्वस्याऽप्यपवादस्य परस्मिन्नुत्सर्गे कर्तव्ये नाऽसिद्धत्वं, अपवादवचनस्य निर्विषयत्वेन वैयर्थ्यप्रसङ्गात्। | ॥१३१।४३॥ |
| ५११ | "भ्वादेर्ना०" | —ननु प्रतिपूर्वाद्दिवेः "लूपूयुवृषि०" उणा० ९०१। इति क्वनि तृतीयैकवचने चतुर्थ्येकवचने च "अनोऽस्य" इत्यकारलोपे तस्य "स्वरस्य परे प्राग्विधौ" इति स्थानिवद्भावे व्यञ्जनाभावात् प्रतिदीव्ना, प्रतिदीव्ने इति कथं दीर्घत्वम्?, इत्याह— | ॥१३३।२४॥ |
| ५१२ | " | —नन्वत्र पिति कृति "ह्रस्वस्य त·०" ॥४।४।११३॥ इति तागमः कस्मान्न?, इति चेत्,— | ॥१३३।२५॥ |
| ५१३ | " | —नन्वेवं ग्रामं नयतीति क्विपि "ग्रामाग्रा०" ॥२।३।७१॥ इति णत्वे "वेदूतोऽनव्ययय्वृदीच्ङीयुवः पदे" ॥२।४।९८॥ इति ह्रस्वत्वे ग्रामणिनो व्रज्या, ग्रामणि व्रज्या इत्यत्र धात्विकारसद्भावाद्दीर्घत्वप्रसङ्ग इति चेत्, उच्यते— | ॥१३३।२९॥ |
| ५१४ | "न यि त०" | —नन्वत्र र्वोरित्यनुवर्तनायकारादितद्धितपरकरेफे नामिनो दीर्घ इत्यस्य धुर्य इत्याद्युदाहरणदानात् तादृशवकारे तददानाच्यूनतेत्यत आह— | ॥१३४।२१॥ |
| ५१५ | " | —पुरिशब्दात् "स्त्रिया ङितां वा०" इति ङेर्दामादेशे किरिगिरिभ्यामोसि यत्वे च व्यञ्जनसद्भावाद्दीर्घत्वं कस्मान्न भवति?, उच्यते— | ॥१३४।३०॥ |
| ५१६ | " | —नन्वेतत्पक्षाङ्गीकारे 'प्रतिदीव्ना' इत्यत्राऽपि दीर्घत्वं न सिध्यति, तस्याऽप्यौणादिकत्वादिति?,— | ॥१३४।३३॥ |
| ५१७ | " | —नन्वकारलोपस्य बहिरङ्गासिद्धत्वाद् व्यञ्जने परे धातोर्वकारान्तत्वाभावान्नेदं प्रवर्तेत इति चेत्, न;— | ॥१३४।३८॥ |
| ५१८ | "कुरुच्छुर·" | —ननु 'रीङ्' गतिरेषणयो·, 'रिं' गतौ, 'वीङ्' प्रजनकान्त्यसनखादनेषु, एभ्योऽतुसि उसि च द्वित्वे "योऽनेकस्वरस्य" इति यत्वे दीर्घत्वं कस्मान्न सम्भवति?, उच्यते— | ॥१३५।१४॥ |
| ५१९ | "मो नो म्वोश्च" | —ननु पूर्वत्राऽवयवषष्ठ्यन्तं भ्वादेरिति विशेषणं कथमत्र मकारस्य विशेष्यं भवितुमर्हति?, न हि 'गोधा सर्पन्ती सर्पणादहिर्भवति' इति न्यायादिति चेत्, मैवम्,— | ॥१३५।२१॥ |
| ५२० | "स्रन्सुध्वन्सु०" | —एवं तर्हि-अनड्वान्, हे अनड्वन्!, इत्यत्र नकारस्यापि प्राप्नोति तत्र विशेषणाभावात्?, नैवम्;— | ॥१३६।२॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| ५२१ | "स्रंस्ध्वंस्०" | —ननु वसतिवस्त्योः सकारान्तत्वाव्यभिचाराद् व्यभिचारे च विशेषणस्याऽर्थवत्त्वाद् व्यभिचारिणः क्वस एव ग्रहणं भविष्यति, वस्सिति सकारोपादानात्, इति किमर्थं क्वस्सेत्यत्र ककारकरणं ?, इति चेत्, उच्यते— | ॥१३६।२२॥ |
| ५२२ | " | —ननु अनडुह्शब्दात् "अनडुहः सौ" ॥१।४।७२॥ इति नागमे "पदस्य" इति हलोपे दत्वप्रसङ्ग इति चेत्, मैवम्,— | ॥१३६।२७॥ |
| ५२३ | " | —ननु यदि नकारविधानसामर्थ्यात् प्राप्नुवन् विधिर्न भवति तर्हि अनड्वांस्तत्र इत्यादौ "नोऽप्रशानो०" इति सकारोऽपि न प्राप्नोतीति चेत्, न,— | ॥१३६।२८॥ |
| ५२४ | "ऋत्विज्०" | —ननु सृज्धातोः क्विपि ऋकारस्य रत्वं कथम् ?, इत्याह— | ॥१३६।३७॥ |
| ५२५ | " | —ननु दधृष् इत्यत्र द्विरुक्तिः कस्मात् ?, इत्याह— | ॥१३६।३८॥ |
| ५२६ | "युजञ्च०" | —ननु 'क्रुञ्च' गतौ इत्यस्मात् क्विपि "नो व्यञ्जनस्याऽनुदितः" ॥४।२।४५॥ इति नलोपे सति नकाराभावादनेन कथं नस्य ङ इत्यत आह— | ॥१३७।१८॥ |
| ५२७ | "अह्नः" | —नन्वत्र सिलोपे परत्वात् नकारस्य रुत्वे नकाराभावात् कथं दीर्घ इति चेत्, न,— | ॥१३७।३१॥ |
| ५२८ | " | —ननु हनेर्ह्यस्तन्या दिवि सिवि वा "अड्धातो०" इत्यडागमे, "व्यञ्जनाद्देः सश्च दः" ॥४।३।७८॥ इति, "सेः स्द्धां च रुर्वा" ॥४।३।७९॥ इति च दिव्सिवोर्लोपे अहन् इत्येतस्य पदत्वात् नस्य रुत्वं कस्मान्न भवति ?,— | ॥१३७।३३॥ |
| ५२९ | " | —न च प्रतिपदोक्तस्य सम्भवो नाम तथाहि–अह्नश्च "श्वन्मातरिश्वन्०" । उ० ९०२ । इत्यनि निपातने कथं प्रतिपदोक्तं स्यात् ?,— | ॥१३७।३५॥ |
| ५३० | "धुटस्तृ०" | —ननु कश्चरतीत्यादौ रेफादेशस्य शकारादेर्धुट्त्वादासन्नत्वात्तृतीयो जकारादिः कस्मान्न भवति ?,— | ॥१३८।२८॥ |
| ५३१ | "गडदबा०" | —ननु धातोरवयवस्येत्युच्यते, अत्र त्ववयवातिरिक्तस्य तुण्डिप् इत्यादिवत् धातोरभावात् कथं प्राप्तिः ?, इति चेत्, उच्यते— | ॥१३८।३८॥ |
| ५३२ | "धागस्त०" | —नन्वत्राऽऽकारलोपस्य स्वरादेशत्वेन "स्वरस्य परे प्राग्विधौ" ॥७।४।११०॥ इति स्थानिवद्भावात् चतुर्थान्तत्वाभावात् कथमादेशश्चतुर्थ इत्याह— | ॥१३९।३०॥ |
| ५३३ | "नाम्यन्ता०" | —ननु घकारस्य कार्यभाक्त्वात् परोक्षादिभिश्च विशिष्यमाणत्वात् प्राधान्यं परोक्षादीनां तु विपर्ययाद् गुणत्वं, गुणप्रधानसन्निधौ च प्रधानस्यैव घकारस्य नाम्यन्तेन धातुना सम्बन्धो न्याय्य इति चेत्, उच्यते— | ॥१४०।१७॥ |
| ५३४ | "हो धुट्०" | —ननु गुडलिह् विद्यतेऽस्येति "तदस्याऽस्त्यस्मिन्निति मतुः" ॥७।२।१॥ इति मतौ ढत्वे तृतीयत्वे च "मावर्णान्तोपान्त०" इति वकारः कस्मान्न भवति ?, इत्याह— | ॥१४१।१८॥ |
| ५३५ | "भ्वादेर्दा०" | —ननु लक्ष्ये घकारस्य स्वरूपेणावस्थानाभावात् "धुटस्तृतीयः" इति गकारेण भाव्यमिति स एव उच्यतामिति चेत्, मैवम्; | ॥१४१।३१॥ |
| ५३६ | " | —ननु किमर्थं भ्वादेरित्युपादीयते ?, "भ्वादेर्नामिनो०" इत्यत एव तदनुवृत्तेस्तत एव तत्साध्यार्थसिद्धेः । | ॥१४१।३३॥ |
| ५३७ | " | —एवं तर्हि "गडदबादे०" इत्यत्र यथाऽनुवर्तनात् धातुमात्रार्थं तद्भवति न तु पठितधात्वर्थं, अन्यथा तु तुण्ढिप् गर्ध्वेत्याद्यसिद्धेः । | ॥१४१।३६॥ |
| ५३८ | " | —न च कुण्डमुम्भतीति कुण्डोबित्यादिव्यावृत्त्यर्थं, लोके प्रयुज्यमानानां शब्दानामन्वाख्यायकं शास्त्रं तत्तद्व्युत्पादकं, न चैतत् क्विबन्ताः प्रयुज्यन्त इति । | ॥१४१।३७॥ |
| ५३९ | " | —नन्वेवं यदि विशिष्टसम्बन्धिप्रतिपत्त्यर्थं भ्वादेरित्युपादीयते तर्हि भ्वादेर्दादेरित्येतत्समानाधिकरणं विशेषणं भवतु दकारादेर्धातोरिति, तथा च दामलिड्ढिति भवत्ययं दादिर्न तु भ्वादिः, समुदायस्य धातुष्वपाठात् । | ॥१४१।३९॥ |
| ५४० | " | —सधोगित्यत्रापि दादिग्रहणेन तद्भक्तत्वादटो ग्रहणात् घत्वं भविष्यति पाठे ह्यस्य दादित्वादिति चेत्, सत्यम्, | ॥१४१।४१॥ |
| ५४१ | "मुहद्रुह०" | —ननु किमेते मुहादयः स्वरूपेणोपादीयन्ते ?, मुहादेरित्येवोच्यतां, न चाऽधिकानां प्रसङ्गः, तदनन्तरं वृत्करणात्, तद्धि पुपादिपरिसमाप्त्यर्थमपि भविष्यतीति चेत्, उच्यते— | ॥१४२।१७॥ |
| ५४२ | " | —ननु वोमवीतीत्यादय एव नियता यङ्लुबन्ता लोके प्रयुज्यन्त इत्येषां प्रयोगो न भविष्यति ?, एवं तर्हि स्पष्टार्थं पाठः । | ॥१४२।१९॥ |
| ५४३ | "नहाहो०" | —नन्वाहेरपि धकारे "अघोषे प्रथमो०" इति तकारे सति आत्थेति सिध्यतीत्युभयोर्धकार एवोच्यतां किं तकारकरणेनेति चेत्, मैवम्, | ॥१४२।२७॥ |
| ५४४ | " | —न च सिवस्थत्वविधानसामर्थ्यादेव धत्वं न भविष्यति, अन्यथा सिवो धत्वमेव विदध्यादिति वाच्यं, लाघवार्थं तत्स्यादन्यथा "भृगः पञ्चानां०" इत्यत्र सिवो ध इति सूत्रान्तरे कृते गौरवं स्यात्तस्मात् सूक्तम् । | ॥१४२।२९॥ |

| क्र० | सूत्रम्। | शङ्का। | पृ० पं० |
|---|---|---|---|
| ५४५ | "चजः क०" | —"तेन वित्ते०" ॥७।१।१७५॥ इति तच्छब्दात् चञ्चुचणयोश्चरतौ च परत्वात् पूर्वं तृतीयत्वे "तवर्गस्य०" इति जत्वे गत्वं, "अघोषे प्रथमो०" इति चत्वे कत्वं कस्मान्न भवति ?, नैवम्; | ॥१४२।३७॥ |
| ५४६ | ,, | —नन्वत्र सूत्रे किमर्थमादेशद्वयविधानम् ?, यावता कविधानं गविधानं वा क्रियतां, यथा लक्षणं कस्य गत्वे, गस्य कत्वे च सर्वसाध्यसिद्धेरिति चेत्, सत्यं, गाभावे लग्नादयः का भावे पकादयो न सिध्येयुरिति कगग्रहणम्। | ॥१४२।४१॥ |
| ५४७ | "यजसृज०" | —ननु विपूर्वस्य भ्राजेः क्विबन्तस्य गत्वे विभ्रागिति प्रयोगदर्शनात् कथं तत्सिद्धिः ?, इत्याह— | ॥१४३।२३॥ |
| ५४८ | ,, | —ननु श इति सामान्येनोपादानात् "मासनिशासनस्य०" ॥२।१।१००॥ इति निशाशब्दस्याऽन्तलोपे शस्य षत्वं कस्मान्न प्राप्नोति ?, उच्यते— | ॥१४३।२५॥ |
| ५४९ | ,, | —ननु परत्वात् प्रथमं बाधित्वा "चजः कगम्" इति जस्य गत्वं कस्मान्न भवति ? इत्याह— | ॥१४३।३७॥ |
| ५५० | "संयोग०" | —ननु स्कोर्लुक. परस्मिन्नसत्त्वात् "पदस्य" ॥२।१।८९॥ इति सयोगान्तस्य स्यात् ?, नैवम्, | ॥१४४।५॥ |
| ५५१ | ,, | —ननु स्कोर्लुकि तु लुग्विधेश्चरितार्थत्वात् कार्यासत्त्वपक्षमाश्रित्य "पदस्य" इति अत्र लोपप्रसङ्ग इति चेत्, न, | ॥१४४।२७॥ |
| ५५२ | "पदस्य" | —ननु पुमानित्यादौ "पदस्य" इति संयोगान्तलोपे नकारलोपः कस्मान्न भवति ?, इत्याह— | ॥१४५।२३॥ |
| ५५३ | ,, | —ननु भवाञ्छेते इत्यत्र नकारस्य ञादेशे संयोगान्तलोप. कस्मान्न भवति ?, इत्याह— | ॥१४५।२८॥ |
| ५५४ | "रात्सः" | —नन्वत्र रेफात् परत्वात् पदान्तकृतस्य सस्य षत्वेन भवितव्यं कथं लोपः ?, इत्याह— | ॥१४५।३३॥ |
| ५५५ | ,, | —नन्वेवं तर्हि कीर्तयतेरप्रत्यये कीरिति प्राप्नोति कीर्त् इति चेष्यते ?, अत्र भाष्यम्— | ॥१४५।४३॥ |
| ५५६ | "नाम्नो नो०" | —नन्वत्र "रो लुप्यरि" इति, "अह्नः" इति च विशेषविहितत्वेनाऽपवादत्वान्नलोपमपोह्य रेफरुत्वे भविष्यतः, किमनह्न इति प्रतिषेधेन ?, उच्यते— | ॥१४६।२६॥ |
| ५५७ | ,, | —न च रेफरुत्वयोरनवकाशत्वमिति वाच्यम्, हे अहः ?, हे दीर्घाहः ?, इत्यादौ सम्बोधने तयोः सावकाशत्वात्, इत्याह— | ॥१४६।२७॥ |
| ५५८ | ,, | —नन्वत्र परेऽसत् इत्यधिकृतस्य निवृत्तत्वात् "ह्रस्वस्य तः०" इति तोऽन्तो वृत्रहभ्यामित्यादौ कथं न भवति ?, अत आह— | ॥१४६।३३॥ |
| ५५९ | "नाऽऽमन्त्र्ये" | —ननु हे राजन्नित्यादौ सिलुकः स्थानिवद्भावेन "अधातुविभक्ति०" इति नामसंज्ञाप्रतिषेधे पूर्वेण लोप एव न प्राप्नोति, कथमनेन प्रतिषिध्यते ?, इत्याह— | ॥१४६।३६॥ |
| ५६० | ,, | —नन्वामन्त्र्ये नलोपप्रतिषेधात् राजन्, वृन्दारकेत्यनयोरामन्त्र्यार्थयोः "वृन्दारकनागकुञ्जरैः" ॥३।१।१०८॥ इति समासे राजन्, वृन्दारकेति भाव्यम् ?, नैष दोषः, | ॥१४६।३८॥ |
| ५६१ | "मावर्णा०" | —ननु "नाम्नि" इति प्रातिरूप्यादीनां वार्यत इति चेत्, न, | ॥१४७।१६॥ |
| ५६२ | "दन्तपाद०" | —ननु ददाद्यादेशवत् पूर्वसूत्रेऽपि मास् इत्यादि समस्तादेशः कर्तुमुचितस्तथा च सति प्रकरणभेदोऽपि न स्यात्, अत एव पूर्वैः "पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासन्०" पा० ॥६।१।६३॥ इति कृतं, प्रकृतिस्तु तत्राऽनुमितेति चेत्, सत्यम्, | ॥१४९।२८॥ |
| ५६३ | ,, | —ननु पूर्वैश्छन्दोविषयत्वमेषामुक्तं, न च छान्दसा भवद्भिर्व्युत्पाद्यन्ते इति "मासनिशा०" इत्यादि सूत्रद्वयमनर्थकम् ?, नैवम्, | ॥१४९।३२॥ |
| ५६४ | "यस्वरे०" | —ननु द्विधा पाच्छब्दस्य सम्भवस्तथाहि—"पात्पादस्याऽहस्त्यादेः" ॥७।३।१४८॥ इत्यादिभिः कृतपादादेशस्य तथा पादयतेः क्विबन्तस्य णिलुकि, तत्कस्येह ग्रहणम् ?, उच्यते— | ॥१४९।४१॥ |
| ५६५ | ,, | —नन्वेवमनेकवर्णत्वात् सर्वस्य पादन्तस्य प्राप्नोति केवलस्य चेष्यते, तस्मात् पाद. पदादेशमपास्य पादो ह्रस्व इति कर्तव्यम् ?, इति य. शङ्कते तम्प्रत्याह— | ॥१४९।४६॥ |
| ५६६ | "उदच०" | —ननु उदञ्चेत्यादौ अघुट्स्वरे आदेश. कस्मान्न भवति ?, इत्याह— | ॥१५०।४०॥ |
| ५६७ | "अच्च् प्रा०" | —ननु दृषदमञ्चतीति क्विपि टादावनन्तरपूर्वस्वराभावे दीर्घत्वाभावादेकयोगनिर्दिष्टत्वादादेशस्याऽप्यभावात् कथं दृषचेत्यादि सिध्यति ?, इत्याह— | ॥१५१।१७॥ |
| ५६८ | ,, | —नन्वत्र दकारस्य दन्त्यत्वात् ऌकारो दीर्घ आसन्नत्वात् कस्मान्न भवति ?, इत्याह— | ॥१५१।२०॥ |
| ५६९ | "क्वसुष्म०" | —ननु च पपुषः, निन्युष इत्यादौ यस्वरादावुच्यमानस्योषादेशस्य बहिरङ्गत्वेनाऽसिद्धत्वात्तदपेक्षया अन्तरङ्गाण्याकारलोपादीनि न प्राप्नुवन्ति ?, नैष दोष.। | ॥१५१।२६॥ |
| ५७० | ,, | —ननु चाऽत्राऽन्तरङ्गबहिरङ्गयोर्युगपदवस्थानमस्तीति। | ॥१५१।३०॥ |
| ५७१ | ,, | —न चाऽत्राऽन्तरङ्गत्वादिटा भाव्यमिति वाच्यम्, नित्यत्वादिटं बाधित्वा उष् भवति | ॥१५१।३०॥ |
| ५७२ | ,, | —ननु वर्णविधित्वाभावात् स्थानिवत्त्वेन भवतीटः प्रसङ्ग इति चेत्, अस्तु वा पूर्वमिट् वसवयवत्वात् सेट्कस्य वसोरुषादेशो भविष्यति। | ॥१५१।३१॥ |
| ५७३ | "श्वन्युवन्०" | —ननु श्वन्नित्यादौ नकारान्तनिर्देशः किमर्थ. ?, इत्यत आह— | ॥१५१।४१॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| ५७४ | "लुगातो०" | —ननु क्त्वायां टायामित्येवमपि वैयाकरणा व्यवहरन्ति तत्कथम्?, इति चेत्, उच्यते— | ॥१५२।२०॥ |
| ५७५ | "अवर्णा०" | —ननु तुदन्ती, भान्तीत्यादिमूलोदाहरणे ईङ्योरनपेक्षत्वेन वर्णमात्राश्रयत्वेन चान्तरङ्गत्वात् "लुगस्यादेत्यपदे" इति, "समानाना०" इति चाकारलोपदीर्घत्वयोः कृतयोरवर्णात् परत्वं शतृप्रत्ययस्य न संभवति तत्कथमकारावर्णशतृप्रत्ययङीभावापेक्षत्वेन बहिरङ्गोऽन्त इत्यादेशः?, इत्याह— | ॥१५४।२८॥ |
| ५७६ | " | —नन्वेवं तर्हि ददतीत्यादौ आकारलोपेऽपि भूतपूर्वतया शतुरन्तादेशे नकारश्रवणप्रसङ्गः?, इत्याह— | ॥१५४।३४॥ |
| ५७७ | "श्यशवः" | —ननु ईङयोः पूर्वेणैव शतुरन्तादेशः सिद्धः किमर्थमिदम्?, नैष दोषः,— | ॥१५४।३९॥ |
| ५७८ | "दिव औः सौ" | —नन्वक्षपूर्वाद्दीव्यतेः क्विप्यूटि कृते 'एकदेशविकृतस्याऽनन्यत्वात् औत्वं कस्मान्न भवति?, न ह्यघातोरित्यस्ति?, इत्याह— | ॥१५४।४४॥ |
| ५७९ | " | —ननु दिवो वकारस्य अम्शसोः आकारो विभाषया वक्तव्यः, अन्यथा दिवमित्याद्येव स्यान्न तु द्यामित्यादीनि?, इत्याह— | ॥१५४।४६॥ |
| ५८० | "उः पदान्ते०" | —ननु द्युभ्यामित्यादौ दीर्घप्रसङ्ग एव नाऽस्ति कथमुच्यतेऽनूदिति?, इत्याह— | ॥१५५।१७॥ |
| ५८१ | " | —ननु दिवाश्रय इत्यादावन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वेऽनेनोत्वे कथं दिवाश्रय इत्यादि?, इत्यत आह— | ॥१५५।१९॥ |
| ५८२ | " | —ननु गमने निषिद्धे तेषां कथं स्वाभिप्रेतार्थसिद्धिः?, इत्याह— | ॥१५५।२९॥ |
| ५८३ | " | —नन्वस्माकं मध्ये स्थितस्तु मूलराज इति कथं हरित्वेन बोधयसि?, इति चेत्, आह— | ॥१५५।३०॥ |
| ५८४ | "क्रियाहेतुः०" | —न चैवं सर्वदा क्रियोत्पत्तिप्रसङ्ग इति वाच्यं, अभिव्यक्ताया एव तस्याः क्रियाकारणात्। | ॥१५६।२१॥ |
| ५८५ | " | —न चैतावता तस्याऽसत्त्वं, उत्तरकालमभिव्यज्यमानत्वात्। | ॥१५६।२२॥ |
| ५८६ | " | —न च तदैव तस्योत्पत्तिरित्यपि वाच्यं, रविकरस्पर्शस्य गन्धोपलब्धौ सामर्थ्यानवधारणात्, सामर्थ्ये वा जलान्तरेऽपि तथा गन्धोपलब्धिः स्यात्, तस्मात् क्रियाकालाभिव्यक्ता शक्तिः कारकमिति स्थितम्। | ॥१५६।२२॥ |
| ५८७ | " | —ननु सञ्ज्ञा इति प्रकृत्य कारकादयः शब्दाः पठितव्याः, अन्यथा कारकादयः संज्ञा इत्येष सम्प्रत्ययो न स्यात्, अतः संज्ञाधिकार इति वक्तव्यम्। | ॥१५६।२४॥ |
| ५८८ | " | —यदपि सञ्ज्ञासंज्ञिनोरसन्देहो वक्तव्य इत्युक्तं, तदपि न; आचार्यव्यवहारादेव तस्य सिद्धत्वात्। | ॥१५६।२९॥ |
| ५८९ | " | —अथ सञ्ज्ञिनिर्देशः किमर्थः?, अकारस्य मा भूदित्यर्थः। | ॥१५६।३५॥ |
| ५९० | " | —एवं तर्हि वृक्षस्य पर्णं पततीत्यत्राप्यपादानसंज्ञा प्राप्नोति?, | ॥१५६।४०॥ |
| ५९१ | " | —प्रत्यासत्त्या तु वृक्ष एव सम्बन्धित्वेन प्रतीयते, इति तस्मादवध्यादय एव संज्ञिनो लप्स्यन्ते?, सत्यम्; | ॥१५६।४४॥ |
| ५९२ | " | —ननु तथापि संज्ञिविशेषस्याऽनिर्देशात् क्रियानिमित्तमात्रस्याऽपि हेत्वादेः प्रसङ्गः?, इत्याह— | ॥१५६।४५॥ |
| ५९३ | " | —ननु च यथा करणाधिकरणयोः कर्तृत्वं निदर्शितं न तथाऽपादानादीना निदर्श्यते?, न ह्यपादाने ग्रामे ग्राम आगच्छतीति प्रयोगोऽस्ति?; उच्यते— | ॥१५७।१२॥ |
| ५९४ | " | —ननु सर्वत्राऽत्र स्वातन्त्र्यं पारतन्त्र्यं चाऽस्ति, तत्र प्रधानत्वात् कर्तृसंज्ञैव प्राप्नोति?, | ॥१५७।१९॥ |
| ५९५ | " | —ननु सम्भवनक्रिया धारणक्रिया च कुर्वती स्थाली स्वतन्त्रेत्युक्तं, केदानीं परतन्त्रा?, न च प्रक्षालने परिवर्तने च पारतन्त्र्यमिति वाच्यम्?; | ॥१५७।२३॥ |
| ५९६ | " | —ननु च भोः?, कर्तृस्थेऽपि यत्ने कथ्यमाने स्थाली सम्भवनधारणक्रिये करोति तत्र स्वतन्त्रा, केदानीं परतन्त्रेति?,— | ॥१५७।२५॥ |
| ५९७ | " | —ननु सामग्रीतः क्रियोत्पादात् सर्वेषां च तत्र सामान्यान्न कस्यचित्प्राधान्यं सम्भावयाम इति कथं ज्ञायते कर्ता प्रधानमिति?, उच्यते— | ॥१५७।२७॥ |
| ५९८ | "स्वतन्त्रः०" | —यथा कर्तृसन्निधौ करणादीनां स्वातन्त्र्याभावस्तथा प्रयोजकसन्निधौ प्रयोज्यस्याऽपीति पारतन्त्र्यादकर्तृकत्वाद्यज्ञदत्तेनेति कर्तृतृतीया न प्राप्नोति?, नैष दोषः,— | ॥१५८।१४॥ |
| ५९९ | " | —यदि तु प्रयोज्यस्य स्वातन्त्र्यं न स्याच्चैवाऽसौ साधनान्तरविनियोगादिना क्रियां कुर्यात्, तथा चाऽकुर्वत्यपि प्रयोज्ये प्रयोजक कारयतीति व्यपदिश्येत। | ॥१५८।१५॥ |
| ६०० | " | —न चाऽकुर्वत्यपि तस्मिन् कारयतीत्येतद्भवतीति प्राधान्यात् सिद्धमस्य कर्तृत्वम्। | ॥१५८।१६॥ |
| ६०१ | " | —ननु प्रैषादूर्ध्वं प्रयोज्यस्य स्वव्यापारे प्रवर्तनात् स्वातन्त्र्यमिति सिध्यति तृतीया, प्रैषकाले तु कथम्?, तत्र स्वव्यापाराप्रवर्तनात्, प्रवृत्तौ च प्रैषवैयर्थ्यात् स्वातन्त्र्यं नास्तीत्यस्वतन्त्रस्य च प्रयोजकः "प्रयोक्तृ०" ॥३।४।२०॥ इति तद्व्यापारे णिग् न स्यात्?, नैष दोषः। | ॥१५८।२३॥ |

क्र० सूत्रम्। शङ्का। पृ० प०

६०२ "स्वतन्त्रः०"—नन्वेकस्य स्वातन्त्र्यं पारतन्त्र्यं च विप्रतिपिद्धं, प्रयोजकसंनिधौ पारतन्त्र्येण स्वातन्त्र्यस्य तिरस्कृतत्वात् यौगपद्यानुपपत्तिः?, उच्यते— ॥१५८।२३॥

६०३ " —यद्येवं नदीकूलं पततीत्यादौ स्वातन्त्र्याभावात् कर्तृत्वाभावः, तथाहि-स्वातन्त्र्यं नाम परिदृष्टसामर्थ्यकारकप्रयोक्तृत्वं चेतनव्यापारो नाऽचेतनस्य कूलादेः सम्भवति?, उच्यते— ॥१५८।२५॥

६०४ "कर्तुर्व्या०"—किमर्थं क्रियया तदाप्तुमिष्यते?, निर्वर्तयितुं गुणान्तराण्यापादयितुं विषयीकर्तुं वा?, अत एव निर्वर्त्यं विकार्यं प्राप्यं चेति त्रेधा तदुच्यते। ॥१५८।३१॥

६०५ " —व्याप्यशब्दस्य सञ्ज्ञात्वेनाऽनुपात्तत्वात् कथं "व्याप्ये केनः"॥२।२।९९॥ इत्यादौ व्याप्यशब्देन व्यवहारः?, उच्यते— ॥१५८।३३॥

६०६ " —न ह्यनिर्वर्तमानं शशविषाणमिव निर्वर्तयितुं शक्यं, तस्मान्निर्वर्त्यस्य निर्वृतियोग्यत्वमवान्तरव्यापारः। ॥१५८।४५॥

६०७ " —ननु भिक्षियाच्योरेकार्थत्वात् कथं द्वयोरुपादानम्?, इत्याह— ॥१५९।२१॥

६०८ " —नन्वेवमपि याचिरेवोपादातव्यस्तेनैव याच्ञानुनययोरभिधानात्?, अस्त्येतत्;— ॥१५९।२२॥

६०९ " —यद्येवं गवादेः परार्थत्वात् क्रियायोगाभावादव्याप्यत्वात् कर्मसंज्ञा न सिध्यति?,— ॥१५९।२९॥

६१० " —ननु गा दोग्धि पय इत्यस्याऽयमर्थो–गौः पयस्त्यजति, देवदत्तो गवा पयस्त्याजयति, तत्र प्रयोक्तृव्यापारेणाऽऽप्यमानत्वाद्गोः कर्मत्वं न तु दोहादिनेति?, नैतदस्ति,— ॥१५९।४०॥

६११ " —न चेत्थं लोकप्रतीतिरस्ति?, नैष दोषः,— ॥१५९।४३॥

६१२ " —अथ कथं भवितव्यं, तण्डुलानोदनं पचति?, आहोस्वित् तण्डुलानामोदनं पचतीति?, उभयथा प्रयोगदर्शनात्। ॥१५९।४६॥

६१३ " —अथ द्विकर्मकेषु दुहादिधातुषु कर्मणि तिवादय उत्पद्यमानाः प्राधान्याऽप्राधान्याभ्यां भिन्नकक्षमनेकं कर्म युगपदभिधातुमसमर्थाः किं प्रधानकर्मण्युत्पद्यन्तेऽथ गुणकर्मणीति?,— ॥१६०।१६॥

६१४ " —नन्वेवमपि कर्तुर्गुणत्वात् गुणे च संख्याया विवक्षणाद् द्वाभ्यां कर्तृभ्यां बहुभिर्वा यद्विशेषेणाऽऽप्तुमिष्यते तस्य कर्मसंज्ञा न स्यात्?, नैष दोषः;— ॥१६०।४१॥

६१५ " —नन्वेवं तर्हि यदा कश्चित् कश्चिदामन्त्रयते-सिद्धं भुज्यतामिति, स आह-प्रभूतं भुक्तवानस्मि, आमन्त्र्यमाण आह-दधि खलु भविष्यति?, आमन्त्र्यमाण आह-दध्ना खलु भुञ्जीय, पयसा खलु भुञ्जीय। ॥१६०।४७॥

६१६ " —अत्र चाऽन्वयव्यतिरेकाभ्यां दधिपयसोरेव विशेषेणाऽऽप्यत्वात् कर्मसंज्ञा प्राप्नोति न त्वोदनस्येति चेत्, उच्यते— ॥१६०।४८॥

६१७ "वाऽकर्म०"—नन्वेवं तर्हि गत्यर्थादीनामप्यविवक्षितकर्मत्वेन विकल्पः प्राप्नोति, नित्यश्च विधिरिष्यते?; इत्याह— ॥१६१।१७॥

६१८ " —नन्वोदनं पचतीत्यादिप्रयोगदर्शनात् कथं पचादीनामविवक्षितकर्मत्वम्?, इत्याह— ॥१६१।१९॥

६१९ "गतिवो०"—न चैषां बुद्ध्यर्थता, बोधशब्देन बोधसामान्याश्रयणपक्षे वेत्त्यादयो हि ज्ञानमात्रवचनाः ॥१६१।२६॥

६२० " —न च वाक्यभेद, श्वेतो धावतीतिवत्। ॥१६१।२८॥

६२१ " —अथ नित्यग्रहणमन्तरेणाऽपि अकर्मकग्रहणेनैव कर्मसत्तामात्रप्रतिषेधेनैवेष्टार्थो लभ्यत इति किमर्थं नित्यग्रहणम्?, इत्याह— ॥१६२।[illegible]॥

६२२ " —ननु च कालाऽध्वभावदेशा आधारा अकर्मणामपि कर्माणि भवन्ति, गोदोहमास्ते, मासमास्ते इत्यादौ, तत्र नित्याऽकर्मणामसम्भव एव?, इत्याह— ॥[illegible]॥

६२३ " —अथैवं किं न ज्ञायते कालादिभ्योऽन्येन कर्मणा सकर्मका अपि येषां काला[illegible] नैवाऽस्ति ते नित्याऽकर्माणः, यथा कालादिभिः सकर्मका अप्यन्यकर्मा[illegible]

| क्र० | सूत्रम्। | शङ्का। | पृ० पं० |
|---|---|---|---|
| ६२९ | "गतिबो०" | —न चैकेन लक्षणेन नियमद्वयस्य कर्तुमशक्यत्वादस्मिश्च सति प्राकनस्याऽसत्त्वात् कथं नियमद्वयलाभ इति वाच्यं, अणिग्ग्रहणात्। | ॥१६३॥१४॥ |
| ६३० | "भक्षेर्हिं०" | —ननु हिंसा हि प्राणव्यपरोपलक्षणा, सा च प्राणिन्येव सचेतने सम्भवति, कथमचेतने सस्ये ?,— | ॥१६३॥२२॥ |
| ६३१ | " | —ननु पुत्रभक्षणस्य हिंसात्मकत्वाद्भक्षयति पुत्रान् गार्ग्येति कथं कर्मत्वाभावः ?, इत्यत आह— | ॥१६३॥३०॥ |
| ६३२ | " | —न ह्यत्र गार्गी स्वयं पुत्रान् भक्षयति, न च तामन्यस्तत्र प्रयुङ्क्ते, अपि त्वेवमाक्रोशति भक्षय पुत्रानिति भक्षिर्न हिंसाविषयः। | ॥१६३॥३१॥ |
| ६३३ | " | —ननु भक्षयति पिण्डीं शिशुनेत्यादौ मा भूदनेन कर्मत्वं, भक्षयतेराहारार्थत्वात् पूर्वेण कस्मान्न भवति ?, इत्याह— | ॥१६३॥३२॥ |
| ६३४ | "वहेः प्र०" | —नन्वेवं विधौ सति नियमो नोपपद्यते ?, उच्यते— | ॥१६३॥४३॥ |
| ६३५ | "ह्रयभि०" | —ननु विकल्पो हि प्राप्ते कार्ये पक्षे निवृत्तिफलः, अप्राप्ते च प्रवृत्तिफलस्तत्राऽयं प्राप्ते च स्यादप्राप्ते चेत्यत आह— | ॥१६४॥३१॥ |
| ६३६ | "स्मृत्यर्थ०" | —ननु कर्माऽविवक्षाया पक्षे माषाणामश्नीयादित्यादिवत् "शेषे" षष्ठी सिद्धैव तत्किमनेन ?, सत्यम्;— | ॥१६५॥५॥ |
| ६३७ | " | —नन्विदं कर्म भवति कर्मभावजनितसंबन्धसम्बन्धि च, तत्र कर्माविवक्षायां "शेषे" इत्यनेनैव षष्ठी;— | ॥१६५॥२२॥ |
| ६३८ | " | —न हि काष्ठसंश्लेषहेतोर्जतुनः संश्लेषे जत्वन्तरमपेक्ष्यमिति तत्राऽपि स्थित्यादिक्रियाऽस्तीत्यपरे। | ॥१६५॥२४॥ |
| ६३९ | " | —न च कर्मभावनिवर्तनेन षष्ठ्यां प्रवर्तितायामपि तत्कर्मप्रतिपत्तिसम्बन्धिभावो हि ततः प्रतीयते, अतो विवक्षाभेदात् द्वितीयादेः षष्ठ्यादेश्च सिद्धेरयं विकल्पोऽनर्थकः ?; इति पृच्छति— | ॥१६५॥२६॥ |
| ६४० | "जासनाट०" | —ननु च जसनटक्रथेति धातवः पठ्यन्ते, तत्र निर्देशे तथैव निर्देष्टव्यम् ?, इत्यत आह— | ॥१६६॥२५॥ |
| ६४१ | " | —ननु चौरस्योत्काथयतीति कथमाकारो घटादित्वाद्घटादिह्रस्वेनैव भवितव्यम् ?,— | ॥१६६॥२९॥ |
| ६४२ | " | —न च णिग विनाऽस्य कर्माऽस्ति, अकर्मकत्वात्; स च यदि सर्वत्र स्यादस्य घटादित्वमनर्थकमिति कर्माभाव एव न भवति ?, इत्याह— | ॥१६६॥३१॥ |
| ६४३ | " | —ननु हिंसाया रुजारूपत्वात् "रुजार्थस्या०" इत्यनेनैव कर्मविकल्पो भविष्यति किमर्थमिदम् ?, यदि जासनाटक्राथेत्याकारार्थं यत्राऽऽकारस्तत्रैव यथा स्यादिति, तथापि पिप्ग्रहणमनर्थकम् ?, इत्याह— | ॥१६६॥३३॥ |
| ६४४ | "विनिमेय०" | —ननु पणव्यवह्रोरित्यत्र विनिमेयद्यूतपणवत् समाहारद्वन्द्वादेकवचनं किमिति वचनभेदाभावार्थं नोपादीयते ?, इत्याह— | ॥१६७॥२४॥ |
| ६४५ | "करणं च" | —ननु च करणं कथं कर्म भवति ?, भिन्नौ हि तौ स्वभावौ प्रकृष्यमाणव्यापारस्तत्क्रियमाणता चेति ?,— | ॥१६७॥२८॥ |
| ६४६ | " | —अथ करणत्वयुक्तं भवतीति विज्ञायते, तदा सर्वद्रव्याणां सर्वकारकशक्तियुक्तत्वात् द्रव्यान्तरवदस्य कर्मत्वात् वचनमिदमनर्थकमिति चेत् ?, उच्यते— | ॥१६७॥२९॥ |
| ६४७ | " | —ननु अक्षा दीव्यन्ते इत्यादौ द्वितीयादयः कथं न भवन्ति ?, इत्याह— | ॥१६७॥४३॥ |
| ६४८ | " | —अथाऽक्षान् दीव्यतीत्यत्र सत्यपि संज्ञाद्वयसमावेशे परत्वात् करणत्वनिमित्तया तृतीययैव भवितव्यम् ?, नैवम्;— | ॥१६८॥३॥ |
| ६४९ | " | —नन्वेवमक्षा दीव्यन्त इत्यत्राऽपि अकर्मकव्यपदेशव्यावृत्त्यर्थत्वात् कर्मसंज्ञा सावकाशा, अक्षा देवना इत्यत्र च अनडर्थत्वात् करणसंज्ञा; अक्षान् दीव्यतीत्यत्र तु कर्मकरणत्वस्वभावत्वादक्षादेर्द्वितीयातृतीयाप्राप्तौ स्पर्द्धत्वात् परत्वात्तृतीयैव प्राप्नोति ?, इत्याक्षिपति। | ॥१६८॥२१॥ |
| ६५० | "अधे. शी०" | —अथ किमर्थमिदमारभ्यते ?, यावताऽकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति | ॥१६८॥३१॥ |
| ६५१ | "उपान्व०" | —ननु स्थानार्थस्यैव वसेर्ग्रहणमिष्यते, तेन ग्रामे तिष्ठतीत्यत्राऽर्थे ग्राममुपवसतीति प्रयोग., अस्थानार्थत्वे तु ग्रामे उपवसतीति तदेतत्कथम् ?, उच्यते— | ॥१६८॥३८॥ |
| ६५२ | "कालाऽध्व०" | —नन्वेवमनेन व्याप्तौ कर्मसंज्ञाया "कर्मणि" इति द्वितीयाया. सिद्धौ "कालाऽध्वनोर्व्याप्तौ" इति सूत्रं किमर्थम् ?, इत्याशङ्का तन्मतेनैव परिहरति— | ॥१६९॥४३॥ |
| ६५३ | "साधक०" | —ननु सामग्रीत क्रियासिद्धिस्तत्र कथ किञ्चित्सातिशयोपकारकं किञ्चिद्विपरीतम् ?, अन्वयव्यतिरेकाभ्या हि सर्वेषा सामान्यमवगम्यते तस्मात् क्रियासिद्धौ साधकतमस्य सम्भवो नाऽस्तीति सम्भवं कल्पनया दर्शयति। | ॥१७०॥१९॥ |

| क्र० | सूत्रम्। | शङ्का। | पृ० प० |
|---|---|---|---|
| ६५४ | "साधक०" | —यथा-अभिरूपाय कन्या देयेति लौकिके वाक्येऽभिरूपग्रहणं प्रकर्षपरिग्रहार्थं, तत्किमर्थं तमग्रहणम्?, इत्याह— | ॥१७०।२७॥ |
| ६५५ | " | —ननु तरतमयोगो नाऽस्तीति कथं केवलयोः प्रत्ययोः प्रयोगः?, उच्यते— | ॥१७०।३४॥ |
| ६५६ | "कर्माभि०" | —ननु कथं कर्मणः करणत्वम्?, उच्यते— | ॥१७०।३८॥ |
| ६५७ | " | —एवमपि 'कृत्रिमाऽकृत्रिमयोः कृत्रिमे सम्प्रत्ययो भवति' इति न प्राप्नोति?, नैवम्, | ॥१७०।४४॥ |
| ६५८ | " | —किञ्च "कर्तुर्व्याप्यं कर्म" इत्युच्यते, कथं च नाम क्रिया क्रियाया व्याप्या स्यादिति चेत्?, अत्रोच्यते— | ॥१७०।४६॥ |
| ६५९ | " | —यद्येवं ग्रामं गच्छतीत्यादौ ग्रामादेरपि क्रियाऽभिसम्बध्यमानस्य सम्प्रदानसंज्ञा-प्रसङ्गः?, नैष दोषः— | ॥१७१।१७॥ |
| ६६० | " | —ननु मृतः पृष्ठं ददाति, रजकस्य वस्त्रं ददातीत्यादौ दीयमानपृष्ठवस्त्रलक्षणेन कर्मणा मृतो रजकस्य च व्याप्यमानत्वात् सम्प्रदानसंज्ञा कुतो न भवति?, इत्याह— | ॥१७१।२१॥ |
| ६६१ | "क्रुद्द्रुहे०" | —ननु कोपः-क्रोध एवेति भेदाभावात् कथं पौर्वापर्यम्?, उच्यते— | ॥१७१।४२॥ |
| ६६२ | "नोपसर्गा०" | —ननु केनाऽत्र द्वितीया?, यदि "लक्षणवीप्स्येत्थम्भूतेष्वभिना" ॥२।२।३६॥ इति सूत्रेण चेत्, | ॥१७२।१८॥ |
| ६६३ | " | —अथ यदा मैत्रादेर्लक्षणाद्यर्थेनाऽभिना योगस्तदा क्रुधादीनामुपसर्गपरत्वाभावात् प्रतिषेधाप्रवृत्तेः सम्प्रदानाच्च "लक्षणवीप्स्ये०" इति द्वितीया वा स्यात् सम्प्रदान-चतुर्थी वा?, इति चेत्, उच्यते— | ॥१७२।२३॥ |
| ६६४ | "अपाये०" | —अथाऽवधिग्रहणं किमर्थम्?, 'न च ग्रामादागच्छति शकटेन' इत्यपाये शकटस्याऽपि साधनत्वादपादानसंज्ञा प्राप्नोतीति वाच्यं, 'धनुषा विध्यति' इति वत्करणसंज्ञया बाधनात्। | ॥१७२।२६॥ |
| ६६५ | " | —नन्वागमने कंसपात्री साधनमेव न भवति, भुजिक्रियायां तु साधनमवधिभूता आधारभूता च, तत्र च परत्वादधिकरणसंज्ञेति?, नैवम्, | ॥१७२।२८॥ |
| ६६६ | " | —नन्वत्राऽपि कारकत्वाभावात् संज्ञा न भविष्यति, अपायाभावाच्च, सत्येवाऽवधावपायो भवतीति पूर्वमुक्तत्वादिति चेत्, उच्यते— | ॥१७२।३१॥ |
| ६६७ | " | —नन्वेवं तर्हि गतियुक्तेषु 'धावतोऽश्वात् पतितः' इत्यादिषु अपादानत्वं न स्यात्, ग्रामादागच्छति पर्वतादवरोहतीत्यादिष्वेव स्यात्; अत्र हि धावन्नश्वः पातस्य निमित्तं, धावनं च गमनमेवेति नाऽस्त्यश्वस्याऽपायेनाऽनधिष्ठितत्वम्?, नैष दोषः, | ॥१७२।३४॥ |
| ६६८ | " | —न हि गमनमात्रमपायः, किं तर्हि?, सावधिकं गमनं, तच्च देवदत्तकर्तृकं पातरूपं, तेन च धावतोऽप्यश्वस्याऽऽवेशाभावान्न विरुध्यतेऽपादानसंज्ञेति। | ॥१७२।३६॥ |
| ६६९ | " | —एवं तर्हि 'ग्रामान्नागच्छति' इत्यत्र कथमपादानसंज्ञा?, उक्तस्य गमनस्याऽभावात्?, यस्यां हि सत्यामपादानसंज्ञा स्यात् प्रतिषिध्यतेऽत्र साऽऽगमनक्रिया, नैष दोषः। | ॥१७२।३७॥ |
| ६७० | " | —ननु कुशूलात् पचतीति कथं कुशूलस्याऽपादानसंज्ञा?, न हि पचनमपायो येनाऽपायेऽवधिः स्यात्?, इत्याह— | ॥१७२।४१॥ |
| ६७१ | " | —ननु कायसंसर्गपूर्वको विभागो मुख्यो बुद्धिपरिकल्पितस्तु गौणः, ततश्च गौणमुख्ययोर्मुख्यस्यैव परिग्रहात् साकाश्यकेभ्य इत्यादौ कारकशेषत्वात् षष्ठी प्राप्नोति?, नैवम्; | ॥१७२।४४॥ |
| ६७२ | " | —ननु यस्याऽऽत्मीया गावस्तस्य कथं यवा ईप्सिताः?, ईप्सितशब्दस्याऽभिप्रेतपर्यायस्य लोके रूढत्वादिति चेत्?, उच्यते— | ॥१७३।२२॥ |
| ६७३ | " | —यद्येवं कूपादन्धं वारयतीत्यत्र न प्राप्नोति, न हि तस्य कूप एवेप्सितो वारणक्रियया आप्तुमिष्टत्वात्?,— | ॥१७३।२४॥ |
| ६७४ | " | —ननु सतो जन्माऽयोगादसतश्च कर्तृत्वासम्भवात् कथं शृङ्गाच्छरो जायत इत्यादिप्रयोगः?, नैष दोषः— | ॥१७३।३५॥ |
| ६७५ | " | —नन्वेवं तर्हि विवक्षान्तरे विभक्त्यन्तरं प्राप्नोति यत्नान्तरमनारम्भमाणस्येति चेत्?, सत्यम्; | ॥१७४।२१॥ |
| ६७६ | "क्रियाऽऽश्र०" | —न च कर्तृकर्मणोः कर्तृकर्मसंज्ञाभ्यां बाधितत्वान्मुख्यासम्भवात् गौणस्वीकार इति वाच्यम्?,— | ॥१७४।२८॥ |
| ६७७ | " | —नन्वेवं क्रियाऽऽश्रयस्योपकारकत्वात् क्रियासिद्धौ व्यापाराभावादकारकत्वात् संज्ञाया अभाव इति चेत्?, उच्यते— | ॥१७४।३२॥ |
| ६७८ | " | —नन्वाश्रय आधारो भवति, आश्रयश्च संयोगसमवायाभ्यां, न चाऽवस्थितिक्रियाश्रयेण घोषादिना गङ्गादेः संयोगसमवायौ स्तः?, नैष दोषः, | ॥१७४।४३॥ |
| ६७९ | "नाम्नः प्र०" | —ननु द्रव्येऽपि नामार्थे विशेषाभावादर्थशब्दस्य वस्तुपर्यायस्याऽपि सम्भवात् 'वृक्षः', 'प्लक्षः' इत्यत्राऽपि बहुवचनप्रसङ्गः, बहवस्तेऽर्था मूलं स्कन्धः पलाशमिति?; | ॥१७५।१८॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| ६२९ | "गतिबो०" | —न चैकेन लक्षणेन नियमद्वयस्य कर्तुमशक्यत्वादस्मिंश्च सति प्राक्तनस्याऽसत्त्वात् कथं नियमद्वयलाभ इति वाच्यं, अणिग्रहणात् । | ॥१६३।१४॥ |
| ६३० | "भक्षेर्हिं०" | —ननु हिंसा हि प्राणव्यपरोपलक्षणा, सा च प्राणिन्येव सचेतने सम्भवति, कथमचेतने सस्ये ?,— | ॥१६३।२२॥ |
| ६३१ | " | —ननु पुत्रभक्षणस्य हिंसात्मकत्वाद्भक्षयति पुत्रान् गार्ग्येति कथं कर्मत्वाभावः ?, इत्यत आह— | ॥१६३।३०॥ |
| ६३२ | " | —न ह्यत्र गार्गी स्वयं पुत्रान् भक्षयति, न च तामन्यस्तत्र प्रयुङ्क्ते, अपि त्वेवमाक्रोशति भक्षय पुत्रानिति भक्षिर्न हिंसाविषयः । | ॥१६३।३१॥ |
| ६३३ | " | —ननु भक्षयति पिण्डीं शिशुनेत्यादौ मा भूदनेन कर्मत्वं, भक्षयतेराहारार्थत्वात् पूर्वेण कस्मान्न भवति ?, इत्याह— | ॥१६३।३३॥ |
| ६३४ | "वहेः प्र०" | —नन्वेवं विधौ सति नियमो नोपपद्यते ?, उच्यते— | ॥१६३।४३॥ |
| ६३५ | "ह्वयभि०" | —ननु विकल्पो हि प्राप्ते कार्ये पक्षे निवृत्तिफलः, अप्राप्ते च प्रवृत्तिफलस्तत्राऽयं प्राप्ते वा स्यादप्राप्ते वेत्यत आह— | ॥१६४।३१॥ |
| ६३६ | "स्मृत्यर्थ०" | —ननु कर्माऽविवक्षायां पक्षे माषाणामश्नीयादित्यादिवत् "शेषे" षष्ठी सिद्धैव तत्किमनेन ?, सत्यम्;— | ॥१६५।५॥ |
| ६३७ | " | —नन्विदं कर्म भवति कर्मभावजनितसंबन्धसम्बन्धि च, तत्र कर्माविवक्षायां "शेषे" इत्यनेनैव षष्ठी;— | ॥१६५।२२॥ |
| ६३८ | " | —न हि काष्ठसंश्लेषहेतोर्जतुनः संश्लेषे जत्वन्तरमपेक्ष्यमिति तत्राऽपि स्थित्यादिक्रियाऽस्तीत्यपरे । | ॥१६५।२४॥ |
| ६३९ | " | —न च कर्मभावनिवर्तनेन षष्ठ्यां प्रवर्तितायामपि तत्कर्मप्रतिपत्तिसम्बन्धिभावो हि ततः प्रतीयते, अतो विवक्षाभेदात् द्वितीयादेः षष्ठ्यादेश्च सिद्धेरयं विकल्पोऽनर्थकः ?; इति पृच्छति— | ॥१६५।२६॥ |
| ६४० | "जासनाट०" | —ननु च जसनटक्रथेति धातवः पठ्यन्ते, तत्र निर्देशे तथैव निर्देष्टव्यम् ?, इत्यत आह— | ॥१६६।२५॥ |
| ६४१ | " | —ननु चौरस्योत्क्राथयतीति कथमाकारो घटादित्वाद्घटादिह्रस्वेनैव भवितव्यम् ?,— | ॥१६६।२९॥ |
| ६४२ | " | —न च णिग् विनाऽस्य कर्माऽस्ति, अकर्मकत्वात्; स च यदि सर्वत्र स्यादस्य घटादित्वमनर्थकमिति कर्माभाव एव न भवति ?, इत्याह— | ॥१६६।३१॥ |
| ६४३ | " | —ननु हिंसाया रुजारूपत्वात् "रुजार्थस्या०" इत्यनेनैव कर्मविकल्पो भविष्यति किमर्थमिदम् ?, यदि जासनाटक्राथेत्याकारार्थं यत्राऽऽकारस्तत्रैव यथा स्यादिति, तथापि पिषग्रहणमनर्थकम् ?, इत्याह— | ॥१६६।३३॥ |
| ६४४ | "विनिमेय०" | —ननु पणव्यवहारोरित्यत्र विनिमेयद्यूतपणवत् समाहारद्वन्द्वादेकवचनं किमिति वचनभेदाभावार्थं नोपादीयते ?, इत्याह— | ॥१६७।२४॥ |
| ६४५ | "करणं च" | —ननु च करणं कथं कर्म भवति ?, भिन्नौ हि तौ स्वभावौ प्रकृष्यमाणव्यापारस्तत्क्रियमाणता चेति ?,— | ॥१६७।३८॥ |
| ६४६ | " | —अथ करणत्वयुक्तं भवतीति विज्ञायते, तदा सर्वद्रव्याणां सर्वकारकशक्तियुक्तत्वात् द्रव्यान्तरवदस्य कर्मत्वात् वचनमिदमनर्थकमिति चेत् ?, उच्यते— | ॥१६७।३९॥ |
| ६४७ | " | —ननु अक्षा दीव्यन्ते इत्यादौ द्वितीयादयः कथं न भवन्ति ?, इत्याह— | ॥१६७।४३॥ |
| ६४८ | " | —अथाऽक्षान् दीव्यतीत्यत्र सत्यपि संज्ञाद्वयसमावेशे परत्वात् करणत्वनिमित्तया तृतीययैव भवितव्यम् ?, नैवम्,— | ॥१६८।३॥ |
| ६४९ | " | —नन्वेवमक्षा दीव्यन्त इत्यत्राऽपि अकर्मकव्यपदेशव्यावृत्त्यर्थत्वात् कर्मसंज्ञा सावकाशा, अक्षा देवना इत्यत्र च अनडर्थत्वात् करणसंज्ञा, अक्षान् दीव्यतीत्यत्र तु कर्मकरणत्वस्वभावत्वादक्षादेर्द्वितीयातृतीयाप्राप्तौ स्पर्द्धत्वात् परत्वात्तृतीयैव प्राप्नोति ?, इत्याक्षिपति । | ॥१६८।२१॥ |
| ६५० | "अधेः शी०" | —अथ किमर्थमिदमारभ्यते ?, यावताऽकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति | ॥१६८।३१॥ |
| ६५१ | "उपान्व०" | —ननु स्थानार्थस्यैव वसेर्ग्रहणमिष्यते, तेन ग्रामे तिष्ठतीत्यत्राऽर्थे ग्राममुपवसतीति प्रयोगः, अस्थानार्थत्वे तु ग्रामे उपवसतीति तदेतत्कथम् ?, उच्यते— | ॥१६८।३८॥ |
| ६५२ | "कालाऽध्व०" | —नन्वेवमनेन व्याप्तौ कर्मसंज्ञाया "कर्मणि" इति द्वितीयायाः सिद्धौ "कालाऽध्वनोर्व्याप्तौ" इति सूत्रं किमर्थम् ?, इत्याशङ्कां तन्मतेनैव परिहरति— | ॥१६९।४३॥ |
| ६५३ | "साधक०" | —ननु सामग्रीत क्रियासिद्धिस्तत्र कथं किञ्चित्सातिशयोपकारकं किञ्चिद्विपरीतम् ?, अन्वयव्यतिरेकाभ्या हि सर्वेषा सामान्यमवगम्यते तस्मात् क्रियासिद्धौ साधकतमस्य सम्भवो नाऽस्तीति सम्भवं कल्पनया दर्शयति । | ॥१७०।१९॥ |

| क्र० | सूत्रम्। | शङ्का। | पृ० प० |
|---|---|---|---|
| ६५४ | "साधक०" | —यथा-अभिरूपाय कन्या देयेति लौकिके वाक्येऽभिरूपग्रहणं प्रकर्षपरिग्रहार्थं, तत्किमर्थं तमग्रहणम् ?, इत्याह— | ॥१७०।२७॥ |
| ६५५ | ,, | —ननु तरतमयोगो नाऽस्तीति कथं केवलयोः प्रत्यययोः प्रयोगः ?, उच्यते— | ॥१७०।३४॥ |
| ६५६ | "कर्माभि०" | —ननु कथं कर्मणः करणत्वम् ?, उच्यते— | ॥१७०।३८॥ |
| ६५७ | ,, | —एवमपि 'कृत्रिमाऽकृत्रिमयोः कृत्रिमे सम्प्रत्ययो भवति' इति न प्राप्नोति ?, नैवम्, | ॥१७०।४४॥ |
| ६५८ | ,, | —किञ्च "कर्तुर्व्याप्यं कर्म" इत्युच्यते, कथं च नाम क्रिया क्रियाया व्याप्या स्यादिति चेत् ?, अत्रोच्यते— | ॥१७०।४६॥ |
| ६५९ | ,, | —यद्येवं ग्रामं गच्छतीत्यादौ ग्रामादेरपि क्रियाऽभिसम्बध्यमानस्य सम्प्रदानसंज्ञाप्रसङ्गः ?, नैष दोषः— | ॥१७१।१७॥ |
| ६६० | ,, | —ननु घ्नतः पृष्ठं ददाति, रजकस्य वस्त्रं ददातीत्यादौ दीयमानपृष्ठवस्त्रलक्षणेन कर्मणा घ्नतो रजकस्य च व्याप्यमानत्वात् सम्प्रदानसंज्ञा कुतो न भवति ?, इत्याह— | ॥१७१।२१॥ |
| ६६१ | "क्रुद्रुहे०" | —ननु कोपः-क्रोध एवेति भेदाभावात् कथं पौर्वापर्यम् ?, उच्यते— | ॥१७१।४२॥ |
| ६६२ | "नोपसर्गा०" | —ननु केनाऽत्र द्वितीया ?, यदि "लक्षणवीप्स्येत्थम्भूतेष्वभिना" ॥२।२।३६॥ इति सूत्रेण चेत्, | ॥१७२।१८॥ |
| ६६३ | ,, | —अथ यदा मैत्रादेर्लक्षणाद्यर्थेनाऽभिना योगस्तदा क्रुधादीनामुपसर्गपरत्वाभावात् प्रतिषेधाप्रवृत्तेः सम्प्रदानाच्च "लक्षणवीप्स्ये०" इति द्वितीया वा स्यात् सम्प्रदानचतुर्थी वा ?, इति चेत्, उच्यते— | ॥१७२।२३॥ |
| ६६४ | "अपाये०" | —अथाऽवधिग्रहणं किमर्थम् ?, 'न च ग्रामादागच्छति शकटेन' इत्यपाये शकटस्याऽपि साधनत्वादपादानसंज्ञा प्राप्नोतीति वाच्यं, 'धनुषा विध्यति' इति वत्करणसंज्ञया बाधनात् । | ॥१७२।२६॥ |
| ६६५ | ,, | —नन्वागमने कंसपात्री साधनमेव न भवति, भुजिक्रियाया तु साधनमवधिभूता आधारभूता च, तत्र च परत्वादधिकरणसंज्ञेति ?, नैवम्; | ॥१७२।२८॥ |
| ६६६ | ,, | —नन्वत्राऽपि कारकत्वाभावात् संज्ञा न भविष्यति, अपायाभावाच्च, सत्येवाऽवधावपायो भवतीति पूर्वमुक्तत्वादिति चेत्, उच्यते— | ॥१७२।३१॥ |
| ६६७ | ,, | —नन्वेवं तर्हि गतियुक्तेषु 'धावतोऽश्वात् पतितः' इत्यादिषु अपादानत्वं न स्यात्, ग्रामादागच्छति पर्वतादवरोहतीत्यादिष्वेव स्यात्, अत्र हि धावन्नश्वः पातस्य निमित्तं, धावनं च गमनमेवेति नाऽस्त्यश्वस्याऽपायेनाऽनधिष्ठितत्वम् ?, नैष दोषः, | ॥१७२।३४॥ |
| ६६८ | ,, | —न हि गमनमात्रमपायः, किं तर्हि ?, सावधिकं गमनं, तच्च देवदत्तकर्तृकं पातरूपं, तेन च धावतोऽप्यश्वस्याऽऽवेशाभावान्न विरुध्यतेऽपादानसंज्ञेति । | ॥१७२।३६॥ |
| ६६९ | ,, | —एवं तर्हि 'ग्रामान्नागच्छति' इत्यत्र कथमपादानसंज्ञा ?, उक्तस्य गमनस्याऽभावात् ?, यस्या हि सत्यामपादानसंज्ञा स्यात् प्रतिषिध्यतेऽत्र साऽऽगमनक्रिया, नैष दोषः । | ॥१७२।३७॥ |
| ६७० | ,, | —ननु कुशूलात् पचतीति कथं कुशूलस्याऽपादानसंज्ञा ?, न हि पचनमपायो येनाऽपायेऽवधिः स्यात् ?, इत्याह— | ॥१७२।४१॥ |
| ६७१ | ,, | —ननु कायसंसर्गपूर्वको विभागो मुख्यो बुद्धिपरिकल्पितस्तु गौणः, ततश्च गौणमुख्ययोर्मुख्यस्यैव परिग्रहात् साकाश्यकेभ्य इत्यादौ कारकशेषत्वात् षष्ठी प्राप्नोति ?, नैवम्, | ॥१७२।४४॥ |
| ६७२ | ,, | —ननु यस्याऽऽत्मीया गावस्तस्य कथं यवा ईप्सिताः ?, ईप्सितशब्दस्याऽभिप्रेतपर्यायस्य लोके रूढत्वादिति चेत् ?, उच्यते— | ॥१७३।२२॥ |
| ६७३ | ,, | —यद्येवं कूपादन्धं वारयतीत्यत्र न प्राप्नोति, न हि तस्य कूप एवेप्सितो वारणक्रियया आप्तुमिष्टत्वात् ?,— | ॥१७३।२४॥ |
| ६७४ | ,, | —ननु सतो जन्माऽयोगादसतश्च कर्तृत्वासम्भवात् कथं शृङ्गाच्छरो जायत इत्यादिप्रयोगः ?, नैष दोषः— | ॥१७३।३५॥ |
| ६७५ | ,, | —नन्वेवं तर्हि विवक्षान्तरे विभक्त्यन्तरं प्राप्नोति यत्नान्तरमनारभमाणस्येति चेत् ?, सत्यम्; | ॥१७४।२१॥ |
| ६७६ | "क्रियाऽऽश्र०" | —न च कर्तृकर्मणोः कर्तृकर्मसंज्ञाभ्यां बाधितत्वान्मुख्यासम्भवात् गौणस्वीकार इति वाच्यम् ?,— | ॥१७४।२८॥ |
| ६७७ | ,, | —नन्वेवं क्रियाऽऽश्रयस्योपकारकत्वात् क्रियासिद्धौ व्यापाराभावादकारकत्वात् संज्ञाया अभाव इति चेत् ?, उच्यते— | ॥१७४।३२॥ |
| ६७८ | ,, | —नन्वाश्रय आधारो भवति, आश्रयश्च संयोगसमवायाभ्यां, न चाऽवस्थितिक्रियाश्रयेण घोषादिना गङ्गादेः संयोगसमवायौ स्तः ?, नैष दोषः, | ॥१७४।४३॥ |
| ६७९ | "नाम्नः प्र०" | —ननु द्रव्येऽपि नामार्थे विशेषाभावादर्थशब्दस्य वस्तुपर्यायस्याऽपि सम्भवात् 'वृक्षः', 'प्लक्षः' इत्यत्राऽपि बहुवचनप्रसङ्गः, बहवस्तेऽर्थाः मूलं स्कन्धः पलाशमिति ?; | ॥१७५।१८॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| ६८० | "नाम्न प्र०" | —एवं तर्हि येष्वर्थेषु स्यादयो विधीयन्ते, तेषु केषु च स्यादयो विधीयन्ते ?, एकत्वादिषु । | ॥१७५।१९॥ |
| ६८१ | " | —न च स्कन्धशाखाफलपलाशादिरूपेणाऽनेकत्वेऽपि वृक्षादिशब्दरूपं तथाऽऽचष्ट इति न तस्य सा संख्या, इति बहुवचनं न भवतीति मनस्यनुसन्धायाऽऽह— | ॥१७५।२०॥ |
| ६८२ | " | —यद्येवं 'एकद्विबहौ' इति प्रकृत्यर्थविशेषणत्वात् कः प्रत्ययार्थः ?, त एवेति ब्रूमः; 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इति । | ॥१७५।२२॥ |
| ६८३ | " | —यद्येवं बहुत्वस्यैकत्वात् सर्वदा बहाविति भाव्यं, कथं बहुषु बहुवचनमिति प्रयोगः ?, उच्यते— | ॥१७५।३०॥ |
| ६८४ | " | —ननु लौकिकादेव प्रयोगादेकत्वादिषु एकवचनादीनां व्यवस्था भविष्यति किमर्थमेकद्विबहाविति ?, उच्यते— | ॥१७५।३६॥ |
| ६८५ | " | —अथ शास्त्रेऽनुपात्तोऽप्यर्थः प्रयोगादेव व्यवस्थाप्यते, यतः स्यादयस्तावत्स्वार्थे विधीयमानाः पञ्चको नामार्थ इति दर्शने संख्यायां सिद्धाः । | ॥१७५।३८॥ |
| ६८६ | " | —न चैवं ब्राह्मणाः सङ्घ इत्यत्र ब्राह्मणसङ्घरूपस्याऽर्थस्य ब्राह्मणरूपेण बहुत्वात् सङ्घरूपेण चैकत्वात् संख्याद्वययोगाद्वचनव्यतिकरप्रसङ्ग इति वाच्यम्, | ॥१७५।४२॥ |
| ६८७ | " | —ननु नामाऽर्थव्यतिरेकेण अन्येषामेकत्वादीनां विशेषणीभूतानामभावादेक इत्यादौ प्रथमाया अभावः ?, अत्रोच्यते— | ॥१७६।२६॥ |
| ६८८ | " | —एवं तर्हि षष्ठी प्राप्नोति, कर्माद्यभावो हि शेषः ?, | ॥१७६।३४॥ |
| ६८९ | " | —ननु चाऽव्ययेभ्य एकत्वाद्यभावादनेन प्रथमा न प्राप्नोति ?, सत्यम्; | ॥१७७।७॥ |
| ६९० | " | —नन्वर्थमात्रे प्रथमेत्युक्तत्वान्मात्रग्रहणस्य चाऽधिकार्थव्यवच्छेदकत्वाद्वीरः पुरुष इत्यादौ सामानाधिकरण्यात् विशेषणविशेष्यभावस्याधिकस्य प्रतीतेः प्रथमा न प्राप्नोति ?,— | ॥१७७।१३॥ |
| ६९१ | " | —ननु वर्णस्य निरर्थकत्वाद्धातुवाक्यार्थयोश्चाऽसत्त्वरूपत्वात् संख्यायाः सत्त्वधर्मरूपत्वेन तद्वृत्त्यभावात् सत्त्ववाचिनो नाम्न एव प्रथमा भविष्यति, किं नाम्न इत्यनेन ?, उच्यते— | ॥१७७।२२॥ |
| ६९२ | " | —न चाऽत्र काकदन्तपरीक्षायामादरः, किमत्र युक्तं दर्शनम् ?,— | ॥१७७।३५॥ |
| ६९३ | " | —यदा त्वयं न्यायोऽङ्गीक्रियते 'संख्याकर्मादयो विभक्तिवाच्याः स्त्रियां वाऽभिधेयायां स्त्रीप्रत्ययः' तदा विभक्तिमन्तरेण स्त्रीप्रत्ययेन च विना कथं संख्यादिप्रतिपत्तिः स्यात् ?,— | ॥१७७।४१॥ |
| ६९४ | " | —ननु च प्रत्ययमन्तरेणाऽपि वर्तन्ते–गर्गाः, वत्साः, बिदाः, उर्वा इति; तत्र यदि संख्याकर्मादयो विनैव विभक्तेर्नाम्नोऽपि प्रतीतेर्नामार्थ इति व्यवस्थाप्यते, अपत्यार्थोऽपि तर्हि कदाचित्प्रकृतिमात्रादेव प्रतीयत इति सोऽपि प्रकृत्यर्थ एव स्यात् । | ॥१७७।४२॥ |
| ६९५ | "आमन्त्र्ये" | —नन्वामन्त्रणविषयस्य देवदत्तादेः सत्त्वभूतस्याऽऽमन्त्र्यस्यैकत्वादिसंख्यायोगात्तद्वाचिनो नाम्नः पूर्वेणैव प्रथमा भविष्यति किमर्थमिदमारभ्यते ?, इत्याह— | ॥१७८।२८॥ |
| ६९६ | "गौणात्स०" | —नन्वन्तराशब्दः स्त्रियामाबन्तोऽप्यस्ति अव्ययं च, एवमन्तरेणेत्यपि अन्तरशब्दात् तृतीयस्या भवत्यव्ययं च; तत्र विशेषानुपादानात् सामान्येनोभयस्यापि ग्रहणं कुतो न भवति ?, इत्याह— | ॥१७८।४०॥ |
| ६९७ | " | —नन्वन्तराऽन्तरेणशब्दाभिधेयस्य मध्यस्याऽवधिसव्यपेक्षत्वाद्गार्हपत्याहवनीययोर्मध्यस्य चाऽऽधारशक्तिप्राधान्यस्य मध्यस्य ताभ्यामभिधेयत्वात्तस्य च प्रधानभूताधेयाधीनत्वात्तत्र यथा मध्यावच्छेदकाभ्यां षष्ठीमपोद्य द्वितीया विधीयते, तथा मध्येनाऽवच्छिद्यमानादाधेयादपि कुतो न विधीयते ?, इत्याह— | ॥१७९।१९॥ |
| ६९८ | "लक्षण०" | —नन्वभ्यादयः सम्बन्धद्योतकाः, तत्कस्मिन्नत्र सम्बन्धेऽभिः ?, इत्याह— | ॥१८०।१९॥ |
| ६९९ | " | —अथ कथं यदत्र मामभिष्यात् इत्यत्र द्वितीयाप्रयोगः ?, अत्राऽभिरस्तिना युक्त उपसर्गोऽत एव "प्रादुरुपसर्गो" ॥२।३।५८॥ इत्यस्तेः षत्वम् ?, उच्यते— | ॥१८०।२१॥ |
| ७०० | " | —ननु "लक्षणवीप्स्येत्थम्भूतेषु०" इति बहुवचनं किमर्थम् ?, लाघवार्थमेकवचनमेव निर्दिश्यताम् ?, इत्याह— | ॥१८०।२४॥ |
| ७०१ | "हेतुसहा०" | —ननु तुल्ययोगाद्यर्थे सहादय एव शब्दा वर्तन्ते न पर्वतादिशब्दा इति कथं ततो द्वितीया ?, इत्याह— | ॥१८०।३८॥ |
| ७०२ | " | —ननु हेतोरपि लक्षणत्वात् तत्र पूर्वेणैव द्वितीया भविष्यति, किं हेतुग्रहणेन ?; नैवम्, | ॥१८०।४१॥ |
| ७०३ | " | —ननु लक्षणेन हेतुव्याप्तौ हेत्वहेतुविषयत्वाल्लक्षणस्य नाऽवश्यं तदेव लक्षणं येन पुनः पुनर्लक्ष्यते, किं तर्हि ?; यत्सकृदपि निमित्तत्वाय कल्पते, तदपि लक्षणं भवति । | ॥१८०।४३॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| ७०४ | "कर्मणि" | —अथेह कस्मान्न भवति–क्रियते कटः?, कृतः–कटः?; शतेन क्रीतः–शत्यः पटः?, आरूढो वानरो यं स आरूढवानरो वृक्ष इति?,— | ॥१८१।६॥ |
| ७०५ | ,, | —यद्येवं कटं करोति भीष्ममुदारं दर्शनीयमिति भीष्मादिविशेषणविशिष्टस्य कटस्य करोतिक्रियया व्याप्यत्वात् कर्मत्वं तच्च कटशब्दादेवोत्पन्नया द्वितीययाऽभिहितमिति भीष्मादिभ्यो द्वितीया न प्राप्नोति?, यथा कृतः कटो भीष्म उदारो दर्शनीय इति करोतेः क्तप्रत्ययेनेति?, नैवम्;— | ॥१८१।८॥ |
| ७०६ | "उत्कृष्टे०" | —ननु "लक्षणवीप्स्ये०" इत्यादिसूत्रचतुष्टयी किमर्थमारभ्यते?, यतोऽप्रयुज्यमानां काञ्चित्सकर्मिकां क्रियामाश्रित्य "कर्मणि" इत्यनेनैव द्वितीया भविष्यति?,— | ॥१८१।१४॥ |
| ७०७ | "कर्मणि" | —ननु दर्शितेषु नोक्तार्थत्वेन मत्वर्थीयाद्यभावः किन्त्वन्यथा, तथाहि— | ॥१८१।३६॥ |
| ७०८ | ,, | —न चाऽत्राऽप्यपवादत्वात् श्नादयः शबादीनां बाधका इत्यन्यथासिद्धत्वादुक्तत्वस्य दृष्टान्ताभावादहेतुत्वमिति वाच्यम् । | ॥१८१।४३॥ |
| ७०९ | ,, | —अत्राऽनभिहिताधिकारवादी प्रत्यवतिष्ठते–किमिहाऽकर्तव्योऽनभिहिताधिकारः क्रियते?, आहोस्विदपूपौ द्वावित्यभिहितेऽपि प्रत्ययेन द्वित्वे द्विशब्दप्रयोगदर्शनात् श्नादिभिरभिहिते शबादिनिवृत्त्यर्थोऽन्यत्र कर्तव्यः स न क्रियत इति?, उच्यते— | ॥१८१।४५॥ |
| ७१० | ,, | —न च "कर्मणि" इत्यादौ कर्मादीनां श्रुतत्वात्तेषामेव विभक्त्यर्थत्वेन भाव्यमिति वाच्यम्?,— | ॥१८२।१०॥ |
| ७११ | ,, | —न च वृक्षः, प्लक्ष इत्यादौ अनभिहिते सावकाशत्वात् कथं वचनसामर्थ्यमिति वाच्यम्?, | ॥१८२।१७॥ |
| ७१२ | ,, | —ननु च यदि कर्मादयो विभक्त्यर्थास्तदा यथोक्तं–कृतः कटो भीष्म इत्यादौ केन कर्मणोऽभिहितत्वाद्द्वितीया न भवति, एवं कटं करोति भीष्ममित्यादौ भीष्मादिविशेषणविशिष्टात् कटादुत्पन्नया द्वितीययोक्तत्वात् भीष्मादिभ्यः कर्मणि द्वितीयस्या अप्रसङ्गः, इत्येकं सन्धित्सतोऽन्यत्प्रच्यवत इति । | ॥१८२।१८॥ |
| ७१३ | ,, | —ननु यद्यपि गुणद्रव्ययोः करोतिना सम्बन्धस्तथापि व्याप्यमित्यत्र विशब्दश्रुत्या प्रकर्षस्याऽऽश्रितत्वात् द्रव्यस्यैव क्रियान्तरे उपयोक्ष्यमाणत्वात् व्याप्यत्वात् कर्मत्वं न गुणस्येति कथं भीष्मादिभ्यो द्वितीया?, उच्यते— | ॥१८२।२५॥ |
| ७१४ | ,, | —ननु यस्याऽपि 'कर्मादयो विभक्त्यर्थाः' तस्याऽप्ययं दोषो यतस्तेनाऽपि "कर्मणि" इत्यादीनामेकद्विबहावित्यनेनैकवाक्यताऽभ्युपगन्तव्या, गुणप्रधानभाव एव तस्य तु विपरीतः । | ॥१८२।३२॥ |
| ७१५ | ,, | —एवं चैकत्वादिविशिष्टस्य कर्मणो वाचिका द्वितीया, तच्च नाम्नैवाऽभिहितं, नामार्थव्यतिरेकेणान्येषामेकत्वादीनां विशेषणीभूतानामभावादेक इत्यादौ भवतोऽपि प्रथमाया अभाव इति?, अत्रोच्यते— | ॥१८२।३३॥ |
| ७१६ | ,, | —अन्या अपि कस्मान्न भवन्ति?, कर्मादीनामभावात्, कर्मण्येव द्वितीयेत्येवं द्वितीयादीनां नियतत्वात्, तर्हि षष्ठी प्राप्नोति कर्माद्यभावस्य शेषरूपत्वात्?, नैवम्;— | ॥१८२।४१॥ |
| ७१७ | ,, | —यदि वा द्रव्यस्य क्रियासु साक्षादुपयोगादस्तु कटस्यैव कर्मत्व, भीष्मादीनां तु 'न केवला प्रकृतिः प्रयोक्तव्या' इति नियमात्,— | ॥१८३।१॥ |
| ७१८ | ,, | —कथं तर्हि कृतं पश्य?, आहृतमाहर?, कर्त्रा क्रियते?, दात्रेण लुनाति?, दानीयाय ददाति?, भीमाद्बिभेति?, प्रासादे प्रसीदति?; शयने शेते?, इत्यादिषु कादिभिरभिहितेषु कर्मादिषु द्वितीयादयो भवन्ति?; उच्यते— | ॥१८३।५॥ |
| ७१९ | ,, | —ननु द्रव्यस्य कारकत्वात्तस्य चैकत्वात् युगपदुद्भूतत्वादिविरुद्धधर्मासम्भवस्योक्तत्वात् कथमेष परिहार इति?, उच्यते— | ॥१८३।३६॥ |
| ७२० | ,, | —कथं पुनर्ज्ञायते शक्तिः कारकं न द्रव्यमिति चेत्?, उच्यते— | ॥१८३।३७॥ |
| ७२१ | ,, | —नन्वेकस्याऽपि द्रव्यस्य स्वरूपादिभिन्नक्रियायां व्यापारवत्तयाऽनेककर्मादिशक्त्यधिष्ठानत्वात्तदभिधानाय च द्वितीयादिप्रवृत्तेः प्रतिपादितत्वादोदनः पक्त्वा भुज्यत इति भुजिप्रत्ययेन कर्मशक्तेरभिहितत्वेऽपि पचिप्रत्ययेनाऽनभिहितादोदनाद्द्वितीया कस्मान्न भवति?, इत्याह— | ॥१८३।४१॥ |
| ७२२ | ,, | —ननु गौणान्नाम्नः कर्मणि द्वितीयेत्युक्तं, अजां नयति ग्राममित्यादौ तु ग्रामाद्यपेक्षयाऽजादेः प्रधानत्वात् न ततो द्वितीया प्राप्नोति?, इत्याह— | ॥१८३।४५॥ |
| ७२३ | ,, | —ननु यदि त्यादिकृत्तद्धितसमासैरभिहितत्वात् कर्मादिषु द्वितीयादयो न भवन्तीत्युच्यते, तदा कृतपूर्वी कटमित्यादौ कृतादिशब्देनैककटादिकर्मणोऽभिहितत्वात् कथं द्वितीयेति?, उच्यते— | ॥१८३।४६॥ |
| ७२४ | ,, | —अपि च करोतेर्व्याकरणेनाऽभिसम्बन्ध इति द्वितीया भवति । | ॥१८४।२०॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| ७२५ | "क्रियावि०" | —ननु रूपाद्युपाधिवत् क्रिया द्रव्यस्यैवोपाधिः, न चोपाधेरुपाध्यन्तरसम्भवः; 'निर्गुणा गुणाः क्रिया च' इति वचनात् । तत्कथं क्रियाया विशेषणसम्भवः ?, सत्यमेतत्किन्तु, | ॥१८४।२६॥ |
| ७२६ | " | —ननु चाऽसत्त्वभूता क्रिया, तदुपाधिस्तु सुतरामसत्त्वभूतः; तत्कथं सत्त्वाभिधायिना नाम्ना प्रतिपद्यत इति ?, उच्यते— | ॥१८४।३१॥ |
| ७२७ | " | —कथं पुनरसत्त्वभूतोऽर्थः सत्त्वरूपेण प्रकाश्यत इति चेत् ?,— | ॥१८४।३३॥ |
| ७२८ | " | —ननु 'क्रियाव्ययविशेषणे' इति लिङ्गानुशासनकारिकावचनान्नपुंसकत्वमेकत्वं च क्रियाविशेषणानामभिहितं, तत्र "नाम्नः प्रथमै०" इति सूत्रेण यथा प्रथमा विहिता समेभ्योऽव्ययेभ्यस्तथा क्रियाविशेषणादपि प्रथमा । | ॥१८४।३६॥ |
| ७२९ | " | —ननु शोभनं पचेत्यादौ "कर्मणि कृत." इत्यनेन कर्मणि षष्ठ्युच्यते, शोभनमिति क्रियाविशेषणत्वेन कृदन्तस्य कर्म, तद्धि कृदन्तधातुवाच्यायाः क्रियाया विशेषणम् ?,— | ॥१८४।४१॥ |
| ७३० | " | —न च सा क्रियाऽऽत्मन एव कर्माऽपि तु करोतीति क्रियान्तरस्य, सा यस्याः क्रियायाः कर्म तस्या एवेदमपि कर्म तत्सामानाधिकरण्याद्द्वयस्य कर्मत्वमिति क्रियाविशेषणे षष्ठी न भवति ?, नैवम्, | ॥१८४।४२॥ |
| ७३१ | " | —नन्वस्तु प्रथमा, प्रथमा-द्वितीयैकवचनयो रूपं प्रत्यविशेष इत्युक्तत्वाद्दोषाभावात् ?, नैवम्; | ॥१८४।४७॥ |
| ७३२ | "कालाऽध्व०" | —न च कालाऽध्वनोः कर्मत्वेन द्वितीययैव भाव्यं किमर्थमेतदिति वाच्यं "कालाऽध्वभावदेशं वाऽकर्म चाऽकर्मणाम्" इत्यकर्मकधातुसम्बन्धित्वेनाऽऽधारस्य कर्मसंज्ञाविधानात् सकर्मकधातुसम्बन्धित्वेऽनयोरुक्तेन प्रकारेण षष्ठी सप्तमी वा स्यान्न कर्मत्वम् ?, इत्याह— | ॥१८५।२९॥ |
| ७३३ | "सिद्धौ०" | —ननु यदि क्रिया सिद्धिं व्यभिचरेत्तदा युज्येत एतद्विशेषणं क्रियाव्याप्तेः, न च काचित्क्रियाऽपरिसमाप्ताऽस्ति ?, सत्यमेतत्, | ॥१८५।३५॥ |
| ७३४ | "हेतुकर्तृ०" | —ननु योग्यस्य हेतुत्वे सर्वमेव कारकं हेतुरेव स्यात्, अयोग्यस्याऽकारकत्वात्, तत्र कर्तृकरणयोस्तृतीयाविधानमनर्थकम् "हेतु०" इत्येव गतत्वात् ?,— | ॥१८६।१५॥ |
| ७३५ | " | —कर्मादौ च यद्यपि विभक्त्यन्तरं विहितं तथापि यत्र कारकत्वमेव भवति न कर्मादिविशिष्टरूपता तत्राऽपवादाभावात् तृतीया प्राप्नोति-नटस्य शृणोति, ग्रन्थिकस्य शृणोतीति ?, उच्यते— | ॥१८६।१६॥ |
| ७३६ | " | —ननु यूपाय दार्वित्यादौ तादर्थ्यलक्षणे सम्बन्धे हेतुहेतुमद्भावस्य प्रकारभूते प्रतिपाद्ये दारुणो हेतोस्तृतीया कस्मान्न भवति ?, उच्यते— | ॥१८६।२३॥ |
| ७३७ | " | —ननु कमण्डल्वादिलक्षणस्य हेतुत्वमप्यस्तीति तद्द्वारेणैवं भविष्यति ?, उच्यते— | ॥१८६।२९॥ |
| ७३८ | " | —न चेह तत्प्रतीतिः केनचिदभिधीयते । | ॥१८६।३०॥ |
| ७३९ | " | —अत्र विद्योतनं नाम प्रकारस्तमापन्नस्य कस्यचिन्न वृक्षो लक्षणं, "लक्षणवीप्स्येत्थम्भूते०" इत्यादिना प्रत्यादियोगे लक्षणे द्वितीयस्या अपवादरूपाया विद्यमानत्वात् कथं प्रत्युदाहरणमिति चेत् ?, सत्यमेवैतत्; | ॥१८६।३१॥ |
| ७४० | " | —न च प्रत्ययलक्षणेन "अधातुविभक्ति०" इति नामसंज्ञाप्रतिषेधः, "नाऽऽमन्त्र्ये" इति नलोपप्रतिषेधज्ञापकात् । | ॥१८६।३६॥ |
| ७४१ | " | —न च तृतीयस्या लुप् प्राप्नोति समासनामावयवत्वात्, कृते समासे तस्या उत्पादात् ?, नैष दोषः— | ॥१८६।३६॥ |
| ७४२ | " | —न चाऽत्रेत्थम्भूतस्य लक्षणं पृथग्भूतं, तथा ह्ययं प्राधान्येन लक्षणं निर्दिशति । | ॥१८६।३८॥ |
| ७४३ | " | —ननु कमण्डलुना छात्रमद्राक्षीदित्यादौ कमण्डलुना सह छात्रमद्राक्षीदिति सहार्थयोगोपपत्तेः "सहार्थे" इति तृतीया सिध्यति, तदर्थमनर्थकमित्थम्भूतग्रहणम् ?, इत्याह | ॥१८६।४१॥ |
| ७४४ | " | —ननु धान्येनाऽर्थो धान्येनाऽर्थीत्यादौ क्रियापदाश्रवणात् कर्तृकरणयोरभावात् षष्ठी प्राप्नोति ?, इत्याह— | ॥१८६।४३॥ |
| ७४५ | " | —ननु च विद्यमानतायामपि तुल्ययोगोऽस्त्येव, सत्तया सहोभयोः सम्बन्धात्, तथाहि-सहैव दशभिः पुत्रैर्भारं वहति गर्दभीति सहैव दशभिः पुत्रैः सद्भिरिति शक्यं प्रतिपत्तुं, तत्र विद्यमानता चेति तुल्ययोगात् किं पृथगुपादीयते ?, उच्यते— | ॥१८६।४६॥ |
| ७४६ | "सहार्थे" | —ननु पुत्रेण सहाऽऽगत इत्यत्र प्रधानकर्तरि कस्य विधानाच्चैकेन शब्देन भिन्नकक्षत्वाद्गुणप्रधानयोः कर्त्रोरभिधानासम्भवात् प्रधाने कार्यसम्प्रत्ययात् प्रधानस्यैवाऽभिधानं न्याय्यमित्यप्रधानस्य प्रतीयमानगमिक्रियापेक्षकर्तृत्वाश्रयेण सिद्धा तृतीया । | ॥१८७।१५॥ |
| ७४७ | " | —ननु प्रधानयोरेव कर्तृकर्मणोः षष्ठीत्यप्रधाने कर्तरि तृतीयैव भविष्यति ?, नैवम्; | ॥१८७।१९॥ |
| ७४८ | " | —ननु तिलैर्मिश्रीकृत्य माषा उप्यन्त इत्यन्तरङ्गत्वात् पूर्वं मिश्रणक्रियाया तिलाना करणत्वात् पश्चाद्वपनक्रियाया कर्मत्वात्तत्र करण इत्यनेन सिद्धा तृतीया ?, सत्यम् । | ॥१८७।२१॥ |

| क्र० | सूत्रम्। | शङ्का। | पृ० पं० |
|---|---|---|---|
| ७४९ | "सहार्थे" | —ननु 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति यथा गाः स्वामी व्रजति-अत्र व्रजिक्रियायां गवां कर्मत्वात् तन्निबन्धना द्वितीया, "स्वामीश्वरा०" इति प्राप्ते उपपदविभक्ती षष्ठीसप्तम्यौ बाधित्वा प्रवर्तते। | ॥१८७।२१॥ |
| ७५० | ,, | —अथ शिष्येणोपाध्यायस्य गौरित्यत्र गवापेक्षया शिष्योपाध्यायौ द्वावपि गुणौ, उपाध्यायापेक्षया तु शिष्यो गुणः, उपाध्यायस्य शब्देन गवा सम्बन्धात् शिष्यस्य तु सहयोगान्यथानुपपत्त्या, तत्राऽसति गौणादित्यधिकारे उभाभ्यामपि शिष्योपाध्यायाभ्यां षष्ठीं बाधित्वा तृतीया स्यादिति ?, नैवम्; | ॥१८७।३३॥ |
| ७५१ | "यद्भेदै०" | —ननु च प्रकृत्या दर्शनीयः, प्रायेण वैयाकरण इति युक्तः प्रयोगः, दर्शनीयत्वं हि प्राकृतं वैकृतं चाऽस्ति वैयाकरणत्वं प्रायिकमन्यच्च, तत्रेतरव्युदासार्थं प्रकृत्या प्रायेणेति चाऽर्थवत्। | ॥१८८।११॥ |
| ७५२ | ,, | —काण इत्यादिप्रयोगे तु अक्ष्णेत्यादिरव्यभिचारेण प्रतीतेरयुक्तः प्रयोगोऽर्थस्य गतत्वात् ?, उच्यते— | ॥१८८।१२॥ |
| ७५३ | ,, | —यदि तद्वदिति नोपादीयते तदाऽत्राऽपि स्यात् ?, काणशब्देन हि अक्षिभेदेनाऽक्षि आख्यायते, तद्वद्ग्रहणे तु काणशब्देन नेहाऽक्षिमान् आख्ययत इति न भवति। | ॥१८८।१८॥ |
| ७५४ | ,, | —न च गौणादित्यधिकारादिह न भवतीत्याशङ्कनीयम्। | ॥१८८।१९॥ |
| ७५५ | ,, | —ननु किमर्थमिदमारभ्यते ?, यावता 'अक्ष्णा काण' इत्यादौ कृतभवत्यादिक्रियाध्याहारेणाऽक्षिशब्दादिभ्यः कर्तृकरणलक्षणैव तृतीया भविष्यति ?, इत्याह— | ॥१८८।२१॥ |
| ७५६ | ,, | —ननु मा भूत्कर्त्रादौ तृतीया, इत्थम्भूतलक्षणत्वादक्ष्यादेर्भविष्यति ?, यदाह-"इत्थम्भूतस्य काणस्य, लक्षणं ह्यक्षि बुध्यते। ततस्तृतीया तेनैव, तत्र सूत्रेण सिध्यति" ॥१॥ अत्रोच्यते— | ॥१८८।२४॥ |
| ७५७ | "कृताद्यैः" | —कृतादयो न गर्गादिगणवत् सन्निविष्टा एव केचन ?, किं तर्हि ?, कृतप्रकाराः शक्तितोऽवसेया इत्याह— | ॥१८८।२८॥ |
| ७५८ | ,, | —नाऽयं प्रश्ने किं शब्दः ?, किं तर्हि ?, निषेधे। यद्वा प्रश्नार्थवृत्तिरेवाऽयं, प्रक्रमात्तु निषेधप्रतीतिः सामर्थ्याक्षिप्तलक्षणया न तु शब्दादिति युक्ततरः प्रश्नः। | ॥१८८।३०॥ |
| ७५९ | "काले भा०" | —ननु यदि नक्षत्रवाचिन इति शब्दो लक्षणत्वान्न तदानीमसौ नक्षत्रं वक्ति, नक्षत्रोपाधिकं कालं, रूपसामान्याच्च तत्त्वाध्यवसायः। | ॥१८८।३३॥ |
| ७६० | "प्रसितो०" | —ननु प्रसितशब्दस्य गुणवचनस्य क्रियार्थस्य च सम्भवादुभयार्थस्याऽपि ग्रहणप्रसङ्गो, न च गुणवचनस्य तृतीयेष्यते, न च नियामकमस्ति ?, इत्याह— | ॥१८९।२६॥ |
| ७६१ | ,, | —ननु समाहारद्वन्द्वमाश्रित्य 'प्रसितोत्सुकावबद्धेन' इति निर्देष्टव्ये किमर्थो बहुवचननिर्देशः ?, इत्याह— | ॥१८९।२८॥ |
| ७६२ | "व्याप्ये द्वि०" | —ननु वीप्सायां तृतीयाविधानं, न च वीप्सा तृतीयान्तस्य दृश्यते, तत्कथमिदम् ?, इत्याह— | ॥१८९।३३॥ |
| ७६३ | "समो ज्ञो०" | —नन्वत्र मातरमिति व्याप्यमस्त्येव, तत्कथमिदं व्याप्य इत्यस्याऽनुवर्तमानस्य स्यात्प्रत्युदाहरणमिति ?, अथ स्वरेणेत्यत्र न भवतीति चेन्न-अत्र तृतीयायाः सिद्धत्वात् ?, इत्याह— | ॥१९०।१२॥ |
| ७६४ | "दामः सं०" | —ननु सम इति परदिग्योगलक्षणा पञ्चमी, ततश्च "पञ्चम्या निर्दिष्टे परस्य" तच्चाऽनन्तरस्येति, "समो ज्ञोऽस्मृतौ" इत्यत्र व्यवधाने सति न भवति, तत्कथं सम्प्रयच्छत इति प्रशब्देन व्यवधाने विधिः ?, इत्याह— | ॥१९०।२६॥ |
| ७६५ | ,, | —नन्वनेन ब्राह्मणेन दानं प्रवृत्तमित्यादिवत् सम्प्रदानस्य करणत्वविवक्षायां 'दास्या सम्प्रयच्छते' इत्यादौ तृतीयोपपत्तेः किमर्थमिदमारभ्यते ?,— | ॥१९०।३१॥ |
| ७६६ | ,, | —यद्वा सहार्थे इयं तृतीया, तथाहि-दास्यै स्वयं धनं ददाति साप्यात्मानं तस्मै ददातीति दानपूर्वके वा सम्भोगे दाम् वर्तते, दत्त्वा दास्या सह सम्भुङ्क्ते इति। एवं चाऽत्र क्रियाव्यतिहारोपपत्तेस्तद्द्वारेणैव आत्मनेपदम्। अत्रोच्यते— | ॥१९०।३२॥ |
| ७६७ | "रुचिकॢ०" | —कथं रोचते मम घृतं सह मुद्गैः शालयो दधिशर कुकुराश्च ?, घृतमेव ममाऽपि रोचते घृतशीतं च सशर्कर पयः ?,— | ॥१९१।१९॥ |
| ७६८ | "तादर्थ्ये" | —ननु तस्मै इदं तदर्थमिति सत्या चतुर्थ्यां समासः, सति च समासे तदनुवादेन चतुर्थीविधानमितीतरेतराश्रयादप्रसिद्धिर्निर्देशस्येति ?, उच्यते— | ॥१९१।१८॥ |
| ७६९ | "रुचिकॢ०" | —ननूभयत्रैकवचननिर्देशेऽपि साम्याद्यथासंख्यं भविष्यति किं बहुवचनेन ?, इत्याह— | ॥१९१।२८॥ |
| ७७० | ,, | —ननु सूत्रयवागूशब्दयोर्द्वयोरपि सम्पद्यत इति क्रियया सह सम्बन्धाद्गौणत्वाभावात् कथं सूत्रशब्दाच्चतुर्थी ?, उच्यते— | ॥१९१।४०॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| ७७१ | "प्रत्यनो०" | —ननु 'शुचाङोऽर्थिनि', 'गृणाऽनोश्चाऽऽख्यातरि', इत्येव किं न विन्यस्यते ?, एवं हि विन्यस्यमाने प्रतेरिति पूर्वेणोत्तरेण चाऽनुवृत्त्याऽभिसम्बन्धाद्धिः प्रतिग्रहणं न कर्तव्यं भवति, वर्णेन चैकेन लाघवमिति ?, नैवम्,— | ॥१९२।३२॥ |
| ७७२ | "यद्वीक्ष्ये०" | —ननु राधीक्ष्योर्वृद्धिदर्शनयोर्वर्तमानत्वात् कथं दैवादिनिरूपणे वृत्तिः ?, उच्यते— | ॥१९२।४१॥ |
| ७७३ | " | —ननु यस्य ग्रहणान्मा भूत् शुभाशुभाच्चतुर्थी, यस्य तद्देवं ततो मैत्रात् कस्मान्न भवति ?, भवति ह्यत्र मैत्रो दैववान्; उच्यते— | ॥१९२।४५॥ |
| ७७४ | "उत्पातेन०" | —ननु कपिलादिविद्युद्धि· वातादीना जन्यमानत्वात्तेभ्यस्तादर्थ्ये एव भविष्यतीति चेत् ?,न;— | ॥१९३।२३॥ |
| ७७५ | "तुमोऽर्थे०" | —यद्येवं पाकेनेत्यादौ क्रियायाः क्रियार्थाया उपपदभूताया विद्यमानत्वात् प्रत्ययस्य च भाववचनत्वात्ततः कुतो न चतुर्थी ?, सत्यम्,— | ॥१९४।१६॥ |
| ७७६ | " | —ननु च तुमर्थ इति समासनिर्देशो मात्रालाघवार्थं कुतो न कृतः ?, इत्याह— | ॥१९४।२०॥ |
| ७७७ | "गतेर्नवा०" | —कथं हि शब्दाना साधुत्वं युक्तिबलेन शक्यं व्यवस्थापयितुम् ?,— | ॥१९४।४३॥ |
| ७७८ | "मन्यस्या०" | —ननु नावन्नयोरत्यन्तोपकारकत्वात् कथमतिकुत्सनं गम्यते ?, इत्याह— | ॥१९५।२९॥ |
| ७७९ | " | —अथ 'अनावादेः' इत्येकवचनेऽपि सिध्यति बहुवचनं किमर्थम् ?, इत्याह— | ॥१९५।३७॥ |
| ७८० | "तद्भद्रा०" | —ननु हितसुखाभ्या योगे पूर्वेणैव चतुर्थीविकल्प· सिद्धः, किं पुनस्तदर्थेन तद्ग्रहणेन ?, इत्याह— | ॥१९६।२१॥ |
| ७८१ | "शक्तार्थ०" | —ननु कारकविभक्तिरपि क्रियापदापेक्षिणीति कथमन्तरङ्गा स्यात् ?, नैष दोषः;— | ॥१९६।४१॥ |
| ७८२ | "पर्यपा०" | —नन्वपेन साहचर्यात् परेरपि वर्जनार्थस्य ग्रहणाद्वर्जनार्थाभ्या पर्यपाभ्या युक्तात् पञ्चमीत्यर्थावसायात् कर्तुर्यदर्थं क्रियारम्भस्तत्प्रधानमिति व्याप्यस्य वर्ज्यमानस्य प्राधान्यात्ताभ्यां युक्तत्वात् पाटलिपुत्रादेः क्रियाव्याप्ये द्वितीयायाः प्रसङ्गे सम्बन्धिरूपतया वाऽपेक्षिते षष्ठ्या प्राप्तायां वर्जनीयादेव पञ्चमी भविष्यति किं वर्ज्यग्रहणेन ?, सत्यम्, | ॥१९७।३५॥ |
| ७८३ | " | —किञ्च न हि साहचर्यं प्रमाणमस्ति, अर्थप्रकरणादिभिर्लोके सहचरितस्य ग्रहणात् सव्यभिचारत्वाच्चेत्यदोषः । | ॥१९७।३७॥ |
| ७८४ | "गम्ययपः०" | —ननु यथा कुशूलादादाय पचति कुशूलात् पचतीत्यत्राऽऽदानाङ्गे पाके पचेर्वर्तमानादुपात्तविषयमेतदपादानमिति भवति, एवमिहाऽपि अपक्रमणाङ्गे दर्शने दृशेर्वर्तनाद्भविष्यति, तथाहि-तत्ततोऽपक्रामति अनपक्रामद्धि न विषयं गृह्णीयात् ?, सत्यम्, | ॥१९८।१३॥ |
| ७८५ | "यतः प्रति०" | —ननु प्रतिनिधिप्रतिदानयो· स्वेन प्रतियोगिना प्रतिनिधिप्रतिदानवता सम्बन्धमभिव्यक्तुं प्रतिः प्रयुज्यते, तत्र द्विष्ठत्वात् सम्बन्धस्य प्रतिनिधिप्रतिदानयोः प्रतिनिधिप्रतिदानवतोश्च तुल्येऽपि प्रतिनायोगे प्रतिनिधिप्रतिदानाभ्या कारकविभक्तिविषयाभ्या नोपपदविभक्ति· पञ्चमी भविष्यति, किं तदर्थेन यत इत्यनेन ?,— | ॥१९८।१९॥ |
| ७८६ | "आख्यात०" | —ननु यदा नटादेर्भरतशास्त्रादिकमात्मसात् कर्तुकाम· शृणोति तदा कथं पञ्चमी ?, इत्याह— | ॥१९८।३४॥ |
| ७८७ | " | —ननूपाध्यायादेरस्ति विद्यापरिग्रहेऽपायेऽवधिभूतत्वं, ततो हि विद्या श्रोतारमुपैति, सन्ततत्वात् नाऽत्यन्ताय ततोऽपक्रामतीति "पञ्चम्यपादाने" इति सिद्धा पञ्चमी किमनेनेति ?, उच्यते— | ॥१९८।३७॥ |
| ७८८ | "गम्ययप·०" | —ननु किमर्थमिदं सूत्रमारभ्यते ?, प्रासादात् प्रेक्षते, आसनात् प्रेक्षत इति ततो दृष्टिरपैतीति प्रासादादेरपायेऽवधिभूतत्वादपादाने पञ्चमी सिद्धैव ?; | ॥१९८।४४॥ |
| ७८९ | " | —किञ्च न भवदुदीरितः प्रेक्षतेरर्थश्चक्षुरिन्द्रियकरणिकायामुपलब्धौ सम्भवति, प्रेक्षते देवदत्तश्चक्षुरिन्द्रियेण करणभूतेन पदार्थमुपलभत इति देवदत्तस्य कर्तृत्वमुपलभ्यते न चक्षुरिन्द्रियस्य । | ॥१९९।२१॥ |
| ७९० | " | —न चाऽनुमानसमाधिगम्योऽर्थ शब्दार्थो भवितुमर्हतीति प्रेक्षत इति नायनरश्मयोऽस्य नि·सृत्य विषयं गृह्णन्तीत्यशब्दार्थोऽयमिति कथं ग्रामादागच्छतीति शब्दोपात्तक्रियापेक्षे कारकभावे सत्यनुमितक्रियापेक्षया साक्षादशब्दोपात्तव्यापार कारकभावमुररीकृत्य पञ्चमी समर्थयामहे ?,— | ॥१९९।२३॥ |
| ७९१ | " | —अपि चास्ता तावच्छब्दार्थताप्रयासः, नयनरश्मयोऽस्य नि·सृत्य विषयं गृह्णन्तीत्ययमेव प्रेक्षतेर्भवत्वर्थ·; प्रासादस्य तु तत्क्रियापेक्षयाऽपादानादन्यत्वं ब्रूमः । | ॥१९९।२६॥ |
| ७९२ | " | —न तावत्प्रासादरश्मय· प्रसरन्ति किन्तु चक्षूरश्मय इति, प्रत्युत प्रासादो देवदत्तस्याऽऽधार इति । | ॥१९९।२७॥ |
| ७९३ | "प्रभृत्य०" | —न च वर्तमाननिमित्तसम्भवे कालान्तरे वृत्तिपरिग्रहो युक्तः, तत्र दिश्येव प्रयोगे पञ्चमी स्यान्नाऽन्यत्र देशादौ ?, इत्याह— | ॥१९९।३६॥ |
| ७९४ | " | —अत्र कथमिदं विज्ञायते दिशि दृष्टा एव शब्दा दिक्शब्दा न दिशि वर्तमानाः ?, इत्याह— | ॥१९९।३८॥ |

| क्र० | सूत्रम्। | शङ्का। | पृ० प० |
|---|---|---|---|
| ७९५ | "प्रभृत्य०" | —नन्वेतदेव कथं विज्ञायते ?, एतदर्थमेव शब्दोपादानमिति, उच्यते— | ॥१९९।४०॥ |
| ७९६ | " | —अथ जिनदत्तादन्योऽयं मैत्रस्य, जिनदत्तादितरोऽयं चैत्रस्य, छात्राणा पूर्वमामन्त्र यस्य, कायस्य पूर्वमित्यादौ मैत्रचैत्रच्छात्रकायशब्देभ्यः कथं न भवति ?, उच्यते— | ॥२००।३॥ |
| ७९७ | " | —अथ दूरान्तिकार्थमारादित्यव्ययं सूत्रेऽनुक्रियते, तद्योगे च "आरादर्थैः" इत्यनेनैव पञ्चमी सिद्धा किमिहोपादानेन ?, सत्यम्, | ॥२००।१५॥ |
| ७९८ | "ऋणाद्धेतोः" | —ननु बध्नातिर्वन्धवृत्तिर्न गत्यर्थादिष्वन्तर्भवति, इति कथ प्रयोज्यस्य यत्कर्म तस्मिन्नयमिति कर्तृत्वेन विवक्षितस्य न हेतुभावः ?, इत्याह— | ॥२००।३६॥ |
| ७९९ | "आरादर्थैः" | —अथ दूरं हितं ग्रामात्, दूर हितं ग्रामस्य भूयादित्यादौ हितादियोगे पञ्चम्यभावपक्षे "हितसुखाभ्याम्" ॥२।२।६५॥ इति चतुर्थी कस्मान्न भवति ?, उच्यते— | ॥२०१।७॥ |
| ८०० | "गुणाद०" | —न चाऽयमपप्रयोगः, सर्वैशिष्टैरभिमानेन प्रयुज्यमानत्वात् ?, इत्यत आह— | ॥२०१।१९॥ |
| ८०१ | "आरादर्थैः" | —ननु दूर हितं ग्रामस्येत्यादौ पञ्चम्यभावपक्षे ग्रामस्य हितेन दूरेण च योगात् हितयोगे "हितसुखाभ्याम्" इति चतुर्थ्यपि प्राप्नोतीत्यारादर्थैर्योगे षष्ठीपञ्चम्यावेव यथा स्यातां न त्वन्या विभक्तिरिति तद्बाधनार्थं 'आरादर्थै॰ षष्ठी च' इति षष्ठीग्रहणं कर्तव्यमन्यथाऽत्र चतुर्थी स्यादिति पृच्छति। | ॥२०१।२८॥ |
| ८०२ | "अज्ञाने०" | —ननु ज्ञानमिति भावेऽनटि रूपं, ततश्च तदेव ज्ञानं नाम यो जानातेरर्थः; तत्र जानातिर्वर्तते तत्कथमिदमुच्यते-अज्ञानेऽर्थे वर्तमानस्य जानातेरिति ?, उच्यते— | ॥२०२।१३॥ |
| ८०३ | "शेषे" | —नन्वनेकार्थः शेषशब्दः, तत्र न तावदप्रधानवचनो गौणाधिकारेणैव तदर्थलाभात् शेषग्रहणानर्थक्यप्रसङ्गात्। | ॥२०२।२७॥ |
| ८०४ | " | —तथा सति सर्वेषां कारकाणां क्रियार्थत्वेनाऽप्राधान्यात् सर्वेभ्य एव कारकेभ्य॰ षष्ठी स्यात्, वचनप्रामाण्याच्च द्वितीयादिभि॰ समावेशो न बाध्यबाधकभाव इति। | ॥२०२।२८॥ |
| ८०५ | " | —अपि च-अप्रधाने षष्ठीत्येवमर्थे जाते नीलमुत्पलमित्यादौ नीलशब्दाद्विशेष्यसमानाधिकरणादपि विशेषणत्वादप्राधान्यादुत्पलमित्यत्र कृतावकाशां प्रथमां बाधित्वा षष्ठ्येव स्यात्। | ॥२०२।२९॥ |
| ८०६ | " | —अपि च शेषशब्दाच्चतृतीयादिविभक्तीनामनया षष्ठ्या बाधितत्वात् शेषेण भ्रियते भूमिरित्यादिप्रयोगराशिर्न स्यात्, तस्मात् केषुचिदर्थेषु सत्सु शेषशब्द उपाधीयमान उपयुक्तेतरवचन एव भवति ?, इत्याह— | ॥२०२।३१॥ |
| ८०७ | " | —यद्येवं राज्ञ॰ पुरुष इत्यत्राऽपि सम्बन्धस्य वाक्यार्थत्वात् षष्ठी न प्राप्नोति ?, नैष दोष॰, | ॥२०२।३५॥ |
| ८०८ | " | —ननु क्रियामन्तरेण सम्बन्धाभावात् सर्वत्र तस्या अवश्यम्भावात् तन्निमित्तस्य च कर्मादेः सत्त्वात् कथं तस्याऽविवक्षा ?, इत्याक्षिपति। | ॥२०३।१२॥ |
| ८०९ | " | —ननु शेषशब्देन स्वस्वामिभावादेः सम्बन्धस्याऽभिधानात्तस्य च द्विष्ठत्वाद्राज्ञः पुरुष इत्यत्र तु पुरुषशब्दादपि षष्ठी प्राप्नोति, तत्र प्रथमा वक्तव्या, प्रतिषिद्धायामपि षष्ठ्यां नामार्थमात्रे विधीयमानायाः प्रथमायाः सम्बन्धस्याऽधिकस्य भावादप्रसङ्ग इति; नैष दोषः, | ॥२०३।१२॥ |
| ८१० | " | —यद्येवं पुरुषपदसन्निधान एव राज्ञः सम्बन्धित्वावगमो नाऽन्यथेति राजशब्दादपि प्रथमाप्रसङ्गः ?, नैष दोषः, | ॥२०३।१७॥ |
| ८११ | " | —ननु नैतेनैवं भवितव्यं, न हि शब्दस्य भावाभावाभ्यामर्थस्य भावाभावौ क्रियेते, किं तर्हि ?, अर्थस्य प्रतिपिपादयिषया विषयीकरणाकरणाभ्या शब्दस्योच्चारणानुच्चारणलक्षणौ भावाभावौ। | ॥२०३।२०॥ |
| ८१२ | " | —किं पुनस्तत् ?, स्वामित्वम्, 'समासकृत्तद्धितेषु सम्बन्धाभिधानम्' इति वचनात् स्वस्वामिसम्बन्ध इत्यर्थ॰। | ॥२०३।२४॥ |
| ८१३ | " | —यद्येवं तर्हि राजनि स्वकृतं स्वामित्वं तत्र षष्ठी भवत्येवं पुरुषेऽपि राजकृतं स्वत्वं ततः षष्ठी प्राप्नोति ?, उच्यते— | ॥२०३।३१॥ |
| ८१४ | "रिरिष्टा०" | —अथ पूर्वेणैवेदं सिध्यति किमर्थोऽयं योग॰ ?, इत्याह— | ॥२०३।४४॥ |
| ८१५ | "कर्मणि०" | —एवं मन्यते-कर्म कारकं, तच्च क्रियामन्तरेण न सम्भवति, क्रियाया हि कारकं भवति। सा च वाचकं धातुं प्रत्ययसहितमाक्षिपति, धातोश्च द्वये प्रत्यया विधीयन्ते त्यादयः कृतश्च। तत्र "तद्वेत्त्यधीते" इति ज्ञापकात्त्यादिप्रयोगे द्वितीयाविधानात् कृत् प्रयोग एव षष्ठी भविष्यतीति व्यावृत्त्या असम्भवादिहाऽनर्थकं कृद्ग्रहणम् ?, नैवम्, | ॥२०४।१९॥ |
| ८१६ | " | —कथमिति-त्यागादिभ्यस्त्यागोऽस्याऽस्तीतीनि तद्धितप्रयोगेऽर्थस्येत्यादिकर्मणि षष्ठी न प्राप्नोतीत्याशङ्कार्थ॰। | ॥२०४।२६॥ |
| ८१७ | "वैकत्र०" | —अथ कृत इत्यस्यैव षष्ठ्यन्तस्य द्वयोरिति विशेषणं कस्मान्न क्रियते ?, तत्राऽपि हि द्वयोः कृदन्तयोरेकं यत्कर्म तत्र षष्ठी वा भवतीत्ययमर्थ॰ सम्पद्यते। तथा च सति-अपां स्रष्टा भेत्ता च मैत्र इत्यादावेव विकल्प॰ स्यादिति, नैवम्; | ॥२०४।३४॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० पं० |
|---|---|---|---|
| ८१८ | "वेकत्र०" | —ननु 'कर्मणि' इत्यधिकृतत्वादेकशब्दस्य च द्वितीयसव्यपेक्षत्वादेकस्मिन् कर्मणीत्युक्तेऽपि द्वयोः कर्मणोरेकतरस्मिन्निति गम्यत एव किं द्वयोरित्यनेन ?, उच्यते— | ॥२०४।२९॥ |
| ८१९ | "द्विहेतो०" | —ननु कथमिदमुच्यते ?, घञ एकत्वादिति, नैवम्, | ॥२०५।३०॥ |
| ८२० | " | —अथ कथं चैत्रस्य मैत्रस्येत्युभयत्र कर्तरि षष्ठी ?, यतोऽत्र प्रयोजककर्ता णिगर्थस्य प्राधान्यात् प्रधानं प्रयोज्यकर्ता तु प्रकृत्यर्थस्याऽप्राधान्यादप्रधानं, तत्र प्रधानाऽप्रधानसन्निधौ प्रधानादेव षष्ठी नाऽप्रधानादिति चेत् ?, सत्यम्, | ॥२०५।३२॥ |
| ८२१ | "नोभयो०" | —ननु द्विकर्मकेषु धातुष्वयं प्रतिषेधः, तत्र प्रधानकर्मणः कृत्येनैवाऽभिहितत्वात् कर्तर्येव प्रतिषेधो न्याय्य इत्युभयग्रहणमतिरिच्यते ?, नैवम्; | ॥२०६।२०॥ |
| ८२२ | " | —न च 'प्रधानकर्मण्याख्येये त्यादीनाहुर्द्विकर्मणाम्' इत्यत्राऽऽदिशब्देन षष्ठ्यपि गृह्यत इति वाच्यं, तस्य व्यवस्थावाचित्वात् कृत्यक्तखलर्थानामेव ग्राहकत्वादिति। | ॥२०६।२१॥ |
| ८२३ | " | —किञ्च 'द्विकर्मणां धातूनां प्रधानकर्मणि तिवादय उत्पद्यन्ते' इति न्यायोऽयं, यतो ह्येकेन शब्देनाऽजाग्रामलक्षणयोर्द्वयोः कर्मणोः सन्निपातितयोरेकतरकर्माऽभिधानीयं, न तु द्वे अपि कर्मणी, अजावद्ग्रामस्यानिनीषितत्वात्तथा प्रतीत्यभावाच्च । | ॥२०६।२२॥ |
| ८२४ | " | —न ह्यजा ग्रामो नीयत इत्युक्ते अजा ग्रामं नीयत इतिवद्गुणमुख्यभावेन प्रतीतिरस्ति, किन्तु तौ द्वावपि किमप्यन्यत्र नीयेते इत्यर्थान्तरं प्रतीयेत इति, तदत्र कतरत्कर्माऽनेनोच्यतामिति विरोधात् प्रधानकर्मणि त्यादय उत्पद्यन्त इत्युच्यते । | ॥२०६।२४॥ |
| ८२५ | " | —यद्येवं कथमुक्तं-दुहादीनामप्रधाने कर्मणि तिवादय इति ?, | ॥२०६।२७॥ |
| ८२६ | "क्तयोर०" | —ननु सन् धात्वर्थः, तत्र धातुरेव वर्तते, कृत्प्रत्ययस्तु "कर्तरि" इत्यादिना कारके भावे च विधीयते । तत्र सति प्रत्ययविधिरेव नाऽस्ति कथं प्रतिषेधः ?, सतोऽन्यस्मिन्नर्थे इति ?, नैष दोषः; | ॥२०६।४७॥ |
| ८२७ | " | —कथं शीलितो मैत्रेण ?, रक्षितश्चैत्रेण ?, भूतेऽयं क्तः, वर्तमानताप्रतीतिस्तु प्रकरणादिनेति । | ॥२०७।३॥ |
| ८२८ | " | —अथ केन सूत्रेण क्तो भवति ?, इत्याह— | ॥२०७।२१॥ |
| ८२९ | " | —कथमिति-शीलितो मैत्रेणेत्यादावपि "ज्ञानेच्छार्चा०" इत्यनेन क्तः, तथा च वर्तमानताप्रतीतिरत्र कस्मान्न भवतीति शङ्कार्थः-परिहरति— | ॥२०७।२२॥ |
| ८३० | " | —यद्येवं कथमत्र वर्तमानताप्रतीतिः ?, अद्यापि शील्यते ?, इत्याह— | ॥२०७।२४॥ |
| ८३१ | "व्याप्ये क्तेनः" | —अथ यस्मात्क्तात् प्रत्ययादिन् विधीयते तस्य यत्कर्म तत्राऽधिकरणविवक्षया सप्तमी सिध्यति किमर्थमिदं ?, इत्याशङ्क्याऽऽह— | ॥२०९।२२॥ |
| ८३२ | "तद्युक्ते०" | —न च 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न भविष्यतीति वाच्यं, यतः कारकश्रुत्या कर्तृकरणयोस्तृतीयावत्कारकेण कर्मणा सम्बन्धे विधीयमानत्वादस्या अपि कारकविभक्तित्वम् । | ॥२०९।३७॥ |
| ८३३ | "अप्रत्या०" | —ननु साधुशब्देन सदाचार उच्यते, आचरणं च क्रियाविषयमिति मातृशब्देन तत्स्था परिचर्यादिक्रिया उच्यत इति मातृपरिचरणादिक्रियाणां सम्यगाचरिता मातरि साधुरित्युच्यते; तद्वैपरीत्येनाऽसाधुर्मातरीति । | ॥२१०।१८॥ |
| ८३४ | " | —यदि तु साधुशब्दो भक्तिप्रधाने सङ्कल्पविशेषे वर्तते तद्वैपरीत्ये चाऽसाधुशब्दस्तदा मातुरेव विषयभावसम्भवात् सिद्धैव सप्तमी, नैतदुपयुज्यत इति ?;— | ॥२१०।२०॥ |
| ८३५ | " | —यद्येवमसाधुर्मैत्रो मातरीति मातृविषयस्य साधुत्वस्य निषेधात् प्रथमं मात्रा साधोर्योगादन्तरङ्गत्वादुत्तरेणैव सिद्धा सप्तमी किमनेन ?, नैवम्; | ॥२१०।२१॥ |
| ८३६ | " | —नन्वभियोगे "लक्षणवीप्स्ये०" इत्यनेन प्रत्यादियोगे तु "भागिनि०" इत्यनेन च द्वितीयाया विशेषविधानात् सप्तमी न भविष्यति किमप्रत्यादावित्यनेन ?, सत्यम्; | ॥२१०।२३॥ |
| ८३७ | "स्वेशेऽधिना" | —नन्वत्र क्रमेण परस्परमाधाराऽऽधेयभावविवक्षया पर्यायेणाऽप्रधानात् "सप्तम्यधिकरणे" इत्यधिकरणे एव सप्तमी भविष्यति किमनेनेति ?, उच्यते— | ॥२१०।४१॥ |
| ८३८ | " | —ननु "विभक्तिसमीप०" ॥३।१।३९॥ इत्यादिना विभक्त्यर्थे यदव्ययं तद्विभक्त्यन्तेन सह समस्यते स चाऽव्ययीभावः, यथा-अधिस्त्रीति; एवमत्राऽपि कस्मान्न भवति ?, | ॥२१०।४३॥ |
| ८३९ | " | —न च "सप्तम्या वा" ॥३।२।४॥ इत्यस्माद्भावाभावपक्षे सप्तमीश्रवणं फलमिति वाच्यम् ?, वर्तिपदसप्तमीलोपात्; समाससप्तम्या हि स विकल्पः । | ॥२११।१५॥ |
| ८४० | " | —न चाऽत्राऽधिर्विभक्त्यर्थेऽस्ति, क्व तर्हि ?, | ॥२११।१६॥ |
| ८४१ | "यद्भावो०" | —अथ ऋद्धेषु भुञ्जानेषु दरिद्रा आसत इत्यादौ यत्र क्रियार्हाणां कारकत्वं क्रियानर्हाणामकारकत्वं तद्विपर्यासो वा गम्यते तत्र कथमियं सप्तमी ?,— | ॥२११।२६॥ |
| ८४२ | "गते गम्ये०" | —नन्वन्तेन सहाऽध्वनोऽभेदोपचारात् सिद्धमेवैकार्थ्यं किमनेन ?, सत्यम्, | ॥२१२।९॥ |

| क्र० | सूत्रम् । | शङ्का । | पृ० प० |
|---|---|---|---|
| ८४३ | "षष्ठी वा०" | —ननु "यद्भावो०" इति भावलक्षणे सामान्ये सप्तमी, तत्राऽनादरे इति विशेषे षष्ठी; सप्तम्यामनादरप्रतीतिरर्थप्रकरणादेरित्यर्थभेदान्न बाध्यबाधकभावोऽस्तीति किं पक्षे सप्तम्यर्थेन वाशब्देनेति ?, उच्यते— | ॥२१२।३४॥ |
| ८४४ | "सप्तमी०" | —ननु निर्धार्यमाणस्याऽवयवस्य समुदायाभ्यन्तरत्वात् समुदायस्य चाऽधिकरणविवक्षायां वृक्षे शाखेतिवत् सप्तम्याः सिद्धत्वात् सम्बन्धविवक्षायां त्ववयवस्य वृक्षस्य शाखेतिवत् षष्ठ्या अपि सिद्धत्वात् किमनेनेति ?, नैवम्; | ॥२१२।४३॥ |
| ८४५ | "क्रियामध्ये०" | —ननु च क्रोशे स्थितं लक्ष्यं विध्यति, द्व्यहे पूर्णे भुङ्क्ते इत्यधिकरण एव सप्तमी, क्रोशाभ्निःसृत्य स्थितं लक्ष्यं विध्यति, द्व्यहमतिक्रम्याऽनु भुङ्क्ते इत्यपादाने "गम्ययपः कर्माधारे" ॥२।२।७४॥ इति पञ्चमी सिद्धैव ?, सत्यम्; | ॥२१३।९॥ |
| ८४६ | "सप्तमी०" | —यद्येवं सर्वथा समुदायभावानापन्ने निर्धारणमेव न युज्यते, समुदायाद्धि एकदेशस्य पृथक्करणं निर्धारणमित्युक्तत्वात् ?, सत्यमेतत्;— | ॥२१३।२४॥ |
| ८४७ | "क्रियामध्ये०" | —नन्विष्वास इति धनुरुच्यते, यथा–'अङ्गराजो महेष्वासः' इति, धनुश्च व्यधने करणं कर्ता तु मैत्रादिस्तत्कथमुक्तमिष्वासो विध्यतीति ?, उच्यते— | ॥२१३।३०॥ |
| ८४८ | " | —ननु चेहस्थोऽयमिष्वास इत्यादि क्रियाभेदाद्युक्तमुदाहरणं, इदं त्वयुक्तं अद्य भुक्त्वा मुनिर्द्व्यहाद्भोक्तेति भुजिक्रियाया एकत्वात् ? सत्यम्,— | ॥२१३।३२॥ |
| ८४९ | "तुल्यार्थै०" | —नन्वनन्तरात् पूर्वसूत्रात्तृतीयाऽनुवर्तते, ततः "तुल्यार्थैर्वा" इति तद्विकल्पे कृते "शेषे" इत्यनेन पक्षे शेषलक्षणा षष्ठी सिद्धैव किमर्थं तद्विधानम् ?, इत्याह— | ॥२१४।४१॥ |
| ८५० | "असत्त्वा०" | —कथं चिरं ?, चिरेण ?; चिराय ?, चिरात् ?; चिरस्येति ?,–विभक्तिप्रतिरूपका निपाता एते । | ॥२१५।२६॥ |
| ८५१ | "हेत्वर्थै०" | —ननु ततोऽप्युत्तरसूत्रेण सर्वा विभक्तय इति सर्वविभक्त्यन्तर्गतत्वात्तृतीयाद्या अपि सिद्धाः किमर्थमिदं ?, इत्याह— | ॥२१५।३३॥ |
| ८५२ | "अविशे०" | —कथं नाख्ये च दक्षा वयम् ?, त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः ?, सा बाला वयमप्रगल्भमनसः ?, इत्यादि— | ॥२१६।१२॥ |
| ८५३ | "जात्या०" | —अथेह कस्मान्न भवति ?, एको व्रीहिः सम्पन्नः सुभिक्षं करोति, अस्ति ह्यत्रैको जातिलक्षणोऽर्थः ?, इत्याह— | ॥२१६।३४॥ |
| ८५४ | " | —नन्वेक इति संख्याशब्दः प्रयुज्यमानः स्वतः सदेकत्वमुद्भावयति, तेन चैकत्वेन विरुद्धं बहुत्वमिति बहुवदतिदेशो न भविष्यति किमसंख्य इति विशेषणेन ?, सत्यम्;— | ॥२१६।३४॥ |
| ८५५ | "अविशे०" | —नन्वेकसंख्याकप्रत्यात्मवचनत्वादसदः कथं द्वावर्थौ स्यातामिति ?, नैष दोषः;— | ॥२१६।३८॥ |
| ८५६ | "फल्गुनी०" | —ननु फल्गुनीप्रोष्ठपदाशब्दौ नक्षत्रवाचित्वाद्वित्वाऽव्यभिचारिणौ यतश्चन्द्रमसा योगे नक्षत्रता, तेन च द्वयोरेव नैकैकस्य; तद्धितारमेव तारकं नक्षत्रमुच्यत इति किमर्थं तस्य द्वाविति विशेषणमनुवर्त्यत इति ?, नैष दोषः;— | ॥२१७।३१॥ |
| ८५७ | " | —अथ किमर्थमिदं ?, न हि बहुवचनाद्वित्वप्रतीतिरस्ति, बहुत्वस्य ततः प्रतीतेः ?, बहुत्वं च तत्र यथाकथञ्चित् सम्पाद्यं, चन्द्रोपेते हि ज्योतिषी इति बहुत्वं सिद्धम् । | ॥२१७।३४॥ |
| ८५८ | "गुरावे०" | —नन्वाप इत्येकस्यामपि जलकणिकायां बहुवचनान्तोऽप्शब्दः प्रयुज्यते ?, | ॥२१८।७॥ |



# १४ परिशिष्टम् ।

अस्मिन्नेव शब्दानुशासने प्रथमे विभागे सूत्रवृत्त्युदाहरणप्रत्युदाहरणाद्यनेकस्थले स्वमतानि अन्यथाप्रतिपादयतां स्वमतरक्षणैकबद्धकक्षाणां शेषकश्चिदन्यापरपर्यैकविरुदोपपदलाञ्छितशाब्दिकानामकाराद्यनुक्रमेण नामानि ।

| क्र० | शाब्दिका । | मतानि । | पृ० पं० |
|---|---|---|---|
| १ अन्यः । | | —अन्यस्तु तृतीयासमासार्थानि पदानि तृतीयासमास इति तादर्थ्यात् कट वीरणवत्ताच्छब्द्यं लभते तस्य ग्रहणे वाक्यस्यापि ग्रहणं भवतीति । | ॥७२।४५॥ |
| २ ,, | क्षीरस्वामी | —अन्यस्तु पुरुषस्यैव समासार्थत्वे सतीच्छति न स्त्रियाः, तन्मते-अतिशकट्यै प्रियधेन्वै पुरुषायेत्यत्रैव भवति, न त्वतिशकटये प्रियधेनवे स्त्रियै इत्यत्र । | ॥७९।६॥ |
| ३ ” | ” | —अन्यस्त्वदूडतेः संयोगादेर्दकारस्यापि लोपमिच्छति, तन्मते अट्, अड्भ्याम् । | ॥१४४।९॥ |
| ४ ” | ” | —अन्यस्त्वप्रधानेऽपीच्छति गम्यते मैत्रं ग्रामश्चैत्रेण । | ॥१६०।६॥ |
| ५ ” | रत्नमतिः | —नामधातोरभिवादयतेरपीच्छत्यन्यः । | ॥१६४।१६॥ |
| ६ ” | ” | —राधीक्ष्यर्थविपर्याद्विप्रष्टव्यादिच्छत्यन्यः । | ॥१९३।२॥ |
| ७ अन्येन | | —तथाऽन्येनाऽप्युक्तं क्रीतप्रीतश्रीतपूतादीनां क्यन्नादिषु तीशब्दः श्रूयमाण एव सम्भवति, तस्मात्तु कृतयादेशादुत्वं कस्मादुदाहृतं, क्रीत्युरागच्छति क्रीत्युः स्वामिति ?,— | ॥८३।२४॥ |
| ८ अन्ये | शेषभट्टारकाः | —ऐदौतौ चतुर्मात्रावपीत्यन्ये । | ॥५।१२॥ |
| ९ ,, | शाकटायनाः | —सर्वमुखस्थानमवर्णं हविसर्गावुरस्यौ कवर्गौ जिह्वामूल इत्यन्ये । | ॥८।१०॥ |
| १० ,, | पा० शिक्षाकाराः | —ए ऐ कण्ठताल्व्यौ इत्यन्ये । | ॥८।१२॥ |
| ११ ,, | ,, | —ओ औ कण्ठोष्ठ्यौ इत्यन्ये । | ॥८।१२॥ |
| १२ ,, | पाणिनीयादयः | —वः सृक्कस्थान इत्यन्ये । | ॥८।१३॥ |
| १३ ,, | पा० शिक्षाकाराः | —जिह्वामूलीयः कण्ठ्य इत्यन्ये । | ॥८।१३॥ |
| १४ ,, | पा० शिक्षाकारादयः | —अनुस्वारः कण्ठ्यनासिक्य इत्यन्ये । | ॥८।१४॥ |
| १५ ,, | पा० शिक्षाकृतः | —अकारः संवृत इत्यन्ये । | ॥८।४५॥ |
| १६ ,, | ,, | —विवृतं करणं स्वराणाम्, ऊष्मणां चेत्यन्ये । | ॥९।१॥ |
| १७ ,, | ,, | —अकारः संवृत इत्यन्ये । | ॥९।२॥ |
| १८ ,, | पा० शाकटायनः | —लृवर्णस्य दीर्घा न सन्तीति द्वादश इत्यन्ये । | ॥९।५॥ |
| १९ ,, | औदव्रजिः | —अन्ये तु ब्रुवते-अनुप्रदानमनुस्वानो घण्टादिनिर्ह्रादवत् । | ॥९।१८॥ |
| २० ,, | प्राञ्चः | —शब्दधर्म इत्यन्ये । | ॥१७।२॥ |
| २१ ,, | ” | —संवृततर सकलरेफकोरमर्धमात्रस्वरभक्तिकमित्यन्ये । | ॥२६।१॥ |
| २२ ,, | उत्पलादयः | —अन्ये तु यथादर्शनं सन्धिमसन्धिं वेच्छन्ति । | ॥३५।७॥ |
| २३ ,, | ” | —अन्ये तु अवसानं अभावरूपमाहुः । | ॥५९।२०॥ |
| २४ ,, | श्रीशेषराजः | —अन्ये त्वतिजरैरित्येवेच्छन्ति । | ॥६४।९॥ |
| २५ ,, | पाणिनिसूत्रानुसारिणः | —अन्ये तु प्रागेवेनादेशं सन्निपातलक्षणन्यायस्याऽनित्यत्वाश्रयणात् पश्चाज्जरसादेशं चेच्छन्तोऽतिजरसिनेत्यपि मन्यन्ते । | ॥६५।११॥ |
| २६ ” | ” | —अन्ये तु डतरडतमविधावप्यन्यशब्दं न कथयन्ति तेषामयं डतरार्थ एव पाठः, अन्यतरमिति त्वन्य एवाऽयमव्युत्पन्न इति । | ॥६७।२३॥ |
| २७ ” | उत्पलादयः | —अन्ये तु बहुव्रीहावन्तरङ्गस्याऽप्यकः प्रतिषेधमिच्छन्ति, तन्मते कप्प्रत्यय एव; त्वत्कपितृको मत्कपितृकः । | ॥७५।७॥ |
| २८ ” | पाणिनिप्रभृतयः | —अन्ये तु बहुप्रत्ययपूर्वादपि पतिशब्दादौकारमेवेच्छन्ति, तन्मते बहुपत्यौ । | ॥७८।५॥ |
| २९ ” | प्राञ्चः | —अन्ये तु सख्यन्तादपि प्रतिषेधं पूर्वेण डेरौत्वं चेच्छन्ति-बहवः सखायो यस्य तेन बहुसख्या, एवं बहुसख्ये, बहुसख्युरागतं स्वं वा, बहुसख्यौ निधेहि । | ॥७८।१०॥ |
| ३० ” | श्रीशेषभट्टारकाः | —अन्ये तु पुरुषस्य समासार्थत्वे सति नेच्छन्ति, तन्मते-प्रियबुद्धये, प्रियधेनवे पुरुषायेत्येव भवति । | ॥७९।५॥ |
| ३१ ” | ” | —अन्ये तु-अस्त्रीवचन एवेच्छन्ति । | ॥७९।३५॥ |
| ३२ ” | ” | —अन्ये त्वाहुः-पूर्वाऽऽगमेषु तीशब्दस्य लूनीशब्दावयवस्य कृतयत्वादेशस्योदाहरणं दर्शितम्, न च सामान्येन सूत्रनिर्देशे विशेषाभ्युपगमो युक्त इति सर्वमुदाहरणम् । | ॥८३।२६॥ |

| क्र० | शाब्दिकाः। | मतानि। | पृ० प० |
|---|---|---|---|
| ३३ अन्ये— | | —अन्ये तु त्वष्टृक्षत्तृहोतृपोतॄन् ताच्छील्यादिषु निपातयन्ति। | ॥८४।२७॥ |
| ३४ ,, | उत्पलादयः | —अन्ये तु द्वितीयैकवचनस्यैवाऽमो योऽमादेशस्तस्यैव लुग्विकल्पमिच्छन्ति न स्यादेशस्य। | ॥९३।२॥ |
| ३५ ,, | ,, | —चतुःशब्दस्याऽपि लुग्विकल्पमिच्छन्त्यन्ये। | ॥९३।८॥ |
| ३६ ,, | ,, | —अन्ये तु व्यञ्जनाना कालभेदमिच्छन्त्येव। | ॥९६।३६॥ |
| ३७ ,, | ,, | —बहूर्जि एवेच्छन्त्यन्ये। | ॥९७।२६॥ |
| ३८ ,, | शाकटायनादयः | —अन्ये तूपसर्जनयोस्तिसृचतसृशब्दयोर्डौ घुटि चाऽनि स्वरादौ रत्वविकल्पमिच्छन्ति। | ॥१०८।४॥ |
| ३९ ,, | पाणिनिप्रभृतयः | —अन्ये त्वादेशे कृते पश्चादकमिच्छन्ति। | ॥१२३।१६॥ |
| ४० ,, | ,, | —करशब्देनाऽप्यन्ये ( इच्छन्ति )। | ॥१३०।९॥ |
| ४१ ,, | वार्तिककाराः | —अन्ये तु रात्रिरूपरथन्तरेष्वेव रेफादिषु परेषु रेफप्रतिषेधमिच्छन्ति। | ॥१३८।२॥ |
| ४२ ,, | भीमसेनादयः | —अन्ये तु अर्क्ति तोपान्त्यं पठन्ति, तन्मते किपि अत्, अद्,। | ॥१४४।९॥ |
| ४३ ,, | प्राञ्चः | —अन्ये त्वाहुः-रुमन्निति प्रकृत्यन्तरमस्ति तस्यैतन्निपातनं नकारलोपाभावार्थं णत्वार्थं च। | ॥१४८।१॥ |
| ४४ ,, | ,, | —अन्ये तु अभियुक्तस्मृतिमनभिनन्दयन्तः कियन्तस्य प्रयोगं प्रतिजानते। | ॥१५०।२०॥ |
| ४५ ,, | पाणिनितन्त्रानुसारिणः | —अन्ये तु बोधविशेषार्थस्य दृशेरेवेच्छन्ति नाऽन्येषाम्। | ॥१६२।४॥ |
| ४६ ,, | विश्रान्तविद्याधरादयः | —अन्ये तु सकर्मकाणामकर्मकाणां च प्रयोगे कालाऽध्वभावानामत्यन्तसंयोगे सति नित्यं कर्मत्वमिच्छन्ति। | ॥१६९।१९॥ |
| ४७ ,, | ,, | —अन्ये त्वपकार एव द्रोहः इत्याहुः। | ॥१७१।२४॥ |
| ४८ ,, | ,, | —अन्ये तु तृतीयार्थमात्र इच्छन्ति। | ॥१८०।१२॥ |
| ४९ ,, | ,, | —अन्ये त्वन्यथा वर्णयन्ति वीप्सावीप्स्यमानयोः सम्बन्धो द्विर्वचनेनैव द्योत्यते न त्वभिना, इति सम्बन्धमद्योतयताऽपि तेन योगे वचनाद्वितीयेति। | ॥१८०।१६॥ |
| ५० ,, | ,, | —अन्ये त्वाहुः-धात्वर्थः क्रिया, सा च कारकचक्रनिष्पाद्यत्वात् कर्मरूपतां नातिक्रामति, ततो यथा भीष्ममुदारं दर्शयं कटं करोतीत्यादौ कटादिकर्मविशेषणतया भीष्मादिशब्देभ्यो द्वितीया तथा मन्दं पचति, साधु गच्छतीत्यादौ कर्मत्वात् क्रियाविशेषणादपि स्यात् किमनेन ?; इत्याशङ्क्याऽऽह– | ॥१८४।३७॥ |
| ५१ ,, | प्राञ्चः | —भावादपीच्छन्त्यन्ये-गोदोहं वक्रः, गोदोहं बुद्धदाः। | ॥१८५।७॥ |
| ५१ ,, | ,, | —भावादपीच्छन्त्यन्ये-गोदोहेन कृतः कटः। | ॥१८५।१२॥ |
| ५३ ,, | ,, | —अन्य आहुः-कारकशेषत्वे षष्ठी प्राप्ता नटस्य शृणोतीति यथा, सर्वथा तु कारकस्याऽविवक्षाया न भवति– | ॥१९१।३२॥ |
| ५४ ,, | ,, | —विमतिपूर्वकाभिप्रायनिरूपणे स्वोक्तां चतुर्थीमन्ये मान्याः स्त्रीभ्य ईक्षते इत्यादौ न मन्यन्त इत्याह— | ॥१९२।४२॥ |
| ५५ ,, | ,, | —अन्ये तु राधीक्षी इत्यर्थनिर्देशमाहुः, यस्य साक्षाद्वीक्ष्य विषयता उपपद्यते सोऽर्थो राधीक्षी इति निर्दिष्टः, ततश्च तदर्थसर्वधातुयोगे चतुर्थी भवति इत्याह– | ॥१९२।४३॥ |
| ५६ ,, | सारसंग्रहकारादयः | —द्वितीयैवेत्यन्ये। | ॥१९४।१४॥ |
| ५७ ,, | उत्पलः | —चतुर्थी चेत्यन्ये। | ॥१९४।१५॥ |
| ५८ ,, | ललितस्वभाव० | —अन्ये त्वसत्त्ववचनैरेवाऽऽराद्यर्थैरिच्छन्ति। | ॥२०१।१०॥ |
| ५९ ,, | वार्तिककृत०,, | —अन्ये तु नीवह्यादीना द्विकर्मकाणां गौणे कर्मणि दुह्यादीना तु प्रधाने विकल्पमिच्छन्ति। | ॥२०४।१४॥ |
| ६० ,, | पाणिनिः | —उभयत्राऽपि नित्यमेवेत्यन्ये। | ॥२०४।१५॥ |
| ६१ ,, | ,, | —अन्ये सम्बन्धविवक्षायामेवेयं षष्ठीति प्रतियन्त० सूत्रं नाऽऽरभन्ते। | ॥२०४।३१॥ |
| ६२ ,, | ललितस्वभावः | —अन्ये तु घजलप्रत्यययोर्द्विहेत्वोः कर्मण्येव षष्ठीमिच्छन्ति न कर्तरि। | ॥२०५।१३॥ |
| ६३ ,, | पूर्वे | —अन्ये तु ज्ञानेच्छार्चार्थञीच्छील्यादिभ्योऽतीते क्तं नेच्छन्ति। | ॥२०७।३॥ |
| ६४ ,, | अभयनन्द्याचार्या० | —अन्ये तु पञ्चमीमपीच्छन्ति, गोभ्य० कृष्णा सम्पन्नक्षीरतमा। | ॥२१३।४॥ |
| ६५ ,, | ,, | —अन्ये तु द्वितीयामपीच्छन्ति। | ॥२१४।७॥ |
| ६६ ,, | ,, | —द्वितीया नेच्छन्त्यन्ये। | ॥२१४।१३॥ |
| ६७ ,, | ,, | —अन्ये तु हेत्वर्थशब्दयोगे नेच्छन्ति, हेतुशब्दप्रयोगे तु षष्ठीमेवेच्छन्ति। | ॥२१५।९॥ |
| ६८ ,, | शाकटायनाः | —एकवचनान्त प्रयोग एव नाऽस्तीत्यन्ये। | ॥२१७।७॥ |
| ६९ अपरे— | शेषाहिपादा० | —द्विरेफश्रुतिकमध्यर्धस्वरमात्रमित्यपरे। | ॥२६।२॥ |

| क्र० | शाब्दिकाः । | मतानि । | पृ० पं० |
|---|---|---|---|
| ७० | अपरे—शाकटायनादयः | —अपरे तु भोभगोऽघोभ्य० स्वरे नित्यं लोपमेवेच्छन्ति। | ॥४८।१७॥ |
| ७१ | " " | —अपरे तु अभ्रवभ्रमभ्राणा त्रयाणां धातूना श्रुटि रेफलोपं नित्यमिच्छन्ति। | ॥५७।१०॥ |
| ७२ | " " | —अपरे तु ब्रुवन्ति-अयमन्यतरशब्दो डतरान्तो न भवति निर्धारणे हि सः, अनिर्धारणेऽयमव्युत्पन्नः। | ॥६७।२४॥ |
| ७३ | " " | —अपरैः सामान्येन तृतीयान्तेन योगे प्रतिषेधः कृतो न तृतीयान्तात्, तेषा मते पूर्वाय मासेनेत्यपि भवति, तन्मतसंग्रहार्थं तु पूर्वदिग्योगेऽपि पञ्चमी व्याख्येया। | ॥७३।१९॥ |
| ७४ | " ललितस्वभाव० | —अपरे त्वनि स्वरे सर्वत्र विकल्पं जस्शसोस्तु नित्यं मन्यन्ते। | ॥१०८।८॥ |
| ७५ | " —शाकटायनादयः | —करशब्देनाऽपीच्छन्त्येके। | ॥१३०।८॥ |
| ७६ | " " | —अपरे तु आसन्दीशब्दोऽस्तीति मन्यन्ते। | ॥१४७।२८॥ |
| ७७ | " शाकटायनाः | —णिजन्तस्याऽपि वदेर्णिगीच्छन्त्येके। | ॥१६४।१३॥ |
| ७८ | " " | —दैवे एवेक्ष्ये इच्छन्त्येके। | ॥१९२।१६॥ |
| ७९ | " चान्द्राः | —राधीक्ष्यर्थधातुयोगेऽपीच्छन्त्येके। | ॥१९२।१६॥ |
| ८० | " पा० सू० व्याख्यातारः | —कुत्सामात्रेऽपीच्छन्त्येके। | ॥१९५।१०॥ |
| ८१ | " पाणिन्यादयः | —द्वितीया नेच्छन्त्येके। | ॥२१४।१०॥ |
| ८२ | " वार्तिक-व्याख्यातारः | —प्रथमा नेच्छन्त्येके। | ॥२१५।१६॥ |
| ८३ | " " | —अपरे त्वकाकारयोर्भावाभिधायकयोः कृतोरुपयोगात्ताभ्यामन्यस्मिन्नपि भावाभिधायक एव षष्ठीमिच्छन्ति। | ॥२०५।३५॥ |
| ८४ | " वार्तिक-व्याख्यातारः | —द्वितीयामपरे ( नेच्छन्ति )। | ॥२१५।१७॥ |
| ८५ | " उत्पलः | —उत्पलस्तु भौवादिकस्य दैवादिकस्य च ङीयो ङीनमिति प्रयोगमिच्छति-यदाह— | ॥६१।४६॥ |
| ८६ | " " | —यदुत्पलः-एवं चाऽर्चाग्रहणं निपुणविशेषणार्थं सम्पद्यत इति। | ॥२१०।२८॥ |
| ८७ | " उद्द्योतकरः | —उद्द्योतकरोऽपि निपुणविशेषणार्थमेवाऽर्चाग्रहणस्य चरितार्थत्वादित्युवाच। | ॥२१०।२८॥ |
| ८८ | " " | उद्द्योतकर आह-यथाऽत्र भवानसदुपाध्यायो व्याकरणरत्नाकरपूर्ण-चन्द्रमाः कैय्यटारयः शिष्यसार्थमिदमवोचत्-'भृत्यापेक्षयाऽत्र षष्ठी कृता न साध्वपेक्षया'। | ॥२१०।३०॥ |
| ८९ | एके—शाकटायनादयः | —रेफो दन्तमूल इत्येके। | ॥८।११॥ |
| ९० | " पा०म०मतानुयायिन० | —अर्थधर्म इत्येके। | ॥१७।२॥ |
| ९१ | " नैषधीयकाराः | —तत्त्वातिशययोरित्येके। | ॥१८।२२॥ |
| ९२ | " प्राञ्च० | —तदपीषत्स्पृष्टकरणं द्विरेफतुरीयमध्यर्धस्वरमात्रमित्येके। | ॥२६।१॥ |
| ९३ | " " | —लृवर्णस्य स्थानित्वमिच्छन्त्येके। | ॥२६।३॥ |
| ९४ | " " | —अत्रापि ऋवर्णस्य स्थानित्वमिच्छन्त्येके। | ॥२६।८॥ |
| ९५ | " पा०शा०देवनन्द्यादय० | —वत्सरशब्दस्याऽऽर नेच्छन्त्येके। | ॥२८।२॥ |
| ९६ | " शाकटायन० | —अत्राऽपि पक्षे ह्रस्वत्वमिच्छन्त्येके। | ॥२९।३॥ |
| ९७ | " प्राञ्च० | —ऊढे नेच्छन्त्येके। | ॥२९।१४॥ |
| ९८ | " पाणिन्यादयः | —संयुक्तव्यञ्जनेऽपीच्छन्त्येके। | ॥५१।९॥ |
| ९९ | " " | —एके त्वाहुः-नाऽयं डतरप्रत्ययान्तोऽन्यतरशब्दः किन्त्वव्युत्पन्नस्तरोत्तरपदस्तरबन्तो वा। | ॥६७।४॥ |
| १०० | " पाणिनीयैकदेशिन० | —अतत्सम्बन्धिनोऽपि भवतीत्येके। | ॥८२।८॥ |
| १०१ | " विश्रान्तविद्याधरादय० | —अन्यसम्बन्धिनोर्जस्शसोर्नेच्छन्त्येके। | ॥९०।४॥ |
| १०२ | " काशिकाकारादयः | —अतत्सम्बन्धिनोरपीच्छन्त्येके। | ॥९०।१०॥ |
| १०३ | " देवनन्द्यादयः | —अमो लुकं नेच्छन्त्येके। | ॥९३।७॥ |
| १०४ | " " | —एके तु मन्तयोर्युष्मदस्मदोरादेशात् नेच्छन्ति। | ॥१११।९॥ |
| १०५ | " चन्द्रादयः | —एके तु निमित्तनिरपेक्षमेकत्वविशिष्टेऽर्थे वर्तमानयोस्त्वमादेशाविच्छन्ति। | ॥११३।६॥ |
| १०६ | कश्चित्-दुर्गसिंहन्यासकृतौ | —कश्चित्तु पक्षे प्रकृतिभावमपीच्छति। | ॥३२।४॥ |
| १०७ | " पाणिनि० | —कश्चित्त्वसंज्ञाया गवाक्षाणीत्यपीच्छति। | ॥३३।२३॥ |
| १०८ | " विश्रान्तविद्याधर० | —कश्चित्तु स्वरजयोरनादिस्थयोर्यकारवकारयोर्घोषवत्यवर्णादन्यतोऽपि लोपमिच्छन्ति। | ॥४८।२॥ |
| १०९ | " क्षीरस्वामी | —कश्चित्तु पूर्वमतविपर्ययमेवेच्छति। | ॥८०।१२॥ |
| ११० | " " | —क्रोष्टृनित्यपीति कश्चित्। | ॥१०५।९॥ |

| क्र० | शाब्दिका। | मतानि। | पृ० प० |
|---|---|---|---|
| १११ | कश्चित्-उत्पलः | —कश्चित्तु पूर्वमन्त्यस्वरादिलोपे त्वमादेशेऽकारस्य वृद्धौ प्वागमे त्वापयति, मापयति, क्विपि तु त्वाप्, माप्, इत्याह— | ॥११३।१॥ |
| ११२ | ” ” | —प्रत्ययोत्तरपदस्यादिलक्षणनिमित्तनिरपेक्षत्वेऽप्येकत्वविशिष्टेऽर्थे वर्तमानयो-र्युष्मदस्मदोर्मान्तावयवस्य 'अधित्वद्' इत्यादौ त्वमादेशाविति कश्चिन्मन्यते | ॥११३।३१॥ |
| ११३ | ” ” | —शासेरपि सौ विकल्पेन ककारमिच्छति कश्चित्, तन्मते शाक्षि, शास्सि, इति | ॥१३२।४१॥ |
| ११४ | ” दुर्गसिंहः | —कश्चित्तु दीर्घत्वं नेच्छति। | ॥१३७।१२॥ |
| ११५ | ” ” | —कश्चित्तु "अनुनासिके च च्छ्वः शूट्" ॥४।१।१०८॥ इति शत्वविधेरनित्यत्व-ज्ञापनार्थं छकारस्याऽपि षत्वमिच्छति। | ॥१४३।१५॥ |
| ११६ | ” ” | —पादयतेः क्विबन्तस्य प्रयोगो नाऽस्तीति कश्चित्। | ॥१५०।७॥ |
| ११७ | ” ” | —णिगन्तस्याऽपीति कश्चित्। | ॥१६४।१५॥ |
| ११८ | ” ” | —अत्र कश्चिदाह–स चेत्, सिद्धं यदा वसतिर्विवक्षितः, यदा तूपवसतिरेव तदा प्राप्नोति, न चोपवसेराधारभावं प्रति ग्रामादिरयोग्य एव यदन्यापेक्ष एवाऽस्याऽऽधारभावः कल्प्यते, तस्माद्यतितव्यमेवाऽत्र, अत्रोच्यते— | ॥१६८।४२॥ |
| ११९ | ” अजितयशोवादी | —चतुर्थ्यपीति कश्चित्। | ॥१९५।११॥ |
| १२० | ” ” | —गम्यमानं विभक्तिनिमित्तं नेति कश्चिन्मन्यते। | ॥२११।३४॥ |
| १२१ | काशिकाकारस्तु | —काशिकाकारस्तु कृयधिकारविहितयोरणकयोः प्रतिषेधादन्यस्मिन्नपि स्त्रीप्रत्यय एव षष्ठीमिच्छति। | ॥२०५।३५॥ |
| १२२ | केचन | —केचन मूले ऋत इति विहाय ऋवर्णस्य स्थानितया निर्देशं कुर्वन्ति, तथा सति 'वर्णग्रहणे जातिग्रहणम्' इति सर्वविधऋकारग्रहणं बोध्यम्। | ॥२६।२८॥ |
| १२३ | ” | केचन त्वस्त्रीवचन एवेच्छन्ति, तन्मतस्य भाष्यकृदादिविरुद्धतयाऽपास्तत्वादेक-वचनेन निर्दिशति। | ॥८०।४७॥ |
| १२४ | ” | केचन सन्निपातपरिभाषाया नित्यत्वमाश्रित्य स्यादेशस्याऽमो लुपं नेच्छन्ति। | ॥९३।१७॥ |
| १२५ | केचित्तु-शाकटायनः | —केचित्तु पक्षे ह्रस्वत्वमपि मन्यन्ते। | ॥२८।१८॥ |
| १२६ | ” देवनन्द्यादयः | —केचित्त्विवर्णादिभ्यः परान् यवरलानिच्छन्ति। | ॥३१।१६॥ |
| १२७ | ” पाणिनीयाः | —केचित्तु इति शब्दे विकल्पमिच्छन्ति। | ॥३४।१४॥ |
| १२८ | ” जयादित्यादयः | —केचित्तु 'मणीवोष्ट्रस्य लम्बेते, प्रियौ वत्सतरौ मम।' इति प्रयोगदर्शना-न्मणी इव मणीवेत्यादावसन्धिप्रतिषेधं वर्णयन्ति, तदुक्तम्— | ॥३५।५॥ |
| १२९ | ” प्राञ्चः | —केचित्तु चाद्यचादिस्थानस्याऽचादिरूपत्वात् स्वरनिमित्तकमपि सन्धि-मिच्छन्ति। | ॥३६।७॥ |
| १३० | केचित्तु—पाणिन्यादयः | —केचित्तु व्यञ्जनस्य स्थानेऽनुनासिके वाऽनुनासिकमिच्छन्ति। | ॥३९।७॥ |
| १३१ | ” ” | केचित्तु अत्राऽप्यनुनासिकमिच्छन्ति। | ॥४४।३॥ |
| १३२ | ” पा०शाकटायनाश्च | —केचित्तु टत्वमपीच्छन्ति। | ॥४५।१४॥ |
| १३३ | ” कात्यायनः | —केचित्तु भवद्भगवदघवतां सम्बोधने सौ परतोऽवशब्दस्यौत्वं तकारस्य च रुत्वं कृत्वा एतानि रूपाणीच्छन्ति। | ॥४७।८॥ |
| १३४ | ” पाणिन्यादयः | —केचित्तु रुस्थानस्य यकारस्योत्रि परे लोपमेवेच्छन्ति। | ॥४८।१६॥ |
| १३५ | ” शाकटायनादयः | —अनुनासिकादप्यादेशरूपात् केचिदिच्छन्ति। | ॥५२।११॥ |
| १३६ | ” चान्द्रप्रभृतयः | —केचित्तु पञ्चमान्तस्याया' पञ्चमान्तस्यामात्रे लोपमिच्छन्ति, न तु सरूप एव। | ॥५७।९॥ |
| १३७ | ” ” | —केचित्तु यावद्रव्यभाविनी व्यवस्थेत्याहुः, तेषां पूवसे पुरुषायेत्यादि न भवति। | ॥६८।२८॥ |
| १३८ | ” पाणिनिप्रभृतयः | —बहुप्रत्ययपूर्वादपि पतिशब्दात् प्रतिषेधं केचिदिच्छन्ति–बहुपत्या, बहु-पत्ये, बहुपत्युः आगतं स्वं वा। | ॥७८।९॥ |
| १३९ | ” ” | —केचित्तु पूर्वं पश्चादपि स्त्रीवचन एवेच्छन्ति। | ॥७९।३१॥ |
| १४० | ” पाणिनितन्त्रानुसारिण. | —केचित्तु समासार्थस्य स्त्रीत्व एवेच्छन्ति न पुंस्त्वे। | ॥८०।११॥ |
| १४१ | ” ” | सखिपतिशब्दयोरेव केचिदिच्छन्ति। | ॥८३।२३॥ |
| १४२ | ” ” | केचिदाहु'-तत्र नेष्यते त्यादुत्तरस्य उत्वमिति। | ॥८३।२५॥ |
| १४३ | ” भोजप्रभृतयः | —केचित्तु-प्रस्तोतृउन्नेतृउद्गातृप्रतिहर्तृप्रतिस्थातृशब्दानामौणादिकानाम-प्यार मन्यन्ते। | ॥८४।१०॥ |
| १४४ | ” ” | —केचिन्मन्यन्ते–उणादयोऽव्युत्पन्नानि नामानीति, अपरे व्युत्पन्नानीति। | ॥८४।३९॥ |
| १४५ | ” विश्रान्तिविद्याधरादयः | —केचित्तु सकारभकारादावेव स्यादाविच्छन्ति। | ॥९०।६॥ |
| १४६ | ” शाकटायनादयः | —केचित्तु अष्टावाचक्षत इति णिचि क्विपि, अष्टौ तिष्ठन्ति, अष्टौ पश्येती-च्छन्ति, तदप्यष्ट इति तन्त्रेण संगृहीतम्। | ॥९०।११॥ |
| १४७ | ” वामनादय. | —केचित्तु डत्यन्तात् कतिशब्दादेवेच्छन्ति। | ॥९१।३॥ |

| क्र० | शाब्दिकाः । | मतानि । | पृ० प० |
|---|---|---|---|
| १४८ | केचित्तु—पाणिनीयाः | —केचिज्जरसः स्मोर्लोपं नेच्छन्ति । | ॥९३।४॥ |
| १४९ | ,, पाणिन्यादयः | —केचित्तु त्वां मा चाऽऽचष्टे इति णौ त्वमादेशे वृद्धौ क्विपि मन्तयोरेव त्वाहादेशविधानात् सौ त्वाम्, माम् इति, धातोरेव वृद्धिरिति मते त्वं, मम् इत्येव च भवतीति मन्यन्ते । | ॥११३।१६॥ |
| १५० | ,, ,, | —केचित्तु तत्सम्बन्धिन एवाऽऽम आकमादेशमिच्छन्ति, तथाऽऽम्प्रत्यये दकारस्य यत्वमपीच्छन्ति । | ॥११५।१६॥ |
| १५१ | ,, ,, | —केचित्त्विदम आदेशमेनमिति मकारान्तं द्वितीयैकवचने आहुः, तन्मते—इदं कुण्डमानयाऽथो एनं परिवर्तयेत्येव भवति । | ॥१२२।१०॥ |
| १५२ | ,, चान्द्रभोजादयः | —केचिदेतदोऽपीच्छन्ति । | ॥१२२।१७॥ |
| १५३ | ,, ,, | —केचित्तु द्विशब्दात् पूर्वं किं शब्दमधीयत्ते, तेन "किमद्व्यादिसर्वाद्यवैपुल्यबहोः पित्तस्" ॥७।२।८९॥ इति किंशब्दोपादानं न विधेयम् । | ॥१२४।३८॥ |
| १५४ | ,, ,, | —केचित्तु-असुकसिति सान्तं सिना सह निपातयन्ति । | ॥१२६।१॥ |
| १५५ | ,, ,, | —तदाह-"परत॰ केचिदिच्छन्ति, केचिदिच्छन्ति पूर्वतः । उभयो॰ केचिदिच्छन्ति, केचिदिच्छन्ति नोभयो." ॥१॥ | ॥१२६।१०॥ |
| १५६ | ,, ,, | —केचित्तु तासा यथोद्देशतामेव (यत्रैवोपदेशस्तद्देशतामेव) युक्तां मन्यन्ते । | ॥१३१।३४॥ |
| १५७ | ,, ,, | —केचित्तु क्यन्क्यङोरपि प्रतिषेधमिच्छन्ति । | ॥१३४।७॥ |
| १५८ | ,, शाकटायनाः | —केचिदस्याऽपि प्रतिषेधमिच्छन्ति । | ॥१३५।१॥ |
| १५९ | ,, ,, | —केचित्तु विसर्गजिह्वामूलीययोरप्यलाक्षणिकयोस्तृतीयत्वं गत्वमिच्छन्तीति । | ॥१३८।५॥ |
| १६० | ,, देवनन्द्याचार्याः | —केचित्तु यङ्लुबन्तस्याऽपीच्छन्ति । | ॥१३९।१०॥ |
| १६१ | ,, देवनद्याचार्याः | —केचित्तु यङ्लुबन्तधयतेरपीच्छन्ति । | ॥१३९।१५॥ |
| १६२ | ,, चन्द्रगोम्यादयः | —केचित्त्वन्त्यस्वरादिलोपस्य स्थानि(व)त्वमनिच्छन्तो इतीति द्वित्वे ऊढमूढिं वाख्यत् औजिढदिति मन्यन्ते । | ॥१४१।६॥ |
| १६३ | ,, ,, | —केचित्तु किं नेच्छन्ति । | ॥१४३।५॥ |
| १६४ | ,, ,, | —तत्र प्रधानाऽप्रधानसन्निधौ प्रधानाभिधानस्यैव न्याय्यत्वमिति केचित् । | ॥१६०।१७॥ |
| १६५ | ,, ,, | —केचिदाहुः-नाऽमी नयत्यादयो द्विकर्मका अन्यकर्मत्वात् । | ॥१६०।२५॥ |
| १६६ | ,, ,, | —केचिदिच्छन्ति-मासस्य आसनेति । | ॥१७०।१५॥ |
| १६७ | ,, ,, | —अत्र केचिदाहुः-अन्वादयो गम्यादिक्रियाजनिते नामार्थव्यतिरेके विषयभावादौ वर्तन्ते । | ॥१८१।१७॥ |
| १६८ | ,, ,, | —किं पुनरत्र प्राप्तम् ?, केचिदाहुः-देवदत्तो रोचयति मोदकमिति प्राप्नोति, देवदत्तं हि प्राप्य मोदको रुचिविषयो न सर्वमेव भिन्नेच्छत्वात् प्राणिनाम् । | ॥१९१।३१॥ |
| १६९ | ,, ,, | —केचिदाहुः-कर्मणि द्वितीयायां प्राप्तायां प्रीयमाणं देवदत्तं प्रीणयति मोदक इति । | ॥१९१।३२॥ |
| १७० | ,, भोजशाकटायनाः | —केचित्त्वप्रयोज्यो यो ज्ञाप्यो य आख्यायते तत्रैवेच्छन्ति । | ॥१९३।१२॥ |
| १७१ | ,, ,, | —केचिद्यस्मै आख्यायते तं ज्ञाप्यं सम्प्रदानत्वेन प्रतिपन्ना॰ । | ॥१९३।३७॥ |
| १७२ | ,, ,, | —केचिद्य आख्यायते तमिति, तन्मते मैत्रमात्मने श्लाघत इत्युदाहरणम् । | ॥१९३।३८॥ |
| १७३ | ,, ,, | —केचिदारादर्थै॰ पञ्चम्यन्तैर्युक्तात् पञ्चमीं नेच्छन्ति । | ॥२१५।२३॥ |
| १७४ | कैश्चित् | —कैश्चिदन्वर्थसंज्ञाविधानाद्ददातिक्रियाविषयैव सम्प्रदानसंज्ञेत्यभ्युपगतम् । | ॥१७१।२५॥ |
| १७५ | ,, | —यदुच्यते-कैश्चित्-मासेनाऽनुवाकोऽधीत॰, क्रोशेनाऽनुवाकोऽधीत इति करण एव तृतीया, इतीदं नाऽऽरम्भणीयमिति तदसम्यक्-इत्याह— | ॥१८५।४१॥ |
| १७६ | केपाञ्चित् | —केपाञ्चिद्युष्मद्वद्वतु असदिति पाठः । | ॥१२४।३७॥ |
| १७७ | ,, | —केषाञ्चिद्युष्मदस्मद्वत्विति पाठः । | ॥१२४।३७॥ |
| १७८ | क्षीरस्वामि॰ | —क्षीरस्वामिन्यासकृन्मतम् । | ॥२५।३२॥ |
| १७९ | गोनर्दीयानां | —गोनर्दीयाना मते-अतिजरम् प्र॰ ए॰, अतिजरसम् अतिजरम् द्वि॰ ए॰ इति । | ॥९३।२१॥ |
| १८० | गोनर्दीयस्य | —इष्टमेवैतत् गोनर्दीयस्य । | ॥९७।२१॥ |
| १८१ | दुर्गसिंहन्यासकृतो॰ | —दुर्गसिंहन्यासकृतोर्मतम्, कश्चित्तु ह्रस्वत्वाभावपक्षे प्रकृतिभावमपीच्छति । | ॥२५।३२॥ |
| १८२ | पाणिनेः | —पाणिनेरपि च तदेव सम्मतम् । | ॥७५।३२॥ |
| १८३ | पूर्वैः-वार्तिककृद्भिः | —"उभयोऽन्यत्र" । पा॰ वा॰ ॥७।१५२॥ | ॥६७।१७॥ |
| १८४ | प्राञ्चः | —प्राञ्चो वैयाकरणाश्चादीना निपात इति संज्ञामभिदधते, इत्याह— | ॥१९।२५॥ |
| १८५ | ,, | —प्राञ्चो हि कर्तृविशेषमपि हेतुशब्देनाऽऽचक्षते, यतश्च "हेतुकर्तृकरणे॰" इत्यत्र हेतुग्रहणं कृत्वा कर्तृकरणग्रहणं कृत्वा हेतुकर्तृकरणग्रहणं कृतमतो विज्ञायते कर्त्रादिभ्यो विलक्षणो हेतुरिति । | ॥२००।३९॥ |

